

चित्सुखमुनिविरचिता· तत्वप्रदीपिकाग्रन्थस्वरूपमुनिकृतनयनप्रसादिनीटीकासहिता· निर्मलेनोद्धवसिंहेन परिशोधिता· प्रारभ्यते ॥




॥ॐ स्वस्तिश्रीगणेशाय नमः॥ यन्नित्यं निरवग्रहस्वमहिमाश्रेयस्वभावे महा मायावेशवशाद्यवर्न्नतविपद्यस्वग्रस्तु
वीमुखैः॥ भावैसन्तरनंतविभ्रमसमयैर्विध्वस्तभेदोद्भवं निर्द्धूतावधिबोधमोदजलधिं वंदे महीयो महः॥१॥
उन्निद्रस्वभ्रसरसीरुहसंनिषण्णां निर्म्मेच्छुरच्छरुचिनिर्जितचन्द्रकान्तिं॥ हारोज्वलांस्त्रिपितनुस्फटिकाक्षस्रक्कुं
भमुद्रास्त्रपुस्तककरां प्रणमामि वाणीं॥२॥ अविरलविगलितमदजलविलुलितमत्तालिमाल्यमनुलम्बः॥
विपुलकपोलफलकोदलयन्तु लंबोदरोदुरितम्॥३॥ यद्विद्याधवलैर्विभज्य विबुधैः सर्वोदिताप्युन्मी-
लन्नैरवकोरकाकुलरुचिं विश्वंभरेयं भृता॥ घोराज्ञानदुरंतपंकनिकरप्रोन्माथिविद्यानदीमूलं नौमि मुनी-
न्द्रमन्वहमहं विद्यागिरिं तं गुरुम्॥४॥ यस्याह्पावनसरोजरजःपरागैरेतैर्विनेयनिवहा विरजस्त्वमापुः॥ स
त्यप्रकाशपरिशुद्धनिजानुभावं प्रत्यक्प्रकाशमभिनौमि गुरुं यतीन्द्रम्॥५॥ उद्वहद्विद्यासुरसरिद्यं निःसृता
यत्प्रकाशात् यस्माद्राजसकलविबुधोनंतसलीला विभान्ति हंसानां यद्विम्ब लवनाज्ञो वनंजो वनंते वन्दे विद्यागुरू-
मविरतं मानसंतीर्थमार्ग्यम्॥६॥ अविनश्वरकृतितन्त्रप्रदीपिकालोकनार्थिनां क्रियते अज्ञानतिमिरजे
श्रीमानसनयनप्रसादिनी टीका॥७॥ दोषत्वमुज्वलगुणा अपि यान्ति येषु नैकल्पनैः किमथवेहतिरस्कृतैः किं
॥ दोषोपि येषु गुणतामुपयाति भूयांस्तेभ्यो नमोऽस्तु सततं भुविसज्जनेभ्यः॥८॥ मारीप्सितस्य प्रकरणस्यानि
रंतरायपरिसमाप्तिपरिपन्थिदुरित॥ हु

परंपरानिवारणाय शिष्योपशिष्यद्वारा प्रचयप्रचाराय शिष्टानुष्ठानप्रतिस्थापनेन शिष्टपरिग्रहाय च प्रवर-
गुणगणोपवर्णनपूर्वकं परमेश्वरं परिपूजयन् आशीर्लक्षणमंगलमविगीतशिष्टाचारानुमितस्मृतिप्रति-
कल्पितश्रुतिप्रमाणकमाचरितं शिष्यशिक्षार्थं ग्रन्थतो निबध्नाति॥ स्तंभाभ्यन्तरेति सहशिरस्त्राननत्काव्यहृतो
वः युस्मानव्याद्रस्मतान् तस्यैव हरेर्विशेषणानि स्तंभाभ्यन्तरेत्यादीनि स्तंभस्याभ्यंतरं स्तंभाभ्यंतरं तत्र गर्भभावः
स्तंभाभ्यंतरगर्भभावः गर्भत्वं चेदमनभिव्यक्ततयावस्थितत्वं ननु गृहान्तरावस्थितदेवदत्तवत्प्रकटतया सर्वान्
रभावोनेन विषयस्यते मुकुलपुटकुटीकोटरक्रोडलीनामितिवत् तेनतपोनरुक्तं तेन निगदव्याख्यानं निगद

ॐ श्रीगणेशाय नमः॥ स्तंभाभ्यंतरगर्भभावनिगदव्याख्यानतद्वैभवो यः पांचाननपांचज

मात्रेण व्याख्यानं उपायांतरनिरपेक्षतया स्पष्टीकृतमिति यावत् त ९ न्यवपुषाव्यादिष्टविश्वात्मतः॥
द्वैभवं तस्यस्वरूपस्य तत्ताद्दृगनुपममिति वा वैभवं विभुत्वं येन यस्येति वा असौ स्तंभाभ्यंतरगर्भभावनिगद
व्याख्यानतद्वैभवस्तदनेन सर्वगतत्वमुक्तं भवति॥ सर्वगतमपि नैयायिकादेरिव वस्तुतः परिच्छिन्नं स्यादिति त
न्निवृत्तये सर्वात्मना माह यः पांचाननपांचजन्यवपुषाव्यादिष्टविश्वात्मतः इति पंचाननसम्बन्धि पांचाननं पं
चाननः सिंहः पंचसु दिक्ष्वाननमस्य विपरिवर्तनेन इति व्युत्पत्त्या विस्तृतास्यत्वाद्वा पचि विस्तार इत्यस्मात्पंचशब्द

स्तुत्यत्वे सिंहो मृगेन्द्रः पंचास्य इत्यमरः सिंहोऽर्कैश्च पंचजना मनुष्याः स्युः पुमांसः पंचजना इति तेनैवोक्तत्वा
त् दिक्संख्ये संज्ञायामिति समासाभिधानाच्च तत्संबन्धि पांचजन्यं पांचाननेन च तत्पांचजन्यं चेति पांचाननपांच
जन्यं तादृशं वपुः पांचाननपांचजन्यवपुः नरसिंहात्मकमित्यर्थः तेन वपुषा व्यादिष्टा विशेषेणोक्ता विश्वात्म-
ता विश्वस्वरूपता येन यस्येति वा स तथोक्तः नच सर्वात्मकत्व— कथनेनैव सर्वगतत्वसिद्धेस्तस्याः पृथक्कथनमि
ति वाच्यं अनन्यपरत्वात् यदेतद्वारि ऋक्स्यादि प्रसिद्धं सर्वगतत्वं सर्वात्मकत्वं तन्नूनं मया प्रकटितमित्युत्प्रेक्षाया
विवक्षितत्वात् तदेवं सर्वगतत्वं सर्वात्मकत्वं चोक्त्वा परमकारुणिकस्य भक्तानुगृहीतृतामाह प्रह्लादेति प्र-

प्रह्लादाभिहितार्थतत्क्षणमिलद्दृष्टप्रमाणो हरिः सोऽव्याद्वः शरदिन्दुसुन्दरतनुः सिंहाद्रि
चूडामणिः ॥ १ ॥

ह्लादेनाभिहितोऽर्थः प्रह्लादाभिहितार्थस्तस्मिंस्तत्क्षणं समसमयमेव मिलन् घटमानं
दृष्टं प्रत्यक्षं प्रत्यक्षत्वं साक्षात्कारसाधकत्वात्प्रमाणं यः स तथोक्तः प्रमाणशब्दस्य नित्यनपुंसकत्वात्प्रतिपि
पादयिषितत्वात् तत्पुरुषसमासतया स्वप्रधानत्वाच्च संगच्छत एव प्रमाणं हरिरिति सामानाधिकरण्यं स-
र्वात्मकस्य परमेश्वरस्य स्तंभादिसर्ववस्तुगतत्वं हि प्रह्लादेन प्रत्यभिज्ञापितं च चागमोऽनुमानं वा यत्तेन वक्तुं
यं प्रमाणं तत्परोक्षमेवाहं तु साक्षात्कारयिष्यामीत्यभिमानेन स्तंभोदरान्निरगादित्यर्थः शरदिन्दुसुन्दरतनुः

राम॰
२




वलानतनुर्यस्य सनतोक्तः सिंहाद्रेश्चूडामणिः सिंहाद्रिचूडामणिः सिंहगिर्यलंकारः सिंहगिरिनिवासीत्यर्थः य एवंविधः स हरिरित्यन्वयः यद्यप्यत्र वैभवस्यार्थात्मकतया निगदव्याख्यानेन संभवति तस्य ग्रंथधर्मत्वात्तथापि समाधिप्रदर्शनार्थमयमन्यधर्मोन्यत्र निवेदितः समाधिर्नामकाव्यविशेषस्य प्राणविशेषः काव्यविशेषस्य हि दश प्राणाः कविभिः परिगणिताः यथाहुः श्लेषः प्रसादः समता माधुर्यं सुकुमारता अर्थव्यक्तिरुदारत्वमोजः कांतिस्समाधयः इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः इति तथान्यधर्मस्ततोन्यत्र लोकसीमानुरोधिना सम्यगाधीयते यत्र स समाधिः स्मृतो यथा कुमुदानि निमीलंति कमलान्युन्मिषंति चेत्यत्र हि नेत्रक्रियारूपयोर्निमीलनोन्मीलनयोः कुमुदकमलयोरनेत्रयोरध्यारोपणं समाधिस्तथेहापि ग्रंथधर्मस्यार्थे निवेदनात्समाध्यलंकारो दर्शितो भवति पांचालीवैदर्भीरीत्योश्चौजसैव वैषम्यादस्य च वेदांतशास्त्रप्रकरणत्वात्तद्विषयादिभिस्तद्वत्त्वमस्तीति दर्शयितुं लेशतस्तदपि सूचितं तथाहि हरिरित्यनेनाज्ञानतत्कार्यहारित्वदर्शनान्निर्दृतोपाधिव्याधिपरिस्फुटप्रत्यग्रूपब्रह्मप्रयोजनं सूचितं व्यादिष्टविश्वात्मतेत्यनेनारोपितमायतयाः ज्ञातं प्रत्यग्भूतं च ब्रह्म विषयो दर्शितः प्रह्लादशब्देन तादृगधिकार्यर्थशब्दसूचितोपि सूचितः अर्थात्तु शास्त्रफलयोर्हेतुहेतुमद्भावरूपः शास्त्रतत्त्वज्ञानयोस्तत्त्वज्ञानफलयोश्च कार्यकारणभावरूपो तत्फलज्ञानतत्त्वयोश्च विषयविषयिभावरूपः शास्त्रतत्त्वयोश्च प्रतिपाद्यप्रतिपादकभावरू

चि॰सु॰ टी॰न॰ ३

पद्गतिपंचविधः सम्बन्धोदर्शित इत्यनेनैव प्रकरणारम्भोपि समर्थितः॥१॥ तदेवमाशीर्वादेन परदेवतापूजितागु रुपूजयापि भवितव्यं यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति देवताभ क्तिवद्गुरुभक्तेरपि विद्यावाप्तावंतरंगतावगमात्तदर्थं गुरुं नमस्करोति ज्योतिर्यदित्यादिना सत्यानंदेति स त्यानंदपदाभ्यां प्रकाशितं अथवा सत्यानंदात्मकं यत्पदं पद्यते इति पदं तेनोदितं स्फुरितं इत्यभावे तृतीया अने न च गुरुदेवतयोरैक्यमुक्तं वेदान्तवेद्यं च स्वस्वरूपप्रतिपादकवेदान्तापेक्षितन्यायसूत्रणाय व्यासपदवीमवा प पुनस्तदर्थाविष्करणाय शंकराचार्यतां तद्भाष्यार्थविवरणाय च ज्ञानोत्तमतामुपागमदिति भावः॥२॥ य

ज्योतिर्यद्दर्शिता मूर्ध्नि व्यासशंकरशब्दितं॥ ज्ञानोत्तमाख्यं तद्वन्दे सत्यानंदपदोदितम्॥२॥

विप्रतिपत्तिध्वान्तध्वंसप्रगल्भवाचाला॥ क्रियते चित्सुखमुनिना प्रत्यक्तत्त्वप्रदीपिका वि (इषा॥३॥

द्यपि शारीरकविषयादिनास्त्यपि परमविषयादिमत्त्वं सिद्ध्यति तथाप्यसाधारणान्यपराण्यपि च क्तव्यान्येव अन्यथा पृथगारंभवैयर्थ्यादित्यसाधारणान्याह विप्रतिपत्तिध्वान्तेति विप्रतिपत्तीनां ध्वान्तः समूहस्तदेव- ध्वांतं तस्य ध्वंसे प्रगल्भा दृढतरन्यायोपेता वाचाला बहुभाषिणी आलजाटचौ बहुभाषिणीति पाणिनिस्मरणात्स्या ज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवागित्यभिधानाच्च अनेनासंपूर्णोक्तिः परिहृता प्रतीचो जीवस्य तत्त्वं पारमा र्थिकं रूपं निरतिशयानंदं निरस्तानर्थज्ञानं ब्रह्मतत्त्वं तस्य प्रदीपिकेव प्रदीपिका प्रकाशकत्वात् एतदुक्तं भवति यद्यपि शारी

राम॰ ३

करणभूतवेदान्तानां विप्रतिपत्तिनिरसनरूपोपकरणेतिकर्तव्यतात्वमपि कृतं तथापि तत्तद्भिन्नविप्रतिपत्ति
ज्ञाननिवारणे तदेवास्यापि प्रयोजनं भवति विप्रतिपत्तिनिरोहितं तु विषयः तत्काम्यधिकारी तथाविधस्य सं
बन्धइत्यस्यैवासाधारणविषयादि अतएवचारंभणीयमिति केचिद्विप्रतिपत्तीत्यादिना अवान्तरप्रयोजन।
स्यनिर्देशः प्रत्यक्तत्त्वप्रदीपिकेति प्रधानसंज्ञेति वदन्ति अनन्तरवक्ष्यमाणवादार्थं नरसिंहनमस्कारश्लोके
न दर्शयति प्रमाणेति प्रमाणं तत्त्वमस्यादिवाक्यजनिता जीवब्रह्मैक्याकारा चित्प्रतिबिंबधारिणी बुद्धिवृत्तिस्त
त्प्रतिबिंबितं वा चैतन्यं वाक्यापेक्षया च बहुत्वं प्रमाणमयैर्नखैर्विभिन्नो महामोहाह्वयोमरारिरसुरो येन तस्मै

प्रमाणनखनिर्भिन्नमहामोहामरारये नमस्कुर्मो नृसिंहाय स्वप्रकाशचिदात्मने ॥४॥ अथ को
ऽयं स्वप्रकाशशब्दार्थः ॥

अथ किमिति तत्कर्मकानुभवाजनकत्वं प्रमाणानामिति तत्राह स्वप्रकाशेति
स्वप्रकाशा चित्सैवात्मा यस्य अथवा स्वप्रकाशश्चिद्रूपश्चासावात्मा चेति विग्रहः एतेन स्वप्रकाशरूपेतिशयाना
धायकत्वेपि मोहनिवृत्तिलक्षणातिशयाधायकतया वेदान्तानां स्वप्रकाशे ब्रह्मणि प्रामाण्यं प्रमाणत्वं चोप-
पादितं भवति तदनेन संविदात्मनः स्वप्रकाशत्वं प्रतिज्ञातं तदेतद्द्वयमुत्तरत्र यथाक्रमं समर्थयिष्यते ॥४॥
अथ कोयमिति अथशब्दोयमानन्तर्यार्थे विषयादिसिद्ध्यनन्तरमित्यर्थः॥ अधिकारार्थो वा॥ स्वप्रकाशत्वस्य स्वय
मनंगीकारादंगीकृतशब्दद्वारा विप्रतिपत्त्यधिकरणनिर्देशः कोयमिति किंलक्षणक इत्यर्थः॥ ६ ॥ ६ ॥

चि·सु·
टी·नं·
४

स्वस्येति स्वत्वे सति प्रकाशत्वमित्यर्थः घटादावतिव्याप्तिनिवृत्त्यै प्रकाशग्रहणं स्वस्येति स्वविषयत्वे सति प्र
काशत्वं वेत्यर्थः अर्थान्तरतानिवृत्त्यै प्रथमं विशेषणं शब्दः शब्दादावतिव्याप्त्यै प्रकाशग्रहणं द्वयमिहोक्तं भवति
स्वस्य स्वस्मिन्प्रकाशत्वविधानं अर्थात्प्रकाशान्तरव्यावृत्तिरस्येति इदानीमुत्तरविशेषणं शङ्कते सजातीयेति अर्था
न्तरतानिवृत्त्यै सजातीयग्रहणं एतच्च प्रदीपादेरपि स्वप्रकाशत्वं वाञ्छतो लक्षणं स्वसत्तायामिति यावदस्य स
त्तातावत्प्रकाशेनावियोगः वेद्यत्वे हि निलीनतायामपि सम्भवात्प्रकाशव्यतिरेकोऽनवस्था चास्यादित्यर्थः

किं स्वस्यासौ प्रकाशश्च स्वप्रकाशः १ स्वस्य स्वयमेव प्रकाश इति वा २ सजातीयप्रकाशाप्र
काश्यत्वं वा ३ स्वसत्तायां प्रकाशव्यतिरेकविरहित्वं वा ४ स्वव्यवहारहेतुप्रकाशत्वं वा ५ ज्ञा
नाविषयत्वं वा ६ ज्ञानाविषय

स्वव्यवहारेति अविज्ञाने व्यवहारायोगात्स्वयं ज्ञाने न स्वव्यवहारहेतुभू
तेन भवितव्यं तद्रूपत्वं च तस्य स्वप्रकाशत्वं विवक्षितमित्यर्थः यद्यपि न पूर्वपूर्वपक्षदोषपरिजिहीर्षया सर्वेषामुत्त
रोत्तरपक्षपरिग्रहस्तथापि संभाव्यमानत्वाद्धि भिन्नदूषणत्वाच्च विनेयमतिविकासायोपन्यस्तमिति ज्ञानाविषयत्वं
शशविषाणादेरप्यस्ति तत्तज्जनितबुद्धेर्विकल्पमात्रतयार्थासंस्पर्शात् यथाहुः पतंजलयः शब्दज्ञानानु
पाती वस्तुशून्यो विकल्प इतीत्यपरितोषात्पक्षान्तरं शंकते ज्ञानाविषयत्वे सतीति न च तृतीयपक्षयोः ६ ॥

राम·
४

संकरः तथाभूतस्यापि प्रदीपस्य ज्ञानविषयत्वात् अथ ब्रूयात् किमिदमपरोक्षत्वं किमपरोक्षज्ञानविषयत्वं किं
वाऽपरोक्षज्ञानत्वं नाद्यः ज्ञानाविषयत्वज्ञानविषयत्वयोर्व्याघातात् न द्वितीयः सर्वस्यैव ज्ञानस्य स्वप्रकाशताप्रस
ङ्गेन तद्व्यर्थविशेषणत्वापातात् अतपरोक्षज्ञानाभावाच्च भवन्मते यत्साक्षादपरोक्षाद्ब्रह्मेति श्रुतेश्चैतन्यरूपस्य
ज्ञानस्य च ज्ञानत्वं नेष्यते भवतेति अतः पक्षान्तरं शङ्कते व्यवहारेति अख्यातिवादिनां व्यवहारविषयत्वे सति ज्ञानावि
षयत्वं शुक्तिरजतादिसंसर्गेऽप्यस्तीत्यतिव्याप्तिमालक्ष्य पक्षान्तरं कक्षीकरोति स्वप्रतिबद्धेति असंभवनिवृत्त्यै।

त्वे सत्यपरोक्षत्वं वा ७ व्यवहारविषयत्वे सति ज्ञानाविषयत्वं वा ८ स्वप्रतिबद्धव्यवहारे स
जातीयपरानपेक्षत्वं वा ९ अवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वं वा १० तद्योग्यत्वं वा ११ ना

सजातीयग्रहणं ज्ञानाविषयत्वे सत्यपरोक्षत्वं पूर्वमुक्तमिदं तु न ((टी॰: वेद्यस्यापि ज्ञानस्य स्वप्रकाशत्वा
द्व्यवहारविषयत्वमिति तत्सप्तमदशमसंकरावसरः शुक्तिरूप्यादौ व्यवहारानङ्गीकारणादव्याप्तिः स्यादत उक्तं तद्यो
ग्यत्वं वेति अथवाऽर्थान्तरतानिवृत्त्यै द्वितीयोऽत्यान्ते विरोधपरिहाराय तृतीयोऽत्याने घटादावतिव्याप्तिपरिहाराय चतुर्थः
सुखादावतिव्याप्तिनिवृत्त्यै पञ्चमः प्रदीपेति व्याप्तिपरिहाराय षष्ठः सप्ताष्टमनवमेषु चोक्तमेव प्रदीपेतिव्याप्तिनिवृ
त्त्यै दशमः एकादशेऽप्युक्तमिति संभवत्येव सर्वत्र पूर्वपूर्वानुपपत्तिपरिहारायोत्तरोत्तरोपन्यासः वेद्यस्यापीति नहि तद

चि॰सु॰ टी॰न॰ ५

कर्मकर्तृभावेति यद्यपीयं स्वस्येति षष्ठी संबन्धमात्रेऽपि संभवति तथाप्यविवक्षितविशेषेऽव्यवहारायोगाद्विशेषस्य च सं
निहितप्रकाशनक्रियानुरोधेन कर्मणि व्यवस्थापनात्प्रसज्येतैव कर्मकर्तृभावइत्यर्थः प्रदीपादेरिति नहि तदालोका
न्तरेण प्रकाश्यते यच्च ज्ञानं प्रकाशकं तद्विजातीयमित्यर्थः नच प्रदीपस्यापि स्वप्रकाशत्वादतिव्याप्तिरिति शंकनीयं

भ्युपगमात् न द्वितीयः कर्मकर्तृभावविरोधेन लक्षणस्यासंभवात् न तृतीयः प्रदीपादेः सजातीय
प्रकाशाप्रकाश्यस्यास्वयंप्रकाशत्वेन लक्षणस्यातिव्याप्तेः घटादेरपि सजातीयप्रकाशाप्रकाश्यस्य
स्वप्रकाशत्वप्रसंगाच्च नहि प्रदीपादौ ज्ञाने वा घटत्वादिजातिरस्ति येन घटादयः सजातीय
प्रकाशप्रकाश्या भवेयुः॥ सत्तया सजातीयत्वं तत्राप्यस्तीति चेन्न विशेषणवैयर्थ्यात्स
त्ताविरहिणः प्रकाशस्यैवासम्भवात्प्रकाशाप्रकाश्यत्वमित्येतावतैव चरितार्थत्वात् नापि
चतुर्थः सुखादावतिव्याप्तेः सुखादेरपि स्वसत्तायां प्रकाशाव्यभिचारात् न पंचमः प्रदीपा॥

भौतिकस्य स्वप्रकाशताव्याघातादिति न विशेषणवैयर्थ्यादिति एवं हि विशेषणस्य सार्थक्यं यदि कयापि जा।
त्या साजात्यहीनः कश्चित्प्रकाशः स्यात् न चैवमस्ति जातिमतः सर्वस्यापि अंततः सत्तया साजात्यादित्यर्थः प्रका
शाव्यभिचारात् साक्षिणैव स्वज्ञानेन वा मानसप्रत्यक्षेण वेत्यर्थः घटादावपि तुल्यमेतत् ॥ ॥

स्वव्यवहारहेतुत्वादिति व्यवहारो हेतुत्वद्विषयो भिन्नाभिवदनं वाह्वानादिर्वा कर्मकारकप्रदीपजन्य इत्यर्थः अथ
ज्ञानेति स्वव्यवहारे त्यत्र प्रस्तुतं ज्ञानमेव स्वशब्देनाभिधीयते न विषयमात्रं तत्स्वव्यवहारहेतुत्वं च न दीपादेरस्ति
प्रदीपादेर्ज्ञानाप्रकाशत्वादतो नातिव्याप्तिरिति भावः अनुव्यवसायेति ईश्वरज्ञानस्याप्युपलक्षणं अथानुव्यवसाय
ज्ञानमेव स्वप्रकाशवादेन संप्रतिपन्नं यत्राति व्याप्तिरुच्येत संप्रतिपन्नत्वेवात स्यापि व्यवसायवदेव पक्षत्वेति
तत्राह प्रदीपज्ञानमिति विशिष्टवेदनस्य विशेषणालंवनत्वनियमात् विषयजन्यत्वाच्च तज्ज्ञानस्य प्रदी-

दावति व्याप्तेः प्रदीपादेरपि स्वव्यवहारहेतुत्वात्प्रकाशत्वाच्च अथ ज्ञानव्यवहारहेतु
प्रकाशत्वं विवक्षितं तदपि न अनुव्यवसायेति व्याप्तेः तस्य वेदत्वेपि व्यवसायज्ञानव्य
वहारहेतुप्रकाशत्वात् प्रदीपज्ञानमिदमिति व्यवहारहेतौ प्रदीपप्रकाशेतिव्याप्तेश्च

पज्ञानमिदमित्यनुव्यवसाय ———————— स्याभिन्नारूपव्यवहारस्य स्वविषयज्ञानविशेषणीभूत
प्रदीपजन्यत्वमस्तीति ज्ञानव्यवहारहेतौ प्रदीपेतिव्याप्तिः स्यादेवेत्यर्थः अभिवदनं वा व्यवहारस्तस्यापि पर
परयाव्यावर्त्तकप्रदीपजन्यत्वाद्व्यवहारहेतुत्वमिति व्यवहारहेतुत्वमिति स्वव्यवहारहेतुप्रकाशत्वमित्यत्र व्यवहार
हेतुत्वं प्रकाशस्य विशेषणमुपलक्षणं वेत्यर्थः उपलक्षितत्वमप्युपलक्षितेनामतस्य धर्मः स्वरूपं वा आद्येन दृष्टुप

वि. सु. टी. न. ६

नाद्यः अनवस्थापातात् द्वितीयं निरस्य द्वितीयं द्वितीयं शंकते स्वरूपमात्रत्वेनेति न लक्षणसिद्धिरिति लक्ष्यस्व रूपमात्रत्वात्तस्य जडज्ञानवादिभिरपि तावन्मात्राङ्गीकारात्त्वेत्यर्थः ज्ञानाविषयत्वे सतीत्यत्र यदि ज्ञानविषयत्वं प्रतिषिध्यते तर्हि किं वेद्यत्वं ज्ञानकर्मत्वं वा नाद्यस्तन्निषेधासंभवस्य दर्शितत्वादित्याह अविषयत्वस्येति द्वितीयं नि

किंच व्यवहारहेतुत्वं विशेषणमुपलक्षणं वा नाद्यः मुक्तिप्रलयादावभावेन द्वितीयः उपलक्षितत्वस्यापि विशेषणत्वे प्रागुक्तदोषानुषंगात् स्वरूपमात्रत्वे तु ज्ञाने प्रकाशे इत्येव स्यात् तथा सति न लक्षणसिद्धिर्नापि पक्षः स्वयंप्रकाशत्वसाधकानुमानागमादिजन्यज्ञानविषयत्वेन लक्षणस्यासंभवितत्वात् तस्याप्यविषयत्वे कथमप्युपपत्तेर्नापि स्वभ्रमः अविषयत्वस्येत्यसंभवेन निरस्तत्वात् द्विषयत्वशब्देन कर्मत्वविवक्षायां गुरुमतानुसारिणामात्मन्यपि व्याप्तेस्वगतस्य ग्राहकतया सिद्धस्याविषयत्वेप्यपरोक्षतायास्तैरंगीकारात् अपरोक्षमः प्राचीन दोषानुषंगात्॥

वेधतीति विषयत्वेति प्राभाकराणां मते संविदाश्रयतया सिद्धस्यात्मनो ज्ञानाकर्मत्वेनापरोक्ष तासीत्यंगीकारादतिव्याप्तिरित्यर्थः ईश्वरवादिनां तज्ज्ञानाकर्मतयापरोक्षं जगति भ्रमविषयसंसर्गे च वेदांतिनां च साक्षिवेद्यसुखादावतिव्याप्तिरित्यपि द्रष्टव्यं प्राचीनदोषानुषंगादिति व्यवहारविषयत्वस्य मुक्तिदशायामसंभवादि

राम ६

अतिव्याप्तिं चाह शुक्तीति शुक्तिरूप्यसंसर्गस्य ज्ञानविषयत्वं तेषां मतमभिमतं तथा सत्ययथार्थज्ञानांगीकारापातादिति भा-
वः॥ साक्षात्त्वं किमत्त्वं तत् यथाकथंचनवा आरोपशरीरे प्रसक्तिरुक्ता द्वितीये त्वनपेक्षामात्रे घटादेरप्यस्ति अपेक्षावत्त्वान-
धिकरणत्वविवक्षायामाह सत्तयेति अदृष्टादेः सर्वोत्पत्तिमन्निमित्ततया सत्त्वात्तथा च तज्जन्यव्यवहारस्य सजातीयप

शुक्तिरजतादिसंसर्गो ख्यातिवादिनामपि व्याप्तेश्च तस्य व्यवहारविषयत्वेऽपि तैर्ज्ञानविषयतानंगीकारा-
त् नापि नवमः स्वमतिवद्व्यवहारे सजातीयपरानपेक्षत्वस्य परशरीरादौ घटादौ च भावेनातिव्याप्तेः सत्तया सजाती-
यत्वविवक्षायां तु तद्व्यवहारस्यापि सत्तया सजातीयादृष्टादिजन्यतया तदपेक्षत्वेन लक्षणस्यासंभवितत्वप्रसं-
गात् नापि दशमः अवेद्यत्वेनुमानाद्यगोचरतया कथानवतारप्रसंगस्य दर्शितत्वात् अपरोक्षव्यवहारवि-
षयत्वमिति शब्देन प्रत्यक्षज्ञानविषयत्वस्य कंठोक्तत्वात् तद्विपरीतावेद्यत्वाभिधाने मे मातावंध्येति
वद्व्याघातात्त्व सुषुप्तिप्रलयमोक्षेष्वव्याप्तेश्च तदा व्यवहारस्यैवासंभवेन तद्विषयताभावात् ना-
प्येकादशः उक्तव्यवहारयोग्यताया धर्मत्वे द्वैतवादिनामपसिद्धान्तापातात्स्वरूपत्वे च ज्ञानस्वभा-
भावस्यात्मनो व्यवहारनिरूपणीयत्वात्स्वप्रतियोगिकत्वप्रसंगात् तदेवं न स्वप्रकाशलक्षणं पश्यामः॥

रसापेक्षतया लक्षणासंभवादित्यर्थः पूर्वोक्तव्यर्थविशेषणत्वमपि द्रष्टव्यम् अपरोक्षेति अपरोक्षज्ञानमप्यपरोक्षव्यवहा-
रो भवत्येवाभिज्ञारूपत्वात् तत्सत्त्वव्याघात इत्यर्थः अविवदन विवक्षायां तु तस्य स्वविषयज्ञानप्रयोज्यत्वाद्याघातः ननु प्रमा-
णबलात्स्वप्रकाशत्वे सिद्धे तदनुगुणं यत्किंचिल्लक्षणमपि भविष्यति यतो लक्ष

१ वि·सु·
टी·न·
७

णमपि प्रमाणांतरसिद्धस्येतरेभ्यो व्यावर्तकं व्यवहारहेतुर्वा भवेदिति अत आह नापि प्रमाणमिति न्यायरत्नदीपाव
लीकृतमनुमानमुपन्यस्यति अथानुभूतिरित्यादिना प्रकाशत्वस्य यत्किंचिद्व्यवहारहेतुत्वस्य च परैरप्यंगीकारात्सि
द्धसाधनतास्यादित्यनुभूतिग्रहणं नचाप्रसिद्धविशेषणता अनुभूतिव्यवहारस्योभयसिद्धतया तद्धेतुभूतप्रकाश
स्यापि संमतत्वात्केवलव्यतिरेकाव्यतिरेकयोर्विप्रतिपन्नेस्तथा चानुभूतिव्यवहारहेतुत्वाप्रसिद्धिरलंकारस्य व

नापि प्रमाणं अथानुभूतिरनुभूतिव्यवहारहेतुप्रकाशोऽनुभूतित्वात् यन्नैवं तन्नैवं यथा घटः इ
त्यनुमानं प्रमाणं नत्वाप्रसिद्धविशेषणः पक्षः अनुभूतिव्यवहारस्य हेतुभूतः प्रकाशः परेषा
मपि हि प्रसिद्धस्ततोऽनुभूतेस्तत्स्वरूपत्वप्रतिज्ञोपपद्यते नचानुव्यवसायज्ञाने साध्यस्य सिद्ध
त्वादंशे सिद्धसाधनता तत्स्वरूपस्यैवासंमतत्वेन तस्य धर्मिभागतानंगीकारादिति चेन्मैवं अ
नुभूतिव्यवहारस्य हेतुभूतः प्रकाशो यत्र सिद्धस्तत्र हेतोर्वृत्तौ केवलव्यतिरेकित्वव्याकोपात् ॥८॥

द्धिमत्त्वादीनामपि महीधरादिसंबंधस्यानुमानगम्यत्वादितरथा सिद्धसाधनतापातादित्यत इदमाह नचाप्रसि
द्धविशेषणः पक्ष इत्यादिना तदेतद्दूषयति मैवमिति अयमभिसंधिर्न तावदनुभूतिव्यवहारहेतुरविवक्षितस्य त्वविशे राम·
षः प्रकाशः सिध्यतीति शक्यांगीकारे न ह्यस्ति संभवः संप्रतिपन्नमुभयोः क्वेति न ज्ञायत इति कस्य चायमविवक्षितस्य ७
त्वविशेषः सिध्यतीति विवेचनीयं न तावत्त्वत्पक्षे तस्य संविद्रूपतया निर्णीतत्वादपरस्यापरं प्रति प्रसाधनायोगात् ॥

यद्वाहृनिश्चितैर्नोहि वादं कुरुतइति नापि परस्यतस्याप्यनुव्यवसायेन निर्णीतत्वात् तत एव नोभयोरस्माद्विवसि
तस्य ल विशेषस्सिद्ध्यतीत्यस्य न कंचनार्थं पश्यामः न च केवलव्यतिरेकिण्यप्रसिद्धविशेषणतानामनदूषणमिति
मंतव्यं तथा सति वसुधा शशविषाणोल्लिखितावसुधात्वादित्यादिना शशविषाणादेरपि सिद्धिप्रसंगात् अथ तत्र प्र
माणांतरबाधयादुष्टता नाप्रसिद्धविशेषणतयेति ब्रूषे तन्न बाधकासिद्धेर्नहि शशविषाणादीनामभावे दर्कं प्र
माणमस्ति तस्य प्रमाणांतरस्यायोग्यता योग्यतयोरभावो सिद्धेः अथ नियमेन प्रमाणानुपलंभो बाधकः ततो निरि
क्तानर्हिकानामप्रसिद्धविशेषणतेति घट्टकुटीप्रभाताथितं अथ विपक्षे बाधकतर्कोभावात्तर्हि किं विपक्षे बाध

**अवृत्तेरसपक्षाप्रवेशिनोऽसाधारणानैकांतिकत्वापातात् वृत्तावपि भागे सिद्धसाधनतायाः**
**दुःपरिहरत्वात्॥**

कस्तर्कः प्रमाणानुज्ञाद्वारोपयोगीत्वात् तेन वा नान्यस्तर्कस्य प्रमाणानुज्ञाव्यापारं मंत
रेणोपयोगाभावात् प्रथमे तु तर्काभावात्प्रमाणाभाव एव सिद्ध्यति सैवचाप्रसिद्धविशेषणतेति सिद्धं नः समीहितं।
किंच केवलव्यतिरेकित्वादेव केवलव्यतिरेकिणि न दूषणमप्रसिद्धिविशेषणता केवलान्वयिन्यन्वयव्यतिरेकिणि च
सपक्षवत्त्वप्रसिद्धविशेषणताशंकैव नास्तीति हन्तावर्तेयमप्रसिद्धविशेषणता कथान्तपस्विनी तस्माद्यत्रायमप्रसिद्धः
ससपक्षः स्वीकर्तव्यस्तथा चोच्यमानदूषणगणग्रासोद्गुनिरसनइति सपक्षवत्त्वमत्त्वयोः केवलव्यतिरेकिता हानिरसा
धारणानैकांतिकता चेति दूषणद्वयमुक्तं तत्र मानामायं भूत्केवलव्यतिरेकान्वयव्यतिरेकं चैव भवत्विति शंकमानं प्रत्य

यत्तूक्तं स्वप्रकाशवादिनो नानुव्यवसायो नाम ज्ञानग्राहकं ज्ञानमस्ति तत्कथं तस्य धर्मिता कथंतरां तत्र सिद्धताक-
थंतमां सिद्धसाधनतेति तत्राह नत्वस्वस्यासिद्धतामात्रेणेति विपक्षे बाधिकां प्रतिवंदीं गृह्णाति अन्यथान्यथेति केन
चिद्धेतुनेति रजतार्थिनो नियमेन पुरोवर्त्ति प्रवृत्तिहेतुत्वाद्रजतेच्छाधीनपुरोवर्त्तिप्रवृत्तिहेतुत्वादित्यादिनेत्यर्थः अस्त्वनु-
व्यवसायवादिनं प्रत्ययं प्रयोगः यस्य तु तन्नास्ति तं प्रति निरूपसर्गः प्रयोग इत्यत आह स्वप्रकाशवादिनमिति ननु विवाद-

नत्वस्वस्यासिद्धतामात्रेण परसिद्धे साध्यवति धर्मिणि सिद्धसाधनतायाः परिहारः अन्यथाऽन्यथा-
ख्यातिवादिभिः केनचिद्धेतुना रजतज्ञानस्य पुरोवर्त्तिविषयत्वे साधिते वेदान्तिना चानिर्वचनीयपु-
रोवर्त्तिरजतविषयत्वेन सिद्धसाधनत्वेनास्माकं तत्सिद्धमिति वचनमात्रेणान्यथाख्यातिवादि-
नश्चरितार्था भवेयुः अथ तान्निर्वचनीयवादिनां प्रति अयं प्रयोगस्तस्य सिद्धसाधनतापत्तेः त-
र्हि त्वनुव्यवसायवादिनं प्रत्ययं प्रयोगो न स्वाङ्गीकारे सिद्धसाधनत्वप्रसंगात् स्वप्रकाशवादिनं
प्रति सिद्धसाधनत्वादप्रयोग इति मूकीभाव एव स्यात् अथ विवादपदेनानुव्यवसायस्य

परमित्यनुभूतेर्विशेषणं प्रक्षिप्यते तथा चानुव्यवसायस्य परसंप्रतिपन्नसाध्यस्य व्यावर्त्तनमिति तदाह अ-
थेति तत्रेदं वक्तव्यं किमनुव्यवसायज्ञानं स्वमतसंमतं न वा न यदि तदा व्यर्थविशेषणता अथ संमतं तदा कथं-
स्वप्रकाशता कथं वा केवलव्यतिरेकितेति

तदेतदपि नासूचयन्नंग्यंतरेण पुरोदितं केवलव्यतिरेकिनाकोपमाह तथापीति साध्यविशेषणेति साध्यमेव।
विशेषणं पक्षं इति विशेषणत्वात्तस्य न च व्यवसायं पक्षीकृत्यानुव्यवसायवदनुभूतिव्यवहारहेतुप्रकाशत्वसाधनाद
न्वयव्यतिरेकिनास्तु अनुव्यवसायांगीकारानंगीकारयोर्व्याहतिदृष्टान्ताभावयोः प्रसंगात्। यानि च स्वव्यवहार
हेतुप्रकाशत्वमिति पंचमे पक्षे व्यवहारहेतुत्वस्य विशेषणोपलक्षणपक्षविकल्पेन दूषणान्युक्तानि तानन्यत्र प्रस

व्यवच्छेद्यत्वात्स्य धर्मिभागतेति मतिस्तथापि तस्य साध्यविशेषणप्रसिद्धिस्थलत्वेनाभ्युपग
माद्धेतोः केवलव्यतिरेकित्वाभावस्तदवस्थस्तदनंगीकारे च न विशेषणप्रसिद्ध्युपपत्तिः अ
थ परं प्रत्येव तस्य प्रसिद्धिस्थलता न हि तं प्रति केवलव्यतिरेकिप्रयोगायोगः किंच व्यवहार
हेतुत्वस्य प्रकाशविशेषणतायां कैवल्येन तदभावात्स्वयंप्रकाशताऽभावः व्यवहारहेतुत्वयो
ग्यतायां च स्वरूपातिरिक्तायां स एव दोषः अथ तदुपलक्षितप्रकाशात्मत्वमेव साध्यं तथापु

रतीत्याह किंच व्यवहारहेतुत्वस्येति ननु व्यवहारहेतुत्वयोग्यता विवक्षिता सा च तदानीमप्यस्ति योग्यतायाः यावद
स्तुभावित्वादित्याशंक्य न तर्हि सा स्वरूपातिरिक्ता तदनतिरिक्ता वा अतिरिक्तापि विशेषणमुपलक्षणं वेति विकल्प्य
विशेषणपक्षं दूषयति व्यवहारेति स्वरूपातिरिक्तायां विशेषणतायां चेत्यध्याहर्तव्यं उपलक्षणपक्षं दूषयं शंक
ते अथेति तथा योग्यतया तेन व्यवहारहेतुत्वेन वोपलक्षितं यत्प्रकाशात्मकत्वं तदेव साध्यमित्यर्थः॥ ९ ॥

तदपि वक्तव्यं यत्तदुपलक्षितत्वं तद्विशेषणमुपलक्षणं वा आद्यं दूषयति तथापीति स एव दोष इति कैवल्या
वस्थायां तदभावात् स्वयंप्रकाशत्वप्रसंग इत्यर्थः उपलक्षितत्वस्योपलक्षणत्वपक्षं दूषयति अनन्तर्भावे चेति
तस्याश्चान्यत्रापीति अनुव्यवसायादिष्वपीत्यर्थः एतेनानतिरिक्तपक्षोऽपि निरस्तो वेदितव्यः उक्तदूषणजातं प्राचा
नाचार्योदीरितानुमानेऽप्यतिदिशति एतेनेति एतेनेत्येतदेव विवृणोति तत्रापीति तदेवं स्वप्रकाशत्वे संभाव्य।

पलक्षितत्वस्य साध्यान्तर्भावे स एव दोषः अनन्तर्भावे च प्रकाशस्वरूपतायाः एव साध्यत्वात् त
स्याश्चान्यत्रापि सिद्धत्वात् न केवलव्यतिरेक्यनुमानावकाशः एतेनानुभूतिरनुभाव्यानभ
वत्यनुभूतित्वादित्यादिप्रयोगोऽपि परास्तः तत्राप्यप्रसिद्धविशेषणतायाः दुःपरिहरत्वात्।
ज्ञानं वेद्यं वस्तुत्वाद् घटवदिति प्रतिप्रयोगसंभवाच्च न च हेत्वसिद्धिः सत्ताधिकरणत्वलक्ष
णवस्तुत्वस्यावधीरितकल्पिताकल्पितविशेषस्य ॥ मानानुमानानि दूषयित्वा वेद्यत्वेऽप्यनुमानमा

ह ज्ञानमित्यादिना प्रतियोगेति प्रतिपक्षसाधकेत्यर्थः सत्प्रतिपक्षतावाननु किमिदं वस्तुत्वं हेतूकृतं किं काल्पनि
कसत्त्वमाहोस्विद्वास्तवसत्त्वमिति नाद्य उभयासिद्धेर्नोत्तरः अद्वैतवादिनः साधनविकलत्वादित्यत आह न च हेत्व
सिद्धिरिति साधनवैकल्यस्याप्युपलक्षणमेतत् अथवा किं वस्तुत्वं नाम काल्पनिको धर्मः उत अकाल्पनिकः नाद्य
स्त्वसिद्धेर्नोत्तरः ममासिद्धेरित्याशंक्याविवक्षितविशेषमादायायं परिहारः सत्ताधिकरणत्वेति स्वरूपसत्ताव

अनुभूतित्वादित्यादीति यथाह्यनुभूतित्वादिति स्वप्रकाशत्वादिहेतौ कोयमनुभूतित्वं नाम धर्मः किं कस्यचिदुत नाकस्यचित् नाद्यः परस्यासिद्धेर्न द्वितीयः स्वस्यासिद्धेरिति विकल्पिते साधारण्येनैव परिहारस्तद्वदित्यर्थः अत्र गंगापुरीभट्टारकोदीरितदूषणमनुवदन्ति ननु किमिदमित्यादिना मैवं घटादेरिवेति नहि घटादेरिवानुभूतेरपि वेद्यत्वं प्रत्यक्षादिप्रमाणसिद्धमिति मन्तुमुचितं तथा सति नैयायिकादेरिव जडतयापि संविदोऽर्थप्रथनसिद्धौ घटादिप्रतीत्यन्यथानुपपत्त्युपन्यासानवसरात्तद्दूषणानां स्वमतेप्यनुषंगप्रसंगाच्च नच नैयायिकाद्युपगतजडतायाः समारोपितत्वांगीकारादस्त्येवानुभूतेरपि व्यावहारिक

अनुभूतित्वादिवद्धेतुत्वोपपत्तेः ननु किमिदं साध्यमानं वेद्यत्वं वास्तवमुतावास्तवमाहोस्विद्व्यावहारिकमथवा साधारणमाद्ये साध्यविकलं निदर्शनमितरेषु सिद्धसाधनत्वमिति चेन्मैवं घटादेरिव व्यावहारिकप्रमाणसिद्धवेद्यतापादनेपि स्वप्रकाशत्वासिद्धेः किंचानुभूतिपदं स्वगोचरगोचरज्ञानजन्यपदत्वात्कुम्भपदवत् ननु किमत्र गोचरशब्देन विषयमात्रमुच्यते किंवा वाच्योर्थः अथ लक्ष्यो वा न तावत्प्रथमद्वितीयौ सिद्धसाधनतापत्तेरभ्युपेयते हि अनुभूतिशब्दवाच्यस्यान्तःकरणवृत्तिविशिष्टस्य वेद्यतेति साम्प्रतं तस्याः

शुक्तिरजतादेरिव व्यवहारासमत्वात् अतो व्यावहारिकवेद्यत्वसाधनमपि विरुद्धोपराहतमिति भावः वेद्यत्वेनुमानान्तरमाह किंचानुभूतिपदमित्यादिना स्वगोचरस्य गोचरो यस्य तज्ज्ञानं स्वगोचरगोचरज्ञानं तज्जन्यः शब्दनित्यत्ववादिनां प्रयोगस्य तज्जन्यत्वाच्छब्दोपि तज्जन्य इत्युच्यते सिद्धसाधनतानिवृत्त्यै स्वगोचरग्रहणं अत्रापि तैरुद्भावितदूषणमनुवदन्ति ननु किमत्रेति सिद्धसाधनतामेव विवृणोति अभ्युपेयते हीति अंतःकरणवृत्तिविशिष्टस्येति हेतुगर्भविशेषणं यस्मादन्तःकरण

मुख्यार्थविवक्षयेति सर्वं हि तदाप्रयोगः स्याद्विवादपदं खलस्य विषयज्ञानजन्यं पदत्वात्संप्रतिपन्नवदिति एतच्च नैकान्तिकं मुख्यार्थविवक्षया प्रयुक्तगंगादिपदानां तल्लक्ष्यतीरादिज्ञानजन्यत्वाभावात्तेषां मुख्यार्थज्ञानमात्रजन्यत्वादित्यर्थः तदेतद्दूषयति मैवमिति लक्षकपदत्वहेतुस्तथा च नानैकान्तिकमित्यर्थः पदमात्रं पक्षीकृत्य लक्षकपदत्वादित्युक्ते भागासिद्धिबाधौ स्यातामिति लक्षकपदमित्युक्तं उभयवादिसंप्रतिपन्नात्तु भाष्यवाचकानुभूतिलक्षकपदं चात्र विवक्षितं तेन नाश्रयासिद्धिसिद्धसाधने किं च यावत्किंचित्स्वप्रकाशत्वानुमानमुपन्यस्तं तत्सर्वं स्व

स्यज्ञानस्य ज्ञानगोचरतानुतीये तु मुख्यार्थविवक्षया प्रयुक्तगंगादिपदैर्व्यभिचार इति चेन्नैवं लक्षकपदं पक्षीकृत्य लक्षकपदत्वेन लक्षकगंगादिपदवल्लक्ष्यज्ञानजन्यत्वानुमानात् किं चानुभूतिपदाभिधेयस्य स्वप्रकाशत्वमभिधीयते भवद्भिरुत लक्ष्यस्य नाद्यः अपसिद्धान्तापाता न्न द्वितीयः प्रतिवादिनं प्रत्याश्रयासिद्धेः सकलधर्मातीतस्याद्वितीयस्यानुभूतिपदलक्ष्यस्य परैरनंगीकारात् ॥ ६ ॥

धर्म्यैव तावन्न निरूपणपद्धतिमध्यास्त इत्याह किं चानुभूतीति अपसिद्धान्तेति अंतःकरणवृत्तिविशिष्टस्य स्वप्रकाशत्वानाश्रयणादित्यर्थः प्रतिवादिनं प्रतीति न तावदनुभूतिपदलक्ष्यस्य यस्य कस्यचित्प्रमातुर्वा प्रमेयस्य वा स्वप्रकाशतासिसाधयिषिता येनाश्रयासिद्धिर्न भवेत्किंत्वद्वितीयानादिनिधनात्मभूतज्ञानस्य तस्य परं प्रत्यसिद्धेराविशन्त्येवाश्रयासिद्धिपिशाचिकेति भावः किं च स्वप्रकाशतायां प्रमाणमज्ञात्वा ॥ ॥ ॥

सद्भावयोः समेयासिद्धिरिति व्याघातलक्षणतर्कयुगलविरोधइत्याह किंच स्वप्रकाशतायामिति एवं स्वप्रकाशत्वे प्रमा
णलक्षणे समाक्षिप्य समाधातुमुपक्रमते अत्रोच्यतइत्यादिना तत्र लक्षणं तावच्छ्लोकेन गृह्णाति अपरोक्षेत्यादि
ना नः अस्माकं पक्षे अपरोक्षव्यवहृतेर्व्यवहारस्य योग्यस्य व्यधिकरणे षष्ठ्यौ तथा धीपदस्य संविद्विषयस्य स्वप्र
काशस्य संभवेऽस्तीति स्वप्रकाशस्येति पदमुभयत्रापि संबध्यते हारमध्यस्थमणिवत् अनन्तस्य स्वप्रकाशस्य लक्षणा
सम्भवः कुतो न कुतोपीति योजना संगृहीतः लक्षणं विवृणोति नतावदित्यादिना अपसिद्धान्तापत्ति॥ ॥
स्याद्वैतवादिनइतरदशायामपीतिशेषः नच शंकनीयमित्युक्तं तत्र हेतुमाह योग्यत्वास्यतेति कदाचिदपि यो।

किंच स्वप्रकाशतायां सति प्रमाणेन तद्व्यवस्थापनमस्ति च साधकाभावादेव न तत्सिद्धिरिति सैषोपनिषदासु
भयतः पाशारज्जुरित्यलमतिविस्तरेण अत्रोच्यते अपरोक्षव्यवहृतेर्योग्यस्याधीपदस्य नः संभवे स्वप्र
काशस्य लक्षणासंभवः कुतः॥ १॥ न तावत्स्वयंप्रकाशे लक्षणासंभवः अवेद्यत्वे सत्यपरोक्षव्यवहार
योग्यतायास्तल्लक्षणत्वात् न च योग्यता लक्षणधर्मीणीकारे व्याप्तिर्मोक्षदशायां तदसंभवादपसिद्धान्ता
ग्यताधिकरणं तदत्यंताभावानधिकरणमेवानुमतिः पत्तिश्चेति शंकनीयं योग्यत्वात्यन्ताभावानधिकरणत्वस्य त
विनाशित्वं न हि संसर्गाभावविशेषमत्यंताभावमुपगच्छंति तार्किकास्तथा च यदि कदाचिदपि तत्प्रतियोगी स्यात्तदा तत्पूर्वं
वा तदुत्तरकालं वा तदभावो मंतव्यः न समसमयं विरोधात् न चान्योन्याभाववत्प्रतियोगिघटयोश्च समसमयं वर्तमान
त्वान्न विरोध इति वचनीयं तस्य तादात्म्यप्रतियोगित्वात्तस्य कदाचिदप्यभावात् इतरथा घटसंसर्गाभाव घटान्योन्याभा

१
सि॰सु॰ | टी॰न॰ | ११

रप्रसंगात् अथ घटप्रतियोगित्वे समानेपि संसर्गतादात्म्यरूपविशेषणभेदात् संकरत्वयोरेवं तर्हि भावाभावविवेकेन संसर्ग-
तादात्म्ययोरेवोभयत्र प्रतियोगित्वं न घटस्येति मूको भावः तदितराभावे तु वायं नियमः विस्तरेण चैतदुपरिष्टादुपपादयि-
ष्यते ततश्च प्रतियोगिपूर्वकालीनत्वे विनाशित्वमुत्तरकालीनत्वे तूत्पत्तिमत्त्वं स्यात्ततश्च प्रागभावप्रध्वंसयोरत्यन्तत्वं
प्रसज्येत तस्मात्कदापि योग्यताधिकरणं तदत्यन्ताभावानधिकरणमेवेति सिद्धं ननु चैतदंगीकर्त्तव्यमितरथा।
गुणवद्द्रव्यमिति कणादोक्तगुणवत्त्वस्य द्रव्यलक्षणत्वभंगप्रसंगात् प्रथमक्षणे हि गुणवत्त्वाभावेनाव्याप्तेः यथा चैतत्त-
थाद्वितीयपरिच्छेदे द्रव्यलक्षणखण्डनप्रस्तावे विस्तरेण निवेदयिष्यते तस्मात्तदत्यंताभावानधिकरणत्वमेव तत्र

गुणवत्त्वात्यंताभावानधिकरणस्य द्रव्यत्ववत्तेन नाव्याप्तिर्नोप्यपसिद्धांतः कात्स्निकधर्माणां संसा
रदशायामभ्युपगमात् अस्मा भवतः केयं साधकत्वप्रकल्पने किं न पश्यसि संसारं तत्रैवाज्ञानकल्पि

शरणं तत्रापि स्मानमभिनिवेशमपहायेत्यभिसंधिरात् गुणत्वात्यंतेति यद्यप्यप ॥ नमिति सुरेश्वराचार्य्य
रोक्षव्यवहारविषयत्वात्यंताभावानधिकरणत्वमेव लक्षणं भवति तथाप्यामुक्ते विद्यमानयोग्यताऽत्यागायेदमुक्तं भव
त्वेवमव्याप्तिपरिहारोपसिद्धांतत्वाधेः किमोषधमित्यत आह नाप्यसिद्धांत इति कः खल्वेवं वदेत्संसारदशायामपिका।
त्स्निकधर्माः न संतीति किं परः किं वा स्वयूथ्यः कश्चित्परश्चेद्धि यदादारोपसमर्थनेन समर्थनीयः उत्तरमात्रवाक्येन सं
मतयति अस्माभवत इत्यादिना अद्वितीयात्मनः साधकत्वकल्पनायां केयमस्मा अस्मद्धित्सुता भवतः किं न त्रैवमप्र
तमप्रपंचकल्पितं न पश्यसि ततोऽन्यत्स्यमिदमित्यर्थः विषयिणस्त

राम॰ | ११

द्धर्माणां चैतन्य आत्मभाष्याव्ययवं व्याचक्षाणैः पंचपादिकाकृद्भिः ननु विषयविशिष्टादेकरसस्य कुतो धर्मो ये विषयैः व्यस्येर
न्निर्माशिष्यस्माहितं आनंदो विषयानुभवो नित्यत्वं चेति संति धर्माः अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासंत इति ननु संसारद
शायां कथमनासंभवः मोक्षदशायां तु तदभावाद्व्याप्तिरित्यत आह मोक्षदशायामिति यद्यप्ययमपि कश्चन धर्मस्तथापि परै-
स्तद्भावरूपत्वेनांगीकृतत्वात् अभावभावयोरेवंविधस्थलेष्वनतिरेकस्वीकाराच्च न दोषः। एतच्च पूर्वोक्तस्यैव विवरणं इ
दानीं लक्षणविशेषणानां कृत्यमाह अपरोक्षेत्यादिना अवेद्यत्वशब्देन ज्ञानाविषयत्वमभिमतमिति भ्रांतः शंकते नन्विति।

वचनात् आनंदो विषयानुभवो नित्यत्वं चेति संति धर्मा इति पंचपादिकाचार्यवचनाच्च मोक्षदशायां च वि
वक्षितधर्माभावेऽपि कदाचित्स्वत्वेनेतरत्वनाभावानधिकरणत्वस्य गुणाश्रयो द्रव्यमितिवत्सिद्धेरपरोक्षव्यव
हारयोग्यघटादावतिव्याप्तिपरिहारार्थमवेद्यत्वे सतीति विशेषणं नचैतावदस्तु लक्षणमिति वाच्यं तथा सत्य
तीतानागतयोर्नित्यानुमेयेषु च धर्मादिष्वतिव्याप्तेः ननु तेषामप्यागमवेद्यत्वान्नावेद्यत्वमिति चेन्नैवं।
फलव्याप्यत्वलक्षणवेद्यत्वस्य तत्राभावात् ॥ छि छि ॥ तत्र विशिष्टशब्दप्रमाणबलात्तदाकारधीवृत्तिस

फलव्याप्यत्वेनेति विषयावच्छिन्नं चैतन्यमभिव्यक्तं फलमिति वेदांतवादिनां मतं अभिव्यक्तिश्चेन्द्रियद्वारा अर्थसन्निकृष्टम
नःपरिणामविशेषः नचैवंविधः परिणामविशेषो धर्मादिषु संभवति तेषामिंद्रियायोग्यत्वात् एतेनातीतादि व्याख्यातं तस्मा
न्न धर्मादीनां फलावच्छेदकतयावेद्यत्वमित्यर्थः यथा नैव व्यवहारसिद्धिस्तथा भवत्कल्पनयाप्यन्यथानतयोदितं नत्तर
गाधधीभिस्तोवयं विस्तरतो विभीताः। ननु यदि नवेद्यत्वं तेषां कथं तर्हि तेषु विज्ञानमनुष्ठानमित्यादिव्यवहार इत्यत आह तत्रेति

१
वि·सु· टी·त· १२

माणं विधिवाक्यादि धीवृत्तिरंतःकरणपरिणामस्तस्य समुल्लासमुदयस्तन्मात्रादित्यर्थः ननु यद्यपि धर्मादीनां नास्मदादि
प्रत्यक्षगम्यत्वं तथापि योगिनां भवति तत्प्रत्यक्षमतस्तत्र वेद्यत्वमित्यत आह नचेति अयमभिसंधिर्नतावद्धर्मादीनां बाह्ये-
न्द्रियग्राह्यत्वं रूपादिहीनतया तद्रूपरहितमर्यादविषयाणामिंद्रियाणां तत्राप्रवृत्तेर्मानसत्वं तु तेषामात्मगुणत्वेपि संस्कार
वदयोग्यत्वेन दूरनिरस्तं अथ विशिष्टादृष्टसामर्थ्यात्तेषां तेषु विषयेषु सामर्थ्यमिति मतं तर्हि तदेव हि विशिष्टादृष्टं ज्ञाने
कथंकारमेषामुदेति अज्ञातेषु तेषामनुष्ठानायोगात् अथ योग्यंतरवचनादंधपरंपरा अथ नित्यसिद्धेश्वरवचनात्
स्यादेवं यदि नित्यसिद्ध ईश्वरः सिद्ध्येत आगमबलादीश्वरसिद्धिरिति चेत्तत्किमीश्वरवचनतया प्रमाणमपौरुषेयत-

समाम्नायादेव तद्व्यवहार इति वेदव्यादिना प्रक्रियात्वं च योगिप्रत्यक्षगम्यतया अपरोक्षत्वं धर्मादीनां
चोदनैकप्रमाणवेद्यत्वात्तेषां नचैतावता सर्वदर्शित्वाभावो योगिनां सर्वदर्शित्वशब्देन योग्यस्यैव
द्रष्टृत्वस्य विवक्षितत्वात् यथाप्यनिपुणो दृष्टः स्वस्वार्थान् तिलघनादूरसूक्ष्मादिदृष्टो स्यात्तद्रू
पेष्वप्रवृत्तिर्नादृष्टिरित्यायात् अतो धर्मादि स्वच्छेदार्थमपरोक्षव्यवहारयो ॥ यावाग्रंथसमाप्तिरेतेन।

याम्नायेन हि रचनात्तत्प्रामाण्यं तत्प्रामाण्याच्च तत्सिद्धिरिति उक्तं रेत्वपराद्धांतः यथा चानुमानजातमपि न परामिमतेश्व-
रेवतेते यथा चापौरुषेयत्वं वेदस्य तत्त्वेमव्यग्रमग्रे निवेदयिष्यते अथागमात्तातेष्वनुष्ठानमिति अस्तु तर्हि स एवा-
गमस्तत्र प्रमाणमवश्यापेक्षणीयत्वात्कृतं तदुपजीविभिर्योगिभिरिति ननु यदि न योगिनामयोग्यविषयेषु सामर्थ्यं कृ-
तं तर्हि तेषां सर्वदर्शित्वप्रदर्शकशास्त्रवाशिना अत आह नचैतावतेति प्रमाणांतरबलात्सर्वशब्दः संकोचनीय इत्यर्थः॥

राम· १४

यत्रापि विषयेऽतिशयो दृष्टः पार्श्वसंपातिप्रभृतीनां विश्वरूपाशोकवनिकानिहितसीतादिषु सोऽतिशयः स्वार्थानतिलं घनादृष्टत्वः अनतिलंघनमेवाह दूरसूक्ष्मादीति यो यत्र विषये दूरवर्तिनि सूक्ष्मे वा दर्शनं तत्र न पुना रूपादौ श्रोत्रादेर्वृत्तिरिति भट्टोक्तेरर्थः फलव्याप्यत्वाभावेनेति प्रमाणाविषयत्वेन केवलसाक्षिवेद्यत्वादित्यर्थः परिहरति सत्यमवेद्यत्वेऽपीति आज्ञानादीनां साक्षादपरोक्षतावेद्यतया तेषां साक्ष्यपरोक्षाध्यासादेवापरोक्ष्यादि।

सत्येऽसतीति विशेषणं नन्वज्ञानान्तःकरणतद्धर्मेच्छादिषु शुक्तिरजतादिषु च लक्षणाति-
व्याप्तिस्तदवस्था तेषामपि फलव्याप्यत्वाभावेनावेद्यत्वात् अहमज्ञ इत्याद्यपरोक्षव्यवहा-
रयोग्यत्वाच्चेति चेत् सत्यं अवेद्यत्वेऽपि नापरोक्षव्यवहारयोग्यता तेषां अध्यस्ततयैव ते-
षां सिद्धेस्तेनु तथाप्यपरोक्षमिति व्यवहारदर्शनात्तद्योग्यता तत्र कल्पनीयेति चेन्नैवं रज-
तादिव्यवहारायोग्येऽपि शुक्तिशकलादौ रजतादि व्यवहारदर्शनात् नन्वेवं सत्यवे ॥ ६ ॥

त्यर्थः उत्तरौ चोद्यपरिहारौ स्पष्टार्थौ ननु यदि स्वतोऽपरोक्षत्वं चैतन्यस्यैवाज्ञानादीनां तु तदध्यासादपरोक्ष्यम-
ध्यस्तमिति नापरोक्षव्यवहारयोग्यत्वमिति दूषणं तर्हि तद्दृष्टान्तादावपि तुल्यमिति न तेषामप्यपरोक्षव्यवहारयो-
ग्यत्वप्राप्तिरतस्तद्व्यवच्छेदार्थमवेद्यत्वविशेषणं व्यर्थमिति शंकते नन्वेवमिति ॥ ७ ॥

व्यवहारदशायामिति यद्यपि वास्तवापरोक्ष्याभावो घटादेरज्ञानादेश्च समानस्तथाप्यर्थक्रियासममापरोक्ष्यं प्र
त्यक्षादिप्रमाणसिद्धं सत्त्वमिव घटादेरस्ति अज्ञानादेस्तु न त्वास्ति प्रत्यक्षादिविषयताया अप्यभावात् अतः शुक्ति
रजतादिसत्तावन्मानीतिकमित्यर्थः ननु तथापि व्यवहारयोग्यतापदस्य कृत्यं न पश्यामः अवेद्यतापदेन घटादि
व्यावृत्तेरपरोक्षतापदेनाज्ञानादिव्यावृत्तेरिति शंकते तथापीति परिहरति सत्यमिति अयमर्थः अपरोक्षज्ञान

द्यत्वविशेषणस्य न व्यवच्छेद्यमस्ति तन्मते घटादेरप्यध्यस्ततया अपरोक्षव्यवहारयोग्यत्वाभावात्
मैवं व्यवहारदशायां तेषां प्रत्यक्षप्रमाणविषयाणामपरोक्षव्यवहारयोग्यतांगीकारात् तथाप्य
वेद्यत्वे सत्यपरोक्षत्वमेव लक्षणमस्तु व्यभिचाराभावादिति चेत्सत्यमपरोक्षज्ञानविषया-
त्वेनैव घटादेरपरोक्षत्वांगीकारादत्रापि तथात्वाद्याघात इति विभ्रमो माभूदिति तद्व्यवहारे
णैव प्रतिपादितामपि संप्रतिपन्नेन तदेव स्फुटीक्रियत इति न कश्चिद्दोषः ॥ ९ विषयेष्वपि नापर

परोक्षशब्दः प्रयुज्यते तत्रापरोक्षमित्युक्तेव्याहृति शंकास्यात्तन्निवृत्त्यर्थमवेद्यत्वेप्युपपद्यमानव्यवहारयोग्यतापद
ग्रहणमिति वस्तुतस्तु न प्रसरत्येव घटादिष्वपरोक्षत्वं तस्य प्रमात्वावान्तरजातितयाऽप्रमायां घटादावभावात् न च
मिथ्याज्ञानेपि भावात्प्रमात्वेन परापरभावाभावात्तज्जातिरिति वाच्यं तत्रारोपांगीकाराच्छब्दप्रयोगस्यापि तन्मा
गत्वात् अन्यथा घटत्वादेरप्यपत्त्वापप्रसंगात्तु वर्णनिमित्ते पि घटशब्दप्र ॥ ६ ॥ ७ ॥ ६ ॥ ७ ॥ ६ ॥

योगेण पृथिवीत्वादिना परापरभावाभावस्यापि शक्यवचनत्वात् यद्यपि व्यवहारो ज्ञानमपि भवति तथाप्यवेद्य
त्वविशेषणानुरोधेन शब्दप्रयोगरूपस्यैव स्वीक्रियमाणेन न पूर्वपक्षावसरोक्तदूषणप्रसरः यद्यपि योग्यताव्यति
रेकेणापि लक्षणं शक्यसमर्थनं तथापि सुषुप्तौ तदभावेपि योग्यत्वस्य सत्त्वात्त्यागाय तद्ग्रहणं व्यवहारविषय-
त्वादेव ज्ञानविषयत्वमपि सिद्ध्यतीत्यभिप्रेत्य शंकते कथं तर्हीति तदेतत्प्रसंगो वा प्रसाधनं वेति विकल्प्य दू
षयति किमिदमवेद्यत्वे व्यवहारविषयत्वमित्यादिना आपाद्यापादकयोरिति क्वचित्प्रमितेन पक्षे चाहार्या

कथं तर्हि अवेद्यस्य व्यवहारयोग्यत्वमिति चेत् किमिदमवेद्यत्वे व्यवहारविषयत्वं तस्या
दित्यनिष्टप्रसञ्जनमुत व्यवहारविषयत्वाद्धेतोर्वेद्यत्वानुमानं नाद्य आपाद्यापादकयोरुभयोर
पि परेषामप्रसिद्धेर्नेतरः तस्य सप्रतिसाधननिरासस्य समये निराकरिष्यमाणत्वात्तस्मादना
विलं स्वप्रकाशलक्षणं प्रमाणमपि अनुभूतिः स्वयंप्रकाशा अनुभूतित्वाद्यन्नैवं तन्नैवं य
यथा घट इत्यनुमानम्

रोपितेन क्वचिद्व्यापकतया प्रमितेन पक्षे चानभिमतमापाद्यत इति हि स्थितिस्तदि
हावेद्यत्वेनापादकेन प्रमितेन भवितव्यं न चैतत्सर्वं प्रत्यक्षमिति मन्यमानस्य संभवति नापि व्यवहारविषय-
त्वस्य प्रमितिरिति केन किमापाद्यत इत्यर्थः तस्य सप्रतिसाधननिरासस्य समय इति लक्षणदूषणसमये प्रत्यनु
मानप्रयोगेनावसरनिरस्त इत्यर्थः तदेवं लक्षणं समर्थयित्वा प्रमाणं समर्थयितुमुपक्रमते प्रमाणमपीति ॥

स्वप्रकाशलक्षणसंभवेपि नादृग्रूपं साध्यं प्रसिद्धमप्रसिद्धं वा आद्ये सिद्धसाधनता केवलव्यतिरेकिता वा कोप
स्वद्वितीयेऽप्रसिद्धविशेषणताद्युक्तमाह नचेति हेतुमवतारयति यत इति श्लोकेन हेतुमाह सामान्यत इति
सामान्यतोऽनुमानेन सामान्यतो दृष्टेन प्रसिद्धेपि विशेषण इत्यत्रापि सामान्यत इत्यनुषञ्जनीयं अनिर्द्धारितध
र्मिविशेषणतयेत्यर्थः अत एव सामान्यतो दृष्टानुमानेन निर्द्धारितधर्मिविशेषणनिष्ठस्येति विवरणं। अपि भिन्नक
मः सामान्यतोपि प्रसिद्धे विशेषणे अप्रसिद्धविशेषणः पक्षः कथमिति कथयन कथमपीति योजना अत्र च सा

नन्वाप्रसिद्धविशेषणत्वं यतः सामान्यतोऽनुमानेन प्रसिद्धेपि विशेषणे कथं कथय पक्षोऽप
मप्रसिद्धविशेषणः २ तथा हि वेद्यत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिधर्मत्वात् शौक्ल्य
वदिति सामान्यतो दृष्टानुमानेनानिर्द्धारितधर्मिविशेषणनिष्ठस्यावेद्यत्वधर्मस्य प्रसिद्धत्वात्

मान्यत इति सिद्धसाधनतापि परिहृता वेदितव्या सामान्यतो दृष्टमेवाह तथा हि वेद्यत्वमित्यादिना अभावप्रति
योगीत्युक्ते अन्योन्याभावेन वेद्यत्वेप्युपपद्यमानेनार्थान्तरता स्यात् तन्निवृत्त्यर्थमत्यन्ताभावग्रहणं न चासिद्धेन।
व्यभिचारस्तस्य पक्षत्वात् पक्षतुल्यत्वाद्वा अभिधेयत्वादिष्वपीयमेव गतिः अंततः स्वस्मिन्नेवाभावादात्माश्र
यप्रसंगात् उत्पत्तिज्ञप्तिप्रतिबन्धकस्यैव दोषत्वमिति प्रक्रियामात्रं नियमेन प्रमाणानुपलब्धेरविशेषादिति।
अत्र च वेद्यत्वप्रसिद्धौ वयस्यापि तदनधिकरणत्वमपि प्रसिद्धं प्रतियोगिप्रसिद्धौ वाभावप्रसिद्धेस्तथापि सुहृद्भू
तेदृशाहेति सूक्ष्मम् अनिर्द्धारितेति अनिर्द्धारितो यो

धर्मिविशेषस्तन्निष्ठस्येत्यर्थः ननु भवत्ववेद्यत्वसिद्धिरपरोक्षव्यवहारयोग्यत्वे सत्यवेद्यत्वस्य कुतः सिद्धिरित्यत आह केवलव्यतिरेकिणश्चेति अथवा मानान्तरेणावेद्यत्वसिद्धौ किमनेनानुमानेनेत्यत आह केवलेति केवलव्यतिरेकिण इति पञ्चमी प्रथमपक्षे त्वयमर्थः अपरोक्षव्यवहारविषयत्वं तावदनुभूतावेव न चापि संप्रतिपन्नं तादृगनुभूतौ चावेद्यत्वमन्यतः स्वरूपेण सिद्धं यदा साध्यते तदा किमपरमत्राप्रसिद्धं येनाप्रसिद्धविशेषणता स्यादिति द्वितीये तु सामान्यतः सिद्धस्यानुमानेन धर्मिविशेषे साधनान्नानर्थक्यमित्यर्थः एतेन केवलव्यतिरेकितापि रक्षिता।

केवलव्यतिरेकिणश्चोभयवादिसंप्रतिपन्नापरोक्षव्यवहारयोग्यानुभूतिविशेषावलंबनतया एव समर्पणात् नाप्रसिद्धविशेषणता यद्वा यद्विपर्यये असमीहितप्रसक्तिस्तत्क्वचिन्मानयोग्यमिति सामान्यव्याप्तिरिह चानुभूतिरनुभाव्या भवति न वेति वादिविप्रतिपत्तेः संशये सत्यनुभाव्यत्वे सत्यसमीहितप्रसक्तेस्तद्विपर्ययस्य सामान्यतो मानयोग्यत्वाधिगमात्

अन्यत्र प्रसिद्ध्यनभ्युपगमात् एवमुदयनरीत्या केवलव्यतिरेकिणः प्रामाण्यं समर्थितं संप्रति लीलावतीकाररीत्याप्याह यद्वेति पक्षस्यैव परीक्षाङ्गीकारे प्रमाणान्तरबाधादिप्रसक्तिस्तत्प्रमाणयोग्यमिति सामान्याकारेण व्याप्तिः आप्तहेतोः पक्षधर्मतामाह इह चेति ननु किं सर्वत्र विपक्षबाधात्प्रमाणान्वयेन तथात्वगतं घटादिपक्षस्यैव विमर्शपूर्वकत्वमित्यत आह संशये सतीति कोटिद्वयाप्रसिद्ध्यासाधारणधर्मदर्शनाभावान्न संशयोऽत उक्तं विप्रतिपत्तेरिति इदं च प्रयोगशरीरं वेद्यत्वमनुभवनिष्ठप्रामाणिकात्यन्ताभावप्रतियोगितत्कादिवाधितत्वात् यदेवं तदेवं य

थाशुक्तिरजतादिप्रथा वा घटत्वादीति तर्कमात्रं चेदमित्याशंक्य प्रकृतानुमानोपयोगमाह विशेषप्रमाणापेक्षाया-
मिति अत्र सामान्यतोनुमानेनेति सामान्येन प्रमाणोन्नयनेनेति योजनीयं एतदेव प्रतिबंद्या साधयति अन्यथेति अनु-
पपत्तिसाम्यं तावदाह अष्टद्रव्यव्यतिरिक्तेति तत्रवृत्तावित्ति अत्र ह्यष्टद्रव्यातिरिक्तद्रव्यप्रसिद्धौ तदाश्रितगुणादीनां सप-
क्षत्वं तथा च तत्र हेतुवृत्त्यवृत्त्योर्दूषणद्वयं स्यादित्यर्थः एवमनुपपत्तौ समानायामस्मदुक्तविधामन्तरेण नापराधि-
धास्तीति भावः तथा हि इच्छादयो गुणाः अनित्यत्वे सत्यस्मदाद्यचाक्षुषप्रत्यक्षत्वात् गंधवदित्यादिना गुणत्वे सि-

विशेषणप्रमाणापेक्षायां व्यतिरेकिण उपन्यासात् नाप्रसिद्धविशेषणता अन्यथा कथमि-
च्छादीनामष्टद्रव्यव्यतिरिक्तद्रव्याश्रितत्वं नैयायिकादयोपि साधयेयुरष्टद्रव्यव्यतिरिक्तद्र-
व्यस्याप्रसिद्धावप्रसिद्धविशेषणताप्रसिद्धौ तु हेतोस्तत्रवृत्तावन्वयव्यतिरेकितया केवल-
व्यतिरेकित्वासम्भवः अवृत्तौ चासाधारणानैकान्तिकतापत्तिः ॥ ते गुणत्वापरजातिमत्तया नियम-

तेषु द्रव्यत्वावच्छेदकतया विशेषगुणत्वे च सिद्धे सतीच्छादयः क्वचिदाश्रिताः गुणत्वाद्रूपवदिति सामान्यतोदृष्टा-
नुमानेनाश्रितत्वे सिद्धे कस्मिंश्चिदाश्रये सिद्धे न तावत्स्पर्शवद्विशेषगुणाः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात्प्रत्यक्ष-
त्वे सत्ययावद्द्रव्यभावित्वाद्वा नाप्याकाशविशेषगुणाः बाह्येन्द्रियाप्रत्यक्षत्वात् नापि दिक्कालमनसां विशेषगुणत्वादि- राम·
त्यादिना ऽष्टद्रव्याश्रयत्वानुपपत्तौ सिद्धायामिच्छादयोऽष्टद्रव्यव्यतिरिक्तद्रव्याश्रयास्तेष्वनुपपद्यमानत्वे सति गुण- २५
त्वाद्यत्नैवं तन्नैवं पक्षतायां बाधादीति केवलव्यतिरेकिणैव सिद्धिरिति

नन्वेवं विधपरिहारस्यास्य सर्वत्र सुलभत्वात्कृतं वताप्रसिद्धविशेषणता तपस्विन्येत्यत आह नन्वेवं सतीति
एतदुक्तं भवतीति सर्वत्रैवंविधः परिहारः सुलभः अस्माधेयाप्रसिद्धविशेषणतानामपि भूमिः शशविषाणोऽस्ति वि
ताद्युन्मादीनां संभवात् तेषु चास्याः साम्राज्यमिति तदेवमृजुरीत्याः प्रसिद्धविशेषणतापरिजिहीर्षये तु वक्ररीतिरोचयं
तेनाश्रितमहाविद्याभिरपि साध्यप्रसिद्धिं सुलभयति अथवेति अयं घटः वेद्यत्वानधिकरणान्यद्युक्तः प्रसि
द्धविशेषणता सर्ववेद्यत्ववादिनोऽनुमानात्पुरस्तात्तदनधिकरणासिद्धेरत उक्तं घटान्यत्वे सतीति घटत्वानधिक
रणत्वद्युतिपावत् तथा च सर्वघटेषु सिद्धसाधनं तत उक्तं एतदिति एतस्य च घटस्य वेद्यत्वाधिकरणत्वेऽपि स्व

नन्वेवं सत्यप्रसिद्धविशेषणताया अदूषणत्वापत्तिः कृत्स्नसामान्यतो दृष्टानुमानगोचरत्वा
सम्भवे शशविषाणोऽस्ति विताभूरित्यादीनां तस्याः सावकाशत्वात् अथवा अयं घटः एतद्घटा
न्यत्वे सति वेद्यत्वानधिकरणान्यः पदार्थत्वात्पटवदित्यादिमहाविद्याप्रयोगैरप्यवेद्यत्व

न्यत्वअन्यनधिकरणत्वात्तथाविधघटान्यत्वस्य च पटादावेव प्रसिद्धेर्नोऽप्रसिद्धविशेषणता सिद्धसाधनते
इत्यर्थः घटमात्रपक्षीकृत्यैतद्घटान्यत्वे सति वेद्यत्वानधिकरणान्यद्युक्ते घटान्तरमादाय पार्थान्तरता घटान्तर
साध्यैतद्घटान्यत्वे सति वेद्यत्वानधिकरणादेतस्मादन्यत्वात्तद्व्यवच्छेदार्थमयमिति पदं एतस्यैव घटस्यैतद्घट
त्वे सति वेद्यत्वानधिकरणान्यत्वे साध्यमाने घटान्तरमादाय पार्थान्तरताया अनवकाशात् एतद्घटान्यत्वानधिक
रणान्यद्युक्ते व्याहतिः स्यादेतद्घटस्यैतद्घटान्यत्वायोगात् तदर्थं वेद्यत्वपदं अत्रैवैतद्घटान्यत्वे सति वेद्यत्वान

१

चि·सु· टी·न· २६

धिकरणमयं घटस्तदन्यत्वमादाय पदार्थे साध्यप्रसिद्धिः पक्षेन्वेतद्घटस्यैतद्घटान्यत्वे सति वेद्यत्वानधिकरणा-
न्यत्वमेतद्घटान्यत्वानधिकरणान्यत्वेन चावेद्यत्वानधिकरणान्यत्वेन वास्यादार्थे व्याहतिः एतत्सैव घटस्यैतद्घ-
टान्यत्वायोगात् अतस्तन्नद्घटान्यत्वे सति वेद्यत्वानधिकरणमन्यत्किंचिदादायैतदन्यत्वसिद्धिरिति अवेद्यत्वसिद्धिः
आदिग्रहणेन वेद्यत्वं स्वस्वेतरवृत्तित्वानधिकरणान्यतमाभावप्रतियोगिवृत्तिधर्माधिकरणमेयत्वादित्यादि संगृहीतं
एतदपि सामान्येनानुमानेनेति संगृहीतमेव नाप्रसिद्धविशेष्यतापीति विशेष्यधर्मिनिर्देशपक्षदूषणान्यपाकृतमर्हं

मसिद्धिरप्यूहनीयानाप्रसिद्धविशेष्यतापि अनुभूतेः प्रसिद्धत्वात् अत एव नाश्रयासिद्धि-
रपि हेतोः नापि स्वरूपासिद्धिः कस्यचित् व्यक्तिवेदनिष्ठस्य वेद्यत्वे सामान्यस्यैवानुभूतित्वसामा-
न्यस्याभ्युपगमे सिद्धान्तविरोधात् कस्यचित्स्यापि प्रतिबिम्बादिवत्साधकत्वसंभवात् न च प्र-
तिबाध्यसिद्धिस्तेनाप्यनुभूतित्वसामान्यस्याभ्युपगमात्॥ तद्दूषणान्यपाकरोति अत एवेत्यादि य-

नस्त्वं विशेष्यरूपस्य धर्मिणः प्रसिद्धिस्तत एवेत्यर्थः ननु किमिदमनुभूतित्वं नाम न तावज्जातिः अनुभूतेरेकत्वा-
ङ्गीकारेण व्यक्त्यभेदस्य जातिबाधकत्वात् यथाहुः व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः रूपहानिरसंबन्धो
जातिबाधकसंग्रह इति अत एव नोपाधिरपि अनुगतो ह्युपाधिर्भवति अद्वैतविरोधश्चोभयत्रापि तत्स्वरूपा-
सिद्धिरेव हेतोरित्यत आह नापीति यथा च कस्यचित्स्यापि साधकत्वं तथा मिथ्यात्वचारे उपपादयिष्यते

राम· २६

ननु प्रतिज्ञादिना पारमार्थिकी ज्ञानिताद्वियते भवतां तु कास्य निर्कीम्न्यन्यतरासिद्धिरित्यत आह नच कल्पितेति अवधीरितः कल्पिता कल्पितरूपो विशेषो येनानुभूतित्वमात्रेण तन्न योक्तं उक्तपरिहारानङ्गीकारे त्वत्माह निर्बाधकमाह अन्यथेति तद्देतद्देशेति धूमवत्त्वे किं महानसनिष्ठहेतुरुत पर्वतनिष्ठमाद्यः सिद्धिः द्वितीये साधनविकलं निदर्शनमिति दूषणे नोदीरितपदवीव्यतिरेकेण परित्राणमस्तीत्यर्थः अन्यथाःसिद्धिं परिहरति नच व्याप्यत्वासिद्धिरिति सर्वो हि हेत्वाभासानास्थिति व्याप्यत्वे सति पक्षधर्मतया प्रमितत्वं सिद्धत्वं तद्विपरीतमसिद्ध

नच कल्पिताकल्पितत्ववैयर्थ्याद्धेतोरन्यतरासिद्धिराशंकनीया अवधीरितकल्पिताकल्पितविशेषस्यानुभूतित्वमात्रस्योभयवादिसिद्धत्वादन्यथा धूमवत्त्वादावपि तद्देतद्देशनिष्ठत्वादिविकल्पेनासिद्ध्यादेर्दुःपरिहरत्वात् नच व्याप्यत्वासिद्धिः सोपाधिकत्वेन तथात्वात् ॥ तत्र व्या

प्तेरसिद्धौ व्याप्यत्वासिद्धिरित्यभिधीयते पक्षधर्मताऽसिद्धिस्तु त्रिधा स्वाश्रयस्वरूपासिद्धा वाश्रयासिद्धिस्तद्विशेषणपक्षत्वाप्रतीत्यातु सिद्धसाधनमिति इमामपि द्विविधां केचिदभिदधति साध्याकाराप्रसिद्ध्यासाध्यस्वरूपासिद्ध्या चेति प्रथमासिद्धसाधनताभिधानाद्द्वितीयात्वप्रसिद्धविशेषणमिति एतत्तु केवलपक्षदूषणतयैव व्यवहारे प्रसिद्धहेतुस्वरूपासिद्धौ तु स्वरूपासिद्धिरिति नच व्याप्यत्वासिद्धिर्नाम सोपाधिकः संबन्धः निरुपाधिकसंबंधस्य व्याप्तित्वात्सोपाधिकत्वेन निरुपाधिसंबंधवैधुर्यादिति तदेतत्सर्वमभिसंधायाह सोपाधिकत्वेन तथात्वा

१

चि॰सु॰ भवतु नह्युपाधिरपि किमेतावतेत्यत आह केवलव्यतिरेकिणि चेति केवलव्यतिरेकिण्युपाध्यभावं वक्तुमुपाधि-
टी॰ न॰ लक्षणमनुवदति उपाधिर्हीति साधनाव्यापक उपाधिरित्युक्ते शब्दोऽनित्यः कृतकत्वादित्यत्र सामान्यवत्त्वे सत्यस्मदादि-
१७ बाह्येन्द्रियग्रहणार्हत्वमुपाधिः स्यात्तदर्थं साध्यव्यापक इत्युक्तं न चेत्युक्ते सामान्यवत्त्वादिनाऽनित्यत्वसाधने कृतकत्व-
मुपाधिः स्यात्तदर्थं साधनाव्यापक इत्युक्तं एतेन पक्षेतरत्वमपि व्याख्यातं तस्यापि साध्यव्यापकत्वे उपाधित्वादितर-
थाऽनुपाधित्वादिति भवत्वेवं ततः किमायातमित्यत आह स चान्वयव्यतिरेकीति साध्यव्यापकत्वमन्वयः साधना-

केवलव्यतिरेकिणि चोपाधेरसम्भवात् उपाधिर्हि साध्यव्यापकत्वे सति साधनाव्यापकः स चान्वयव्यतिरेकी कश्चिद्धर्मः स कथं केवलव्यतिरेकिणि पक्षव्यतिरिक्तभूमौ साध्येनान्वयी स्यात् न च पक्षे साध्येनान्वयस्तत्र साध्यस्याद्यापि सन्दिग्धत्वात् निश्चये च ॥

व्यापकत्वं व्यतिरे-
कः तदुभयवान्धर्मः कश्चिदुपाधिरित्यर्थः अस्त्वेतावतापि प्रस्तुते किमित्यत आह स कथमिति तत्र वक्तव्यं किं पक्ष-
व्यतिरिक्तस्थले साध्यव्यापकत्वं किं वा पक्ष एवाभिप्रेतमिति नाद्य इत्याह स कथमिति केवलव्यतिरेकिणि प्रवर्तमा-
नः स उपाधिः पक्षव्यतिरिक्तभूमौ साध्येन कथमन्वयी स्यान्न कथमपीति योजना केवलव्यतिरेकिणीति हेतुगर्भवि- राम॰
शेषणं नहि केवलव्यतिरेकिणि पक्षव्यतिरिक्तस्थले साध्यं सम्भवति अविद्यमानसपक्षत्वादित्यर्थः न द्वितीय- १७
इत्याह न च पक्ष इति तत्र साध्यानिर्णयादित्याह तत्र साध्येति विपक्षेऽप्यदमाह निश्चये चेति साध्यापहारे ह्युपाधेः

क्तत्वं तत्र साध्यमेव चेन्निर्णीतं किंकुर्वद्रूपमुपाधिः स्यादित्यर्थः दूषणान्तरमाह पक्षेचेति साधनवन्निष्ठात्यन्ताभा
वप्रतियोगित्वं ह्युपाधेः साधनाव्यापकत्वं तत्र पक्षेपि चेदुपाधिर्वर्तेत कथं तत्रैव तस्यात्यन्ताभावः स्यात् न चान्यत्र केवलव्यतिरेकि
साधनस्यान्वयाभावादिति भावः ननु न वयं साध्यसद्भावे उपाधिं ब्रूमः येन साध्यव्यापकता दुःसाध्या अपि तु साध्याभाव
इत्यत आह नच साध्यसद्भाववदिति नच वाच्यमित्युक्तं तत्र हेतुमाह तथाहि यत्रोपाधिरिति तथाहि तथा सतीत्यर्थः उपा
धिना हि साध्याभावप्रमितिं वा कुर्वता साध्याभावप्रमितिजनकत्वेन व्याप्यत्वेनोपाधिरेष्टव्य इत्युक्तं व्यापकत्वे दोषमाह अ

सिद्धं नः समीहितमिति किमुपाधिः करिष्यति पक्षे चोपाधिवृत्तौ साधनव्यापकता च दुर्वारा न च सा
ध्यसद्भावे माभूदुपाधिः साध्याभावे पुनरुपाधिर्भविष्यतीति वाच्यं तथाहि यत्रोपाधिरस्ति
तत्र साध्यं नास्तीति साध्याभावस्य गमकत्वेनोपाधिरेष्टव्यः अन्यथोपाधिसद्भावेपि साध्याभावो व्या
पकतया न वर्त्तेत चेदुपाधिसद्भावे साध्यं स्यात्तच्च न पक्षे तत्रोपाधिसद्भावे तस्य साधनव्यापकत्वप्रसं

त्यथेति अन्यथाव्यापकत्वेनाङ्गीक्रियमाणे व्यापकतयोपाधेरिति संबंधः व्यापकस्य चोपाधेरधिकवृत्तित्वसंभवात् उ
पाधिसद्भावेपि साध्याभावो यदि न वर्तेत संभवति ह्यवर्तनं न्यूनवृत्तेः साध्याभावस्य ननु उपाधिसद्भावेपि साध्यसद्भाव
स्यात् साध्याभावाभावस्य साध्यरूपत्वात् तन्नान्तरीयकत्वादित्यर्थः। अव्यापकतयेति वा पदच्छेदः साध्याभावस्याव्यापक
त्वाभावे नेत्यर्थः भवतूपाधिसद्भावेपि साध्यसद्भावः किमतस्तत्र वक्तव्यं किं पक्षे उत तद्भिन्ने स्थले आद्यमत्राह नप

१
चि॰सु॰ टी॰त॰ १८

द्वितीयं परिशेषयति तस्मादिति भवत्वेवं ततः किमिति केवलव्यतिरेकिताकोपमपह्नायत न किंचिदित्याह तथा चेतिन
न्तुमोभूदुक्तदोषराशिरित्येतानुकर्षितया साध्याभावं प्रति व्यापकत्वमुपाधेर्व्याप्यत्वेकानामानुपपत्तिरिति तत्राह प्रकृते चे
ति अनुमानेनेति हेतुनेत्यर्थः अत्र हि स्वप्रकाशत्वलक्षणसाध्याभावो वेद्यत्वं यत्र च वस्तुत्वं तत्र च वेद्यत्वं गमकत्वेना
भिमतमिति तद्देवोपाधिस्तस्य च केवलान्वयित्वेनाभिमततया सर्वनिष्ठस्य साधनवत्यपि विद्यमानत्वात् साधना
व्यापकत्वं दुर्लभमित्यर्थः अत्र च प्रकृतग्रहणं केवलान्वयिग्रहणं चोपलक्षणं सर्वकेवलव्यतिरेकिणि पक्ष

तस्मादन्यत्रोपाधिसत्त्वे साध्यस्य सत्त्वं स्यादिति वाच्यं तथा च केवलव्यतिरेकित्वभंगप्रसंगः
प्रकृते चानुभूतिर्वेद्या वस्तुत्वाद्घटवदिति केवलान्वयिनानुमानेन हि स्वयंप्रकाशत्वव्यतिरे
कोवक्तव्यः तत्र च नोपाधिः सम्भवति साधनाव्यापकत्वस्य वक्तुमशक्यत्वात्तदेवं नासि
द्धो हेतुर्नापि विरुद्धः वेद्येष्वविपक्षेष्वनुभूतित्वहेतोरवृत्तेर्नाप्यनैकान्तिकः विपक्षाद्व्यावृत्तेरे
(१ व नाप्यसाधारणः सपक्षाभावात्

निष्ठतयाशंक्यमानसर्वोपाधेः साधनाव्यापकत्वात् एतेन साध्याभाव
समव्याप्तः कश्चिदुपाधिरस्तीति पक्षोऽपि निरस्तः किंच यदा साध्याभावं प्रति व्याप्य उपाधिरिष्यते तदा साध्याभाव
व्याप्तत्वात्तुपाधिव्यावृत्तेरपेक्ष्यत्वाव्यापकात्यंताभाववन्निष्ठात्यंताभावप्रतियोगितो व्याप्यत्वात्संभवद्व्यतिरेक
योग्यव्यतिरेकव्याप्तेरपेक्ष्यत्वात्

साम॰
१८

तथा च साध्याभावव्यावृत्तानुपाधेरपि व्यावृत्तिः किं च पक्षे उतान्यत्र नाद्यः पक्षे साध्याभावाभावरूपसाध्यस्याप्य
निर्णयात् नाप्यन्यत्र केवलव्यतिरेकिणोऽनुपादिति अत्र कश्चित् साध्याभावसाधनाभावसंबंधभंजकतया विपक्षेऽप्य
वापाधिर्निर्दुष्यादिति तन्न साध्यशब्दार्थानवबोधविजृम्भितमिति न तदपराधः कश्चित् एवं हि साध्याभावाव्यापक-
त्वे सति साधनाभावव्यापक उपाधिरित्युक्तं स्यात् तथा च कस्य साध्यव्यापकत्वं न हि साधनाभावः साध्यमपि तु प्रति-
पन्नत्वात् कुत्र च साध्याभावाव्यापकत्वमवसेयं न तावत्पक्षे तत्र साध्याभावानिर्णयात् नाप्यन्यत्र तथा सति
साधनाभावाव्यापकतया तावत्सु व्यतिरेकस्य सर्वस्य केवलव्यतिरेकिसाधनाभाववत्त्वात् वक्तुं चात्र वक्ष्ये

विपक्षे बाधकतर्काभावात् संदिग्धानैकान्तिकतेति चेन्नैवमननुभूतेरननुभाव्यत्वेः न च तस्यापाता-
न्न च वाच्यमवश्यवेद्यत्वाभावात् ज्ञानवस्याव्यवहारस्य तत्स्वरूपसत्तामात्रेणाप्युपपत्तेरिति

व्यमस्ति विस्तरभयात्तु नोच्यते ननु भवतु विपक्षवृत्त्यभावात् सपक्षेऽसति सपक्षाप्रवेशाभावाच्च विरुद्धानैका-
कान्तिकतानवमितानामभावः विपक्षे बाधकतर्काभावात्तु संदिग्धानैकान्तिकता किं वदन्त्याः कानुमतिरि-
येति शंकते विपक्षे बाधकेति नन्वननुभूतिरननुभाव्यैवेति यदि हि नियमः स्यात्स्यादनवस्थानत्वयं नियम इति म-
तमाशंक्य निषेधति न च वाच्यमित्यादिना ननु यदिननुभाव्यतानियमः अननुभूततया न हि कथमर्थे व्यवहार इति शं-
कां स एव परिहरति व्यवहारस्येति तत्स्वरूपसत्तामात्रेणाज्ञानेनेत्यर्थः

चि·सु· टी·न· १९

नचवाच्यमित्युक्तं तत्र हेतुमाह तद्विषयेति स्यादेवं यदि तज्ज्ञानमंतरेण तत्सत्तानिश्चीयेत नत्वेतदस्ति प्रमाणाभा
वे दुरवधारणसत्ताकत्वा दितरथाः सत्त्वमेव कथं नाध्यवसीयते यथोक्तं कोह्यनुभूते संवित्साक्षिणीति तस्मात्सत्त्वमपि तत्
स्य प्रमाणादेवावगंतव्यमित्यर्थः॥ यदत्र तात्पर्यपरिशुद्धावुदयनेनोक्तं तदाशंकते अथेति अयमर्थः नास्माभिः
सत्तायां प्रमाणमेव नास्तीत्युच्यते अपितु जिज्ञासायां सत्यां नतु पुनः स्वोदयसमसमयमेवेति तस्याश्चानीतायाः
प्रत्यक्षाविषयत्वात् व्यवहारादिना लिंगेनेत्युक्तं आदिशब्देन च स्मरणं गृह्यते परिहरति तन्नेति अयंभावः भवे

तद्विषयप्रमाणानुदयेन तत्सत्ताया अप्यनिश्चयात् ततएव व्यवहारस्याप्यसिद्धेः यद्यपि क
दाचित्तत्सत्ताजिज्ञासोदये व्यवहारादिना केनचिल्लिंगेन साऽपि प्रमीयत इति मतं तत्र घट इ
ति घटमनुभवामीति चानुभूतिद्वयातिरिक्तायास्तदनुभूतिपरंपरावगाहिकायाः कस्या
श्चिदनुभूतेरनुभवागोचरत्वात् अन्तरेण तदनुभवं तत्सत्ताभ्युपगमे प्रमेयसत्ताया अपित
॰याभ्युपगमोपपत्तौ प्रमाणगवेषणावैयर्थ्यापातात्॥

देवं यदि काचिदेवंविधा वित्तिस्स्यात्तर्हि
वत्त्वनुपलब्धिविरुद्धा न हि संसारमंडले कस्यचिदर्वाग्दृशो व्यवसायानुव्यवसायातिरिक्ता तत्सद्भिन्नपरंपराग्राहिका
काचिदपि वित्तिरनुभूयते तेनोपलब्धियोग्यत्वे सत्यनुपलब्धेरभाव एवावसीयते योगिप्रभृतीनां तु न तदस्ति तेन तत्र प्र
माणमस्तीति अथमाभूदनवस्थेत्यथा॥ २॥ ६ ॥ पितन्नस्य यामइत्यत आह अंतरेणेति तदनुभवं तादृशवित्त्यनुभ

राम· १९

तद्वयमेवमेव कल्प्यताम् अपि तु प्रमाणबलादिति चेत्तत्राह तत्रापीति तृतीयज्ञानइत्यर्थः ननु तादृशी संवित्तु।
ज्ञापकप्रमाणमन्तरेणैव स्वरूपविशेषात्स्वविषये व्यवहारं प्रवर्त्तयतु नह्येकस्य यादृक् स्वभावस्तादृगेव सर्वस्येति
शंकानियमनं जगद्वैचित्र्यभंगप्रसंगादिति शंकते अथ सेति स्वभावभेदात्स्वभावविशेषादित्यर्थः स्वविषयभेद
व्यवहारमिति स्वविषयविशेषव्यवहारमित्यर्थः परिहरति सैव तर्हीति स्वव्यवहारमिति स्वविषयव्यवहारमि
ति यावत् अतिमात्रायोन्यायः सम्प्रथमायामेवास्तु प्रथमस्य तथाभावे प्रद्वेषः किंनिबंधनइति न्यायादित्य

तत्रापि च प्रमाणगवेषणायां पूर्वोक्तानवस्था तदवस्थैव स्यात् अथ सा स्वविषयप्रमाण
मन्तरेण स्वभावभेदादेव स्वविषयभेदव्यवहारं जनयेत् जनयेत् सैव तर्हि तथा स्वव्यव
हारमिति अर्थानुभूतिपरंपराभ्युपगता तदेवमनुभूतेरनुभाव्यत्वेऽनुभूतिस्वरूपासि
द्धिप्रसंगस्यैव विपक्षे बाधकतर्कत्वात् न संदिग्धानैकान्तिकता किंचानुभूतिरर्थप्रकाशन

र्थः तृतीयज्ञानमेव वानवस्थापमूढं तदा(( समये यदि न प्रकाशेत तथा सत्यनन्तरक्षणे
स्वविषयवत्स्वस्मिन्नपि तथा व्यवहारं प्रवर्त्तयेत् न्यायेन चाद्यस्य स्वप्रकाशतासिद्धान्तो निद्रष्टव्यः किंचानुभू
तित्वं भवतु स्वप्रकाशत्वं च माभवत्विति वदन्प्रष्टव्यः किमर्थप्रकाशनसमयेऽनुभूतिर्न प्रकाशत एव प्रकाश।
माना वा परतइति नाद्यइत्याह किंचानुभूतिरिति अप्रकाशमानेपि सर्वत्र संदे

हादिर्नास्ति जिज्ञासाभावादपि तदभावोपपत्तेर्न हि हिमगिरिदर्शी विजानाति केसरिसटासंख्यासु संदिहानेज
ना असंदिहाना वा विपर्यस्यंति अविपर्यस्यंतो वाऽभावं प्रमिण्वंति प्रमिण्वंतो वा न तत्त्वं विनिश्चिन्वंतीत्यत
उक्तं जिज्ञासेति जिज्ञासायां सत्यामपि संदेहादिर्नेति अभावनिर्णयादपि तेषामभावोपपत्तेरत उक्तं विपरीत
प्रमा वेत्यादीति एतदुक्तं भवति यत्र विषये प्रमितिरपि नास्ति जिज्ञासा च च कास्ति तस्यास्फुरणदशायां संदेहा
दिर्भवेद्देवेति न चैतदत्रास्तीत्याह न च कश्चिदिति निश्चयमेवाभिनयति इदमज्ञासिषमिति इदानीं द्वितीयमित्ये

जिज्ञासोऽस्त्वत्र संदेहो विपर्यासो वा विपरीतप्रमा वोदियात् न कश्चिदमुमज्ञासीन्नो वा भवता ।
मिति पृष्टोऽनंतरक्षणे संदिग्धे विपर्यस्यति संविदभावं वा प्रमिणोति किं तु निश्चिनोत्येव इदम
हमज्ञासिषमिति तेन प्रकाशमानैवानुभूतिरर्थव्यवहारं जनयतीति युक्तं न च सुखादिवदस्या धी ॥१८॥
न प्रकाशत्वेऽपि संशयाद्यविषयत्वोपपत्तिः सति धर्मिणि तद्वेद्यैवावश्यवेद्यत्वेऽनवस्थादौस्थ्या

धति न च सुखादिवदिति हेतुमाह सति धर्मिणीति धर्मी अनुभवः तद्वेद्येवेति सुखादिवद्वेद्यत्यर्थः अथवा सति
धर्मिणीति द्वितीयज्ञाने सतीत्यर्थः तद्वद्वेद्येवेति प्रथमज्ञानवदित्यर्थः तथा सत्यनवस्था प्रसरत्येवेति भावः न च सु
खादिप्रतिवेदीतत्राप्यस्मन्मते तत्साधकसाक्षिणा स्वप्रकाशत्वेनानवस्थानवतारात् भवन्मते वत्तत्रापि दौस्थ्या
त् तदेवमर्थप्रतीतिसमये संविदः स्फुरणमनवस्थाभयादन्यनिबंधनं न भवतीत्युक्तमिदानीं तात्कालिकं

नह्विषयं ज्ञानमेव निरूपयितुं न शक्यते कारणाभावादित्याह किं चयेनेति व्यवसायजनकसंयोगेनैवानुव्यवसायज-
न्मेत्यस्यपक्षे निराचष्टे नाद्य इति तत्र किं युगपदेव ज्ञानद्वयं जनयति समनःसंयोगः उत पर्यायेण नाद्यः जन्यजनकयोः स-
मसमयमेव जन्माभावादित्याह अनुव्यवसायप्रतीतीति न द्वितीय इत्याह करणस्येति प्रत्ययपर्यायः प्रत्ययपरंपरामन्य-
यपर्याये सामर्थ्याभावं विवृणोति यत इति अस्यैव भेदकत्वानंगीकारे दण्डमाह अन्यथेति यत्र संस्कारसहितमिंद्रि-
यं मनोऽभिज्ञां जनयति तत्र घटविषययोरनुभवस्मरणयोस्तद्घटविषयानुभवान्तरस्य चेति ज्ञानत्रयस्य युगपदुत्पत्तिप्र-

किं च येन मनःसंयोगेन घटानुभूतिर्जनिता तेनैवानुव्यवसायस्यापि जन्म उत संयोगान्तरेण नाद्यः अ-
नुव्यवसायं प्रति कर्मकारकतया जनकस्य व्यवसायस्य तज्जन्मानुव्यवसायस्य च यौगपद्यायोगा-
त् करणस्य प्रत्ययपर्याये सामर्थ्यानंगीकाराच्च यतोऽसमवायिकारणभेद एव ज्ञानभेदहेतुरभ्युपे-
यते अन्यथापेक्षणीयान्तरासंभवेन युगपदेव घटानुभवस्मरणयोरनुभवान्तरस्य च तद्विषय-
स्योत्पत्तिप्रसंगात् अक्रमाच्च कारणात्कार्यभेदक्रमायोगात् ॥ संगात तत्र हेतुः अपेक्षणीयान्तरासंभवे-

नेति संयोगभेदस्यानंगीकारात् विषयस्य चैकत्वादेव संपन्नत्वात्संस्कारस्य संप्रयोगस्य च विद्यमानत्वादिति भावः तदेवं
कार्यभेदाद्दृश्यमानस्तदुपपादकासमवायिकारणभेदं कल्पयतीत्युक्तम् इदानीं कार्यक्रमोऽपि क्रमवत्कारणमन्तरेणानु-
पपद्यमानोऽसमवायिकारणक्रमं कल्पयति ततश्च तस्यानेकत्वमित्याह अक्रमाच्चेति ननु भवतु कारणक्रमः स त्वस-
मवायिकारणस्य न भवति अपि तु बाह्यसामग्र्या विषयेन्द्रियसंप्रयोगादिस्तदीय इत्याशंक्य

नर्हि यत्र युगपदेव विषयेन्द्रियसंप्रयोगस्तत्र युगपदेवानेकानि ज्ञानानि जायेरन् ननु तदस्तित्वात् तत्रापि कार्यक्र
मप्रयोजको बाह्यसामग्र्यतिरिक्तस्यान्तरस्य कारणस्य क्रमो वक्तव्यस्तत्र चात्ममनसोरेकत्वेन क्रमायोगान्मविशेषात्त
योः संयोगलक्षणासमवायिकारणक्रम एव प्रयोजक इत्याह बाह्यसामग्रीति न चादृष्टमात्रभेदादतिप्रसंगात् तदे
वं प्रथमज्ञानजनकसंयोगादेव द्वितीयज्ञानजन्मन्ययं पक्षो निरस्तो वेदितव्यः इदानीं संयोगान्तरादनुव्यवसायज।

बाह्यसामग्र्यवच्छेदकक्रमभेदेन कार्यक्रमाभ्युपगमे युगपदेव संप्रयुक्तेषु घटपटादिषु यु
गपदेवानेकज्ञानजन्मप्रसंगान्न द्वितीयः घटज्ञानोदयसमये मनसि क्रियातो विभागस्त
तः पूर्वसंयोगविनाशस्ततउत्तरसंयोगोत्पत्तिस्ततो ज्ञानान्तरमित्यनेकक्षणविलम्बेनोत्पद्य
मानस्य ज्ञानस्यापरोक्षतया पूर्वज्ञानग्राहकत्वानुपपत्तेः किंच चक्षुरादिवदप्रकाशमान
स्यैव ज्ञानस्य स्वातिरिक्तज्ञानजननेनार्थव्यवहारहेतुत्वाभावात् ॥ नेति द्वितीयं पक्षं निरस्यति न

द्वितीय इति वर्तमानग्राहकप्रत्यक्षाभावादित्यर्थः पूर्वसंवित्स्फुरणानुपपत्तिर्बाधिकेत्युक्तमिदानीं सर्वस्फुरणानु
पपत्तिर्बाधकमाह किञ्चेति एवं हि नैयायिकाभ्युपगमः ज्ञायमानमेव ज्ञानमर्थव्यवहारहेतुरिति न नियमो निस्ती
नस्यापि तस्य चक्षुरादिवद्व्यवहारहेतुत्वसंभवादिति नचैषोऽपि युक्तः तथा सति चक्षुरादिवदेवार्थप्रकाशक
त्वं स्यान्न तु प्रकाशत्वं प्रकाशत्वं च सिद्धमतो न चक्षुरादिसाम्यमित्यर्थः किंच तदपि ज्ञानं पूर्वज्ञानवदेवे

तिन किंचिद्विज्ञानमर्थप्रकाशं स्यात् जडानां च जडत्वादेव न स्वयं परस्परेण वा प्रकाशसंभव इत्यंधस्येवांधल
ग्नस्य विनिपातः पदे पदे इत्याभाणिकमागितयैव घोरांधकारनिकरकूपोदरनिपातापात इत्याह जडानां चेत्यादि
ना प्रत्यक्षविरुद्धकालातीततामाशंकते नन्विति घटविशेषितज्ञानावग्राहित्वाज्ज्ञानविशेषितघटावग्राहित्वोभयः
थापि ज्ञानग्राह्यमेवेदमित्यर्थः अत्र तावदेवंविधशब्दप्रयोगस्य विषयस्फुरणे न भवितव्यं तत्तु यथा स्वार्थज्ञानस्य
स्वरूपस्फुरणे न घटस्य तु तेनैव स्फुरणेनेत्येव स्फुरणेपि सम्भवत्येवायं व्यवहार इति नायं ज्ञानस्यैवेद्यतापाद

जडानां च स्वतः परस्परं वा प्रकाशमानत्वायोगात् ज्ञानमपि न प्रकाशते चेत्किमपि न प्रका
शेतेति जगदांध्यप्रसंग इत्यादि विपक्षबाधकस्तर्क उन्नेयः ननु घटज्ञानवानहमस्मि ज्ञा
तो घट इति प्रत्यक्षेणैवानुभूतेर्वेद्यत्वप्रतीतेः कालात्ययापदिष्टतेति चेन्न वेद्यत्वव्यति
रेकेण तस्याः स्वतः स्फुरणेनापि तादृग्व्यवहारोपपत्तेः किंच विदितो घट इत्यत्रानुव्यव
सायेन घटस्यैव विदितत्वमवसीयते न तु वित्तेः विदितत्वस्य घटविशेषणत्वात्।

नस्यमित्याह नवेद्यत्वव्यतिरेकेणेति विदितो घट इत्यत्राधिकमाह किंचेति अथवा व्यवहारस्यानुभूतिविष
यत्वमंगीकृत्यान्यथासिद्धिरभिहिता इदानीं तु न तदेव नास्तीत्याह किंचेति एवं हि वेदनस्यापि विदितत्वव्यवहारविष
यत्वं वा स्यात् यदि विदित इति पदं वेदनेन समन्वियात् न त्वेतदृष्टं नैव तस्यान्वयादित्यर्थः किंच भवतु वानेन ज्ञानेन
स्फुरणं तथाप्येतज्ज्ञानवेद्यमनेनैव गृह्यते ऽन्येन वा न तावदन्येन तदानीं प्रथमस्यातीतत्वात् तन्निष्ठवेद्यताया अ

वि·सु· प्रत्यक्षत्वात्तद्द्वितीयअपराद्धं नात्रेत्याह अपि चानुभूतेरिति सौगतमतानुप्रवेशो ज्ञानस्यैव स्वग्राहकत्वेन क्रि
टी·न· याकर्मभावस्वीकारः स्वत्पतिपक्षतापरिहरति नचेति येयं व्याप्तिग्राहिणी संवित्सा स्वं वस्तु तद्गतवेद्यत्वं च गृह्णा
२२ ति सापि स्फुरति नवा यदि स्फुरति तदा स्वेनान्येन वा स्वेनेति नाद्यघटत इत्याह स्वेनेति न चैवं क्रियाकर्मभावेन

अपि चानुभूतेः प्रत्यक्षतायामपि तत्प्रत्यक्षेणैव तदनुभाव्यत्वस्याप्रत्यक्षीकरणात्तत्प्रत्यक्षवि
रुद्धता अन्यथानुव्यवसायेन व्यवसायस्य स्वविशेषितवेद्यत्वग्रहणे विशेषणतया स्वस्यापि स्वेन
वेद्यतापातात् सौगतमतानुमतिप्रसंगः नच वेद्यतापादकवस्तुत्वाद्यनुमानविरोधः व्याप्ति
ग्रहणासिद्धेः तथा हि वस्तुत्वादेर्वेद्यत्वसाधकतापक्षे वस्तुत्वं तद्वेद्यमिति व्याप्तिरभ्युपेया।
तथा सत्यस्या व्याप्तेर्ग्राहिका संविद्व्याप्तिग्रहणसमये स्फुरति न वा आद्ये स्वेनैव स्फुरणे सौग
तमतानुमतस्वप्रकाशतापत्तिस्तत्स्फुरणस्य स्वहेतुताया अप्यनङ्गीकारे वेदान्तसिद्धान्ता
भिमतं स्वयंप्रकाशत्वं त्वयाभ्युपगतं स्यात् द्वितीये तु संविल्लक्षणवस्तुविशेषस्यास्फुर
णादेव सर्वोपसंहारवती व्याप्तिरेवासिद्धेति यातत्र कुतोऽनुमानप्रसरः कुत

मो येन तथागतमतापातः स्यात् किं तु संविद्रूपत्वमित्यत आह तत्स्फुरणस्येति अन्येनेति त्वनवस्थया दूषि राम·
तमप्रायमित्युपेक्षितं अस्फुरणं दूषयति द्वितीये त्विति सर्वोपसंहारवती सर्व कोडिकासर्वव्यक्तिनिष्ठा २२
इति यावत् तदेवं साधारण्येन व्याप्त्यसि

ह्निमभिधायप्रतिदर्शनमपिदर्शयति अपिचेति भाट्टानांप्राकट्यंस्वप्रकाशमित्यर्थः यस्यतुनैयायिकस्यस्व
प्रकाशंनकिंचिदप्यस्तितस्यपूर्वोक्तानुमानेनवेद्यत्वरहितंकिंचित्साधयितातत्रहेतोरप्रत्ययनिश्चयात्संदिग्धा
नैकांतिकताचक्रव्याह्न्याह नैयायिकादेश्चेति नन्वेतदेवविपक्षेबाधकंयद्वस्तुत्वहानिरित्यतआह नहीति
वस्तुत्वंहिस्फुरणाभावेनिवर्तेत अवेद्यस्यापिस्वतःस्फुरणोपपत्तेर्नान्तरेणवेद्यत्वमनुपपत्तिर्वस्तुत्वस्येत्य
र्थः एतेनेदमप्यपास्तंयदाह मानमनोहरकारः ज्ञानंप्रत्यक्षवेद्यंवस्तुत्वाद्घटवदिति यच्चतार्किकैरुक्तमेस्य

स्तरांचप्रकृतस्यहेतोःसम्मतिसाधनता अपिचभाट्टानांज्ञाततायांव्यभिचारात नैयायिका
देश्चवेद्यत्वस्यापिधर्मतयात्वताभावप्रतियोगित्वादवेद्यस्यापिकस्यचित्संभवेनवस्तुत्वादेःके
वलान्वयित्वेननाभिमतस्यापिहेतोः संभावितविपक्षतयाविपक्षबाधकतर्कमन्तरेणाप्र
योजकत्वान्नह्यनुभूतेरप्यवेद्यत्वेवस्तुत्वानुपपत्तिः स्वतःसिद्धतायामपितदुपपत्तेर्लक्ष्यत्वन्या
यविषयत्वहेतोरपियथोक्तमूहनीयं नचलक्षकपदत्वेनलक्ष्यविषयज्ञानजन्यत्वमनुमेयंहे

नेवेद्यत्वसाधनायलक्ष्यत्वान्न्यायविषयत्वादितिच तत्रापि ॰तोरसिद्धत्वान्नह्यनुभूतिपदमनुभूति
यल्लक्ष्यंयच्चन्यायविषयंतद्वेद्यमितिव्याप्तिग्राहिणिज्ञानेलक्ष्येन्यायविषयेचस्फुरत्यस्फुरतिचपूर्वोक्तविकल्पदो
षाःसमानाइत्याह लक्ष्यत्वेति यत्तूक्तंलक्षकपदत्वादेवलक्षकपदपक्षीकृतलक्ष्यविषयज्ञानजन्यत्वमनुमीय
तइतितत्राह नचेति हेतुमाह नहीति अयमर्थः नहियस्यकस्यचिल्लक्षकमनुभूतिपदंपक्षस्तथासतिप्रमात्रादि

१

चि·सु· टी·न· २३

लक्षकानुभूतिपदस्य लक्ष्यविषयज्ञानजन्यत्वेनासिद्धसाधनताप्रसंगात्तस्मादनुभूतिलक्षकमनुभूतिपदं पक्षइतिवक्तव्यं तथा च तादृशानंगीकारांगीकारयोराश्रयासिद्ध्यपसिद्धांतयोरन्यतरापातइति अथानुभाव्यवाचकानुभूतिलक्षकपदं पक्षीकुर्यात्तत्प्रति साध्यं विकल्पयति किंचेति लक्ष्यकमेकस्फुरणजन्यत्वमतीतादिवस्तुलक्षकपदस्य नास्ति अतीतादीनामिदानीमभावेनानुभवावच्छेदकत्वाभावात् अतोनैकांतिकमित्याह अतीताद्यर्थेति तद्विष

लक्षयतीति तत्त्वाभिमतं तद्वाचकत्वेनैवस्वीकारात् किंच लक्ष्यज्ञानशब्देन लक्ष्यकमेकं स्फुरणं किंवा तद्विषयमुत स्फुरणमात्रं किंवा तद्विषयांतःकरणवृत्ति विकल्प्यते नाद्य अतीताद्यर्थलक्षकपदेष्वव्यभिचारात् नेतरे सिद्धसाधनत्वात् अस्ति हि तत्त्वभावस्यापि स्फुरणस्य तद्व्यवहारजनकत्वेन तद्विषयत्वं अस्ति च स्फुरणमात्रमनुभूतेः स्फुरणरूपत्वात् तदाकारायावृत्तेः स्वीकारात् अनुभूतिपदवाच्यस्य लक्ष्यस्य स्वात्मप्रकाशत्वमित्यपि विकल्पोऽनुपपन्नः उभयवादिसंप्रतिपन्नस्फुरणमात्रस्य स्वप्रकाशत्वप्रतिपादनात् अन्यथा च ॥ ६ ॥ ६ ॥ ७ ॥

यत्स्फुरणजन्यत्वसाधने सिद्धसाधनतामुपपादयति अस्तिहीति येन हि यस्य व्यवहारः प्रवर्तते तस्य हि स विषयभेदः स्वतंत्र इत्यभिप्रायः तत्स्फुरणमात्रेण जन्यत्वसाधने तृतीयपक्षे सिद्धसाधनतामाह अस्ति चेति लक्ष्यस्वभावभूतस्फुरणस्यापि लक्ष्यस्फुरणत्वादित्यर्थः चतुर्थपक्षे सिद्धसाधनतां दर्शयति तदाकारायाइति अन्यथेति अनुभूतिपदवाच्यस्य चेत्सिद्धसाधनं लक्ष्यस्य चेत्तत्वासिद्धिरिति विकल्पदूषणे साधारणांशग्रहणमेव शरणमित्यर्थः

राम· २३

उक्तानुमानस्य पक्षेऽपि विशेषतो दूषणं न स्फुरति तथापि अरूप्याभासमानयोगक्षेमत्वं तथा च यदि तस्य दूषणं त
दस्यापि समानमिति शंकते नन्वेवमिति अत्र किं रूपादिमान् घटः पक्षीक्रियते उतालौकिकः कश्चिन्नाद्यः धर्मि
ग्राहकप्रमाणबाधादित्याह मैवमिति चक्षुःस्पर्शनप्रमाणसिद्धत्वे हेतुः स्पर्शरूपादिमत इति द्वितीयं दूषयति अत
इति न चात्रापीति रूपादिहीनस्य यथाघटत्वमप्रसिद्धमेवमित्यर्थः हेतुमाहः तथासतीति विप्रतिपत्तिरेव वेद्यावेद्यसाधा

रणत्वसाधनेऽपि तत्त्वास्य विकल्पस्य तुः परिहरत्वात् नन्वेवमपि घटः स्वयंप्रकाशो घटत्वाद्यत्रै
वं तन्नैवं यथा पट इत्याभाससमानयोगक्षेमता हेतोरिति चेन्नैवं पृथुबुध्नोदराकारस्य घटशब्द
वाच्यस्य स्पर्शरूपादिमतश्चक्षुःस्पर्शनप्रमाणसिद्धत्वेन स्वप्रकाशत्वसाधने प्रत्यक्ष
विरोधात् तद्विपरीतस्य चाप्रसिद्धत्वेन धर्म्यसिद्धिर्न चात्राप्यवेद्यत्वानुवृत्तिस्त्वमप्रसिद्धमिति वा
च्यं तथासति तस्यावेद्यत्वावेद्यत्वयोर्वादिनां विप्रतिपत्त्यभावप्रसंगात् न चैवमुभयतः पाशा
रज्जुरनुभूतेः प्रमाणजन्यस्फुरणाश्रयतया स्फुरणकर्मतया वा घटादिवदिति ॥२॥ स्फुरणानुभूतिप्रसिद्धौ प्र

माणमित्यर्थः यत्र प्रमाणसद्भावे वेद्यत्वात् स्वप्रकाशत्वमभावे च प्रमाणाभावादसिद्धिरित्युभयतः पाशा रज्जु
रित्युक्तं तदपि नास्तीत्याह नचैवमिति स्फुरणाश्रयतयेति भाट्टाभिप्रायेणोक्तं स्फुरणकर्मतयेतीतराभिप्रायेण
एतदुक्तं भवति न प्रमाणप्रवृत्तिमात्रादनुभवकर्मत्वं येनास्वप्रकाशता स्यादपि तु तदाकारान्तःकरणवृत्तिरेव
प्रमाणैर्जन्यते न च वृत्तिविषयतामात्रात् स्वप्रकाशता स्यात् प्रकाश्यप्रकाशकत्वाभावात् स्वरूपप्र

काशाभिव्यंजकमात्रत्वाद्वृत्तेः । तेन तद्वेद्यत्वप्रसक्तिर्नाप्यप्रामाणिकमिति ननु वृत्तिव्याप्यत्वमात्रान्नप्रामा-
णिकत्वमपि तु स्फुरणव्याप्यतया घटादौ तथादर्शनादित्यत आह उक्तेति कुतः केवलव्यतिरेकाभावात् न हि संभ-
वद्व्यतिरेकयोरन्वयमात्राद्धेतुहेतुमद्भावनिश्चयोऽतिप्रसंगात् माभूत्तुरगस्वरवर्णयोर्हेतुहेतुमद्भावः सम्भवति ह्य-
न्वय इति भावः किंच तीतानागतेति केवलावदेवं वक्तुमशक्यमाकस्यानाधारयोरप्यतीतानागतयोः ज्ञानमात्रविष-
यतया प्रामाणिकत्वांगीकारादित्याह अतीतेति तार्किकाणां वृत्तिफलविभाग एव नास्तीति न पर्यनुयोगावकाश

षस्य भावाभावेऽपि प्रमाणजनितान्तःकरणवृत्तिव्याप्यत्वेन विषयतांगीकारेऽपि स्वप्रकाशत्वा-
व्याघातात् उक्तवृत्तिव्याप्यत्वेऽपि स्फुरणव्याप्यत्वाभावापराधेन नाप्रामाणिकतापि केवल-
व्यतिरेकाभावादतीतानागतयोः स्फुरणविरहिणोरुक्तवृत्तिव्याप्ययोर्भावैः प्रामाणिकत्वा-
भ्युपगमात् चेष्टादिलिंगकानुमानविषयस्यापि परज्ञानस्य स्वाश्रये स्वविषयापरोक्षव्यव-
हारजनने ज्ञानान्तरनिरपेक्षतया स्वप्रकाशत्वोपपत्तेश्च

स्तदेवं वृत्तिविषयत्वमात्रेणापि प्रामाणिकत्वमस्तीत्युपपादितं इदानीं वृत्तिविषयत्वेऽपि स्वप्रकाशत्वम-
तिनोऽस्तीत्युपपादयति चेष्टादीति स्वाश्रये स्वाधारे न हि प्रमाणावेद्यत्वं स्वप्रकाशत्वं किंतु स्वविषयापरोक्षव्य-
वहारजनने प्रकाशान्तरनिरपेक्षत्वं तच्च स्वप्रकाशत्वसाधकप्रमाणगम्यत्वेऽपि न विरुद्धमिति प्रमाणान्तरनिर-
पेक्षतयैव स्वाश्रये स्वविषयापरोक्षव्यवहारजनकत्वादित्यर्थः ॥ ७ ॥ ९ ॥ ७ ॥ ६ ॥ ७ ॥

एवं व्यतिरेकानुमानेन स्वप्रकाशत्वं समर्थितं येतु वक्तनयवर्त्मानुसारिणस्तान्प्रत्यभिनवरीतिसुरभिमन्वय-
व्यतिरेकिप्रयोगमाह किंचेति त्वज्ज्ञानमिति त्वज्ज्ञानं वेद्यं न भवतीत्युक्तेऽप्रसिद्धविशेषणतातन्निवृत्त्यर्थमपरोक्ष-
व्यवहारयोग्यत्वे सतीत्युक्ते वेद्यत्वाभावस्याप्रसिद्धत्वेऽप्यपरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वरहितस्य परमाण्वदृ-
ष्टादेः प्रसिद्धत्वेन नाप्रसिद्धविशेषणता तावन्मुक्तेऽर्थान्तरता तदीयज्ञानस्य परं प्रत्युक्तरूपत्वात्तदर्थं तवेत्युक्तमे-
व मयि परकीयज्ञानमादायार्थान्तरतानवस्थेतं प्रति तथात्वादत उक्तं त्वज्ज्ञानमिति एतदीयस्य च ज्ञानस्यैतं प्रत्यप-
रोक्षव्यवहारयोग्यत्वे सति वेद्यत्वानधिकरणत्वमपरोक्षव्यवहारयोग्यत्वानधिकरणत्वाद्वा वेद्यत्वानधि-

किंच त्वज्ज्ञानं तव वा परोक्षव्यवहारयोग्यत्वे सति वेद्यं न भवति ज्ञानत्वान्मदीयज्ञानवत् न
च मत्समवेतत्वं मदन्यसमवेतत्वं वोपाधिः साध्याव्याप्तेस्त्वदीयधर्मादिषु त्वत्समवेते-
ष्वसमवेतेषु च परमाणुषूक्तसाध्यसद्भावेऽप्युपाधेः ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

करणत्वाद्वा नाद्यः व्याघातात् उत्तरं तु सिद्धमदपरोक्षव्यवहारयोग्यत्वे सत्यवेद्यत्वलक्षणं स्वप्रकाशत्वमाद्य-
सिद्धमिति स्वप्रकाशत्वसिद्धिरन्यज्ञाने चैतदपरोक्षव्यवहारयोग्यत्वानधिकरणत्वात् तद्गर्भवेद्यत्वान-
धिकरणत्वमिति साध्यप्रसिद्धिः अन्यदीयज्ञानस्योक्तसाध्यवत्त्वे मत्समवेतत्वं मदन्यसमवेतत्वं वोपा-
धिरित्याशंकां निरस्यति न चेति कुतः साध्याव्यापकत्वात् तदेव विवृणोति त्वदीयेति त्वददृष्टसंस्कारयोस्त्व-
दपरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वरहितयोस्त्वत्समवेतत्वं त्वदन्यसमवेतत्वयोरुपाध्योरभावेन साध्याव्या-

वि.सु. टी.न. २५

पक्षत्वादित्यर्थः उक्तस्योपाधेः साध्यव्याप्युदाहरणान्तरमाह असमवेतेति परमाणुवाकाशादीनामसमवेतत्वेनान्यसमवेतत्वस्य सुतरामभावादित्यर्थः उपाध्यन्तरमाशंक्य निराकरोति नचेति प्रतिवादिज्ञानस्य तदपरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वानधिकरणत्वेन तदपरोक्षव्यवहारयोग्यत्वमुपाधी—
तथाच वादिज्ञानेऽयमुपाधिर्व्यावर्त्तमानः साध्यमपहरतीत्युपाधिवादिनोऽभिमतं तद्दूषयितुं हेतुमाह समापरोक्षव्यवहारयोग्यत्वादित्यादिनोपाधित्वादित्यन्तेन उपाधिर्वदतो पाधिव्यतिरेकेण साध्यव्यतिरेकानुमानव्यः सर्वोपाधीनामेवस्वाभाव्यात् युक्तं चैतत्साध्योपाध्योर्व्याप्यव्या

रभावान्नच समापरोक्षव्यवहारयोग्यत्वमुपाधिः समापरोक्षव्यवहारयोग्यत्वादिदं समापरोक्षव्यवहारयोग्यत्वे सत्यवेद्यत्वं न भवति घटवदिति व्यतिरेकज्ञानेनतरत्वस्यैवोपाधित्वात् ॥ ८ ॥

पकभावार्थं तदभावयोरपि व्याप्यव्यापकभावनियमात् ततउपाध्यभावसाध्याभावयो-
रपि निरुपाधिसम्बन्धो यत्क्वचित्तस्मात्तदभावयोरप्युपाधिर्निश्चीयमानो दूषयेदेव प्रथमोपाधिमित्यभिसंधाय तद्व्यतिरेकयोरप्युपाधिरुपन्यस्तस्तत्र समापरोक्षव्यवहारयोग्यत्वादित्युपाधिव्यतिरेकनिर्देशः शेषः साध्यव्यतिरेकनिर्देशः अनयोः सम्बन्धज्ञानेनतरत्वमुपाधिरित्यर्थः तदेवं व्यतिरेकानुन्नायकत्वात्साध्याव्यापकत्वात् साम.
स्यानुपाधित्वे सिद्धे पूर्वोक्तहेतुरप्रत्यूह इत्यभिप्रायः ननु यथाज्ञानत्वव्यतिरेकस्यज्ञानेनतरत्वस्योपाधित्वं तथैव २५
एवं समापरोक्षव्यवहारयोग्यत्वादित्यस्य हेतोर्व्यतिरेक

स्य समापरोक्षव्यवहारायोग्यत्वस्योपाधित्वं परेणापि स्तुवच्चमिति निष्टंकमेतन्नायितं चक्रकापत्तिश्च ज्ञानेतरत्वव्यति-
रेकस्य ज्ञानत्वस्य प्रतिवादिसाध्यव्यतिरेकरूपत्वेऽपि यत्साध्योन्नायकत्वं सिद्धं ज्ञानेतरत्वस्योपाधित्वं तस्योपाधि-
त्वे व्यतिरेकानुन्नायकत्वात्समापरोक्षव्यवहारायोग्यत्वस्यानुपाधित्वं तस्यानुपाधित्वे च ज्ञानत्वस्य प्रथमसाध्यं
प्रति हेतुत्वमिति तस्मात्त्वयं रीतिश्चतुरश्रेणीरीतिसरणिमधिरोहतीति आकर्ण्यतां तावदवहितहृदा ग्रन्थकारहृ-
दयं समापरोक्षव्यवहारयोग्यत्वस्य प्रथमसाध्यव्यतिरेकोन्नायकत्वं तावदसंगतं वेद्यत्वेनैव साधनीयं न च तत्-
स्वरूपसिद्धये न समापरोक्षेति विशेषणानर्थक्यं स्यात्तस्मात्सद्व्यमिह सद्व्यवहारयोग्यत्वादित्येवास्त्विति

विवादपदानि ज्ञानानि घटज्ञानान्यत्वे सति वेद्यत्वानधिकरणानि ज्ञानत्वाद्घटज्ञानवत्

व्यर्थविशेषणत्वादहेतुरेवायमतस्तद्वत्तद्व्यतिरेकस्योपाधितेति नन्वेतदेवोच्यतां किमनेनाजागलस्तनायमानेन
सत्यमियमपि काचन रीतिस्तार्किकैरङ्गीकृतेति प्रदर्शनार्थं तथाहि मानमनोहरकारेण वादिवागीश्वरेणात्मप्रकर-
णे विवादाध्यासितं बोधाधारजन्यं कार्यत्वात् चेष्टादिवदित्यनुमाने व्यर्थविशेषणेनापि शरीरिजन्यत्वव्यतिरेकेण
—— विवादाध्यासितं बोधाधारजन्यं न भवति शरीर्यजन्यत्वादिति सत्प्रतिपक्षिते स्वमतया विवादाध्या-
सितं मूर्तप्रयत्नजं परमाणुव्यतिरिक्तत्वे सति मूर्तत्वाद्घटः प्रयत्नजः गंधवत्त्वात्पटवत् गंधवच्चेति ईश्वरानुमाने च तत्प्र-
तीदृशाऽजन्यत्वादित्यनेन प्रकरणसमत्वं नापि तज्जन्यत्वमुपाधिरकार्यत्वस्योपाधेर्व्यतिरेकस्य व्यर्थविशेषणत्वा-

ज्ञानमात्रपक्षीकरणे घटज्ञानांशे सिद्धसाधनता तदर्थं विवादपदमिति ग्रहणं वेद्यत्वानधिकरणमित्युक्तेः
अप्रसिद्धविशेषणता तन्निवृत्त्यर्थं घटज्ञानान्यत्वे सतीति विशेषणं वेद्यत्वानधिकरणत्वस्याप्रसिद्धत्वेऽपि घटज्ञा-
नान्यत्वे सति वेद्यत्वानधिकरणत्वं घटज्ञाने प्रसिद्धं घटज्ञानस्य घटज्ञानान्यत्वानधिकरणत्वादेवान्यत्वं चात्र त-
त्त्वानधिकरणत्वं घटज्ञानान्यत्वानधिकरणानीत्युक्ते व्याहतिस्तेषां घटज्ञानान्यत्वादेव तदर्थं वेद्यत्वग्रहणं घ-
टज्ञानान्यत्वे सति वेद्यत्वानधिकरणत्वं घटज्ञानान्यत्वानधिकरणत्वान्न संभवति व्याघातात् तस्माद्वेद्यत्वानधि-
करणत्वसिद्धिः पूर्वानुमानं समग्रलक्षणवतः सद्भावे इदं त्ववेद्यत्वमात्र इति विशेषः घटज्ञानस्योक्तसाध्यवत्त्वे

ननु घटज्ञानत्वमुपाधिः शरीरिजन्यत्वोपाधाविव व्यर्थविशेषणत्वात्

घटज्ञानत्वमुपाधिमाशंक्य निषेधति नन्विति यथा हि विवादपदं सकर्तृकं कार्यत्वात्कुंभवदित्यत्र शरीरिजन्य-
त्वं व्यर्थविशेषणत्वादनुपाधिर्जन्यत्वमात्रेण साध्यव्याप्तिसिद्धेरितरस्य पक्षमात्रव्यावर्तकत्वात् एवं ज्ञान-
त्वमित्यनेनैव ज्ञानव्यतिरिक्तव्यावृत्तौ सिद्धायां घटपदस्य पक्षीकृतघटज्ञानव्यतिरिक्तज्ञानव्यवच्छेदकत्वा-
त्पक्षेतरतयाऽयमनुपाधिरित्याह शरीरीति अर्वाचीनपदमाचार्यैः कार्यान्वयगोचराः महाविद्याः पुनर्दिव्या-
दीन्यन्यत्राभिधास्यन्ते तथाहि विमतं ज्ञानमेतज्ज्ञानविज्ञानविषयत्वे सति वेद्यत्वरहितज्ञानविषयः पदविष-
यत्वात् घटवदित्यादिमहाविद्या

भिरपि समर्थनीयं स्वप्रकाशत्वं फलाविषयत्वादिसाधनान्तव्याहतिः स्वप्रकाशसमर्थनमुपसंहर
ति तस्मादिति विज्ञानस्वप्रकाशत्वमात्मस्वप्रकाशत्वेप्यतिदिशति एतेनेति यद्यपि विज्ञानस्वप्र
काशतयैव तद्रूपस्यात्मनः स्वप्रकाशता सिद्धा तथापि तद्रूपताया एव विवादात्तत्समर्थनार्थमधिक
युक्तिप्रदर्शनार्थं च वादान्तरारम्भः हेतून्प्रमाणानि संगृह्णाति श्लोकेन चिद्रूपत्वादित्यादिना प्र

तस्माद्विगलितसकलकलंकमनुभूतेः स्वप्रकाशत्वानु मानमिति सिद्धम् एतेना
त्मनोपि स्वप्रकाशत्वं व्याख्यातं तथाहि चिद्रूपत्वादकर्मत्वात्स्वयंज्योतिरिति श्रु
तेरात्मनः स्वप्रकाशत्वं को निवारयितुं क्षमः ३ आत्मा संविद्रूपः संवित्कर्मतामन्
तरेणापरोक्षत्वात् यन्नैवं तन्नैवं यथा घटः इति प्रभाकरं प्रत्यनुमानात् घटतज्ज्ञानयोः सम्ब
न्धः आत्मनिष्ठः ज्ञाननिष्ठत्वात् तद्विषयत्ववदिति नैयायिकादीन्प्रत्यनुमानादात्मन

यमं समर्थयते आत्मा संविद्रूप इति अपरोक्षव्यवहारविषयत्वं चापरोक्षत्वं नापरोक्षज्ञानविषय
त्वमपरोक्षज्ञानत्वं वा तेन न साधनवैकल्यासिद्धी घटादेरतीतादेश्च व्यवच्छेदाय विशेषणद्वयं घ
टतज्ज्ञानेति यद्यपि ज्ञानज्ञेययोर्विषयविषयि

१
वि·सु· भावो नाम न भावरूपः कश्चित्सम्बन्धस्तस्याप्यभावरूपत्वात्तस्यैवाश्रितत्वं सिद्धान्ते त्वाध्यासिकः स
टी·न· म्बन्धोऽत्र संबन्धस्य संबन्धिमात्रनिष्ठत्वात्संबन्धिभूतज्ञानघटयोरन्यतरस्यात्मत्वमारोप्यात्मनिष्ठत्वं प
२७ र्यवस्यति तत्रापि घटस्यात्मत्वमुभयवाद्यनभिमतमिति विप्रतिपन्नज्ञानस्यात्मतामापादयति पदस्या
विषयत्वं परविषयत्वं ज्ञानरूपत्वाभावबाधकमाह विपक्षे चेति संशयाद्यविषयत्वं स्वप्रकाशत्वं।

श्चिद्रूपत्वसिद्धिर्विपक्षे चात्मनः संशयविपर्ययागोचरत्वापत्तिर्बाधिका न ह्यात्मन्य
हमनहं वेति कश्चित्संदिग्धे नैवाहमिति वा विपर्यस्यति न चैतत्स्वप्रकाशज्ञानरू
पतामन्तरेणावकल्प्यते न चान्तरेणापि ज्ञानरूपतां दुःखादिवदेतदुपपद्यत इति
शंकनीयं तेषां स्वसत्तायां ज्ञानाव्यभिचारात्तदुपपन्नेन चात्मन्येवमभ्युपगम्यते सु
षुप्त्यभावप्रसंगात् न च ज्ञानात्मनोः सम्बन्धोऽनात्मवृत्तिज्ञानवृत्तित्वात्

न्यान्नेन भवति दुःखादावदर्शनादित्याशंक्य निषेधति न चान्तरेणेति सुषुप्त्यभावप्रसंगादिति एतन्नि राम·
ष्ठजन्यज्ञाने तेन स्वप्रकाशाव्यभिचारेऽस्य न सुषुप्तिः स्यात् एतन्निष्ठकार्यज्ञानोपरमस्यैव सुषुप्ति २७
त्वादित्यर्थः सम्प्रतिपक्षतामाशंक्य निषेधति न चेति अत्रापि संबन्धस्य ॥ ७७ ॥ ७७ ॥

नात्महन्तृत्वमन्यतरस्यानात्मनानाशायपर्यवस्यति तत्राप्यात्मनो नात्मनाश्याहनेति ज्ञानात्मत्व
सिद्धिर्न तु मानमनोहरकारेणमत्र ज्ञानाश्रयः न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेइति श्रुतौ द्रष्टृदृष्ट्योः
संबन्धप्रतीतेरिति ज्ञानात्मनोः संबन्धः तत्कथमाश्रयासिद्धिरिति शंकते न हि द्रष्टुरिति नेयं श्रुतिः संबं

सद्भावइतिशंकनीयं ज्ञानमेवात्मेत्यभ्युपगच्छतां ज्ञानात्मनोः संबंधस्यैवाभावादाश्रया
सिद्धेर्न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते इति द्रष्टृदृष्ट्योः संबंधः श्रुत इति न एवाधिगतइतिमान
मनोहरकारः प्रतितिष्ठिपदिति चेन्मैवं श्रुतेर्लोकप्रसिद्धसंबन्धानुवादेन दृष्टेर्विनाशित्वाभा
वमात्रप्रतिपादकपर त्वात् अप्राप्ते हि शास्त्रमर्थवदिति न्यायात् मुख्यार्थेः द्वैतश्रुतिविरोधा
त् राहोः शिरइतिवदुपचारेणापि संबंध ॥

धप्रतिपादिका अन्यपरत्वादिति परिहरति नैवमिति
तत्परत्वाभावे च कारणमाह अप्राप्त इति अप्राप्ते हि शास्त्रमर्थवत् अर्थेनुपलब्धे तत्प्रमाणमिति तत्रजैमिनि
नोक्तत्वादित्यर्थः एवमनुवादकतया परिहारमुक्त्वा प्रकारान्तरेण परिहरति मुख्यार्थ इति एतेन देवताधिकरण
न्यायोप्यनवकाशीकृतः

१

वि.सु. नन्वद्वैतश्रुतिविरोधादन्यथाभावोस्याः किमिति कल्प्यते विपरीतमेव वा किं न स्यात् अन्योन्यस्तुल्यबलत्वा
टी.न. त्तुल्यं हि साम्प्रदायिकमिति न्यायादित्याशंक्य तत्परत्वातत्परत्वविशेषान्नेत्याह नचेति तत्परत्वमेव तस्याः
५८ कथमवगम्यते ? तत्परत्वं चास्या इत्यत आह उपक्रमेति आत्मनोऽद्वैतत्वस्येति चाद्वैतेनोपक्रमोपसं
हारौ इदं सर्वं सलिल एक इति चाभ्यासः जीवब्रह्मैक्यं च प्रमाणान्तरागोचरं एतावदरे इति फलश्रवणं अ

धश्रुतेरद्वैतस्योपपत्तेश्च न चानयोस्तुल्यबलतया विपर्ययस्तत्परत्वातत्परत्ववि
शेषोपपत्तेरुपक्रमोपसंहारादिषड्विधतात्पर्यलिंगोपेताद्वैतश्रुतिः कथं लोक
प्रवादपाशेपजीविनीं संबन्धश्रुतिं न बाधेत ॥ ७ ॥ ७ ॥ ७ ॥ ७ ॥

स्य महत एतेभ्य इति सूक्ष्मादिरर्थवादः इंद्रभ्यादिरूपेणोपवर्णितं न तेन तादृशार्थेन गृहीतं लोकप्रवा
दइत्यनेनानुवादकतया संबन्धश्रुतेरतत्परत्वमुक्तं कथं न बाधेत बाधेनैवेत्यर्थः एवं च यदद्वैतेनैव गृहीतं
न चानाम्नायप्रतीत आम्नातो भवितुमर्हतीत्यादि तत्राप्युपचारप्रवृत्तेः सुलभत्वादिदं तत्सर्वप्रम
तमप्रलपितायितं यत्तु नच प्रत्यक्षं तस्य भेदग्राहकत्वादित्युक्तं

नद्रूपिभेद निर्भेदसन समयेसम्यग्गुपरिष्टाद्ध स्यासाद्भावयिष्यामस्तदेवं वैयधिकरण्यंषष्ठ्योरंगीकृत्य पर्यहार्षीत्संप्रतिवैयधिकरण्यमेवनास्ति सामानाधिकरण्येनाप्युपपत्तेरिति सनिदर्शनमाह देवदत्तस्येति ननुन दृष्टेर्द्रष्टारं पश्येरित्यत्र यथावैयधिकरण्यमेव मत्रापिकिंनस्यादित्यत आह नदृष्टेरिति ॥

देवदत्तस्यगंतुरिनिवद्रष्टुर्दृष्टेरितिद्रष्टृरूपायादृष्टेर्दृष्टिलक्षणोवायोद्रष्टानस्यविपरिलोपोनास्तीतिसामानाधिकरण्येनषष्ठ्योःसम्बन्धसंभवेवैयधिकरण्यस्यकल्पनायोगात् नदृष्टेर्द्रष्टारंपश्येरित्यादाविववैयधिकरण्येप्यंतःकरणपरिणामरूपायाःदृष्टेर्योद्रष्टेतिवापरिणामिनोंतःकरणस्यद्रष्टुःसाक्षिभूतायादृष्टिस्तस्याविपरिलोपोनास्तीतिवाअद्वैतश्रुत्यनुगुणेसंभवति सम्बन्धेगुणगुणिभावेनसंबन्धकल्पनाअविदितमीमांसावृत्तान्तस्यैवपरंशोभते ॥ ॥ अंतःकरणवृत्तिसाक्षिणोवांतःकरणसाक्षिणोवाभिन्नौसंबंधितयानिर्दिश्येते ननुज्ञानात्मानावित्यर्थः अद्वैतश्रुत्यनुगुणेसंबन्धेसंभवतीत्यस्यासमर्थः अद्वैतश्रुत्यविरुद्धानेकप्रकारेपरिस्फुरत्स्वपि यत्तस्यविरुद्धएवप्रकारःपर्यस्फुरत्तत्रनदृष्टोभाग्यमेवपरंकारणमित्यभिप्रायःदृयंस्त्विति

देवतावत्त्वम्पस्येनार्थवत्तीदृषेनरांत्वदभिमतसम्बन्धेप्रामाण्यमित्याह किंचेति नापीश्वरस्येति यद्यपीदं
मैत्रेयी ब्राह्मणं जीवानुवादेन तस्यब्रह्मात्मताप्रतिपादनपरं नतु जीवपरं जीवब्रह्मभेदपरं वेति वाक्या
न्वयादिभिस्तत्रप्रतिपादितं तथापि शोधितस्य ब्रह्मताप्रतिपादनमिति शोधनसमये जीवस्याप्येवं स्व-
भावतावक्तव्येत्यभिप्रेत्य प्रियादिसंसूचितस्याविनाशित्वोपपादनादित्युक्तं तेनात्रेश्वरज्ञानस्यकारणत्व

किंचजीवेश्वरयोर्भेदमभ्युपगच्छतानित्यदृष्टिसंबन्धः कस्योच्यतइति विवेचनीयं
नतावज्जीवस्यतस्यानित्यज्ञानाभ्युपगमात् नापीश्वरस्य मैत्रेयी ब्राह्मणे नवाअरेपत्युः
कामायपतिः प्रियोभवतीत्यादिनापतिजायादिप्रियसंसूचितं जीवमुपक्रम्यतस्यैव
चैतेभ्योभूतेभ्यः समुत्थायतान्येवानुविनश्यति ॥

इति तात्पर्यमिमांसकृतिं प्रमाणयन् वादिवागीश्वरोऽप्युपहसितः एतेभ्यइत्यादिश्रुतेरयमर्थः यान्येतानिका
र्यकारणविषयाकारपरिणतानि नामरूपात्मकानि पंचभूतानि एतेभ्योभूतेभ्योहेतौ पंचमी समुत्थायस
म्यगुत्थायपृथग्भूत्वा यथोदकेभ्योहेतुभ्यश्चंद्रात्मतिबिंबचन्द्रमणोपृथग्भावः तद्वत्तान्येवानुविनश्यतितो

निवर्त्स्यविद्यासमूलं विनश्यंत्यनु विनश्यतीत्युपाधिप्रलयानन्तरमुक्तावकेऽपि निवर्त्तत इत्यर्थः न प्रेत्येति श
रीरद्वयपरित्यज्य संज्ञाविशेषविज्ञानं नास्ति तदापादकानामुपाधीनामभावादित्यर्थः अवस्थांतरेति मोक्षा
वस्थाप्रतिपादनावसर इत्यर्थः विनाशमिति संज्ञा नास्तीति ज्ञाननाशाभिधानादित्यर्थः प्रतिवचनमिदं अरे
मैत्रेयि अयमात्मा अविनाशीति विनाशशब्देन विक्रिया विवक्ष्यते सास्य नास्तीत्यर्थः तथानुच्छित्तिधर्मोऽनु
च्छित्तिः स्वरूपनाशः स धर्मोऽस्य नास्तीत्यनुच्छित्तिधर्मा कस्तर्हि संज्ञा नास्तीत्यस्यार्थ इत्यत आह मात्रेति मा

न प्रेत्य संज्ञास्तीत्यवस्थांतरप्रतिपादनावसरे विनाशमाशंक्याविनाशी वा अरेऽयमात्मा
ऽनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवति यद्वै तन्न पश्यति पश्यन्वै तद्द्रष्टव्यं न पश्यति न
हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वादिति अविनाशित्वोपपादनात् ज्योतिर्ब्राह्म
णे च जागराद्यवस्थोपन्यासपुरःसरम् ॥ मात्राभिर्विषयेन्द्रियाद्याकारपरिणतैर्भूतैरसंसर्गः पर

मस्य भवति न स्वरूपविनाशः यद्वै तन्न पश्यतीति वै इत्यवधारणे यत्तन्न पश्यत्येवेति मन्यस इत्यर्थः पश्य
न्वै तन्न पश्यति तत्र हेतुर्न हीति हि यस्माद्द्रष्टुरात्मनो दृष्टेः स्वरूपभूताया इतिवा पूर्वोक्तप्रकारेण वा विपरि
लोपो विघातो न विद्यत इत्यन्वयः तत्रापि हेतुः अविनाशित्वादिति स्वरूपविनाशाभावाद्यद्वा अविनाशित्वम
पक्षयरहितत्वमित्येवं विशेषविज्ञानाभावेपि स्वरूपविज्ञानस्य नित्यत्वप्रतिपादनादित्यर्थः जागरादीति सर्वा

१
वि.सु.
टी.न.
३०

यत्रेति यत्र यस्मिन्नन्तरे सुप्तो जीवः न कंचन कामं जाग्रत्स्वप्नयोर्ये कामास्तेषु न कमपि कामं कामयते तथा न
कंचन स्वप्नं स्वप्नशब्देन तद्विषयाणि ज्ञानान्यभिधीयन्ते जाग्रद्दर्शनमपि मिथ्याविषयत्वात्स्वप्नशब्देन निर्दि
श्यते न कंचनेत्यत्र च नशब्दोऽप्यर्थः कमपि स्वप्नं न पश्यतीत्यर्थः संप्रसादावस्थानमिति संप्रसादः सुषुप्त्यव
स्था सम्यक्प्रसीदत्यस्यां जीवस्वरूपमिति सुषुप्त्याख्यामवस्थां संप्रसादावस्थानं तद्वतायोऽत्र यत्रेति वाक्य

अथ यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यतीति संप्रसादावस्थानमवगतार्थं यद्वै तन्न प
श्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति विशेषविज्ञानाभावेऽपि स्वरूपविज्ञा
नस्य नित्यत्वप्रतिपादनात् ईश्वरपक्षे च विशेषविज्ञानाभावस्य वक्तुमशक्यत्वात्तस्य सर्वदा सर्वज्ञ
त्वात् सुषुप्त्याद्यवस्थाभावाच्च तस्माज्ज्ञानात्मनोः सम्बन्धोऽनात्मनिष्ठत्वनुमानमाश्रया
सिद्धमिति सिद्धं यत्तु गुणत्वादनित्यत्वाज्ज्ञानमात्मा न भवति रूपादिवदित्यनुमानं तत्सर्वम

शेषः भवत्वेवं ततः किमित्यत आह ईश्वरपक्ष इति अनुपपन्नतरं चा ॥ न्यतरासिद्धतयापास्तम्
इ सुषुप्त्यादीति ननु ज्ञानमात्मा न भवति गुणत्वाद्रूपवत् तथा ज्ञानमात्मा न भवत्यनित्यत्वाद्रूपादिवद्योगवि
रोधात्कथमात्मनो ज्ञानात्मकत्वमित्यत आह यत्त्विति यस्य हि निजात्मस्वरूपताभिमता विज्ञानस्य तस्य कथं
गुणत्वमनित्यत्वं वाभिमतमित्यर्थः॥

राम.
३०

गुणत्वसाधकानुमानं शंकते अथेति अत्रापि संबंधिमात्रनिष्ठस्य संबंधस्य गुणनिष्ठत्वमन्यतरसंबंधिनिरू
पणत्वमंतरेण न घटते घटस्य च गुणत्वमुभयानभिमतमिति ज्ञानस्य गुणत्वसिद्धिः यद्वा ज्ञानस्य गुणत्वेन
स्यान्तरा जानामीति ज्ञानाश्रयं विषयीकुर्वतः प्रत्ययस्य निर्विषयतापत्तेः स्वरूपत्वे तत्प्रत्याधारता योगादिति
बाधकमाह विपक्षे चेति इदं च प्रतिप्रयोगेण निरुन्धे नैवं स्वेति अत्रापि रूपस्य द्रव्यत्वमुभयवादिविप्रति

अथ घटज्ञानयोः संबंधः गुणनिष्ठः ज्ञाननिष्ठत्वात्तस्य तावद्विपक्षे च जानामीति प्रत्यय
स्य निरालंबनत्वप्रसंगो बाधक इति चेन्नैवं रूपतज्ज्ञानयोः संबंधो द्रव्यनिष्ठो ज्ञाननिष्ठ
त्वात्सत्तावदिति प्रतिप्रयोगसंभवात् जानामीति चानुभवस्यान्तःकरणवृत्त्याश्रयप्रमातृ
विषयतयाप्युपपत्तेः विज्ञानमानंदं ब्रह्म प्रज्ञानं ब्रह्म ज्ञानघन एवेत्यादिश्रुतिभ्यश्चात्म
नश्चिद्रूपत्वसिद्धेः न चाधिकरणपरतया ज्ञानशब्दो योज्यः अद्वैतश्रुतिविरोधात्तस्मात्सा

चिद्रूपमिति ज्ञानस्य द्रव्यसिद्धिर्यत्तु बाधकमुक्तं तदंतःकरणवृत्तिमादाय यथा ॥ धूर्क्ते चिद्रूपत्वादिति।
स्मनीत्याह जानामीति तदेवमनुमानाच्चिद्रूपत्वमुक्त्वा तदनुग्राहकमागममप्याह विज्ञानमिति यत्तु मानम
नोहरकृतोक्तं ज्ञानशब्दस्य ज्ञायते अस्मिन्नित्यधिकरणवचनत्वमिति तद्दूषयति न चेति करणाधिकरण
योश्चेत्यधिकरणेपि ल्युट्विधानादित्यर्थः ॥

१

चि·सु· टी·न· ३१

द्वितीयं हेतुं विवृणोति अकर्मत्वाच्चेति नन्वकर्मत्वमेव कथं यावता मानसप्रत्यक्षोऽयमिष्यत इत्यत आह
वेद्यत्व इति स्वाश्रयं यज्ज्ञानं तद्विषयतयेत्यर्थः स्यादेतदुपाधिवशात् किमित्यनेकाकारता न स्यात् दृश्यते
ह्येकस्यापि देवदत्तस्यानेकाकारता पिता भ्राता मातुलः श्याल इत्यादिः संभवति चात्रापि सुखादिविशि
ष्टाकारेणाहं सुखीति ज्ञेयत्वं केवलस्य तु ज्ञातृत्वमित्युपाधिभेदस्तत्राह नच सुखादीति चित्रादीनां स्वरूपे

अकर्मत्वाच्चात्मनः स्वप्रकाशत्वं वेद्यत्वे स्वाश्रयज्ञानविषयतया कर्मकर्तृभावविरो
धप्रसंगात् न च सुखादिविशिष्टस्याहं सुखीत्यादिज्ञानकर्मत्वं केवलस्य च कर्तृत्वमि
त्याकारभेदाद्विरोधो गमनादिक्रियास्वपि केवलस्य कर्तृत्वं गमनं विशिष्टाकारेण।
च कर्मत्वमित्याकारभेदेनाविरोधात् कर्मकर्तृभावविरोधस्य सर्वत्रोच्छेदप्रसंगात्।
तथापि नात्मनः स्वप्रकाशत्वं तत्तदर्थसम्वेदनाश्रयतयापि स्फुरणोपपत्तेः

णेकत्वेपि प्रतियोगिनानात्वात्तत्संभवति तदपेक्षयानेककल्पनाविषयत्वमिह तूपाधिविशिष्टे [illegible]वत्
प्रतिकर्तृत्वं कर्मत्वं चेति विप्रतिषिद्धं नियमेनानुपलब्धेर्गमनादावप्येवं विशेषोपाधिभेदेनाविरोधप्रसं राम·
गादित्यर्थः अत्र प्राभाकरः शंकते तथापीति यद्यप्यकर्मत्वं तथापि तत्तदर्थविषयाणि यानि संवेदना ३१
नि तदाश्रयतया स्फुरणरूपतामन्तरेणापि स्फुरणोप ~~~॥

पत्तेरिति योजना पूर्वं चिद्रूपतात्मनि साधिता अत्रात्मकर्मत्वस्यान्यथोपपत्तिः परिह्रियत इति तज्जामिता न
नु कर्मत्वेनैवास्य किमिति नास्ति ज्ञानक्रियाफलभाक्त्वात् क्रियाफलभाजकस्य कर्मत्वादिति नैयायिकमतमाशं-
क्य तमेव निषेधति नचास्येति न क्रियाफलभाक्त्वमात्रं कर्मत्वे न गमकं गच्छति चैत्र इत्यत्र चैत्रस्यापि कर्मत्वप्रसं-
गात् तस्मात्पर समवेतक्रियाफलशालित्वं कर्मत्वं तच्चास्य नास्ति स्वसमवेतत्वाज्ज्ञानक्रियाया इति भावः

नचास्य क्रियाफलभाजोऽपि कर्मत्वं परसमवेतक्रियाफलशालित्वाभावात् चैतन्मान
समप्रत्ययेऽपि समानजातीतः सदा सकर्मकतया कर्मणा व्याप्तस्य तन्निवृत्तौ निवृत्तेरिति
चेन्नैवं संविद्व्यतिरिक्तस्य संवित्कर्मत्वे नैवापरोक्षत्वनियमादात्मनः कर्मत्वाभावेन तद-
नुपपत्तेः ॥

ननु तर्हि संविदाश्रयत्वेऽतिकिमित्ययमाग्रहः मानसप्रत्ययत्वेऽपि परसमवेतक्रि-
याफलविकलतया कर्मत्वाऽभावेन कर्मकर्तृविरोधाभावादित्यत आह नचैतदिति तथा सति ज्ञाततामे
व जह्यात् आत्मनः कर्मत्वाभावादन्यस्य च कर्मणोऽनंगीकारादित्यर्थः तदेतन्निरस्यति मैवमिति यदि सं-
विद्व्यतिरिक्तः स्यात्तर्हि कर्मतयैवापरोक्षव्यवहारविषयः स्याद्घटवत्तथा चात्मनः कर्मत्वं व्यावर्तमा-
नं संविद्व्यतिरिक्तत्वं व्यावर्तयतीत्याह संविदिति ॥ ७७ ॥

१
चि·सु·
टी·न·
३२

संविदाश्रयतयाऽपरोक्षत्वे चानुमानविरोधमाह संवेदितेति बाधनिवृत्त्यै प्रथमविशेषणं परप्रसिद्ध्या विप्रतिपत्तियोगिप्रसिद्धिः एवं च सति संविदधीनप्रकाशत्वविकल्पेन यदत्र कैश्चिद्दूषणमुक्तं तदप्यनवकाशीकृतं यत्तु तैरेवोक्तं विपक्षबाधकतर्काभावादिति तत्र विपक्षबाधकतर्कमाह स्वसत्तायामिति प्रकाशान्तराधीनव्यवहारवत्त्वेनेत्यज्ञानवत्त्वानङ्गीकारात्स्वसत्तायां प्रकाशाव्यभिचारवत इति योजना तेन च ।

संवेदितात्संविदाश्रयतयाऽपरोक्षो न भवति अपरोक्षत्वात्संवेदनवदिति न च विपक्षेबाधकतर्काभावः स्वसत्तायां प्रकाशाव्यभिचारवतः प्रकाशान्तराधीनव्यवहारवत्त्वे कदाचित्तथा याद्दिगोचरत्वप्रसंगस्यैव बाधकत्वादात्मनो घटादिज्ञाने भासमानत्वाङ्गीकाराच्च घटादिवदेव चाक्षुषत्वमपि प्रसज्येत तज्ज्ञानेति तज्ज्ञाने भासमानताया एव तत्त्वात् ॥ सुखादिव्याप्-

तिः यत्तु तैरेवाहङ्कृतोपाधिकृतत्वाच्चेत्युक्तं तदसमपक्षेतरत्वात् पर्वतेतरत्वादिवद्व्यतिरेकानिर्णयेन साध्याव्यापकत्वात् तर्कान्तरविरोधमाह आत्मन इति आत्मनो घटादिवदेव चाक्षुषत्वमपि प्रसज्येत घटादिज्ञाने षुभासमानताङ्गीकारादिति योजना ननु चक्षुरसंयुक्तस्य कथं चाक्षुषत्वमित्यत आह तज्ज्ञानेति तज्ज्ञान इति । अन्यथा चक्षुःसंयुक्ततया परमाण्वादेरपि चाक्षुषत्वप्रसंगात् सोऽयं देवदत्त इति प्रत्यभिज्ञाने तत्तायाश्चाक्षुष

राम·
३२

भवतु नहि चाक्षुषत्वमपि न च नीरूपस्य चाक्षुषत्वाभावः रूपादौ व्यभिचाराद् द्रव्यत्वविशेषणेऽपि वियदादौ भाट्टा-
नां व्यभिचारादित्यत आह नीरूपस्य चेति किमयं स्वसमयबलादिति न प्रमाणबलादित्याह आत्मा चाक्षुषज्ञानाभा-
न इति रूपत्वसामान्यादिषु व्यभिचारनिवारणाय द्रव्यग्रहणं घटादिव्यभिचारविघटनाय रूपिग्रहणं
न च भाट्टानां साध्यविकलता दृष्टान्तस्य तन्मतस्यास्तैव प्रमाणाभावात् अस्तु नाकाशमचाक्षुषमरूपिद्रव्य

नीरूपस्य च द्रव्यस्य चाक्षुषत्वायोगात् आत्मा चाक्षुषज्ञानेन न प्रकाशते अरूपिद्रव्य-
त्वादाकाशवदिति प्रतिप्रयोगसंभवाच्च अत्रायं पुरुषः स्वयंज्योतिरिति श्रुतेरात्मा स्वप्रका-
शः ननु स्वप्नावस्थामधिकृत्येदमाम्नायते तत्र मनसोऽनुपरमान्न स्वयंज्योतिष्ट्वं न च मन-
सो गजाद्याकारपरिणतस्यावभासकर्मत्वेनैवावस्थानात्करणान्तराभावाच्चात्मैव स्वयंज्यो-
((तिः स्यादिति शंकनीयम्

त्वात्सर्वदा स्पर्शवद्द्रव्यत्वान्मनोवत्सर्वगतत्वादात्मवदित्यादिप्रयोगासं))
भवाच्च न चान्तरत्वमुपाधिर्गुरुत्वादौ साध्याव्याप्तेस्तृतीयं हेतुं विवृणोति अत्रायमिति शंकते नन्विति अयमर्थः न
तावत्स्वप्नावस्थायां स्वप्रकाशत्वं श्रुत्या दर्शयितुं शक्यमिन्द्रियस्य मनसो विद्यमानतया व्यतिरेकनिर्णयाभावा-
दन्यथा जागरेऽपि तदुत्पादनसंभवेन स्वप्नावस्थाश्रयणवैफल्यादिति सिद्धान्तिमतमाशंक्य दूषयति न च मनस

तत्र हेतुमाह मनस इति यदि हि मनसोऽदृश्यतयावस्थानं स्यात्तस्यात्तर्हि करणत्वं न तन्नैतदस्ति मनस इंद्रिय
त्वेनायोगिनः प्रत्यतींद्रियत्वात् शरीरसंयुक्तमनींद्रियं साक्षात्प्रतीतिसाधनमितींद्रियलक्षणात्मनोतींद्रियमिंद्रियत्वाच्च
क्षुर्वदिति प्रयोगसंभवाच्चेत्यर्थः कस्तर्हि श्रुतेरर्थ इत्यत आह तस्मादिति ज्योतिर्लक्षणप्रकाशाधिकरणत्वा
ज्ज्योतिरित्यभिधीयते ज्योतिःसाधनतया वा ज्योतिःशब्दः वागादिवदित्यर्थः उपपत्तिविरुद्धश्चायमर्थ इत्या

मनसश्चक्षुरादिवदिंद्रियत्वेन प्रत्यक्षत्वानुपपत्तेस्तस्मान्मनःसंयोगजन्यज्ञानाधारत्वे
न स्वयंशब्दवाच्य आत्मा ज्योतिरित्यभिधीयते ज्योतिःसाधनत्वाद्वा न्वेवायं ज्योतिषा अग्निनै
वायं ज्योतिषेत्येतत्प्रकरणपठितवागग्न्यादिवन्न त्वात्मा स्वयंज्योतिरिति द्रव्यस्य गुण
त्वानुपपत्तिरिति चेन्नैवं यतः संबंधस्याश्रयत्वेन विज्ञानासमवायिनः इंद्रियत्वाविघा
तान्न मनः प्रत्यक्षमात्मवत् ॥५१॥

इह द्रव्यस्येति ज्ञानस्य गुणत्वादात्मनो द्रव्यत्वाच्चेत्यर्थः तदेतदप्यप
करोति नैवमिति हेतुमवतारयति यत इति श्लोकेनानुमानमाह संबंधस्येति मनः प्रत्यक्षं विज्ञानासमवा
यिनो विज्ञानं प्रत्यक्षसमवायिकारणस्य संबंधस्याश्रयत्वे न हेतुनात्मवदित्यनुमाने संगृहीतं यत्तु प्रत्यक्षत्वेइं
द्रियत्वव्याघात इति तत्राह इंद्रियत्वाविघाताच्चेति न वेंद्रियाजन्यायोगिसाक्षात्काराविषयो मन इंद्रियत्वा
च्चक्षुर्वदिति प्रयोगः नैयायिकादैरप्रसिद्धविशेषणत्वादुक्तहेतुव्यतिरेकस्योपाधित्वाच्च

संगृहीतमनुमानं विवृणोति मन इत्यादिना ज्ञानासमवायिकारणमात्ममनःसंयोगः ज्ञानाधारत्वादित्यु
क्ते असिद्धिस्तस्याऽसमवायिकारणाधारत्वादित्युक्ते परमाणवादिषु व्यभिचारस्ततो विशेषणद्वयमिदं इंद्रिय
त्वाविघातो च्वेति विवृणोति नचेति ननु कथं ज्ञानस्वरूपस्यात्मनो ज्योतिः शब्दवाच्यता यावता भूतविशे

मनः प्रत्यक्षज्ञानासमवायिकारणाधारत्वात् आत्मवदित्यनुमानात् मनसोपि प्रत्य
क्षत्वापत्तेश्च प्रत्यक्षत्वमिति इन्द्रियत्वव्याकोपस्तस्मात्सिद्धं तस्यार्थेन्द्रियकज्ञाना
विषयत्वेनेन्द्रियत्वाव्याकोपात्तस्मान्निरस्तसमस्तकलङ्कावकाशमात्मनः स्वप्रकाश
त्वेनस्वात्मरूपमविद्यापरिकल्पितप्रपञ्चावभासकत्वादविद्यातमोनिवर्तकत्वाच्च ज्यो
तिः शब्दाभिधेयं यथाभावरूपशार्वरादितमोनिवर्तनेन जगदवभासकमादित्यादि
ज्योतिरिति सिद्धं ननु तमोनभावरूपं ॥ एवमयं ज्योतिः शब्दो व्युत्पन्न इत्यत आह तद्वेति तमो
निवर्तनेनावभासके हि ज्योतिः शब्दः प्रयुज्यते तदिहापि समानमित्यर्थः भावाभावातिगाऽविद्यातद्वेदृष्टानि
तं तमः कुतस्तदस्य भावत्वं वादेनानेन साध्यते भावरूपं तमो निवर्तनेनेत्युक्तं तदिदमसृष्यमाणा वैशेषिका
दयः प्रत्यवतिष्ठन्ते ननु तमो न भावरूपमिति

हेतुमाह भावेष्विति षट्पदार्थान्यतमत्वं हि भावत्वं तदिह तदन्यतमत्वं व्याप्तत्वेनानं भावत्वमपि व्यावर्तनीय
मित्यर्थः तत्र किं द्रव्यान्तर्भूतमुत्तरपंचकान्तर्भूतं वा द्रव्यान्तर्भावे पृथिव्यादिनवान्यतमदन्यद्वेति विकल्प्य नवा
न्तर्भावं निषेधति नाद्यः क्षितीति तत्र रूपरसगंधस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगु
रुत्वद्रवत्वसंस्काराश्चतुर्दश क्षितिगुणाः गंधरहिताः स्नेहसहितास्त एव चतुर्दश सलिलगुणाः संख्यापरि
माणपृथक्त्वसंयोगविभागबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यसंस्काराश्चतुर्दशात्मगुणा आ

भावेष्वनंतर्भावात् न द्वितीयः पृथिव्यादिद्रव्याणामन्यतमत्तदन्यद्वा स्यात्त्वाद्यः क्षितिसलिला
त्मसु चतुर्दशगुणेषु तेजसि एकादशगुणे मातरिश्वनि नवगुणे मनसि चाष्टगुणे नभ
सि षड्गुणे दिक्कालयोः पंचगुणयोरविनाशिनोरनन्तर्भावात् अन्तर्भावे वा तावद्गुणव
त्वप्रसंगात् आत्मादावन्तर्भावे नित्यत्वापत्तेश्च ॥ इत्याचाद्यापरः रूपस्पर्शसंख्यापरिमाणपृथक्त्वसं

योगविभागपरत्वापरत्वद्रवत्वसंस्कारा इत्येकादशगुणास्तेजसः रूपद्रवत्वहीनास्त एव नवगुणा वायोः स्प
र्शरहितास्त एवाष्टमनसो गुणाः एतेनेश्वरोपि गृहीतः शब्दसंख्यापरिमाणपृथक्त्वसंयोगविभागाः षड्गगन
गुणाः शब्दवर्जितास्त एव पंच दिक्कालयोरेतेष्वनन्तर्भावादित्यर्थः ननु किमित्यनन्तर्भाव इत्यत आह अंतर्भावे
वेति यस्मिन्नस्यान्तर्भावोभिमतस्तस्य यावन्तो गुणास्तावद्गुणत्वप्रसंगादित्यर्थः नित्यद्रव्यान्तर्भावेऽधिकं दूष
णमाह आत्मादाविति तथा चालोकानित्यत्वमिति शेषः

नन्वबहिष्ठं दूषयति नापि द्वितीय इति तत्र वक्तव्यं किं गुणवदुत निर्गुणमिति निर्गुणपक्षं दूषयति निर्गुणस्येति गुणवत्त्वस्य द्रव्यलक्षणत्वेन तद्रहितस्य द्रव्यत्वव्याघातादित्यर्थः प्रथमे शङ्कते नीलेति रूपपरिमाणगुणवत्त्वोपलम्भादित्यर्थः परिहरति नेति पृथिव्यां हि नीलरूपं गन्धादिभिर्व्याप्तमतस्तन्निवृत्तौ तमसि नीलरूपमपि निवर्तेतेत्यर्थः भावायोगादिति पदच्छेदः भंग्यंतरेणापि द्रव्यांतरत्वं दूषयति अपि चेति तत्किं

नापि द्वितीयो निर्गुणस्य द्रव्यत्वानुपपत्तेः द्रव्यान्तरत्वस्य स्वतन्त्रामनुपपत्तेः नीलोत्पलदलश्यामं महत्त्वोपलभ्यमानं तमः कथं निर्गुणमिति चेन्न नीलरूपस्य गन्धैकार्थसमवायिनस्तद्व्याप्तस्य तदभावे भावायोगादपि च द्रव्यांतरत्वे न तावन्निरवयवत्वं नित्यत्वेनालोकानिवर्त्यत्वापपत्तेः सावयवत्वे च तदारंभकाणां स्पर्शवत्त्वेन स्मिन्नपि स्पर्शोपलंभप्रसंगात् स्पर्शवत्त्वे च तेषां मनोवद्द्रव्यारंभकत्वायोगात् ॥

निरवयवमुतावयवारभ्यं नाद्य इत्याह न तावदिति निरवयवद्रव्यस्यात्मवन्नित्यत्वादित्यर्थः द्वितीयेऽपि किं स्पर्शवदारभ्यं तद्रहितारभ्यं वा प्रथमे माह तदारंभकाणामिति समवायिकारणगतविशेषगुणस्य कार्ये सजातीयगुणारंभकत्वनियमादिति भावः द्वितीयं दूषयति अस्पर्शवत्त्वे चेति यत्स्पर्शरहितं न तद्द्रव्यारंभकं यथा मनः

उत्तरं पंचकं तमोभावं क्रमेण दूषयति नापीति गुणपक्षेपि किं रूपं तमो भूतमितरो न रभूतं वा आद्येपि किं पृथि-
व्यादित्रयवृत्ति तरवृत्ति वा आद्यं निराचष्टे रूपं तमो भावं इति इतरवृत्तितामपि क्रमेण दूषयति नापीति न-
भस्त्वात् वायु विशेषगुणरहितत्वादिति दिक्कालमनसां विशेषगुणशून्यत्वमिति सिद्धांतादित्यर्थः चक्षुर्ग्रा-

नापि गुणः रूपं तमो वा पृथिव्यादित्रितयगुणवत्त्वे च तत्सहचारिणां गुणान्तराणामप्यु-
पलब्धिप्रसंगात् नापि नभो नभस्तो गुणस्तयोररूपत्वात् नापि दिक्कालमनसामेते-
षां विशेषगुणरहितत्वात् नाप्यात्मनस्तस्य बाह्येन्द्रियप्रत्यक्षगुणानधिकरणत्वात् ना-
पि कर्म संयोगविभागयोरकारणत्वात् नापि सामान्यविशेषसमवायाः तेषां व्यक्त्या-
श्रयसंबंधिनामुपलब्धिमन्तरेणानुपलम्भनियमात् नहि सामान्यस्येव व्यक्तिर्विशेषा-
णामिव वाश्रयः समवायस्येव संबंधी तमसः कश्चिदुपलभ्यते ॥

ह्यस्येतरगुणानां तमो-
वत्त्वसम्भवनिरस्तः कर्मत्वं तमो भावं निराकरोति नापीति संयोगविभागयोरसमवायिकारणत्वस्य क-
र्मलक्षणत्वात्तमसस्तदभावादित्यर्थः सामान्यादित्रयधर्मिणामभावं तमसि दर्शयति नहीति
सामान्यत्वे व्यक्तिव्यंग्यत्व विशेषत्वे चाश्रयप्रतीत्यपेक्षा समवायत्वे च संबंधिप्रतीत्यपेक्षा स्यादित्यर्थः

स्वभावत्वेति: स्वभावापत्तिमुक्त्वा प्रतीत्यनुपपत्तिमाह न चेति प्रत्यक्षेणावदनुभूयते तत्र किं चाक्षुषमुत मा-
नसं स्पार्शनादिकं त्वनुपलम्भपराहतं नाद्य इत्याह न चेति अस्मत्पक्षे निमीलितलोचनस्यापि तमसालोचनं
संभवति आलोकाभावस्यान्तरस्य चक्षुषा ग्रहणसम्भवादालोकानपेक्षत्वाद्भावपक्षे त्वालोकापेक्षाया आवश्यकत्वा-
त्वात् पदार्थान्तरस्याप्यान्तरस्य ग्रहणप्रसंगाच्चेति भावः रूपगुणत्वे रूपवद्द्रव्यत्वे चानुपपत्त्यन्तरमाह अपि

नत्वास्य तमस उपलंभसंभवः तदुपलंभकाभावात् न च लोचनमुपलंभकं तदव्या-
पारेऽनुपलंभापातात् अस्ति च निमीलितनयनस्यापि तमः पश्यामीत्यभिमानः
अपि च रूपत्वे रूपवत्त्वे चालोकाजन्यचक्षुर्जन्यसाक्षात्कारविषयत्वं न स्यादालोक-
सहकृतस्यैव चक्षुषस्तत्सामर्थ्यात् नापि मनस्तदुपलंभकं बाह्येन्द्रियनिरपेक्षस्य तस्य
((बहिरप्रवृत्तेः

चेति आलोकेनाजन्यश्चक्षुर्जन्यश्च यः साक्षात्कारस्तद्विषयत्वं न स्यादस्ति च तदित्यर्थः))
रूपघटादिव्यभिचा[illegible]पाद्यविशेषणं ईश्वरप्रत्यक्षवेद्यस्यास्मदादिस्पार्शनप्रत्यक्षवेद्यस्य च घटादेर्निवृत्त्यै चक्षुर्जं-
न्यग्रहणं अस्मत्पक्षे त्वालोकाभावस्यालोकानपेक्षत्वात्प्रत्यक्षप्रतियोगिकत्वाच्च प्रत्यक्षत्वान्नानुपपत्तिरिति भावः
मानसत्वं निषेधति नापि मन इति तमसश्च बहिरुपलब्धेरिति शेषः

१

चि·सु· टी·न· ३६

उपसंहरति तस्मादिति तद्भावइत्यंतर्भूतत्वेपीत्यर्थः अयमत्रप्रयोगस्तमः पदमालोकाभाववाचकमालोका
नपेक्षत्वस्त्रोक्तवाचकत्वादालोकाभावपदवदिति समाधानमुपक्रमते अत्रोच्यतइति श्लोकेनप्रमाण
मुपदर्शयति तमालेति तमालवत् श्यामलमिति ज्ञानंतमालश्यामलज्ञानंतस्मिन्निर्बाधेस्फुटेजाग्रति स्फुर
तिसति अकस्मान्निःकारणं द्रव्यान्तरन्तमः विशेषणैरुदय इत्यकस्मादुपलभ्यतेअयुक्तोह्यकस्मादुप

तस्मात्वइत्यपिभावेस्वनंतर्भावात्तद्भावेवोपलंभकाभावाच्च प्रभाभावस्तमइति अत्रो
च्यते तमालश्यामलज्ञानेनिर्बाधेजाग्रतिस्फुटे द्रव्यांतरंतमःकस्मादकस्मादुपलभ्य
ते ५ अस्तिहितमस्तमालमालाश्यामलमिति प्रतीतिनेचाप्रतीतावेवायंप्रतीतिप्र
मस्तद्व्यवहारस्यतत्प्रतीतिमन्तरेणानुपपत्तेः॥

॥लापोतिप्रसंगादितियोजना अत्रजाग्रती
त्यनुत्पत्तिलक्षणमप्रामाण्यंपरिहृतं स्फुटइतिसंशयः परिहृतः निर्बाधइतिविपर्ययपर्युदासः श्लोकंवि
वृणोति अस्तिहीति अत्रप्राभाकरावलंबिनः प्राहुः प्रतीतिरेवतावन्नोदेति यस्तुप्रतीतिव्यवहारःसतुप्रतीत्य
भावएवप्रतीतिभ्रमः यथाहुरदृष्टोध्वांतदृष्टिवदिति तन्निराचष्टे नचेति तत्रहेतुः तद्व्यवहारस्येति अस्तितावदे
वंविधःसंसर्गव्यवहारः सचतादृशज्ञानमन्तरेणानुपपन्नः चेतनव्यवहारस्यज्ञानपूर्वकत्वनियमादित्यर्थः

राम· ३६

यथा चैतन्नयोर्द्वैकैः ख्यातिप्रत्याख्याने प्रख्याप्यते न चालोकादर्शनविषयज्ञानमेव तमः पश्यामीति व्यवहारहेतुस्तस्याचाक्षुषत्वादिदमिति व्यवहाराद्युपपादकत्वादिति भावः यत्तेनैतदपि प्रास्तं यदाह मानमनोहरस्तमसि प्रमाणाभावमुपेत्यस्य नीलं तम इति प्रतीतिप्रमाणमिति चेन्न नीलबुद्ध्यसिद्धेरुक्तनाशेनापि अप्रतीतावपि प्रतीतिभ्रमोऽमंदानामिति यत्तु नैवोक्तं कथं तर्हि पदप्रयोग इति चेत्तिनाभाव उपचारादिति।

नचायमौपचारिक आलोकाभावे शौक्ल्याभावे पटादौ नीलव्यवहार इवेति युक्तं मुख्ये बाधकाभावात् रूपत्वे रूपवत्त्वे वा आलोकानपेक्षचक्षुर्जन्यज्ञानविषयत्वासंभवो बाधक इति चेन्नैव मालोकविरोधिनस्तमसश्चालोकाभावव्यंजनीयत्वयान्त्रिरपेक्ष चक्षुर्विषयत्वोपपत्तेः

॥ नीलमिति हि लौकिकः प्रयोग इति तदेतदनुवादपूर्वकं दूषयति न चायमित्यादिना युक्तमित्यंतेन पटादौ शौक्ल्याभावे नीलस्य व्यवहार इवालोकाभावे यमौपचारक इति न युक्तमित्यन्वयः मुख्ये बाधकाभावादिति तत्र हेतुः यत्तु तत्रापि तेनोक्तं मुख्ये किं बाधकमिति चेदालोकनिरपेक्षस्य चक्षुषो रूपप्रत्ययजनकत्वानुपपत्तेः कारणाभावे कार्यं जायत इति दुर्घटमिति तदेतदर्थतः शंकते रूपत्व इत्यादिना परिहरति नैवमिति रूपवत्त्व पीतरूपवद्वैलक्षण्यमस्तीत्यन्यथासिद्धमित्यर्थः॥ ६ ॥

१
वि· सु·
टी· न·
३७

नश्चितरत्रालोकसापेक्षस्य चक्षुषः कथं तमन्तरेण तमसि सामर्थ्यमित्यत आह सामर्थ्यस्येति एतदेव
प्रतिवन्द्या समर्थयते न चेदित्यादिना यदि हि रूपवत्त्वमात्रेणालोकसापेक्षताप्राप्तिस्तदा रूपवद्भावत्वा
दालोकाभावेऽपि घटाद्यभाववदालोकं किमिति नापेक्षते चक्षुरित्यर्थः प्रसंगसाम्यमुक्त्वा परिहारं समीकरो
ति तद्विरोधितयेति न चाभिव्यञ्जकतयाप्यवश्यापेक्षणीयसत्त्वालोकाभावेनावर्तनेन तमःशब्दसार्थ।

सामर्थ्यस्य कार्यगम्यत्वान्न चेदालोकाभावस्यापि रूपवद्भावतया घटाभाववदा
लोकनिरपेक्षचक्षुर्विषयत्वं न स्यात्तद्विरोधितया तदनपेक्षत्वं तु प्रकृतेऽपि समानम
न्यत्राभिनिवेशात् न च निमीलितनयनस्यालोचनव्यापाराभावेऽपि तमस उपलंभाद।
चाक्षुषत्वं तत्रापि प

क्वात्कृतमधिकांधकारकल्पनयेति वाच्यं यतः कल्पत्वं प्रत्यक्षं पर्यनुयोगः
न प्रत्यक्षं प्रमाणयन्तं प्रति आभासतोद्भावनीयमिति चेदुद्भाव्यतां सैव तनुकेनेति विवेचनीयं न हि नीलं तमइ
ति प्रत्यक्षमस्ति बाधकं अनुमानमिति चेन्न सैव तावत् प्रत्यक्षविध्वस्तविषयस्य बाधस्याधिकं साधनत्वेन देव
मालोकनिरपेक्षचक्षुः प्रवृत्त्यनुपपत्तिः परिहृता यत्तु चक्षुर्व्यापाराभावे तदनुपलंभाद् चाक्षुषत्वमिति तदनू
द्य सिद्धिमाह न च निमीलितेति ॥

ता· म·
३७

न च रूपवत्त्वं तत्र ग्रहप्रसंगः तत्रालोकसापेक्षत्वात् न चेंद्रियाणामंतःप्रवृत्तिर्नेत्रस्य च वीर्येनायमलौकिकः स्तु
त्तः स्यादित्याह पिहितेति तत्र शब्दस्तु स्यादित्यप्रतीतेः श्रोत्रमपि गन्ताग्राहीति भावः द्रव्यस्योपलंभकमिति दिक् उक्त
अथ यदुक्तं नीलरूपमस्य न संभवति तत्पापकगंधवैधुर्यादिति तदनूद्याभाससमानयोगक्षेमतां दर्शय
न्बाधकमाह अनुष्णाशीतस्पर्शेत्यादिना अत्र हि गंधव्यावृत्त्या नीलरूपव्यावृत्तिरनुमित्सिता सा चायुक्ता

स्यापरत्वां न वेत्तित मम सम्बन्धस्य व्यापाराद्देवोपलब्धेः पिहितकर्णपुटस्य श्रोत्रव्यापारा
द्देवांतरशब्दोपलब्धिवत् यत्तु गंधाभावेन द्व्याप्तं नीलरूपमपि न स्यादिति तदपि नानु
ष्णाशीत स्पर्शस्य पृथिव्यां गंधादिव्याप्तस्य तदभावेपि मरुति प्रतीतेरेवांगीकारवदिहा
पि प्रतीतेरेव नीलरूपस्य गंधाभावेप्यभ्युपेयत्वात् अथ पाकजस्यैवानुष्णाशीतस्पर्शे
स्य गंधादिना व्याप्तिस्तर्हीहापि पाकजस्यैव कालिमगुणस्य गंधादिना व्याप्तिरिति तुल्यम

रूपोपलब्धिविरोधात् यदि चैवमपि नानुमन्यसे तर्हि गंधव्यावृत्त्यानुष्णाशीतस्पर्शमपि पवनाद्याव
र्तयेत्यर्थः अथ नानुष्णाशीतस्पर्शस्य गंधेन व्याप्तिरपि तु तद्विशेषस्य पाकजनाम्नस्तर्हीहापि न नीलरूप
मात्रस्य गंधेन व्याप्तिः किन्तु पाकजस्यैवेत्याह अथ पाकजस्यैवेति

१ वि.सु. टी.न. ३८

नन्वपाकजस्पर्शवदपाकजनीलरूपसिद्धावेतत्स्यात्तदेवतु कुतः प्रमाणादित्यत आह सद्भावग्राहिणइ ति ननु नभो रूपरहितं स्पर्शरहितत्वादाकाशवदित्यनुमानविरोधाद्रूपवत्त्वमेव नास्तीति कुतस्तद्विशे षनीलरूपवत्ताद्यत आह नचस्पर्शेति एतदपि पवनस्पर्शप्रतिबन्द्या समर्थयते अन्यथा रूपाभावेने ति वायुः स्पर्शरहितः रूपरहितत्वादाकाशवदित्यपि सुवचत्वात् प्रतीतेराभासतयानुमानोदयस्सुव

सद्भावग्राहिणः प्रत्यक्षस्योभयत्र समानत्वान्नच स्पर्शाभावात्तमसो रूपवत्त्वाभावः रूपग्राहकप्रत्यक्षविरोधे हेतोः कालात्ययापदिष्टतयातदभावानुमानानुदयात् अन्यथा रूपाभावेन पवनेपि स्पर्शाभावानुमानस्य दुर्निवारत्वादन्यत्र रूपवत्तामेव स्पर्शवत्त्वनियमान्नचास्पर्शवत्त्वादेव तमः परमाणूनां मनोवदनारंभकत्वमनुमातुं युक्तं तत्र वैयर्थ्यस्योपाधेः सद्भावात् ॥

त्वादित्यर्थः अस्यैव व्याप्तिमाह अन्यत्रेति यत्तु यत्स्पर्शरहितं न तद्द्रव्यारंभकं यथा मन इति व्याप्त्या स्पर्शरहितत्वपांशीकृत्य तमः परमाणूनां द्रव्यारंभकत्वाभ्युपगमव्याघात इति केरलीकारोक्तदूषणं तदनूद्य निराकरोति नचास्पर्शवत्त्वादेवेति मतसिद्धद्रव्यानारंभकत्वेन तदारब्धेकार्ये वैयर्थ्यमुपाधिः अतो नास्पर्शवत्त्वद्रव्यानारंभकत्वयो व्याप्तिरित्यर्थः ॥

राम. ३९

वैयर्थ्यमेव विवृणोति नहीति शरीरतया भोगसाधनताभावमाह पार्थिवादीति अयमर्थः पार्थिवा-
प्यतैजसवायवीयानि चतुर्विधानि हि शरीराणि प्रमाणवन्ति तत्र पार्थिवानि कानियानीमान्यनुभूयन्ते आ-
प्यादीनितु तत्तल्लोकगम्यानीति स्थितिः नपुनश्चातुर्विध्यानवरूढशरीरसद्भावे प्रमाणमस्तीति तदा-
रब्धस्य तनशरीरता अत्र च मृतशरीरवदभोगसाधनतया सिद्धिमानाश्रयत्वं हेतुः तत्र चहेतुरनन्तर्भूत

नहि शरीरतया विषयतयेन्द्रियतया वा मनस आरब्धद्रव्यस्य भोगसाधनतासंभाव-
नीया पार्थिवादिचतुर्विधशरीरानन्तर्भूतस्येन्द्रियानाश्रयस्य शरीरतया भोगसाधनता-
नुपपत्तेर्नच विषयतया रूपस्पर्शशून्यारब्धस्य तद्रहितत्वेन विषयत्वायोगात् शरीरे-
न्द्रियव्यतिरिक्तावयवी विषय इत्यङ्गीकारान्नापीन्द्रियतया

त्वं विषयताभावमाह नच विषयत्वेनेति रूपस्पर्शशून्यान्तःकरणारब्धमपि रूपस्पर्शशून्यमनस एव।
विषयत्वरहितं द्रव्येषु रूपवत्सु स्पर्शवत्सु वा बाह्येन्द्रियप्रवृत्तेरित्यर्थः नमः पवनयोर्व्यवच्छेदाय रू-
पस्पर्शग्रहणं उक्तंच मानमनोहरकारेण शरीरेन्द्रियव्यतिरिक्तोऽवयवी हि विषय इति नच रूपस्पर्श-
रहितस्यावयवित्वं कार्यत्वे सति रूपस्पर्शवत्त्वावयवित्वादिति भावः॥

१
वि॰सु॰
टी॰न॰
३९

मनआरभ्यसेंद्रियत्वं निषेधति मनसएवेंद्रियत्वादिति ननु मास्तु त्रिविधांतर्भाव अनंतर्भूतस्यैव किमिति भोगसाधनत्वं न स्याद्गुणादिवदित्यत आह नच शरीरेति कार्यद्रव्यस्येत्यत्रेहहदयंतत्रकालादीनां सर्वोत्पत्तिनिमित्ततया भोगसाधनतास्तीति तत्रबाधपरिहारायकार्यग्रहणं उक्तोपाधेरात्मादिषु। विसाध्यव्याप्तिमाह आत्मादीनामिति प्रकृतस्य तु पुनस्तमसो विषयतया भोगसाधनतयोपाधेः साधना।

मनसएवेन्द्रियत्वान्तरारम्भेन्द्रियान्तरस्वीकारवैयर्थ्यात् नचशरीरेन्द्रियविषयानन्तर्भूतस्य कार्यद्रव्यस्य भोगसाधनत्वं परैरङ्गीक्रियते आत्मादीनामपि पुनरस्पर्शवतां। शरीरेन्द्रियविषयारम्भासंभवात्समानमेवद्रव्यान्तरारम्भवैयर्थ्यं इह पुनस्तमसो महतो रूपवतः संभवति भोगसाधनत्वमिति नारम्भवैयर्थ्यम्॥

व्यापकत्वमाह इह पुनरिति उपलक्षणं चैतत् स्पर्शवत्त्वस्यापि स्खलस्पर्शोद्भूतच्छायाउष्णस्पर्शो वच्छायेति प्रतीतेः नचैवं परिमाणवादिवद्गुणेन विषयतयापि न भोगाय स्यादित्याह महत इति तत्प्रतीत्याचायमारंभवादः समर्थितः नास्माकमयं समर्थनीयः नह्यस्माकमनिर्वचनीयाविनस्य सामर्थ्यो विद्यास। त्रिविधद्व्यविवर्तवादिनामेतादृशानुपपत्त्याभासपांसुभिः परिभव

राम॰
३९

इत्याह किंचास्मन्मतइति भाट्टीस्थावायुरोक्तं मूलकारणमखंडमायावद्ब्रह्म महाविद्युदादीनि तद्गुण
कादिपरंपराविलंबो निरस्तः पुनरपि सिंहावलोकितेन आरम्भमेव निर्वाहयति तत्रयन्मनसोनारम्भक
त्वदृष्टांतितं तदभ्युपगम्यैवैयर्थ्यमुपाधिकृतत्वं स्तदेवतु नास्त्यस्मन्मतेनस्यापि सावयवत्वं नयापरिणामित्वे
नारम्भकत्वादित्याह नचमनसइति अन्यत्रानैकान्तिकतांचाह आत्मनश्चेति नमोदृश्यरूपवत्ता दृष्ट

किंचास्मन्मतेन तमस्तमोवयवैरारब्धं तस्यमूलकारणान्मेघमंडलान्महाविद्युदा
दिजन्मवज्जन्माभ्युपगमात् नचमनसोः नारम्भकत्वं तस्यापिसावयवद्रव्यत्वेनपा
रिणामित्वाभ्युपगमात् आत्मनश्चस्पर्शरहितस्यसर्वजगदुपादानकारणत्वाभ्युपग
माच्च चलनत्वाच्चालोकवत्तमोद्रव्यान्तरं अन्यानुविधाननियमान्नस्वाभाविकंचलनमस्य
॥घटरूपादिवदितिचेन्न

वदित्युक्तमिदानीं क्रियावत्त्वादपिद्रव्यत्वमाह चलनाच्चेति असिद्धिं
कृते अन्येति घटरूपादिवदिति घटगतगुणानां क्रियारहितानां यथा घटगमनानुविधानेपि नस्वाभावि
कंगमनमेवमित्यर्थः तत्किंतमः स्वाभाविकचलनहीनमन्यचलनानुविधायित्वाद्रूपादिवदित्यनुमिते
षितयाचसुवर्णेऽनैकान्तिकं तत्राह तु

१

वि॰सु॰ टी॰न॰ ५०

च्छिन्नद्रवत्वस्याकरजतैजसः सुवर्णस्य कठिनपार्थिवद्रव्येण नित्यमवष्टंभात् न च्चलनाद्यनुविधान
नियमोऽस्ति न चैतावता स्वाभाविकत्वहानिश्चलनस्येति परिहरति नद्रव्यस्यापीति आकरजं तैजो विशे
ष आकरेषु जायत इति उत्पत्त्या चतुर्विधं हि तैजो वैशेषिकैः परिगणितं भौमं दिव्यमौदर्यमाकरजं चेति न
नु न वयमनुमिमीमहे अपि न हि प्रमाणमेव नास्ति चलनवत्त्वे प्रतीति स्तत्त्वस्यानुविधानेनान्यथासिद्धेरिति

नद्रव्यस्यापि सुवर्णादिवद्द्रव्यान्तरानुविधानेऽपि स्वाभाविकचलनोपपत्तेस्तथाहि आ
करजस्य तैजसस्य सुवर्णादेः पार्थिवद्रव्योपष्टंभात्पतनादिप्रतिभासेऽपि न स्वाभाविकं चल
नमुपरुध्यते किं चेदमनुविधानम् किमालोकावस्थकातपत्राद्यनुविधानं किं वानि
यतैकमहीपाद्यनुविधानं नाद्यः निश्चलेऽप्यचलादौ तच्छायायाश्चलनोपलंभान्नापि
द्वितीयः वैपरीत्यादालोकागमने गच्छति छायेति प्रतीतेर्गमने चागच्छतीति प्रतीतेः

ब्रूमः इति तर्ह्यनुविधानमेव नास्त्यनिरूपणादित्याह किं चेदमन्यानुविधानमिति न किमपीत्यर्थः किं य
न्निमित्तं छायायाश्चलनं तस्य तदनुविधत्ते किं वा यन्निवर्त्यं तत् तदनुविधत्त इति विकल्पयति किमालोकेत्यादि
ना नाद्यः नियमाभावादित्याह निश्चलेऽपीति द्वितीयोऽप्ययुक्तः विपरीतभानादित्याह नापि द्वितीय इति आग
मन इति परं चेदः यदि हि तदनुविदध्यात् तदा तस्मिन्नागच्छति गच्छतीत्यागच्छत्यागच्छतीति प्रतीतिः स्यात्

तद्विरोधित्वाच्चेति यस्य हि यद्दृश्यसमसमयमेव विनाशस्तस्य कथं तदुदयानन्तरं स्थितिस्तत्क्रियानुकरणं वाऽस्थितस्यानुकरणादिति भावः तदनेन भावत्वविभावनेनोत्पत्तिसमर्थनेन गुणवत्तया द्रव्यत्वदीपनेन च गतेरनागन्तुकत्वनिरूपणेन चोपलम्भकोन्मीलनेन च गुणवत्त्वाद्यनुगुणप्रमाणगवेषणपरिश्रमपरिहूयमानसोदयनदैन्यमप्यपनोदितं मन्तव्यं पूर्वमालोकाभावप्रतिबन्धाद्रूपवत्त्वापि तमसालोकनिरपेक्षचक्षुषः ग्रहेतिरस्तौत्युक्तमिदानीं तत्रैवानुमानमप्याह किंच चक्षुरित्यादिना श्लोकेन प्रकाश न

तद्विरोधित्वाच्च तदनुविधानानुपपत्तेः किंच चक्षुःप्रकाशनाजन्यरूपवद्वीक्षणक्षमं रूपिग्राहीन्द्रियत्वेन यथैव स्पर्शनेन्द्रियं ६ चक्षुरालोकाजन्यरूपिद्रव्यसाक्षात्कारजनकं रूपिद्रव्यग्राहकेन्द्रियत्वात्त्वगिन्द्रियवन्न च रूपरहितेन्द्रियत्वमुपाधिः ॥ ६ ॥ श्री ॥ ॥ ॥

मालोकस्तेनाजन्यं यद्रूपवद्वीक्षणं रूपिद्रव्यसाक्षात्कारस्तत्क्षमं तत्समर्थमिति प्रतिज्ञा तत्र हेतुमाह रूपीति रूपवद्द्रव्यग्राहकत्वात् यथा त्वगिन्द्रियमित्यर्थः संगृहीतमनुमानं विवृणोति चक्षुरित्यादिना आलोकाजन्यसाक्षात्कारक्षममित्युक्ते आलोकाभाववत्याप्यर्थान्तरतातद्दर्थं द्रव्यग्रहणम् आलोकाजन्यद्रव्यसाक्षात्कारक्षममित्युक्तेऽर्थान्तरताभहनये कालादीनामपि तथात्वात्

यथाहमानमनोहरः विवक्षितासाधनं चेत्तदर्थे रूपिग्रहणं। घटादिप्रतीतिजनकत्वेन सिद्धसाधनतानि
रासार्थमालोकाजन्येत्युक्तं। अनुमानादेर्व्यावृत्त्यर्थं हेताविन्द्रियग्रहणं। इन्द्रियत्वादित्युक्ते घ्राणानैकान्तिकता
तस्य द्रव्यग्राहकत्वाभावात् तदर्थं द्रव्यग्राहकेन्द्रियत्वादित्युक्तं। तावत्युक्ते प्रतिवादिनो मनस्यनैकान्तिकं।
तानस्यात्मद्रव्यग्राहकत्वेपि रूपिद्रव्ये स्वातन्त्र्येणाग्राहकत्वाभावात्तदर्थं रूपीत्युक्तं। साध्यहेत्वोर्द्रव्यपदं
स्पष्टार्थमित्येके। एवं च सति मानमनोहरसंभ्रमोप्यनवसरनिरस्तः त्वगिन्द्रियस्योक्तसाध्यवत्तायां रूपर

यद्रूपवदिन्द्रियं तदालोकाजन्यरूपिसाक्षात्कारजनकं न भवति घ्राणवदि
ति व्यतिरेकव्याप्तौ रूपवद्ग्राहकत्वस्यैवोपाधित्वात्तन्सिद्धमेतत्तमोद्रव्यान्तरमिति ८॥

हितेन्द्रियत्वेनोपाधिस्तस्य व्यतिरेकव्याप्त्यभावेन साध्याव्यापकत्वादित्याह यद्रूपवदित्यादिना व्यतिरेकासि
द्धौ वा हृष्टादौ चेन्द्रियसन्निकर्षे चोलूकादिदृष्टौ च साध्याव्याप्तिनिवृत्त्यै मनुष्येन्द्रियत्वविशेषितोक्तसाध्यस्योपा
धेर्विधानमपि निरस्तमन्तव्यं एवं च सति यदनुमानं तमः परमित्यादि तदुक्तप्रमाणबलाद्भावरूपत्वेन निर्णी
तेकालातीतं न विपक्षे बाधकाभावात् शंकितोपाधितां च न चालोकनिरपेक्षचक्षुर्ग्राह्यत्वहानिस्तस्यालोकविरो

धित्वात्तदभाववत्त्वं गम्यते नाप्युपपद्यते तमःपदस्य नानार्थवाचकत्वसिद्धावप्यस्य चरितार्थत्वेन तमसोऽभाव
त्वासिद्धेश्चालोकसंसर्गाभावस्तमःपदवाच्यो न भवति अभावत्वाद्घटाभाववदित्यादिना सत्प्रतिपक्षं चाभाव
प्रमाणागम्याभाववादिनः साधनवैकल्यं च दृष्टान्तस्येत्यादिदोषादुपेक्ष्यं मनस्त्वस्यैव दृष्टान्ते विगवहतिजा
न्यत्वेमयत्वाद्घटवदिति तमसो द्रव्यान्तरत्वसिद्धिरित्यप्येके साक्षिवेद्यस्वराधान्ते ध्वान्ते तच्चाप्यसुखं पुनराचा।

इत्थमालोकवदेवभावरूपाज्ञानतमोविरोधिनश्चात्मनो जगदवभासकस्य ज्योतिः
शब्दवाच्यत्वात्तस्य त्वसंगस्य दृश्यसंगानिरूपणात् दृश्यप्रपंचस्य स्वतः परतश्चासि
द्धेर्दृगात्मन्यध्यस्ततयैव सिद्धिरिति सिद्धं मिथ्यात्वम् ६ ॥ ५ ॥ ८ ॥ ७ ॥ ॥

ध्येयोऽसाधयद्युक्तिवैभवं स्वं विभावय त्वाद्यर्थमुपसंहरन्प्रयोजनमाह इत्थमित्यादिना अभावविलक्षणा
विद्यासिद्धिः फलमित्यर्थः ज्योतिःशब्दवाच्यत्वादुपपन्ने श्रुतिरत्रायं पुरुष इत्यादिकेति शेषः वक्ष्यमाणव
दार्थं प्रस्तावयति दृश्यप्रपंचस्येत्यादिना कार्यं वाचारंभणं भेदलोढं सत्यं तत्त्वं त्वेकमेवाद्वितीयमित्य
द्वैतश्रौत एवाह युक्तौ युक्त्याभासोद्भूतविभ्रान्तिभिन्नैः॥ दृगात्मन्यध्यस्ततया दृश्यप्रपंचस्य मिथ्यात्वमित्यु

क्तं तदिदमसहमानः प्रपंचसत्यत्ववादी मिथ्यात्वलक्षणमाक्षिपति किंपुनरिति आक्षेपमेव संभवत्सर्वप्रकारनिरसनेन निर्वाहयितुं संभवत्प्रकारान्विकल्पयति प्रमाणेत्यादिना प्रमाणाविषयत्वाभावादप्रमाणाविषयत्वमन्यद्वा प्रमाणमपि द्वेधा यथार्थमयथार्थं च यथास्मृतिर्विपर्ये पर्यवसितेन प्रथमद्वितीयतृतीयक

किंपुनरिदं मिथ्यात्वं प्रमाणागम्यत्वं वा १ अप्रमाणज्ञानगम्यत्वं वा २ अयथार्थज्ञानगम्यत्वं वा ३ सद्विलक्षणत्वं वा ४ सदसद्विलक्षणत्वं वा ५ अविद्यातत्कार्ययोरन्यतरत्वं वा ६ ज्ञाननिवर्त्यत्वं वा ७ प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं वा ८ बाध्यत्वं वा ९ स्वात्यंताभावसमानाधिकरणतया प्रतीयमानत्वं वा १० नाद्यः ब्रह्मणोऽपि मिथ्यात्वप्रसंगात्तस्य स्वप्रकाशत्वेन त्वया सर्वप्रमाणागोचरतांगीकारात् नापि द्वितीयः ६॥ ६ ७॥ ६॥ ६॥ ६॥ ७॥

ल्यसंकरकलंकाभावः अविद्यातत्कार्ययोरिति अव्याप्तिनिवृत्त्यै अन्यतरग्रहणं बाधकज्ञानविषयत्वादेस्तन्निवर्त्यपूर्वज्ञानादेश्च प्रतिपन्नोपाधौ बाधाभावान्न सप्तमाष्टमनवमसंकरः प्रतिपन्नोपाधिः प्रतीतमधिष्ठानं स्वात्यंतेति पूर्वं स्वाधिष्ठाननिष्ठाभावमात्रप्रतियोगित्वं विवक्षितमिह तु स्वात्यंताभावस्य स्वस्य चैकत्रवर्तमानतया प्र

नीतिरितिना धूमसद्भ्रामसंकरः शंकनीयः गोचरताचात्रवेद्यतानपुनर्विषयत्वमेवतद्विवक्षायांचनैयायि
कादेरसिद्धिः सर्वस्यापिपक्षाकथंचनप्रमाणाविषयत्वात् सद्धादिभिरपीति येहिप्रपंचसत्यत्ववादिनस्तै
रपिसत्यस्यैवशुक्तिकादेरधिष्ठानतयाऽप्रमाणज्ञानगम्यत्वस्वीकारात्सत्यत्वेप्युपपद्यमानमर्थांतरमेवे
त्यर्थः तदेवविवृणोति तस्यतस्येति अयमर्थः चेदं शुक्तिकादावंगीकृतमितिसर्वस्यैवप्रपंचस्यैवंविधत्वमं

सद्धादिभिरपितस्यांगीकृतत्वेनार्थांतरत्वात् तस्यतस्यशुक्तिशकलादेस्तेनतेनरजताद्या
कारेणप्रतीयमानतयाऽप्रमाणज्ञानविषयत्वात्सर्वस्यप्रपंचस्यक्षणिकमिदंब्रह्मकार्य्यं।
मिदमनिर्वचनीयमिदमितिचमिथ्याज्ञानगोचरतायाःपरैरभ्युपगमात् स्वज्ञेतरप्रमाणात
यानद्विषयस्यतथात्वांगीकाराच्चनतृतीयःउक्तदोषानुषक्तेरेवनचतुर्थःसद्विलक्षणस्यापि
॥शशविषाण॥

गीकृतमितिस्फुटतरमर्थांतरमित्यर्थः अर्थांतरोद्धारणांतरमाह स्वज्ञेतरेति उक्तदोषेतितत्तद्रारोपाधिष्ठानत
यासर्वस्यायथार्थज्ञानगम्यत्वांगीकारादित्यर्थः सद्विलक्षणस्येति नचशशविषाणस्यापिमिथ्यात्वादति
व्याप्तिरितिवचनीयंमिथ्याभूतप्रपंचस्यापरोक्षज्ञानयोग्यत्वम ८॥ ७॥ ६॥ ६॥ २॥ ८॥

र्थक्रियासामर्थ्यं च स्वीकुर्वद्भिः शशविषाणवैषम्येष्टेरमिथ्यात्वं स्वीकृतमेव शशविषाणस्य न चैवं सत्यद्वैत
विरोधः सद्द्वैताभ्युपगमाद्युपपत्तेर्नातिव्याप्तिरनतिलंघनीयेति भावः एकतरेति सत्त्वनिषेधेऽसत्त्व
नान्तरीयकमसत्त्वनिषेधे च सत्त्वं नान्तरीयकं परस्परविरोधे न हि प्रकारान्तरस्थितिरिति न्यायात् अतोऽसंभवी
ऽलक्षणमित्यर्थः। नचेष्ट इति अविद्यातत्कार्ययोरित्यत्र केयमविद्या विवक्षिता किमनिर्वचनीयत्वेन साध्यमानाविद्या

द्वैतमिथ्यात्वात् न पंचमः एकतरनिषेधस्यान्यतरविधिनान्तरीयकत्वान्नासंभवो लक्षणस्य अ
निर्वचनीयाविद्याया अप्रसिद्धत्वात् अग्रहणमिथ्याज्ञानलक्षणाविद्यायास्तत्कार्यस्य प्रवृत्ति
संस्कारादेः सत्यत्वात् न सप्तमः ज्ञाननिवर्त्यस्यापि ज्ञानसुखादेः सत्त्वात् सर्वस्य सत्यत्वेऽपि परैरी
रज्ञाननिवर्त्यत्वांगीकारात्

किं वाऽग्रहणमिथ्याज्ञानात्मिका प्रथमेऽसिद्धिर्लक्षणस्येत्याह अनिर्वचनीयेति उत्तरस्मिन्नर्थान्तरतेत्याह अग्र
हणेति ज्ञाननिवर्त्यस्येति आत्मविशेषगुणानामपर्यायमुत्पत्तिमनिच्छतामुत्तरेणोत्तरेण पूर्वपूर्वनिवृत्तिस्वी
कारेष्टेरर्थान्तरत्वमित्यर्थः न केवलं सुखादेरेव सर्वस्यैव संहरणीयस्य प्रपञ्चस्येश्वरज्ञानेनानिमित्तभूतेन
निवृत्तिस्वीकाराद्भवतितरामर्थान्तरत्वमित्याह सर्वस्येति परिणामवादाभिप्रायेण वा ॥ ६ ॥ ७ ॥ ८ ॥

नाष्टमइति प्रतिपन्नोपाधावित्यत्र प्रतिपत्तिशब्दस्य कोर्थः किं प्रमाणज्ञानमुत भ्रांतिज्ञानमाहोसाधारण माद्यंप्रत्याह प्रमाणेनेति द्वितीयंप्रत्याह भ्रांतौनेति न केवलं संभवः स्वीकृतं चान्यथाख्यातिभिरित्याह अ न्यथाख्यातौ नेति एतेन साधारणपक्षोपि निरस्तः किमिदं बाध्यत्वमभिमतं किं बाधकज्ञानविषयत्वमुतेन।

नाष्टमः प्रमाणेन यदुपाधौ यः प्रतिपन्नस्तत्र तस्य निषेधासंभवादन्यथाप्रसंगात् भ्रां। ति प्रतिपन्नोपाधौ निषेधप्रतियोगित्वस्य—सत्वेपि संभवेनार्थान्तरत्वादन्यथाख्यातिवा दिभिरपि क्वचित्निषिद्धस्यान्यत्र सत्तास्वीकारात् न नवमः बाधकज्ञानविषयत्वं तन्निव र्त्यत्वं वा बाध्यत्वमित्यभ्युपगमेप्यर्थान्तरतायास्तादवस्थ्यात् शुक्त्यादेरपि बाधकज्ञा नविषयत्वांगीकारात् बाधकज्ञानेन पूर्वज्ञाननिवृत्यभ्युपगमाच्च न दशमः संयोगवि भागशब्दात्मविशेषगुणानां प्रदेशवृत्तीनां

न्निवर्त्यत्वमुभयथाप्यर्थान्तरतेत्यभिप्रेत्याह न नवमइति प्रथमोदाहरणमाह शुक्त्यादेरपीति द्वितीयमाह बाधकज्ञानेनेति संयोगविभागेति अयमर्थः संयोगविभागयोरव्याप्यवृत्तित्वं स्वीकुर्वद्भिस्तदत्यन्ताभावस मानाधिकरणत्वमंगीक्रियते न च तत्रापि घटावयवानामयसंयोगविभागयो ६ ॥ ७ ॥ ७ ॥ ६ ॥

भिन्नाधिकरणतानाशक्योपपादनातथासतितद्द्रव्यद्वयसंयोगस्यापितद्द्रव्यद्वयवृत्तित्वापरं परस्यापरमाणावेव
परिनिष्ठितेनाध्वस्य प्रथमवर्तिरेखसंयोगायोगीतितदनिष्ठताप्यष्ठमतिना यत्रैव संयोगस्तत्रैव तदत्यं
ताभावोऽप्यभ्युपेयः न च प्रमाणविनिवेशितयोर्विरोधशंकावकाशः अतिप्रसंगात् शब्दस्य चाकाशे वर्त्त
मानस्य प्रदेशभेदमादायाप्येकस्मिन्नेव नभसि भावाभावौ समानाधिकृतौ स्वीकृतौ एवं सर्वगतात्मवा
दिनामात्मविशेषगुणानां तत्राप्यतिपीडने साक्षात्स्वैकाधिकरणप्रदेशवृत्तीनामिति तु तदनुमति

स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानानामपि परैः सत्यत्वांगीकारादर्थान्तरता
यादुरतिक्रमत्वात् तदेवं न प्रपंचमिथ्यात्वनिरुक्तिर्नापि तत्र प्रमाणं तथाहि न तावत्प्रत्य
क्षं तत्र क्रमते

मनुसंधानेनोक्तमत्र ब्रह्मण्यनतिव्याप्तेर्द्वितीयस्योन्यानं अर्थान्तरतानिवृत्त्यै तृतीयचतुर्थयोरसम्भ
तिव्याप्तिनिवृत्त्यै पंचमः असंभवनिवृत्त्यै षष्ठः असंभवातिव्याप्तिनिवृत्त्यै सप्तमः अष्टमोऽप्यर्थान्तरनि
वृत्त्यर्थमेव असंभवार्थान्तरयोर्निवृत्त्यै नवमः दशमोऽप्यर्थान्तरनिवृत्त्यर्थमेवेति नापि तत्र प्रमाणमि
ति यद्यपि लक्षणमपि प्रमाणविशेष एव तथापि ॥ ॥ ॥ ॥ ॥ ॥ ॥

ल्तत्स्वरूपसिद्धिपरमपि नित्यतरव्यावृत्तिं व्यवहारं चोपहरति प्रमाणं तु लक्षितमेव स्वरूपं साधयतीति सर्वत्रा
नयोः पृथगाक्षेपसमर्थने द्रष्टव्ये. प्रत्यक्षेन प्रमाणेनाभिप्रयुक्तं तत्र हेतुमाह उक्तप्रकाराणामिति अयमर्थः भवा
दुक्तप्रकाराणामन्यतमस्य मिथ्यात्वं तस्य तु न कस्यचिदप्यत्र प्रत्यक्षसिद्धिर्यदि हि प्रत्यक्षतः सिद्धोऽन्यकोऽपि विप्रति
पद्येत न हि प्रत्यक्षसिद्धे घटादौ विवदन्ते विवदन्ते चाद्यापि वादिनो मिथ्यात्व इत्यर्थः नतु मा भूत्प्रत्यक्षमनु।

उक्तप्रकाराणामन्यतमस्यापि मिथ्यात्वस्य प्रत्यक्षसिद्धत्वे तत्र वादिनां विवादाभावप्रसं।
गात् न च विवादपदं मिथ्यादृश्यत्वाच्छुक्तिरूप्यवदित्यनुमानं प्रमाणागम्यत्वस्य सदसद्विल
क्षणस्याविद्यातत्कार्ययोरन्यतरत्वस्य वा साधने ऽप्रसिद्धविशेषणत्वाद्यथार्थज्ञानागम्य।
त्वस्य गुरुमतेऽप्रसिद्धत्वात्

मानं भवत्वित्यत आह न च विवादपदमिति दशधा हि मिथ्यात्वसंभवः तत्र प्रमाणागम्यत्वादिरूपसाधने ऽप्रसि
द्धविशेषणता अविद्येत्यप्यनिर्वचनीयाविवक्षिता इतरयोस्तस्या असंप्रतिपन्नत्वात् नन्वयथार्थज्ञानगम्यत्वा।
त्मकं साध्यं तथा च नाप्रसिद्धविशेषणतात आह अयथार्थेति यद्यप्यस्माकमिदं प्रसिद्धं तथाप्यख्यातिवादिना
मप्रसिद्धविशेषणता सोऽपि हि तावदेवं मिथ्यात्वे विप्रतिपन्न इत्यर्थः ८ ॥ ९ ॥ ॥ ९ ॥ ९ ॥

अथानुमेयप्रतीत्यांप्रतीतु को दोष इत्यत आह इतरेषु चेति पक्षत्रयातिरिक्तेष्वित्यर्थः तथा च पक्ष्या चैतत्त्रयातन्न
क्षणदूषणसमयेऽर्थान्तरं दर्शयन्तो पपादितमुपलक्षणं चैतत्तेन पक्षासम्भवसन्देहलक्षणपादि प्रयुक्तदू
षणमूहनीयं तदेवं साध्यानिरूपणमुक्त्वा हेतोरप्यनिरुक्तिमाह किं चेति अतीन्द्रियेष्विति हन्तोपपा
दितमिदं स्वप्रकाशलक्षणसमयेऽस्मद्दृष्टादेरवद्यताभावे दृष्टद्भिरस्माभिस्तेन भागासिद्धो हेतुः शुक्तिरू
प्यादिव्यतिरिक्तमखिलं जडपक्षः अतीतादेरपि पक्षतयातत्राऽवृत्तेरित्यर्थः । नन्वविवक्षितविशेषतृती

इतरेषु चासिद्धसाधनत्वात्किं च दृश्यत्वं नाम फलव्याप्यत्वं वा वृत्तिव्याप्यत्वं वा साधारणं
वानाद्यः अतीन्द्रियेषु तदभावेन भागासिद्धत्वात् न द्वितीयः ब्रह्मणोऽपि वेदान्तिभिर्वृत्तिव्या
प्यत्वाभ्युपगमात् नैकान्तिकत्वान्न तृतीयः ब्रह्मण्यनैकान्तिकत्वादेवमेतेन जडत्वाद्यंतव
त्त्वपरिच्छिन्नत्वादयो हेतवो निरस्ताः तत्रापि साध्यानिरुक्तेः ६ ॥ ७ ॥ ॥ ॥ ६ ॥

येपक्षेकाक्षतिरित्यत आह न तृतीय इति ब्रह्मणीति अविवक्षितविशेषसाधारणस्यपं कंचन विशेषमा
दायापि पर्यवसानादित्यर्थः ननु विवादपदं मिथ्या जडत्वाद्यंतवत्त्वात्परिच्छिन्नत्वाद्वा शुक्तिरूप्यवदि
ति प्रयोगो मिथ्यात्वे प्रमाणमित्यत आह एतेनेति अतिदिश्यमानमेव विशदयति तत्रापीति ६ ॥ ६ ॥ ॥

अनुमानान्तरं शंकते अयं पट इति एतत्तन्तव एतत्पटसमवायिकारणं तन्तवस्तन्निष्ठात्यन्ताभावप्रतियोगीति योजना अभावप्रतियोगीत्युक्तौ कार्यकारणाभेदवादिनां तार्किकाणामेतत्तन्तुष्वेतत्पटान्योन्याभावप्रागभावप्रध्वंसाभावस्वीकारेणार्थान्तरतानदर्थमत्यन्ताभावप्रतियोगीत्युक्तं नात्रत्युक्ते यत्किंचित्तन्निष्ठात्यन्ताभावप्रतियोगित्वेन सिद्धसाधनतास्यात्तत्परिहारार्थं तंतुनिष्ठेत्युक्तम् एतत्पटसेतत्पटाजनकत्वेनाभि

अथायं पट एतत्तंतुनिष्ठात्यन्ताभावप्रतियोगी दृश्यत्वाद्घटवदितिचेत्तत्तन्तुनिष्ठात्यन्ताभावे दृश्यत्वहेतौ चानैकान्तिकत्वात्तयोर्दृश्यत्वेपितंतुनिष्ठात्यन्ताभावाप्रतियो।
गित्वात् प्रतियोगित्वेवा

मततंतुनिष्ठात्यन्ताभावप्रतियोगित्वेन पुनरपि सिद्धसाधनतास्यात्तत्परिहारार्थमेतदितितत्तु विशेषणम् एतत्तंतु।
शब्देन च वादिनोजनकत्वेनाभिमततन्तव उच्यन्ते। घटान्तरापेक्षया सिद्धसाधनतापरिहारायायमिति पटविशेषणम्
घटस्यैतत्तंतुनिष्ठात्यन्ताभावः प्रसिद्ध इति साध्यप्रसिद्धिस्तदेतद्दूषयति नेति एवं ह्यनुमित्वतापद्य दृश्यत्वतत्तदेत
त्तंतुनिष्ठात्यन्ताभावाप्रतियोगीति व्याप्तिरेतव्या न च ६॥ ६॥ ७॥ ७॥ ॥ ॥

चि·सु·
टी·न·
४६

यमस्ति एतत्तन्तुषु पोयमस्य पटस्यात्यन्ताभावः साध्यत्वेन तस्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वमस्ति तत्स्वीकारे च तत्साध्यस्य वा भावादनुमानं व्याहतं स्याद्दृश्यत्वं च तत्र दृश्यत्वमस्तीत्यनैकान्तः इदं च वादिनं प्रत्येव ताद्विधविपक्षस्य सत्यत्ववादिनोऽसिद्धेस्तथा दृश्यत्वहेतावप्युक्तसाध्यं नास्त्येतत्तन्तुषु दृश्यत्वे स्यात्यन्ताभावप्रतियोगित्वेन तन्तूनामदृश्यतया साध्यासिद्धिप्रसंगाद्दृश्यं च दृश्यत्वमस्तीत्यनैकान्तः इदं तूभयानुमतत्वेन।

तन्निष्ठात्यन्ताभावाभावात्पटस्य तत्प्रतियोगित्वलक्षणसाध्यासिद्धिस्तन्तूनामदृश्यता च स्यात् किंच प्रपंचस्य प्रामाणिकत्वे मिथ्यात्वानुमानानां धर्मिग्राहकप्रमाणेन बाधः अप्रामाणिकत्वे चाश्रयासिद्धिः

दाह तन्निष्ठेत्यादिना अदृश्यता च स्यादित्यन्तेन मिथ्यात्वसाधकानुमानजातस्य च साधारणदूषणमाह किंचेत्यादिना बाध इति प्रमाणगम्यत्वस्यैव सत्त्वादिति भावः ननु न वयं प्रमितमप्रमितं वाश्रयमाश्रयामहे नापि शशविषाणायमानमपि तु प्रतीतिमात्रसिद्धं प्रतीतिमात्रसिद्धस्याश्रयत्वोपपत्तेरित

एम
४६

इतिरिक्तप्रमितत्वस्याप्याश्रयकोटिनिवेशने न किंचन मानं पश्याम इत्यत आह प्रतीतिमात्रेति अयमर्थः न प्रतीतिमात्रसिद्धस्य साधनदूषणे तथा सति — सर्वदर्शनाना — मपि साधनबाधनप्रसंगात् तत्त्वोपप्लवप्रसंगात् उक्तानामतादृशानि साधनानि दूषणानि वा न संति यानि प्रतीतिपथमपि नावतरेयुः शशे नापि तत्प्रतीतीनां शक्यजननत्वादिति आश्रयोक्तं विकल्पं साध्यादिष्वतिदिशति एवमिति तथाहि तेषां

प्रतीतिमात्रसिद्धस्याश्रयत्वे च दूषणभूषणादेरपि प्रतीतिमात्रसिद्धस्य सर्वत्र संभवात्सर्ववादविधिनिषेधप्रसंगः एवं साध्यहेतुदृष्टांतानामपि प्रामाणिकत्वे दृश्यत्वहेतोस्तत्रानैकांतिकता अप्रामाणिकत्वे वा साध्यसाधनाद्यभावादनुमानासिद्धिः नाप्यागमः प्रपंचमि।
थ्यात्वेमाने

प्रामाणिकत्वे सत्यत्वेन विपक्षतया तत्र वर्तमानो हेतुरनैकांतिकः स्यात् अप्रामाणिकत्वे च यथायथमप्रसिद्धविशेषणतास्वरूपासिद्ध्याश्रयहीनताः प्रसज्जेरन्निति भावः ननु माभूदनुमानान्मिथ्यात्वमागमादागमिष्यतीत्यत आह नाप्यागम इति न च वक्त

त्वं किमेकमेवाद्वितीयमित्यद्वितीयशब्दात् ब्रह्मव्यतिरिक्तस्य मिथ्यात्वसिद्धिरिति मन्यसे किं वा सत्यं ज्ञान
मनन्तमित्यनेन श्रुत्या किं वा नेह नानास्तीति ब्रह्मणि नानात्वनिषेधात् आहोस्विदिन्द्रो मायाभिः पुरुरूप
ईयत इति मायाभिर्बहुभवनाभिधानात् उत मृत्योः स मृत्युमिति द्वैतदर्शनेन निंदयानत्र नाद्यद्वितीयाविसा
ह न तावदित्यादिना नयुक्तं वक्तुमित्युक्तं तत्र हेतुमाह अद्वितीयशब्दस्येति यथा खल्वस्मिन् ग्रामे अयमे

तथाहि न तावदेकमेवाद्वितीयं सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र ब्रह्मणो द्वितीयत्वानन्तत्वप्र
तिपादनात् द्वितीयवस्तुनोऽभावं प्रतीयत इति युक्तं वक्तुमद्वितीयशब्दस्य तत्सजातीय
वस्त्वन्तरनिषेधपरत्वादस्मिन्ग्रामेऽयमेक एवाद्वितीयः पुरुष इतिवत्

क एवाद्वितीयः पुरुष इत्यत्र शौर्योदार्यातिशयादिमान् सजातीयः पुरुषः प्रतिषिध्यते न तु तद्व्यतिरिक्तं समस्तं
वस्तु तत्कस्य हेतोस्तस्य तस्य वस्तुनः सत्त्वप्रमाणोपनीततयाऽशक्यनिषेधत्वात्तद्वदिहापि समस्तमानोपनी
तं वस्तु निषेद्धुमशक्नुवानोऽद्वैतश्रुतिस्तत्सजातीये ब्रह्मान्तरनिषेध तात्पर्य्यः भवत्यद्वितीयश्रुतेरियं गतिः ॥ ६॥

अनंतशब्दस्य को निवारकइत्यत आह अनंतपदस्य चेत्यादि वस्तुपरिच्छेदाभावस्य परस्पराभावाधिकरणत्वरहितस्वरूपस्य लोकेऽप्रसिद्धत्वात्तत्रागृहीतसंगतिकत्वात्कालपरिच्छेदाभावप्रकाशादेः प्रसिद्धमभिधत्त इति भावः प्रागुत्तरकालीनौ प्रागभावप्रध्वंसौ अनेकान्योन्याभावपक्षे एकानधिकरणस्यापि तत्सिद्धेर्नाद्वैतसिद्धिरिति तदधिकरणत्वानधिकरणे युक्तं तृतीयं पक्षं निषेधति नेह नानास्तीति इदं हि वाक्यमिह परावमृष्टे प्रस्तुते कारणे ब्रह्मणि नानात्वं निषेधति तथा च न। नानाब्रह्म किं त्वेकमिति स्यात् ब्रह्मव्यतिरिक्तस्य तु किमायातमित्यर्थः चतुर्थं निषेधति इंद्रो मायाभिरिति अत्र हि माया।

अनंतपदस्य च प्रागुत्तरकालीनात्यंताभावपरत्वात्तत्रैव तस्य व्युत्पत्तेरन्योन्याभावाधिकरणत्वानधिकरणत्वस्याप्रसिद्धत्वेन तत्र व्युत्पत्त्ययोगान्नेह नानास्ति किंचनेत्यादेश्चागमस्य कारणे ब्रह्मणि नानात्वनिषेधपरत्वादिंद्रो मायाभिरित्यादेश्च तत्तदिंद्रियद्वारकबुद्धिवृत्त्युपाधिभिर्मायाशब्दाभिधेयैः स्वशक्तिविशेषैर्वा भेदेन परमेश्वरप्रतिपत्तिविधिपरत्वेन प्रपंचनिषेधे तात्पर्याभावात्॥ शब्दबुद्धिवृत्तयोऽभिधीयंते चेनश्चितेऽक्रतुर्मायेति चित्ताभिधायकत्वावगमान्मायाशब्दस्य तत्र च चित्तस्यैकत्वात्कथं मायाभिरिति बहुवचनोपपत्तिरित्यत उक्तं तत्तदिंद्रियेति स्वत एकस्यैव सतश्चित्तस्यानेकेन्द्रियोपाधिक वृत्तिभेदादिदं बहुवचनं अतस्ताभिरुपाधिभिः परमेश्वरो बहुधोपास्यत इत्यर्थः अथवा याः परमेश्वरस्येच्छाज्ञानक्रियाशक्तयो मायाशब्दाभिधेयास्तासामपि श्रुत्यादिषु मायाशब्दाभिधानदर्शनात्ताभिश्च परमेश्वरः प्रत्युपासकं बहुरूप आविर्भवति अवतारभेदैर्वा बहुधा व्यवह्रियत इत्यर्थः

ननु मृत्योः स मृत्युमाप्नोतीति संसारात्संसारं प्रतिपद्यत इति भेददर्शनात्संसाराविमोककथनात्तत्त्वज्ञानत्वमवगम्यते अ-
त एव तद्विषयस्य भेदस्यानृतत्वमिति भेदस्य मिथ्यात्वमित्थमेव श्रुतिर्गमयतीति पंचमपक्षं निरस्यति मृत्योरिति नास्याः
श्रुतेरत्र तात्पर्यमपुरुषार्थत्वात् अपितु भेदध्यानविधौ तत्स्तुत्यर्थं च भेददर्शननिंदा यथोदिते जुहोतीति विहितोदि-
तहोमस्तुतयेऽनुदितहोमनिंदा प्रातः प्रातरनृतं ते वदंतीति । अनुदितहोमस्य विहितस्य स्तुत्यर्थमुदितहोमस्य निंद्यप-
स्याऽतिथ्ये प्रवृत्तायेति ततोऽन्यपरा तस्मात् प्रत्यक्षविरुद्धोऽयमर्थो न लभ्यत इत्यर्थः ननु प्रत्यक्षागमयोरुभयोः प्रमाण-

मृत्योः स मृत्युमाप्नोतीत्येवंविधायाश्च श्रुतेर्भेददर्शननिंदयाऽभेदप्रतिपत्तिविधिपरत्वेन प्रपंचनिषे-
धे तात्पर्याभावात् आगमस्य च स्वरूपावगतौ पदपदार्थविभागप्रतिपत्तौ च प्रत्यक्षादिसाका-
ङ्क्षत्वात्प्रत्यक्षस्य चागमानपेक्षत्वात् ॥

त्वाविशेषेऽप्येकेनैवैषम्योरेकमवधार्यते यत्प्रत्यक्षादिविरोधे श्रुतिरे-
वानुरोधेन व्याख्येया न विपरीतमित्यत आह आगमस्य चेति अथवाऽऽगमस्वरूपपर्यालोचनया नात्र तात्पर्यमि-
त्युक्तं इदानीं भवतु वाऽऽगमस्तत्परस्तथापि प्रत्यक्षादिभिर्विरोधे वाध्यत एवेत्यभिप्रेत्यागमस्य दौर्बल्ये कारणान्याह आगम-
स्य चेति एषां हेतूनां तद्विरोधे तेषामेव बाधादिस्तु तत्र प्रतिज्ञायां संबंधः यथा हि शब्दः स्वरूपग्रहणे संगतिग्रहणे वाऽवा-
धितं प्रत्यक्षादिकमपेक्षते तेन तथा प्रत्यक्षादिस्वरूपादिप्रतिपत्तौ शब्दप्रमाणमपेक्षते तेन सापेक्षनिरपेक्षयोर्विरोधे सापेक्षागम-

किंच परस्परविगीततया ऽतिकलहे नैव तावदुपहता आगमाः किमुत वक्तव्यमविगीतानानुपहत प्रत्यक्षादिविरोध इत्याह न हिंस्यादिमा-
दिना ब्रह्मणे ब्राह्मणमालभेत इति विशसनपराण्यस्मिन् गृह्यमाणे षोडशशस्त्राणि शस्यन्ते स गृहविशेषः षोडशी यथाह्येकस्यैव हिंसाऽ-
हिंसे ग्रहस्यैकस्मिन्नेव ग्रहणाग्रहणे होमस्यैकस्यैकस्मिन्नेव प्रयोगेऽनुदितोदितकालसंबंध इति परस्परविरुद्धानधिगमयन्त्यागो।
मो नान्यथा प्रत्यक्षादीत्याह प्रत्यक्षादेश्चेति सावकाशनिरवकाशयोर्निरवकाशं बलवदिति न्यायः सावकाशाश्चागमा इत्याह आगमस्य
चोपचरितार्थत्वेनेति यथा ह्यागमस्य मुख्यलक्षणागुणात्मकानेकवृत्तिमत्तया अन्यतमानुपपत्तावन्यतमाश्रयापि प्रमाणतैव निर्वाहो न
तथा प्रत्यक्षादेरेकवृत्तेरस्ति शब्दधर्मत्वात्तासामित्यर्थः संजातासंजातविरोधिनोः संजातविरोधि दुर्बलं संजातविरोधिनश्चागमाः अप्र-
मोपजातपरभेदावबोधकाश्च प्रत्यक्षादीननुवर्तमाना इत्याह पूर्वसिद्धतयेति किंचाभ्युपगम्य विरोधमिदं प्राबल्यमभिहितं वस्तुतस्तु

न हिंस्यात्सर्वा भूतानि अग्नीषोमीयं पशुमालभेत ब्राह्मणो न हंतव्यः ब्रह्मणे ब्राह्मणमालभेत अतिरात्रे षोडशिनं गृह्णाति नाति-
रात्रे षोडशिनं गृह्णाति उदिते जुहोति अनुदिते जुहोतीति च परस्परं व्याकुलत्वात् प्रत्यक्षादेश्च तदभावात् आगमस्य चोपचरितार्थत्वे-
नापि तत्र सावकाशत्वादितरस्य निरवकाशत्वाच्च भेददर्शग्राहिणः प्रत्यक्षादेः पूर्वसिद्धतया चागमेभ्यस्तस्य प्रतिष्ठितत्वान्न हि विरोधे तेषामेव
बाधात् मृत्तिकेत्येव सत्यं त्रीणि रूपाणीत्येव सत्यं प्राणा वै सत्यं सच्चात्यच्चाभवदिति च प्रपंचस्य सत्यत्वप्रतिपादनात् विवादास्प-
दीभूतः प्रपंचः सत्यः प्रमाणसिद्धत्वादात्मवदिति अयं घट एतद्भिन्नो वा ध्यभेदातिरिक्तभेदाश्रयः द्रव्यत्वात्पटवदिति

ऽऽविरोध एव

नास्ति आगमेभ्यस्तु प्रपंचसत्यतावगमादित्याह मृत्तिकेत्यादिना त्रीणि रूपाणीति लोहितशुक्लकृष्णानीत्यर्थः सदिति भूतत्रयं त्यदिति वा-
य्वाकाशौ द्वौ अत्र च सदिति खुररवश्ववणोपन्यस्तं भेदग्राहिप्रत्यक्षादीति येयमागमविभीषिका तान्प्रत्यक्षं सार्वजनीनमिति न तत्र किं-
चिद्वक्तव्यमस्ति अनुमानं दर्शयति विवादेति प्रपंचमात्रस्य सत्यत्वसाधने शुक्तिरूप्यसंसर्गादौ बाधः स्यात् तेषामपरोक्षतया बाधतया च
सदसद्विलक्षणतया मिथ्यात्वात्तथा घटाद्यनुगतसत्तांशे सिद्धसाधनता तन्निवृत्त्यर्थं विवादास्पदग्रहणं न चासिद्धो हेतुः प्रत्यक्षे प्रदर्शिता-
गमैश्चाविवादादिति भिन्नवस्तुसत्यत्वेऽनुमानमुक्तं भेदस्यापि सत्यत्वेऽनुमानमाह अयं घट इति अथवा व्यावहारिकत्वात्त्विकत्वादिस्वरूपे

भेदाश्रयइत्युक्तेकल्पितभेदमादायसिद्धसाधनंतदर्थंबाध्यभेदातिरिक्तग्रहणंतावतिवाऽप्रसिद्धविशेषणता अद्वैतवादिनःसर्व
भेदानांबाध्यत्वादतउक्तंएतन्निष्ठेतिपदार्थांतरनिष्ठभेदस्यैतन्निष्ठबाध्यभेदातिरिक्तभेदत्वेननाऽप्रसिद्धविशेषणतापक्षेचैतन्निष्ठबा
ध्यभेदातिरिक्तत्वंभेदस्यैतन्निष्ठातिरिक्तत्वान्नसंभवतिएतन्निष्ठत्वादेवअतोबाध्यभेदातिरिक्तसत्यभेदसिद्धिः अतिरिक्तत्वंचात्राभेदा
नधिकरणत्वंतेननार्थांतरताइत्यनुमानतोपीतिएवंप्रकारानुमानत्रयस्यार्थः ननुप्रतिकूलतर्कपराहतत्वात्शंकितोपाधिदुष्टमिदमनुमानद्वयं
तथाहिभेदस्यभेदिनोवादृश्यवर्गस्यसत्यत्वेतस्यतत्ज्ञानस्यचकः — संबंधइतिविवेचनीयंनतावत्संयोगस्तस्यगुणत्वेनद्रव्यमात्रवृत्तित्वा
त् ज्ञानस्यगुणत्वात्द्रव्यत्वाभावात् नापिसमवायः आत्मसमवेतत्वाद्ज्ञानस्य नाप्यन्यःकश्चित्घटपदार्थनियमानुगुणःसंभवति नाप्यभा
भावः अभावतज्ज्ञानयोःसंबंधाभावप्रसंगात् किंचयत्रयत्रास्यानर्थोवस्तस्यतस्यतज्ज्ञानेनसंबंधोनस्यात्स्वविवृत्तिविरोधादितितदेतद्दूषय

अनुमानतोविमतादेरात्मनांचसत्यभेदसिद्धिः नचभेदस्यसत्यत्वेहदृश्ययोः संबंधानुपपत्तिर्बाधिका तत्तत्प्रतिपत्तिहेतुभूतं
दीपलिंगादेस्तत्तद्विषयसंबंधादेवतदुत्पन्नज्ञानानां तत्तद्विषयप्रतिनियमसिद्धावन्तरेणापिसंबंधान्तरमतिप्रसंगाप्रसंगात् शब्दा
न्तराभ्याससंख्यादेश्चकर्मभेदप्रतिपादकप्रमाणस्यभेदमिथ्यात्वेऽप्रामाण्यप्रसंगाः ॥

ऽऽति नचेतिहेतुमाह तत्तदितिनियामको हि
संबंधः संभवतिचतत्रनियमःतत्तज्ज्ञानानांतत्तदर्थैःस्वतंत्रसंबंधाभावेपितत्तज्ज्ञानजनकैर्दीपलिंगशब्दादीनांतत्तदर्थैः सहसंबंधेनेत्यर्थः एवंप्र
तिकूलतर्कपरिहृत्यस्वानुमानस्यविपक्षेबाधकतर्कमाह शब्दांतरेति अयमर्थः शब्दांतराभ्याससंख्यासंज्ञागुणप्रकरणांतरैः कर्मभेदोनिरू
पितोद्वादशलक्षण्यांद्वितीयाध्याये तत्रयजतिददातिजुहोतीत्यादौ धातुभेदेनधात्वर्थभेदेपिभावनाभिद्यतेनवेतिसंदेहे धातूनांभेदेपि
भावनावाचकलिङादेःसर्वत्रप्रत्यभिज्ञयाऽभेदावगमात् धात्वर्थस्यचभावनाप्रतिगुणीभूतत्वात्गुणभेदेनप्रधानभेदस्यान्याय्यत्वात् अभेद
एवेतिपूर्वपक्षस्य धातोरितिविवक्षितैकवचनेनसूत्रेणैकधातोरूपपरिप्रत्ययविधानात्सर्वत्रधात्वर्थानुरंजितायाभावनायाःप्रतीतेरेकानुरंजि
तायाश्चान्यानुरंजनायोगात्प्रतिधात्वर्थंभिद्यतएवभावनेतिराद्धांतितं शब्दांतरेकर्मभेदःकृतानुबंधत्वादित्यत्रायमर्थः शब्दांतरेधात्वंतरेसति

तावच्छेदकत्वात् भावनायाः इति सोयं शब्दान्तरात्कर्मभेदः तथा समिधो यजति तनूनपातं यजती त्यादिषु पंचकृत्वो यजतिश्रुतौ किं प्रथमविहितस्यै
वयागस्य पुनः पुनरभ्यास उत पंचापि विधयः इति संदेहे शब्दान्तरे सति कर्मभेदस्य पूर्वाधिकरणे वर्णनात् इहैकस्यैव यजतेः पुनः पुनः श्रवणा
त् तस्यैवायमभ्यास आदरार्थः इति पूर्वपक्षः प्याप्रवृत्तप्रवर्तकत्वाद्विधेः सर्वेषां च प्राथम्याहेतयाविध्यनुवादविनिगमाभावादानर्थ-
क्यपरिहाराय भिन्नविधितया कर्मभेद इति सिद्धान्तितं एकस्यैव पुनः श्रुतिरविशेषादनर्थकं हिस्यादित्यत्रापसमर्थः एकस्य विधेः पुनः श्र
वणमपि एवं कर्मभेदकं कुतः अविशेषात् विध्यनुवादविशेषाभावात् इतरथा पुनः श्रवणं हि यस्मादनर्थकं स्यादित्यानर्थक्यमेवाहेतु
रविशेषादिति सोयमभ्यासात्कर्मभेदः तथा सप्तदश प्राजापत्यान् पशूनालभते इत्यत्र किं सप्तदशपशुकमेकं कर्मोत सप्तदश कर्माणि विधी
यन्ते इति संशये प्राजापत्यानित्यत्र कृत्तैकशेषाणां पशूनां तद्धितेनैकप्रजापतिदेवताकत्वबोधनादेककर्मत्वमिति प्राप्ये राद्धान्तितं एककर्म
त्वे हि एक एवातिदेशः स्यात् ततश्चैकपशुनिष्ठमेकादशावदानमतिदेशप्राप्तमेकपशौ निविष्टमितरेषामदृष्टार्थता स्यात् सप्तदशकर्म
त्वे तु प्रतिपशुमेकादशावदानसिद्धिरिति दृष्टार्थता ऽतः कृत्तद्धितदेवतासंबन्धस्य देवतासंबद्धानामेकशेष इति सप्तदश कर्माणीति इदं भाष्यकारी
यमतं वार्त्तिककारीयं तु तिस्र आहुतीर्जुहोतीत्यत्रैकस्य जुहोतेः श्रवणादेकहोममतं वित्वं तु एकादशप्रयाजादिवदावृत्त्येति प्राप्ते राद्धान्तः त्रित्व
स्य तावज्जुहोतिसामानाधिकरण्यमुत्सर्गतो होमभेदकमेकातिरिक्तसंख्यायाः पृथक्त्वसामानाधिकरण्यस्वरसत्वात् क्वचित्त्वगत्याऽप
वाद एकादशप्रयाजादौ प्रकृतौ पंचत्वावधारणात् न चेह तथा बाधकमस्तीति होमभेद इति तदुक्तं पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्या-
दिति संख्ययापि हेतुना कर्मभेदः स्यात् कुतः कर्मपृथक्त्वनिवेशात् कर्मपृथक्त्वेनैव तस्या निवेशात् एकातिरिक्तसंख्यायाः कर्मपृथक्त्वसामाना
धिकरण्यादित्यर्थः सोयं संख्यया कर्मभेदः तथा अथैष ज्योतिरथैष विश्वज्योतिरेतेन सहस्रदक्षिणेन यजेतेत्यत्र ज्योतिर्विश्वज्योतिः
शब्दयोः प्रकृतज्योतिष्टोमानुवादकत्वं कर्मान्तरविधायकत्वं वेति संशये समेषशब्दस्य सर्वनाम्नः प्रकृतावमर्शित्वात् ज्योतिरादिशब्दस्य
तत्समानाधिकरणत्वात् पूर्वकर्मैवानूद्य सहस्रदक्षिणात्मकगुणान्तरं विधीयत इति प्राप्ते ज्योतिष्टोमशब्दस्य ज्योतिरादिशब्दानां च
स्वरूपविलक्षणत्वात् भिन्नार्थत्वे संभवत्येकदेशलक्षणयैकार्थत्वकल्पनाया अगतिकगतित्वात् सर्वनाम्नश्च प्रस्तोष्यमाणपरा

मर्शितयापि संभवात् तान्यां नरं कर्मांतरं गमयतीति साधितं संज्ञा चोत्पत्तिसंयोगादित्यत्र अयमर्थः संज्ञा च पूर्वविलक्षणा कर्मभेदिका कुतः उत्प
त्तिसंयोगात् कर्मस्वरूपज्ञापनसमय एव तत्संज्ञाम्नानात्‌ संयोगादिति तथा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यत्र द्रव्यदेवतासंबंधानुमि
तयागः किं पूर्वकर्मानुवादेनोत्तरत्र वाजिनगुणविधानमुत कर्मांतरं तद्गुणकमिति विशये वाजिभ्य इत्यत्र वाजमन्नमेषामिति व्युत्पत्त्याऽमिक्षा
ऽन्नयुक्तविश्वेदेवदेवताककर्मानुवादेन वाजिनगुणविधानादेककर्मत्वमिति प्राप्ते वैश्वदेवीत्यत्र विश्वेदेवा देवता अस्या इत्यर्थेऽणप्रत्यय
विधानाद्देवतोत्तरं मा परामृष्टामिक्षायागस्तद्धितनिर्दिष्टविश्वेदेवसंबंधेन श्रौततया प्रबलेन सह वाजिभ्यो वाजिनमिति पदद्वयात्मकवाक्या
वगतवाजिनसंबंध एव विकल्पसमुच्चययोरभावाद्वाजिनगुणविशिष्टकर्मांतरविधानमिति सिद्धांतितं गुणश्चापूर्वसंयोगे वाक्ययोः स
मत्वादित्यत्र गुणश्च कर्मभेदकः अपूर्वकर्मसंयोगे पूर्वकर्मसंबंधाभावे सति कुतः वाक्ययोः समत्वात् संनिहितत्वाविशेषात् ततोऽवि
घातमनेककर्मत्यर्थः सोयं गुणान्तरात् कर्मभेदः तथाऽसन्निहितदेशकालनिमित्तफलसंस्कार्यसंबंधकमेवाकेषु मासमग्निहोत्रं जुहोतीत्या

न चैतस्य लोकसिद्धभेदानुवादकत्वसंभवः नाद्यकर्मापूर्वभेदस्य लोकतोऽसिद्धत्वे च शब्दांतराद्यधिकरणानारंभप्र
संगात्

दिषु किं प्रकृताऽग्निहोत्रादौ मासादिगुणविधानमुत तद्गुणकं कर्मांतरविधानमिति संदेहे कर्मांतरविधाने गौरवप्रसं
गादग्निहोत्रशब्देन तदनूद्य गुणमात्रविधानमिति पूर्वपक्षितेऽमासादेरनुपादेयतया सामानाधिकरण्येन योगादग्निहोत्रादेश्चाविच्छिन्नप्र
करणेन याग्रस्य भिन्नभावाच्च मासादिगुणविशिष्टकर्मान्तरमेव विधीयते ऽग्निहोत्रादिधर्मातिदेशार्थं चाग्निहोत्रादिनाम्ना व्यपदेश इति प्रक
रणान्तरात् कर्मांतरत्वं निरधारि प्रकरणान्तरे प्रयोजनान्यत्वमित्यत्र अयमर्थः प्रकरणान्तरे सति प्रयोजनान्यत्वं विधेयभावनान्यत्वं स्यात्तु
पुनः पूर्वकर्मानुवादेन तत्र गुणविधानमिति तत्र शब्दान्तरं धातुभेदोऽभ्यासो विधेः पुनः श्रुतिः उत्पत्तिस्था द्व्यादिसंख्या संज्ञा चागमपूर्वेऽगं चा
नुपादेयसंबंधोऽसंनिधिः प्रक्रियान्तरमिति शब्दान्तरादीनां सुकरलक्षणविचक्षणैः तदेतदखिलं संभोनिधावेव निधीयते तद्भेदमिथ्यात्वइति
न तु शब्दान्तरादीनां नानाभेदे प्रामाण्यं एतत्स्य लोकसिद्धतयाऽप्रतिपाद्यत्वादित्यत आह न चैतस्येति भेदमात्रस्य लोकसिद्धत्वे ऽप्यलौकिककर्मभे

उपसंहरति नद्वैवमिति तत्रलक्षणं श्लोकेन संगृह्णाति सर्वेषामिति सर्वेषां भावानां मृषात्मना मिथ्यात्वमिदं यत्स्वाश्रयत्वेन संमतेऽत्यन्ता
भावप्रतियोगित्वं नित्यमविद्यमानत्वमिति योजना श्लोकं विवृणोति तथाहीति अभिमता इति प्रमितव्याप्तेरित्यतेन च बाधः परिहृतः नन्वेतावता
पि किमिति मिथ्यात्वमिति चेन्न स्वचक्षुषा किमन्मत्रसंन्विति उत्तरवत्तत्रा एव संन्विति नाद्यः प्रमाणाभावादित्याह नहीति द्वितीयं प्रतिषेधति
तत्रापीति अयमर्थः तन्तावदात्मवदेषामनाश्रितत्वं कार्यत्वेन समवायिकारणाश्रितत्वात् सामान्यादीनामपि धर्मत्वात्समानमाश्रितत्वं तस्मा
दाश्रितानामन्यत्र प्राप्त्यभावात्प्राप्तदेशेऽपि चेदसत्त्वमापद्यते एवं तदा बलात् मिथ्यात्वमिति ननु भवत्वाश्रितानामेवं मिथ्यात्वमनाश्रितानां पर
माण्वाकाशादीनामाश्रयाभावेनोक्तलक्षणाभावात् मिथ्यात्वे दृष्टान्ताव्याप्तिरित्यत आह न चानिराश्रयेष्विति लक्षणपदं तु मध्यस्थमणिवन्न

तद्वेवं मिथ्यात्वे लक्षणप्रमाणयोः संभवात्तदनुमानागमाभ्यां प्रपंचस्य सत्यत्वापादनान्न मिथ्यात्वमिति अत्रोच्यते न तावल्लक्ष
णासंभवः यतः सर्वेषामपि भावानामाश्रयत्वेन संमते प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता । तथा हि घटादीनां भावानां स्वा
श्रयत्वेनाभिमता ये तन्त्वादयो येन निष्ठात्यन्ताभावप्रतियोगित्वे वर्तते षां मिथ्यात्वं नहि तेषामन्यत्र सत्तासंभविनी तत्रापि चेत्स्यान्न
स्यात्तदा गले पादुकान्यायेन मृषात्वमेव पर्यवस्येत न च निराश्रयेषु नित्येषु भावेषु सा नास्तीति लक्षणस्याव्याप्तिः ब्रह्मव्यति
रिक्तस्य कृत्स्नस्य कार्यतया कारणाश्रितत्वस्य व्यवहारदशायां रजतादेरिव शुक्त्याद्याश्रितताया स्वीकारात् नाव्याप्तिव्याप्तिः ।
सत्यस्य ब्रह्मणो निराश्रयत्वात्तस्य तन्निष्ठात्यन्ताभावप्रतियोगिताया शंकितुमप्यशक्यत्वात् ॥ यत्तेन सत्ताभावाल्लक्षणस्येम

पि पर्यवस्यतीति वियदधिकरणाद्युक्तन्यायेन तेषामप्यस्येव कार्यत्वमित्यर्थः कार्यत्वं चेदं कल्पितत्वं तेन नाविद्यायामव्याप्तिः यथा चैतत्तथा
द्वितीयपरिच्छेदे प्रसाधयिष्यते अद्वितीयासंगस्य ब्रह्मणः कथं मिथ्याभूतवियदाद्याश्रयत्वमिति मतिमपाकर्तुं व्यवहारदशायामित्युक्तं न
नु सन्मात्रं ब्रह्म सत्ता च घटपटाद्याश्रिता तस्तत्राप्युक्तलक्षणस्य शक्यसमर्थत्वाल्लक्षणस्यातिव्याप्तिः स्यादित्याशंक्याह नाव्याप्तिव्या
प्तिरिति सत्यं सन्मात्रं ब्रह्म तत्सत्तु घटादिसमवायोऽसिद्धः घटादीनामेव तत्र कल्पितत्वादिति भावः ॥ ६ ॥ ६ ॥ ६ ॥ ॥

१
चि॰सु॰ टी॰ न॰ ५१

यत्तु पूर्वपक्षिणोक्तं संयोगादिभिः स्वात्यन्ताभावसमानाधिकरणैरर्थान्तरतेति तद्दूषयति न च परैरिति न च वस्तु सतां संयोगादीनाम
त्यन्ताभावसामानाधिकरण्ये प्रमाणमस्ति व्यवहारस्तु विभ्रममात्रशरीरैरनिर्वचनीयैरपि सेत्स्यतीति न सोऽस्य साधक इति भावः ननु
किमिति जलाञ्जलिर्दीयते यावता भावाभावावपहाय भावभेदेष्वेव गोत्वाश्वत्वघटत्वप्रभृतिष्वयं प्राणान्धारयतीत्यत आह भावाभाव
योरिति परीक्षकाणामपरिपक्षभानं हि गोत्वाश्वत्वयोस्तत्त्वविरोधः अपि तु परस्परात्यन्ताभावाविनाभूतत्वं तद्यदि भावाभावयोर्न विरोधः
का तु नाम तदा तद्भावात्तयोर्विरोधवार्त्तेति भावः नन्वेकस्मिन्नपि प्रदेशभेदमादाय संयोगादेर्वर्त्तनं अतो न विरोधोच्छेद इति निरुद्धगतेः
भावा

न च परैः प्रदेशभेदेन तथाभ्युपगतेषु संयोगशब्दादिषु सत्स्वपि लक्षणस्य सद्भावादर्थान्तरताभावयोरेकाधिकरण्याभ्यु
पगमे सर्वत्रैव तथाभावापत्तेः विरोधस्य जगति दत्तजलाञ्जलिताप्रसंगात् भावाभावयोर्हि साक्षाद्विरोधस्तन्मुखेनैवान्य
त्रेति परीक्षकपरिषदां संमतत्वात् प्रदेशोपाधिभेदेन वा तत्र विरोधसमाधाने भावात्यन्ताभावयोर्भिन्नाधिकरणत्वेन लक्षणस्य
तत्र सत्त्वे कुतः संभवः कुतस्तरां चातिव्याप्तिः कुतस्तमां चार्थान्तरतानिर्देवं न मिथ्यात्वानिरुक्तिः नापि मानासत्त्वं अनुमाने सद्भा
वात् तथा हि अंशिनः स्वांशगात्यन्ताभावस्य प्रतियोगिनः अंशित्वादितरांशिवत् शेषेषु गुणादिषु च विमतः पटः एतत्तन्तुनिष्ठा
त्यन्ताभावप्रतियोगी अवयवित्वात्पटान्तरवत् ॥ ५ ॥ पूर्वपक्षिणो मतमाशंक्यातिव्याप्तिं परिहरति प्रदेशेति कुतः संभव इति तदंगीकार

भिप्रायं अंगीकारप्रयुक्तत्वादर्थान्तरतायाः स्यादेतत् यद्यपि लक्षणमिदमक्षीणं तथापि तल्लक्षणलक्षितस्य मिथ्यात्वस्यात्र सद्भावे किंप्र
माणं न हि लक्षणमस्तीति सर्वं च तत्स्वतः सिध्यतीति प्रसंगादित्यत आह नापीति अंशिनोऽवयविनः स्वावयवनिष्ठात्यन्ताभावप्रतियो
गित्व इति प्रतिज्ञायां हेतुमाह अंशित्वादिति इतरावयवीवेति दृष्टान्तः अनवयवि रूपगुणादिष्विति दिशति दिगेषैवेति दिङ्नागैः
श्लोकोक्तमनुमानं विवृणोति विमत इत्यादिना पटमात्रं पक्षीकृत्यैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वे साधितेऽर्थान्तरता पटान्तर
स्यैतत्तन्तुनिष्ठत्वाभावात्तन्निवृत्त्यर्थं विमत इत्युक्तं परविशेषणमित्यर्थः ॥ ८ ॥ ९ ॥ ॥ १० ॥ ११ ॥ ॥

एम
५१

सर्वत्र चैवं विशेषणावपत्तो कर्तव्यः अन्यैतन्त्वादारंभकास्तंतव एतत्तंतवः अन्योन्याभावादिव्यवच्छेदार्थमत्यन्ताभावग्रहणं तंतुनिः
ष्ठात्यन्ताभावप्रतियोगीत्युक्ते तन्त्वन्तरमादायार्थान्तरतानिरासार्थमेतत्तंतुनिष्ठेत्युक्तं पटान्तरे त्वेतत्तंतुभिरनारब्धेसु प्रसिद्धसाध्यमव
यवित्वात् अवयवित्वेन संमतत्वात् तेन न प्रतिज्ञाहेत्वोर्विरोधः दिग्गोचरेवेत्यत इह दूषणोति एवमिति एतद्रूपमेतत्तंतुनिष्ठात्यन्ताभाव
प्रतियोगिरूपत्वादितररूपवत् एवं स्पर्शादिष्वपि एतच्चलनमेतत्तंतुनिष्ठात्यन्ताभावप्रतियोगिचलनत्वादन्यचलनवत् तथा
तन्तुत्वन्तन्तुनिष्ठात्यन्ताभावप्रतियोगिजातित्वाद् घटत्ववत् एवं सत्तादयोप्यनुमेयाः एवं समवायेपि द्रष्टव्यं अयमन्त्यविशेषः एतदा
त्मनिष्ठात्यन्ताभावप्रतियोगी विशेषत्वादात्मान्तर्गतविशेषवदिति विशेषेषु स्यादेतत् पटादीनां तत्वादिषु यदत्यन्ताभावप्रतियोगित्वं

एवमेतद्गुणकर्मजात्यादयोपि तत्तंतुनिष्ठात्यंभावप्रतियोगिनः तत्तद्रूपत्वादि तत्तद्रूपवदित्येवमादिप्रयोगः सर्वत्रै
वोहनीयः ननु किं प्रामाणिकैतन्निष्ठात्यन्ताभावप्रतियोगित्वं साध्यं किं वा प्रातिभासिकात्यन्ताभावप्रतियोगित्वं नाद्यः अभावा
नां प्रामाणिकत्वे तैरेव द्वैतापत्तेः प्रामाणिकाभावप्रतियोगित्वे च भावानामपि प्रामाणिकत्वयान मिथ्यात्वसिद्धिः न द्वितीयः रज
ते सोसविभ्रमे सीसमेवेतन्नरजतमिति रजते रजतत्व ———— प्रतिषेधे प्रातिभासिकात्यन्ताभावप्रतियोगिनोपि
रजतत्वस्य मिथ्यात्वेनार्थान्तरत्वापातादिति चेन्मैवं अभावानां प्रामाणिकत्वेपि सद्द्वैतव्याकोपात् ॥ साध्यते सकिं प्रा

माणिकोः प्रामाणिको वास्यादिति विकल्प्य दूषयति पूर्ववादी किं प्रामाणिकेत्यादिना प्रामाणिको यस्तन्निष्ठात्यन्ताभावइति विग्रह
स्तैरेवेति यानत्यन्ताभावान्प्रति प्रतियोगित्वं तंतुप्रत्यादीपट प्रपंचादेः साध्यते तैरेव प्रामाणिकैरित्यर्थः किं च एषह्यभावानां स्वभा
वोयत्प्रतियोगिनिरूपणीयत्वं तथा च यद्यभावाः प्रामाणिकाः सुतरां तन्निरूपकाभावाः तथा चाद्वैतनाशे वनो द्वैतीत्याह प्रामाणिका
भावेति एतेन सद्द्वैतमेवाद्रियत इति वेदान्तिनां किं वदंत्यपोदिता अप्रामाणिकपक्षं दूषयति नेति अप्रामाणिकात्यन्ताभावप्रतियो
गित्वेन मिथ्यात्वं सत्यसेव रजतत्वस्य सीसविभ्रमविषये रजतभ्रान्तिप्रापन्नात्यन्ताभावप्रतियोगित्वस्य परैर्मिथ्यात्वास्वीकारादित्याह रज

इममभ्युपगमं त्यजन् सिद्धान्तरहस्यमादाय परिहरति कथंचव्यावहारिकेति न प्रमाणमात्रगम्यत्वात् सत्त्वमायाति देहात्मत्वादौ तथाभावाभावात् अपि तु तात्त्विकप्रमाणागम्यत्वात् न चैतत् ब्रह्मव्यतिरिक्तस्याभावस्य भावस्य वास्तीति येनाद्वैतसंकोचावकाशः स्यादिति भावः यत्तु प्रामाणिकाभावपक्षे प्रतियोगिभूतैर्भावैरद्वैतविरोध इति तन्न परिहरति नापि प्रामाणिकेति अयमर्थः नैवं व्याप्तिरस्ति यत्प्रामाणिकाभावप्रतियोगि तत्प्रामाणिकमिति यतः शुक्तीदमंशरजताकारयोरेकज्ञानोपनीतस्य — संसर्गस्य प्रामाणिकात्यंताभावप्रतियोगिनोपि क्वचिदपि देशे कदाचिदपि काले सत्त्वमन्यथाख्यातिवादिभिर्नेष्यते तथाऽख्यातिवादिभिः संसर्गो

कथंचव्यावहारिकप्रमाणोपस्थापितस्वभावैर्भावैरभावैर्वा तत्त्वावेदकप्रमाणोपनीतस्याद्वैतस्य व्याकोपाऽऽशंकावकाशः नापि प्रामाणिकाभावप्रतियोगिनोपि शुक्तीदमंशरजताकारद्वयालिंगितस्य संसर्गस्येदंरजतमित्येकज्ञानोपनीतस्य केवलतद्व्यवहारोपनीतस्य वा धीरूपरजताकारोपारोहिणो बहिष्ठस्य वा क्वचिद्देशकाले वा केनचिदपि वादिना सत्त्वास्वीक्रियते येन प्रामाणिकाभावप्रतियोगिनः सन्तो भावाः प्रतिपद्येरन् द्वितीयस्तु विकल्पोऽनंगीकारपराहतः न च धर्मिग्राहकप्रमाणबाधः धर्मिणस्तत्त्वावेदकप्रमाणसिद्धत्वानभ्युपगमात् नन्वाश्रयासिद्धिरिति चेन्न सांव्यावहारिकप्रमाणोपनीतस्याप्याश्रयत्वोपपत्तेः प्रपंचस्तत्त्वावेदकप्रमाणविषयः धर्मित्वादात्मवदिति चेन्न आत्मत्व

ज्ञानाभावेऽपि संसृष्टव्यवहारोपनीतस्य संसर्गस्य तथा विज्ञानवादिभिरपि धीरूपं यद्रजतं तत्रारोपितस्य बहिष्ठस्येत्येवं यथादर्शनं व्यभिचारः रादिति यत्तु प्रामाणिकाभावप्रयुक्तदूषणमुक्तं तदभावस्य प्रामाणिकतास्वीकारात् निरनुयोज्यानुयोगइत्याह द्वितीयस्त्विति यत्त्वाश्रयस्य प्रामाणिकत्वाप्रामाणिकत्वविकल्पेन दूषणमुक्तं तत्परिहरति न चेति प्रमाणमात्रगम्यस्यात्यंतिकसत्त्वाभावादिति भावः सत्त्वे चेन्नास्ति तर्हि असदेवं तथा च शशविषाणवदेवानर्थक्रियासमर्थमिति शंकते नहीति देहात्मभावादिव व्यावहारिकसत्त्वमादाय परिहरति न सांव्यवहारिकेति यथा च सदसद्विलक्षणाख्या पराकोटिस्तथाऽनिर्वचनीयवादे निर्वक्ष्यते तत्त्वावेदकप्रमाणागम्यत्वाभावेन धर्मिग्राहकबाधः परिहृतः

ननु कथमात्मत्वमुपाधिः साध्यव्यापकत्वानिर्णयात् तथा हि पञ्चात्मत्वं नास्ति नचानन्त्वावेदकप्रमाणगम्यत्वमपि नास्तीति साध्याभावे
नोपाध्यभावव्याप्तिरेवं च्यानचैवागुरुकानिर्णया आत्मत्वरहिते प्रपञ्चे साध्याभावानिर्णयात् तस्मात्पर्वतेतरत्वादिवन्न्यसेन्नरोपमित्यत आह
नचव्यतिरेकेति शुक्तिरूप्यसंसर्गादौ सर्वथा प्रमाणायोग्येशका उभयाभावो निर्णीत इत्यर्थः अनैकान्तिकतां चाह धर्मित्वेति संसर्गधर्मि
णीति संसर्ग एव धर्मी हेतोसत्त्वात्प्रतिमा शंकते नासाविति परिहरति नेति अयमर्थः मिथ्यात्वादिनीममेव हेतुं प्रति संसर्गो धर्मीन वा आद्ये धर्मि
त्वमशक्यनिषेधं द्वितीये व्यशक्यनिषेधमेव निषेधकहेतोराश्रयासिद्धत्वादिति यत्तु प्रतीतिमात्रसिद्धस्य साधनादित्वेऽतिप्रसक्तिरित्युक्तं त
त्प्येवं सति परिहृतमित्याह सत्येनेति व्यावहारिकप्रमाणसिद्धस्य साधनदूषणत्वाभ्युपगमेनेत्यर्थः एतेनेत्येतदेव विवृण्वन् एवं सो व्यावहा

नच व्यतिरेकासिद्धिः अनात्मनः शुक्तिरजतसंसर्गादेस्तत्त्वावेदकप्रमाणाविषयस्योभयवादिसिद्धस्य व्यतिरेकोपसंहार
स्थलस्य सद्भावात् धर्मित्वहेतोः शुक्तिरजतादिसंसर्गे धर्मिणि व्यभिचाराच्च नासौ धर्मी मिथ्यात्वादिनीति चेत् न एतमेव हेतुं
प्रति धर्मित्वाधर्मित्वयोस्तदयोगात् एतेन प्रतीतिमात्रसिद्धस्याश्रयत्वे दूषणाभूषणादेरपि तथाभूतस्य सुलभत्वा
त् सर्ववादविधिनिषेधप्रसंग इत्यपास्तम् वादिप्रतिवादिमध्यस्थानां प्रमाणसिद्धमेतदिति संमत्यालम्बनतयाऽत्रिच
तुरकक्ष्याविश्रान्तस्य तत्तदाभासलक्षणानालिंगितस्याश्रयस्य दूषणभूषणादेश्च तत्रतत्र कथागतानांगीकारात् ताद
शव्यावहारिकप्रमाणसिद्धस्यैव च व्यावहारिकसत्यत्वेन स्वीकारात् सर्वथाबाधवैधुर्य्यस्यागमेतरप्रमाणैरसर्वज्ञेन
ज्ञातुमशक्यत्वात्

रिकप्रमाणशरीरमेव दर्शयति वादिप्रतिवादीत्यादिना त्रिचतुरकक्ष्याविश्रान्तस्येति त्रिचतुरपर्वस्ववाधितस्येत्य
र्थः स्यादेतत् कतिपयपुरुषस्य कतिपयकालं वाधविधुरमित्यवबोधविषयस्य साधनादिभावश्चेदभ्युपेयते तर्हि सिद्धान्तविरोधः यतो व्या
वहारिकसत्त्वं शुक्तिरूप्यस्यैव दान्तिभिः साधनादित्वमंगीक्रियत इत्यत आह तादृश इति ननु किमित्ययं संकोचः आत्यन्तिकमेव सत्त्वं किं न स्वीक्रियते
इत्यत आह सर्वथेति सर्वपुरुषसर्वदेशकालापेक्षयेत्यर्थः तत् किं ब्रह्मणोऽपि तादृशं सत्त्वमशक्यज्ञानमित्यत उक्तं आगमेतरेति न त्वागमेन
रैरपि प्रमाणैः सर्वज्ञेन केनचित्तादृशं सत्त्वं ज्ञायतामित्यत उक्तं असर्वज्ञेनेति सर्वज्ञस्य तु कस्यचित्तादृशं प्रमाणमस्ति प्रपञ्चविषयमित्यत्र नाव्य

व्यावहारिकसत्त्वं नाम न सत्त्वविशेषः अपि त्वेवंविधज्ञानविषयत्वमित्यनेनैव भट्टपादोक्तदूषणमप्यपास्तमित्याह एतेनेदमिति संवृ-
तिसत्यमिति यद्बौद्धैरुच्यते तन्न दूष्यते संवृतेर्ननु सत्यत्वमिति अत्र च संवृणोतीति तत्त्वमिति संवृतिरविद्या तस्याः सत्यत्वमयुक्तं तत्र हेतुमाह
सप्रभेद इति इदं संवृतिसदिदं परमार्थसदिति वदता किं सत्त्वविशेषः कश्चित्संवृतिः सत्त्वं नाम स्वीक्रियते उतासदेव हि तोये सत्यशब्दो नार्थ-
वानित्यत्र प्रथमे प्राह सत्यभेद इति कुतोयं सत्यभेदो न कुतोपि प्रमाणादित्यर्थः किमिति प्रमाणाभाव इति विरुद्धत्वादित्याह सत्या चेति विरुद्धता
जातिव्यक्तिभावो नास्तीत्युक्तं इदानीं सदसतोः परस्परविरुद्धयोः सत्यत्वजातिसंबन्धोपि न घटत इत्याह सत्यत्वमिति नेत्र दृष्टान्तः न हि ह्रस्व-
त्वमिति एतेनेत्यस्यैव विवरणं वस्तुत इति न चात्रानेन निष्ठत्वमुपाधिः एकाशादौ साध्याव्यापकत्वात् नाप्येतदनिष्ठत्वं तस्यैव साध्यत्वात्

एतेनेदमपास्तं पराहुर्भद्राचार्याः संवृतेर्ननु सत्यत्वं सप्रभेदः कुतोऽयं सत्या चेत्संवृतिः केयं मृषा चेत्सत्यता कथं १ सत्य-
त्वं न च सामान्यं मृषार्थपरमार्थयोर्विरोधात् न हि ह्रस्वत्वसामान्यं ह्रस्वदीर्घयोरिति वस्तुनोऽसत्यस्यैव यावद्वाधं देहात्मभावव-
ल्लौकिकवैदिकव्यवहारांगतया सत्यत्वेन व्यवहारात् नायमसिद्धो हेतुः परस्यापि शिलेवादिनोरविवादात् नापि विरुद्धः एतत्त-
न्तुनिष्ठात्यन्ताभावाप्रतियोगित्वविपक्षेऽस्माकमात्मनि अध्यस्तस्याहन्तेनो नैकान्तिकोपि विपक्षाद्व्यावृत्तेरेव इह तन्तुषु पट इत्यादिना एव
प्रत्यक्षेण तन्तुनिष्ठतया पटस्यावगमात्तद्वपहृतविषयतया कालात्ययापदिष्टत्वेति चेन्नैवम् ॥

नाप्येतदनिष्ठत्वरहिततया प्रतीयमानत्वम् संयोगादौ तत्र साध्याव्याप्तेः एतेनैतत्स्वरू-
वयवानारब्धत्वमपि निरस्तं न च द्रव्यत्वविशेषितं गुणादौ साध्याव्याप्तेः न च द्रव्यत्वविशेषिते साध्ये द्रव्यत्वविशेषितो यमुपाधिः व्यतिरेकव्या-
प्त्यसिद्ध्या पक्षेतरत्वादिति स्वरूपासिद्धिं परिहृत्य विरुद्धत्वं परिहरति नापि विरुद्ध इति अत्रत्यात्मा विपक्षस्तस्य सर्ववस्तुस्वरूपतया त-
न्तुनिष्ठात्यन्ताभावाभावात् न तत्र स्मिन्निरस्यपदे शितं वर्तत इत्यर्थः एतेनैतन्निष्ठगुणादिव्यावृत्तिरेवमेतदत्यन्ताभावस्येतत्तन्तुनिष्ठतास्वी-
कारेतस्याप्येतदनिष्ठत्वांगीकारे तु तदभावादेव बाधं शंकते इहेति तन्तुष्विति परिहरति नैवमिति एतदेवाचामाभिमतग्रहणेन बाधपरिहा-
र इति नस्येतदुक्तं यथा ह्याकाशनीलिमता हि प्रत्यक्षाविरोधेप्याकाशमरूपि विभुत्वादात्मवदित्याद्यनुमानमुदेति तत्कस्य हेतोः इदं

नन्वनुमानबाधमभिप्रायेणाप्रत्यक्षाभासीकरणं सर्वत्र सुलभमिति दृह नानुस्मृतानुमानेपि न प्रत्यक्षस्य बाधः स्यादिति गतं कालात्ययापदि
ष्टकथयेत्यत आह नचैवंसतीति हेतुमाह तत्रत्रेति अयमभिसंधिः अग्निरनुष्णस्त्वत्र निषेध्यमुष्णत्वं कश्चित्प्रमितं न वा न यदि न तदा प्र
तियोग्यप्रमित्याऽभावप्रमित्यभावात् अप्रसिद्धविशेषणता न च भ्रान्तिसिद्धस्य निषेधोऽर्थक्रियायां वा धाभावात् तस्मात्प्रमितमिति वक्त
व्यं नचतत्रप्रमितिव्यतिरिक्तस्थलेऽस्तीत्यनुमेयत्वादिसंप्रतिपन्नमस्ति तत्र प्रमाणमतस्तद्विरोधादनुमितिर्नोदेतीत्यनिरूढैव बाधप्रवृत्तिरिति प्रकृ
तेत्वनन्तरोपजीव्यमस्ति किंचित्प्रमाणं येन बाधः स्यादित्याह प्रकृते चेति प्रत्यक्षाविरोधं परिहृत्य यदुक्तं पूर्ववादिना प्रपंचः सत्यः प्रामाणिकत्वा
दिति तद्विरोधं परिहरति एतेनेति तस्यैव विवरणं प्रमाणेति नन्वेवं तद्देव किं न स्यात्प्रमाणमिति तत्राह यत्रेति अथवा प्रत्यक्षविध्वंसनन्यायं कैश्चि

परस्यैतत्तन्तुनिष्ठात्यंताभावप्रतियोगित्वमंगीकुर्वता तस्य प्रामाण्यानंगीकारादिह न भासिनीत्यभिमेनि प्रत्यक्षाभिमतप्रत्य
क्षबाधेनाप्रत्यक्षानुमानप्रवृत्तिवदत्राप्यनुमान प्रवृत्त्युपपत्तेः नचैवंसति दहनशैत्यानुमानादेरप्यप्रतिबद्धप्रसरतया काला
त्ययापदिष्टकथा सर्वत्रास्तमियादिति वाच्यं तत्र तत्रोभयवादिसंमतप्रबलप्रमाणोपरिप्लवितिजायमानत्वेनास्यानिरंकुशप्र
सरत्वात् प्रकृते च तथाभावाभावात् एतेन प्रमाणसिद्धत्वादिति प्रत्यनुमानविरोधोऽपास्तः प्रमाणसिद्धत्वस्यैवासिद्धेः
यत्र प्रत्यक्षमपि न तत्त्वावेदकं प्रमाणं तत्र का कथा तन्त्यादेरुपजीविनो वराकस्यानुमानादेः प्रमाणतायाम् यत्तु नेदं तस्य घ
टस्य द्रव्यत्वादेतन्निष्ठवाध्यभेदातिरिक्तभेदवत्त्वानुमानं तदप्यद्वैतागमविरोधात् कालात्ययापदिष्टमित्युपेक्षणीयम् श्रुतिके
मेवसत्यमिति यायागमेन प्रपंचस्य सत्यत्वाद्यागमाद्द्वैतागमस्यैवोपचरितार्थः किं न स्यादिति चेत् ॥ निकल्प्याये न संभाव्य मा

नसर्वोनुमाने ध्वनितिदिशतीत्यत्रेति असिद्धेरेवाविवरणमिदं अनुभवविरोधपरिहाराय तत्त्वावेदकमित्युक्तं यत्तु भेदसत्यत्वेऽनुमानमुक्तं तदनूद्य नि
राकरोति यत्तु नरिति अयं घट एतद्घटत्वे सति एतन्निष्ठवाध्यभेदत्वानधिकरणभेदाधिकरणं न भवति द्रव्यत्वात्पटवदित्यादिना सत्प्रति
पक्षतापि दृष्टव्या न च मृदन्तरध्वंसमुपाधिः व्यतिरेकव्याप्त्यसिद्धेः परसिद्धान्तसाध्याप्रसिद्धिः ननु कथमद्वैतागमविरोधस्तस्यागमान्तरविरो

पौर्वापर्यपर्यालोचनयात्मदृष्टेः तच्छ्रुतिशेषत्वमिति तच्छ्रुतेः स्वरसीयत्वेन यदि मृदादिसत्यत्वमपीयं श्रुतिः प्रतिपादयेत्तच्छेषिविरोधः स्यात् अतः
कारणव्यतिरेकेण कार्यमनिर्वचनीयमित्येतावन्मात्रपरा सा श्रुतिरद्वैतश्रुतिस्तु स्वप्रधानत्वादनन्यपरेत्यभिप्रेत्याह नतत्सान्यपरत्वादिति
एकविज्ञानेनेत्येनाश्रुतश्रुतं भवतीत्यनेनेति शेषः तथा सर्वकारणतया सर्वकार्यैरनन्यत्वप्रदर्शनेनेति सदेव सोम्येदमित्यादिनेति शे
षः अथ कुतो वास्तवसत्त्वमेव न प्रतिपाद्यत इति चेन्नोपसंहारविरोधादित्याह ऐतदात्म्यमिति एतेनेत्यनन्यपरत्वादित्यर्थः बाधकतर्कसंभवाच्च
शंकितानाप्रयोजकत्वं सत्यत्वानुमानमित्याह दृग्दृश्ययोरिति पूर्ववाद्युक्तामन्यथोपपत्तिमनूद्य दूषयति नचेति ——— नायं सार्वत्रिक ईश्व

नतत्स्यान्यपरत्वात् तथाहि एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय ब्रह्मणः सर्वकारणतया सर्वकार्यैरनन्यत्वप्रदर्शनेन तां
प्रतिज्ञामुपपादयितुं लोकेपि घटरुचकादिकार्याणां मृल्लोहादिकारणादनन्यत्वं दर्शयति मृत्तिकेत्येव सत्यं त्रीणि रूपाणी
त्येव सत्यमित्यादिना न तु तेषां वास्तवत्वमभिप्रैति ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मेत्यनेन ब्रह्मण एव सत्यत्वप्रतिपादन
विधानात् एतेन मिथ्यात्वानुमानस्यागमविरोधोप्यपास्तः दृग्दृश्ययोः संबंधानुपपत्तिश्च सत्यत्वानुमानस्य बाधिका नच करणे
संबंधादेव संबंधोपपत्तिः ईश्वरज्ञानेऽकरणजन्येपि विषयाणां स्फुरणात् करणजन्येष्वपि योगिज्ञानेषु युक्तावस्थायाम
न्तःकरणासंबद्धानामतीतानागतानां बाह्यार्थानां च स्फुरणात् नच मनसो बहिरर्थैः संबंधः परं तेनैव बहिर्मन इति न्यायात
त् अस्मदादीनां चेन्द्रियिकविभ्रमेष्विन्द्रियासंबद्धानामेव स्फुरणाङ्गीकारात् अस्मदादिप्रमाणजन्येपि ज्ञाने सोपरेव दत्तद्

रज्ञानस्य नियमस्य तद्विषयाणां च नियमाभावप्रसंगादित्यर्थः अथ जन्येष्वयं नियम इति तर्हि नेत्यव्याप्तिरित्याह करणजन्येष्वपीति युक्ताव
स्थायां ह्यात्ममनोयोगमात्राद्वाशेषार्थज्ञानमिति तार्किकाणां मतं अतीतादीनां चाविद्यमानत्वादेव संबंधानर्हत्वं अथ च विषयास्त
त्रापि स्फुरंतीत्यव्याप्तिरित्यर्थः ननु युक्तावस्थायां कथमव्याप्तिर्यावता मनोलक्षणेन्द्रियसंबंधादेव तत्रापि नियमोपपत्तिरिति तत्राह नच म
नस इति अथ विशिष्टादृष्टसामर्थ्यसचिवमनोयोगियोगिज्ञानं विहायायं नियम इति तर्हि नेत्यव्याप्तिरित्याह अस्मदादीनां चेति अधिष्ठान
संनिकृष्टसंबद्धत्वेप्यारोप्यतत्संसर्गयोस्तदभावात् संस्कारद्वारा प्रत्यासत्ते ख्यातिप्रसंगितत्वादिति भावः अथ विभ्रमतात्तद्वेयथा तथा भवतु प्रमा

तत्तांशस्येति न देशकालविशिष्टांशस्येत्यर्थः। एतच्च प्रत्यभिज्ञानस्यानुभवैकत्ववादेन तु चक्षुषा संप्रयुक्तस्तावद्देवदत्तः तस्य च विशेषणं तत्ताऽतः
संप्रयुक्तविशेषणतया प्रत्यासत्त्या भूतलविशेषणघटाभाववदिंद्रियेण किमिति न गृह्यत इति तत्राह न च तत्तेति आत्मद्वारा चायं संबंधः शंक
कनीयः हेतुमाह समवाये तदभावस्येति भावस्येव भाववृत्तेः समवायस्येंद्रियासंप्रयुक्तस्यापि ग्रहणं परैरंगीक्रियत इत्यत उक्तं समवाये
तरेति गुणादीनां तु संयुक्तसमवायादि नास्माकं संमतं तेषां द्रव्यतादात्म्येन समवायासिद्धेः संबंधांतराभावाच्चेत्यपि द्रष्टव्यम् विद्यमाने।
तिविशेषणाच्च प्रत्यभिज्ञायां तत्तावच्छेदः संयुक्तविशेषणतयेति चक्षुषा संयुक्तः पर्वतस्तस्य विशेषणमग्निरित्यर्थः एतदुक्तं भवति

तत्तांशस्य करणासंबद्धस्यापि प्रत्यक्षतानभ्युपगमात् न च तत्तायामपींद्रियेण सह संयुक्तविशेषणतालक्षणः सन्निकर्षः सम।
वाये तदभावस्येंद्रियसंप्रयोगमंतरेणापि प्रत्यक्षतायामयं पर्वतोऽग्निमानित्यत्राग्नेरपि संयुक्तविशेषणतया प्रत्यक्षता
पत्तेः प्रत्यक्षधर्मिकानुमानमात्रोच्छेदप्रसंगः अस्तु तर्हि ज्ञानज्ञेययोर्विषयविषयिभावः संबंध इति चेन्न तदनिरूपणात्
तथा हि न तावज्ज्ञानजन्यफलाधारत्वं विषयत्वं विषयनिष्ठफलजनकत्वं च विषयित्वमिति युक्तं विकल्पासहत्वात् तत्फलं ज्ञात
ताव्यवहारो वा नाद्यः अतीतादौ तदभावेनाविषयत्वप्रसंगात् तत्रैव फलजननेऽप्यनुगतनियमाभावात् ॥ समवायाभावातिरिक्त

स्यापि चेत्संयुक्तविशेषणतया प्रत्यक्षत्वं तर्हि प्रत्यक्षे धर्मिणि न क्वाप्यनुमानं प्रवर्तेत सर्वत्र प्रत्यक्षत्वसंभवादिति संबंधांतरमाशंकते अस्तु तर्हीति
ति ज्ञानजन्येति ज्ञानेन जन्यं यत्फलं तत्प्रत्याधारत्वं विषयत्वं तादृशफलजनकत्वं च विषयित्वमिति न च युक्तमित्यर्थः विकल्पासहत्वादिति
ष विकल्पे सति दूषणासहत्वादित्यर्थः ज्ञातता प्राकट्यमेतच्च भाट्टाभिप्रायेण अतीतादाविति फलजननसमयेऽतीतादेरविद्यमानत्वादेव फला
धारत्वानुपपत्तेरत एव तज्जनकत्वं ज्ञानस्य न संभवति अतस्तत्राव्याप्तिर्लक्षणस्येत्यर्थः दूषणांतरमाह तत्रैव फलजनन इति अयमर्थः यत्फ।
लं प्रत्याधारत्वं विषयस्योच्यते तत्तत्रैव नान्यत्र जनयति विज्ञानमित्यत्रापि किंचिन्नियामकमस्ति न वा यदि नास्ति तर्हि नियतकार्ययोगाय यदि हि भवे
त्तर्हि च स ज्ञाता नियमेऽन्यानपेक्षया नियामका हि भावानां कादाचित्कत्वसंभवादिति। असति ज्ञानज्ञेययोः संबंधे नियमायोगाच्च ॥ ॥

द्वितीये दूषणमाह न ह्योगेवेति यदि यत्किंचिन्नियामकं स्वभावोऽन्यहा समाश्रीयते तर्हि तदेव विषयत्वनियामकमस्तु कृतं तत्तुल्यजीविना
कृतेनेत्यर्थः न तु कृतं कुसुमांजलौ स्वभावनियमाभावादुपकारोपि दुर्घटः सुघटत्वेपि सत्यर्थेः सन्निकागनिरन्यथेति न द्वितीय इति कोयं व्यवहारो
भिमतः किं कराकर्षणादि रुतेच्छादिः आद्यं प्रत्याह कराकर्षणादेरिति आदिशब्देन भक्षिणादि विवक्षितं तत्स च विभोस्पर्शरहितेचात्मादा
वसंभवादव्याप्तिरित्यर्थः अतिव्याप्तिं चाह कलधौतेति कलधौतं रजतं रजतमलस्यापि नान्तरीयकतया रजतज्ञानप्रयुक्तादानादिभाक्त्वमस्ती
ति तदपि रजतज्ञानविषयः स्यादित्यर्थः द्वितीयं दूषयति नापीति इच्छाधारत्वात्मैवेति आत्मानवर्गलक्षणमव्यापकमित्यर्थः न चेच्छादिवि
षयत्वं तस्यैव निरूप्यमाणत्वाद्विविषयत्वस्य लक्षणान्तरं शंकते अथ ज्ञानेनेति घट इति ज्ञानाद्यद्धानादिज्ञानं जायते तं प्रति विषयत्वं हानादिया

तद्योगेवा तस्यैव विषयत्वनियामकत्वोपपत्तेः न द्वितीयः कराकर्षणादेर्व्यवहारस्यात्मादावभावात् कलधौतमला
देरपि नान्तरीयकतया तद्व्यवहारविषयस्य तज्ज्ञानविषयतापत्तेः नापीच्छादिरात्मनस्तवत्वदाधारतया तदन्यस्याविष
यत्वप्रसंगात् अथ ज्ञानप्रतिबद्धहानादिलक्षणज्ञानगोचरत्वं तद्योग्यत्वं वा विषयत्वं न ज्ञानगोचरत्वस्यैव निरूप्यमा
णत्वात् हानादिज्ञानानां च हानादिज्ञानान्तरजनकतया निर्विषयत्वप्रसंगात् जनकत्वे वा हानादिज्ञानानुपरमाद्विष
यान्तरसंचाराभावः सुषुप्त्यभावश्च प्रसज्येयातां व्यवहारयोग्यत्वे विषयत्वमित्येतौ कारेवयोग्यतायां योग्यतान्तरापेक्षाया
मेऽनवस्थानन्तरस्तु यदा मेयो योग्यतायां विषयत्वाभावः ॥ योग्यत्वमेव वा यत्तत्पूर्वं ज्ञानप्रति विषयत्वमित्यर्थः एतेनातीतादिसंग्रहो तत्त

देतदात्माश्रयेण दूषयति न ज्ञानगोचरत्वस्यैवेति किंच हानादिज्ञानानां हानादिज्ञानान्तरजनकत्वमस्ति न वा यदि नास्ति तदा हानादि
ज्ञानानां निर्विषयत्वप्रसंगः अस्ति चेत्तदतोऽव्याप्तिरित्याह हानादिज्ञानानामिति प्रथमं दूषयति जनकत्वे वेति ज्ञानान्तरजनकत्वेन तज्ज्ञा
नानामपि सविषयत्वसिद्ध्यर्थं ज्ञानान्तरजनकत्वे घटादिज्ञानानुपरमादः सुषुप्त्यभावश्च प्रसज्येयातामित्यर्थः द्वितीये दूषणमाह व्यवहार
योग्यत्वमिति उपलक्षणं चैतत् प्रथमपक्षस्यापि तेन हानादिज्ञानगोचरत्वेपि गोचरत्वान्तरमस्ति न वा यद्यस्ति तदानवस्था अथ नास्ति तर्हि तत्

शालिकनाथोक्तलक्षणमवतारयति अलमिहलक्षणांतरेणेति यस्यां संविदि योऽर्थोऽवभासते सोऽर्थस्तस्याः संविदो विषय इत्यर्थः उक्तं च
ग्रंथिकाप्रकरणे अत्र ब्रूमो य एवार्थो यस्यां संविदि भासते वेद्यः स एव नान्यद्धि वेद्यावेद्यस्य लक्षणमिति तन्निरूपयति मैवमिति घटा
दिद्रव्याणां संविल्लक्षणगुणाधिकरणत्वानुपपत्तेरिति उपलक्षणं चैतद्गुणकर्मसामान्यविशेषाणाम् इदमनिष्टं न भवतीत्यत उक्तं बाह्याना
मांतरत्वानुपपत्तेरिति तत्रानेषु लक्षणस्याव्याप्तिरिति भावः विषयसप्तमीपक्षं निराचष्टे न द्वितीय इति विषयत्वस्यैव निरूप्यमाणत्वादा
त्माश्रयप्रसंगादित्यर्थः किं च संविदीति सप्तम्या संविदो विषयत्वाभिधाने वैपरीत्यमपि स्यादित्याह संविद इति संबंधिमात्रमिति तृतीयपक्षं
निराचष्टे न तृतीय इति संविदीति कोऽर्थः संवित्संबंधीति तथा च नयनाद्यपि तथेति घटज्ञानस्य नयनाद्यपि विषयः स्यादित्यतिव्याप्तिरित्य

अलमिह लक्षणांतरगवेषणापरिश्रमेण यस्यां संविदि योऽर्थोऽवभासते स तद्विषय इति लक्षणनिरुक्त्यनुपपत्तेरिति चेन्मैवं
विकल्पासहत्वात् संविदीति सप्तम्या किमधिकरणं विवक्ष्यते अथ विषयः किं वा संबंधिमात्रं सतिसप्तमी वा नाद्यः घटादिद्र
व्याणां बाह्यानामांतरसंविद्गुणाधिकरणत्वानुपपत्तेः न द्वितीयः तस्यैव निरूप्यमाणत्वात् संविदो विषयत्वं घटादीनां च
विषयित्वमिति वैपरीत्यापत्तेश्च न तृतीयः संविज्ञानकतया तत्संबंधिनो नयनादेरपि तद्विषयत्वप्रसंगात् संविदि भास
त इति भासमानतया विशेषणात् न नयनादावतिप्रसंग इति चेत् भासमानताया एवाद्याप्यनिरूपितत्वात् ॥ अर्थः न च तस्या

पि विषयत्वादनतिव्याप्तिः विशेषपरत्वात् इतरथा वस्तुमात्राभिधानापातात् ननु यद्यपि संबंधिमात्रं सप्तम्या प्रतीयते तथापि भासत इति विशे
षणात् भासमानतया संबंधि विवक्षितं तथा चाप्रकाशमाननयनादिव्यावृत्तिरिति शंकते संविदीति भानविषयत्वं हि भासमानत्वं तथा चात्मा
श्रयत्वमिति परिहरति न भासमानतयेति सतिसप्तमीपक्षं निराचष्टे न चतुर्थ इति अत्रापि संविदि सत्यां यद्भासते स विषय इति वक्तव्यं न
था चात्माश्रयत्वमित्यर्थः न च ज्ञाने सति व्यवहारयोग्यत्वमेवार्थस्य भासमानत्वमिति वाच्यं योग्यताया पूर्वोक्तदूषणापातात् सौगताभिमतं लक्ष
णं शंकते ज्ञानेति घटज्ञानं घटत्वाकारमिति यो यज्ज्ञानाकारस्तदर्पको यो हेतुः स विषय इत्यर्थः तेन च न नयनादिव्याप्तिः न ह्युक्तं हि भिन्नकालं कथं ग्राह्य
मिति चेत् ग्राह्यतां विदुः हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षममिति दूषयति नेति ननु यद्यपि नयनादीनां ज्ञानस्वभावभूताकारहेतुत्वमस्ति तथापि

लक्षणान्तरं दूषयति नचेति तत्र हेतुः अतीतादीति कर्म नाम कारकविशेषः कारकं च कारणविशेषः कारणं च कार्ये संभवति तेन नित्यस्येश्वरज्ञानस्य तद्विषयस्य च विषयविषयिभावेन व्याप्तौ तदिदं लक्षणं अतीतादेस्त्वविद्यमानादेव निष्पन्न प्राक् लक्षणसत्त्व लक्षणकारणत्वाभावादव्याप्तिरित्यर्थः उपलक्षणं चैतदनुमानादेः कर्मत्वं च न फलभाक्त्वं तच्च दूषितं पुरस्तात् लक्षणान्तरं शंकते संबंधान्तरमिति ज्ञानस्य विशेषणं विषय इत्युक्ते ज्ञानगतसंख्यादिजातिनिषेधात्मनि चक्षुरादिषु च समवायकार्यकारणभावसंबंधाभ्यां यथायथं ज्ञानं प्रति विशेषणत्वेऽतिव्याप्तिः स्यादतः संबंधान्तरमन्तरेणेत्युक्तं यद्यपि घटतज्ज्ञानयोः कार्यकारणभावोस्ति तथापि सनेश्वरज्ञानेऽतीतादौ च संभवमननिरिक्तश्चेत्यभिप्रायः विशेष्यं चेति तेन विशे

न चतुर्थः आत्मसमानत्वादिति दूषितेरेव ज्ञानाकारार्पको हेतुर्विषय इति चेन्न ज्ञानतदाकारयोर्भेदाभावेन सर्वेषामपि ज्ञानहेतूनां तदाकारसमर्पकत्वाद्विषयत्वप्रसंगात् दृश्यमानतया तदाकारसमर्पको विषय इति चेत् न दृश्यमानताया एवाद्याप्यनिरूपणात् न च ज्ञानकर्मत्वं विषयत्वं अतीतादिज्ञानस्येश्वरज्ञानस्य च कर्मकारकाजन्यत्वेनाविषयत्वप्रसंगात् संबंधान्तरमन्तरेण ज्ञानस्य यद्विशेषणं स तद्विषयो विशेष्यं च तेन विषयीति चेत् न मनःसमवेतं रूपज्ञानमित्यत्र व्यभिचारात् संबंधान्तरमन्तरेणैव मनःसमवायस्य रूपज्ञानस्य च विशेषणविशेष्यभावेपि मनःसमवायरूपज्ञानयोर्विषयविषयित्वाभावात् तत्र समवायस्यानुव्यवसायज्ञानविषयत्वेपि रूपज्ञानाविषयत्वात् तदेवं विषयविषयिभावानिरूपणात् आत्मन्यध्यस्ततया चासिद्धो प्रपंचस्य सत्यत्वे दृश्यत्वानुपपत्तिर्बाधिकेति स्थितम् न च भेदस्य मिथ्यात्वे शब्दान्तरादेः कर्मभेदप्रतिपादकस्याप्रामाण्यप्रसंगः घटपटादेरिव व्यावहारिकस्यैव भेदमात्रस्य कर्मगोचरस्य तत्रतत्र शब्दान्तरादिभिः प्रतिपाद्यमानत्वात् तत्त्वबाधायोग्यतालक्षणस्य सत्यत्वस्य प्रतिपादने तेषामौदासीन्यात् ॥

षणेनेत्यर्थः तदेतदतिव्याप्त्या दूषयति न मनःसमवेतमिति मनःसमवेतमित्यत्र हि समवायो ज्ञानं प्रति विशेषणं न चानयोः संयोगसमवायादिसंबंधान्तरमस्तीत्यतिव्याप्तिरित्यर्थः अस्यैव प्रपंचः संबंधान्तरमित्यादिः ननु मनःसमवेतं ज्ञानमित्यस्यानुव्यवसायस्य समवायस्य च विषयविषयिभावात्तस्यमेव समवायः तत्र च तल्लक्षणगमनमनुगुणमेवेत्यत आह तत्र समवायस्येति अनुव्यवसायं प्रति विषयत्वेपि यत्प्रति विशेषणं न तत्प्रति विषयत्वमित्यर्थः एवं नास्ति घटज्ञानमित्यादावभावस्यापि घटज्ञानादिविषयत्वप्रसंगः प्रतिपादितं बाधकतर्कमुपसंहरति तदेवमिति यत्तु शब्दान्तराद्यप्रमाणप्रसं

निरूपितमनुमानमुपसंहरन्ति तदेवमिति तथाविमतः संसर्गः एतद्द्वैतनसंसर्गोन्यान्यावाध्यान्यतरात्मः प्रमेयत्वादित्याद्यप्यत्रमहावि
द्याद्रष्टव्याः यद्यपीदमनुमानं घटादिमिथ्यात्वं साधयति तथापि तत्स्वस्य तत्साधयितुमलम् आत्माश्रयात् नाप्यन्येन अनवस्थापातात् तत्
थाचनाद्वैतसिद्धिः धर्मित्वादीनां च कियतां हेतूनामस्मिन्ननुमाने नैकान्तिकत्वमित्यभिप्रेत्य प्रत्यवतिष्ठते नन्वस्यानुमानस्येत्यादिना शंकते
जिज्ञासायामिति यदिहि प्रथमानुमानसमसमय एवानन्तानुमानस्फुरणापत्तिः स्यात् तदानुपलब्धिपराहततया मूलक्षयकरीनात्रतत्
त्यर्थः दूषयति यद्यदुक्तसाधनमित्यादिना तत्तदनुमानजातस्य मिथ्यात्वेन साध्यव्याप्तित्वात् व्याप्तिग्रहणकाले सर्वेषामेवस्फुरणप्रसा

तदेवं निरस्तसमस्तप्रत्यनीकमनुमानं प्रपंचमिथ्यात्वे मानमिति सिद्धं नन्वस्यानुमानस्य मिथ्यात्वं किमनुमानांतरेण सिध्य
ति किं वा स्वेनैव आद्येऽनवस्थानस्य तस्यानुमानस्य मिथ्यात्वसाधनेऽनुमानांतरापेक्षणात् जिज्ञासायां सत्यां तत्तदनुमानप्र
वृत्तेर्नानवस्था मूलक्षयकरीति चेन्न यद्यदुक्तसाधनं तत्तदुक्तसाध्यमिति व्याप्तिग्रहणसमये तस्य तस्यानुमानस्य मिथ्यात्वानधि
गमे सर्वोपसंहारवती व्याप्तिर्न सिद्ध्येत् अधिगमे च तदधिगमाय तत्तदनुमानांतरं तदैवापेक्षणीयमिति कथं न मूल
क्षतिः द्वितीये तु स्वात्मनि वृत्तिविरोधः स्वगतमिथ्यात्वस्य स्वेनैव ग्रहणादिति चेन्मैवं शब्दशब्दवत्प्रपंचसत्यत्वानुमानवदऽ
ध्ययनविधिवच्चाविरोधात् ननु नाध्ययनविधिप्रयुक्तमध्ययनं तस्याध्यापनविधिप्रयुक्तत्वात् तथाहि अध्ययनवि ऽमूलस्थे

इत्यर्थः स्वेनैव स्वमिथ्यात्वसाधने दूषणमाह द्वितीये त्विति तमिममाक्षेपं परिहरन्ति मैवं शब्दशब्देत्यादिना यथाहि शब्दशब्दः शब्दत्वाका
न्तं शब्दजातं विषयीकुर्वन् स्वमपि विषयीकरोति यथा वा सर्वप्रपंचसत्यत्वानुमाने स्वात्मन्यपि सत्यत्वं साधयतीति भवद्भिरभिमन्यते यथा
वा स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिः स्वाध्यायशब्दवाच्यसमस्तवेदराशेरध्ययनं विदधानस्तदंतर्वर्तिनः स्वात्मनोपि विधत्ते तेषु यः प
रिहारो द्वारभेदादिः सोऽत्रापि समान इत्यर्थः अध्ययनविधेर्विधायकत्वमुक्तमसहमानः प्राभाकरः प्राह ननु नाध्ययनेति नन्वविहितस्य
कथमनुष्ठानमित्यत आह तस्येति ननु श्रूयमाणो विधौ कथमेतत्प्रयुक्तत्वं तत्राह तथाहीति स्वविषयरूपमध्ययनं स्वविषयाध्ययनम्

ननु यद्यप्यत्र स्वर्गादिवत्कामं नित्यं वा जीवनादिवत् किंचिन्निमित्तं न श्रूयते तथापि यथा विश्वजिता यजेत अमावास्यायामपराह्णे पिण्डपि
तृयज्ञेन चरन्तीत्यत्र वा श्रूयमाणोऽपि स्वर्गकामोऽधिकारी कल्पितः तथाहि विश्वजिता यजेतेत्यत्राश्रूयमाणोऽधिकारी कल्प्य उत नेति संदेहे —
द्वारमित्यत्र क्रियान्वयं विना कारकाणामिव विषयेणापर्यवसितान्विताभिधानस्य कार्यस्याधिकारिणा विनानुपपत्त्यभावात् अनध्याहारइ
तिप्राप्यराद्धांतितं कर्तृव्यापारकृतेः कर्त्रा विनानुपपत्तेस्तन्निरूप्यकार्यस्याप्यनुपपत्तिरिति सोऽध्याहर्तव्यः स चासंबद्धकार्यसंबंधीन
संबद्धा न इति स्वसंबंधित्वेन कार्यबोद्धा नियोज्यो भवति तत्रापि सर्वकल्पनायां नैरर्थक्यात् यस्य कस्य चित्कल्पनायां विनिगमनाभावात्सर्वाभि
लषितस्वर्गकामोऽधिकारी कल्पितश्चोदनायां फलाश्रुतेरित्युपक्रम्याधिकरणान्तरेण स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वादित्यनेन सर्वं पिण्ड
पितृयज्ञेऽमावास्यायामिति कालपर उत कर्मपर इति संशये कर्मपरत्वात्तदंगत्वमिति पूर्वपक्षे कर्मपरत्वे लक्षणाप्रसंगात् कालपरत्व

धिर्न स्वविषयाध्ययनस्यानुष्ठापनस्य समः निर्नियोज्यत्वान्न ह्यत्र कामो जीवनादिनिमित्तं वान्यः कश्चिन्नियोज्यः प्रतीयते नापि
विश्वजिदादिवत्कल्पयितुं शक्यः अध्यापनविधि — प्रयुक्तित एव तत्सिद्धेर्यस्याध्ययनस्य सिद्धौ नियोगसिद्धेः कल्पका
भावात् न चाध्यापनविधेरपि निर्नियोज्यतयाननुष्ठापकत्वमाचार्यकरणकामस्य नियोज्यस्य प्रतीतेः तथा ह्यष्टवर्षं ब्राह्मणमु
पनयीत तमध्यापयीतेति श्रूयते तत्र संमाननोत्संजनाचा  मारात्स्वतंत्राधिकारत्वेन स्वर्गकामाधिकार्यध्याहृतः पिण्डपितृ
यज्ञः स्वकालत्वादनंगं स्यादित्यत्र तद्वदत्र किं न स्यादित्यत आह नापि विश्वजिदादिवदिति ननु तमध्यापयीतेत्यत्रापि न कश्चिन्नियोज्यः
प्रतीयते तो निर्नियोज्यत्वमुभयोः समानमिति कथमेतत्प्रयुक्तविषयत्वमितरस्येत्यत आह न चाध्ययनेति हेतुमाह आचार्यकरणकामस्येति।
आत्मनो यदाचार्यकरणमाचार्यत्वसंपादनं तत्कामस्येत्यर्थः नन्वाचार्यकरणकाम इत्यपि न श्रूयते इत्यत आह तथा ह्यष्टवर्षमिति श्रू
यते नाम तावतापि किमायातमाचार्यकरणादित्यत आह तत्र संमाननेति संमाननोत्संजनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः
अयमर्थः यद्यपि स्वरितञितः कर्त्रभिप्राये क्रियाफले इति कर्तृगामिफलाभिधायिनो नयतेरात्मनेपदं सिद्धं तथाप्यकर्त्रभिप्रायार्थोऽयमारंभः सं

लोकायते चार्वी बुद्धिमानाचार्यो लोकायते नयते शिष्यानुपनयते । ते हि सद्युक्तिभिराचार्येण प्रतिष्ठापितत्त्वद्व्ययः सन्तः पूजिता भविष्यन्तीत्यात्मने
पदार्थः उत्सञ्जनमुत्क्षेपणं यथा माणवकमुदानयते उत्क्षिपतीत्यर्थः आचार्यकरणमाचार्यत्वसंपादनं यथा माणवकमुपनयते आत्मानमा
चार्यीकर्तुं माणवकमात्मसमीपं प्रापयतीत्यर्थः ज्ञानं प्रमेयनिश्चयः यथा नयते चार्वी लोकायते तन्मते प्रमेयतत्त्वं निश्चिनोतीत्यर्थः भृतिर्वेतनं यथा
कर्मकरानुपनयते भृतिदानेन समीपीकरोतीत्यर्थः विगणनं मृणादेर्निर्यातनं यथा मद्राः करं विनयन्ते करदानेन निवर्तयन्तीत्यर्थः व्ययो धर्मा
दिषु विनियोगः यथा शतं विनयते सहस्रं विनयते धर्मार्थं विनियुङ्क्ते इत्यर्थः अथ कथमेतेष्वित्युक्तम् अजां नयति ग्राममित्यादिषु विनिवृत्तये इ
ति तस्मादुपनयीतेति श्रौतमेवाचार्यकरणमित्यर्थः ननु भवतूपनयनस्याचार्यकरणं फलं तत्र श्रूयते इति किमायातमध्यापनस्य सनियो
ज्यत्व इति तत्राह उपनयीत तमध्यापयीतेति चेति एकप्रयोगतेति अष्टवर्षं ब्राह्मणमुपनयीत उपनीय च तमध्यापयीतेति श्रुतेः एकप्रयोगता

र्येकरणेति सूत्रेणाचार्यकरणे नयतेरात्मनेपदविधानात् उपनयीत तमध्यापयीतेति चोपनयनाध्यापनयोरेकप्रयोगता
वगमात् उपनयनपूर्वकाध्यापनस्याचार्यत्वप्रतीतेः तत्कामिनो नियोज्यत्वावगमात् न निर्नियोज्यताध्यापनविधेः तथा च
स्वविषयस्याध्यापनस्यानुष्ठानं प्रयुञ्जानोऽध्यापनविधिस्तन्निष्पादकमध्ययनमपि प्रयुङ्क्ते तेन विध्याक्षेपलक्षणोपादानप्रमा
णेनान्यत एवाध्ययनसिद्धेर्नाध्यापनविधिप्रयुक्तमध्ययनमिति ॥ वगम्यते वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेतिवदित्यर्थः तथा चै
कदेशस्यैवानुष्ठानात्फलसिद्धिरिति सोपनयनाध्यापनादाचार्यत्वसिद्धिरिति भावः तथा च स्मृतिः उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः सक
ल्पं सरहस्यं च तमाचार्यं प्रचक्षते इति ननु भवतूपनयनाध्यापनयोरेकप्रयोगत्वं यागाङ्गीभावावगमादेरोषु तस्याङ्गित्वोपसंहारस्तस्य तत्त्वनि
त्यस्याचार्यकरणस्य कथं नियोज्यविशेषणत्वं न सत्रे स्वर्गादिवत्कामिशिरस्कत्वप्रतीतेरित्यत आह तत्कामिन इति रात्रिसत्रन्यायेन फलत्वविपरि
णामने इति भावः नन्वाध्यापनविधिः स्वविषयमध्यापनं विहाय कथमध्ययनं प्रयुञ्जीतेत्याशङ्क्याह तथा च स्वविषयस्येति ननु विधिर्हि स
र्वत्र स्वविषयेण तदङ्गेन चापुरुषमनुष्ठापयति न चाध्ययनस्याध्यापनाङ्गत्वे किंचन श्रुत्यादीनामन्यतमत्प्रमाणमस्ति न चोपकारमात्रादङ्गत्वं गो

वि०सु० टी० न० पृ०

समाधानमुपक्रमते अत्रोच्यत इति अत्रनावदध्यापनविधेरपिसमानमेवनिर्नियोज्यत्वमुपनयनस्याङ्गत्वेनतत्रश्रूयमाणस्यापापश्लो
कश्रवणवदर्थवादत्वादुपसंहारायोगादङ्गीकृत्यापितावदुपादानमन्यथैवोपपत्त्यादूषयतिभवतुनामेति हेतुमाह कामाधिकारे इति अ
धिकारोनियोगः एषहिप्राभाकरराद्धान्तः अन्यतोऽप्रवृत्तः खलुपुरुषःशास्त्रेणप्रवर्तनीयस्तथाचकाम्यनियोगेषुफलवदेवकरणांशे
पिरागतएवप्रवृत्तइतिकर्तव्यतासुतुशास्त्रेणप्रवृत्तइति अस्तुप्रस्तुते किमायातमित्यत आह अध्यापनस्यापीति ननुभवतुकरणांश
ध्यापनेकामतःप्रवृत्तिस्तदङ्गेऽध्ययने किमितिविधिर्नप्रवर्तयतिज्योतिष्टोमाङ्गेष्विवदीक्षणीयादिषु नचदृष्टार्थत्वाद्विधे यतस्तत्रनि
यमो येनाध्ययन जन्यादृष्टस्यावघातादिष्विवान्यतोऽप्राप्तस्यविद्यमानत्वादित्यत आहनचाध्यापनेति ननुश्रुत्यादिप्रमाणाभावेपितत्प्रयुक्तत्व

अत्रोच्यतेभवतुनामसनियोज्यतयाध्यापनविधेस्तथापिनाध्यापनविधिप्रयुक्तताऽध्ययनस्यसिद्ध्येत् कामाधिकारेकरणांशे
रागस्यैवप्रवर्तकत्वात् स्वाध्यापनस्यापिकाम्यत्वात् नहिविषयरागेणैवतत्सिध्यादकेप्यध्ययनेनुष्ठानेलाभात् अध्यापनविधे
रनुष्ठापकत्वकस्यनानुपपत्तेःनचाध्यापनाङ्गत्वादध्ययनेविधितःप्रवृत्तिराशंकनीयातत्रश्रुत्यादीनामन्यतमप्रमाणस्यादर्श
नात् नचाध्यापनविधिप्रयुक्तत्वादध्ययनस्यतदङ्गत्वंप्रयुक्तेर्व्यभिचारात् नहिभिन्नेजुहोति स्कन्नेजुहोतिइत्यादौभेदना
दिनाप्रयुज्यमानोहोमस्तदङ्गमंगीक्रियतेनतत्प्रयुक्तेरध्ययनस्याद्याप्यसिद्धेरङ्गत्वेनप्रयुक्तिःप्रयुक्तोचतदङ्गत्वमितिपरस्परा
श्रयत्वाच्चकिंचाध्ययनविधावधिकारिणमंगीकुर्वतानियोज्यःकस्मान्नस्वीक्रियतेइतिवाच्यम्॥०॥लक्षणोपादानप्रमाणात्तदङ्गत्व

मुक्तमितितत्राह नचाध्यापनविधौतिभिन्नेजुहोतीत्यादौभेदनादीनांनिमित्तत्वेननैमित्तिकहोमं प्रतिप्रयोजकत्वमस्तिअथचनाङ्गत्वं
भेदनादीनांनिमित्तत्वेनानुष्ठेयतयाङ्गत्वानुपपत्तेःअतःप्रयुक्तिर्व्यभिचारिणीत्यर्थःअंगीकृत्यप्रयुक्तिमेतदुक्तंसैवतुनास्तीत्याह तत्प्रयुक्तेरि
तिरागस्यैवोभयत्रप्रयोजकत्वादितिभावः नन्वङ्गत्वात्प्रयुक्तिरित्यत आहअङ्गत्वेनप्रयुक्तिरितिकिंचनोपादानात्मकंकिंचिन्मानमेयानिरूपणात्
तस्माच्छ्रुत्यादिषड्केणविनियोगोनचात्रतत्रेयत्प्रोक्षणादेःक्रत्वर्थत्वमुपादानलभ्यमितितत्तच्छ्रुत्यैवापूर्वसाधनत्वेव्रीह्यादिगतेविनियोगात्तथापिकथं

पूर्ववादी नियोज्यानंगीकारे कारणमाह अनुष्ठानसिद्धय इति दूषयति अधिकार्य्यपीति अनुष्ठानार्थमधिकार्य्यपेक्षान्तञ्चेदन्यतः सिद्धं किमर्थ-
मधिकार्य्यपेक्ष्यत इत्यर्थः शंकते अधिकारीति अयमभिसंधिः यद्यपि कार्य्यमेव नियोगापरपर्य्यायं वाक्यार्थस्तथापि तदेवेष्टसाधनतानिबंधनं
यथाहुः फलसाधनता तत्र कारणं तेन कार्य्यतेति तच्चेष्टसाधनत्वं कस्येति भोक्तारमधिकारिणमाकांक्षमाणं न तावत्पर्य्यवस्यति यावन्नाधिका-
रिविशेषप्रतीतिरिति नरेतन्नियोज्येपि तुल्यं नियोगस्यापि नियोज्यव्यतिरेकेण पर्य्यवसानादिति परिहरति नियोज्येपीति आपाद्यदूषणमि-
दं व्याघातादि नियोगे पुनरेतन्नंगीकारात् किंच विषयसिद्धिद्वारस्वसिद्धिर्हि विधेः पर्य्यवसानं सा चेदन्यतोपि सिद्धा पर्य्यवसित एव विधिरित्यधिका-

अनुष्ठानसिद्ध्यै नियोज्योऽपेक्षितव्यः तच्चान्यत एव सिद्धमिति नासावंगीक्रियत इति चेन्नहि अधिकार्य्यपि नापेक्षणीयः अनु-
ष्ठानस्यान्यत एव सिद्धेः अधिकारी विधिपर्य्यवसानायापेक्ष्यत इति चेत् नियोज्येपि तुल्यं तेनापि विना नियोगापर्य्यवसानात्।
अन्यतोपि विषयानुष्ठानसिद्धौ च नियोगसिद्धौ का नाम विधेरपर्य्यवसानवाचोयुक्तिः किंच तमध्यापयीतेति च नायमध्यापने
विधिः हृत्यर्थत्वेनाध्यापनस्य याजनवत्प्राप्तत्वात् उक्तं हि षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका याजनाध्यापने चैव वि-
शुद्धाच्च प्रतिग्रह इति तस्माद्यथैतयाऽन्नाद्यकामं याजयेदित्यादिषु याजनं न विधीयते किं तु एतयान्नाद्यकामो यजेतेति वाक्या-
र्थः तथेहाप्यष्टवर्षं ब्राह्मणमुपगच्छेत् सोऽधीयीतेति वाक्यार्थः स्वीकार्य्यः न चालौकिकनियोगार्थत्वेनाध्यापने विधिः याजनेपि
तेन तथाप्रसंगात्

र्य्यपेक्षापि निर्निबंधनेत्याह अन्यतोपीति अध्यापनस्य विधेयत्वमंगीकृत्यैतदुक्तं तदेव नास्तीत्याह किंचेति तत्र किं हृत्यर्थं यदध्याप-
नं तदेव विधेयमुत लौकिकनियोगार्थः कश्चिन्नाद्य इत्याह हृत्यर्थत्वेनेति अध्ययनाध्यापनयजनयाजनदानप्रतिग्रहात्मकानां षण्णां कर्म-
णां मध्ये त्रीणि जीविकाजीवनसाधनं तान्येवाह याजनेत्यादिना ननु यदि न विधानं कथं तर्हि उपनयीताध्यापयीतेति विधीयत इत्यत आ-
ह तस्माद्यथैतयेति एतयाऽवेष्ट्या यथा हि न तावद्यथाश्रुति याजनं विधातुं शक्यं हृत्यर्थत्वेन तत्र स्वत एव प्रवृत्तत्वात्तो प्राप्तप्रयोज्यरूपसा-
क्षात्कर्तृव्यापारयागपरो विधिस्तथेहाप्यन्यतोप्राप्तप्रयोज्यमाणवकव्यापाराद्युपगमनाध्ययने विधीयेते इत्यर्थः न द्वितीय इत्याह न चालौकिकेति

सिंहावलोकितेन अध्यापनविधेयत्वपक्ष एव दूषणान्तरमाह अपि चाध्ययनमिति सान्वयः सवंशः विरोधा दिति काम्यं हि कामनाधीनं का
मना हि कादाचित्की उपायान्तरादपि तत्फलप्राप्तौ पराखविषयं नानुष्ठापयति तदा नित्यमध्ययनं कथं प्रयुंजीत अविद्यमानस्याप्रयोजक
त्वात् अथ स्वयमपि यावत्प्र- योज्यं विद्यमानं तदा काम्यत्वविरोध इति अस्तु वा गुरुभिर्विचारेण भवत्वध्ययनं ध्यापनविधिप्रयुक्तं तथापि स एवाध्या
पनविधिर्दृष्टान्त इत्याह अस्तु वेति तदेवमनुमानं प्रपंचमिथ्यात्वे प्रमाणमभिहितं अथागममपि प्रमाणमुपन्यस्यति नैकमेवेति पूर्वपक्षोक्तदूषणमनू

अपि चाध्ययनं नित्यं योनधीत्य हि जो वेदानन्यत्र कुरुते श्रमं स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वय इत्यादिना ऽकरणे प्रत्यवाय
स्मरणात् अध्यापनं चानित्यं काम्यत्वात् तथा च कथं नित्यमनित्येन प्रयुज्येत विरोधात् तस्मादध्ययनविधिप्रयुक्तमेवाध्ययनमि
ति न दृष्टान्तासिद्धिः अस्तु वाध्यापनविधिप्रयुक्तमध्ययनं तथाप्यध्यापनविधिरखिलवेदस्वाध्यायाध्ययनं विदधानः स्वयं वाक्याध्याप
नमपि विधत्त इति स एव दृष्टान्तो भविष्यतीत्यलमतिविस्तरेण नत्वेकमेवाद्वितीयमित्याद्यागमोपि न तत्र प्रमाणं न चाद्विती
यशब्दस्य सजातीयवस्त्वन्तरनिषेधपरः संकोचे कारणाभावादेकत्वविशेषणेनैव सजातीयस्य निषिद्धत्वात् सजातीयमात्र
निषेधपरत्वे चैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानस्य वाचारंभणश्रुतेश्चैतदात्म्यमिदं सर्वमित्याद्युपसंहारस्य च बाधप्रसंगात्
न चैकमित्येकत्वसंख्याविधानपरं तत्रैव तत्स्य त्वनुमतेः इति वाच्यं एकं रूपमेका संख्या एको ऽभाव इत्यादावपि प्रयोगात् ॥

दूषयति न चेति संकोच इति अद्वितीयमित्यत्र द्वितीयमात्रवाचिनो द्वितीयशब्दस्य द्वितीयविशेषेण तन्निष्ठनिषेधकनञ्समस्तद्विशेषनिषेधे वा
संकोचे प्रमाणाभावादित्यर्थः अन्यतः सिद्धत्वाच्च नानेन तन्निषेध्यमित्याह एकत्वविशेषणेति किं च सजातीयमात्रनिषेधपरत्वे समस्तद्वैतनि
षेधपरत्वप्रतिपादकोपक्रमपरामर्शोपसंहाराख्य विरुद्ध्येरन्नित्याह सजातीयेति नन्वेकशब्दो न सजातीयनिषेधपरोऽपि तु एकत्वसंख्या
भिधानपरः यथाह मानसमनोहरकार एकत्वसंख्यामाचष्टे तन्नैव लोकेत्वनुमतेः लोकशास्त्रेष्वपि वेदे बाधकत्वादिति तत्राह न चैकमिति संख्यारहि

अद्वैतसिद्धि प्रथम

यत्तु नैवोक्तं आनंत्ये पुनरुभयाभाव एव तन्नैव लोके व्युत्पत्तेरिति तदप्यनूद्य दूषयति आनंत्यमपीति तत्र हेतुः पूर्वापरेति अस्ति नावच्छि-
न्नमाकाशमनंतं चेति प्रयोगः तत्र यद्यनंतपदेनैव पूर्वापरकालावच्छेदरूपोभयाभावो ऽभिधीयते तन्निषेधश्चानेन पदेनोच्यते तदा नित्यशब्दः
पुनरुक्तः स्यादित्यर्थः अथ देशकालकृतो ऽन्तः उभयोस्तथापि पुनरुक्तिरिति भावः यस्तु पूर्वं यस्मिन्नाव्युत्पन्नभावाभिहितं तं दूषय-
ति न चान्योन्याभावेति सर्वत्र ह्यभाववाचकशब्दानां प्रतियोगिवाचकशब्दव्युत्पत्तिं तं स्वव्युत्पत्तिसत्त्वे तो हेतो यौगिकत्वाद्यौगिकानां चा-
वयवव्युत्पत्तिं तत्स्वव्युत्पत्तेः समुदायव्युत्पत्त्यनपेक्षणात् तदिहानंतपदस्यावच्छेदत्वपेव्युत्पत्तेर्नञ्समस्तनिषेधव्युत्पत्त्या पृथक् समुदायस्य
व्युत्पत्त्यपेक्षेत्याह अनंतशब्दस्येति यत्तु नेह नानेत्यत्र ब्रह्मस्वारि नानात्वनिषेधादेकब्रह्मेति सिद्ध्यतीति तन्नु हेतुनिषेधस्युक्तं तन्निषेधतीति नेह
नानेति अयमभिसंधिः प्रसक्तं हि सर्वत्र निषेध्यं नाप्रसक्तं यत्तु क्वचिदप्रसक्तस्यापि निषेधो यथा नांतरिक्षेन दिवीत्यत्र गत्यंतरं नास्ति न च

आनंत्यमप्युभयाभाव एव तत्रैव तस्य व्युत्पत्तेरित्यपि न पूर्वापरकालानवच्छेदस्यैवेहानंतपदेन विवक्षायां नित्यमाकाशम
नंतं चेति प्रयोगानुपपत्तिप्रसंगात् न चान्योन्याभावाधिकरणत्वानधिकरणो ऽत्यन्ताभावो दोषः अंतशब्दस्य देशतः कालतो वस्तुतश्च
परिच्छिन्ने व्युत्पन्नत्वात्तस्य नञ्समासेन त्रिविधस्याप्यंतस्य निषेधकत्वोपपत्तौ पृथग्व्युत्पत्त्यनपेक्षत्वात् नेह नानास्ति किंचनेति च न ब्र-
ह्मणि नानात्वं निषिध्यते अप्रसक्तत्वात् न हि लोकतः श्रुतितो वा वादिप्रसिद्धितो वा ब्रह्मणि नानात्वं प्रसक्तं येन प्रतिषिध्येत ॥
नानाशब्दस्य भावप्रत्ययांततया भावाच्च न नानात्वनिषेधः तन्निषेधे वा संकोचे कारणाभावात् सजातीयविजातीयस्वगतनाना-
त्वनिषेधाद्ब्रह्माद्वैतमेव पर्यवसेदिति सत्यं घटकुड्यप्रभातहतांतःप्रसज्येत ॥ तत्रापि निषेधपरत्वं अर्थवादो ह्ययं रुक्मोपधानस्तु-

क्ममुपदधातीत्यनेनैकवाक्यत्वात् तस्याद्ययाकथंचन तत्स्तुतावेव तात्पर्यं अत्र तु द्वैतनिषेधपरत्वमिति विशेषस्तद्दिहापि प्रसक्तद्वैतप्रपंचनिषेध-
परत्वमुक्तं नाप्रसक्तेश्वरनानात्वनिषेधपरत्वमिति किंच नानात्वनिषेधपरत्वे नानाशब्देन द्व्येकयोरित्यत्र द्वित्वैकत्ववत् नानात्वं लक्षणीयं न च
विना कारणं सा युक्ता अतिप्रसंगात् प्रत्यक्षादिविरोधस्तु कारणं हृदि विपरिवर्तमानं पुरस्तादेव निरस्तं तदनेनाभिसंधिनाह नानाशब्दस्येति भवतु
नानाशब्देन नानात्वाभिधानं गोशब्देन गोत्वस्येव तथापि संकोचे कारणाभावात् समस्तप्रतियोगिकनानात्वनिषेधाद्द्वैतसिद्धिरित्याह तन्निषे-

वि॰ सु॰ टी॰ न॰ ९०

यानुश्रुतमन्तरस्यान्यथासिद्धिरुक्ता पूर्वपक्षिणा तामनुवादपूर्वकं दूषयति नचेदमित्यादिना प्रत्यक्षस्य योग्यपरत्वेन्द्रियकबुद्धिवृत्तेरप्रतीपत्तेरीश्वरत्व
तोऽतीन्द्रियोऽनन्तर्येति न बुद्धिवृत्त्यभिप्रायेणापि मायाशब्द इत्यर्थः नीरूपत्वादवाच्यत्वादनवतारप्रकरणत्वाच्च न योगीन्द्रियापेक्षयेति भावः पत्नीध्यक्षशा
क्त्योर्वेतुल्यं तत्राह मायाशक्तीति असंगतिमेवाह इंद्रियेति तत्र हि दशशतहरयो ऽश्वस्युक्ता इत्यतीन्द्रियाणि हरिशब्देनोच्यन्ते तद्वा तुल्याभिधाने।
श्वरशक्तिप्रतिपादनोपयोगीत्यर्थः उत्तरत्र तेषां हरीणामीश्वरमात्रतया बोधनमपि तत्पक्षे विरुद्ध्येत तेषां भिन्नत्वात्प्रथमादित्याह अयं वै हरय
इति नच निमित्तत्वाभिप्रायेण सामानाधिकरण्यानुपपत्तेरिति भावः यत्तु मृत्योः सम्मृत्युमित्यभेददर्शनस्य विधिस्तेन सम्मृत्युरिति नेतु द्वैतनिषेधप
रमिति तत्राह मृत्योरित्यपि हि त्वभेदप्रतिपत्तिमात्रविधिस्तेन तदा द्वैतनिषेधोऽस्यार्थः प्रस्तुतानर्थकरस्याद्वैतनत्वभ्रान्तिप्रसक्तेरिति भावः किंच

नचैवं द्वो मायाभिरितीन्द्रियद्वारकबुद्धिवृत्त्युपाधावीश्वरस्य भेदावभासनं स्येनावस्मरमिदं वाक्यं न तु द्वैतनिषेधपरमिति युक्तं ईश्व
रस्यानित्यानुमेयस्येन्द्रियकबुद्धिवृत्तिविषयत्वानंगीकारात् मायाशक्तिविशेषाभिधाने च युक्ता ह्यस्य हरयः शता दशेति वाक्यशेषो
नसंगच्छेत इन्द्रियबाहुल्याभिधानस्य मायाशक्तिविशेषाभिधानं प्रत्यनुपयुक्तत्वात् अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चा
नंतानि चेति वाक्यशेषे सर्वस्येश्वरात्मकत्वप्रतिपादनविरोधाच्च मृत्योः सम्मृत्युमिति च नाभेदप्रतिपत्तिविधिः नेह नानास्ति किंच
नेति द्वैतनिषेधवैयर्थ्यात् अनुपासनप्रकरणत्वाच्च पूर्वापरालोचनायां चास्य प्रकरणस्य निष्प्रपंचब्रह्मात्मत्वप्रतिपत्तौ तात्प
र्याधिगमात् ननु पूर्वापरवाक्यानामुपासनपरतापि दृश्यते आयुर्होपासतेऽमृतं विज्ञाय प्रज्ञां कुर्वीत सर्वस्य वशी सर्वस्येशानः
अन्नादो वसुदानो विन्दते वसु य एवं वेदेत्यादिश्रवणादिति चेन्नैवं प्रसंगागतत्वादुपासनानुवादस्य निष्प्रपंचब्रह्मात्मज्ञानप्रकरणोक्त

वेद्योपासनापरत्वे स्यादनुपासनेति अस्यैव प्रपंचः पूर्वापरेति नन्तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमिति विज्ञाय शास्त्रतः प्रज्ञां साक्षा
त्कारलक्षणां संपादयेदिति च तथा सर्वस्य वशी सर्वस्येशानः अन्नादोऽन्नमा समन्तादत्ता वसुदानो धनप्रद इत्यादिवेदस्य वसु धनं विन्दते लभते इति
तत्रैव पूर्वोत्तरभागयोरुपासनाश्रवणादुपासनाप्रकरणमेतदिति चोदयति ननु पूर्वापरेति प्रसंगागतत्वादिति निष्प्रपंचब्रह्मप्रकरणस्य

राम ९०

किंच तमेव धीर इति तमेव मन्य इति चैवकाराभ्यां यस्मिन्पंच पंचजनाः पंच प्राणादयः आकाशश्च प्रतिष्ठित इति पूर्ववाक्यारोपिताकाशादिप्रपंचव्या
वर्तनात्निष्प्रपंचब्रह्मपरत्वमेवेत्याह तमेव धीर इति निष्प्रपंचब्रह्मपरत्वेपि तस्य साक्षात्कारविधिपरत्वं भवत्विति नेत्याह प्रज्ञामिति यत्तु सर्वस्य वशी
त्यादिगुणकं य सर्वं वेद स तु पासनं विधेय इति तत्राह सर्वस्य वशीत्यादेरिति प्रतिपादितं खल्विदं कामादीनत्र तत्र चापततां तादिभ्य इत्यत्र उपजीव्य
विरोधं परिहरति आगमस्येति तस्येति प्रत्यक्षस्य स्यात् दुर्बलं भवति निषिध्यमानं तद्रीयपारमार्थिकत्वं नापेक्षते यच्चापेक्ष्यते सांव्यवहारिकं रू
पं तन्न बाध्यत इति ननु सांव्यवहारिकमपि रूपमागमेन बाध्यमेव तरथाऽद्वैतानुपपत्तेः तत्रैवोपजीव्यविरोधो दुर्निवार इति तत्राह सांव्यवहा
रिकेति यथा तेषां वास्तवत्वज्ञानं तत्त्वप्रतिपत्ति विरोधि न तथा सांव्यवहारिकाकारज्ञानमिति भावः तदेतदखिलमद्वैतश्रुतीनामन्यथासिद्धिपथ

तमेव धीरो विज्ञायेति च यस्मिन्पंच पंचजना इति च पूर्वोदिताकाशादितत्त्वाधारतया सप्रपंचता प्रसक्तावव धारणस्य तन्निवारणाप
रत्वात् प्रज्ञां कुर्वीतेति च प्रज्ञाशब्देन विज्ञानशब्दाभिधेयपरोक्षज्ञानातिरिक्तसाक्षात्काराभिधानांगीकारे तस्यानवधि सुखरूपात्मसा
क्षात्कारतया फलत्वेन विधेयत्वानुपपत्तेः सर्वस्य वशीत्यादेः स्तुतिपरतया गुणविधानार्थत्वाभावात् आगमस्य च स्वरूपप्रतीतौ परस्परा
र्थसंबंधावगमे च प्रत्यक्षादिसापेक्षत्वेपि तस्य तद्विषयस्य च पारमार्थिकत्वांशस्यानुपजीव्यत्वात्तद्बाधनेपि विरोधाभावात् सांव्यवहारि
कभेदाभावस्य ज्ञानोदयनान्तरीयकतया श्रुतिबाध्यत्वाभावात् व्यावहारिकभेदसापेक्षतया श्रुतेरप्रामाण्यप्रसंगः न चैतर्हि स्यादि
वाक्येषु परस्परपराहतिः सामान्यविशेषभावेनेच्छाविकल्पेन वाव्यवस्थितविकल्पेन वाऽविरोधोपपत्तेः ॥ परिभावनव्यवस्थितत्वेन सेश्व

लिकनाथापापिकथयतयत्तुक्तं तत्सैव त्वद्वैतस्य परस्परपराहत्योपहतत्वमुक्तं तन्नोपहरति नचेति सामान्यविशेषभावेनेति भिन्नविषयत्वस्योपल
क्षणमिदं मुख्यसामान्यविशेषभावाभावात् यथाहवनीये जुहोतीति होममात्राधिकरणतया प्राप्तस्याहवनीयस्य पदे जुहोतीति विशेषविधानात्
तदितरहोमविषयतया संकोचः नहि तथेह हिंसामात्रविषयतया निषेधः प्रवर्तते येन विशेषे संकोचमर्हेदपितु रागप्राप्तहिंसायां तावन्नापि निषे
धोपपत्तौ न क्रतुप्रकरणेपि निषेधपदप्रक्षेपकल्पनायां तस्यां प्रमाणाभावात् प्रत्युत पदार्थप्रवृत्तिस्तदर्थः प्रतिषेध इति न्यायेनानृतवदनाज्यभा
गादिप्रतिषेधस्येवास्यापि क्रत्वर्थत्वं स्यात् तथा च विधिप्रतिषेधयोरनयोर्ग्रहणाग्रहणवद्विकल्पः स्यादित्यनर्थपरं परैवस्यात्तस्माद्दुर्णितविभि

कर्मकांडज्ञानकांडयोर्विरोधं परिहरति न चेत्यादिना विद्याऽविद्यावस्थाभेदेनाभिन्नभिन्नवस्तुप्रतिपादनयोरविरोधः कर्मतत्त्यागविधानयोस्तु वि
द्वदविद्वत्पुरुषविषयत्वाच्छुद्धांतःकरणः परोक्षज्ञानवानविद्वान् यथा हि न हिंस्यात्सर्वा भूतानीति फलांशे निषिद्धस्य श्येनेनाभिचरन्यजेतेत्य।
स्यानवबुद्धप्रतिषेधवाक्यार्थपुरुषं प्रतिप्रवृत्तिरितरस्य त्वितरं प्रतीति विभागस्तद्वदिति भावः वारार्थमुपसंहरति तदेवमिति अनिर्वचनीयानाद्यवि।
द्योपप्लुतस्य पश्यतो प्रत्यवतिष्ठते नन्विति ननु सर्वेषामेव मोक्षवादिनामनित्याशुचिदुःखरूपसंसारे नित्यशुचिसुखख्यात्यभिरतिरिति ज्ञानमविद्या प्र
सिद्धैव किमत्र वक्तव्यमित्यत आह नहि ज्ञानाभावेति ननु सामान्येन सिद्धा विद्याया उपपत्तिवलादनाद्यनिर्वचनीयत्वमायातीत्यत आह उपप
न्नावेति अभाव एव प्रसिद्धिं निदर्शयति ज्ञानेति प्रागभावप्रध्वंसयोरिति सप्तमी व्यावहारिका व्यवहारकर्तॄणामेषां व्यवहारे उपलंभादित्यर्थः।

ननु च कर्मज्ञानकांडयोर्भेदाभेदविषयतया कर्मानुष्ठानतत्त्यागप्रतिपादकतया च विरोधः विद्याविद्यावस्थाभेदेन विद्वदविद्व
त्पुरुषविषयतया चाविरोधात् तदेवं मिथ्यात्वेलक्षणप्रमाणयोरुपपन्नत्वादनिर्वचनीयानाद्यविद्याविलसित एवायमात्मनि द्वै
तप्रपंच इत्यलमतिप्रपंचेन ४ ननु भोः केयमनिर्वचनीयाविद्या नाम नहि ज्ञानाभावव्यतिरेकेण काचिदविद्या प्रसिद्धा उपपन्ना
वा ज्ञानप्रागभावप्रध्वंसयोरेव न जानामीत्यविद्यात्वेन लोके व्यावहारिकव्यवहारोपलंभात् अविद्येति च विद्यापदेन समस्य।
मानस्य च नञस्तदभावस्तद्विरोधी तदन्यो वार्थोऽभ्युपेयः आद्ये विद्याभावस्यापि विद्याभाववन्नानिर्वचनीयता हि तृतीये तु संशय।
विपर्यासादेर्विद्याविरोधिनो गुणा तदस्य वा नानिर्वचनीयतोपपत्तिः प्रसिद्धभावस्वभावत्वस्य व्याकोपात् न तृतीयोऽपि विद्यातिरि
क्तस्य समस्तस्याविद्यात्वप्रसंगात् न चास्या लक्षणं प्रमाणं वोपपद्यते यतः न तावज्ज्ञाननिवर्त्यमज्ञानं पूर्वज्ञानस्यापि तन्निवर्त्यस्याज्ञान
त्वप्राप्तेः अनादित्वविशेषणाद्दोष इति चेन्न ज्ञानप्रागभावे व्यभिचारात् ५ एवं प्रसिद्धभावमेवाभिधायोपपन्नभावमाह अविद्येति अ
विद्येत्यत्र नञस्तावदर्थत्रयं संभवति तच्च निर्वचनीयभावाभावयोरेवांतर्भवतीत्यनिर्वचनीयः कश्चिदविद्याशब्दार्थ इत्यर्थः विद्याभावस्यापीति
यथा वेद्यस्य घटादेरभावो नानिर्वचनीयो भावाभावविलक्षणत्वाभावात् एवं निर्वचनीयस्य तथा ज्ञानाभावस्यापि नानिर्वचनीयत्वमित्यर्थः विद्यावि
रोध्यविद्येति द्वितीयपक्षं निषेधति द्वितीये त्विति एवमविद्याशब्दात्तावदनिर्वचनीयानाद्यविद्याप्रतीत्यभावमुक्त्वा लक्षणप्रमाणानिरूपणादपि तद

द्वितीये तु प्रागभावेऽतिव्याप्तिमाह अनादित्वे इति तृतीयेऽसंभवमाह अनादीति आधुनिकैः पार्थिवपरमाणुविशेषगुणानां पाकजत्वां
गीकाराच्च रूपत्वग्रहणं न हि तस्मिन् क्षितित्वे रेव चिरंतनैस्तेषामीश्वरज्ञाननिमित्तकविनाशांगीकारात् इत्यतिव्याप्तिर्लक्षणस्येत्यर्थः त्वदु
क्तलक्षणस्यापीति त्वदुक्तलक्षणस्यप्यभावादेः सत्त्वोक्तः चतुर्थं शंकते अथेति किमिदमनिर्वचनीयत्वं नाम न तावन्निर्वचनाविषय
त्वं अनेनैव प्रकारेणानिरुच्यमानत्वान्नापि सदसद्विलक्षणत्वं परस्परविरुद्धयोर्भावाभावयोरुभयवैलक्षण्यस्याप्यसंभवात् असंभवो दल

अनादिभावत्वे सति ज्ञाननिवर्त्यमज्ञानमिति चेन्न अनादेर्भावस्यात्मवन्नित्यत्वेन निवर्त्यत्वानुपपत्तेः अथ चिरंतनम
तानुसारेणानादेरेव भावस्य परमाणुगतश्यामत्वादेरिव निवर्त्यत्वमुच्यते न हि तस्मिन्नेवेश्वरज्ञाननिवर्त्येऽतिव्याप्तिः
त्वदुक्तलक्षणस्यापि तस्याज्ञानत्वाभावात् अथानाद्यनिर्वचनीयमज्ञानं तद्रूपेण निर्वचनागोचरत्वाद्भावाभावविलक्षण
त्वात्तस्यासंभवित्वात् भ्रमोपादानमज्ञानमित्यपि न आत्मन्यतिव्याप्तेः भ्रमोपादानत्वे भ्रमस्य सत्यत्वप्रसंगात् नात्मोपादा
नमिति चेन्न भ्रमस्यापि स्वरूपसत्यत्वात् विषयापहारादि तत्र मिथ्येति व्यवहारो न स्वरूपापहारात् तथात्वे चैतावन्तं का
लमिदं रजतमित्यभादित्यनुभवविरोधः अस्तु वा युक्तिविचारितरमणीयं लक्षणं तथापि तत्र किं प्रमाणं अज्ञोहमि
त्यनुभव इति चेन्न तस्य ज्ञानाभावविषयत्वेनाप्युपपत्तेः अनादित्वभावत्वयोस्त्वदभिमतयोरस्यानुभवस्योदासीन्याच्च ।

क्षणमित्याह निर्वचनेति भ्रमोपादानमज्ञानमिति आत्मनोऽपि हि जगद्भ्रमाधिष्ठानत्वमंगीक्रियते भवद्भिरन्यथा जन्माद्यधिकरणाद्य
नारंभप्रसंगात् अंगीकृतमस्माभिरप्यात्मनो विभ्रमसमवायिकारणत्वमिति भावः आत्मनि लक्षणावृत्तिं शंकते सत्योपादानत्व इति नाय
मनिष्टप्रसंग इति परिहरति न भ्रमस्यापीति ननु स्वरूपमात्रसत्यत्वे कथं मिथ्याज्ञानत्वप्रसिद्धिरित्यत आह विषयेति स्वरूपस्याप्य
पहारे प्रत्यभिज्ञाविरोधमाह तथात्वे चेति अनादित्वेति अज्ञोहमिति ज्ञानराहित्यमेव प्रतीयते न तु तस्याज्ञानस्यानादित्वभावत्वे अ
तोनेदमभिमतसाधकमित्यर्थः

वि·सु·
टी·न·
६२

स्यादेतत् अस्तितावत्सुप्तोत्थितस्यएतावंतंकालंन किंचिदवेदिषमितिपरामर्शः सचसुषुप्तिकालीनमज्ञानानुभवंगमयति अननुभूते
परामर्शायोगात् स्वानुभवस्तत्रप्रमाणमितितन्नदूषयति नापीतिसुषुप्तिकालीनज्ञानाभावगमकतयात्वन्मतेनावदन्यथासिद्धमस्ये
न्मतेतूत्थानानंतरकालीनमनुमानंपूर्वकालीनज्ञानाभावविषयमित्युभयथापिविवक्षितासिद्धिरित्याहत्वन्मतइतियानुवेदनपेक्ष
ऽन्यथासिद्धिरुक्तासानप्युक्ताधर्मिप्रतियोगिज्ञानाधीनज्ञानस्यज्ञानाभावस्यसुषुप्तौनिर्विशेषचिन्मात्रादप्रतीतेरितिशंकते ननुकथं

नापिसुप्तोत्थितस्यन किंचिदवेदिषंगाढंमूढोहमासमिति परामर्शोनुपपत्तिसिद्धः सुषुप्तिकालीनोनुभवःप्रमाणंत्व
न्मतेज्ञानाभावस्यापिसाक्षिसिद्धस्यपरामर्शोपपत्तेः अस्मन्मतेचेदानीमेवज्ञानाभावस्यानुमीयमानतयापराम
र्शसंप्रतिपत्तेः ननुकथंज्ञानाभावस्यनिर्विकल्पकचैतन्यगोचरतयासिद्धिः तत्सिद्धेर्धर्मिप्रतियोगिज्ञानप
राधीनत्वात् सुषुप्तौचतदसंभवादितिचेन्न ज्ञानाभावस्यापिस्वरूपेणभेदादिवन्निर्विकल्पकसिद्धस्यसविकल्प
कदशायांधर्मिप्रतियोगिज्ञानपराधीनतयास्फुटतरव्यवहारविषयत्वोपपत्तेः नचासिद्धतत्कालीनेधर्मिण्या
त्मनिज्ञानाभावस्येदानीमेवानुमीयमानत्वासिद्धिः प्रतिपन्नेहिप्रातश्चत्वरादौधर्मिणिसायंसमयेतत्रराजाभा
वानुमानमुपलभ्यतइतिवाच्यम्॥ ॥ ६ ॥ ७ ॥ ॥ ६ ॥ ६ ॥ ७ श्री ॥ ॥ ६ ॥ ६ ॥ ६ ॥

मिति प्रथमंनिर्विकल्पकानुभूतस्यापिपश्चात्सविकल्पकविषयतयाविशिष्टव्यवहारहेतुत्वंभवतिनचनिष्प्रसायेस्तत्तया
निर्विकल्पकाविषयत्वंभेदसादृश्यादिभिर्व्यभिचारादितिपरिहरति नज्ञानाभावस्यापीति ननुभवतुत्वत्पक्षेऽन्यथासिद्धि
स्तस्यसेतुकथमनुमानत्वमस्यमेषुप्तिकात्मनस्तदानीमननुभवात् तस्मिन्धर्मिणिज्ञानाभावानुमानायोगात् यथाहिप्रातश्चत्व
रेराजोनासीदित्यत्रप्रातःकालीनचत्वरानधिगमेगजाभावानुमानाभावइतिशंकां निराकरोतिनचासिद्धइति ॥ ॥ ॥

राम·
६२

नचवाच्यमित्युक्तं तत्र हेतुमाह संप्रतिपन्नेति यद्यपि सुषुप्तिसमये तत्कालीनात्मनो न ज्ञानमस्ति तथापि उत्तरकाले संभवत्येवानुमानेन तत्
स्य ज्ञानं तथा ह्यनिद्राणस्य संप्रतिपन्नोदयास्तमययोरंतरालकालानुभवान्निद्राकालात्पूर्वोत्तरास्तमयोदयकालयोस्तत्कालत्वेन हेतुनान्तरालकालव
त्तमनुमायतस्याप्यात्मवत्त्वकालत्वेनेतरकालवद नुमायतस्मिन् धर्मिणि ज्ञानाभावानुमानमप्रत्यूहमित्यर्थः उक्तं चतात्पर्यपरिशुद्धा
वुदयनाचार्यैरपवर्गप्रकरणे पूर्वापरावस्थयोरेकत्वप्रत्यभिज्ञानेन मध्यावस्थायामपितत्सामान्येनोपनयादित्यनुपलम्भ धर्मिसि
द्धिहेत्वसिद्धिशंकनेभवत्वित्यादिना अंतरालकालीनात्मादुःखादिज्ञानाभाववान स्मर्यमाणत्वात्तदानीं तनदुःखादित्वादिति हेतुः पथि गच्छतस्तृणादिस्पर्शे
ष्वनेकांतस्स्मर्यमाणेष्वनैकांतः नियमेनेति विशेषणेपि निर्विकल्पकानुभूतेनुदिनसविकल्पके नैकांत इत्यर्थः उभयवादिसिद्धत्वादिति विशेष

संप्रतिपन्नोदयास्तमयवद्दिवादपदयोरप्युदयास्तमययोरंतरालकालमनुमायकालात्वेन लिंगेनानुमिते धर्मिण्यात्मनि ज्ञा
नाभावानुमानोपपत्तेः भवत्वेवं धर्मिसिद्धिस्तथापि न ज्ञानाभावानुमाने लिंगमस्ति अस्मर्यमाणत्वस्य नियमेनास्मर्यमाणत्व।
स्य वा पथि गच्छतस्तृणस्पर्शादौ निर्विकल्पकानुभूते चानैकांतिकत्वादिति चेन्न ज्ञानसामग्रीवैकल्यलक्षणलिंगाज्ज्ञानाभावानु
मानोपपत्तेः नदेवकुतः सिद्धमिति न वाच्यं तत्सिद्धेरुभयवादिसिद्धत्वात् अन्यथा वेदांतिनामपि सुषुप्तिकाले घटपटादिविशे
षज्ञानाभावानुमानं न स्यात् ज्ञानाभावस्य निर्विकल्पकसाक्षिवेद्यत्वानंगीकारात् नचावस्थाभेदसंभिन्नभावरूपाज्ञानपरामर्श
सामर्थ्यसिद्धतदनुभवादेवतद्विरोधिनो ज्ञानस्याभावानुमानं भावरूपाज्ञानस्य तत्परामर्शस्य च परं प्रत्यद्याप्यसिद्धत्वात् ॥ ॥

विज्ञानेपरमसत्वयाप्यंगीकारादित्यर्थः अतश्चैवमंगीकर्तव्यमित्याह अन्यथेति ननु नास्माकं सामग्र्यभावात्तदनुमेयमपि तु साक्षिसिद्धमिति तत्राह
ज्ञानाभावस्येति तत्काले निर्विकल्पकवेद्यत्वेपि न तावत्तोत्तरकाले विशिष्टव्यवहार इत्यनुमानमेव शरणमित्यर्थः तेन च न पूर्वोत्तरयोर्व्याघातः ननु
परामर्शवलाद्भावरूपाज्ञानसिद्धौ तद्वलात्तद्विरोधि घटादिज्ञानाभावानुमान मस्सन्नातेन सामग्र्यभावादिति वैषम्यमिति तत्राह नचा
वस्थेति अवस्थाभेदः सुषुप्तिरूपावस्थाविशेषस्तेनपद्विशेषितं भावरूपमज्ञानं तत्परामर्शसामर्थ्येन सिद्धोपस्तदवस्थाज्ञानानुभवेन किंचि

न्यायदीपावलीकृतमनुमानमुद्भावयति यत्तु केचिदिति हेतुमेव समर्थयते अभावो हीत्यादिना अभावस्येति आद्याभिप्रायेण प्रत्यक्षस्येति तार्किकाभिप्रायेण संप्रतिपन्नवदिति शुक्तिरूप्यसंसर्गवदित्यर्थः॥ मानागम्यत्वेनेत्साधनायानुमानप्रयोगो व्याहतोऽनुमानप्रयोगे च मानागम्यत्वव्याहतमिति दूषयति तदन्यदित्यादिना ननु यथात्मनोऽनुमानेनावेद्यत्वसाधनेपि न वेद्यत्वप्रसक्तिस्तद्वत्प्रमाणेनैवाप्रामाणिकत्वसाधनेपि न प्रामाणिकत्वप्रसक्तिरिति तत्राह नचात्मन इति प्रमाणनिवर्त्यत्वादितिहेतोरनैकान्तिकतां चाह नच प्रमाणेति संस्कारस्य हि कार्यापवर्गि।

यत्तु केचिदनुमानं रचितं तेन तावदज्ञानं ज्ञानाभावः अभावमानागम्यत्वात् संप्रतिपन्नवत् अभावो ह्यभावस्य प्रत्यक्षस्य वा विषयः परेणोच्यते अज्ञानं च न मानगम्यं मान निवर्त्यत्वात्संप्रतिपन्नवदिति तदप्येतेनानुमन्यंते अज्ञानस्य मानागम्यत्वेन। साधनायानुमानप्रयोगायोगात् प्रत्युतानगम्यत्वे वा मानगम्यत्वमभवतोति स्ववचनव्याघातात् न चात्मनोऽनुमानेनावेद्यत्वसाधनवत् स्ववचनव्याघातादिदोषापत्तिः तत्र हेतोर्व्याप्यत्वेपि फलाव्याप्यत्वेनाविरोधात् इह चेदृशव्याप्यत्वानङ्गीकारात् न च प्रमाणनिवर्त्यस्य प्रमाणागम्यत्वनियमः प्रत्यभिज्ञानप्रमाणनिवर्त्यस्य तद्धेतोः संस्कारस्य नित्यपरोक्षतया साक्षिसिद्धत्वाभावेनानुमानगम्यत्वाङ्गीकारात् न च त्वदुक्तमर्थं न जानामीत्यादिव्यवहारोऽयं न सुषुप्तेनाप्यमानेवासंभाव्यमानोऽतिरिक्तमेव ज्ञानाभावादज्ञानं गमयति अवगतेऽशेऽवगत्याद्ये न जानामीति व्यवहारायोगादनवगतेंशे चानवगतत्वादेव प्रश्नानुपपत्तेरिति युक्तं त्वदुक्तमर्थं प्रमाणतो न जानामीत्येवं परतयापि व्यवहारोपपत्तेः ॥त्वात् तत्कार्यप्रत्यभिज्ञानप्रमाणनिवर्त्यत्वं अथ च साध्यं नास्तीत्यर्थः अनुव्यवसायनिवर्त्येन च तद्व्यक्त्येन परसंमतेन व्यवसायेनानैकान्तिकं द्रष्टव्यं विवरणकारोक्तार्थापत्तिमाशंक्य निषेधति न चेत्यादिना युक्तमित्यन्तेन ननु सामान्यांशं ज्ञानमनूद्य विशेषांशेऽज्ञाने प्रश्न इति तत्राह अवगतेंऽश इति तत्र अवसरवार्थो ज्ञातश्चाज्ञातश्चेति त्वया वक्तव्यः न चैकत्र ज्ञानाभावपक्षे घटते ज्ञानेन विरोधादस्मत्पक्षे तु नित्यचैतन्यस्याज्ञानसाधकत्वादविरोध इति भावः ननु कथमिदं युक्तं तत्र हेतुमाह त्वदुक्तमर्थमिति नो ज्ञातो ज्ञानाज्ञानविषयत्वमर्थस्यापि तुल्यं तत्रैव प्रमाणज्ञानाभावतदितरज्ञानयोः सहवर्तनं ब्रूमः न

नकेवलमचैवेयं गतिरपितु सर्वत्रैव दृष्टव्या स्थलइत्याह प्रतिवादीति प्रमाणानवगतस्य कथमनुवाद इत्याशंकायां वाक्यं ग्रंथः आगमं निषेधति नापीति तदानीं प्रलयकालेऽसन्नासीत्सदपि नासीदिति प्रतिषेधे किं नहितम आसीदित्येका श्रुतिः मायांत्वित्यपरा इन्द्रो मायाभिरित्यप्यन्या प्रलयकाले संसारिणां ज्ञानाभावात्सोऽत्र तमःशब्दाभिधेयाः नतत्त्वदृष्टिमतमज्ञानमित्यर्थः इतरश्रुत्योरन्यथासिद्धिमाह मायाशब्देन चेति प्रकृतिस्वभावभूतामित्यर्थः उपसंहरति तदेवमिति एतदेवाज्ञानं मास्त्वित्यर्थः लक्षणं श्लोकेन संगृह्णाति अनादीति पूर्वज्ञानादेः

४ प्रतिवादिवाक्यावगतार्थस्यानुवादपुरःसरं प्रमाणासंभवेन सर्वैर्वादिभिर्निराकरणांगीकारात् नापि नासदासीन्नोसदासीदित्युपक्रम्य तम आसीन्मायां तु प्रकृतिं विद्यादिन्द्रो मायाभिरित्याद्यागमस्तत्र प्रमाणं तमःशब्देन सांसारिकपुरुषाणां प्रलयकालीनज्ञानाभावस्यैवोच्यमानत्वात् मायाशब्देन च परमेश्वरज्ञानशक्तेरेव तत्स्वरूपभूतायाः संकीर्तनात् तदेवमनिर्वचनीयाज्ञाने लक्षणप्रमाणयोरसंभवान्नाद्याज्ञानमस्तीत्येतदेवाज्ञानमिति सिद्धं अत्रोच्यते नतावल्लक्षणासंभवस्तथाहि अनादिभावरूपं यद्विज्ञानेन विलीयते तदज्ञानमिति प्राज्ञालक्षणं संप्रचक्षते १ अनादित्वे सति भावरूपं विज्ञाननिरस्यमज्ञानमिति लक्षणमिह विवक्षितं नतावदिहाव्याप्तिः सर्वेषामप्यज्ञानानामुक्तरूपतयानुगमात् नाप्यतिव्याप्तिः अनादेर्भावस्यात्मनो ———— निवर्त्यत्वाभावेन ज्ञाननिवर्त्यत्वस्याप्यभावात् तदन्यस्य च परमाणोस्तद्गतरूपादेश्च स्वरूपतोऽनंगीकृतस्य दूरत एवानादित्वानंगीकारात् नचासंभवित्वं भावाभावविलक्षणस्याज्ञानस्याभावविलक्षणत्वमात्रेण भावत्वोपचारादात्मवदनादिभावत्वेनानिवर्त्यत्वानुमानानुपपत्तेः नचैवंविधमानासंभवः यतः

प्रागभावस्यात्मनश्च यथायथं विशेषणैर्व्यावृत्तिः संगृहीतं लक्षणं विवृणोति अनादित्वे सतीत्यादिना ननु चिरंतनमतानुसारेण पार्थिवपरमाणुविशेषगुणेष्वतिव्याप्तिरुक्तेति तत्राह अन्यस्य चेति एतच्च द्वितीयपरिच्छेदे विवरिष्यते पश्चादनादित्वे सति भावरूपं तदनिवर्त्यं यथात्मेत्यनुमानविरोधादसंभवीदं लक्षणमिति तद्दूषयति नचासंभवित्वमिति अयं भावः किमिदं भावत्वं हेतूकृतं किं वस्तुत्वं उताभावविलक्षणत्वं नाद्यः असिद्धेः नद्वितीयः वस्तुत्वस्यैवोपाधित्वादिति प्रमाणासंभवं परिहरति नचैवंविध इति॥ ॥ ॥ ० ॥ ॥ ॥

श्लोकेनानुमानं संगृह्णाति देवदत्तेत्यादिना देवदत्तप्रमेति धर्मिनिर्देशः तत्स्थेत्यादि साध्यनिर्देशः मात्वादिति हेतुनिर्देशः अविगीताअ-
विप्रतिपन्ना यज्ञदत्तप्रमेति दृष्टान्तः संग्रहं विवृणोति विगीतमित्यादिना इत्थमत्र प्रयोगः देवदत्तप्रमाणज्ञानमेतन्निष्ठप्रमाणाभावत्वानधि-
करणानादिनिवर्तकं प्रमाणत्वात् यज्ञदत्तप्रमाणवदिति अत्र चाभावत्वानधिकरणत्वे बालमनादिनिवर्तकमित्युक्ते प्रागभावमादा-
यार्थान्तरता तदर्थं प्रमाणाभावत्वानधिकरणेत्युक्तं तावति चाप्रसिद्धविशेषणता प्रमाणाभावत्वानधिकरणस्यानादेर्ज्ञाननिवर्त्यस्यते-
नानंगीकारादात्मनस्तन्निवर्त्यत्वानंगीकारात् तदर्थं देवदत्तनिष्ठेत्युक्तं यज्ञदत्तनिष्ठप्रमाणे हि देवदत्तनिष्ठत्वे सति प्रमाणाभावत्वान-

देवदत्तप्रमा तत्स्थप्रमाभावातिरेकिणः अनादेर्ध्वंसिनी मात्वाद् विगीतप्रमा यथा ॥१०॥ विगीतं देवदत्तनिष्ठप्रमाणज्ञानं देवद-
त्तनिष्ठप्रमाऽभावातिरिक्तानादेर्निवर्तकं प्रमाणत्वाद्यज्ञदत्तादिगतप्रमाणज्ञानवदित्यनुमानम् यत्तु प्रमाप्रमाप्रागभावनिवृ-
त्तिरेव ननु निवर्तकेति मन्यते तं प्रति देवदत्तप्रमा तन्निष्ठप्रमाभावातिरिक्तानादिनिवृत्तिप्रयोक्तव्यं नचैतदसमवेत-
त्वमेतदन्यसमवेतत्वं वा तत्रोपाधिः साध्याव्याप्तेः सत्तत्समवेतसुखदुःखेच्छाद्वेषप्रयत्नानामेतन्निष्ठप्रमाभावा-
तिरिक्तानादेः स्वप्रागभावस्य निवर्तकत्वेन साध्ये विद्यमानेपि त्वदुक्तोपाधेरभावात् नच विवादपदमनादेर्भा-
वस्य निवर्तकं न भवति पदार्थत्वात् संप्रतिपन्नवदिति प्रत्यनुमानविरोधः सत्ताद्रव्यत्वाद्यनिवर्तकत्वेन सिद्धसाधनत्वात्

धिकरणानादेस्तत्प्रागभावस्य निवर्तकेऽप्रसिद्धमेव साध्यमिति तेनाप्रसिद्धविशेषणता साध्यवैकल्ये पूर्वज्ञानसुखादिव्यवच्छेदायानादिग्रहणं प-
क्षे चैतन्निष्ठप्रमाणज्ञानाभावत्वानधिकरणत्वमेतन्निवर्त्यस्यानादेरतन्निष्ठत्वानधिकरणत्वेन न संभवति अन्यनिष्ठप्रागभावं प्रत्यन्यनिष्ठस्यानिवर्त-
कत्वात् तस्मादेतन्निष्ठत्वे सति यत्प्रमाणज्ञानाभावत्वानधिकरणं अनादिज्ञाननिवर्त्यं च तदभिमतमज्ञानमेवेति न त्वसिद्धिः ननु भावनिवृत्तिरेवाभा-
वः न हि भावव्यतिरेकेणाभावनिवृत्तिर्नाम संभवतीति केषांचिन्मतं तथा च यज्ञदत्तप्रमाणस्य स्वप्रागभावनिवृत्तित्वात् निवर्तकत्वलक्षणसाध्याभावा-
त्साध्यविकलो दृष्टान्त इत्यत आह येत्विति व्याप्यत्वासिद्धिं परिहरति नचैतदिति सत्प्रतिपक्षमाशंक्य परिहरति नच विवादपदमिति संप्रतिपन्नवदि-

द्वितीयं शंकते नन्विति नच विगीताप्रमाऽभावातिरिक्तैतन्निष्ठानादिनिवर्तकत्वानधिकरणं प्रमात्वात् यत्तदन्तप्रमावत् इति प्रसाधनात्प्रसि
द्धविशेषणत्वाभावाद्भवति प्रतिप्रयोग इति वाच्यं देवदत्तनिष्ठं प्रमाणज्ञानं देवदत्तनिष्ठानाद्यभावानिवर्तकत्वाभावानधिकरणं प्रमाणज्ञा
नत्वात् यज्ञदत्तप्रमाणज्ञानवदित्याभाससमानयोगक्षेमत्वात् न च देवदत्तप्रमा देवदत्तनिष्ठत्वे सति देवदत्तप्रमाभावातिरिक्तानादिनिवर्तकत्वा
नधिकरणं प्रमात्वात् यज्ञदत्तप्रमावदिति सत्प्रतिपक्षता एतन्निष्ठनिवर्तकत्वानधिकरणत्वस्योपाधेः एतन्मुखादेवोच्चव्यतिरेकसिद्धिः अभाव

ननु संप्रतिपन्नात्मादिपदार्थातिरिक्तस्य भावस्याभावातिरिक्तस्य चानादेर्नैनिवर्तकमिति विशेषणादिदमदूषणमिति चेन्न
तस्य तत्त्वाप्रसिद्धतया ऽप्रसिद्धविशेषणत्वापत्तेः किंच न किंचिदवेदिषमिति परामर्शसिद्धसौषुप्तिकानुभवोऽप्यत्र प्रमाणम् नच
ज्ञानाभावविषयोयमनुभवः अभावप्रतीतेर्धर्मिप्रतियोगिबोधपराधीनतया तदभावेन तस्यानुभवितुमयोग्यत्वात् नच ।
भेदसादृश्यादिवत्स्वरूपेणाभावस्यापि निर्विकल्पकबुद्धिवोध्यतया तथात्वे सादृश्यादिवदेव भावत्वापत्तेः निर्विकल्पकबु ।
द्धिवोध्योभाव इति परैरलक्षणांगीकारात् नायं सुषुप्तिकालीनानुभवजः परामर्शः किंतूत्थितस्येदानीमेव सौषुप्तिकज्ञानाभावा
नुमानमिति च न वाच्यं तदनुमापकलिंगासिद्धेः नच सामग्र्यभावो लिंगं तस्याप्यसिद्धेः नच ज्ञानाभावेन तस्यानुमानं अन्यो ।
न्याश्रयतापत्तेः सामग्र्यभावाज्ज्ञानाभावानुमानम् तदभावाच्च सामग्र्यभावानुमानमिति न चैवं सति वेदांतिनामपि ज्ञाना ।
भावानुमानासंभवः अवस्थाभेदसंभिन्नभावरूपाज्ञानसंवेदनादेव सुषुप्त्यवस्थापन्नहि रूढस्य ज्ञानस्य तत्सामग्र्योश्चा
भावानुमानात् तथापि गत्यंतराभावादेवमेव ज्ञानाभावानुमानस्यावश्यमभ्युपेयत्वात् ।। विलक्षणाज्ञाने प्रत्यक्षमपि प्रमाणमाह किंचे
ति उत्थितस्य न किंचिदवेदिषमिति परामर्शोद्गतीनोयः सौषुप्तिकानुभवः सोपि प्रमाणमित्यर्थः ननु किमिति निर्विकल्पकानुभवायोग्यत्वं यावा ।
नाभेदसादृश्यादिवत्संभेच उक्तस्तत्राह नच भेदसादृश्येति ननु किमिति भावत्वापत्तिः नहि निर्विकल्पकबुद्धिवोध्यत्वसाम्यात्सादृश्यभेदयोरैक्यमि
ति तत्राह निर्विकल्पकेति यत्तु तेनोक्तमस्मत्पक्षे तु नायं परामर्श इत्यादि तदनूद्य दूषयति नापमित्यादिना ननु किमिति सामग्र्यैवैकत्वलक्षण लिं
गासिद्धिः यावता ज्ञानाभावेनैव शक्यानुमानं नहेकत्वमिति तत्राह नच ज्ञानाभावेनेति। यच्च तेनोक्तमन्यथाभवतामपि घटपटादिज्ञानाभावानुमानं न स्या

पन्नैवंविधाज्ञानस्यानन्यपरामर्शस्य चर्मप्रत्यक्षसिद्धिरिति तत्राह नचैवंविधमपीति परामर्शस्याप्युपलक्षणमिदं तस्यापि समर्थनात् अर्था-
पत्तिमपि प्रमाणयति त्वदुक्तमर्थमित्यादिना पूर्वपक्ष्याशयमनूद्य निषेधति नचेत्यादिना त्वदुक्तमर्थं प्रमाणतो न जानामीत्यादिरिदं ज्ञानं तत्ता-
वत्प्रमाणमेव यथार्थानुभवत्वात् तथा चैतज्ज्ञानविषयान्तर्गततयैतद्विषयभूतस्यार्थस्यापि प्रमाणतो ज्ञातत्वात्तन्निषेधवचनविरोध इ-
त्याह त्वदुक्तेऽर्थ इति ननु प्रमाणतो न जानामीत्यस्यायमर्थः एतदज्ञातत्वग्राहिप्रमाणव्यतिरिक्तप्रमाणज्ञानं नास्तीति तत्राह एतदतिरिक्ते-
ति अत्राप्येवंविधज्ञानस्य पूर्वनिर्दिष्टातिरिक्तप्रमाणत्वादेव तद्विषयत्ववचनं व्याहतमित्यर्थः ननु सामान्यतः प्रमितस्य विशेषतोऽनधिगमो

न चैवंविधमज्ञानमप्यसिद्धमिति वाच्यं तत्प्रमाणस्य दर्शितत्वात् त्वदुक्तमर्थं न जानामीति व्यवहारान्यथानुपपत्तिरपि भावरू-
पाज्ञानसद्भावे मानं न च प्रमाणतो न जानामीत्येवं परतयापि व्यवहारोपपत्तिः त्वदुक्तेऽर्थे प्रमाणज्ञानं मम नास्तीत्यस्य विशिष्टविष-
यज्ञानस्य प्रमात्वात् तद्विशेषणतयार्थस्यापि प्रमाणेनाधिगतत्वात् स्ववचनव्याघातापत्तेः एतदतिरिक्तप्रमाणज्ञानं त्वदुक्तेऽर्थे
मम नास्तीति वक्तोवचनव्याघातदोषानुषंग एवास्यापि ज्ञानस्य पूर्ववदेव प्रमाणजन्यत्वात् न च सामान्यतः प्रमाणेनार्थस्याधिग-
मेऽपि विशेषानधिगमाददोषः विशेषस्याप्यधिगमानधिगमयोः पूर्वोक्तदोषानतिवृत्तेः ननु भावरूपमप्यज्ञानं ज्ञाननिरस्यमभ्युप-
गम्यते भवद्भिस्तत्कथं ज्ञायमानेऽर्थे न जानामीति व्यवहारः मैवम् अस्मन्मतेऽज्ञानस्य साक्षिसिद्धतया प्रमाणाबाध्यत्वात् प्रमाणज्ञा-
नोदयात्प्राक्कालेऽज्ञानं तद्विशेषितोऽर्थः साक्षिसिद्धोऽज्ञात इत्यनुवादगोचरो भवति भवति च प्रश्नार्ह इत्यविरोधात् उक्तं च संप्रदा-
यविद्भिः सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एवेति किं च तत्र आसीन्मायां तु प्रकृतिं विद्यादित्यागमो

ज्ञानाव्याहतिरिति तत्राह नच सामान्यत इति पूर्वोक्तेति पूर्वपक्षसमयोक्तेत्यर्थः ननु त्वन्मतेऽपि कथं ज्ञायमानेऽर्थे न जानामीति व्यवहारः यावत्
ताज्ञानाभाववदज्ञानमपि ज्ञाननिवर्त्यमेवेति चोदयति नन्विति न तत्राज्ञाननिवर्तकं प्रमाणज्ञानं तद्बोधकमपि तु साक्षिचैतन्यं न च तदज्ञाननिवर्त-
कं तत्साधकत्वादिति परिहरति मैवमिति प्रमाणाबाध्यत्वादिति अभावव्यावृत्तेरेवानुमानादिप्रमाणैर्बोध्यमानत्वादिति भावः यत एव पूर्वं प्रमाण
ज्ञानेनोत्पन्नं साक्षिणैवाज्ञानविशिष्टतयैवार्थो निर्णीत इत्यत एवानुवादप्रश्नौ घटेते इत्याह प्रमाणज्ञानोदयादिति आगममपि प्रमाणयति किंचेत

यत्तु जीवानां तात्कालिकज्ञानाभावस्तमःशब्दाभिधेय इति तन्न नासदासीदित्यभावस्यापि प्रतिषेधादित्याह नचेति तम इति नच प्रागभावप्रध्वंसव र्गस्यानाद्यनंतस्य सद्भावादशक्यनिषेधनेति वाच्यं तयोरप्युत्पत्तिविनाशवत्तायाः साधयिष्यमाणत्वात् मायाशब्दस्यान्यथासिद्धिमुक्तां निराचष्टे नच परमेश्वरेति ईश्वरज्ञानस्य नित्यस्य ज्ञाननिवर्त्यत्वानंगीकारादिति भावः उपसंहरति तदेवमिति पंचममपि मतं शक्यसमर्थनमित्याह। भ्रमोपादानमिति नचात्मनीति कूटस्थस्य तस्य विपदादिविकाराभावादविद्यावेशवशाद्विकारे प्राप्ताप्राप्तविवेकेन तस्या एव विकारः नचैवं सांख्य सिद्धान्तसंगतेरिहगंधिना परमेश्वराध्यस्तानिर्वचनीयाविद्यापरिणामस्य विवर्तापरनाम्नः स्वीकारादीदृशमेव हेतुत्वमभिप्रेत्य तस्माद्यत्तस्मादा

नच तमःशब्देन ज्ञानाभावः कथ्यते नासदासीदित्यभावं व्यावर्त्य तम आसीदिति प्रतिपादनात् नच परमेश्वरज्ञानशक्तिर्माया भूयश्चांते विश्वमायानिवृत्तिः मायामेतां तरंति ते तेरत्यविद्याविततायोगो माययाभित्यादिना ज्ञाननिवर्त्ये मायाशब्दप्रयोगदर्शनात् तदेवं लक्षणप्रमाणयोरुपपन्नत्वादनादिभावरूपाज्ञानमस्तीति सिद्धं किंच भ्रमोपादानमज्ञानमिति लक्षणेपि न दोषः न चात्मन्यतिव्याप्तिः तस्य केवलस्य कूटस्थस्य कस्याप्यनुपादानत्वात् सत्योपादानत्वे च विभ्रमस्यापि सत्यत्वप्रसंगात् नच विभ्रमोपि रूपतः सत्यस्तथात्वे प्रमाणज्ञानवदेव विषयापहारलक्षणबाधस्याप्यसंभवप्रसंगात् नचैतावंतं कालमिदं रजतमित्यभादित्यनुभवविरोधः अनिर्वचनीयस्यापि विभ्रमस्याभावाविलक्षणतया तथात्वेनानुसंधानोपपत्तेः ॥ ६ ॥

त्मन आकाशः संभूत इत्यादिसृष्टिश्रुतयस्तथा जन्माद्यस्य यतः प्रकृतिश्चेत्याद्यधिकरणान्यपि अत एव धातुसमीक्षायां ब्रह्मविलासकाण्डे भर्तृहरिभिरभिहितमप्युद्गतत्वं प्रपंचस्य न हेतुरनिवृत्तितः ज्ञानज्ञेयादिरूपस्य मायैव जननीतत इति परिणामित्वमात्रं चात्रोपादानत्वमभिप्रेतं यत्तु विभ्रमस्यापि स्वरूपेण सत्यत्वान्नेदमनिष्टमिति तत्राह नच विभ्रमोपीति यदि हि घटादिज्ञानवत्स्वरूपेण सत्यो विभ्रमः स्यात्ततस्तदेवं यथार्थोपि स्यादित्यर्थः अत एवाहुराचार्याः सदसद्भ्यामनिर्वाच्याविद्यावेद्यैः सह भ्रम इति प्रत्यभिज्ञाविरोधमुक्तं परिहरति नचैतावन्तमिति। ननु सद्विलक्षणस्यासतः कथमासीदिति प्रतिसंधानविषयत्वमिति तत्राह

१ वि॰ सु॰ टी॰ न॰ ६६

नच स्वरूपसत एवेति भ्रमोपादानाज्ञाने प्रमाणमाह विगीत इति अत्र व्यतिरिक्तस्थानेन तत्त्वानधिकरणपदं प्रसिद्धं अवाध्यत्वानधिक
रणोपादान इत्युक्ते प्रसिद्धविशेषणता सर्वत्रोपादानकारणस्य दृश्यस्य परैर्वाध्यत्वाङ्गीकारात् तदर्थमेतज्ज्ञानकारणेत्युक्तं एतज्ज्ञानकारण
त्वानधिकरणोपादान इत्युक्ते व्याहतिस्तदर्थमवाध्यत्वानधिकरणेत्युक्तं ततश्चावाध्यत्वानधिकरणावाध्याज्ञानोपादानकत्वसिद्धिर्विभ्रमस्य दृ
ष्टांते त्वेतज्ज्ञानकारणातिरेकमादाय साध्यप्रसिद्धिः अंतिमसमर्थनमुपसंहरति तस्मादिति इत्यध्यस्तानुमानार्थोपपत्तिशब्दैः प्रसाधितो अविभक्तो।
परैः विद्याभावाभावविभागदास्त्यासास्तासिचैतन्यवेद्याः विद्यानादिः स्वीकृतास्वेकृता ते वादिभ्रांत्यापादिताभावभावादेभिर्मानैः केवलंभे
दितात्र शास्त्रैकगम्येपि यथा ह्यपूर्वैः परप्रमाणान्निरणायि भेदः यथा च रज्जूरगयोरभागं परे प्रमिरवंति परानुबंधान् विभ्रमोपादानमज्ञानमि

नच स्वरूपसत एवासीदिति प्रतिसंधाने एतावंतं कालमिहादर्शमुखमासीत् स्फटिकश्च लोहित आसीदित्याद्यनुसंधानदर्शना
त् प्रयोगश्च विगीतो विभ्रमः एतज्ज्ञानकारणावाध्यातिरिक्तोपादानः विभ्रमत्वात् देवदत्तादिविभ्रमवत् । दर्शितएव च सत्यो पा
दानत्वे सत्यत्वप्रसंगो विपक्षे वाधकस्तर्कः तस्माद्यदुपादानो विभ्रमस्तदज्ञानमिति सिद्धं ननु तथाप्यसंभविलक्षणं सर्वप्रत्यया
नां यथार्थत्वेन विभ्रमाणामेवाभावात् विगीताः प्रत्यया यथार्थाः प्रत्ययत्वात् संप्रतिपन्नवदित्यनुमानात् अन्यथान्याकारस्य प्र।
त्ययस्यान्यालंबनतायामनुभवविरोधात् संविदां स्वविषयव्यभिचारे चानाश्वासप्रसंगात् । एत्युक्तं तत्र विभ्रमाणामेवाभावादुपादानत्वम
संभवीत्यख्यातिवादिनः प्रत्यवतिष्ठंते ननु तथाप्यसंभवीति किमिदं विभ्रमत्वेन विवक्षितं किं यथार्थज्ञानविशेषः यथास्माकं उतायथार्थज्ञानं ना
द्यः तदुपादानस्यात्मनोंतःकरणस्य वा अविद्यात्वाभावात् न द्वितीय इत्याह सर्वप्रत्ययानामिति विभ्रमाणामेवाभावादिति ज्ञानानामयथार्थ।
त्वाभावादित्यर्थः ननु कुतः सर्व—प्रत्ययानां यथार्थत्वसिद्धिरित्यनुमानादित्याह विगीता इति अंशतः सिद्धसाधनतानिवृत्त्यै विगीतग्रहणं अयथार्थ
व्यवहारहेतुभूतज्ञानानां पक्षीकरणात्वनाश्रयासिद्धिः विपक्षे वाधकमाह अन्यथेति भासमानतया हि विषयत्वं न तु सत्तया नापि कारणतया ऽ
तिप्रसंगात् नच रजतज्ञाने शुक्तिकाचकास्तीति तथा चाचेत्यमानशुक्तिकालंबनत्वकल्पनायां विरुद्धाचेव रजतानुभव इति भावः तथा च नयवी ख्यामत्र
न्मोपएवार्थ इत्यादिना विषयलक्षणमुक्तोक्तं तेनान्यस्यान्यथाभानं प्रतीत्यैव पराहतं परस्मिन्भासमानेपि न परं भासते यत इति वाधकांतरमाह संवि

राम ६६

तदयुक्तं परिहृत्यार्थं परित्यज्य कापि बुद्धिः प्रवर्तते व्यभिचारवती स्यादर्थे कथं विश्वासकारणमित्यपसिद्धान्तापत्तिरपि बाधिकेत्याहन्त्र
सतोपीति यदि च बहिरसदिदं प्रतीयेत साकारतापि विज्ञानस्य स्यात् तदयुक्तं अयथार्थत्वपक्षे च ज्ञानं साकारमापद्येतेति तदेवं संविदि हि रोधाना
श्वासासत्त्वातिप्रसंगान्बाधकानुक्त्वा कारणानिरूपणं दर्शयन्नसत्कारणककार्यप्रसंगमपि बाधकं व्याप्ति असतश्चेति तदयुक्तं अयथार्थस्य
बोधस्य नोत्पत्तावस्ति कारणमिति नन्वन्वयव्यतिरेकाभ्यां चक्षुरवसीयते कारणमिति तत्राह चक्षुरादेरिति असतारोप्येणापि संप्रयोग इति त
त्राह देशान्तरेति देशान्तरनिवेशिनो रजतादेः स्वरूपेणासतश्च नष्टपुत्रादेरिति योजना ननु दोषदूषिताक्षादेरस्ति मिथ्याप्रत्ययजननसामर्थ्यमि
ति तत्राह दोषाणां चेति स्वाभाविकशक्तिप्रतिबन्धमात्रं दोषकृत्यं न त्वतिशयाधानमित्यर्थः ननु दावदाहोपहतवेत्रबीजानां हरिद्राजलावसिक्त

असतोपि संसर्गादेरवभासमानतायामसत्ख्यातेरपि स्वावसरतया सौगतमतानुप्रवेशप्रसंगात् असतश्च संसर्गादेः स्फुरणाका
रणानिरूपणात् चक्षुरादेश्च संप्रयुक्तमात्रग्राहित्वात् देशान्तरनिवेशिनः स्वरूपासतश्च संप्रयोगायोग्यत्वात् दोषाणां च स्वाभा
विककार्यप्रसवशक्तिप्रतिरोधमात्रहेतुत्वात् मूषिकाघ्रातशालिबीजादौ तथादृष्टत्वात् दावदहनदग्धवेत्रबीजात्कद
लीकाण्डजन्मनो दग्धस्य वेत्रबीजत्वेन दोषाणां विपरीतकार्यकारणताप्रत्युदाहरणत्वात् सर्वत्र च प्रतीयमानयोः संसर्गिणोः
संसर्गव्यवहारस्य संसर्गाग्रहनिबन्धनत्वात्संसर्गज्ञानस्यापि हेतुत्वकल्पनायां गौरवात् ॥ हरिद्रागारपरिप्लुष्टहारीतमांसस्य च दशरात्रं

कांस्यपात्रोषितस्य सर्पिषश्च दृष्टं विपरीतं रंभाकाण्डारंभकत्वं मरण — कारणत्वं चेति तत्राह दावदहनेति दोषाणां विपरीतकार्यकारणतां प्रति
दावदहनदग्धवेत्रबीजात्कदलीकाण्डजन्मनोनुदाहरणत्वात्पुनः दग्धस्य वेत्रबीजत्वेनेति योजना उक्तं हि भस्मकादिषु कार्यस्य विघातादेव दो
षत्वेति ननु संसृष्टव्यवहारदर्शनात्संसर्गज्ञानपूर्वकत्वमितरत्रैवानुमीयत इत्यत आह सर्वत्रेति सुषुप्त्यादौ सर्वत्र संसृष्टव्यवहारप्रसक्तिवा
रणाय प्रतीयमानयोरित्युक्तं नन्विदं विपर्ययस्थलमात्रलोभेन सकलसमीचीनव्यवहारवर्तिसंसर्गज्ञानजातहेतुपरिहरणं अल्पस्य हेतो
र्बहुहातुमिच्छन्विचारमूढः प्रतिभासि मे त्वमिति न्यायमनुसरतीत्यत आह संसर्गज्ञानस्यापीति ॥ ८ ॥ ॥ ६ ॥

चि॰सु॰ टी॰ न॰ ६७

नन्वयथार्थज्ञानानङ्गीकारे नेदं रजतमिति बाधकबोधेन किं वेद्यमिति तत्राह असंसर्गाग्रहेति ननु सर्वमेतदिदं रजतमिति संसर्गग्राहिप्रत्य-
यविरुद्धमित्याशंक्य नेदमेकं ज्ञानमपि तु ग्रहणस्मरणात्मकमगृहीतविवेकं ज्ञानद्वयमित्याह इदमिति प्रत्ययस्य चेत्यादिना इदमिति प्रत्यय-
स्य ग्रहणरूपत्वादित्युत्तरेणान्वयः अस्य च ज्ञानस्य स्वप्रकाशस्यापि स्वं स्वविषयस्य चेतरस्माद्विवेचकत्वस्य वक्ष्यमाणस्यानाकलितविशेषत्व-
स्य च सिद्ध्यर्थं दोषदूषितेत्युक्तं भवत्वेवमेतद्रजतमित्यत्र का वार्त्तेति परिशेषात्स्मृतिरित्याह रजतमिति असंनिहितत्वेनासंप्रयोगाद्प्रत्यक्षत्व-
मगृहीतव्याप्तिकत्वादनुमेयत्वमस्यासंभवि अननुभूतरजतस्य च प्रत्ययो नोत्पद्यते तस्मात्तत्सदृशदर्शनसमुद्बुद्धसंस्कारस्य संजायमानेयं स्मृ-
तिरेवेति भावः तदुक्तं परिशेषात्स्मृतिरेषेति निश्चयो जायतेतरा इति ननु स्मृतेर्गृहीतग्रहणस्वभावायास्ताद्रूप्येणाग्रहणाद्गृह्यमाणा च राव

सं असंसर्गाग्रहप्रसंजितसंसर्गव्यवहारमात्रबाधनादेव बाधकस्य बाधकतोपपत्तेः इदमिति प्रत्ययस्य च दोषदूषितत्वस्य-
जोऽन्यतयानाकलित विशेषस्य सामान्यमात्रग्रहणरूपत्वात् रजतमिति चासंनिहितविशेषविषयस्य संप्रयोगलिंगा-
द्यजन्यतया संस्कारमात्रकारणत्वेन स्मरणत्वात् तस्य च दोषहेतुकत्वेन तदंशागोचरतया स्वविषयाविवेचकत्वात्।
तयोश्चान्योन्यसंसर्गसाकांक्षसामान्यविशेषालंबनयोः स्वरूपतो विषयतश्चागृहीतासंसर्गयोर्निरन्तरोत्पन्नयोः॥

यादि स्मृतित्वस्यार्थस्य स्वस्य च किमिति न विवेचकत्वमिति तत्राह तस्य चेति दृष्टमनोयोगित्वात् तद्देशकालवैशिष्ट्यं न गृह्णातीत्यविवेचक-
त्वमित्यर्थः तथापि कथं स्वरूपतो विषयतश्च विभिन्नाभ्यामाभ्यां संसृष्टप्रवृत्तिरित्यत आह तयोश्चेति सामान्यविशेषेति इदमिति सामान्य-
मात्रं रजता कारो विशेषः नन्विदं ज्ञानमिदमिति प्रवर्त्तयतु रजतज्ञानं च रजते किमिति रजतार्थिनः पुरोवर्तिनि प्रवृत्तिस्तत्राह स्वरूपतो वि-
षयतश्चेति स्यादेतत् किमिदमेकैकव्यवहारहेतुद्वन्द्वमिलितम् नाद्यः पृथक्प्रदेशे प्रवृत्तिप्रसंगात् नहि तौ पः क्षणिकज्ञानयोर्मेलनायो-
गादित्यत आह निरन्तरोत्पन्नयोरिति यद्यपि मेलनं न संभवति तथापि नैरन्तर्येणोत्पत्तिरेव तथाविधप्रवृत्तिहेतुरित्यर्थः विनश्यद्विन

स॰ म॰ ६७

ननु यथार्थज्ञानानामपि विभ्रमत्वे सर्वेषामेव किमिति न विभ्रमत्वसिद्धिरिति तदनुपपत्तिरेव विपर्यये प्रमाणमित्यत आह स्वरूपेणेति न
हुक्तं न यथोक्तं संनिहितरजतशकले रजतमतिर्भवति या दृष्टी सत्याभेदानध्यवसायादिरूपमपि तादृक्या रिस्फुरति साधारणं हि रूपं तत्स्याश्रयास्य
विद्यते तेन तत्स्या च प्रतिभानात्समानतामेव मन्यंते ननु स्वव्यवहारप्रवृत्तिरपि युज्यते चातः नहि निवारणकारणाद्बाधकभावोयं बाधकस्या
पीति वृत्तवादसंगतिगर्भस्पूर्वपक्षमुपसंहरति प्रत्ययानामित्यादिना एतेन पीतः शंख इत्यादिप्रत्यया अपि व्याख्याताः तेषु ग्रहणाविवेक
समाश्रयणात् स्वप्नसंशयोऽस्मरणाविवेकत्वमिति सिद्धांतयति नैतत्सारमित्यादिना श्लोकं विवृणोति विगीतेति ननूभयसंमता यथा।

स्वरूपेणायथार्थयोर — — ष्ययथार्थव्यवहारप्रवर्त्तकयोर्विभ्रमत्वप्रसिद्धेरप्युपपत्तेः तदेवं प्रत्ययानां यथार्थत्वेन स्वरूप
तो विभ्रमत्वाभावात् विभ्रमोपादानमज्ञानमिति लक्षणमलक्षणमेवेति अत्रोच्यते नैतत् — सारं यतः स्वीकारे विभ्रमाणां।
स्यात्स्वीयसिद्धांतबाधना — — अनभ्युपगमे तेषामाश्रयासिद्धिरुद्धता ॥ विगीतविभ्रमाभ्युपगमे सिद्धांतविरोधात् अन
भ्युपगमे हेत्वोराश्रयासिद्धेरनुमानानुदयात् अयथार्थव्यवहारहेतौ ज्ञानस्य पक्षीकरणाद्दोष इति चेत् न यथार्थस्यापी
श्वरज्ञानस्य सर्वव्यवहारहेतोरयथार्थव्यवहारं प्रत्यपि हेतुतया तत्रानैकांतिकाणां सिद्धसाधनत्वात् इदं रजतमित्यत्रापी
दमंशविषयस्य वृत्तिज्ञानस्यायथार्थव्यवहारहेतोरप्यधिष्ठानविषयस्य वेदांतिभिर्यथार्थत्वांगीकारात् र्थव्यवहारहेतुज्ञा

नमात्रपक्षीकरणादुभयपरिहार इति गंगापुरीयं मतं शंकते अयथार्थेति अयथार्थव्यवहारहेतोर्यथार्थत्वसाधने तार्किकाणां तावदीश्वर
ज्ञानमादाय यार्थांतरमिति दूषयति न यथार्थस्यापीति भवतु तान्प्रति तत्वं प्रति तु किमायातमिति तत्राह इदं रजतमित्यत्रेति अयमर्थः इदं र
जतमित्यत्रेदमित्यंतः करणपरिणामः प्रत्यक्षः रजतमिति तु रजतरूपसंस्कारानुरंजितेदमंशावच्छिन्नात्माविद्यापरिणामः तयोरेकसाक्षि
वेद्यत्वेनैकफलत्वादेकज्ञानत्वमिति हि सिद्धांतः ततश्चेदमंशज्ञाने सिद्धसाधनमिति अन्यथाख्यातिवादिनामपीदमंशज्ञाने समानमेतत्
सर्वज्ञानं धर्मिण्यभ्रांतं प्रकारे तु विपर्यय इति न्यायात् धर्मिप्रयुक्तदूषणपरिहारमरीत्यंतरमाह॥ ६॥ ॥ ६ ॥ ६ ॥ ५

१
वि.सु.
टी.न.
६८

ज्ञानत्वमिति यथार्थेऽवृत्तित्वमात्रसाधने सिद्धसाधनतानरार्थं मात्रग्रहणं तथा ज्ञानवृत्तित्वादित्युक्ते सत्तायामनैकान्तिकत्वं अयथार्थव्यवहा-
रेऽपि तस्याः वृत्तेस्तन्निवृत्त्यर्थं मात्रग्रहणं। अत्र मात्रशब्देन किमयथार्थवृत्तित्वाभावमात्रं विवक्षितं किंवाऽयथार्थवृत्तित्वानधिकरणत्वं प्रथमे
प्रत्याह मैवं मात्रशब्देनेति अयथार्थो हि व्यवहारस्तवापि संमतस्तत्र च ज्ञानत्वस्यावृत्तिरस्तीत्यर्थान्तरमित्यर्थः ज्ञानत्वमनुभवमात्रवृत्ति।
ज्ञानमात्रवृत्तित्वादित्याभाससमानयोगक्षेमतां च दूषयति द्वितीयं शंकते अयथार्थेति अत्र दुष्टसामग्र्यप्रसूतत्वमात्रवृत्तित्वमुपाधिः न च सा-
धनव्यापकता दुष्टसामग्रीप्रसूतग्रहणस्मरणयोरपि ज्ञानत्वस्य वृत्तेः व्यवहारत्वसत्त्वादिना व्यतिरेकसिद्धिः मात्रग्रहणं तु व्यर्थमेव विष

ज्ञानत्वं यथार्थमात्रवृत्ति ज्ञानमात्रवृत्तित्वात्प्रमात्ववदिति विवक्षितमिति चेन्नैवं मात्रशब्देनायथार्थवृत्तित्वावृत्तिविव-
क्षायामयथार्थव्यवहारे ज्ञानत्वस्य वृत्त्यभावेन सिद्धसाधनत्वात् अयथार्थवृत्तित्वात्यन्ताभावाधिकरणत्वं विवक्षितमिति
चेत्तन्न दुष्टसामग्र्यप्रसूतमात्रवृत्तित्वस्य तत्रोपाधेः यथार्थशब्देन च सदृशविवक्षायां नायं सर्प इत्यादिबाधविरोधा-
त्, तुल्यवृत्त्यर्थविवक्षायां चास्मान्प्रति सिद्धसाधनत्वात् किंचायथार्थप्रत्ययोऽस्तीत्यस्य प्रत्ययस्य यथार्थत्वेन तस्य
सालंबनत्वाय कश्चिदप्ययथार्थप्रत्ययोऽभ्युपेयः तथा सति तत्रैव हेतोरनैकान्तिकता अयथार्थत्वे तस्य प्रत्ययस्य कं-
ठोक्त एव व्यभिचारः अयथार्थप्रत्ययोऽस्तीत्यत्र तादृशः प्रत्ययो नास्ति किंतु व्यवहारमात्रं पदार्थानामसंसर्गाग्रहनिबंधनमि-
ति चेन्नैवं सर्वत्र संसर्गव्यवहारस्य व्यवह्रियमाणपदार्थसंसर्गज्ञानपूर्वकत्वनियमात्।। सव्याप्तेरप्युपाधित्वात् किंचोभयोरप्यनु-

मानयोः साध्यगतयथार्थशब्दस्य कोऽर्थः किं सत्त्वमुतासत्त्वावृत्तत्वमिति विकल्प्यक्रमेण दूषयति यथार्थशब्देनेत्यादिना ननु भवदुत्तरपक्षे
त्वां प्रति सिद्धसाधनत्वमन्यथाख्यातिवादिनं प्रति किं दूषणमिति तदर्थं सर्वसाधारणं दूषणं वक्तुमुपक्रमते किंचेत्यादिना अयथार्थः प्रत्ययो-
स्तीति वाक्यजन्यात्तत्प्रयोगमूलभूता वा प्रतीतिरस्ति न वा आद्ये यथार्थो ऽयथार्थो वाऽभयथाप्येतत्प्रत्ययविषयेणैतत्प्रत्ययेन वानैकान्ति-
कत्वमुक्तानाक्षिपन् शंकते अयथार्थेति असंसर्गाग्रहमात्रात् संसृष्टव्यवहारो न युक्तः संसर्गज्ञानमन्तरेण संसृष्टव्यवहारानुत्पत्तिनियमादिति

एम.
६८

एवं नियमानङ्गीकारे बाधकमाह अन्यथेति गामानयेति हि उत्तमवृद्धेनोक्ते मध्यमवृद्धस्य प्रवृत्तिं दृष्ट्वा बाल इत्थमाकलयति नूनमनेन पद-
कदम्बेनैतावदर्थविषयं ज्ञानं संसृष्टप्रवृत्तिहेतुभूतमुत्पादितमिति पश्चादावापोद्वाराभ्यां पदार्थविशेषेषु पदविशेषसामर्थ्यं गृह्णाती-
ति व्युत्पत्तिपरिपाटी तदत्रापि संसृष्टव्यवहारस्यासंसर्गाग्रहादेवोपपत्तौ — संसृष्टपदार्थविषयप्राथमिकज्ञानानुमानानुदयात् तन्मार्गेण सं-
गतिग्रहायोगात् गतं शब्दप्रामाण्येनेत्यर्थः। न केवलं शब्दप्रामाण्यस्यैवायं वियोगोऽपि त्वनुमानस्यापीत्याह एवमिति यथा हि शब्दो नित्यः श्रा-
वणत्वात् घटवदित्यनुमानाभासे संसृष्टव्यवहारोऽसंसर्गाग्रहमात्रात् न हि त्रिभिः शब्दस्थानिनद्धर्मव्यतिरिक्तत्वे सति श्रावणत्वात् शब्दत्ववदि।

अन्यथा मध्यमवृद्धव्यवहारेऽप्यसंसर्गाग्रहादेव तदुपपत्तेर्व्युत्पत्तिरतः संसर्गज्ञानानुमानाभावाच्छब्दप्रामाण्यभङ्गप्रसङ्गः ए-
वमनुमानाभासस्येव सदनुमानेऽप्यसंसर्गाग्रहादेव संसर्गव्यवहारोपपत्तेरनुमानोच्छेदः प्रत्यभिज्ञाप्रामाण्योच्छेदश्च ज्वालैक-
त्वव्यवहारवत्सर्वत्र प्रत्यभिज्ञायामसंसर्गाग्रहादेव संसर्गव्यवहारोपपत्तेः यत्र दोषशङ्का नास्ति तत्र संसर्गज्ञानानुमानादुप-
पद्यत एव शब्दप्रामाण्यम् अन्यथान्यथाख्यातिवादिनोऽपि विपर्ययाशङ्कया व्युत्पत्तिविरहाच्छब्दप्रामाण्यभङ्गप्रसङ्गो दुर्वा-
र इति चेत् मैवं तव संसर्गज्ञानानुमानलिङ्गानिरूपणात् तथा हि किं दोषाभावः संसर्गज्ञाना-नुमापकः किं वा व्यवहारमात्रं
उताविसंवादिव्यवहारः नाद्यः दोषाभावस्य संसर्गज्ञानस्य च व्यभिचारित्वात् सत्यपि दोषाभावे सामग्रीवैकल्ये संसर्गज्ञानानु-

त्पत्त्यापीत्यर्थः प्रत्यक्षेऽप्याह प्रत्यभिज्ञेति तत्र हेतुः ज्वालैकत्वेति दोषशङ्कासदसत्त्वाभ्यां नियममन्यथाख्यातिवादिप्रतिबन्द्याशङ्कते यत्र दोषेत्या-
दिना अन्यथाख्यातिवादिनामपि उत्तमवृद्धप्रयुक्तशब्दात्संसृष्टज्ञानमनुमाय तत्र बालस्य व्युत्पत्तिरित्यभिमतं तथा सति यथा क्वचिद्विपर्य-
येऽपि विपर्ययशङ्का तथा तत्रापि विपर्ययशङ्का निरवकाशेति इतरथा तन्मार्गेण व्युत्पत्तेरभावात् शब्दप्रामाण्यभङ्ग एव विपर्ययशङ्कोपशमश्च
तत्र दोषशङ्कोपशमात् तदस्मिन्मतेऽपि समानमित्यर्थः दूषयति मैवमिति अस्यायं व्यवहारः संसर्गज्ञानपूर्वकः न पुनरसंसर्गाग्र-
हादित्यत्र न किञ्चिल्लिङ्गमस्तीत्यर्थः संभवन्ति लिङ्गानि विकल्प्य दूषयन् लिङ्गाभावमेवोपपादयति तथा हीत्यादिना यत्र दोषाभावस्तत्र संसर्गज्ञा-

१
चि·सु·
टी·न·
९६

ननु न दोषाभावमात्रात् संसर्गज्ञानमनुमिनुमः किन्तु तद्युक्तसामग्रीसद्भावात् तथा च न व्यभिचारः यस्मिन् सति भवत्येव कार्यमिति सामग्रीलक्ष
णादिति तत्राह न च दोषाभावेति भवेदेवं यदि सामग्र्येव ज्ञायेत न त्वेतत् तस्याः कार्यैकगम्यतया संसर्ग ज्ञानलक्षणकार्यज्ञानं तत्सामग्री
ज्ञानयोः परस्पराश्रयप्रसंगादित्याह सामग्र्या इति इदं रजतमिति न हि तत्र संसर्गज्ञानं न वाभिमतमिति भावः विनापीति अविसंवादिव्य
वहारस्यापि संसृष्टयोरर्थयोरसंसर्गाग्रहादेवोत्पत्तिसंभवात् न संसर्गज्ञानं विना काचिदनुपपत्तिर्येन तदनुमापयेदित्यर्थः अत्र च विसं
वादिव्यवहारादेषम्यार्थसंसृष्टयोरित्युक्तं तेनैतदुक्तं भवति असति संसर्गेऽसंसर्गाग्रहात् उत्पद्यमानो व्यवहारो विसंवादी न रजत्वविसंवादीति

न च दोषाभावविशिष्टसामग्रीसद्भावेन संसर्गज्ञानानुमानं सामग्र्याः कार्यैकसमधिगम्यत्वात् सति संसर्गज्ञाने साम
ग्र्यनुमानं तदनुमाने च संसर्गज्ञानमिति परस्पराश्रयप्रसंगात् नापि द्वितीयः इदं रजतमित्यादावयथार्थव्यवहारे व्य
भिचारात् नापि तृतीयः विनापि संसर्गग्रहं संसृष्टयोरसंसर्गाग्रहादेव तदुपपत्तेः त्वन्मते घटत्वतद्व्यक्त्योः समवायस्या
प्रत्यक्षतया संसर्गाग्रहेऽपि संवादिव्यवहारदर्शनेनानैकान्त्याच्च व्यवहाराविसंवादस्य च देशान्तरकालान्तराधीनाधिगम
तया व्यवहाराधिगमसमयेऽनधिगतत्वेनातल्लिंगत्वात् बालस्य मध्यमवृद्धस्य वापि संसर्गज्ञानानुमानानुदये प्रवृ
त्तिविरहप्रसंगात् न च प्रतीतिविरोधः ॥

न केवलमस्योक्तदूषणं नाश्रितं किन्त्वनैकान्त्यमपि तत्सद्भावमेव त्वन्मत इत्याह त्वन्मत इति घट इति घट
त्वतद्व्यक्तिसंसृष्टव्यवहारस्तावदविसंवादी न चात्र व्यवहारसमये संसर्गज्ञानमस्ति तत्संसर्गस्य समवायस्य त्वन्मतेऽप्रत्यक्षत्वानंगीकाराद
नुमानस्य चाविसंवादिव्यवहारलिंगतया प्रागसिद्धेः तत्र तत्राविसंवादिव्यवहारस्य संसर्गज्ञानपूर्वकत्वे व्यभिचरतीत्यर्थः स्वरूपासिद्धिं चाह व्य
वहारेति अविसंवादित्वस्य कालान्तराधिगम्यत्वात् मध्यमवृद्धवर्तिज्ञानानुमानसमये दुरधिगमतया लिंगत्वाभावेन संगतिग्रहणायोगात्
पुनरपि सत्त्ववदुरान्मा शब्दप्रामाण्यभंगप्रसंग आगत इत्यर्थः एवमनुमानं दूषितं यत्तु रजतज्ञानस्यान्यालंबनत्वेऽनुभवविरोध इति बाधकत

राम·
९६

ननु किं रजताकारप्रतीतिं प्रति शुक्तेरालंबनत्वेऽनुभवविरोधः इदंमात्रस्य वा आद्योऽनंगीकारपराहत इत्याह रजतेति द्वितीयं दूषयति इदमाकारस्येति
ति प्रतीतिमेवाभिनयति इदं रजतमिति अनाश्वासप्रसंगपूर्वोक्तं परिहरति न चेति येन हि नियामकेन क्वचिद्विसंवादिव्यवहारजनकत्वेऽपि सं
विदां न सर्वत्र तच्छंका प्रवृत्त्युच्छेदः सनाश्वस्मन्मतेऽपि दंडवारित इत्याह विसंवादीति किं च बोधकतया स्वतःप्रमाणत्वात् ज्ञानानामव्यभिचा
रस्य चानुमानमात्रगम्यतया प्रामाण्यज्ञानानुप्रवेशित्वात् सितासितव्यभिचारेऽपि चक्षुषः प्रामाण्यांगीकाराच्च नानाश्वासशंकापि तृतीयं बाध
कं परिहरति न चासत इति नानिर्वचनीयवादिनामयं दोष इत्यर्थः एतेन साकारताप्रसंगोऽपि परिहृतः अन्यथाख्यातिवादिनां तु त्वदीयवव

रजताकारायाः प्रतीतेः शुक्तिकालंबनत्वानभ्युपगमात् न हि रजतं शुक्तिरिति परैरपि प्रतीतिरूप्यते इदमाकारस्य तु रजतज्ञा
नालंबनतामनभ्युपगच्छतस्तवैव प्रतीतिविरोधः इदं रजतमिति सामानाधिकरण्येन पुरोवर्त्यंगुलिनिर्देशपुरःसरमा
दानादिव्यवहारदर्शनात् न च संविदां विषयव्यभिचारादनाश्वासप्रसंगः विसंवादिव्यवहारजनकत्वपक्ष इवास्मन्मतेऽप्याश्वा
सोपपत्तेः न चासतः संसर्गादेरवभासाभ्युपगमादसत्ख्यातिप्रसंगः भासमानस्य संसर्गादेः सद्विलक्षणत्वावदसद्विलक्षण
तायामप्यंगीकारात् न चायथार्थज्ञानजन्मनि करणाभावः दोषदूषितचक्षुरादेस्तत्करणत्वोपपत्तेः ज्ञानानामाजानतो
यथार्थव्यवहारजनकत्वेऽपि दोषवशादयथार्थव्यवहारहेतुत्ववद्देवदुष्टानां करणानां विपरीतज्ञानहेतुताया अपि संभ
वात् यथा च दवदाहस्य वेत्रबीजविनाशकत्वेऽपि तज्जनकत्वं तथा दोषाणामपि यथार्थज्ञानप्रतिबंधकत्वमयथार्थज्ञान
हारेऽसमानयोगक्षेमत्वमिति द्रष्टव्यं यस्तु कारणाभावादिप यासोपलापस्तं परिहरति न चायथार्थेति ननु समीचीनज्ञानहेतुभ्यो नयना
दिभ्यः कथमसमीचीनज्ञानजन्म न हि जातु कुटजबीजाद्दूर्वांकुरप्ररोह इत्याशंक्य तत्र प्रतिबंद्या परिहारमाह ज्ञानानामिति आजानतः स्वभा
वतः प्रत्युत दोषोपहतेभ्योऽपि न मिथ्याज्ञानजन्म प्राप्नं कार्यप्रतिबंधकमात्रत्वात् दोषाणामित्युक्तं तत्परिहरति यथा चेति दवदाहस्येति दवोव
नवह्निः तेन यो दाहस्तस्येत्यर्थः मा भूद्दहनवह्निदग्धवेत्रबीजानुदाहरणं मा च भूत्तेषां वेत्रबीजतादाहस्येव तावदुभयकारकत्वमनुमंतव्ये

यत्संसर्गज्ञानस्यापि संसृष्टव्यवहारहेतुत्वे कल्पनागौरवाद् संसर्गाग्रह एव सर्वत्र संसृष्टव्यवहारहेतुरित्युक्तं तत्राह सर्वत्र चेति प्रमाणवलात्प्रा-
प्तगौरवं न दोषः प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि वालाग्रशतभागोऽपि न कल्प्यो निष्प्रमाणक इति न्यायादिति भावः तदेवं संसर्गा-
ज्ञाने संसृष्टव्यवहारान्यथानुपपत्तिं प्रमाणमभिधाय वाधान्यथानुपपत्तिमपि प्रमाणयति असंसर्गेति उपपादनासंभवात्तदनुपपत्तिरपि संसर्ग-
ज्ञानसाधके विशेषः अङ्गीकृत्य तदीयं वाधकत्वं हेतुत्वं ज्ञानस्य निरस्तम् इदानीं स एव तु न घटतेऽव्याप्तेरित्याह नच व्यवहारेति अस्ति हि विरक्त-
स्यापि कस्यचित्पुरोवर्तिनो इदं रजतमिति भ्रान्तिर्नेदं रजतमिति वाधश्च नच तत्र व्यवहारोऽनर्थित्वात् अतोऽव्याप्तिरित्यर्थः लक्षणान्तरं शङ्कते

सर्वत्र चासंसर्गाग्रहादेव संसर्गव्यवहारमभ्युपगच्छतः शब्दलिंगादिप्रामाण्यभंगस्पर्शित्वादेव कल्पनागौरवस्यादूष-
णत्वात् असंसर्गाग्रहमात्रस्य व्यवहाराप्रसंजकत्वादेव तत्प्रसंजितायथार्थव्यवहारवाधकत्वेन वाधकस्य वाधकत्वोपपादनासंभ-
वात् नच व्यवहारव्यवच्छेदो वाधः अनर्थिनां तत्र व्यवहारानुदयेनेदं रजतमित्यादिज्ञानस्यावाधकत्वप्रसंगात् तद-
र्थिनां च व्यवहारविच्छेदकस्य वाधकत्वे चौरादिज्ञानस्यापि तद्विच्छेदकस्य वाधकतापत्तेः नच तद्योग्यताविच्छेदो वाधः
तद्विच्छेदसमयान्तरेऽपि नरस्तत्र व्यवहाराभावप्रसंगात् योग्यताप्रतिवंधो वाध इत्यपि न विवेकज्ञानवेलायां हेत्वभावादेव फ-
लासिद्धौ प्रतिवंधकस्यानवकाशात् नचाग्रहणनिवृत्तिर्वाधः सर्वाग्रहणानां तथात्वेन वाधरूपत्वप्रसंगात् ॥ तदर्थिनामिति।

चौरादीति यदा हि कश्चित्क्वचिद्देशयायी चौरादिज्ञानाद्विच्छिन्नोद्योगो भवति तच्चौरादिज्ञानस्य यागादिवाधकत्वं स्यादित्यर्थः ननु ये यं व्यव-
हारयोग्यता पुरोवर्तिनो रजतादात्म्येन तद्विच्छेदो वाधस्तथा च नाव्याप्तिरपि विरक्तस्यापि योग्यतानपायादित्यत्राह नच तद्योग्यतेति न
हि योग्यताप्रतिवंधमात्रं वाधः तथा च प्रतिवंधापाये पुनरपि तत्रैव भ्रमिष्यतीत्यत्राह योग्यतेति सति पुष्कलकारणे कार्यानुत्पत्तिर्हि शक्ति-
प्रतिवंधकल्पिका सा चात्र नास्ति विवेकाग्रहणेन विवेकाग्रहस्य निरासादित्यर्थः लक्षणान्तरं दूषयति नचाग्रहेति सर्वाणि हि ज्ञानानि स्वप्राग-
भावनिवर्तकानि निवृत्तिर्वेति वाधकत्वं वाधत्वं वा स्यात् तथा च सर्वेऽप्यभ्रान्ताः स्युरित्यर्थः नच विवेकाग्रहनिवृत्तिर्वाधः सर्वभेदज्ञानानां वाधक-

अन्यथोपपत्तिनिराकरणमुपसंहरति अत इति परिणताज्ञाननिवृत्तिर्बाधस्तथा च तत्परिणामरूपमिथ्याज्ञानतदर्थौ विना न बाध
सिद्धिरिति खण्डनकारार्थः यत्तु परिशेषात्स्मृतिरित्युक्तं तद्दूषयति रजतगोचरेत्यादिना असंप्रयुक्तविषयत्वेसाक्षात्कारित्वेऽनुपपन्नमि
ति शंकते नन्विति दूषयति न प्रत्यभिज्ञायामिति येषां हि प्रत्यभिज्ञानमेकं ज्ञानं तेषां तत्रापि संसृष्ट्येवेत्यर्थः ॥ तत्र चक्षुषा संस्कारद्वारा प्र
त्यासन्नावाक्षुषत्वेऽत्रापि सा समेत्याह तत्र संस्कारेत्यादिना प्रत्यभिज्ञावदेव तत्तोल्लेखस्य यथार्थत्वप्रसंगवारणाय दोषकलुषितेत्युक्तं य
द्यपि सर्वप्रत्ययायाथार्थ्यमप्रामाणिकं नापि विपक्षे कश्चिद्बाधकस्तर्कस्तथापि समारोपसद्भावे किं प्रमाणं न हि परपक्षप्रतिषेधमात्रात्स्व
पक्षसिद्धिरित्यधिकविवक्षया शंकयति तथापीति श्लोके नानुमानं संगृह्णाति नयनमिति अत्र नयनविशेषः पक्षसाध्ययोर्निधातव्यः कार

अतो न व्यवहारनिवारणेन बाधकस्य बाधकतोपपत्तिः रजतगोचरविज्ञानस्य च दोषदूषितलोचनजन्यतया परिशेषा
सिद्धो संस्कारमात्रजन्यत्वास्मृतित्वकल्पनायोगात् नन्वसंयुक्तत्वेन रजतज्ञानप्रत्यकारणस्य रजतस्य न तद्गोचरत्वं सर्व-
त्रसाक्षात्कारिज्ञाने तज्जनकस्यैव विषयत्वादिति चेन्न प्रत्यभिज्ञायां तत्तायाः अपि गोचरत्वात् तत्र संस्कारसचिवमिन्द्रियं त-
त्तांगोचरयति संस्कारोपस्थापितत्वात्तत्ताया इति चेत्प्रकृतेपि न हि संस्कारोपनीतं रजतं दोषकलुषितेन्द्रियेण विषयीक्रिय
त इति न दोषः तथापि समारोपे किं प्रमाणमिति चेदुच्यते नयनं नयनोद्भूतसम्यग्ज्ञानातिरेकिणः ज्ञानस्य कारणं तत्स्याद्य
थैव नयनांतरम् १२ एतच्चक्षुरेतच्चक्षुर्जन्ययथार्थज्ञानातिरिक्तज्ञानजनकं चक्षुष्ट्वादिन्द्रियत्वाद्वा चक्षुरन्तरवदिन्द्रियान्तरवच्च ॥

णमित्यंतं प्रतिज्ञा तत्त्वादिति नयनत्वादिन्द्रियत्वाद्वेति हेतुः यथैव नयनांतरमिन्द्रियांतरं वेति दृष्टांतः एतदेव विवृणोति एतच्चक्षुरित्यादिना एत
तच्चक्षुर्जन्ययथार्थज्ञानत्वानधिकरणज्ञानजनकमिति च साधनीयं अन्यथा पूर्वकाले तज्जन्ययथार्थज्ञानातिरिक्तज्ञानजनकत्वस्योत्तरकाले
संभवेन सिद्धसाधनत्वात् तत्र चक्षुर्मात्रपक्षीकरणे चक्षुरन्तरजन्ययथार्थज्ञानत्वानधिकरणेन तच्चक्षुर्जन्ययथार्थज्ञानेनार्थान्तरत्वं तन्निवृत्त्यर्थ-
मेतच्चक्षुर्ग्रहणम् एवं साध्येपि द्रष्टव्यम् यथार्थज्ञानत्वानधिकरणज्ञानजनकमित्युक्ते प्राभाकराणामप्रसिद्धविशेषणता विरुद्धता च न
ना

वादेवैतच्चक्षुर्जन्यत्वे सति यथार्थज्ञानत्वानधिकरणत्वमस्तीति नाप्रसिद्धविशेषणत्वं साध्यवैकल्यं व्याहतिनिवृत्त्यै यथार्थपदं प्रसज्येत न चक्षुर्जन्ययथार्थज्ञानत्वानधिकरणत्वमेतच्चक्षुर्जन्यत्वानधिकरणत्वान्न संभवति व्याघातात् तस्माद्यथार्थज्ञानत्वानधिकरणं किंचिच्चक्षुर्जन्यं ज्ञानं सिद्ध्यतीति चाक्षुषायथार्थज्ञानसिद्धिः एवं लिंगाभासादिकमपि पक्षीकृत्य साधनीयं सत्प्रतिपक्षतामाशंक्य दूषयति न च चक्षुरित्यादिना यथार्थज्ञानजनकत्वे सत्यतिरिक्तज्ञानजनकं न भवतीत्युक्ते व्याप्यत्वासिद्ध्याबाधानैकांतिकत्वेष्वापातं तन्निवृत्त्यर्थं चक्षुर्जन्येत्युक्तं चक्षुर्जन्ययथार्थज्ञानजनकत्वे सत्यतिरिक्तज्ञानाजनकत्वं चक्षुर्जन्ययथार्थज्ञानजनकत्वाभावाद्व्यतिरिक्तज्ञानाजनकत्वा

न च चक्षुश्चक्षुर्जन्ययथार्थज्ञानजनकत्वे सत्यतिरिक्तज्ञानजनकं न भवति इंद्रियत्वात् घ्राणवदिति प्रकरणसमता मनस्यनैकांतिकत्वात्तस्यासाधारणकारणस्य चक्षुर्जन्ययथार्थज्ञानजनकत्वे सत्यतिरिक्तरसादिज्ञानजनकत्वात्। चक्षुषश्चक्षुर्जन्ययथार्थज्ञानजनकत्वे सत्यतिरिक्तरसादिज्ञानाजनकतया सिद्धसाधनत्वाच्च न च बहिरिंद्रियत्वादिति विशेषणान्नानैकांतिकता तत्रापि सिद्धसाधनतायास्तादवस्थ्यात् न च यथोक्तयथार्थज्ञानजनकत्वे सत्यतिरिक्तज्ञानजनकत्वात्यंताभावाधिकरणतया साध्यस्य विवक्षितत्वाददोषः घ्राणादिषु चक्षुर्जन्ययथार्थज्ञानाजनकत्वस्यैवोपाधेः सत्त्वात्॥ ॥ ७१ ॥ हान्त्याद्यः पक्षो व्याहतः द्वितीयस्तु सिद्धान्तयथार्थज्ञानजननिवारणेन सिद्ध्यतीत्यर्थः अनैकांतिकतामेव दर्शयति तस्येति सिद्धसाधनतां चाह चक्षुष इति मनस्यनैकांतिकतापरिहाराय विशेषणमाशंक्य दूषयति न चेति प्रकारान्तरेण सिद्धसाधनतापरिहारमाशंक्य निषेधति न च यथोक्तेति अतिरिक्तज्ञान जनकत्वाभावमात्रं न साध्यं किंतु तदत्यन्ताभावस्तथा च न सिद्धसाधनं अयथार्थज्ञानजनकत्वादिनामतिरिक्तज्ञानजनकत्वात्यन्ताभावासिद्धेः अत्र च बहिरिन्द्रियत्वादित्येव हेतुः अन्यथा मनस्यनैकांतत्वात्र हेतुः घ्राणादिष्विति॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

ननु यत्र वस्तुजन्ययथार्थज्ञानाजनकत्वं नास्ति तत्र वस्तुजन्ययथार्थज्ञानजनकत्वे सत्यतिरिक्तज्ञानजनकत्वात् तन्ताभावाधिकरण
त्वमपि नास्तीति व्यतिरेकः कथं निश्चित इत्यत आह नच व्यतिरेकेति न च तत्त्वाख्यानरे इयत्त्वमुपाधिः अन्तरपदस्य पक्षमात्रव्यावर्तक
तया पक्षेतरत्वात् तथा प्रमाणत्वमनुभवो ह्यावृत्तं अनुभवत्वातिरिक्तत्वे सति ज्ञानत्वावान्तरजातित्वात् स्मृतित्ववत् प्रमानुभूत्योश्चलस्थल
स्थणभावशीकाराद्धेद सिद्धिः पूर्वं चास्फूर्ताविभ्रमसद्भावे प्रमाणमुक्तं इदानीं शाब्दविभ्रमं साधयति विवादपदानीति पदमात्रपक्षीक
रणे गामानयेत्यादिषु यथार्थज्ञानजनकेषु सिद्धसाधनता तदर्थं विवादपदग्रहणं आकांक्षासन्निधिमन्ति वेति पदानीत्यर्थः पदानीदेव
दत्तोयमधीत इतिवत् विशेषानुमापकतया व्यन्वयप्रतिपत्तिजनकत्वेन सिद्धसाधनता उक्तं स्वस्मारितेति पदकदम्बकत्वात् पदसमूह

नच व्यतिरेकोपसंहारस्थलाभावः मनसश्च वस्तुजन्ययथार्थज्ञानजनकस्यातिरिक्तज्ञानजनकतया व्यतिरेकोपसंहारभू
मित्वात् विवादपदानि पदानि स्वस्मारितपदार्थान्वयप्रतिपादकानि आकांक्षासन्निधिमत्पदकदम्बकत्वात् गामानयेत्या
दिपदकदम्बवत् नच योग्यतावत्त्वमुपाधिः साध्येन समव्याप्त्यभावात् आकांक्षासन्निधिरहितपदेषु योग्यतावत्त्वेपि सा
ध्याभावात् नचाकांक्षादिमत्त्वे सति योग्यतावत्त्वमुपाधिः व्यर्थविशेष्यत्वात् ।। त्वादित्युक्ते उरगास्तुरगाः खदिर इत्यादिपद
समूहेष्वनैकान्तिकतात तदर्थमाकांक्षाग्रहणं तावत्युक्ते गामानय प्रसारं पश्येत्यत्र साकांक्षयोरप्यसन्निहिततया परस्परमन्वयप्रतीत्यजन
कयोर्गां पश्येत्यनयोरनैकान्तिकतात तन्निवृत्त्यर्थं सन्निधिमदिति तावत्युक्ते चायमेति पुत्रो राज्ञः पुरुषोपसार्यतामिति वाक्ये राज्ञ इति पुरुष इति
च पदयोः सन्निधिमत्त्वेपि नैराकांक्ष्येण परस्परमन्वयप्रतीत्यजनकयोरनैकान्तिकतात तदर्थमाकांक्षाग्रहणं किं समव्याप्तिवादिनायमुपाधि
दीयते विषमव्याप्तिवादिना वा नाद्य इत्याह साध्येनेति तदेव विवृणोति आकांक्षेति ननु नवयमन्वयप्रतीतिजनकत्वे योग्यतावत्त्वमात्रमुपा
धिरस्तु किं तर्ह्याकांक्षासन्निधिमत्त्वविशेषितेन तथा च समव्याप्तिरस्त्येवेत्यत आह नचाकांक्षेति हेतुमाह व्यर्थविशेष्येति आकांक्षासन्निधिम
त्त्वेपि यदि च विद्योरयनाभावापराधेनान्वयप्रतीतिर्न स्यात् ततः साध्यव्याप्तिसिद्ध्यर्थं योग्यतावत्त्वमुपादेयं न चैतदस्ति तादृशां सर्वेषां पक्षत्वाद्

तदेव विवृणोति न ह्याकांक्षासंनिधीत्यादिना द्वितीयं दूषयति नचेति अत्रापि पक्षेतरत्वमेवोपाधिर्व्यतिरेकस्य साध्यव्यतिरेकेणाव्याप्तेनि
र्णयात् जरद्गवादिवाक्यानांप्रसक्तत्वात् खदिरस्तुरग इत्यादिपदानामाकांक्षाद्यभावादेवान्वयप्रतीत्यजनकत्वादित्यभिप्रेत्याह य
द्योग्यार्थमिति आभाससमानयोगक्षेमतामाशंक्य निषेधति नचेति नेदं सजातमिति समनन्तरबाधकप्रमाणविरोधात् प्रमितिजनकत्वानुमा
नं कालातीतं नैवं प्रतीतिमात्रजनकत्वानुमाने किंचिद्बाधकमस्ति उक्तानां संविद्विरोधादीनां प्रागेव परिहृतत्वादित्यभिप्रेत्याह तत्रबाधके
ति शशविषाणं खपुष्पमित्यादौ सत्यर्थेऽत्यन्तायोग्येप्याकांक्षासन्निधिमच्छब्दो ज्ञानं करोतीति भट्टवार्त्तिकार्थः योग्यतारहितस्याप्याकां

न ह्याकांक्षासन्निधिमत्त्वे सति योग्यताभावेनान्वयज्ञानाजनकत्वमुभयवादिसंप्रतिपन्नस्थले दृष्टमस्ति अयोग्यार्थे विषयाणा
माकांक्षासंनिधिमत्पदानां सर्वेषां पक्षीकरणात् नच योग्यतावत्त्वस्य विषमव्यापकत्वेनोपाधिना यदयोग्यार्थेन तदन्वितप्र
तिपत्तिजनकं न भवतीति व्यतिरेकोपसंहारस्थलस्य पूर्वोक्तन्यायेन दर्शयितुमशक्यत्वात् नच विवादपदानि पदानि स्वस्मा-
रितार्थान्वयप्रमितिजनकानि आकांक्षासन्निधिमत्पदत्वात् गामानयेति पदवदित्याभाससमानयोगक्षेमता तत्रबाधकप्रमा
णविरोधेन कालात्ययापदिष्टत्वात् प्रतीतिमात्रसाधने तु बाधाभावात् उक्तं चैतद्भट्टाचार्यैः अत्यन्तासत्यपि ज्ञानमर्थे शब्दः क
रोति हीति विपक्षे च प्रतिपक्षाप्रतिपत्तौ तन्निराकरणाय कथारंभासंभवो बाधकः तथाहि शब्दोऽनित्य इति शब्दस्यानित्यत्वे
वादिना प्रतिपादिते यदि तत्प्रतिवादी प्रतिपद्येत तदा वादिना परिषदा च विज्ञातस्यापि स्वयमविज्ञानेऽविज्ञातंनाम नि- ग्रहस्थानमापद्येत

क्षादिमतः प्रतीतिजनकत्वानङ्गीकारे प्रतिवादिवाक्याच्छब्दोऽनित्य इत्यादेरयोग्ययोः शब्दानित्यत्वयोः संसृष्टप्रतीत्य
नुपपत्तौ तदुद्भावनाभावेन तन्निराकरणाय ग्रन्थकरणादिरूपकथानारंभप्रसंगो बाधक इत्याह विपक्षे चेति एतदेव विकल्पपूर्वकं विवृणोति
तथाहीति यदि न तु बुद्ध्येत न बुद्ध्येत येनापि द्रष्टव्यम् स्याद्येन निराकरणमशक्यमित्यपि द्रष्टव्यं न केवलमप्रतिबुद्धस्य निराकरणमशक्यमिति
ग्रहस्थानापत्तिश्चेत्याह तदा वादिनेति इदं च विशेषणं अविज्ञातं चाज्ञानमिति सूत्रस्थचकारानुकृष्टोऽर्थोऽविज्ञातार्थोऽतिव्याप्तिपरिहारप्र
योजनं परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थमिति सूत्रं त्रिरभिहितमपीति वादिनेति शेषः ॥ ॥ ७ ॥ ६ ॥

द्वितीये प्रतिपत्तौ वेति तस्यैव प्रपंचः नहि शब्दस्येति दूषणांतरमाह किंचेति एकं शब्दादिकमधिकृत्य विरुद्धधर्मविषयिण्यौ प्रति।
पत्ती हि विप्रतिपत्तिर्न पुनर्भिन्नाधिकरणे नाप्यविरुद्धार्थविषयिण्याविति नित्य आत्मा अनित्या बुद्धिरित्यनयोर्नित्य आत्मा विभुश्चेत्यनयोर्वा
विप्रतिपत्तित्वाभावात् संशयविप- यः स्तोनंगीकारेन संभवेत् नापि व्यवहारहृपमात्रमप्रतिपत्तौ विरुद्धधर्मविप्रतिपत्तित्वाभावात् प्रमिति
त्वेन विरुद्धधर्माध्यासेनार्थस्यैव भेदापत्तिरित्यर्थः ननु नाहृशधर्मद्वयस्य प्रस्तुतधर्मिव्यतिरिक्तनिहृनयाऽग्रहणात्तथाव्यवहार इति चेन्न

प्रतिपत्तौ वा विपर्ययाभ्युपगमप्रसंगः न हि शब्दस्यानित्यत्वज्ञानं तन्नित्यत्ववादिनो यथार्थं किंचैकाधिकरणविरुद्ध
धर्मद्वयप्रतिपत्तिलक्षणा विप्रतिपत्तिरेव भवन्मते न भवेत् तत्र कुतस्तरां कथाप्रवृत्तिः कुतस्तमां च विप्रतिपत्तिनिरासः अपि
च सर्वस्य वाक्यस्य संसर्गप्रतीत्यजनकत्वेऽनृतापार्थकनिरर्थकभेदो न स्यात् समुदायार्थप्रतीतौ सत्यामपि यदर्थो
बाधितो भवति तद्वाक्यमनृतमुच्यते यथा नद्यास्तीरे पंच फलानि सन्तीति विप्रलंभकवचनं यत्रावयवार्थप्रती।
तौ सत्यामपि समुदायार्थाप्रतीतिस्तदपार्थकं यथा दशदाडिमानि षडपूपाः कुंडमजाजिनमित्यादि अव।
यवार्थप्रतीतेरपि यत्राभा

स्कत्निष्ठत्वाप्रतिपत्तौ व्याप्तिग्रहाभावादनुमानानुदयादिति बाधकांतरमाह अपि चेति सर्वस्येति वाक्यमात्रस्येति यावत् अनृता
दीनां प्रसिद्धं विवेकं दर्शयति तदभावापादनाय समुदायार्थेत्यादिना अत्र चानृतशब्देन प्रतिज्ञासंन्यासो निरनुयोज्यानुयोगो
ऽसिद्धिविशेषश्च विवक्ष्यते अपार्थकमाह यत्रेति पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकं वर्णक्रमनिर्देशवन्निरर्थकमित्यस्यापा

क्वचिदपीति एतेषु मध्ये क्वचिदपीत्यर्थः संसर्गप्रतीतिमनुमानेनापलपन्तं प्रति पक्षयति यदसदिति दूषयति मैवमिति न च यदस
त्तदपरोक्षतया न प्रकाशत इति साध्यं न व्यर्थविशेषणत्वात् किं च तादात्म्यप्रतीतेर्न वा यस्यायमप्रकाशः साध्यत उभयथापि दूषणम्।
माह तादात्म्यस्य चेत्यादिना ननु तादात्म्यं तावत्प्रतीयते अन्यत्र शुक्तिरजते च प्रतीयेते तेषां चासंसर्गाग्रहात्प्रतीतेऽपि विशिष्टतादा
त्म्येन व्यवहार इति तत्राह असंसर्गाग्रहेति आश्रयाप्रतीतौ नान्विष्टतया हेतोरप्यप्रतीतावसिद्धिः स्यात् तथोक्तं एकदेशदर्शनेऽख

वस्तुन्निरर्थकं यथा नित्यः शब्दः कचटतपानां गजडदबत्वात् खछठथवदिति सचायमनुतापार्थकादिभेदः क्व
चिदपि शब्दस्य संसर्गप्रतीत्यजनकत्वेन संभवतीत्यलमतिविस्तरेण यदसत्तन्न प्रकाशते यथा गगनकुसुमम् असच्च
शुक्तिरजततादात्म्यमिति चेत् मैवं गगनकुसुमस्यापि तच्छब्दात्प्रतीयमानत्वेन दृष्टान्तस्य साध्यविकलत्वात् तादा
त्म्यस्य च प्रतीतावन्यथाख्यातिस्वीकारात् अप्रतीतावाश्रयासिद्धेः त्वसंसर्गाग्रहबलेन च न व्यवहारे तत्रासत्त्वाप्रती
तो हेतोरपक्षधर्मत्वात् तस्मादि  जतादिविभ्रमे पुरोवर्तिशुक्तिशकलादि रजताद्यात्मनावभासत इति सिद्धं भवत्वेवं
विभ्रमसद्भावः विभ्रमालंबनं तु किमसत्सदेव वा किं वोभयात्मकमुतोभयविलक्षणमिति विवेचनीयम् ॥ ० ॥

त्वनुमापकमिति भाष्यकारैरप्येकदेशदर्शनादेकदेशान्तरे बुद्धिरिति एतेन शुक्तौ रजताकारेण न प्रकाशते तद्रूपेणासत्त्वात् यथा
घटः पररूपेणेति सुरारिरप्यपास्तः प्रमाणस्मृतिवि  वक्षायां सिद्धसाधनत्वात् भ्रान्तिविवक्षायां तत्वाप्रसिद्धविशेषणतासाध्यविकल
श्च दृष्टान्त इत्यादेश्च वादार्थमुपसंहरति तस्मादिति आरोपं निरूप्यारोप्यं निरूपयति भवत्वेवमित्यादिना सदेवेत्यन्यथाख्यात्यात्म
ख्यात्योर्निर्देशः उभयात्मकमिति तु भेदाभेदवादिनाऽन्यथाख्यातिविशेषस्य उभयविलक्षणमिति तु सिद्धान्तस्य॥ ९ ॥

प्रथममसत्ख्यातिं निराचष्टे नतावदिति अपरोक्षेति शाब्दप्रतीतिव्यावृत्त्यै ननु यद्यपि शशविषाणादौ प्रवृत्तिमतीतीन दृष्टेन तथाप्यस
द्विशेषरूप्यादौ किं न स्यातामिति शंकते क्वचिदिति सतः खल्वयं सामान्यविशेषभावो न त्वसत इति परिहरति नेति अथासत्वेनाम न
निःस्वभावत्वं येनेदं दूषणं स्यात् अपि तु सहेतुलक्षणं पत्राह सहेतुलक्षणेति असतोऽप्यपरोक्षसंवादयत्यसह्यादौ अंतरेणापीति यद्यपि
निःस्वभावमसत्संवेद्यं तथापि तत्संवेदनस्य सामर्थ्यमंतरेण स्वकारणविशेषात्समनंतरप्रत्ययादासादितः प्राप्तः स्वभावविशेषो येनावि
ज्ञानेन तज्ज्ञानात्तद्वशविज्ञानमेवाविद्ययाऽसत्प्रकाशनशक्तिलक्षणयाऽसत्प्रकाशनशक्तिमदिति योजना एतदुक्तं भवति यद्यप्यपि पा

न तावदसत् असतोऽपरोक्षावभासानर्हत्वात् तदादिस्याप्रवृत्त्यनुपपत्तेश्च क्वचिदसद्विशेषेऽपि प्रतिभा
सप्रवृत्तौ किं न स्यातामिति चेन्न विशेषाधिकरणत्वेनुपपत्तेस्तस्य निःस्वभावत्वात् सहेतुलक्षणमा
त्रेणासत्ताभिधाने मायावादिमतप्रवेशात् अंतरेणापि ज्ञेयसामर्थ्यं निःस्वभावेऽप्यसति स्वकारणविशेषसमा
सादितस्वभावविशेषविज्ञानमेवाविद्ययाऽसत्प्रकाशनशक्तिमदिति चेत्तर्हि वक्तव्यं किमस्याः शक्तेः शक्यमि
ति यद्यसदेव किमेतस्याः कार्यमुतैतज्ज्ञाप्यं नाद्यः असतोऽकार्यत्वात् प्रकाशनशक्तिव्याघाताच्च न द्वितीयः

ति सहकार्यालंबनसमनंतरात्मकेभ्यः प्रत्ययेभ्यश्चतुर्भ्योऽपि न चैत्ता उत्पद्यंत इति स्थितिस्तथापि भ्रांतिस्थलेष्वालंबनप्रत्ययस्यास
त्वात् अनर्थक्रियासमत्वादत एव न तत्संयुक्तस्याधिपतेश्चक्षुरादेस्तत्सहकारिणश्चालोकस्य सहकारिप्रत्ययस्याभावेऽपि समनंतरप्र
त्ययलक्षणपूर्वज्ञानमात्रात्स्वभाववैचित्र्यवशाद्विज्ञानमुत्पद्यते स्मृतिज्ञानमिव विषयमंतरेण सामग्रीमात्रप्रयोज्यमिति तदेतद्दू
षयति तर्हि वक्तव्यमित्यादिना प्रकाशनशक्तित्वेतिव्यंजकत्वात्प्रमाणस्य प्रमेयोत्पादकत्वमयुक्तमित्यर्थः १७ ॥ ॥

प्रकाशान्तरेति एतज्ज्ञाप्यमिति कोऽर्थः एतज्जनितज्ञानस्य विषय इति तथा च यदेतद्याशक्याज्जन्यं ज्ञानं तत्किं ज्ञानान्तरमाश्रयभूतमेव वा।
नाद्यः असज्ज्ञानमन्तरेण द्वितीयज्ञानानुपलब्धेरुपलब्धौ वाऽनवस्थानाच्चेत्यर्थः द्वितीयं शङ्कते तदेवेति दूषयति न विज्ञानाश्रयामि
ति स्यादेतत् सत्यमाश्रयविषयसापेक्षा शक्तिर्विषयाभावे न भवेत् शक्तिरेव तु न स्वीक्रियते किं तर्हि विज्ञानमात्रमेव तत्स्य च तथाविध
मेव रूपं कारणविशेषादाहितं येन परित्यक्तशक्तिरूपमपि तदसत्प्रकाशो भवतीति शङ्कते अस्तु तर्हीति दूषयति न सदसतोरिति ननु शून्य
वादिना कथं विज्ञानसत्त्वमभिमतं येन सदसतोरिति शङ्कावचनं स्यात् सत्यं शून्यवादिविशेषोऽयं का तर्हि शून्यवादिना वितेपस्य सर्वथा

प्रकाशान्तराभावात् अनवस्थानाच्च तदेव विज्ञानमसतः प्रकाश इति चेन्न विज्ञानाश्रयां शक्तिं प्रति विज्ञानस्यैव
शक्तशक्यतया विषयत्वानुपपत्तेः नह्येकस्यैकदैव सिद्धतया शक्त्याश्रयत्वमसिद्धतया च तद्विषयत्वं संभवति यु
गपदेव सिद्धसाध्यत्वविरोधात् शक्यमेव तर्हि शक्तेर्माभूदिति चेन्न शक्तेः कस्य कुत्रेति शक्तशक्यनिरूपणाधी
ननिरूपणत्वात् अस्तु तर्हि स्वकारणविशेषासादितस्वभावभेदं विज्ञानमेवासतः प्रकाश इति चेत् न सदसतोः
संबंधानिरूपणात् असदधीननिरूपणत्वं ज्ञानस्य तत्संबंध इति चेत् ॥ ॥ ६ ॥ ॥

शून्यत्वांगीकारात् योगाचारेण हि बहिःशून्यता वेद्यस्यांगीकृता अनेन त्वंतरेपीति ततो विशेषः यथा चैतत्तथा भदन्तशंभुना तत्तदभियु
क्तवचनान्युदाहरता अस्माप्यभावसिद्धिर्नियमाध्यमिकवादिन इत्यत्रोपपादितं संबंधानिरूपणादिति यदि हि आविद्यात्मका श
क्तिः स्वीकृता स्यात्तदा संहृतः कोपि संबंधः तामपि परिहरतः को नु नामानयोः संबंधः स्यादित्यभिप्रायः असत्प्रकाशोयमिति य
दिदमसदधीननिरूपणत्वं ज्ञानस्य तत्तेनासता तस्य संबंध इति शंकते असदधीनेति॥ ॥ ७७ ॥ ॥ ॥

दूषयति न तदधीनेति संबन्धयोर्हि निरूप्यनिरूपकभावो दृष्टः नहि जातु धौतकलधौतकलशधवलिम्ना नालफलकालिमा निरू-
प्यमाणो दृष्टचर इत्यर्थः भवतु संबंधान्तरमपि संयोगादिलक्षणमिति नेत्याह असतश्चेति अथ घटस्य प्रकाश इतिवत् किं न स्यादिति
तत्राह ज्ञानजन्येति असत्त्वाद्धेतोर्ज्ञानजन्यातिशयानाधारत्वात् अपरोक्षज्ञानविषयभावानुपपत्तेः घटादिवदिति दृष्टान्तः व्यतिरेके शंक-
ते अयमसदनुभव इति अयमर्थः अस्ति तावद्द्वयं निरूप्यनिरूपकभावनियमः तेन हेतुना तेनासता ज्ञानस्याविनाभावः कश्चि-
दस्ति मूलभूत इति विकल्प्यत इति परिहरति मैवमतदुत्पत्तेरिति अयमभिसंधिः द्विविधो ह्यविनाभावः सौगतसमये स्वभावः कार्यं-
मनुपलब्धिश्चेत्यपराह कीर्तिर्न्यायविन्दौ त्रिरूपाणि त्रीण्येव लिंगान्यनुपलब्धिः स्वभावः कार्यं चेति तत्रानुपलब्धिरर्थाभावावेदि-

न तदधीननिरूपणत्वस्यापि संबंधान्तराधीनत्वादसतश्च निरुपाख्यत्वात्संबंधाधारत्वानुपपत्तेः ज्ञानजन्या-
तिशयानाधारत्वाच्च घटादिवत् असतो ज्ञानविषयत्वानुपपत्तेः अयमसदनुभव इत्यसता विना नानुभवो निरू-
प्यत इति तेनाविनाभावः संबंध इति चेत् मैवम् अतदुत्पत्तेरतदात्मनश्चानुभवस्य तदविनाभावासंभवात्
तस्मात्स्वप्रत्ययासादितस्वभावभेदं विज्ञानमेवासत्प्रकाश इत्यसत्ख्यातिवादिनामसत्प्रलापः स्यादारोप्यमाणं ना-
ऽसत् ॥

का यथा यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सोऽसद्व्यवहारविषयः यथान्यत्र क्वचिद्दृष्टः क्वचिद्देशविशेषउपलब्धिलक्षणं प्राप्तो घ-
टपटादिर्नोपलभ्यते नोपलभ्यते च शशविषाणादिरर्थ इति साधर्म्यवत्प्रयोगः स्वभावकार्ययोरन्वयानुभावबोधकौ यथा वृक्षशिंशपात्वयोः
यथा वाग्निधूमयोरिति तदप्युक्तं कीर्तिना कार्यकारणभावाद्वा स्वभावाद्वा नियामकादविनाभावनियमोऽदर्शनान्नानुदर्शनादिति अन्वयव्यति-
रेकाभ्यां न भवतीत्यर्थः तदिह ज्ञानस्यासल्लक्षणार्थबोधकस्वाभाव्यात्तदनुपलब्धिना दूरापेता सदसतोः स्वभावस्वभाविताभावाच्च न स्वभावा-
विनाभावः उक्तं हि न्यायविन्दौ स्वसत्तामात्रभाविनि साध्यधर्मे हेतुः स्वभाव इति विज्ञानस्यासदुत्पत्त्यभावाच्च न कार्यकारणभाव इति अस

वि॰सु॰
टी॰न
७५

सत्त्वापत्तिं निराकरोति नापीति नवयमत्रैव सत्त्वं ब्रूमः येन बाधविरोधः स्यादपि त्वन्यत्रेति शंकते यत्रेति भवेदेवं यद्यन्यत्र सत्त्वे प्रमाणं स्या न्नतु तदस्ति परिहरति न तत्रेति संभावितप्रमाणानि विकल्प्य दूषयति भ्रांत्यनुभवेत्यादिना प्रत्यक्षसमर्थापत्तिर्वा इत्यर्थः भ्रमानु प पत्तिं दूषयति न तृतीय इति अयं तावत्तः संसर्गस्याप्यपरोक्षप्रतीतिमंगीकुर्वतो रजतस्यापि तथाप्रतीतिसंभवान्न सत्तापेक्षेति सद्वित्ति मनुपपत्तावपीत्यपि नात्रैव तत्सत्ते तिसन्निधेरित्यर्थः ननु पश्यन्यत्राप्यसदत्रैव तत्रापि बाधः स्यान्नत्वेतदस्ति तन्तो नूनमवगत।

नापि सत् नेदं रजतमित्यादिबाधविरोधात् यत्र बाध्यते ततोऽन्यत्रास्तीति चेन्न तत्र प्रमाणानिरूपणात् तथाहि भ्रान्त्यनुभवस्तत्र प्रमाणमुत बाधानुभवः किंवा भ्रमानुपपत्तिः बाधानुपपत्तिर्वा असत्ख्यात्यनुपपत्तिर्वा नाद्यः तस्य पुरोवर्तिरजतसत्तामात्रगोचरतयाऽसंनिहिततत्सत्तायामौदासीन्यात् न द्वितीयः बाधानुभवस्यापि पुरोवर्तिन्यारोपितभावविषयस्य देशान्तरतत्सत्तानावेदकत्वात् न तृतीयः रजतावभासस्य यथाप्रतीतपुरोवर्तिरजतसत्तां विनानुपपत्तावपि देशान्तरे तदीयसत्तामन्तरेणानुपपत्त्यभावात् न चतुर्थः बाधस्य प्रसक्तप्रतिषेधात्मनस्तत्रैव तत्सत्त्वाक्षेपकतयाऽन्यत्र तत्सत्तानाक्षेपकत्वात् न च बाध्यमन्यत्रापि तत्स्यात्सत्त्वे तत्रापि कुतो न तस्य बाधः स्यादिति तत्र तस्याप्रसक्तेरेव बाधाभावोपपत्तेः तत्सत्ताध्यवसायायोगात्॥

च्छामोऽन्यत्र सदिति तत्राह नचबाध्यमित्यादि नाहेतुमाह न तत्र तस्येति बाधाभावस्त्वन्यथासिद्ध इत्यर्थः ननु न वयं रजतबाधान्यथानुपपत्त्या रजतसत्त्वं ब्रूमः अपितु तादात्म्यमात्र बाधो धर्मिभूतरजतं क्वापि परिशिनष्टीत्याशंक्य निषेधति नेदमिति आपसमर्थः कथमिदमवधार्यते तादात्म्यनिषेधो येन धर्मिनिषेध इति यदि हि धर्मिणो रजतस्य मानान्तरान्न सत्त्वमवसीयेत तदाप्रसक्तस्यापीदमंशस्येवाबाध इत्यवधार्येत न त्वेतदस्ति न हि दूरस्थस्याव रयोर्भेदाग्रहात्परस्परात्मत्वारोपेनेदं शुक्तिरूप्यतत्त्वविवेकग्रहात्तदा ॥ ८ ॥ ६७ ॥ ६७ ॥

राम॰
७५

त्म्यांशनिषेधेन तत्रैवानंतरप्रतीतिवदनयोरस्तिप्रतीतिः एतदुक्तं भवति प्रसक्तयोस्तादात्म्यांशनिषेधो धर्मिणोस्तत्रैव समनंतरप्रतीत्या
व्याप्तस्त्विदंता निवर्तते इति न च तत्र संनिहितयोस्तादात्म्यारोप इह तु सन्निहितासन्निहितयोरिति वैषम्यम्॥ एतादृशेषु तादात्म्या
रोपासंप्रतिपत्तेः ———— द्वावेतौ नैक इतिवद्बाधनाच्च असतः ख्यात्यनुपपत्तिरिति पंचमपक्षं निषेधति नापि पंचम इति असतः
एव संसर्गस्यापरोक्षतया ख्यातिरित्यस्य मतं तस्य कानुपपत्तिः सतो रजतस्य प्रतीतावित्यर्थः न्यायकल्पतरावुदीरितमाशंकते अ
थाधुनिकस्येति न संसर्गोऽत्र प्रतीपत्ते येनासतः प्रकाशमानता स्यात् तद्दृष्टांतेन रजतस्यासत्त्वनिषेधेनापि तु शुक्तिरजतयोः स्वरू

नेदं रजतमिति पुरोवर्तिनि रजततादात्म्यनिषेधात्सबाधात्तु भवेद्रजतमर्थात्क्वापि परिशिनष्टीति चेन्न तथा सति
वनस्पत्योरिव विविक्तयोर्द्वयोरप्यत्रैवानंतरं प्रतीतिप्रसक्तेः नापि पंचमः असतः संसर्गस्येव रजतस्याप्यसतः ख्या
त्युपपत्तेः अथाधुनिकस्य कस्यचिन्मतानुसारेणेदं रजतमिति ज्ञानमिदमाकाररजताकारयोर्न संसर्गग्राहकमपि
तु तयोरेकज्ञानसंसर्गिणोर्भेदाग्रहाद्यथार्थव्यवहारो गृह्यमाणयोर्भेदाग्राहि सविकल्पकमेकं विज्ञानं विभ्रम
इति भ्रमलक्षणाभ्युपगमात् तथा च नासतः कस्यचित्ख्यातिरिति कश्चिद्ब्रूयात्तं प्रतिब्रूयात् ॥ ६ ॥ १ ॥

पमात्रग्राहीदमेकं विज्ञानमित्यर्थः तर्हि किं तत्संसृष्टव्यवहारो निर्निबंधनो न भेदाग्रहनिबंधन इत्याह अपि त्विति कथं तर्ह्येकत्वा
निर्भेदस्तत्राह गृह्यमाणयोरिति एकं विज्ञानमित्यख्याते भेदः सविकल्पकमिति च वस्तुमात्रग्राहिणो निर्विकल्पकाद्विवेचितो नेदं
रजतमित्यादिभ्रमश्च भेदाग्राही नित्याहतिर्घट इत्याद्येकैकवस्तुमात्रग्राहि विज्ञानमितरस्माद्भेदं न गृह्णाति उक्तरूपं चानस्तन्निवृत्त्यर्थं
गृह्यमाणयोरित्युक्तम् एकैकेन ज्ञानेन तु भेदवत्पटादेरप्यग्रहणाद्व्यावृत्तिः फलितमाह तथा चेति तदेतद्दूषयति तं प्रतिब्रूयादिति

एकज्ञानोपरोहस्वीकारेपि संसर्गज्ञानापलापसाम्यात् अख्यातिवादिनि संसर्गज्ञानापलापिन्युक्तं शब्दानुमानप्रत्यक्षप्रामाण्यप्रसंगदो
षमत्राप्याह मध्यमत्वेइत्यादिना किंचैकस्मिन्नेव घटे सत्त्वायं घटो न भवतीति विभ्रमे लक्षणमव्यापकं विद्यमानभेदयोरिति विशेष
णेपि दूरगिरिशिखरतरुनिकरमात्रग्राहिप्रत्ययेतिव्याप्तिरिति द्रष्टव्यम् एतन्मतदूषणमुपसंहरति इतिगुरुमतेनेति किंचकणादाद्य
पादमतावलंबिनाजातादिदंवक्तुं न युक्तं भाष्यवार्तिकविरोधेनापसिद्धान्तापातादित्याह किंचकणभक्षेत्यादिना द्वितीयसूत्रे दुःखज

मध्यमत्वेइव्यवहारेप्येकज्ञानोपारोहिणोः संसर्गिणोरसंसर्गाग्रहादेव व्यवहारोपपत्तौ बालस्य संसर्गज्ञानानुमा-
नानुदयाच्छब्दप्रामाण्यभंगप्रसंगादेवमनुमानाभासइवसदनुमानेप्यसंसर्गाग्रहादेव संसर्गव्यवहारोपपत्तेरनुमानो
च्छेदः प्रत्यभिज्ञाप्रामाण्योच्छेदश्च ज्वालैकत्वव्यवहारवत्सर्वत्र प्रत्यभिज्ञायामसंसर्गाग्रहादेव संसर्गव्यवहारोपपत्ते
रितिगुरुमतनिरसनेनैव गुरुमतपरिपोषणनिपुणमतेर्मतं निरस्तमिति किंचकणभक्षाक्षचरणमतमवलंब्यैवम
व्याख्यातिमत्यथावर्ण्यतो द्वितीयसूत्रे मिथ्याज्ञानविवेचनवेलायामिहात्मनि मिथ्याज्ञानमनेकप्रकारं वर्त
तेतच्चअथाऽनित्ये नित्यमिति सभये निर्भयमित्यादिभाष्यं विरोधः कः पुनर्विपर्ययोऽतस्मिंस्तदिति प्रत्ययइत्युद्योत-
कारवार्तिकविरोधश्च प्रसज्येतेति वध्यताऽवध्यतोवालो नानेनार्थोऽस्ति जीवतास्वपक्षहानिकर्तृत्वात् यः कुलांगारता
गतइति न्यायविषयताभयं नातिवर्तेत तस्मादसत्ख्यात्यनुपपत्तिरपिनान्यत्रसतावेदिकाऽरोपितस्यकुत्रचेदारोपि

स्यप्रवृत्तिरेष मिथ्याज्ञानानामुत्तरोत्तरापायेतदनंतरापायादपवर्गइत्यात्मनीत्यधिकरणेसप्तमी अत्र ॥ तमन्यत्रभवद्भवेत् ॥
ह्यनित्येइत्यादिसप्तम्याआधाराधेयरूपसंबंधग्राहित्वं विभ्रमस्यकंठोक्तमितिभावः स्वपक्षहानीति प्रल्हादंप्रतिहिरण्यकशिपु
वचनं ॥ इतिमपक्षोक्तदूषणमुपसंहरति तस्मादितितदेवंसाधारणेनारोपितस्यान्यत्रसत्त्वेनास्तीत्युक्तमिदानीं विशेषतोदूषयि

अन्यथाख्यातिं निराकरोति नतावदिति ननु यदि नु दुष्टासस्य विप्रकृष्टदृष्टत्वं कुतस्तर्हि दोषस्य दोषत्वमिति तत्राह अतो दोषो
पीति प्राप्तकार्यप्रतिबंधकत्वे सति विपरीतकार्य्यनिष्पादको दोषः नत्विहाप्यसदनिर्वचनीयं वा सत्त्वेन भासयतीत्यर्थः
दृष्टानुसारादिति असतस्संसर्गावभासकत्वस्य ज्ञानेत्वयैव स्वीकारादित्यर्थः आत्मख्यातिमवतारयति अस्तु तर्हीति तत्र युक्तोऽ
ह स्वरूपेणासत इत्यादिना नन्वप्यसत्त्वकल्पनेन नेदं रजतमिति बाधविरुद्धमिति नेदं रजतमिति अथ किमिति तद्यन्निषेधती
त्यत आह द्वयोर्बाधकल्पनायामिति अनुभवमपि प्रमाणयति नेदं रजतमिति नन्विदंतानिषेधे सत्यनिदंतया विप्रकृष्टं भवत्वन्य

न तावद्देशान्तरादौ तस्यासन्निहितस्य दृक्सुमयोगपत्त्यात् दुष्टं करणं विप्रकृष्टमपि द्रष्टुं शक्नोतीति चेन्न दुष्टकरणस्य पुंसः
सर्वदर्शित्वप्रसंगात् अतो दोषोप्यसदनिर्वचनीयं वा दर्शयति दृष्टानुसारात् न देवं न देशान्तरादावारोप्यसद्भावः
अस्तु तर्हि बुद्धेः स्वरूपेणासतो गगनारविन्दादिवदप्रतिभासान्नेदं रजतमिति बाधस्येदंतामात्रगोचरत्वात् द्वयोर्बा
धकल्पनायां कल्पनागौरवान्नेदं रजतमिति च रजते बाधादर्शनात् न चेदंतानिषेधे सत्यनिदंतया बहिरपि भव
स्योपपत्तौ कुतः संविदाकारतेति सांप्रतं व्यवहितस्यापरोक्षसंविदेकत्वमंतरेणापरोक्षत्वानुपपत्तेः संविदाका
रो रजतं संप्रयोगमंतरेणापरोक्षत्वात्संवेदनवदिति प्रयोगोपपत्तेः ननु संप्रयोगो नाम किमिन्द्रियसंयोगा
दिविशेषः किं वा संबंधमात्रं नाद्यः रूपादिनानैकान्त्यात्

तत्सन्निधानं त्वात्मरूपप्रत्ययात्मकं कुतस्त्यमिति तत्राह न चेदंतानिषेधे सतीति हेतुमाह व्यवहितस्येति संप्रयोगरहितस्ये
ति यावत् संविदाकारतायामनुमानमपि प्रमाणमाह संविदाकारो रजतमित्यादिना घटादेरनुमेयस्य च व्यवच्छेदार्थं संप्र
योगमंतरेणेत्याद्युक्तं परत्र न्यायदीपावल्यां दूषणमुक्तं तदनुवदति नन्वित्यादिना रूपादिनेति ॥ ६ ॥ ६ ॥

संयोगमंतरेणापरोक्षता रूपादेः समवायमंतरेण च शब्दव्यतिरिक्तस्य सर्वस्य तथापि संविद्रूपतानात्मीयत्वेनैकांत्यं न च तत्रापि संवि
द्रूपत्वमेव सर्वस्य संविद्रूपतांगीकारात् इति वाच्यं तथा सति विपक्षासंभवे न संप्रयोगमंतरेणेति विशेषणवैयर्थ्यात् संबंधमात्र
विवक्षायां तद्राहित्यविशेषणमसिद्धं चेत् तन्येनाध्यासिकसंबंधस्वीकाराद्रजतसंवेदनयोः अत एव दृष्टांतस्य साधनवैकल्यं चेत्याह द्वि
तीये त्विति तर्कबाधमप्याह धीरूपत्वे चेति तदेतत्परिहरति पूर्ववादी मैवमित्यादिना न संबंधमात्रराहित्यं विवक्षितं किंत्विंद्रियसंबंध

द्वितीये तु विशेषणासिद्धिः दृष्टांते साधनविकलता च न ह्याध्यासिकसंबंधं विनास्माकं रूप्यं तद्धीश्चापरोक्षा धीरू
पत्वे च रजतादेर्भ्रांतिं विनापि दर्शनप्रसंग इति चेन्नैवम् इंद्रियसन्निकर्षेण धीनापरोक्षत्वस्य विवक्षितत्वात् संवेदा
नस्य चेंद्रियसंबंधमंतरेणैव स्वतःसिद्धतया साक्षिसिद्धत्वेन वा साधनवैकल्याभावात् न च धीरूपत्वे रजतादेर्भ्रांतिं वि
नापि दर्शनप्रसंगः धियोऽन्यत्वेपि घटादिवद्भ्रांतिं विनापि दर्शनप्रसंगस्य तुल्यत्वात् ततो धीरूपमेव रूप्यमिति चेत् त
दयुक्तं अत्यन्तालीकायाअपि वाह्यतायाः प्रतिभासवदत्यंतासतोपि रजतादेः प्रतिभासोपपत्तेः न च नेदं रजतमि
तीदंतामात्रमेव बाध्यते कल्पनालाघवादिति न्याय्यं इदं रजतमिति प्रतिपन्नविशिष्टरजतस्य नेदं रजतमिति बा
धस्य चानुभवसिद्धतया कल्पनीयत्वाभावात् अत एव कल्पनालाघवन्यायानवतारात् न च संविदैक्यमन्तरेणाप
रोक्षत्वानुपपत्तिः बाह्यतावत्तदुपपत्तेः॥

राहित्यं तेन नानैकांतिकतासिद्धी इत्यर्थः साधनवैकल्यं परिहरति संवेदनस्य चेति रूप्यज्ञानस्येत्यर्थः स्वतःसिद्धतयेति वौद्धाभिप्रा
येण साक्षिसिद्धतयेति स्वाभिप्रायेण तर्कविरोधं परिहरति न चेति पूर्वपक्षमुपसंहरति तत इति ततावदसतः ख्यात्यनुपपत्तिर्वेहि
ष्कृतरभावादित्याह अत्यंतालीकाया इति ननु न्याय्यमित्युक्तं तत्र हेतुः इदं रजतमिति कल्पनीयं हि लाघवमनुसरणीयं न चात्र क
ल्पनाप्रमाणमार्गागतत्वाद्धितरथाऽतिप्रसंगादिदं रजतमिति प्रतीतिप्रसंगाच्चेति भावः अनुपपत्त्यंतरं परिहरति न च संविदैक्यमि

नन्वेवमप्रामाणिकत्वमुक्ताप्रमाणबाधं चाह किंचारोपितमित्यादिना स यदि ब्रूयादान्तरं न वस्तु सदतो न दाहादिरिति तं प्रत्याह॥
नहीति अपसिद्धान्तापत्तिरित्यर्थः यत्त्वनुमानमुक्तं तत्र हेतुर्हि दुष्टो नैकान्तिकमित्याह संप्रयोगमित्यादिना सत्त्वानि निराकरणमु
पसंहरति तस्मादिति अस्तु तर्हि सदसदात्मकमारोपितं यथाहुः स्वरूपपररूपाभ्यां नित्यं सदसदात्मके वस्तुनि ज्ञायते किंचि
द्रूपं केनचित्कदाचनेति तत्राह नापि सदसद्रूपमिति ननु यद्यपि परमार्थविषयत्वमुभयोस्तथाप्युभयाकारस्य सतोऽर्थस्य।

किंचारोपितं बुद्धौ चेत् गुंजापुंजादौ दहनसमारोपे देहदाहप्रसंगः बुद्धावपि तस्यातात्त्विकत्वादप्रसंग
इति चेत्तर्हि न तद्बहिः सत्त्वातिरिक्तं नासदनिर्वचनीयं वा स्यात् गत्यन्तराभावात् संप्रयोगमंत
रेणापरोक्षत्वादिति हेतुर्बहिष्ठेप्यबुद्ध्याकारे वर्तत इति सव्यभिचारः तस्मान्नासन्नापि सत्समारोपि
तं नापि सदसद्रूपं विरोधात् अविरोधे वा न भ्रान्तिबाधौ द्वयोरपि परमार्थविषयत्वात् उभयाका
रस्यैकारप्रतिभासो भ्रम इति चेत् तर्हि बाधस्यापि भ्रमत्वप्रसंगः तस्याप्येकाकारविषयत्वात्॥
सर्वज्ञानानां च सर्वात्मनानवभासकत्वाद्भ्रान्तित्वप्रसंगो दुर्वारः स्यात् तस्माद्गत्यन्तराभावादनिर्व
चनीयमारोपितमिति सिद्धम् ननु किमिदमनिर्वचनीयत्वं किं निरुक्तिविरहः किंवा निरुक्तिनि
मित्तस्य विरहः

काकारग्राहित्वात् पूर्वज्ञानं भ्रान्तमित्याशंकते उभयाकारस्येति तर्हि सदाकारमात्रग्राहिणो बाधकस्यापि भ्रान्तित्वमि
त्याह तर्हीति अस्त्येव चेदं सर्वज्ञानानामेवैवंभावात् भ्रान्तित्वप्रसक्तिरित्याह सर्वज्ञानानां चेति आरोपितमनिर्वचनीय
मित्युपसंहरन्तं तदाक्षिपति नन्विति ॥ ९ ॥ ॥ १७ ॥ ९ ॥ १५७ ॥

किं निरुक्तिविरहोऽनिर्वचनीयत्वं किं वा निरुक्तिनिमित्तस्य विरहः किं वा ज्ञानबाध्यत्वं अथवा प्रतिपन्नोपाधौ निषेधप्रतियोगित्वमि
ति तत्र प्रथमं निषेधति नाद्य इत्यादिना निरुक्तेर्निमित्तमिति निर्वचनसंबंधि हि निर्वचनीयत्वं च निमित्तं ज्ञानमपि भवति कारणतया
संबंधित्वात् तथा विषयतयार्थोऽपि तयोर्विरहश्चेदनिर्वचनीयत्वं विवक्षितमित्यर्थः ज्ञाननिमित्तविरहं दूषयति नाद्य इति विषय
ज्ञानं हि शब्दप्रयोगे निमित्तं तच्च त्वयाऽप्युपेयत इत्यर्थः अर्थविरहपक्षं दूषयति न द्वितीय इति अर्थविरह इति कोऽर्थः किं स
न्नर्थो नास्तीति नहि सन्नेवार्थ इत्यसत्त्वापातित्वमेव न पुनरनिर्वचनीयत्वमित्याह अर्थस्यापीति अर्थासन्नर्थो नास्तीति नहि सन्नेवार्थ इ

नाद्यः इदं रजतमित्यादिनिरुक्तेरंगीकारात् न द्वितीयः विकल्पासहत्वात् तथा हि निरुक्तेर्निमित्तं ज्ञानमर्थो वा नाद्यः
रजतादिज्ञानस्य निरुक्तिनिमित्तस्य मायावादिभिरभ्युपगमात् न द्वितीयः अर्थस्यापि सतो विरहेऽसत्त्वापातिप्रसंगा
त् असतोऽपि विरहे सत्त्वप्रसंगात् उभयविरहस्य च परस्परविरुद्धयोर्लोकसिद्धयोरन्यतरनिषेधस्येतरविधिना
नरीयकत्वनियमदर्शनादेवानुपपत्तेः भावाभावयोरलौकिकयोः स्वकपोलपरिकल्पितयोर्निषेधसमुच्चयांगी
करणे तु लौकिकसदसतोरनिषेधात् न निरुक्तिनिमित्तार्थासंभवः अतो न सदसद्विलक्षणमनिर्वचनीयं नापि
ज्ञानबाध्यत्वं बाध्यत्वशब्देन निवर्त्यत्वांगीकारे पूर्वज्ञानस्य संस्कारस्य चोत्तरविज्ञाननिवर्त्यत्वादनिर्वाच्यता

तिसत्त्वापातित्वमेवेत्याह असतोऽपि विरह इति नन्वसयोरप्यर्थयोर्विरहोऽर्थे —— विरहलक्षणानार्थान्तरत्वे पातः
तित्राह उभयविरहस्य चेति तत्र किं लोकप्रसिद्धसदसतोर्विरहोऽनिर्वचनीयत्वमुत स्वमतसंकेतितयोः नाद्य असंभवादि
त्याह लोकसिद्धयोरिति द्वितीये आह भावाभावयोरिति निषेधयोः समुच्चयः निषेधसमुच्चयः तृतीयं निषेधति नापि ज्ञानबाध्य
त्वमिति तत्र वक्तव्यं किं बाधकज्ञाननिवर्त्यत्वं किं वा बाधकज्ञानविषयत्वं किं वा कालत्रयनिषेधप्रतियोगित्वं तत्र प्रथमं निषेधति

द्वितीयं दूषयति अथवा बाध्यत्वं नामेति अधिष्ठानयाथात्म्यज्ञानं हि तन्मते बाधकं तथा च स्वप्नस्थे वाऽतिव्याप्तिः असन्मतेऽपि नेदं
रजतमित्यत्राधिष्ठानमपि स्फुरतीत्यर्थः तृतीयमुत्थाप्य दूषयति मैवमिति त्वन्मतेऽनिर्वचनीयरजतस्य तत्रैवाविद्यायोन्यतत्वात्म
त्वभिज्ञायमानत्वाच्च न कालत्रयेऽप्यभावः शुक्त्यंगीकारोऽतोऽव्याप्तिः कस्मिंश्चिदपि लक्ष्येऽवर्तमानत्वादित्यर्थः अतिव्याप्तिं चाह
लौकिकेति तृतीयपक्षोक्तं दूषणं चतुर्थेऽप्यतिदिशति एतेनेति अतिदिशन्नव्याप्तिमेव विवृणोति पुरोवर्तिनीति अधि

ष्ठानस्य चेश्वरज्ञाननिवर्त्यत्वादनिर्वाच्यत्वं स्यात् इति लक्षणस्यातिव्याप्तिः अथवा बाध्यत्वं नाम बाधकज्ञानविषयत्वं
तदा शुक्त्यादेर्ब्रह्मणश्चानिर्वाच्यत्वं स्यात् तयोरधिष्ठानतया बाधकज्ञानविषयत्वात् अथ नाभूदस्ति भविष्य
तीति कालत्रयसत्तानिषेधो बाधस्तद्विषयत्वं च बाध्यत्वमिति मैवं मायाविवर्तस्य पुरोवर्तिरजतस्य तथाविध
निषेधविषयत्वानंगीकाराल्लक्षणस्याव्याप्तेः लौकिकपरमार्थरजतस्यात्र तथाविधनिषेधविषयत्वांगीकारा
दनिर्वाच्यत्वापत्तिरिति लक्षणस्यातिव्याप्तेश्च एतेन प्रतिपन्नोपाधौ निषेध्यत्वमनिर्वचनीयत्वमित्यपास्तं पुरो
वर्तिनि प्रतिपन्नस्य रजतस्याधिष्ठानज्ञानेन मायायां विलीयमानायां तत्परिणामतया स्वयमेव विलीयमानस्य ने
दं रजतमिति निषेधाविषयत्वात् किं चात्र प्रमाणं ख्यातत्वे सति बाध्यत्वान्यथानुपपत्तिः असतो नरशृंगादेः ख्याता
सतश्चात्मनो बाधाभावात् उभयस्य चेह दर्शनादिति चेत् ॥ ष्ठानयाथात्म्यज्ञानेनाधिष्ठानाज्ञानमेव बाध्यते।
तत्परिणामरूपयोस्तु ज्ञानज्ञेययोः स्वयमेव विलय इति हि तव समयः तथा च रूप्यादेर्निषेध्यत्वाभावादव्याप्तिर्लक्षणस्येत्यर्थः एवं
लक्षणमाक्षिप्य प्रमाणं प्रतिक्षिपति किं चात्र प्रमाणमित्यादिना अर्थापत्तिं शंकते ख्यातत्वे सतीत्यादिना अनुपपत्तिमेव स्फोरय
ति असतो नरशृंगादेरित्यादिनाऽऽसामर्थ्यापत्तिमानमनोहरकारोक्तान्यथानुपपत्त्या दूषयति न देशान्तरेत्यादिना ॥ ९७ ॥

सि॰सु॰
टी॰न॰
७९

अनुदयमप्याह किंचेति यद्यसतो न भानं कथमसत्पदं बोधकं स्यात् यदि चाबोधकमसत्पदं कथमपार्थकं नाम निग्रह
स्थानं न भवेदिति भावः निरर्थकं चात्रापार्थकत्वेन विवक्षितं नन्वसतोऽभानादित्यत्रासत्पदस्याबोधकत्वेपीतरपदानां बोधकत्वा
त्कथमपार्थकतेत्यत्राह प्रयुक्तपदानामिति इदमपि तेनैवोक्तं यदाह असतो भासनायोगादित्यादिनाशंकाप्रथमे त्वसत्पदस्या
बोधकत्वेऽसतो भासनायोगादित्यनेन व्याघातः अन्यथानर्थकत्वे प्रयुक्तपदानां संभूयकारित्वनियमादिति यत्तु तेनैव द्विती
येसतद्गुनिकोर्थः इत्यादिदूषणमुक्तं तदाह किंचेदं सद्विलक्षणमित्यादिना प्रथमं दूषयति नाद्य इति यत्सत्तायुक्तं तदबाध्यमि
तिव्याप्तिः क्वदृष्टा न तावत्प्रपंचे तत्र सत्तायुक्तत्वेपि बाध्यत्वेन व्यभिचारभूमित्वात् नापि ब्रह्मणि तस्याबाध्यत्वेपि निर्धर्मकत्वेन स

नदेशांतरे सत्वात्तस्यात्रेरिहासत्वाद्बाधस्यापि संभवात् अन्यथाप्युपपत्तेः किंचासतो भानमनुपपन्नमित्यसत्
असतोपि तच्छब्दाज्ञानात् अन्यथात्वपार्थकत्वं वा कस्य प्रयुक्तपदानां संभूयकारित्वनियमात् किंचेदं सद्वि
लक्षणं किं सत्तायुक्तं अथाबाध्यं उत ब्रह्मस्वरूपं नाद्यः सत्तायुक्तस्य प्रपंचस्य भवन्मते बाध्यत्वात् तदबाध्यमि
तिव्याप्तेरसिद्धेः न द्वितीयः यदबाध्यं तदबाध्यमिति साध्याविशिष्टत्वापत्तेः न तृतीयः सिद्धसाधनत्वात् अर्थां
तरत्वाच्च किंचान्यथैवोपपत्तिरभ्यूहनीया सद्विलक्षणत्वे नृशृंगवत्ख्यात्यनुपपत्तेः असद्विलक्षणत्वे चात्मवद्बा
धायोगादुभयविलक्षणस्योभयानुपपत्तेः ॥ सत्तायुक्तत्वाभावादिति भावः द्वितीये तु सतो बाधाभावादिति कोर्थः योयमबाध्य
त्वस्य बाधाभावादिति तथा च साध्याविशिष्टत्वमित्याह न द्वितीय इति यद्ब्रह्मस्वरूपं तदबाध्यमिति हि तृतीयः पक्षः तथा चास्या
र्थस्यास्माभिरप्यंगीकारात् सिद्धसाधनं प्रपंचस्यानिर्वचनीयत्वापर्यवसानादर्थांतरत्वं चेत्यर्थः त्रीणि हि दूषणानि अर्थापत्तेः अन्य
थैवोपपत्तिरन्यथाप्युपपत्तिरनुदयश्चेति तत्रान्यथाप्युपपत्तिमनुदयं चोक्त्वाऽन्यथैवोपपत्तिमाह किंचेति सद्विलक्षणत्वेऽसद्विल
क्षणत्वे उभयवैलक्षण्ये चानुपपद्यमाना ख्यातिर्बाधाभ्यां सदसदात्मकत्वमेव रजतादेः सिद्ध्यतीत्यर्थः ॥ ७ ॥ ॥

राम
७९

स्यादेतत् सद्विलक्षणत्वेनापि भगवन् ख्यात्यनुपपत्तिरित्युक्तमयुक्तं सद्विलक्षणस्यासत्प्रतियोगिकतयाऽनेकत्वानापेक्षस्य कल्पना
गौरवेणाभानाभावप्रतिप्रयोजकत्वायोगात् एवमसद्विलक्षणेऽपि तस्मादसत्त्वमेवाभाने प्रयोजकं न हि निरपेक्षं लघिष्ठं तथा
बाधाभावेऽपि सत्त्वमेव प्रयोजकं लघुत्वादेवं तर्हि बाधो दृश्यमानः सद्विलक्षणं गमयति ख्यातिश्चासद्विलक्षणमिति तदेतदा-
शंक्य निषेधति नच वाच्यमित्यादिना उक्तान्यथोपपत्तिमेव दूषणमाह असतोऽपीति एवमर्थापत्तिं दूषयित्वाऽनुमानं शंकते

नच वाच्यं सदसत्त्वे बाधाभावाभानप्रयोजके न तु तद्विलक्षणत्वे गौरवादिति असतोऽपि तस्य दात्म्यप्रतिभानेन सतोऽपि
प्रपंचस्य बाध्यत्वदर्शनेनोक्तोत्तरत्वात् तदेवं नार्थापत्तिरनिर्वचनीये प्रमाणम् अस्तु तर्ह्यनुमानम् विवादपदम्
निर्वाच्यभ्रमविषयत्वात् यन्नैवं तन्नैवं यथात्मा न चाप्रसिद्धविशेषणः पक्षः इच्छादीनामसद्व्यतिरिक्ताश्रित-
त्वानुमानवत्सामान्यतः प्रसिद्धिविशेषपरिशेषाभ्यां तत्प्रसिद्ध्युपपत्तेरिति चेत् न शुक्त्यादावात्मनि च विपक्षे वर्त-
मानतया विरुद्धत्वात् गुणत्वलिंगेन क्वचिदाश्रितत्वप्रसाधनवत् निर्वाच्यत्वसाधने लिंगाभावात् अथैतद्दो-
षपरिजिहीर्षया विमतं सदसद्विलक्षणं दोषप्रयुक्तभानत्वात् भ्रान्तिसिद्धरजतादिवदिति प्रयुञ्जीत तदप्य-
सत् दृष्टान्तस्य साध्यविकलत्वात्॥

अस्तु तर्हीति तत्र हि भ्रमविषयत्वं हेतुरधिष्ठानतया भ्रमे प्रतिभासमाने शुक्त्यात्मादौ वर्तत इति विरुद्ध इत्याह नशुक्त्या-
दाविति किंच यथा न च गुणत्वेन सामान्यतः क्वचिदाश्रितत्वसाधनं नैवमनिर्वाच्यत्वसामान्येन साधने लिंगमस्ति किं चि-
ततोवैलक्षण्यमित्याह गुणत्वेति अप्रसिद्धविशेषणतापरिहारायान्वयव्यतिरेक्यनुमानं त्यापरत्वदीपावलीस्थं शंकते अथैतद्दो-

साध्यवैकल्यमेव विशदयति नहि शुक्ताविति । अथ नागदानन्दस्य प्रथमं युक्त्या सदसद्विलक्षणं प्रसाध्य तद्दृष्टान्तेन प्रपंचस्य तत्साध्य
तेन हि सैव युक्तिरस्यैवोपन्यस्तनामत्वमनेन रज्जुसर्पमारणन्यायेनेत्याह अथ — भावरूपतयेत्यादिना भवतु वा यथा कथंचित्स
रजतथापि हेतुरेवायं न घटत इत्याह किंचेत्यादिना भानशब्देन ज्ञानमभिधीयते प्राकट्यं वेत्यर्थः प्रथमेऽनैकान्तिकतामाह नाद्यो ज्ञानस्ये
ति अधिष्ठानज्ञानस्य दोषजन्यत्वादितरस्य च ज्ञानत्वानङ्गीकारादसिद्धिरित्यर्थः द्वितीये स्वरूपासिद्धिरित्याह नद्वितीय इत्यादि

नहि शुक्तिरजततादात्म्यस्य सदसद्विलक्षणत्वं परीक्षकैरभ्युपगम्यते येनोभयवादिसिद्धतया तस्य दृष्टान्तता स्यात् ।
अथ भावरूपतयाऽपरोक्षत्वेन भानोद्बाधाच्च तस्य सदसद्विलक्षणत्वं युक्त्या साध्यते तर्हि रजतस्यापि तथात्वं साधयितुं श-
क्यमिति व्यर्थोऽयं वक्रबन्धविधिप्रयासः । किंचेदं दोषप्रयुक्तभानत्वं किं दोषजन्यज्ञानविषयत्वं उत दोषजन्यप्रा-
कट्याश्रयत्वं नाद्यः ज्ञानस्यैकत्वेन तज्ज्ञानविषयाधिष्ठाने व्यभिचारात् । न द्वितीयः प्रतिवादिनं प्रत्यसिद्धत्वात् ।
नहि देशकालव्यवहितस्य रजतादेर्दोषजन्यभानाश्रयत्वमुपपद्यतेऽभ्युपेयते वा परैः । किंचेदमनिर्वचनीय-
त्वं न भ्रान्तिज्ञानानुकूलं नापि बाधकज्ञानानुसारि भ्रान्तौ सदिदं रजतमिति सत्त्वेन बाधे च नेदं रजतमित्यसत्त्वेन ।
स्फुरणात् । अपि चानिर्वचनीये रजतशब्दो न जातिनिबन्धनस्तत्र जातेरभावात् ॥ ६ ॥ ७ ॥ ७ ॥

नापद्यपि त्वत्पक्षे भ्रमस्य साक्षिवेद्यतास्वीकारादस्येवापरोक्ष्यं तथापि विषयावच्छिन्नाभिव्यक्तचैतन्यरूपप्राकट्यं नास्तीत्यपि
द्रष्टव्यं किंच यदुपपादनायेदमनिर्वचनीयत्वमाद्रियते ताभ्यामेव भ्रान्तिबाधाभ्यां विरोधादयुक्तमेतदित्याह किंचेदमिति रजतश-
ब्दप्रयोगानुपपत्तिरप्यनिर्वचनीयत्वबाधिकेत्याह अपि चानिर्वचनीय इति तत्र वक्तव्यं किमयमनिर्वचनीये रजते रजतशब्दो जातिनि-
बंधनः किं वोपाधिनिबंधनः किं वाऽऽकाशादिशब्दवद्रूढ इति विकल्प्याद्यं निषेधति न जातिनिबंधन इति ॥ ७ ॥ १०७ ॥ ५ ॥

अंगीकारे बाधकमाह भावेवेति रजतत्वाधिकरणं हि रजतं नासत् दिदमपि चेत्तथाविधं तद्वदेवाबाध्यमपि स्यादित्यर्थः द्विती
यं निषेधति नापीति हेतुमाह अखंडशब्दत्वादिति अयौगिकत्वात् यथा हि पाचकत्यत्रावयवशक्त्या पचिक्रियासंबंधाभिधाने
न तद्युक्तवत्ते नैवं रजतशब्दस्यास्ति ण्वुलादिवत्कर्त्रादिविहितप्रत्ययाभावादित्यर्थः अथ यथाऽखंडत्वेपि जातिशब्दस्योपा
धिवाचकत्वं तद्वत् किं न स्यादित्यत आह उपाधेरिति तृतीयं निषेधति नाप्यक्षादीति यद्यप्यक्षादौ न सर्वत्रानुगतः कश्चिज्जा
तिरुपाधिर्वार्थोस्ति येन साधारणशब्दत्वं तथापि विभीतकत्वविदेवनत्वादिभिरवांतरधर्मैः शक्यः संगतिग्रहस्त्वाकाशादेश्चाना
दिवृद्धव्यवहारप्रसिद्धतया इह तु न तथाविधमपि किंचिदस्ति भ्रांतिसिद्धस्य प्रतीतिमात्रजीवनत्वात् प्रतीतेश्च प्रत्यात्मदृष्टत्वात् ॥

भावे वा सत्यरजतवदेवाबाध्यत्वप्रसंगात् नाप्यौपाधिकः पाचकादिशब्दवत् अखंडशब्दत्वात् उपाधेरनिरू
पणाच्च नाप्यक्षादिशब्दवद्रूढः स्वभ्रांतिमात्रसिद्धस्यान्यत्रादृष्टचरत्वेन रजतस्य तेनागृहीतसंबंधत्वात् किं
चानिर्वचनीयं चेद्रजतं न प्रतीयेत तथा हि किं दुष्टेंद्रियेण तत्प्रतीतिरुत संस्कारात्। अथवा साक्षिचैतन्यात् ना
द्यः तस्य प्रतिभासमात्रशरीरतया संप्रयोगायोग्यत्वात् न द्वितीयः ननुभूते संस्काराभावात् न तृतीयः इंद्रिया
न्वयव्यतिरेकानुविधायिनः केवलसाक्षिवेद्यत्वासंभवात् नचा॥ इतोऽगृहीतसंगतिकत्वादप्रयोग एवात्र रज
तशब्दस्य प्रसज्जेतेत्यर्थः अनिर्वचनीयत्वे रजतस्य प्रतीत्यनुपपत्तिरपि बाधकेत्याह किंचानिर्वचनीयं चेदिति इन्द्रियेण प्रती
तिरिति प्रथमं पक्षं निराचष्टे नाद्य इति इंद्रियव्यापारात्पूर्वमेव निर्वृत्तं पश्चादिंद्रियसंप्रयोगाज्जायमानं हैंद्रियकं न चैवं प्र
तीतिमात्रशरीरं रजतमित्यर्थः अननुभूत इति प्रतीतिसमसमयशरीरस्य पूर्वानुभवाभावात्संस्काराभावेन ततः प्रतीतिरित्य
र्थः साक्षिवेद्यतां निराचष्टे न तृतीय इति यत्र हीन्द्रियादिव्यापाराभावेप्यापरोक्ष्यं यथाऽज्ञानादौ तत्साक्षिवेद्यं नामरजत
स्यातिप्रसंगात् न चेह तथाभाव इत्याह इंद्रियान्वयेति ॥ ॥ ८१ ॥ ७ ॥

ननु यद्यप्यधिष्ठानविषयतया अन्वयव्यतिरेकयोरन्यथासिद्धत्वान्न रजतज्ञानमिन्द्रियजं अपि त्वविद्यापरिणाम इति तान्द्रिकत्वसंसर्गो ज्ञायते तथापि संसर्गज्ञानस्वीकारान्नाख्यातिप्रसक्तिरिति तत्राह नच संसर्गेति किं चेन्द्रियान्वयव्यतिरेकयोरधिष्ठानपक्षे ये स्पर्शनेनापि तद्ग्रहे तादृशभ्रमप्रसंगः नच तेन सादृश्याग्रहादप्रसंगो विसदृशेपि तद्दृष्टेरिति ज्ञानद्वित्वाभ्युपगममेव प्रकटयति इदमाकारेत्यादिना रजततत्संसर्गेति तज्ज्ञानाकाराविद्यापरिणामस्याप्युपलक्षणं पूर्वपक्षमुपसंहरति तदित्थमिति तल्लक्षणं श्लोकेन संगृह्णाति प्रत्येकमिति यत्प्रत्येकं सदसत्त्वाभ्यां सत्त्वेनासत्त्वेन सदसत्त्वेन च विचारपदवीं विचारमार्गं न

धिष्ठानविषय — तयान्वयव्यतिरेकयोरन्यथासिद्धिः तथा सति ज्ञानद्वयस्वीकारेणाख्यातिमतानुमतिप्रसंगः नच संसर्गप्रतीतेरभ्युपगमान्नाख्यातिप्रसंगः तथापि विज्ञानद्वयाभ्युपगमेनाख्यातिप्रसंगस्य दुर्वारत्वात् इदमाकारविषयमिन्द्रियजन्यं ग्रहणं रजततत्संसर्गविषयं साक्षिचैतन्यमित्यभ्युपगमात् तदित्थं लक्षणप्रमाणयोरनिरूपणान्नानिर्वचनीयावभासो विभ्रम इति अत्रोच्यते प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत् गाहते तदनिर्वाच्यमाहुर्वेदान्तवेदिनः १३ सत्त्वेनासत्त्वेन च विचारासहत्वे सति सदसत्त्वेन च यद्विचारं न सहते तत्तदनिर्वाच्यं न चैवं सत्यव्याप्तिरतिव्याप्तिर्वा ॥ गाहते न प्रविशति तदनिर्वचनीयमिति वेदान्तवेदिन आहुरिति योजना

अत्र सदसत्त्वाभ्यां विचारपदवीं न गाहते यत्तदनिर्वाच्यमित्युक्ते सदसतोरतिव्याप्तिः तयोरप्युभयप्रकाराभ्यामनिर्वाच्यत्वादत उक्तं प्रत्येकमिति तयोः प्रत्येकं विचारसहत्वात् नावमुक्तेसमुदितयोः सदसतोरतिव्याप्तिः तदर्थं सदसत्त्वाभ्यामित्युक्तं संगृहीतं लक्षणं विवृणोति सत्त्वेनासत्त्वेनेत्यादिना एतदुक्तं भवति न प्रकारत्रितयप्रतियोगिकाभाववत्त्वमनिर्वचनीयत्वं किंतु प्रकारत्रयप्रतियोगिकाभावत्रयवत्त्वमनिर्वचनीयत्वमिति ॥ ॥

अव्याप्त्यभावमाह सर्वभ्रमेति अतिव्याप्त्यभावमाह सदादीनामिति एवं च सति यद्दूषयनेनान्यप्र्यश्रुद्धो हि द्वितीयस्तत्र विपर्यय विचारावसरे गर्जितं किमिदमनिर्वचनीयत्वं किं निरुक्तिविरह एवेत्यादि तद्दूषस्थान एवानाकलितपराभिसंधिनासंभ्रान्तमित्याह एवं च सतीति अकाण्डताण्डवितमनवसरनर्तनं तत्र हेतुः निरुक्तेरिति न निरुक्तिमात्रस्य तन्निमित्तस्य वाऽभावोऽनिर्वचनीयत्वं किन्तु सदादिप्रकारैर्निश्चित्य वक्तुमनर्हत्वमित्यर्थः यत्तत्रापि तेनोक्तं तत्सूचयन्निराकरोति न च परस्परेति समुच्चयानुपपत्तौ हेतुः अन्यतरनिषेधस्येति न च युक्तमित्युक्तं तत्र हेतुमाह निषेधसमुच्चयस्येति अनुपपन्न इति कोऽर्थः यदि प्रमाणयुक्त्याघातेन सह तत्

सर्वभ्रमगोचराणां तथाभावनियमात् सदादीनां च तत्तद्विचारसहत्वेन परैरभ्युपगमाच्च एवं च सति निरुक्तिविरहः किं वा निरुक्तिनिमित्तस्य च विरह इत्यादिविकल्पोऽकाण्डताण्डवितं निरुक्तेर्निमित्तभूतायाः प्रतीतेस्तदालम्बनस्य चार्थस्य व्यवहारगोचरत्वेऽपि सदसदादिप्रकारैर्निश्चित्य वक्तुमनर्हत्वाङ्गीकारात् न च परस्परविरहरूपयोः सदसत्त्वयोर्निषेधसमुच्चयोऽनुपपन्नोऽन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वादिति युक्तं निषेधसमुच्चयस्य तात्त्विकत्वानङ्गीकारात् तत्तत्प्रतियोगिदुर्निरूपतामात्रप्रकटनाय तद्धि लक्षणत्वाभिलापः नहि स्वरूपतो दुर्निरूपस्य किंचिदपि रूपं वास्तवं सम्भवति तथा सति तस्यापि तात्त्विकत्वप्रसंगात् न चैकतरनिषेधोऽन्यतरविधिनान्तरीयकः अनिर्वचनीयवादिनं प्रति व्याप्त्यसिद्धेः ॥ ६ ॥ ९ ॥ ९ ॥ ७ ॥

इति सिद्धमेवेदमस्माकमद्वैतवादिनामिति भावः कस्तर्हि सदसद्विलक्षणशब्दार्थस्तत्राह तत्तत्प्रतियोगीति प्रतियोगि सत्त्वादि किमुत्तरकोतस्तत्प्रेयमाश्रीयत्वविधान अपरथाऽसंभवादित्याह नहि स्वरूपत इति स्वरूपेण सदसत्त्वादिभिर्दुर्निरूपस्य प्रपञ्चस्यायं सदसद्वैलक्षण्यं धर्मः तस्य कथं सदादित्वेन निरूपणसंभवः तथात्वे वा तदाश्रयस्यापि तथात्वप्रसङ्गादित्यर्थः किं चाङ्गीकृत्यव्याप्तिमिदमुक्तं सेवनास्तीत्याह नचैकतरेति ॥ श्री ॥ ६ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ६ ॥

तृतीयमपि लक्षणं समर्थयते ज्ञानबाध्यत्वं चेति पूर्वज्ञानादेर्ज्ञानबाध्यत्वलक्षणाभावं दर्शयितुं बाधस्वरूपमाह बाधो हि नामे
ति अभावबोधनप्रकारमेवानुकरोति नासीदात्माधिकरणं ज्ञानं संस्कारो वेति यत्त्वीश्वरज्ञाननिवर्त्यत्वस्वीकारादतिव्याप्तिरिति
तत्राह ईश्वरज्ञानेन चेति अत्यन्ताभावबोधनं हि बाधः न तु ध्वंसकरणमित्यर्थः एतेनेत्यस्यैव विवरणं धर्मितयेति यत्तु बाधलक्षण
मनूद्याव्याप्त्यतिव्याप्तिभ्यां दूषयांबभूवन् तदपि परिहर्तुमुपक्रमते अत एवेति यत्र स्वनिषेधोऽभावबोधनमत एवेत्यर्थः अव्या।

ज्ञानबाध्यत्वं वाऽनिर्वचनीयत्वं न च पूर्वज्ञानसंस्कारयोरतिव्याप्तिस्तयोर्ज्ञाननाश्यत्वेपि ज्ञानबाध्यत्वाभावात्॥
बाधो हि नाम प्रतिपन्नोपाधावभावबोधनं न च पूर्वज्ञानस्य तत्संस्कारस्य वा प्रतिपन्नोपाधावात्मनि नासीदात्माधि
करणं ज्ञानं संस्कारो वेत्यभावो बोध्यते ईश्वरस्य ज्ञानेन च मुद्गरप्रहारेणेव घटादेः प्रपंचस्य प्रध्वंस एव क्रियते ना
भावबोधनमतो नातिव्याप्तिः एतेन बाधकज्ञानविषयत्वाच्छुक्त्यादेर्ब्रह्मणश्चानिर्वाच्यत्वप्रसंग इत्यपास्तं धर्मि
तया बाधकज्ञानप्रतिपन्नत्वेपि बाध्यमानाभावप्रतियोगित्वाभावात् अत एव प्रतिपन्नोपाधौ नाभूदस्ति भविष्य
तीति कालत्रयसत्तानिषेधो बाधस्तद्विषयत्वं च बाध्यत्वमिति केचिदाचार्याः न चाव्याप्त्यतिव्याप्ती शुक्तिश
कले प्रतिपन्नस्य रजतस्य कालत्रयेपि तत्र सत्ताभावस्य नेदं रजतमिति बाधेन बोध्यमानत्वात् लौकिकपरमा
र्थरजतस्य देशान्तरीयसत्त्वेन प्रमितस्य तत्रासत्त्वबोधनस्याशक्यत्वात् तस्य शुक्तिकाशकले कालत्रयासत्त्व
बोध्यत्वमिति चेन्न तस्यात्राप्रसक्तेः॥१॥ प्तिं निराकर्तुमाह शुक्तिशकले प्रतिपन्नस्येति नहि नेदं रजतमित्यस्यायमर्थः यदिदा
नीं रजतं तन्न भवतीति भावः ननु अयं निषेधो किं लौकिकपरमार्थरजतविषयस्तथा च तत्रैव तावदतिव्याप्तिः अत्र चासिद्धिरिति तत्राह
लौकिकपरमार्थेति तत्रेदं वक्तव्यं किं यत्रेदं सत्त्वेन प्रमितं हट्टादौ तत्रैव निषेधः किं वा शुक्तौ न तावद्धट्टादौ तत्र तत्सत्ताग्राहकप्रमा
णविरोधादित्यभिप्रायः द्वितीयं शंकते तस्य शुक्तिकाशकलेति अत्राप्रतीतस्य न निषेधः संभवतीति परिहरति न तस्येति ॥ १०७

ननु यद्यपि तस्यात्र न साक्षात्प्रसक्तिस्तथापि रजताभासः प्रतीतस्तद्द्वारा रजतत्वसाम्यात् तदपि प्रसक्तमिति शंकते रजताभास इति तत्र किं भ्रमकाले रजताभासस्तेन यावभासस्तत्प्रसक्तिः उत दैवगत्या न तथाभूतस्य स्वरूपेण नाद्य इत्याह मैवं रजताभास इति द्वितीयं शंकते प्रतिपन्नेति तत्किं प्रतिपन्नशुक्तिकाद्युपाधौ रजतादेः कालत्रयसत्तानिषेधरूपबाधविषयत्वमङ्गीकृत्य रजतादेराभासत्वसिद्धये तथा चाप्युक्तैवाव्याप्तिः परिहृतेत्याह एवं तर्हीति ननु तथापि तद्द्वारा लौकिकरजतप्रसक्तिर

रजताभासप्रसक्तिरेव न त्वप्रसक्तिरिति चेन्नैवं रजताभासस्य प्रतीतेरिदं रजतमित्येव प्रतीतेश्च प्रतिपन्नोपाधौ निषेधात्तदाभासत्वापत्त्या निःश्रीयते इति चेत् एवं तर्हि नाव्याप्तिः प्रतिपन्नोपाधौ तस्य निषेधस्यानङ्गीकारात् अत एव न देशान्तरादौ प्रमितस्य लौकिकपरमार्थरजतस्य तन्निषेधप्रतियोगित्वं आभासविषयत्वात्तस्य अन्यथा जगति रजतमेव न स्यात् तस्माल्लौकिकपरमार्थरजतमेव नेदं रजतमिति निषेधप्रतियोगीति पूर्वाचार्यवाचोयुक्तिरपि पुरोवर्तिनि रजतार्थिनः प्रवृत्तिदर्शनाल्लौकिकरजतात्मत्वेनापरोक्षतया प्रतीतस्य कालत्रयेऽपि लौकिकरजतमिदं न भवतीति निषेधप्रतियोगितामङ्गीकृत्य नेतव्या न चैवं सत्यन्यथाख्यातेः प्रसक्तिः॥

प्यस्तीति तत्राह अत एवेति आभासविषयत्वादित्याभासविषयत्वेन तथाप्यङ्गीकारादि त्यर्थः न केवलं तवाङ्गीकारः अनुपपन्नश्च लौकिकरजतनिषेध इत्याह अन्यथेति रजततदाभासयोरैकात्म्ययोगाद्रजताभास सम्यग्रजतविषयकप्रतीतिद्वयाभावाच्चाप्रसक्तस्यैव सम्यग्रजतस्य निषेध इति वक्तव्यं तथा च यत्र यत्र प्रमितं तत्र सर्वत्र निषेधः स्यादित्यर्थः नन्वेवं सति विवरणकाराचार्यवचनविरोध इत्यत आह तस्मादिति ननु लौकिकपरमार्थरजतात्मत्वेन चेत्प्रतीतं निषिध्यते तर्ह्यन्यथाख्यात्यापातः देशान्तरस्थरजतस्यात्र प्रतीतस्य निषेध इति हि तेषामपि मतमित्यत आह न चैवं सतीति।

संसर्गवदिति संसर्गस्य सदसद्विलक्षणत्वांगीकाराद्देवतावदन्यथाख्यात्यादिवादिभ्यः सिद्ध एव भेदः संसर्गिणस्तु लौकिकपरमार्थ
रजतत्वतया प्रतीतस्यापि सदसद्विलक्षणत्वस्वीकारान्न प्रसिध्यति नरां भेद इत्यर्थः लौकिकपरमार्थरजतप्रतिषेधादेवातिव्याप्तिः
परिहृतेत्याह एवं च सतीति लक्षणं समर्थयित्वाऽर्थापत्तितावत्प्रमाणमाह प्रमाणं चेति अन्यथानुपपत्तिमुक्तां परिहरति न
चदेशांतरेत्यादिना ननु दुष्टाक्षस्यान्यत्र सदन्यत्र प्रतीयत इति नेत्याह नहि भूमाविति एवं प्रतीतेरन्यथानुपपत्तिं परिहृ

संसर्गवत्संसर्गिणोऽपि ख्यातिबाधान्यथानुपपत्त्या सदसद्विलक्षणत्वांगीकारात् एवं च सति कुतोऽतिव्या
प्तिः प्रमाणं च तत्र ख्यातत्वे सति बाध्यत्वान्यथानुपपत्तिः न च देशांतरे सत्वादत्रासत्वाच्च ख्यातिबाधयोरन्यथा
नुपपत्तिः अन्यत्र सतोऽत्र प्रतीत्यहेतुत्वात् नहि भूमावंभोरुहं सदिति दुष्टाक्षस्यापि नभसि तदवभासते॥
अप्रतीतत्वादेव च बाधायोगात् न चासतोऽभाने शब्दस्यापार्थकत्वप्रसंगः अपरोक्षभानाभावस्येह विवक्षितत्वा
त् परोक्षभानस्य चानिराकरणात् न च सच्छब्दार्थानिरुक्तेः पक्षस्तद्बाध्यमिति व्याप्यसिद्धिः त्वयापि हेतौ तत्स
दसतीति तत्त्वं व्यवस्थापयता परेष्वसत्त्वेन व्यवस्थापितं तस्यैव मयापि व्यवहारदशायामबाध्यत्वोक्तेः न चा
न्यथैवोपपत्तिः (सद)सत्त्वयोरेवाबाधाभानप्रयोजकत्वोपपत्तौ तदितरवैलक्षण्यस्य तत्प्रयोजकत्वकल्पनायां गौरवा

त्यबाधस्यापि तां परिहरति अप्रतीतत्वादेव चेति यत्त्वसतो भानाभावेऽसत्पदप्रयोगस्यापार्थकत्वप्रसंग इति तत्परिहरति न
चासत इति नासतो भानमात्रं प्रतिषिध्यतेऽपि त्वपरोक्षभानं तथा च नान्यथोपपत्तिरपार्थकत्वं चेत्यर्थः यत्तु सच्छब्दार्थस्त्रिधा
विकल्प्य दूषणमुक्तं तत्परिहरति न च सच्छब्दार्थेति शुक्तिरूप्याद्यपेक्षयाऽबाध्यत्वं च घटादौ व्याप्तमित्यर्थः दूषणांतरं परि

नन्व सत्त्वभाने न प्रयोजकत्वम् असतोऽपि तत्त्वज्ञानात् नापि सत्त्वम् अबाधायां सतोऽपि प्रपंचस्य बाधांगीकारादित्युक्तमिति तत्राह।
न चासत्तापीत्यादिना पूर्वोक्तमेव परिहारमत्राप्याह परोक्षतयेति नन्व बाध्यत्वे सत्त्वं प्रयोजकमंगीकुर्वता सद्वैलक्षण्यं बाध्यत्वे
प्रयोजकं स्वीकर्तव्यं तथा च प्रयोजकगौरवं स्यात् एवमितरत्रापि मत्पक्षे त्वसत्त्वं बाध्यत्वे प्रयोजकं सत्त्वं च प्रतीतावितिलाघ
वमितिन्यायरत्नदीपावलीयमाशंक्य तत्रापि व्यतिरेकेऽसद्वैलक्षण्यमबाधप्रयोजकं सद्वैलक्षण्यं चाभानप्रयोजकमिति

न चासतोऽपि तत्त्वदर्शनात्प्रतिभासनान्सत्तायुक्तस्यापि प्रपंचस्य बाधाभ्युपगमात्तयोरप्रयोजकत्वं अपरोक्ष
तयाभानस्य व्यवहारदशायां चाबाध्यस्येह विवक्षितत्वात् ननु सत्त्वासत्त्वयोरेवाबाध्यत्वाभानप्रयोजकत्वे
यत्सद्वैलक्षण्यं तद्बाध्यं यदसद्वैलक्षण्यं तत्स्यातिरिति व्यतिरेके गौरवं स्यात् सत्त्वासत्त्वयोस्तु स्यातिबाधप्रयो
जकतायां लाघवमिति चेन्नैवं तत्त्वापि व्यतिरेके गौरवस्य तुल्यत्वात् अख्यात्यबाध्यत्वयोः सदसद्वैलक्षण्य
स्य प्रयोजकत्वांगीकारात् एवमपि प्रयोजकत्वविनिगमनायां को हेतुरिति चेत् पक्षान्तरे स्यात्यसंभवः न
थाहि नतावत्सत्त्वाद्बाध्यस्तस्य स्यातिः तस्येहासत्त्वात् सतश्च स्यातौ भ्रान्तिबाधयोरनुपपत्तेश्च असत्त्वे चा
परोक्षतयाभानानुपपत्तेः अनुमानमप्यत्र प्रमाणं विमतमनिर्वचनीयं बाध्यत्वात् पन्नैवं तन्नैवं यथा
त्मेति
गौरवं समानमित्याह मैवं तत्त्वापीति नन्वेवं समानगुणदोषत्वे किमित्यन्यतरपक्षेपक्षपात इति शंकते एवमपी
ति विनिगमनानिर्णयः सत्त्वं भानप्रयोजकमिति पक्षे बाध्यस्य किं सत्त्वात् स्फुरणमुतासत्त्वादाद्यः इत्याह नतावत्सत्त्वादिति
दूषणान्तरमाह सतश्चेति असत्त्व इतिपाठे द्वितीयपक्षनिषेधः चस्त्वर्थः सच दूषितपक्षात्पक्षान्तरपरिग्रहसूचकः द्वितीयं
निषेधति असत्त्व इति द्वितीययोजनायां तत्रैव हेतुः तदेवमर्थापत्तिमुक्त्वानुमानमपि प्रमाणयति अनुमानमपीति विमतमिति

अत्र च सदसद्विलक्षणत्वमनिर्वचनीयत्वं साध्यमिति न साध्याविशिष्टता नाप्रसिद्धिमन्यथाख्यातिवादी शंकते संसर्गस्येति परिह
रति नेति असन्निहितबाधनिवारणाय परोक्षतयेत्युक्तं सामान्यतोदृष्टानुमानेनानिर्वचनीयतां साधयन्नप्रसिद्धविशेषणतां परिहरति स
कालंबनेति धर्मत्वाद्धेतोः सदसत्त्वयोरेकालंबनसंसर्गनिषेधे एकनिष्ठसंसर्गाभावे एकाधिकरणात्यन्ताभावद्वितयावत् तस्मिन्सा
धिते रूपरसवदनिर्वचनीयता सिद्धा भवतीति योजना संग्रहं विवृणोति विवादाध्यासितमिति अत्र च भावत्वाभाववत्त्वे सत्त्वासत्त्वे स
कधर्मिनिष्ठो यावदत्यन्ताभावो न तत्प्रतियोगिनी धर्मत्वात् यौ धर्मौ नावेकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनौ यथा रूपरसौ तथा चामू

संसर्गस्यैव बाध्यत्वाद्रजतस्य बाध्यत्वमसिद्धमिति चेन्न द्वयोरपरोक्षतया प्रतिभासमानयोः संसर्गमात्रनिषेधे वन
स्पत्योरिव विविक्तयोः बाधोत्तरकालमुभयोरपि इहावभास प्रसंगात् न चाप्रसिद्धविशेषणः पक्षः यस्मात् एकालंबनसं।
सर्गनिषेधे सदसत्त्वयोः धर्मत्वाद्रूपरसवन्निसिद्धा निर्वचनीयता १४ विवा~दाध्यासिते सदसत्त्वे एकधर्मिनिष्ठात्यन्ताभा
वप्रतियोगिनी धर्मत्वात् रूपरसवदिति अनिष्टो विरुद्धधर्मिनिष्ठतया सामान्यतः सिद्धससदसद्वैलक्षण्यस्य
केवलव्यतिरेकिणो रजते धर्मिनिष्ठतयोपसंहारादप्रसिद्धविशेषणत्वाभावात् ॥ १ ॥ ननु तत्र तथेति प्रयोगः भिन्नाधि

करणनिष्ठात्यन्ताभावप्रतियोगितयाऽर्थान्तरतानिरासार्थं एकधर्मीत्युक्तं सत्त्वमसत्त्वानधिकरणनिष्ठात्यन्ताभावप्रतियोगिधर्म
त्वात् रूपादिवदिति तु प्रयोगशरीरं न चार्थान्तरता सत्तोऽसत्तो वोभयात्यन्ताभावद्वयाधिकरणत्वाभावात् मिलितयोश्चैकत्वाभा
वादेकत्वे वा सदसद्व्यतिरेकत्वे तस्याप्युभयाभावाधिकरणत्वायोगात् अनेनैव भूतत्वे च सिद्धं नः समीहितमिति कार्थान्तरता न च प्रमे।
यत्वादौ व्यभिचारः तेषामपि वेदान्तिमते पूर्वोदितन्यायेनैवात्मनिष्ठात्यन्ताभावप्रतियोगित्वात् न च वै परीत्यानुमानं धर्मत्व
हीनो रूपादावनैकान्तिकत्वात् अपरे त्वेवमेतदनुमानं समर्थयामासुः सत्त्वमसत्त्वानधिकरणानात्मनिष्ठात्यन्ताभावप्रतियोगि अना

त्मनिष्ठात्यंताभावप्रतियोगित्वाद्रूपादिवदित्यत्र विवक्षितं तेन चेतन्यपरित्यक्तं भवति धर्मत्वहेतोर्वाच्यत्वादिना व्यभिचारः अथ तस्या
पि निर्धर्मके ब्रह्मण्यभावेनाव्यभिचारः तर्हि तस्मिन्नेव ब्रह्मणि निर्द्धर्मकतयोक्तसाध्यसिद्धेः न जडानिर्वाच्यतासिद्धिरित्यर्थो
न्तरतास्यादिति तन्न व्याघातः परस्परविरुद्धयोरपि नित्यत्वानित्यत्वयोरिव शुक्तिरजतादिसंसर्गेष्वभ्युपगमाद्वृत्तिसंभवात् अतएव विवा
दाध्यासिते सत्त्वासत्त्वे एकानात्मनिष्ठसंसर्गाभावप्रतियोगिनी न भवतः परस्पराभावरूपत्वात् नित्यत्वानित्यत्ववदिति न सत्प्रतिप
क्षेनापि आरोपितसंसर्गे एवोभयव्याहृत्या साध्यविकलत्वादिति तन्न देहदृष्टान्ते अर्वाचीनत्वमिव मेयत्वादेरपि सर्वधर्मविधुरे ब्रह्मण्यपवृ
त्तेरव्यभिचारभूमित्वात् न चार्थान्तरता निर्द्धर्मके ब्रह्मण्येतताभावस्याप्युपहतेः हेतोर्वास्तवस्यापि हेतोरन्यथोनरत्वात् कथं त
र्हि सत्त्वासत्त्वयोस्तत्तदत्यन्ताभावरूपयोर्ब्रह्मण्येव वर्तनेन किमत्र विरुद्धप्रत्यायकश्रुतौ सत्या परस्परप्रतिक्षेपरूपभावाभाव

नचानिर्वचनीयत्वे सदिदं रजतमिति भ्रमानुभवविरोधः अधिष्ठानेदंतासंसर्गवत् सत्तासंसर्गस्यापि
अनिर्वचनीयस्यैव भ्रमेऽनुभवात्

योः संयोगादेरेकवृत्तित्वेऽप्यस्वस्मिन्नेव वचमेयत्वाद्यवृत्तेरात्माश्रयात् प्रसाधयिष्यते चायमर्थः व्याघातस्तु नियमानंगीका
रेणात्रैव परिहृतेः नचानित्यत्वानित्यत्वव्यावृत्तेरारोप्यसंसर्ग उदाहरणं अत्यन्ताभावरूपस्य तस्य नित्यतापाः परैरंगीकृतत्वात्॥
नहि सत्तात्र जातिरूपिणी स्वरूपसत्त्वांगीकारात् अस्तित्वात्मकस्य च तस्याभावेऽपीष्टेरिति एतेन सामान्यादीनां नित्यत्वव्या
ख्यानं तत्र यथान्यासमेवास्तु अनुमानमलमतिवैदग्धीप्रकटनेन केवलव्यतिरेकिणा इति पंचमी ननु सदिदं रजतमिति स
त्त्वानुभवबाधितमिदं सद्विलक्षणत्वानुमानमिति तत्राह नचानिर्वचनीयत्व इति यथा हि पुरोवर्तिनो रजतस्य पुरोवर्त्यधिष्ठानारो
पात्पुरोवर्तित्वप्रतिभासः तथा सद्विलक्षणरजतस्य सदधिष्ठाने समारोपितत्वात्सद्बुद्धिबोध्यत्वं न पुनः सत्त्वादिति परिहरति अ

अथवा सदिदं रजतमिति प्रातीतिकसत्त्वमनुभूयते पारमार्थिकव्यावहारिकसद्वैलक्षण्यं चानिर्वचनीयत्वं साध्यत इति नानुभववि-
रोध इत्याह अपि चेत्यादिना सद्वैलक्षण्यतायां भ्रान्तिबाधानुभवविरोधो त्वपस्ताद्भिरधेतभ्रान्तिविरोधं परिहृत्य बाधविरोधं
परिहरति न च नेदमिति नेदं रजतमिति कोऽर्थः नेदमर्थाभिमतं रजतमिति तथा चार्थक्रियासामर्थ्यलक्षणसत्त्वस्यैव निषेधात् न
तद्वैलक्षण्यानुमानं विरुणद्धीत्यर्थः सदसद्वैलक्षण्यमनिर्वचनीयत्वमनन्तं निर्वाहावसरत्र यात्र पूर्वोदितलौकिकपरमार्थेर-
जतविषयत्वनिषेधेन न विप्रतिषेधशंकापीति भावः दोषान्तरमुक्तं परिहरति न चानिर्वाच्य इति रजतानुभवसंस्काररंजिताऽविद्यार-
जतज्ञानाकारेण विवर्तते अननुभूतरजतस्य भ्रान्त्यनुपपत्तेः स चानुभवः सविकल्पक इति शब्दोल्लेखवान् तथा च तत्संस्काररंजि-

अपि च त्वन्मतेऽपीव पारमार्थिकसत्तायाः प्रपंच इव व्यवहारिकसत्तायाः अभावेऽपि प्रातिभासिकसत्तास्वीकारेण
सदिदं रजतमित्यनुभवो न विरुद्ध्यते न च नेदं रजतमित्यसत्त्वानुभवविरोधोऽर्थक्रियासामर्थ्यलक्षणसत्त्वस्यै-
व तत्र निषिध्यमानत्वात् न चानिर्वाच्ये रजतशब्दप्रयोगायोगः सविकल्पकरजतानुभवसंस्कारजन्यतया रजत-
भ्रमस्य तद्वाचकशब्दोल्लेखोपपत्तेः न चानिर्वचनीयत्वे रजतस्य प्रतीत्यनुपपत्तिः शुक्त्यवच्छिन्नात्मचैतन्य-
स्थाविद्याविवर्ततया चैतन्येऽध्यस्तत्वात्तेन प्रतीत्युपपत्तेः न च संप्रयोगाभावादपरोक्षत्वानुपपत्तिः अध्यस्तस्या-
ऽपरोक्षतायां संप्रयोगानपेक्षत्वात् ॥

ताविद्या तद्बुद्धिवत्तच्छब्दप्रयोगेऽपि हेतुः एतदुक्तं भवति रजतबुद्धिवद्रजतजा-
तीयबुद्धिरप्युदेति ततस्तच्छब्दप्रयोग इति परस्यापि शुक्त्यादौ रजतत्वजात्याद्यसंभवात्तत्संस्कार एव शरणमिति भावः यत्तु प्र-
त्यायकानुपपत्त्या प्रतीत्यनुपपत्तिरुक्ता तां परिहरति न चानिर्वचनीयेति शुक्त्यवच्छिन्नेत्यत्र चैतन्यगताविद्यापरिणामो हि रजतं न
तु केवलशुक्त्यविद्यापरिणामः शुक्तेरविद्याकार्यत्वस्य स्वकारणाविद्याप्रत्यक्षत्वायोगात् तदुक्तमाचार्यैरिष्टसिद्धिकारैः शुक्त्यव-
स्थात्ममोहोत्थारूप्यधीः शुक्तिमोहजा कथ्यते मृदवस्थात्मजातो मृज्जो यथा घट इति ततस्तेनैव चैतन्येन रजतमपि वेद्यमित्यर्थः ॥

रजतस्य शुक्तिसामानाधिकरण्योपपादनाय शुक्त्यवच्छिन्नेत्युक्तं नन्विंद्रियसंप्रयोगाभावे कथमपरोक्षतातत्राह नच संप्रयोगेति
न केवलमस्माकमयं नियमभंगोऽपितु भवतोपीत्याह अन्यथेति ननु न देशांतरस्थं रजतं रजतज्ञानविषयोपितु पुरोवर्ति वस्तु तच्चेंद्रियसं
युक्तमितींद्रियसंप्रयोगादेवापरोक्षं तद्धीदमस्मन्मतेपि समानमिति प्रौढिमारूढः प्राह अधिष्ठानेति नन्विंद्रियान्वयव्यतिरेकयोः सा
तोः कथं तदभावो येनैवं परिह्रियत इति तत्राह तयोरिति अधिष्ठानग्राहकेंद्रियग्राह्यतामन्तरेणाऽऽरोप्यस्यापरोक्षतायां बाधक
माशंक्य परिहरति नचैवं सति तत्रारोप्याधिष्ठानयोरेकेन्द्रियग्राह्यत्वनियमात् भ्रमानुदयः अपितु सादृश्यजन्यभ्रमेषु सादृश्या

अन्यथा भवतोपि रजततत्संसर्गयोरपरोक्षत्वाभावापातात् अधिष्ठानसंप्रयोगादेवापरोक्षत्वमस्मन्मतेपि तु
ल्यं अन्यत्र स्वपक्षपातात् नचेन्द्रियान्वयव्यतिरेकानुविधायित्वं रजतस्य तयोरधिष्ठानग्रहणेनान्यथासिद्ध
त्वात् नचैवं सति स्पर्शनेनाधिष्ठाने गृहीतेपि चाक्षुषो रजतविभ्रमः स्यादिति वाच्यं सादृश्यदर्शनजन्ये विभ्रमे
तेनैवेन्द्रियेण सादृश्यस्य ग्रहणनियमात् अन्यथा तवापि तिक्तो गुड इति विभ्रमो न भवेत् आरोप्यस्य रसस्य रस
नेन्द्रियग्राह्यतया द्रव्यग्राहकस्पर्शनेन्द्रियागोचरत्वात् तस्मात्तत्राधिष्ठानग्रहणाय एवेंद्रियस्योपयोग इति त्वयापि व
क्तव्यं तथा च न तत्क्लृप्तेपि दंडवारितं नच ज्ञानद्वयांगीकारादख्यातिप्रसंगः इदमंशावच्छिन्नसाक्षिचैतन्यस्यैवाधिष्ठा
नज्ञानफलभूतस्य स्वमायाविवर्तरजतादिसिद्धत्वात् ॥ ६॥

धिष्ठानयोरेकेंद्रियग्राह्यतानियमात् तदभावापराधादित्याह
सादृश्येति यद्विचकस्मैचित्समानेंद्रियग्राह्यत्वनियमदुराग्रहादुक्तरीतिं नेरोचेत तं प्रतिबाधकमाह अन्यथा तवापीति विभिन्नेंद्रियग्राह्य
तामेव हेतुमाह आरोप्यस्येति तदेवमधिष्ठान एवेन्द्रियोपयोगमुपपाद्य ज्ञानद्वयांगीकारादख्यात्यापत्तिमुक्तां परिहरति नच ज्ञानेति कोयं ज्ञान
भेदः किं ज्ञप्तिभेद उतांतःकरणवृत्तिभेदः नाद्य इत्याह इदमंशेति उभयोरपीदमंशावच्छिन्नैकसाक्षिवेद्यत्वेन फलभेदाभावादित्यर्थः

१
वि.सु.
टी.न.
८६

द्वितीयेमाह अंतःकरणेति नचैकत्रांतःकरणपरिणामोऽपरत्राविद्यापरिणामइतिज्ञानभेदः अविद्यापरिणामस्यज्ञानाभासत्वेनज्ञा
नत्वासिद्धेः उक्तंहिअविद्यावृत्तेःसहभ्रमइति वादार्थमुपसंहरन् समन्वयोपयोगमाह तदेवमित्यादिना भेदप्रपंचस्याविद्यापरिणाम
तयाशुक्तिरूप्यादिवदनिर्वचनीयारोपितत्वात् तदधिष्ठानाद्वैततत्त्वसिद्धिःफलमित्यर्थः॥इत्यनिष्टविपरीतबुद्धितनुच्छसद्विषया
वादद्दूषणात् व्यक्तमुक्तमिततद्युक्तिभिः शक्यनिर्वचनतानिवारणं वेदांतवाक्यजन्याद्द्वितीयात्मविज्ञानादित्युक्तंतदसंगतमि
द्धार्थेवेदस्यप्रामाण्याभावादिति कार्यवादीप्रत्यवतिष्ठते ननुकथमिति ननुभवतुलौकिकानांकार्येशक्तिग्रहोवैदिकानांतुकिमा
यातमित्यतआह लोकावगतेति निर्णीतंखल्विदंप्रमाणलक्षणे आकृत्यधिकरणेतदर्थचिंतया तथाहि स्वरवर्णलोपागमादिवै

अन्तःकरणवृत्तिलक्षणज्ञानद्वयानंगीकारात् तदेवंलक्षणप्रमाणयोरनिर्वचनीयेरजतादिविभ्रमेसंभवात्
तदद्वैतप्रपंचविभ्रमोपिवेदान्तवाक्यप्रमाणजन्याद्धिष्ठानाद्वितीयात्मविज्ञानाद्विलीयते इतिसिद्धं ननुकथं
वेदान्तवाक्यानांसिद्धार्थबोधकत्वम् सकलपदानांलोकेकार्यएवसंगतिग्रहणात् लोकावगतसामर्थ्यः श
ब्दोवेदेपिबोधकइतिन्यायात्॥

लक्षण्यात् अनध्यायादिधर्मभेदाल्लौकिकवैदिकव्यपदेशाच्चस्वरूपभेदप्रूपादिशब्दसाहचर्याच्च गोशब्दादेरपिलोकवेदयोर्भेद
लक्षेदारभ्यवालादिशब्देष्वर्थान्तरदर्शनात् उत्तानावैदेवगवावहंति तेजोवैघृतमित्यादिषूत्तानवहनादिविपरीतलिंगाच्चार्थभेदइ
तिप्राप्तस्य प्रतिविदधेप्रत्यभिज्ञयातावदेकत्वंगवादिपदानामवगम्यते नचस्वरवर्णलोपागमादिवैलक्षण्यमात्रात् प्रत्यभिज्ञायमा
नशब्दस्वरूपभेदः तथार्थोपितएवप्रत्यभिज्ञायमानत्वात् उत्तानवहनादितुस्तुतिरिति गवादिभेदप्रतिपादकं तस्माद्भेदकाभा
वादभेदावगमाच्च शब्दार्थयोरैक्यमेवलोकवेदयोरिति लोकवेदाधिकरणेस्थितम्॥

राम
८६

त्वात् मदीयस्वतंत्रप्रवृत्तिवत्॥

नन्वस्तु लोकगृहीतसंगतिशब्दानां वेदेपि बोधकत्वं कथमेतावता सिद्धार्थबोधकत्वाभावस्तत्राह लोके चेति अयमर्थः गामानये त्युत्तमवृद्धवचनश्रवणसमनंतरं मध्यमवृद्धस्य गवानयनं दृष्ट्वा सुमितिस्तुरित्थमाकलयति बालः ज्ञानपूर्विकेयमस्य प्रवृत्तिः स्वतं त्रप्रवृत्तिवदिति तथैव स्वात्मदृष्टांतेन प्रवर्त्तकप्रत्ययं शब्दपूर्वकत्वं चानुमाय तस्मिन्कृत्वानंतरभाविनि शब्दस्य शक्तिं गृह्णाति तदनु च प्रयोगांतरेषु गां बधानाश्वमानयेत्यादिष्वानयनगोशब्दयोरुद्वापे तदर्थयोरप्युद्वापात् प्रक्षेपे च प्रक्षेपदर्शनात् अन्वयव्य तिरेकाभ्यां गवादिविशेषेषु पदविशेषस्य सामर्थ्यं गृह्णाति सर्वत्र च कार्यान्वयाव्यभिचारात्तदन्वितपदार्थेषु सामर्थ्यं गृह्णाति न

लोके च प्रवर्त्तकवचनश्रवणसमनंतरं श्रोतुः प्रवृत्तिमुपलभ्य प्रवृत्तिलिंगेन प्रवर्त्तकप्रत्यये पदसमुदाय स्य सामान्यतः सामर्थ्यमधिगम्य पुनरावापोद्वापाभ्यां च प्रत्येकं कार्यान्विते पदानां संगतिग्रहणात् आनय नादिलक्षणकार्यविशेषे व्यभिचारेपि कार्यमात्रस्य सर्वत्राव्यभिचारात्तदन्वितस्वार्थेषु पदानां सामर्थ्याधि गमात् न चांतरेणापि व्यवहारं पुत्रस्ते जात इत्यादिवाक्यश्रवणसमनंतरं श्रोतुर्मुख॥ ६ ॥ ६ ॥

पुनः पदार्थमात्रे नाप्यन्यमात्रान्वितेषु प्रथमावगताव्यभिचारिकार्यान्वयपरित्यागे प्रमाणाभावादिति ननु कथं कार्यान्विते सामर्थ्यग्रहः यावता पश्वानय पवधानेत्यादावन्यदन्यत्कार्यं प्रतीयते ऽतोव्यभिचाराद्गवादिवदेव शब्दविशेषाभिधेयत्वमेव न सर्वशब्दसामर्थ्यप्रतियोगित्वमिति तत्राह आनयनादिलक्षणेति प्रकृत्यभिधेयबंधनादिव्यभिचारेपि प्रत्ययाभिधेयमनुगतं कार्यमात्रं न व्यभिचरतीत्यर्थः ननु यत्र प्रवृत्तिलिंगमवलंब्य संगतिग्रहः तत्रैवं भवतु यत्र तु मुखविकासादिलिंगाद्धर्षं हेतुसि द्धार्थमनुमाय शब्दस्य संगतिग्रहः यथा पुत्रस्ते जात इत्यादिषु तत्रावश्यं कार्यमंतरेणैव सिद्धार्थे शब्दशक्तिराश्रयणीयेति त त्राह न चांतरेणापीति॥

१
वि·सु·
टी·न·
८७

नन्ववान्तमित्युक्तं तत्र हेतुमाह परिशेषेणेति अयमभिसंधिर्नेनावत्प्रवर्त्तकवाक्येष्विव सिद्धार्थवाक्येषु प्रवर्त्तकविशेषानुमा
पकानयनादिप्रवृत्तिवद्धस्तिहर्षहेतुविशेषानुमापकं प्रत्यक्षलिंगं मुखविकासादिर्न्तु हर्षहेतुमात्रमनुमापयति तद्विशेषस्तु
परिशेषात्प्रार्थनीयः नचैवं संभवति पुत्रजन्मवदेवसुखप्रसवादेरनेकस्योपप्लवमानत्वात् विनिगमनाभावादतः पुत्रशब्द
स्य संगतिग्रहो दूरोत्सारित इति यथाहुः नाथाः प्रमाणपारायणे नच परिशेषेण तत्प्रतिपादकता व्यवसानं भूतभविष्यद्वर्त्त
मानानामसन्निहितव्यवहितानां संभवात् पारिशेष्यावधारणाया अन्यं तदुष्करत्वादिति स्यादेतत् अस्ति प्रभिन्नकमलोदरेम

विकासादिना लिंगेन हर्षमनुमापयतु हेतु प्रत्यये वाक्यस्य सामर्थ्यं सामान्यतोऽधिगम्यावापोद्धाराभ्यां पुनः
पुत्रादिपदानां तत्तयाद्यर्थविशेषेषु संगतिग्रहो दृश्यते इति वाच्यं परिशेषावधारणानुपपत्तेः प्रियासुखप्रस
वादेरपि हर्षहेतोः संभवात् यत्र च प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीति प्रसिद्धपदसमभिव्याहारा
त्प्रसिद्धतरपदार्थोऽप्रसिद्धमधुकरपदार्थः समधिगतविभक्त्यर्थस्वयं मधुपाने कर्त्तारं पश्यति तं मधुकरशब्द
वाच्यत्वेन प्रत्येति तत्रापि नकार्य्यपरता वाक्योपस्थादृश्या अपि स्मृत्यत्ते व्यवहारनिबंधनप्रथमकार्य्यमनुमन्ति नि
‹‹बंधनतया तदानुगुण्येन व्यवस्था

धूनि मधुकरः पिबतीत्यादिवाक्यं शक्नतवतः पुरुषस्य मधुकरप्रातिपदिकार्थमात्रम
ज्ञानतः समयांतरे सरसीरुहोदरविपरिवर्त्तिमधुकरमधुपानमवलोकयतः प्रसिद्धपदसमभिव्याहारबलात्मधुकरशब्दस्य म
धुकरशब्दार्थे सिद्धे संगतिग्रहदृष्टिमत्राह यत्र चेति किमिति न कार्य्यपरता वाक्योपद इति तत्राह नादृश्या अपीति सोऽपि हीनतरपदानां
संगतिगृहीतानां तत्समभिव्याहारादस्य संगतिं गृह्णाति इतरपदानां च व्यवहारबलात्प्रवर्त्तककार्य्यान्विते प्रथममेव संगतिर्गृहीतव्या
नहि तत्रापि प्रसिद्धपदार्थसमभिव्याहारः शक्यपरिग्रहः अनवस्थादोषस्यात् तथा चोपजीव्यैकप्रयोजकानुगुण्येनात्राप्य
व्याहृतकार्य्यान्विते शक्तिग्रह इत्यर्थः ॥

राम·
८७

कथं तर्ह्यगृहीतसंगतिकानां सिद्धार्थे प्रयोगः पुत्रस्ते जात इत्यादिपदानां तत्राह पुत्र इति नन्वभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्य
ते इति लक्षणालक्षणात् अभिधेयकार्यान्वयसंबंधः सिद्धार्थान्वयस्य लिलक्षयिषितस्य वक्तव्यस्तत्राह परस्परान्वयस्येति कार्या
न्वयस्य परस्परान्वयविशेषत्वादित्यर्थः उक्तं च नाथेन कार्यान्वयो हि परस्परान्वयाव्यभिचारीति विवक्षितत्वात् कार्यान्वयवत् परस्प
रपदार्थान्वयविवक्षयापि लक्षणया लोकः शब्दं प्रयुंक्ते इति अर्थे लक्षणया परिहृत्य वाक्यैकदेशलक्षणया च परिहरति पुत्रस्ते जात इति यथा
हि द्वारं विध्रियतामिति प्रयोक्तव्ये द्वारमिति वाक्यैकदेशं प्रयुंक्ते न चैतावता विध्रियतामिति नाध्याहरंति व्यवहर्तारः तद्वत् पश्येति वक्तव्ये का

पुत्रस्ते जात इत्यादेश्च सिद्धार्थे प्रयोगस्य लाक्षणिकत्वेनाप्युपपत्तेः परस्परान्वयस्य कार्यान्वयाव्यभिचारात् पुत्र
स्ते जातस्तं पश्येति वक्तव्येपि कार्ये विध्रियतामिति पदावधीरणेन द्वारमिति प्रयोगवत् प्रयोगोपपत्तेः ननु न का
र्यान्विते पदानां सामर्थ्यमध्यवसातुं शक्यं कार्यस्य कार्यान्तराभावेन कार्यपदस्य कार्यान्वितस्वार्थाभिधायि
त्वानुपपत्तेः योग्येतरान्विताभिधाने च प्रयोजकद्वैविध्यापातादिति चेन्न कार्यान्वयान्वयिनि कार्यपरपदा
र्थान्विते वा पदशक्तिग्रहणाभ्युपगमे प्रयोजकद्वैविध्याप्रसक्तेः॥ ॥ यर्थे न ह्यतिरेकेण पुत्रस्ते जात इत्येवं प्रयुंक्ते ऽध्याहारा
द्वा वाक्यं पूर्णमित्यर्थः। उक्तप्रयोजकस्य कार्यपदे व्यभिचारं शंकते नन्विति ननु तस्य योग्येतरान्विताभिधायित्वं भवत्वित्यत आह
योग्येतरेति अनुगतं प्रयोजकं दर्शयन् परिहरति न कार्येति कार्यान्वयः कार्यरूपोन्वयः तदन्वयिनि तदाधारः स च कार्यमितर
च्च भवति संबंधस्य द्व्याधारत्वात् तत्र सामर्थ्यं सर्वपदानामस्ति च कार्यपदस्येत्यर्थः न च विवेककारोक्तं प्रयोजकमाह कार्य
परेति कार्यपरं यत्पदं तस्य योर्थः तेनान्विते सामर्थ्यमिति न चात्र प्रयोजकभेदः कार्यपदस्यापि कार्यपरत्वादिपदार्थान्वि
तकार्यशक्तत्वादितरेषामपि कार्यपरलिङादिपदाभिधेयकार्यान्वितगवादिनिष्ठशक्तत्वादित्यर्थः॥ अत्र रत्नदीपावलीकृतः

१
वि॰ सु॰
टी॰ न॰
८८

प्रथमं प्रयोजकं दूषयां बभूवुस्तदनुवदति यत्त्वित्यादिना संबंधद्वयप्रसंगादिति कार्य्यान्वयेत्यत्रैकः संबंधस्तदन्वयीत्यत्रापर इ-
त्यर्थः किंच कार्य्यान्वयेत्यत्र कार्य्यस्य विशेषणत्वमन्वयस्य च विशेष्यत्वं अन्वयीत्यत्र चान्वयस्य विशेषणत्वं कार्य्यस्य च विशे-
ष्यत्वमिति युगपदेव विशेषणत्वविशेष्यत्वे प्रत्येकमनयोरन्योन्यापेक्षयास्यातामित्याह युगपच्चेति उभयसमव्यस्तुको दोष इत्ये-
तआह न चेति शक्तिगोचरत्वप्रसंगादिति विशेषणस्यैव क्रियान्वयित्वनियमात्कार्य्यस्य च विशेषणत्वाभावात् अन्वयवत्तस्य
वशक्तिगोचरत्वं न तु कार्य्यस्येत्यर्थः तदेतत्परिहरति तदसदिति नात्र कार्य्यस्यान्वयं प्रति विशेषणत्वोपलक्षणत्वे विवक्षिते

यत्तु कैश्चिदुच्यते कार्य्यान्वयान्वयिनीत्यत्र किं कार्य्यं विशेषणमन्वयस्य किं वोपलक्षणं नाद्यः अन्वयस्य
कार्य्यविशिष्टस्य कार्य्यान्वये सति कार्य्यस्य संबंधद्वयप्रसंगात् युगपच्च कार्य्यान्वययोर्विशेषणताविशेष्य-
ताप्यापद्येत न चैतत्संभवमुपपन्नं अलौकिकत्वात् नापि द्वितीयः कार्य्यस्य शब्दशक्तिगोचरत्वप्रसंगादिति
तदसत् कार्य्यान्वयान्वयिनीति कार्य्यस्य संबंधव्यावर्त्तकमात्रतायाविवक्षितत्वात् तत्र यथा गवादिपदार्था-
नां कार्य्यरूपाणां तत्संबंधनिरूपकत्वात् तथैव कार्य्यस्यापि संबंधस्योभयनिष्ठत्वात् इतरथा योग्येतरान्वय
पक्षेप्यन्वययोग्येनेतरेणान्वयस्य विवक्षितत्वात् ॥ ९९, ऽपि तूभयानुगतव्यावर्त्तकत्वमात्रं विवक्षितं न चैतदसिद्धमि-

त्याह तत्र यथेति कार्य्यं तदितरसंबंधस्योभयनिष्ठत्वादितरवदेव कार्य्यमपि निरूपकमित्यर्थः एतदेव प्रतिबंद्या साधयति इत-
रथेति योग्येतरदृत्यत्रान्वयं प्रतीति वक्तव्यं यत्किंचित्संसर्गताया अन्वयानुपपादकत्वात् तथाचान्वययोग्येनेतरेणान्वित इत्यत्रा-
प्यन्वययोग्यान्वययोरुक्तदूषणानतिवृत्तिः अन्वयविशेषितयोग्यविशेषितत्वात् अन्वयस्योपलक्षणत्वेत्वभिहितान्वयवाद-
त्वापात इत्यर्थः एतेन व्यावर्त्तकत्वप्रयुक्तदोषोपि परिहृत इत्यभिप्रायः॥ ॥ ॥ ॥

राम॰
८८

विशेषविवक्षायामप्युपलक्षणपक्षेन दोषइत्याह उपलक्षणपक्षेपीति कार्य्योपलक्षितोन्वयइतिकोर्थः कार्य्यविशेषितोपलक्षितत्व विशेषितोऽन्वयइतिनवोपलक्षितत्वमप्युपलक्षणमेवानवस्थानात् ततश्चपरंपरयाकार्य्यस्याप्यन्वयशरीरविनिवेशितयाशव्दश क्तिगोचरत्वमित्यर्थः यद्दिवोपलक्षणतापराधाद्देवान्वयतमननुप्रवेशइत्याशयः तर्ह्यनित्यत्वलक्षणमपिनसिद्ध्येत् तत्रहिस्वप्रत्यु नुपलक्षितसत्तायोगित्वमनित्यत्वमितिलक्षणेप्रत्युते विनाशस्योपलक्षणतयासत्तानन्वयात् केवलसत्तायोगित्वमनित्यत्वमिति।

अन्वयस्यविशेषणोपलक्षणपक्षयोरुक्तदोषानुषंगस्तुल्यएवस्यात् उपलक्षणपक्षेपिकार्य्यस्यशव्दशक्तिविषयत्वेन आहत्यनेकार्य्योपलक्षितत्वस्यान्वयविशेषणतयाकार्य्यस्यापिपरंपरयाशव्दशक्तिसंनियोगित्वोपपत्तेः एवमनभ्युपग च्छतः स्वप्रत्युत्पलक्षितसत्तायोगित्वमनित्यत्वमित्येवमादिलक्षणमपिननिर्वहतिप्रत्युतेः कार्य्योनन्वयेसत्तायोगित्व मात्रस्यैवलक्षणत्वादात्मादेरप्यनित्यत्वापत्तेः स्वयमेवचानुभूतिरनुभूतिव्यवहारहेतुप्रकाशइतिप्रतिज्ञायमोक्षदशा यांव्यवहारहेतुत्वाभावात् लक्षणस्याव्याप्तिमाशंक्यव्यवहारहेतुत्वमुपलक्षणमित्यंगीकृत्योपलक्षितत्वमपिक्वचि त्साध्यंयथाविनाशोपलक्षितसत्तायोगित्वमनित्यत्वमितिस्वकीयग्रन्थेनिबद्धत्वात् एतेनविवादपदानिपदानित कार्य्यान्वयान्वयिनिशक्तिमंतिपदत्वात् कार्य्यपदवदित्यनुमानमपास्तंविशेषणोपलक्षणपक्षयोरुक्तदूषणो द्धरणात् कार्य्यपदस्यापिकार्य्यान्वयान्वयिनिशक्तिमत्त्वेनदृष्टांतस्यसाध्यविकलत्वात्॥ ॥ स्यात् तथाचात्मादेरनित्यत्व मित्यतिव्याप्तिस्तदेतदाह एवमनभ्युपगच्छतइतिकार्य्यलक्षणं दृष्टप्रसंगतांपरिहरति स्वयमेवेति सिद्धेप्युत्पत्तिदूषणेनकार्य्यव्यु त्पत्तिसमर्थनेनच तर्कबाधविपक्षबाधकतर्काभावाभ्यामनुमानमपिदूषितमित्याह एतेनेति यज्ञेनेत्यादौलिङादिवच्छेदा यविवादपदग्रहणंइतरथादृष्टांतासिद्धेः दृष्टांतस्यसाध्यवैकल्यंताचाह कार्य्यपदस्यापीतिविशेषणोपलक्षणत्वेनद्वैविध्यंग्रंथः

१
वि.सु.
टी.न.
८९

स्वपक्षेऽनुमानदर्शयन्बाधमप्याह विवादपदानीति कार्य्यभावार्थपदयोः सिद्धसाधनतानिवृत्त्यै विवादपदग्रहणं ननु विज्ञानमानंदं
ब्रह्मेत्यादीनि पदानि सिद्धब्रह्मस्वरूपपर्य्यवसन्नानि विध्यश्रवणात् विधिसन्निधिश्रवणाभावाच्च द्रष्टव्य इत्यादेश्च विधित्वं न संभवति
उपयुक्तमुपयोक्ष्यमाणं वा संस्कारार्हं यथाहुः भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हतीति न चात्र प्रोक्षितव्रीहीणामिव विज्ञानसंस्कृतस्या-
त्मनः क्वचित्कर्तो विनियोक्ष्यमाणत्वं शुद्धबुद्धब्रह्मात्मत्वज्ञानस्य समस्तप्रवृत्तिविरोधित्वात् नापि कुम्भविषाणादिवद्विनियुक्तत्वं
येन चान्यत्प्राप्तेनैव ज्ञानेनात्मा संस्क्रियते नापि सुवर्णविभूषादिवद्गात्मना पश्येदिति विनियोगभंगः दर्शनस्य प्रमाणपराधी-
नतयाऽविधेयत्वात् साक्षात्कारस्य फलतया विधानानर्हत्वात् विधिपरत्वे च ब्रह्मासिद्धेरतिस्पष्टो व्यभिचार इति तत्राह नचावि

विवादपदानि पदानि कार्य्यपराणि पदत्वात्कार्य्यपदवदिति प्रयोगासंभवाच्च नच विज्ञानमानंदं ब्रह्मेत्यादिपदेषु व्य-
भिचारः तेषामपि द्रष्टव्य इत्यादिविधिशेषतया कार्य्यपरत्वात् तदेवं सकलपदानां कार्य्यपरत्वात् न सिद्धे ब्रह्मणि वेदा-
न्तवाक्यानां प्रामाण्यमिति अत्रोच्यते न तावल्लिङ्गप्राथमिकव्युत्पत्त्यसंभवः मातुलीनन्यायेन पुत्रस्ते जात इत्यादिवाक्याद-
पि व्युत्पत्तिसंभवात् नचतत्र पारिशेष्यावधारणानुपपत्तिः यतः हृष्टश्चैत्रसुतोत्पत्तेस्तत्पदादिं न वाससा वा तोहारेण स्यात्

ज्ञानमिति अयमभिसंधिः यद्यपि यथाङ्गत्वं संस्कारपक्षोऽनुपपन्नस्तथापि सुवर्णभरणसंकुटोमा (स्वपरिशेषविनिश्चितेः २५
दिवद्विनियोगभंगेन किंचिदस्ति बाधकं नच दर्शनाविधेयत्वं बाधकं ध्यानत्वात्तस्य विधेयत्वमाप्नुष्यतोऽप्यनुमन्यते यथाह श्रुतिः निदिध्या-
सितव्य इति न च ब्रह्मासिद्धिः भूपादिवत्तत्सिद्धेरपि संभवात् ततस्तद्विधिविषयापेक्षितमात्मानं सत्यज्ञानादिरूपं समर्पयंति सत्यमू-
निपदानि न कार्य्यपरतामतिवर्त्तन्ते । सर्ववेदान्तप्रत्ययतया वाऽश्रूयमाणस्यलेशमपि समर्थयंत्येव विधिमिति उपसंहरति तदेवमिति
प्राथमिकव्युत्पत्तेः सिद्धे सिद्धायां प्रसिद्धार्थपदसमभिव्याहारात् व्युत्पत्तिः स्तन एव सिध्यतीति तां समर्थयते न तावदित्यादिना प-
रिशेषोपपत्तिं श्लोकेनोपनिबध्नाति दृष्टेत्यादिना दृष्टश्चैत्रसुतोत्पत्तिर्येन न तस्य दृष्टश्चैत्रसुतोत्पत्तेस्तत्पदेन तस्य पुत्रस्य पदेनां कि-

राम.
८९

सौ तत्पदांकितवासास्तेन तत्पदांकितवाससा वार्त्तोहारेण सह या तस्या विदितार्थे भावस्य त्वपुंसः परिशेषविनिश्चितेः संभवादित्यर्थः अत्र
च विज्ञातपुत्रजन्म विहायाविज्ञातहर्षहेतुकल्पनमयुक्तमिति दर्शयितुं दृष्टेत्यादि विशेषणं विज्ञानादपि प्रियासुखप्रसवादिशेषदर्शना
र्थं तत्पदांकितेति अस्यैव श्लोकस्यार्थं विवृणोति यो हीत्यादिना स्फुटं तत्पदांकितवाससेति विशेषणस्य प्रयोजनमुक्तं तद्दर्शयति शंका
निरासपूर्वकं तच्च प्रियेति तत्र किं पुत्रजन्मैव तत्सूचकं किंवान्यत् आद्ये संभावनामात्रात्तच्छंका आद्ये प्रथमप्रतीतपुत्रजन्मपरित्यागे का
रणाभावात् तत्रैव संगतिग्रहो युक्तः द्वितीयं निषेधति पुत्रपदांकितेति तृतीयं निषेधति न च विद्यमानतेति विशेषनिर्णयकारणाभा

यो हि परिदृष्टचैत्रप्रहर्षहेतुपुत्रजन्मा पुत्रपदालिप्तकुंकुमांकितपटप्रदर्शकेन वार्त्तोहारेण सह चैत्रसकाशं
गतः तस्य दिष्ट्या वर्द्धसे चैत्र पुत्रस्ते जात इति वार्त्तोहारव्याहारश्रवणसमनंतरं समनुन्मीलत्पुलकसकलकलेवरस्फु
रद्गंडयुगलमुल्लसितनयनयुगलं चैत्रमवलोकयतस्तत्प्रमोदलिंगेन स एव नूनमनेन मद्वदवलोकितः सुतसंभ
वः प्रमोदहेतुरनस्माद्वाद्यादधिगत इति परिशेषावधारणोपपत्तेः न च प्रियासुखप्रसवस्यापि संभवात्परिशेषाव
धारणानुपपत्तिः पुत्रपदांकितपटप्रदर्शनेन च प्रियासुखप्रसवसूचकाभावात् न च विद्यमानतामात्रेण तत्रा
पि शंकावकाशः कार्येषु पानच्छत्रदंडाद्याहरणलक्षणांतरकार्यदर्शनेन शंकाप्रसरस्य दूरनिवारत्वात् ए
वमुक्तरीत्यासिद्धेपि प्राथमिकव्युत्पत्तेः संभवात्प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यादिप्रसिद्धपदसमभि

वेपि संभावनामात्रेण चेद्विपरीतशंकोदयस्तर्हि गवानयनवदेवच्छत्रा ॥ व्याहारनिबंधनव्युत्पत्तावपि सिद्धार्थपरतानव्या
ख्यानयनमपि तेन क्रियत इति तेषामपि शब्दार्थताशंकया अनिर्णयः स्यादित्यर्थः एतेनैतदपि निरस्तं यदाह भवनाथः न च स्वाधिगत
तत्प्रियेतद्धीरिति स्फुटत्वादवधृति स्तत्रैवानेकस्य संभवादिति एवं सिद्धे प्राथमिकव्युत्पत्तिसमर्थनेन तत्पूर्वकप्रसिद्धार्थसमभिव्या
हारनिबंधनव्युत्पत्तिरपि समर्थितेत्याह एवमुक्तरीत्येति॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

१
वि॰सु॰
टी॰न॰
९०

यत्तु सिद्धार्थे परपदप्रयोगो लाक्षणिक इत्युक्तं तत्राह मुख्यार्थेति ननु प्रथमं प्रयोक्तुः व्युत्पत्तिकाले पुत्रादिपदानामावापोद्धारेण का
र्यान्वितस्वार्थे संगतिग्रहः पुत्रं पश्येत्यादिकार्यवाक्येषूक्तस्तदनुरोधात्तत्प्रयोगसमयेपि सिद्धार्थप्रयोगो लाक्षणिक इति तत्राह न
च प्रथममेति इत्यादिप्रयोगेष्विति सिद्धार्थप्रयोगेष्वित्यर्थः किंच प्रथमं योग्येतरविशेषकार्यान्विते व्युत्पन्नस्यान्यत्र योग्येतरमात्रान्वि
ते प्रयोगो लाक्षणिक इति यदि ब्रूषे तर्हि लोके धात्वर्थात्मककार्ये व्युत्पन्नस्य वेदे तस्य लाक्षणिकतया कार्यतानंगीकारात् लिङादेर्ला
क्षणिकत्वं प्रसज्येत तथा काम्यनियोगे फलदात् नियोगे व्युत्पन्नस्य नित्येषु लाक्षणिकतापातः तथा नित्यनैमित्तिकविधिषु स्वतंत्र

मुख्यार्थविषयतया सिद्धेपि प्रयोगयोगे लाक्षणिकत्वकल्पनानुपपत्तेः नचु प्रथमावगतकार्यान्वयानुरोधेन
लक्षणाश्रयणम्। प्रथममपि पुत्रस्ते देशांतरादागतः पुत्रस्ते गच्छति पुत्रस्ते सुखी पुत्रस्ते निरामय इत्यादिप्र
योगेष्वावापोद्धाराभ्यां पुत्रादिपदानां स्वस्वार्थे व्युत्पत्तेरुपपत्तेः प्रथमव्युत्पत्त्यनुसारेण च लक्षणाश्रयणे लो
के भावार्थकार्ये व्युत्पत्तेर्वेदे तदसंभवात् यजेतेत्यादिशब्दानामबोधकताप्रसंगः कामाधिकारे च प्रथमं का
मसाधने विनियोगे लिङादिपदानां व्युत्पत्तेः नित्य नैमित्तिकाधिकारे लाक्षणिको लिङादिप्रयोगः स्यात् स
र्वं नित्यनैमित्तिकयोः स्वतन्त्रकार्यपदशक्त्यधिगतेंगवाक्ये परार्थकार्ये लिङादिपदप्रयोगो मुख्यो न स्यात्॥

कार्ये गृहीतसंगतिकस्य तदंगप्रयाजादिषु परतंत्रकार्ये लाक्षणिकतापातः यद्यप्यनुवादाशंकयानरूदिति नियोगांतरबोधकत्व
मंगवाक्यगतलिङादेरिति प्राभाकराह्योतत्तथाप्यंगनियोगाभिधायित्वमिष्यत एवाराद्युपकारकांगवाक्येषु इतरथा तदुपका
रासंभवात् अनन्यविषयत्वाच्च सन्निपत्योपकारकेषु तदुभयाभावादनुवादकत्वमेवेति तदेतदाह प्रथमव्युत्पत्तीत्यादिना अ
बोधकतेति अपूर्वस्य वाच्यभावार्थसंबंधादृष्टेर्लक्ष्यत्वस्याप्यभावादित्यर्थः॥ श्रीः॥ श्रीः॥ श्रीः॥

राम॰
९०

अथतेषां संग्रहायानुगतरूपे व्युत्पत्तिरिति रूपेण हि सर्वसंग्रहार्थं योग्येतरान्वितेव्युत्पत्तिरित्येव स्वीकुरु सर्वानुगतप्रयोजकत्वा-
भात् लाघवाच्चेत्याह अथावधीरितेति अवधीरितः परित्यक्तः भावार्थरूपकामसाधनादिविशेषो येन तत्तथोक्तं एवं सतीत्यस्यैव वि-
वरणमन्वितमात्रस्येति द्वितीयं प्रयोजकं दूषयति नचेति किं कार्य्यपरं यत्पदं तदर्थेनान्वितइतिविवक्षितमुत कार्य्यपरायः पदा-
र्थस्तदन्वितइतिविवक्षितमितिविकल्प्य आद्यं दूषयति सर्वपदानामिति ननु कार्य्यपरत्वेपि न कार्य्यपर्य्यायिता कार्य्यपद-
मुख्यवृत्त्या तत्परमितरत् गौण्या अथवा कार्य्यपदमव्यवधानेन तत्परमितरद्व्यवधानेनेत्यवान्तरविशेषादित्याशंक्य परिह-

अथावधीरितभावार्थकामसाधनत्वतन्त्रविशेषं कार्य्यमात्रं व्युत्पत्तिगोचरः सर्वत्र तस्याव्यभिचारात् लाघवा-
च्चेति मतं तदहीहापि योग्येतरान्विते पदशक्तेरव्यभिचारात् लाघवाच्चेति समः समाधिः। एवं च सति कार्य्यान्वयान्व-
यिनि पदशक्तिरित्यपास्तं अन्वितमात्रस्य प्रयोजकत्वे सम्भवति कार्य्यान्वयान्वयिनीति कल्पनायां गौरवात् नच का-
र्य्यपरपदार्थान्वितस्वार्थे शक्तिः विकल्पासहत्वात् तथाहि कार्य्यपरत्वं पदधर्मः किंवा पदार्थधर्मः नाद्यः सर्वपदानां
लिङादिपदवत्कार्य्यपरत्वे पर्य्यायतापत्तेः अपर्य्यायिता परिहाराय मुख्यगौणसाक्षात्परम्परादिभेदेन कार्य्यपरतां वि-
शिंष्यात् ततोहीकप्रयोजकत्वलाभः मुख्यादिविशेषणानां सर्वपदेष्वेकरूपताभावात् नहि सिंहो देवदत्तइत्यादौ सिं-
हादिशब्दानां मुख्यगौणयोस्तत्परत्वमेकरूपं तथा सति देवदत्तादेरपि केसरादिमत्त्वप्रसंगात् नापि द्वितीयः पदा-
र्थानां कार्य्यावोधकत्वेन तत्परत्वाभावात् ॥ ६ ॥

रति ततहीति नहि मुख्यवृत्त्या तत्परत्वमेव जघन्यवृत्त्या तत्परत्वमेवमितरत्र
पीत्यर्थः तदेव निदर्शयति नहीति किमिति तथा तस्यादित्यत आह तथासतीति मुख्यवृत्त्या तत्परत्वं हि केसरादिमत्त्वमादाय तदेव चेत्त-
त्परत्वं गौणेपि स्यात् स्यादेव केसरादिमत्त्वमपीत्यर्थः द्वितीये किं पदार्थानां कार्य्यपरत्वं कार्य्यबोधकतयाउत साधकतया नाद्यः प-
दार्थानां बोधकत्वाभावात् बोधकत्वे वा धूमादिवत् लिंगतयाऽनुमेयत्वप्रसंगादित्यभिप्रेत्याह पदार्थानामिति॥ ॥

१
चि. मु.
दी. त.
९१

हिंसीयमिति शंकते अथेति दूषयति नहीति अयमर्थः नकार्य्यस्य कार्य्यशेषत्वं भेदाभावात् तस्य तदन्विताभिधायिनां गवादिपदानां नोक्तरूपत्व।
नेति निषेधवाक्येषु साध्याभावं दर्शयन् अनैकान्तिकतां स्फोरयति नहीति तत्रेति प्राप्तायाहननक्रियातन्निषेधादनिष्टसाधनतावचो।
धाद्यनुरूपस्यौदासीन्यं तद्व्यतिरेकेणेत्यर्थः एतदुक्तं भवति सर्वत्र भावार्थनिष्ठो विधिरेवादावपि भावार्थनिष्ठ एव सन् विधेरन्यतः
प्राप्तत्वात्तस्यामाप्तशक्तिमात्रमुपसंक्रामति यदाग्नेयोऽष्टाकपालो भवति इत्यादावपि द्रव्यदेवतासंबंधानुमितयागविषयत्वमेव तद्वि
भावेन भावार्थः ततस्तद्व्यावृत्तौ न ह्याप्तविधिरपि व्यावर्त्तेत इति तदिदमाह अनुष्ठेयमिति किंच प्रागभावो ह्यत्र नञाभिधेयः प्रध्वंसे वैय
र्थ्यं क्षणिकत्वाक्रि —— यायाः स्वत एव निवृत्तेः सत्वानादित्वानुष्ठेय इत्याह हननेति ननु यथा नेक्षेतोद्यन्तमादित्यमित्यत्र नेक्षिष्य इति सं
कल्पविधिपरत्वं व्यवसितं तद्वदुत्सर्गे कर्मणीत्यधिकरणे तद्वदिह पर्युदासवृत्त्याह नञविरोध्यहननसंकल्पो विधीयतामथवाह न

अथ कार्य्यशेषत्वं कार्य्यपरत्वं पदार्थानां न हि कार्य्यशेषत्वं कार्य्यपदार्थस्य नास्तीति तदन्विताभिधायिकारकप
दानां कार्य्यपरपदार्थान्विताभिधायित्वं न स्यादिति न किंचिदेतत् यत्पुनरनुमानं कार्य्यपराणि पदानि पदत्वात्का
र्य्यपदवदिति तदपि न पिबेन्न हन्यादित्यादिनिषेधवाक्यस्थपदैरनैकान्तं न हि तत्र प्राप्तक्रियानिवृत्त्यौदासीन्य।
व्यतिरेकेण किंचिदनुष्ठेयमवबोध्यते हननप्रागभावस्यानादित्वेनाननुष्ठेयत्वात् न हन्यामिति संकल्पस्य विधाने
प्रयत्नस्य वा विधानाभ्युपगमे तस्याप्रतीयमानतया लक्षणाप्रसंगात् ॥ ९ नोद्यन देहेन्द्रियादिविधारकसामग्रीघटकं क

वन प्रयत्नमन्तरेणानाकस्मादौदासीन्यं भवितुमर्हतीति स एवात्र विधीयतामिति तत्राह नेति न तावदत्र संकल्पः श्रौतः किमिति न
श्रौतः यावता तदन्यतद्विरोधि तदभावा यथायथं नञोऽर्थाः स्वयं ते तद्विरोधी च संकल्प इति चेन्न अभावस्यैव मुख्यार्थत्वात् इतरयो
स्तु तदनुषंगादेव लक्षणादिवृत्त्यन्तरेण प्रयोगोपपत्तेः इतरथाऽनेकत्र शक्तिकल्पनाप्रसंगात् एवं प्रयत्नोपि न श्रौतः श्रौतसंभवे च ल
क्षणानवकाश एतेन नञः प्रकृत्यर्थसंबंधे नाहननं कुर्य्यादिति कल्पनमपि प्रत्युक्तं नेक्षेतेत्यत्र तु तस्य व्रतमित्युपक्रमादनुष्ठेयार्थवि
धिपरतावगमात् लक्षणया विपर्युदासवृत्तिराश्रितेति वैषम्यादित्यर्थः ॥ ॥ ॥ ॥

राम.
९१

तत्किमिदानीमकस्मादेव हननेनोन्मुखानां देहं क्रियाणां ननु उपरमइतिनेत्याह प्राप्तेति अयंभावः इष्टसाधनत्वज्ञानात्प्रवृत्तिरनिष्टसाध
नत्वज्ञानाच्च निवृत्तिरित्यनंतरमेव समर्थयिष्यते तदिह यद्धन्यादिति प्रवृत्तिप्रत्ययाभ्यां रागतः प्राप्तहननेइष्टसाधनतामनूद्यतन्ने
ति निषिध्यते ऽनर्थसाधनताचबोध्यते तत्रापि प्रत्ययस्य विरोधात् सहसेष्टसाधनताभावं बोधयितुमशक्नुवानः प्रतिषेधस्तदधिग।
मायतामनर्थसाधनतामेवावेदयति ततश्च विरक्तरागस्यानिष्ट साधनताज्ञानादौदासीन्यमिति निवृत्तं निषेधवाक्यमतो न विधिना
न्नकिंचित्कृत्यमिति यत्तु विज्ञानादिपदेष्वेव विधिनिष्ठतोपधारणेन व्यभिचारवारणं तद्दूषयति नचेति नचवचनीयं स्वर्गकामादि

प्राप्तक्रियायाश्चेष्टसाधनत्वाभावबोधादेव निवृत्तेर्नोकास्य चरितार्थत्वोपपत्तेश्च नच विज्ञानमानंदं ब्रह्मेत्यादि
वचसां प्रतिपत्तिशेषत्वं विकल्पासहत्वात् तथाहि किं शाब्दी प्रतिपत्तिर्विधेया उत भावनात्मका अथ साक्षात्कारल।
क्षणानाद्यः तस्याः स्वर्गकामो यजेतेत्यादिशब्दादिव व्युत्पन्नपदपदार्थसंगतेः स्वयमेवोत्पत्तेः न द्वितीयः ज्ञानप्र
कर्षहेतुत्वस्यान्वयव्यतिरेकसिद्धत्वेन भावनाया अविधेयत्वात् न तृतीयः साक्षात्कारस्य ब्रह्मरूपत्वेन नित्यत्वे
नाविधेयत्वात् अंतःकरणपरिणतिरूपत्वे चानंदसाक्षात्कारतया फलत्वे न विधेयत्वानुपपत्तेः द्रष्टव्य इत्यादिपदा

वाक्येष्वप्यध्ययनविधितस्त्वबोध   नमिति यतोऽत्रापि स एव शाब्दो नीतिप्रथमविध्यपेक्षा नव (नां चार्हार्थेनयाप्युपपत्तेः
य   काद्यादित्यर्थेन विधेरसर   ग्रहणमात्रविश्रांतत्वाच्च अन्वयव्यतिरेकेति गांधर्वशास्त्रादौ षड्जादिस्वरग्राममूर्छनासाक्षात्कारइ
त्यर्थः तृतीयेपि साक्षात्कारः किं ब्रह्मस्वभावभूतः किंवांतःकरणपरिणामरूपः नाद्य इत्याह साक्षात्कारस्येति द्वितीयं दूषयति अंतः
करणेति नहि फलं विधेयं यथाहुः तस्य लिप्सार्थलक्षणेतीति भावः तत्किं प्रमत्तप्रगीतमिदं द्रष्टव्य इत्यादिवाक्यमित्यत आह द्रष्टव्य
इत्यादिपदानामिति अर्हे कृत्यतृचश्चेति कृत्यप्रत्ययानामर्हार्थेपि विधानात् कृत्याः प्राङ्ण्वुलः इति तव्यादीनां कृत्यसंज्ञत्वाच्चेत्यर्थः
एवंच सति सिद्धार्थव्युत्पत्त्यसंभवेन वेदांतानामपि आत्मा ज्ञातव्य इति विधिनैकवाक्यतया कार्यपरत्वं शालिकनाथोक्तं पूज्यतं यच्च ते

अभिभवकत्वमनायाश्चायुक्तेर्निर्विकारत्वस्य च विज्ञानादिविकारवत्तया अयुक्तेर्नोनंदादिपरत्वमित्युक्तं तत्सर्वं चतुर्थपरिच्छेदे एवाचार्येण
तु स्फुटीकरिष्यते ननु युक्तिरियं परेणावदभिहितं प्रमाणमभिधीयतामिति शंकते अथापीति तत्रतावत्कार्यस्यापि पदशक्तिगोचरतामंगीकृ
त्यानुमानमाह विवादेति श्लोकेन कार्यान्विते सिद्धसाधनताव्यवच्छेदाय विवादाध्यासितग्रहणं कार्यान्वयरहितइत्यर्थः व्यतिरेकासिद्धि
मेव विवृणोति यत्कार्यमिति ततश्च पक्षेतरत्वमिति भावः केचिदिदमेवानुमानमुद्भाव्य दूषयांबभूवुः तदसत् कार्यान्वयोपाधिहतत्वात्।
गवादिव्यक्त्यानैकांत्याच्च आकृतिः शब्दार्थ इति हि स्थिताः शब्दार्थविद इत्यादिना तत्रोपाधिः परिहृतः अनैकांत्यपरिहारमुद्भावयति न

अथापि सिद्धार्थे व्युत्पत्तौ किं मानमिति चेदुच्यते विवादाध्यासितः सिद्धः शब्दव्युत्पत्तिगोचरो मेयत्वान्मायगम्यत्वात्तथा
भिमतकार्यवत् १६ न च कार्यत्वमुपाधिः व्यतिरेकासिद्धेः यत्कार्यं न भवति नासौ शब्दव्युत्पत्तिगोचरो यथा संप्रतिपन्नमि
ति व्यतिरेकव्याप्तेः प्रदर्शयितुमशक्यत्वात् नन्वाकृतेरेव शब्दार्थत्वाद्व्यक्तेस्तदभावात्तत्रानैकान्तिकमिति चेन्मैव
म् आकृतेः शब्दार्थत्वेऽपि तस्या एव शब्दार्थत्वमिति नियमानंगीकारात् व्यक्त्याकृतिजातयः पदार्थ इत्यक्षचरणपक्षस्या
ति भिरंगीकारात् आकाशादिपदानां च व्यक्तिवचनताया मीमांसकैरप्यभ्युपगमात् व्यक्तिशब्दस्य च व्यक्तिवाचकत्वात् न
नु तत्रापि व्यक्तित्वोपाधेरेव वाच्यत्वं न व्यक्तेस्तस्या लक्ष्यत्वादिति चेन्मैवं क्वचिच्छब्दांतरवाच्यस्यैव शब्दान्तरलक्ष्यत्वा

त्याकृतेरिति किं नैयायिकादिसाधारणमिदमनैकांतिकत्वं किं वा मीमांसकं प्रत्येवेनाद्य इत्याह आकृतेरिति आ ((भ्युपगमात्॥ १७
कृतिराकारः सास्नादिमत्त्वं सूत्रे विवक्षितं द्वितीयेऽपि सकलशब्दानां जातिवाचकत्वं तेषामप्यसिद्धं जातिरहितेष्वपि भावादित्याह आकाशादी
ति ननु तथापि गवादिव्यक्तिष्वनैकांतिकत्वस्य कः परिहारस्तत्राह व्यक्तिशब्दस्येति व्यक्तिशब्देनापि न व्यक्तिरभिधीयते किंतु सर्वव्यक्तिष्व
नुस्यूतव्यक्तित्वोपाधिरेवेति शंकित्वा परिहरति मैवं क्वचिदिति अस्ति मीमांसकानामभ्युपगमः शब्दान्तरवाच्यमेव शब्दान्तरलक्ष्यमि
ति तथाच व्यक्तेरपि यत्किंचिच्छब्दवाच्यत्वं मंतव्यं इतरथा लक्षणानुपपत्तेरित्यर्थः॥

नन्विमं नियममनभ्युपगच्छद्भिः किमुत्तरं देयमिति तत्राह व्यक्तिरिति व्यक्तिः शब्दवाच्या न भवतीत्यत्र यस्या व्यक्तेः शब्दवाच्यत्वं
निषिध्यते सा तावद्व्यक्तिशब्देनाभिधेया इतरथा कस्यायं निषेधः स्यात् तथा च परस्परव्याघात इत्यर्थः न च तत्रापि व्यक्तिशब्दलक्षित।
स्य शब्दवाच्यत्वनिषेध इति वाच्यं यतः किं नाम तल्लक्षितमिति पर्यनुयोगे लक्षणापरंपराश्रयणमंतरेण निरुत्तरतापातादिति यत्त।
दवोचाम कार्य्यस्य शक्तिगोचरत्वमंगीकुर्म्म इति तदुद्घाटयति अंगीकुर्म्म इति तत्र कार्य्ये संगतिग्रहणपरिपाटीं दर्शयति पूर्ववादी
नन्विति प्रवृत्तिदर्शनादिति स्वतंत्रस्य प्रवृत्तिदर्शनादित्यादिति यावत् इतरथा बलवदनिलसलिलौघेनानुह्यमानप्रकृतावनैकांतिक

व्यक्तिः शब्दवाच्या न भवतीति स्ववचनव्याघाताच्च तस्मान्निद्धं सिद्धे प्रहागिवेदांतानां प्रामाण्यमिति अंगीकु
र्म्मैतद्वोचाम कार्य्ये प्रामाण्यमेव शब्दस्यानुपपन्नं तत्र संगतिग्रहणायोगात् ननु कथं तत्र संगतिग्रहणायोगः प्रवृत्तिद
र्शनात् प्रवर्त्तकज्ञानमनुमाय तस्य च प्रवर्त्तकज्ञानत्वादेवाभीयप्रवर्त्तकज्ञानवत्कार्य्यविषयकतामध्यवस्यानंतरं शब्दा
न्वयव्यतिरेकानुविधायितया तस्य शब्दजन्यत्वावगमेन तत्रैव शब्दशक्तेर्ग्रहणात् न च स्वात्मनि प्रवर्त्तकबोधस्ये
ष्टसाधनविषयत्वात्परप्रवृत्तावपि तदेव प्रवर्त्तकतयानुमीयते न कार्य्यमिति वाच्यं अतीतानागतविषयेष्टसा
धनज्ञानेषु प्रवर्त्तकत्वव्यभिचारात् अथ कृतिसाध्येष्टसाधनज्ञानं प्रवर्त्तकं तर्हि कार्य्यमेव नामांतरेण प्रवर्त्तकं त्व
याप्यंगीकृतं तस्यैव कृतिसाध्यत्वात् कृतिसाध्यं प्रधानं यत्तत्कार्य्यमभिधीयते इत्यभिधानात् ॥ तस्मादिति नन्विष्टसाधन
ज्ञानादेवात्मनि प्रवृत्तिर्दृष्टा न कार्य्यज्ञानात् तस्मात्तदेव परत्राप्यनुमीयते। नो विरुद्धो हेतुः साध्यविकलश्च दृष्टांत इतीमामाशंकां निषेधति न चे
ति तदेवेति ज्ञायमानतया विवक्षितं तेन न पूर्वापरव्याघातः तत्र किमिष्टसाधनताज्ञानं प्रवर्त्तकं किं वा कृतियोग्यताविशेषणविशिष्टत।
ज्ज्ञानं आद्ये प्राह अतीतानागतेति द्वितीयं शंकते अथेति कृतिः पुरुषप्रयत्नस्तेन साध्यं यदिष्टसाधनं तज्ज्ञानमिति योजना तद्विप्रतिपत्तिः
कार्य्यस्य चैवं रूपत्वादित्याह तर्हीति यद्यपि भावार्थस्य कृतिसाध्यत्वमस्ति तथापि कार्य्योपाधित्वात्प्राधान्येन तदस्तीति भावः एतदेव शा
लिकनाथवचनेन द्रढयति कृतिसाध्यमिति कृतिसाध्यं कार्य्यमित्युक्ते भावार्थेऽतिप्रसक्तिस्तदर्थं प्रधानमित्युक्तं प्राधान्यं चेदं कृत्युद्देश्यत

तावतिचोक्ते फलेपि स्यात्तदर्थेकृतिसाध्यमित्युक्तं तत्रकृतिसाध्यत्वंहृत्यन्वयव्यतिरेकरूपानुमानगम्यं कृतिप्राधान्यंचमानसप्रत्यय
मितिप्रत्यक्षानुमानगम्यंबालेनस्वात्मनिकार्य्यं यथौदनःपाकश्चेत्यर्थः भवतुकार्य्यस्याप्येवंविधत्वंतथापिनकार्य्यताज्ञानात्प्रवृ
त्तिरितिशंकते तथापीति नेष्टसाधनताज्ञानप्रवृत्तेर्हेतुरपितुकार्य्यताज्ञानस्यैवतज्ज्ञानाच्चप्रवृत्तिरित्याह मैवमिति अत्रापिवाकार्थेमात्र
कागतेतद्वचनमेवप्रमाणमित्याह उक्तंहीति अयमर्थः हितसाधनताकार्य्यतयोःपूर्वमेवउक्तःअनंतरंहितसाधनेष्वेवकिमितिकार्य्य
तामतिनान्यत्रेतिशंकांपरिहरंतआहुः शालिकनाथाः किंचिति सत्यमस्त्वयंनियमः किंत्वयंतत्रविशेषःयत्कर्मकार्य्यतांव्रजेत् तत्स्वयं
क्लेशरूपमेवकथंतर्हितस्यकार्य्यत्वंनहि दुःखाकारस्यकार्य्यत्वमुपपद्यते यथाहुः अकर्त्तव्योदुःखफलइत्यतआह फलसाधनतातत्रे

तथापिकृतिसाध्येष्टसाधनज्ञानमेवप्रवर्त्तकंनकेवलंकार्य्यज्ञानमितिचेन्नैवम् इष्टसाधनतावबोधस्य
कार्य्यावबोधप्रतिहेतुतयाऽन्यथासिद्धेः उक्तंहि किन्तुस्वयंक्लेशरूपंकर्मयत्कार्य्यतांव्रजेत् फलसाधनता
तत्रकारणंतेनकार्य्यतेति ननुचिकीर्षैवास्तु ममेदंकार्य्यमिति नतुतदतिरिक्तंकार्य्यतानामात्रकिंचित्प्रतीयत
इतिचेन्नैवं अन्तरेणापिकार्य्यधियंसमीहितसाधनतामात्रावबोधात्सुधामरीचिमंडलोदयादौचिकीर्षाया

तितस्यैवविवरणं तेनकार्य्यतेति अथवाफलसाधनतातत्रकथंकारणंयावताप्रवृत्तिंप्रत्येवकारणंतदिति अप्यनुपपत्तेः॥ ९
केचित्तत्राह तेनेतितेनकार्य्यतास्यभवतिनतुप्रवृत्तिरिति अतएवतैरुक्तमितिज्ञापककोटिनिविष्टफलसाधनताकार्य्यतामनुरु
ध्यतेनत्वसौतदात्मैवेति ननुकार्य्येसिद्धिरेवकुतःप्रमाणात् नतावत्ममेदंकार्य्यमितिबुद्धिःप्रमाणंतस्याश्चिकीर्षामात्रतयार्थासाध
कत्वादितिशंकते नन्विति कोस्याभिसंधिः किंकार्य्यमेवनास्तीति उतनत्रेयंप्रमाणंनभवतीति नाद्यः तदनंगीकारेचिकीर्षायाएवानु
त्पत्तिप्रसंगात् नचेष्टसाधनतामात्रावबोधात्तदुपपत्तिः सुरतारंभपरिष्वंगतसुंदरीसमीहितसाधनेपिसुधामरीचिमंडलोदयेमत्ता
यमारूनतरंगसंगमेवाअसाध्यस्वभावेचिकीर्षाभावादित्याह मैवमंतरेणेति द्वितीयेत्वनन्यगतिकत्वादेषैवभविष्यतिप्रमाणमिति

भवत्वियमिच्छातिरेकिणी तथापि कृतियोग्यतामेवालंबनेन तदतिरिक्तं किंचित्कार्य्यमस्तितत्राह नचास्याइति साधयितुं योग्यत्वमस्ति दुःखादेरपि नकार्य्यत्वबुद्धिविषयत्वमितितदतिरिक्तमेवास्याविषयइत्याह कृतियोग्ययोरिति अस्तुतर्हीष्टसाधनत्वमेवास्याविषयइति तत्राह नापीति तत्रहेतुः अतीतेति ननुयद्यपिसाधनेपि दर्शनात्फलमात्रमस्यालंबनंनभवति नाप्युभयमेकैकव्यभिचारात् तथाप्युभयानुगतमिच्छागोचरत्वमात्रमस्यालंबनमित्याशंक्यपूर्वोक्तव्यभिचारमेवाह अभिलाषेति परिशेषादतिरिक्तमेववालंबनमि-त्युपसंहरति तस्मादिति ननुभव त्वतिरिक्तं तथापि कथंकार्य्यत्वमिति तत्राह सएवेति तथापिकथमस्यशब्दार्थत्वमिति तत्रा

नचास्याः कार्य्यधियः कृतियोग्यतामात्रमालंबनं कृतियोग्ययोरपिदुःखतत्साधनयोस्तददर्शनात् नापिसमीहितसाधनं अतीतवर्त्तमानयोःसमीहितसाधनयोस्तदभावात् नापिफलमेवतत्साधनेपिदर्शनात् नापिफलतत्साधनयोरनुस्यूतमभिलाषगोचरतामात्रमस्याआलंबनंअभिलाषमात्रगोचरेपिसुधामरीचिमंडलादौ तदभावस्यदर्शितत्वात् तस्मादेभ्योतिरिक्तएवकश्चिदाकारः कार्य्यधीगम्यःसएवचाकारःकृतिसाध्यःकृत्युद्देश्यः कार्य्यमित्युच्यते सएवप्रवर्त्तकतयास्वात्मन्यधिगतत्वाच्छब्दशक्तेर्गोचरः तथापिकथमलौकिकनियोगेवैदिकलिङादिशब्दानांव्युत्पत्तिरितिचेत् उच्यते यद्यपिलोकव्युत्पत्त्यनुसारेणक्रियायाः कार्य्यत्वं प्राप्तंतथापिवेदेस्वर्गकामोयजेतेति नियोज्याभिधायिनास्वर्गकामपदेनसमभिव्याहारान्नियोज्यः सचकार्य्यंयःस्वकीयत्वेनावबुध्यतेइतिन्यायात्॥

ह सएवेति स्वात्मनीति वालस्येतिशेषः कार्य्यमात्रस्यशब्दार्थत्वेपिनियोगस्यशब्दार्थत्वमयुक्तं अलौकिकत्वेनतत्राग्रहीतसंगतिकत्वादितिशंकते तथापीति अलौकिकत्वेपिविमर्शात्मकतर्कतःसंभावितेसंगतिग्रहमुपपादयति यद्यपीत्यादिना क्रियायाइतिभावार्थस्येत्यर्थः स्वर्गकामोयजेतेत्येतन्नियोज्यसमर्पणपरंनतुफलपरमितिहिगुरुमतंतथाचषष्ठाद्येराद्धांतितमतस्तत्समर्पकपदेनसमभिव्याहारात् सहपाठात् क्रियातिरिक्तं नियोगमवगमयंतिलिङादयइत्युत्तरेणसम्बन्धः॥ श्रीः॥ श्रीः॥ श्रीः॥

ननु कर्त्रपेक्षत्वात्कार्यस्य तत्समर्पकत्वमेव स्वर्गकामादिपदस्येत्यत आह नियोज्यः स चेति यः कार्ये स्वकीयत्वेन बुध्यते स नियोज्य इ
ति न्यायान्नियोगसंबंधबोद्धा नियोज्येन भवितव्यमितरथा कर्तृत्वानुपपत्तेरित्यर्थः। तथापि भावार्थसंबंधबोद्धैव नियोज्यो भवतु कु
तो नियोगसिद्धिरिति तत्राह तस्येति स्वर्गकाम इति काम्यस्वर्गविशिष्टत्वात् सिद्धत्वकामाभावात् साध्यस्वर्गविशिष्टः प्रतीयते नियोज्यः
एवंविधस्य च भावार्थक्रियायाममेदं कार्यमिति कार्यतानुद्ध्यनुपपत्तेस्तत्र हेतुः क्षणध्वंसित्वामिति मर्दनादिव्यावृत्त्यर्थं कालांतर
भावी सुकं तदुक्तं लिङ्गादिस्तत्र कार्यं चेत्क्रियामेवावबोधयेत् समन्वयो नियोज्येन तदानीमेव हीयत इति ननु कथमस्य नियोगत्व
आज्ञा हि नियोगः न चापौरुषेये वेदे सा संभवति अत एव च तत्रापूर्वत्वमिति तत्राह तच्च स्वात्मनीति अथवा अपूर्वस्य शब्दार्थत्वे नियोग

तस्य च कर्मिसंबंधात्साध्यस्वर्गविशिष्टस्य क्षणप्रध्वंसिन्यां क्रियायां कालान्तरभाविस्वर्गसाधनयोग्यतावैधुर्येण
कार्यतावुद्ध्यनुपपत्तेः क्रियातोतिरिक्तं कालांतरभाविफलसाधनं नियोगमेव नियोज्यं प्रति लिङ्गादयः कार्यमवग
मयंति तच्च स्वात्मनि पुरुषं नियुंजानं नियोग इति मानांतरापूर्वतया अपूर्वमिति च व्यपदिश्यते न च फलजनक
तया फलं प्रति शेषत्वात् अपूर्वस्य प्राधान्यप्रच्युतिः स्वसिद्ध्यनुकूलनियोज्यलाभायैव फलशेषतावलंबनात्॥

स्य वाक्यार्थता कथमिति तत्राह तच्च स्वात्मनीति पुरुषाभिप्रायरूपप्रैषाद्यभावेपि परस्परव्यभिचारिषु तेष्वनुगतप्रवर्तकत्वरूपो नियोग
शब्दार्थः स चात्रापि संभाव्य इत्यर्थः स्यादेतत् स्वर्गसाधनत्वयोग्यताबलेन खल्वलौकिकनियोगांगीकारः तथा च वरघातायकर्म्मोद्दह
नं यतः कृतिसाध्यं प्रधानं यत्तत्कार्यमभिधीयत इति ———— कार्यलक्षणमायुष्मन्मतेन तत्र स्वर्गं प्रतिसाधनतया तच्छे
षस्य प्राधान्यमिति तत्राह न च फलेति यदि परसिद्ध्यर्थमयं व्याप्रियेत तदास्याप्राधान्यविघातः न तु तदस्ति न हि स्वर्गोस्य स्यादिति नि
योगव्यापारः पितु कथं कारं मामयं साधयेदिति तदर्थमेव खल्वयमस्मै स्वर्गं ददाति गर्भदासोपकर्तेव स्वामी तथा च कुतः प्राधान्यप्र
च्युतिरित्याह स्वसिद्धीति संविदधानस्य संविदधानं योगक्षेमं कुर्वत इत्यर्थः॥

स्वात्मसिद्धीति अनुष्ठानं विना नियोगासिद्धेः कर्त्रा विना च तस्यासिद्धेः अधिकारिणं विना कर्तुरभावान्नियोज्यं विना च तदभावात् अ
कामानुगुणे च कामिनि योगान्नायोगात् तदिदमानुकूल्यम् अपि भिन्नक्रमः स्वर्गादिकं कुर्वदपि प्रधानमिति प्रतिपादिततर्कोपसंहारपू
र्वकमुपपादितं नियोगशब्दार्थं प्रतिवेदी ग्रहणपूर्वकमुपसंहरति तदेवमिति यूपादीति यथा खलु यूपाहवनीयादौ यूपं तक्षति यूप
मष्टास्त्रीकरोति यूपमनक्ति अहोदिते सूर्ये आहवनीयमादधातीत्यादिवाक्यपर्यालोचनया संस्कृतौ कौ च न दार्व्वग्नि विशेषौ यू
पे पशुं निबध्नाति आहवनीये जुहोतीत्यत्र यूपाहवनीयशब्दार्थौ विति निर्णीयते आदिशब्देन यवचराहादि ग्राह्यं विवादेतिकार्याभि।

स्वशेषभूतयागभेदाद्योपकारायसंविदधानस्य स्वामिन इव प्राधान्यानुपरोधात् तदुक्तं स्वात्मसिद्ध्यनुकूलस्य नियो
ज्यस्य प्रसिद्धये कुर्वन्स्वर्गादिकमपि प्रधानं कार्यमेव न इति तदेवमलौकिकत्वेपि नियोगस्य यूपाहवनीयादिव
त्पदांतरसमभिव्याहारात्लिङ्गादीनां तत्र संबंधग्रहणोपपत्तेरुपपन्नं तत्राम्नायस्य प्रामाण्यं प्रयोगश्च विवास्प
दध्यासितालिङ्गादयः एतत्क्रियातिरिक्तकार्याभिधायिनः कार्याभिधायित्वाद्गामानयेत्यादिपदवदिति विप
क्षे यागातिरिक्तकार्यानभ्युपगमात् यागस्य च स्वर्गसाधनत्वानुपपत्तेः स्वर्गकामो यजेतेत्यादिवाक्यानाम
प्रामाण्यप्रसङ्गो बाधक इति ॥

धायिन इत्युक्ते भावार्थाभिधानेन सिद्धसाधनतातन्निवृत्त्यर्थं क्रियातिरिक्तेत्युक्तं तथा चाप्रसिद्धविशेषणतातन्निवृत्त्यर्थमेतत्पदं क्रि
यांतराभिधायिपदेषु च सुप्रसिद्धं साध्यं पक्षे चैतदभिधेयक्रियातिरिक्तकार्यत्वमेतदनभिधेयत्वे सति क्रियात्वाद्वा एतदभिधेयत्वे सति क्रि
यात्वानधिकरणत्वाद्वा आद्यमभिधायकत्वे साधनव्याहतं द्वितीयं सिध्यत् क्रियात्वानधिकरणकार्यं नियोगमादाय सिध्यतीति
नियोग सिद्धिः

तदेतत्कार्य्येऽनुमानसमर्थनं दूषयितुमुपक्रमते उच्यत इति समीहितसाधनताया इति तद्बोधपरं विषयेण विषयिलक्षणात् तत-
श्च तस्यैव परत्राप्यनुमानेन न तत्रैवम्बद्धशक्तिः ननु कार्य्य इत्यभिप्रायः इष्टसाधनतावबोधस्य भूतादौ प्रवर्त्तकत्वव्यभिचारं पूर्वोक्तम-
नूद्य श्लोकेन परिहरति कार्य्यस्येति यादृशमिष्टसाधनत्वं कृतियोग्यताविशिष्टं तत्कार्य्यज्ञाने हेतुस्तादृशमेव प्रवृत्तिहेतुराश्रीयते।
मया ततः कुतो व्यभिचार इति योजना श्लोकं विवृणोति येनापीति ननु कृतियोग्येष्टसाधनज्ञानमेव कार्य्यज्ञानं न त्वनयोर्धूमाग्निवो-

अत्रोच्यते भवेदेष मनोरथोपदिष्टान्यपि कार्य्यबोधस्य प्रवर्त्तकत्वमध्यवसीयेत समीहितसाधनताया एव तु
स्वात्मनि प्रवर्त्तकत्वाध्यवसायात् न च भूतादौ व्यभिचारः यतः कार्य्यस्यावगतेर्हेतुर्यादृशं हितसाधनं प्रवृत्तेस्तादृशं
हेतुर्व्यभिचारस्ततः कुतः ॥ ७ ॥ येनापि हि कार्य्यावबोधस्यैव प्रवर्त्तकत्वमभ्युपेयते ऽभ्युपेयत एव तेनापीष्टसाधनता-
वबोधस्य कार्य्यावबोधं प्रति हेतुता तदभावे कार्य्यबोधानुपपत्तेः तत्रापीष्टसाधनतामात्रस्य भूतादौ व्यभिचारात्
कृतियोग्येष्टसाधनताज्ञानमेव कार्य्यताज्ञानहेतुरित्यभ्युपेयं तथा च तादृगिष्टसाधनबोधस्यैव प्रवृत्ति-
हेतुत्वोपपत्तौ किमन्तरगडुना कार्य्यावबोधेन न चेदृगिष्टसाधनज्ञानमेव कार्य्यताज्ञानं तस्य तज्ज्ञानं प्रति हेतुत्वा-
भ्युपगमात् न च ममेदं कार्य्यमिति चिकीर्षामपहाय कार्य्यज्ञानं नाम किंचिदुपलभामहे न च चिकीर्षैव कार्य्य-
धियमन्तरेणानुभूयमानानां कल्प्यतामिति युक्तं कृतियोग्येष्टसाधनतावबोधादेव चिकीर्षाया अप्युपपत्तेः ॥ ८ ॥

धवज्जन्यजनकतायत्राह यथा खल्वेकधीवेद्यत्वे व्याकृतितो व्यक्तिधीः कृतेति तथा च तस्य प्रवर्त्तकत्वाश्रयणमस्मदनुकूलमेवेति त-
त्राह नचेति हेतुमाह तस्येति फलसाधनता तत्र कारणं तेन कार्य्यतेति स्वीकारात् हेतुहेतुमतोरैक्यमनुपपन्नमित्यर्थः यत्तु ममे-
दं कार्य्यमिति बुद्धेः परिशेषात्कार्य्यविषयत्वमुक्तं तदप्यसिद्धं तस्याश्चिकीर्षारूपत्वादित्याह नच ममेदमिति यत्त्विष्टसाधनता-
मात्राच्चिकीर्षानुमते तद्धेतुः कार्य्यं स्वीकर्त्तव्यमिति तदपि विशिष्टेष्टसाधनस्वीकारात्परिहृतमित्याह नचेत्यादिना ॥ ८ ॥

तदेवं कार्य्यस्य प्रवर्तकत्वं प्रमाणाभावेनोक्तानन्तलक्षणमुक्तं दूषयति नन्वकृतीति फलमपि हि कृतिसाध्यं कृत्युद्देश्यतया प्रधानं चातस्तत्राति-
व्याप्तिरित्यर्थः नन्वव्यवधानेन कृतिसाध्यत्वं विवक्षितं न च तत्फलेऽस्तीति नियोगस्य व्यवधानान्तत्स्येति शंकते अथेति नह्यसिद्धिर्धात्वर्थस्यैव
साक्षात्कृतिलक्षणप्रयत्नसाध्यत्वात् नियोगस्य तद्व्यवधानादिति दूषयति मैवमिति किमिदं साध्यैकस्वभावत्वं किं साधनानर्हत्वाधिकर-
णत्वं किं वा सिद्धत्वानधिकरणत्वं आद्ये प्रागभाववत्सूत्पन्ने नियोगेऽव्याप्तिरित्याह प्रागभावेति द्वितीयं दूषयति नच सदेति एवंल-
क्षणकेन नियोगेन सिद्धार्थस्य वृत्तिरेवानुपपन्ना — आद्यात्तात्फलासिद्धिः पूर्वोक्तयोग्यताविरहश्च तथा च स्वात्मसिद्ध्यनुकूलस्य त्या।

नन्वकृतिसाध्यं प्रधानमिति कार्य्यलक्षणमुक्तं फलेऽति व्याप्तेः अथ साक्षात्कृतिसाध्यत्वं विवक्षितं न च तत्फलेऽ
स्तीति मतम् मैवं नियोगेन स्वभावेनाव्याप्तेः भावार्थस्यैव साक्षात्कृतिसाध्यत्वात् अथ साध्यैकस्वभावत्वं न प्रागभाव
वत्सु व्यभिचारात् न च सदा साध्यैकस्वभावत्वं यागाद्यनुष्ठानोत्तरकालमपि तस्य साध्यैकस्वभावत्वे कदाचिदपि नि-
योगासिद्धौ स्वर्गासिद्धिप्रसंगात् अस्तु वा यत्किंचिदविचारितरमणीयं लोके कार्य्यं तथापि कथं वैदिकलिङ्गादि
शब्दादलौकिकनियोगस्य प्रतिपत्तिः मानान्तरानधिगते तस्मिँल्लिङ्गादेः संगतिग्रहणायोगात् अधिगमे वा नो
मानान्तरापूर्वमपूर्वमिति गीयते इति स्वकपोलकल्पितापूर्वत्वभंगप्रसंगः नच कार्य्यमात्रे व्युत्पन्नस्य सांगतिका लिङ्गा-

दि शाब्दिकयाकेवलं विलपितमेव स्यादित्यर्थः एवं कार्य्यमात्रस्य लक्षणानि दूषयित्वा ((इयः शब्दानियोज्याभिधायि॥ ७॥
तद्विशेषं नियोगं दूषयति अस्तु वेति तादृशो नियोगः किं प्रमाणान्तरेण न गृहीतः किं वा गृहीतः उभयथापि दूषणमाह मानान्तरेत्यादि-
ना नह्यत्यन्तमलौकिकत्वमसम्भावना कार्य्यता कारणलोकप्रसिद्धसंवसतो विशेषमात्रनिर्णयो वाक्यविशेषविमर्शाद्भवति य-
थाहुः अनुमतिरपि कार्य्यार्थे व्यवहारानुसारिणी किंतु निर्धारणमात्रं वेदवाक्यविमर्शजमिति तदेतत्पूर्वपक्षावसरोक्तमनूद्य दूषयति नन्वे-

१

वि॰ सु॰ टी॰ न॰ ९६

नत्वयुक्तमित्युक्तं तत्र हेतुमाह अनुपपत्तीति अर्थापत्तिः खल्वनुपपत्तिः तथा च मानान्तरगम्यत्वादपूर्वत्वनिवारणमित्यर्थः पूर्ववा
दिहृदयं शंकते नन्विति अपूर्वत्वं निर्वाहयति तर्कस्येति यद्यपि तर्कः स्वयं न प्रमाणं तथापि तद्विषयः प्रमाणविषय एव तथा चोक्तदो
षानुषंग इत्याह मैवमिति तदेव दर्शयितुं तर्कस्वरूपमाह तथा हीति एकाभ्युपगमेनेति व्याप्याहार्यारोपेणेत्यर्थः अनेन चानुमाने
ति व्याप्तिः परिहृता नियतप्रसंजनं तर्क इत्युक्ते यद्यनित्यः स्यान्मूर्तः स्यादित्यादिप्रसंगाभासे ति व्याप्तिस्तदर्थं प्रमाणान्तरेत्याद्युक्तं नि
स्वर्गकामादिपदसमभिव्याहारसामर्थ्यात् क्रियातिरिक्तमेव कार्यमवगमयन्ति आशुतरविनाशिन्याः क्रियायाः का
लान्तरभाविस्वर्गादिसाधनतानुपपत्तेरिति युक्तं वक्तुं अनुपपत्तिवेद्यत्वे मानान्तरगोचरत्वप्रसंगात् ननु नेयमर्थापत्तिः
स्तर्क एवायमुपन्यस्तः तेन तर्काधिगते नियोगसंगतिग्रहः संगच्छते तर्कस्याऽमानत्वात् प्रमाणानुग्राहकस्तर्को न तु
प्रमाणमिति हि परीक्षका इति चेत् मैवं तर्कगोचरत्वेपि प्रमाणान्तरगोचरत्वस्यापरिहार्यत्वात् तथा हि प्रमाणान्तरा
धिगतव्याप्यव्यापकभावयोरेकाभ्युपगमेन द्वितीयस्य नियतप्रसंजनरूपस्तर्कः यथा यद्य यं वह्निमान्न स्याद्धूमवा
नपि न स्यादिति तथा चायं यद्ययं लिङ्गादिः क्रियातिरिक्तकार्याभिधायी न भवेत्तदा न स्वर्गकामपदेन समभिव्याह्रियेत
समभिव्याह्रियते चायं तस्मात् क्रियातिरिक्तकार्याभिधायक इति प्रसंगरूपेपि तर्के द्वयोरापाद्यापादकभागयोस्तद्भा
वयोश्च धूमवत्त्ववह्निमत्त्वयोस्तदभावयोरिव मानान्तरगोचरता कथं न स्यात् न चापाद्यापादकभावोपि क्रियातिरिक्त
यत्परं तु व्यर्थमिव उदाहरति यथेति प्रकृतस्थलेप्यापाद्यापादके विवेचयति तथा " कार्यस्याप्रसिद्धत्वेन तदभावस्याप्रसिद्धत्वात्
चेति अस्य च विपर्यये पर्यवसानं दर्शयति समभिव्याह्रियते चायमिति कथं न स्यादिति इतरथा मूलशैथिल्यादिति भावः अभ्युपगम्यापा
द्यापादकभावं प्रमाणान्तरगोचरत्वप्रसक्तिरुक्ता सैव नास्ति अप्रसिद्धविशेषणत्वादित्याह न चेति अत्र हि क्रियातिरिक्तकार्यानभिधा
यकत्वमापादकं स्वर्गकामपदाऽसमभिव्याहारश्चापाद्यस्तत्रातिरिक्तकार्यस्याप्रसिद्धत्वादेव तदनभिधानमप्रसिद्धमेवेत्यर्थः ॥ ६ ॥

एवं तर्कगोचरत्वेपि प्रमाणानां तर्कस्याप्रमाणत्वमापादितमिदानीमप्रमाणरूपत्वमपि त्वन्याने तर्कस्य शक्यसमर्थनं स्मृतिव्यतिरिक्ताप्रमाण।
ज्ञानस्य भवतानंगीकारात् स्मृतेश्चाननुभूतचरतयाऽनुपचितसंस्कारेऽनुपपत्तेरित्याह अप्रमाणभूतेत्यादिना ननु वयमेतल्लक्षणं
नकक्षीकुर्मः यत्संस्कारमात्रजन्यं ज्ञानं स्मृतिरिति येनाननुभूते संस्काराभावात्स्मृत्यनुपपत्तिः स्यात्किंतु सापेक्षं ज्ञानमिति शंकते
नन्विति प्रकृत न तर्केच लक्षणं वर्तयति अस्ति चात्रेति यदिदमस्य सापेक्षत्वं तत्किं स्वोत्पत्तौ उत विषयावबोधे आद्येपि यत्किंचिदपेक्षा
उत ज्ञानापेक्षा आद्ये आह नाद्य इति एतेन द्वितीयोपि निरस्तः लिंगज्ञानसापेक्षस्याप्यनुमानस्य स्मृतित्वात् द्वितीयं निरस्यति विषये।

अप्रमाणभूतश्च तर्कः स्मृत्यनुभवभेदेन ज्ञानद्वैराश्यवादिनां स्मृतावंतर्भवतीति वाच्यं न चात्राननुभूते नियोगे
स्मृतिः संभवति संस्कारजन्यायाः स्मृतेस्तदभावेऽभावात् ननु पूर्वानुभवजन्यसंस्कारमात्रजन्यं ज्ञानं स्मृतिरिति न
ब्रूमः किंतु सापेक्षं ज्ञानमस्ति चात्र प्रमाणानुग्राहकतया तर्कस्य तदपेक्षा ततो नोक्तदोष इति चेन्नैवं विकल्पास
हत्वात् तथाहि किमुत्पत्तौ सापेक्षत्वमुत विषयावबोधे नाद्यः प्रमाणज्ञानानामपींद्रियलिंगादिसापेक्षतया स्मृ
तित्वप्रसंगात् न द्वितीयः विषयावबोधेपि सापेक्षत्वे स्मृतेः प्रदीपवज्ज्ञानत्वाभावप्रसंगात् अपसिद्धांतापत्तिश्च
प्रमाणमनुभूतिः सा स्मृतेरन्या स्मृतिः पुनः पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यत इति शालिकनाथवचनविरोधा

ति विषयावबोधे विषयव्यवहारजनने कारणेन कार्यैलक्षणात् तत्र सापेक्षत्वे प्रदीपवज्ज्ञानत्वं न स्यादित्यर्थः प्रमाणमनुभूतिरिति प्र
माणसामान्यलक्षणं अनुभूतेर्लक्षणमाह सा स्मृतेरन्येति स्मृतिव्यतिरिक्तं ज्ञानमित्यर्थः तेन च स्मृतेः प्रामाण्यं निवारितं स्मृतेरपि लक्ष
णमाह स्मृतिः पुनरित्यादिना अनुमानप्रत्यभिज्ञादिव्यावृत्त्यर्थं मात्रग्रहणमिति प्रकरणशालिकाप्रमाणपारायणश्लोकार्थः ॥ ६ ॥

वि॰सु॰
टी॰न॰
९७

एवमनुपपत्तिमंगीकृत्यापूर्वं व्यक्तिरापादिता इदानीमनुपपत्तिरेव नास्त्यन्यथैवोपपत्तेरित्येतत्प्रतिबंदीपूर्वकमाह नचार्थापत्तीति यथा हि यजेतेत्यत्र कृतिसाध्यनियोगाभिधायिना लिङा कृतिनियोगयोः प्रतीतिरुभयोश्चैकपदत्वेन साध्यसाधनभावप्रतीतो भावार्थविषयकत्वेन तज्जनकत्वनियमात्कृते नियोगस्य वा भावार्थत्वात् प्रकृत्यभिधेयभावार्थमुत्पाद्य तद्द्वारा नियोगसाधनता कृतेर्भवद्भिरंगीक्रियते तथा क्रियाया एव क्षणिकाया अप्यपूर्वावांतरव्यापारायाः फलसाधनत्वोपपत्तौ न स्वतंत्रनियोगव्यतिरेकेण का। त्वनानुपपत्तिरित्यर्थः यत्तु नरत्र केश्चिदक्रमपूर्वकल्पनायामपि साधनसाधनतैव यागस्य न तु साक्षात्साधनता यागस्येति न त्कल्पनायामपि तदवस्थैवानुपपत्तिरिति तन्न व्यापारतयैव कल्पनात्तेन चाव्यवधानाद्यद्धि चतत्कल्पनामात्राद्व्यवधानं तर्ह्यवगुर

नचार्थापत्तिगम्यत्वमपि कृतेर्भावार्थजननद्वाराऽपूर्वसाधनत्ववत्क्रियाया एवापूर्वावांतरव्यापारायाः स्वर्गसाधनत्वोपपत्तेः अपि च यो ब्राह्मणायावगुरेत्तं शतेन यातयादित्यत्रावगुरणकर्मणः क्षणिकस्यापि दुरितापूर्वजननद्वारा कालांतरभाविशतयातनाफलसाधनत्ववत्क्षणिकाया अपि यागक्रियाया अपूर्वजनन। द्वारा स्वर्गसाधनता किं न स्यात् नन्ववगुरणे दुरितापूर्वकल्पना कामाधिकारे क्रियातिरिक्तनियोगसिद्ध्युत्तर कालीनं ॥

णादावपि स्यादिति प्रतिबंदीं गृह्णाति अपि चेति यः पुरुषो ब्राह्मणायावगुरेत्क्रुद्धस्सन्नुद्यमेत् स्रुद्यनायुधं तद्वा वगुरणं शतेन यातनया तत्स्यात् इत्थंभावे तृतीया सा च स्वर्गस्थानेन दुःखमुत्पाद्येत ततः शतगुणयातनामनुभावयेत् अथवा शतेन संवत्सरैर्यातनया तत् तावतः संवत्सरान् पितृलोकं न प्रजानातीति वाक्यशेषात् अत्र हि कालांतरभाविशतयातनादेः क्षणिकावगुरणादिसाधनमिति किंचिद्दुरितापूर्वं कल्पनीयमिति न च तद्विशिष्टानंदः स्वफलतया अकार्यत्वेनाशक्यार्थत्वात् यत्त्ववगुरणे तादृशापूर्वकल्पनमेव काम्येष्वपि कार्येषु स्वतंत्रनियोगं गमयति तमंतरेण तदनुपपत्तेरिति नयविवेककारेणोक्तं तदुद्भावयति नन्विति ॥ ९ ॥ ९ ॥

राम॰
९७

तत्सिद्ध्युत्तरकालतामेव दर्शयति तथाहीत्यादिना अदृष्टचरस्य कल्पनानुपपत्तेः कामाधिकारसिद्धौ नियोगोऽत्र कल्प्यत इत्यर्थः अन्य
त्र सिद्धावेव हेतुः तत्सिद्धीति सत्यमन्यत्र दृष्टं कल्प्यते तत्तु तत्त्वावान्तरव्यापारत्वेनैव दृष्टं न तु स्वतंत्रत्वेनेत्यभिप्रेत्य परिहरति मैवमित्या
दिना अयं च कृतेर्भावार्थजननद्वारेत्यस्य प्रपंचोपि अत्र च यागादिधात्वर्थस्य नियोगं प्रति विषयत्वाङ्गीकरणं करणत्वाङ्गीकरणं चाग
मकमित्याह अत एव चेति एतदेव भवनाथवचनेन द्रढयति कृतीति कृतिः प्रयत्नः तत्साध्यो नियोगस्तयोर्मध्यस्थो यागदानहोमा
दिधात्वर्थो विषयो मतः षिञो बंधने कर्मणो विषयशब्दव्युत्पत्तेः कृतिं नियोगादौ घटयतो धात्वर्थस्य युज्यते विषयत्वं तथा कार्येऽसं

तथा हि तत्राशुतरविनाशिन्याः क्रियायाः कालांतरभाविफलसाधनत्वासामर्थ्यात्तदतिरिक्तापूर्वस्य फलसाधनत्वे स्थिते
पश्चादवगुरणेपि कालांतरभाविशतयातनाफलमपि दुरितापूर्वद्वारेणैवेति कल्प्यते तथा सति कथं नियोगासिद्धिः तत्सिद्ध्यु
त्तरकालीनत्वाद् तत्कल्पनाया इति चेन्मैवं कृतिसाध्ये नियोगे प्रतीते कृतेर्भावार्थैकविषयत्वात् नियोगस्य चाभावार्थ
रूपत्वात् साक्षात्कृतिसाध्यत्वासंभवात् भावार्थं साधयंती कृतिर्नियोगं साधयतीति यथा कल्प्यते अत एव चाघटितस
घटकतया भावार्थोपि विषयः करणं च नियोगं प्रतीति गीयते यथाहुः कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः
कार्ये संघटिताकारे करणत्वेन संमत इति तथा लोकावगतसामर्थ्यैर्लिङादिशब्दैरधिगतफलसाधनभावायाः क्रि
याया नियोगमंतरेणापि स्वजन्यापूर्वावान्तरव्यापारद्वारा फलसाधनत्वसंभवे तद्दृष्टांतेनावघ्नत एवावगुरणेपि दुरि
तापूर्वकल्पनायां संभावितायामलौकिकवेदसिद्धनियोगकल्पनानुपपत्तेः ९९ घटिताकारे स एव च विषयः तस्मिन्नेव करण
त्वेन च संमत इति श्लोकयोजना एतदुक्तं भवति प्रतिपत्त्युपाधौ विषयत्वं सिद्ध्युपाधौ करणत्वमित्यस्ति तयोर्भेद इति दृष्टांतमुक्त्वा दा
र्ष्टांतिकमाह तथा लोकावगतेत्यादिना गवानयनादिक्रियैव तावत्फलसाधनत्वेनाधिगता लिङादिशब्दैः तदपि क्षणिकत्वादनुप
पन्नं तद्ध्यवान्तरव्यापारवत्यास्तस्या एव साधनत्वमास्थेयं एवं दृष्टमनुगृहीतं भवति इतरथा हि दृष्टहानिरदृष्टकल्पना प्रसज्येयातामतस्त
द्वत् दृष्टांतेनावगुरणेपि तत्कल्पनासिद्धेर्न नियोगेन विनानुपपत्तिरित्यर्थः ॥

युक्तं चैतदितरथा लिङ्गक्रियाकार्यवाचकत्वमात्रेण व्यवहारोपपत्तौ अलौकिकवाच्यकल्पनाप्रसंगादित्याह इतरथेति अपूर्वस्येति
अपूर्वस्य फलं प्रति साधनत्वकल्पनेत्यर्थः यागस्येति अपूर्वफलयोरेकैकं च भावनाया एकमेव करणमेकैकं च भोग्यमिति हि तेषा-
मभ्युपगमः उपलक्षणं चैतत् यागस्य नियोगं प्रति विषयत्वकल्पनायाः प्रतिपत्त्यनुबंधित्वात् तस्याः करणत्वादपि प्रायमिकत्वात्
न एवं प्रतिनिर्देशसमर्थ्यादाग्नेयादि प्रतिवस्त्वपि क्रियाया एव फलसाधनतामुपपादयति किंचेति आग्नेयोऽष्टाकपाल ऐन्द्रं दधि ऐ-
न्द्रं पय इति यागत्रयं दर्शत्रयं नाम आग्नेयोऽष्टाकपालो यागः आज्यद्धविष्कश्चोपांशुयागः अग्नीषोमीय एकादशकपालयागश्चेति
पौर्णमासत्रयं एतेषां च परमं दर्शपूर्णमासापूर्वं प्रतिकरणत्वं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति विधिना बोधितं न चैतानि।

इतरथा लिङ्क्रियाकार्यवाच्कत्वभंगोऽपरिलिङ्गनियोगवाचकत्वकल्पना अपूर्वस्य फलसाधनत्वकल्पनाया-
गस्य च फलनियोगयोः करणत्वकल्पना चेति गौरवं प्रसज्येत किंच यथा तवाग्नेयादीनामुत्पत्त्यपूर्वावान्तरव्या-
पाराणां परमापूर्वसाधनभावस्तथा मम तेष्वपूर्वावान्तरव्यापाराया एव क्रियाया ईश्वरप्रसादावान्तरव्यापारा
या वा फलसाधनतोपपत्तेर्न नियोगकल्पनावकाशः न चोत्पत्त्यपूर्वाणामेव परमापूर्वसाधनत्वमाग्नेयादीनां तु न
साधनसाधनत्वेनेति युक्तं वक्तुं प्रमाणाभावात्तथा हि

कानामुद्दीश्योपकारो घटते इत्यवान्तरव्यापाररूपाणि षडपूर्वाणि कल्प्यंते न च तावता आग्नेयादीनां साधनत्वाभाव इति भवतामपि
संप्रतिपन्नं तथात्रापि मम तेषु क्रियैवापूर्वावान्तरव्यापारा स्वर्गसाधनं न त्वपूर्वं अथ चेश्वरप्रसादस्यापूर्वस्थाने भिषिच्यमानतास्य क्वा-
ति स्मृतिपुराणगणनिर्णीतत्वादित्यर्थः यथा चास्य तन्मते तत्तद्देवताया यागादेवस्वकर्षे देवताया अप्रयोजकत्वं इत्यधिकरणाविरोधश्च तथा फल-
मतउपपन्ने इत्यन्नवर्णितं वाच्चस्यातिमिश्रैः ननु नाग्नेयादि षट्पूर्वाणामवान्तरव्यापारत्वं अपि तु तान्येव परमापूर्वं प्रति साधनं। आग्नेया-
दीनि तु तत्साधनानीत्याशंक्य दूषयति न चोत्पत्तीत्यादिना॥

अधिकारवाक्यं फलसंबंधबोधकं वाक्यं नियोज्यसमर्पकं वा उत्पत्तिवाक्यं कर्मस्वरूपबोधकं आद्येपि पक्षे दर्शपूर्णमासाभ्यामित्यनेन वा
यजेतेत्यनेन वा प्रथममेवाह दर्शपूर्णमासाभ्यामित्यस्येति आग्नेयादिकर्मसमुच्चयवाचकत्वादुत्पत्त्यपूर्वानभिधायकत्वादित्यर्थः द्विती
येनिषेधति यजेतेति चेति भावार्थविशिष्टपरमापूर्वाभिधायकत्वादित्यर्थः उत्पत्तिवाक्यैरिति पक्षं दूषयति नापीति एषां हि तेषामभ्युपग
मः आग्नेयादिवाक्यैरपूर्वान्तराणि नाभिधीयन्ते प्रधानापूर्वं सन्निधिपठितत्वात् तदनुवादाशंकया कुण्ठितशक्तित्वात् केवलं कर्मस्वरूपमा
त्रं तत्र शाब्दं योग्यतावैधुर्याभावाच्च प्रकरणिनान्विताभिधानं कारणान्तरवशाच्चापूर्वाणां कल्प्यत्वमिति सोयं भङ्ग्यैवमभ्युपगच्छतइ

किं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यधिकारवाक्येनैषां परमापूर्वसाधनत्वमवगतमुताग्नेयोऽष्टाकपाल इत्याद्यु
त्पत्तिवाक्यैः नाद्यः दर्शपूर्णमासाभ्यामित्यस्य कर्मसमुदायवाचकत्वात् यजेतेति च परमापूर्वाभिधानात् नापि द्वितीय
यः दर्शपूर्णमासाभ्यामित्यधिकारवाक्यसन्निधिसमाम्नातानामुत्पत्तिवाक्यानामधिकारापूर्वानुवादशंकाकुण्ठित
शक्तीनां द्रागित्येवापूर्वान्तरप्रत्ययजनकतानाश्रयणात् अन्यथाधिकारवाक्यसन्निधिपरिपठितसमिदादिवाक्य
स्य लिङ्गादिशब्दानामपि स्वतन्त्रकार्याभिधायकत्वे ग्राहकग्रहणभंगप्रसंगः प्रयोजनप्रयोजनिभावेनान्विताभि
धानं ग्राहकग्रहणमित्यभ्युपगमात् स्वतन्त्राणां च प्रयोजनप्रयोजनिभावासंभवात् ॥ ६ ॥ ६ ॥ ६ ॥

त्यर्थः न केवलमनुवादाशंकयानभिधायकमनिष्टप्रसंगाच्चेत्याह अन्यथेति दर्शपूर्णमासाभ्यामित्याद्यधिकारवाक्यप्रकरणपठित
समिदादिवाक्यानामप्याग्नेयादिवाक्यवदपूर्वाभिधायकत्वात् अपूर्वस्य च कृतिसाध्यं प्रधानं यदित्युक्तलक्षणवत्तया प्रधानत्वात्प्रधा
नयोश्चाङ्गाङ्गिभावाभावात्तद्बोधकग्राहकसंज्ञकप्रयोगवचनेन परिग्रहो न स्यादित्यर्थः आपाद्य चैवं दूषणं परमापूर्वेण ग्राहकग्रहण
स्वरूपं दर्शयति प्रयोजनेनेति प्रयोजनं प्रधानं नियोगः प्रयोजनिनः तत्प्रकरणपठितसकलपदार्थास्तदन्विततया प्रधाननियोग
स्याभिधानं ग्राहकग्रहणमित्यर्थः कथं तर्ह्याग्नेयादीनां क्षणिकानां सेतिकर्तव्यताकानां परमापूर्वे निर्वर्तकत्वमित्यत आह ॥ ६ ॥

२ वि·सु· टी·न· ९९

आग्नेयादीनामेवत्विति अवगतो विषयभावः करणभावश्च येषां तेन तथा अंगीकरणादिति यत्रानन्यनिष्ठभावार्थलक्षणविषयलाभ
स्तत्राभिधायकत्वकल्पना अन्यत्र केवलकल्पनेत्यर्थः अत्र भवनाथः प्राह नक्षणिकां क्रियांव्यवहितस्वर्गप्रतिसाधनत्वेनाभिदधाति।
शब्दः अतः कल्पनानुपपत्तेः अपूर्वकल्पनातः प्रागयोग्यत्वात् आग्नेयादीनांत्वपूर्वं प्रतियोग्यत्वादन्वितानाभिधानमिति नत्वनहि क्षणिक
त्वाद्व्यवहितत्वमात्राद्वाऽयोग्यत्वं तैलपानादावदर्शनात् निरन्वयविनाशस्तत्राप्यसिद्धः आग्नेयादेर्विचक्षणिकस्यापियोग्यतास्यतः
कारणांतरमप्रयोजकं एवं नियोगस्याशाब्दत्वमुपपाद्य तद्व्यावर्त्तकं नियोज्यं दूषयति कश्चायमिति ननु नियोगदूषणसमयेनियोज्यदू
षणमकांडतांडवमिवेत्याह यदन्वयादिति गुणत्वइति क्रियांप्रतिगुणभूतश्चेत्ततः कर्त्तैव न तु तदतिरिक्तइत्यर्थः तेनन समभिदादिषुव्य

आग्नेयादीनामेवत्वधिकारापूर्वप्रत्यवगतकरणविषयभावानां क्षणिकत्वेन तदनुपपत्तौ तत्सिद्ध्यर्थमेवावांतर
व्यापारतयोऽत्यपूर्वांगीकरणात् कश्चायं नियोज्यो नाम यदन्वयात्क्रियातिरिक्तनियोगसिद्धिः स किं कार्य्यं प्रति
गुणभूतः प्रधानभूतो वा नाद्यः गुणत्वे कर्त्तृत्वान्वयात् नर्भावात् नद्वितीयः प्राधान्येऽधिकार्य्यन्वयापातात् गुणप्र।
धानभावातिरिक्तप्रकारांतरासंभवाच्च कार्य्यमात्मीयत्वेन योऽवबुध्यते सनियोज्यइतिचेत् तथाभूतावबोध।
स्यापि गुणप्रधानभावांतर्भावेनोक्तदूषणापत्तेः क्रियाकार्य्यं प्रति गुणभूतत्वं कर्त्तृत्वं क्रियातिरिक्तं प्रति गुणभू
तत्वमेव नियोज्यत्वमिति विषयभेदादद्वैदइतिचेत् ।। भिवारः इदंच निगूढाभिसंधेर्दूषणं प्राधान्यइति क्रियांप्रति प्राधान्यं

नाम तत्फलभोक्तृत्वमत्र विवक्षितं त्वेतनत्वविशेषितंत्वातदेवचाधिकारित्वमित्यर्थः तेन च व्रीह्यादिव्यावृत्तिः ननु गुणप्रधानभाव
व्यतिरिक्त एव कश्चित्प्रकारो भवत्विति तत्राह गुणप्रधानेति स्वतंत्रयोः संबंधाभावप्रसंगादिति भावः तथाभूतेति आत्मीयत्वेनात्म।
संबंधित्वे न च निराकांक्षयोः संबंध इत्यंतर्भवेत्येव गुणप्रधानभावे सोपीत्यर्थः यो निगूढाभिसंधिरुक्तस्तमुद्घाटयितुं शंकते क्रियाका
र्य्यमिति द्विविधं हि कार्य्यं क्रियारूपं तदतिरिक्तनियोगरूपंच तत्र प्रथमं प्रति गुणभूतत्वं कर्त्तृत्वं द्वितीयं प्रति गुणभूतत्वं नियोज्यत्व।
मिति गुणभावे समानेपि यत्प्रति गुणभावस्तद्वैषम्याद्विद्वैषम्यमित्यर्थः॥

राम ९९

दूषयति मैवमिति विषयनियोज्यनिरूप्यः कश्चित्कार्य्यो नियोगो नाम यथाहुः कार्य्यत्वेन नियोज्यं यः स्वात्मनि प्रेरयन्नसौ नियोग इति
मीमांसानिस्नातैरभिधीयते इति तथा च नियोज्यनिरूपणान्नियोगनिरूपणं संप्रति नियोगेन तं निरूपयसीति परस्पराश्रय इत्यर्थः यच्च
क्रतुदेश्यत्वं प्राधान्यं नेगीयते गुरुमतानुसारिभिस्तदपि दूषयति न च नियोगस्येति पुरुषार्थत्वं प्रयोजकं दर्शयन्नपुरुषार्थतामेव विवृणो
ति सुखेति ननु किमिति न पुरुषार्थत्वं यावता स्वर्गादिसाधनतया सुखसाधनत्वमस्तीत्याशंक्य नित्यनियोगे फलरहिते क्रतुदेश्यतां न
स्यादित्याह न चेत्यादिना स्यादेतल्लोके खल्वियं कथा यत्सुखादिचतुष्टयान्यतमं स पुरुषार्थ इति वेदे तु नियोगसिद्धिरेव पुरुषार्थ इति

मैवं क्रियातिरिक्तकार्य्यसिद्धौ नियोज्यान्वयसिद्धिः नियोज्यान्वयसिद्ध्यधीना च क्रियातिरिक्तकार्य्यसिद्धिरिति परस्परा
श्रयप्रसंगात् न च नियोगस्य क्रतुदेश्यत्वमपुरुषार्थत्वात् सुखदुःखप्राप्तिपरिहारौ तदुभयसाधनं वा पुरुषार्थः न चै
षामन्यतमो नियोगो येन पुरुषार्थतया क्रतुदेश्यः स्यात् न च स्वर्गादिसाधनतया पुरुषार्थत्वं नित्यनैमित्तिकनियो
गयोस्तदभावे न क्रतुदेश्यता वैधुर्य्यापातात् नियोगसिद्धेरेव च पुरुषार्थत्वे नियोगस्य स्वर्गसाधनताभ्युपगमानर्थक्य
प्रसंगात् ननु काम्याधिकारे फलकामिनो नियोज्यत्वात्फलं प्रतिकरणीभूतस्यैव यागस्य नियोगं प्रति विषयत्वात् न
साध्यस्य नियोगस्य फलसाधनता नित्ये तु न फलकामिनोऽधिकारः नापि फलं प्रतिकरणीभूतस्यैव यागस्य नि
योगं प्रति विषयत्वं किन्तु नियोगं प्रत्येव विषयत्वं करणत्वं चान्यथा नित्यकाम्यवैषम्यानुपपत्तेः तस्मान्नित्येषु नियो

तत्राह नियोगसिद्धिरेवेति शंकते नन्विति अयमर्थः नियोगसिद्धिस्तु सर्वत्र पुरुषार्थोऽभ ((गसिद्धिरेव पुरुषार्थ इति चेत्॥
वत्येव न च काम्येषु स्वर्गसाधनत्वाभावप्रसंगः स्वर्गकामिनस्तत्राधिकारित्वात् स्वर्गं करणस्यैव यागस्य नियोगं प्रति विषयत्वाच्च ते
न भवतु नाम तत्र स्वर्गोऽपि फलं न तावता नियोगस्यापुरुषार्थता अत एव च काम्येषु साध्यविवृद्धिरिति वृद्धाः नित्येषु न माभूत्सोऽधिकारी
नापि तादृशी विषयकरणे अपि तु कामिनि योगं प्रत्येव विषयः करणं चातो विवृद्धिरहितं नियोगमात्रं तत्र पुरुषार्थः अत एव चैवमंत
अद्वारथोभयथाप्यतिरिक्तफलकत्वे तदभावे वा नित्यकामविभागानुपपत्तेरिति तदेतन्नित्यकाम्ययोरतिरिक्तफलकत्वेऽपि प्रकार

वैषम्यं दर्शयन् दूषयति नैवमित्यादिना विश्वजिदादिसंग्रहार्थमाह कल्प्यते चेति ननु फलवत्त्वं चेत्सर्वत्र समानं किमिति नित्येऽपि विश्वजि
दादिवदेव न कल्प्यते कामः किमिति वा न काम्यमित्यत उक्तं यदकरणे चेति यत्र प्रत्यवायश्रवणं तत्र न कल्प्यमित्यर्थः नित्ये हि न फलं नि
त्यमिति निरवडलकार्थः वैषम्यान्तरं वा यदकरणे प्रत्यवायो न दृश्यते तत्काम्यं यत्र च श्रूयते नियतं निमित्तं तन्नित्यं यत्र च तच्छ्रवणेऽप्य
नियतं निमित्तं तन्नैमित्तिकमिति विभागः कर्मणा पितृलोक इति शास्त्रान्नित्यानां फलवत्ताधिगमः नित्येषु प्रवृत्तिर्लोभाद्वैवमेव
वैषम्ययुक्तमित्याह नित्यनैमित्तिकयोश्चेति ननु किमिति न प्रवृत्तिः याचनानियोगो हि नेतत्साधनं च यागः ततो हितसाधने।

नैवं नित्यकाम्यवैषम्यस्यान्यथाप्युपपन्नत्वात् तथा हि द्वयोः फलवत्त्वाविशेषेऽपि यत्र कामनानिमित्ततया श्रूयते।
कल्प्यते वा तत्काम्यं यत्र पुनर्नैवं यदकरणे च प्रत्यवायस्तदितरदिति वैषम्यात् नित्यनैमित्तिकयोश्च फलशून्यत्वे हि
तसाधनताबुद्ध्या प्रवृत्तिरेव न स्यात् ननु नियोगसिद्धेः परमपुरुषार्थत्वात्तत्साधने यागादौ हितसाधनबुद्ध्यैव प्रवृत्तिः
नियोगार्थसिद्धेः किमन्यत्प्रयोजनं सर्वविधीनामिति गुरूणां वादीति नित्यादिति चेन्नैवं तथा सति तत्रापि नित्यकाम्य
वैषम्यभंगप्रसंगात् तथा हि फलं प्रति करणीभूते यागादौ रागत एव प्रवृत्तिरिति कर्तव्येषु तु वैधी कामाधिकारे नित्ये
षुत्र करणेऽति कर्तव्यतया विधितस्तत्र प्रवृत्तिरिति वैषम्यं तवाभिमतं तच्चेदं भज्येत नियोगस्य फलरूपत्वेन तत्करणे
यागादावपि रागत एव प्रवृत्त्युपपत्तेः किंचेदं यागस्य फलं प्रति करणत्वं श्रुतिलिङ्गादिगम्यं उत नियोगानुपपत्तिगम्यं।

प्रवृत्तिः संभवतीति शंकते ननु नियोगेति वैषम्यभंगमेवोपपादयति तथा हि फलं प्रतीति यत्र (( स्यं नास्य श्रुत्यादेरदर्शनात्॥
करणे रागात् प्रवृत्तिस्तत्काम्यं यत्र पुनः करणेऽपि विधितः प्रवृत्तिस्तन्नित्यमिति हि नित्यकाम्यवैषम्यमभिमतं तन्न स्यात् नित्येष्वपि क
रणीभूतयागादिषु रागादेव प्रवृत्तेरित्यर्थः यदुक्तं पूर्वं फलं प्रति करणीभूतस्य यागस्य नियोगं प्रति विषयत्वमिति तदपि दुर्निरूपमि
त्याह किंचेदमित्यादिना किमः श्रुतिलिंगादिगम्यमित्यनेनान्वयः वस्तु किंचायं श्रुत्यादेरदर्शनादिति॥ ०-०-१॥ ०-०-१॥

यथाहि इष्टसाधनतावाक्यार्थवादिनामस्माकं स्वर्गयागयोः साध्यसाधनभावः श्रौतः यथा च भावनावाक्यार्थवादिनां भाट्टानां
वाक्यगम्यः साध्यसाधनभावः यथाहुः पार्थसारथिमिश्राः नहि तत्र स्वर्गकामस्य यागस्य वा साध्यत्वं साधनत्वं वा केनचिदुक्तं पदद्वयस
मभिव्याहारादेव तु सम्बन्धे कल्पिते तयोः असाधकं नारभ्यादिति न्यायेन कामिनः प्राधान्यं यागस्य च गुणत्वं कल्प्यत इति तस्मात्तेपि फ
लसंबंधः श्रौत इष्टसाधनरूपत्वात् विधेः तेन तथाभवद्भिरभ्युपगम्यते औपादानकत्वाद्गोकारादित्यर्थः किं तर्हि प्रकृतिप्रत्ययाभ्या
मभिधीयत इत्यत आह यागेनेति यजेतेत्यस्य यागेन नियोगेत्यर्थः सच नियोगो दैवगत्या फलसाधनमिति न स्फुरत्स्वसाध्यत्वं न तु
फलस्य फलपरत्वाभावाच्च न तद्वाक्यस्य न फलयागयोः साध्यसाधनभावइत्यर्थः अस्तु तर्हि लिंगवाक्यादीति प्रमाणमिति तत्राह लिंगादीनां

स्वर्गकामो यजेतेत्यादौ फलं प्रति करणत्वस्य प्रकृतिप्रत्ययाभ्यामप्रतीतेः यागेन फलं तिरस्कृत्य नियोगस्यैव साध्यत्व
प्रतीतेरभ्युपगमात् लिंगादीनां चानाशंकनीयत्वात् नापि द्वितीयः विकल्पासहत्वात् किं नियोगः स्वसिद्ध्यै यागस्य
वा३ फलकरणत्वं कल्पयति उत फलसिद्ध्यै स्वस्य फलकामिकृतिसाध्यत्वसिद्ध्यै न प्रथमः स्वसाधनीभूतयागानुष्ठाना
देव स्वस्य सिद्धेः न द्वितीयः स्वसिद्धौ एव फलस्यापि सिद्ध्युपपत्तेः न चरमः यागस्य स्वर्गं प्रति साधनत्वाभाव इव करण
त्वाभावेपि स्वर्गसाधनीभूतनियोगं प्रति करणत्वादेव स्वर्गकामिकृतिव्याप्यत्वोपपत्तेः ॥ चेति नियोगानुपपत्तिलस्।

गौपादानिकत्वं दूषयति नापि द्वितीय इति फलकामीति फलकामिनो यः प्रयत्नस्तेन साध्यत्वं यन्नियोगस्य तन्नोपपद्यते याग
स्य तद्वत्स्वर्गकरणत्वाभाव इत्यर्थः साधनत्वाभाव इति नहि यागस्य स्वर्गं प्रति साधनत्वं प्रमाणाभावात् नियोगो हि वाक्या
र्थस्तं प्रत्येवेतरेषां शेषत्वावगमात् व्यवहितत्वेनायोग्यत्वाच्च न कामिनस्तस्मिन्साधनताबुद्धिः कर्तृव्यापारगोचरगोचरतया
करणतानुस्यात् यथाह भवनाथो न स्वर्गकामो व्यवहितसाधनं यागादिकार्यतया बोद्धुमलमिति एतदुक्तं भवति फलं प्रति साधनत्वा
भावेपि फलसाधनीभूतनियोगसाधनत्वादेव यथा यागस्य फलकामिनस्तद्द्वारा नियोगप्रवृत्तिर्घटते तथा प्रकृतेपीति ॥ ६ ॥

वि॰सु॰ टी॰न॰ १०१

ननु यदि न यागः स्वर्गं प्रतिकरणं कथं तर्हि तत्कामिनो यागे प्रवृत्तिरनुपाये प्रवृत्त्यभावादिति शङ्कते यागादेरिति अकरणे
प्रवृत्त्यदर्शनवदसाधनेऽपि प्रवृत्तेर्दृष्टान्तादिहासाधनेऽपि प्रवृत्तिमङ्गीकुर्वतोऽकरणे प्रवृत्तिर्न विरुध्यते दर्शनस्य नियामक
त्वानङ्गीकारादिति परिहरति साधनत्वेति साधनत्वासाधनत्वाभ्यां वृत्त्युपपत्तिं ब्रुवाणस्य करण — करणत्वादित्युत्तरं ननु यत्का
मिनो यत्र नियोगस्तत्तस्य साधनमित्यपि नियमः ग्रामाद्यसाधनेऽपि भोजनादौ ग्रामकामो भुङ्क्ष्वेति नियोगेन विशेषणे ऽन्न
भोजनार्थं नियोगदर्शनात् अथ कर्तृव्यापारगोचरगोचरत्वात्करणमिति मतिस्तत्र साधनत्वरहितस्य करणत्वाङ्गीका
रे आह ते सामान्यव्यावृत्तो विशेषव्यावृत्तेरित्याह किंचेति साधकतममिति तमपा साधनविशेषत्वमुक्तमिति भावः नस्या

यागादेः फलं प्रत्यकरणत्वे तत्कामिनस्तत्र कथं प्रवृत्तिरिति चेन्न साधनत्वाभावेऽपि तत्र तस्य प्रवृत्तिरनुप-
पन्नेति तुल्यम् किंच साधनत्वाभावे तद्विशेषरूपकरणत्वमपि न स्यात् साधकतमं करणमिति पाणिनिस्मर
णात् अथ परोद्देश्यप्रवृत्तकृतिव्याप्यत्वं करणत्वं तेन साधनत्वाभावेऽपि करणता किं न स्यादिति चेन्न तर्हि नियोग-
स्यापि परोद्देश्यप्रवृत्तकृतिव्याप्यतया करणत्वप्रसंगः तस्यापि स्वर्गादिफलोद्देशेन प्रवृत्तकृतिव्याप्यत्वात् अथ सा
क्षादिति विशेषणाद्दोषः नैवमिति कर्त्तव्यस्य प्रयाजादेरङ्गजातस्य धात्वर्थेन यागेन साक्षात्कृतिव्याप्यत्वेन करणत्व
प्रसंगात् ॥ १

धनविशेषः करणमपि न स्यादुद्देश्यप्रवृत्तप्रयत्नव्याप्यं यथा छेदनोद्देश्येन प्रवृत्तप्रयत्नव्याप्यत्वं हि कुठा
गादेः करणत्वं न तु तत्तो व्याघात इति शङ्कते अथेति नहीदमतिव्यापकं स्वर्गं प्रत्यकरणस्यापि नियोगस्य स्वर्गोद्देशेन पुरुषप्रयत्नव्याप्यत
याकरणत्वप्रसंगादिति दूषयति तर्हीति आपादयत्विदं ननु परोद्देश्यकृत्या साक्षाद्व्याप्यत्वं करणत्वं तथा च न नियोगे तिव्याप्तिः त
स्य भावार्थव्यवधानादिति शङ्कते अथेति तर्हीति कर्त्तव्यतास्वपि भावार्थस्य साक्षात्कृतिव्याप्यतया यागवदेव करणत्वप्रसं
गादृत्यतिव्याप्त्या दूषयति नैवमिति ॥

राम॰ १०१

ननु साधनत्वव्यावृत्तौ करणत्वव्यावृत्तिरित्युक्तं न त्वपरिहृतं शंकते उभयोरिति प्रयाजादेः यद्यागस्यैव स्वर्गं प्रति साधनत्वा विशेषे प्रयाजादेरिति कर्तव्यत्वमितरस्य करणत्वमिति प्रसिद्धो विभागो न स्यात् अतः करणेतिकर्तव्यविभागलोभादेवासाधनस्यैव यागस्य स्वर्गं प्रति करणत्वं स्वीकर्तव्यमित्यर्थः परिहरति न तावदिति यथा हि नियोगं प्रति साधनत्वाविशेषेप्ययं विभागस्तथा स्वर्गं प्रतीति भावः यश्च कामाधिकारे करणेति कर्तव्यताविभागो गुरुमतानुसारिभिः परिकल्प्यते तमपि प्रसंगाद्दूषयति न च कारणांश इति अथवा साधनत्वाविशेषेपि कामाधिकारे करणत्वप्रयोजकमाशंक्यानेन दूष्यते तत्र हेतुः सेतिक॰

उभयोः साधनत्वाविशेषे करणेति कर्तव्यतालक्षणो विभागो न सिध्येदिति चेन्न तावपि नियोगसाधने यागे तदिति कर्तव्येषु च साधनत्वाविशेषाद्विभागानुपपत्तेस्तुल्यत्वात् न च करणांशे रागतः प्रवृत्तिरितिकर्तव्येषु तु विधित इति विभागो युक्तः सेतिकर्तव्यताकस्यैव करणतया तत्र रागतः प्रवृत्तेरवर्जनीयत्वात् तथा लोके दृष्टत्वात् एतेन श्येनाग्नीषोमीयवैषम्यमप्यपास्तं श्येनवदग्नीषोमीयेपि रागतः प्रवृत्तेः समानत्वात् न च प्रथमतो नियोगेनैव संबद्धेतिकर्तव्यता पश्चात्तत्प्रयुक्ता फलेन संबध्यते ॥

नेष्यत इति यथा ह्युद्यमननिपातनव्यापारविशिष्टस्यैव कुठारस्य करणत्वं न तु केवलस्य तथा सेतिकर्तव्यताकं करणं तत्र चेद्रागतः प्रवृत्तिस्तर्हीतिकर्तव्यतास्वपि रागत एव सेति न विभाग इत्यर्थः अथवा इति कर्तव्यतासाध्योपकारसापेक्षत्वात्करणस्य तदपेक्षेष्वपि रागतः प्रवृत्तिरित्यर्थः तथा नित्ये विभागानुपपत्तिरित्यपि द्रष्टव्यं करणेतिकर्तव्यतयोः रागतः प्रवृत्तिसाम्यापादनेन श्येनाग्नीषोमीययागयोरपि वैषम्यमपास्तमित्याह एतेनेति एतेन तस्यैव विवरणं श्येनवदिति ननु नेति कर्तव्यतासु रागतः प्रवृत्तिः प्रथमत एव नियोगेन संबंधात्तस्य च रागविषयत्वाभावात् यागस्य तु नैवं प्रथमतः फलसंबंधित्वात् फलस्य च रागविषयतया तत्करणेपि रागत एव प्र

२
वि॰सु॰
टी॰न॰
१०२

हेतुमाह ग्राहकेति नप्रथमतः फलेनयागस्यसंबंधः अप्रकरणित्वात्फलस्याप्रकरणिनाचेतरेणासंबंधत्वात् तेनेतिकर्त्तव्य
तावदेवयागोपिनियोगशेषतयाग्राहकेणगृहीतः पश्चात्तमेवप्रधानान्वयंनिर्वोढुं तद्द्वारेणपरस्परान्वयःसचदृष्टतोभवतीतिपा
ष्ठिकस्तस्याचरमायायागस्वर्गयोरप्यन्वयइतिभवतामंगीकारइत्यर्थः किंचविध्याक्षेपलक्षणोपादानप्रमाणात्फलकामित्व
तिव्याप्यतानुपपत्तिलक्षणान्नियोगफलयोःसंबंधोभिप्रेयते आक्षेपश्चविषयनियोज्यविशिष्टनियोगप्रतीत्याःतोपीतरप्राक
रणिकवन्नियोगेनैवविषयभूतयागस्यप्रथमंसंबंधोवक्तव्यः ननुफलेनेत्याह फलप्रतीतीति तस्मादुभयत्ररागतोवाविधितोवा

यागस्यतुफलंप्रतिकरणीभूतस्यैवनियोगेनपश्चात्संबंधइतिवैषम्यं ग्राहकग्रहणदशायांप्राकरणिकसकलप
दार्थानामविशेषेणनियोगसंबद्धानांतद्द्वारेणपरस्पर संबंधस्यपाष्ठिकस्यांगीकारात् फलंप्रतिकरणत्व
स्यविध्याक्षेपलक्षणोपादानाधीनतयातत्प्रतीतेर्विशिष्टनियोगप्रतीत्युत्तरकालीनत्वात् कथंचैवंसतिश्येनेना
भिचरन्यजेतेतिविधौजाग्रतिरागतःप्रवृत्तौनिषेधानुप्रवेशादधर्मतास्यात् नहिविधिसंस्पृष्टेनिषेधः प्रवर्त
मानोनर्थतांबोधयितुमीष्टे तथासतिषोडशिग्रहणस्यापिनातिरात्रेषोडशिनंगृह्णातीति निषेधादनर्थत्वप्रसं
गात् उक्तंहिभट्टाचार्यैः यद्यपिस्याद्विधिस्पृष्टेनिषेधोनैवतादृशः विज्ञायतेह्यनर्थत्वंषोडशिग्रहणादिवदिति।

प्रवृत्तिःसमानेत्यर्थः ननुयद्यप्युभयत्ररागतःप्रवृत्तिःसमानातथापिनहिंस्यात्सर्वाभूतानीतिनिषेधानुप्रवेशादधर्मताश्येन
यागस्येतरस्यनतथातद्भावादितिवैषम्यमितिनेत्याह कथंचैवंसतीतिरागतःप्रवृत्तिस्तावदुभयत्रसमानेत्यावेदितं तथास
तिविधिस्पर्शास्पर्शाभ्यांवैषम्यंवक्तव्यंनचैतदपिश्येनेपिविधेर्विद्यमानत्वादितिभावः एतदेवषोडशिप्रतिवंद्यासमर्थयते न
हिविधिसंस्पृष्टेपिचेन्निषेधादनर्थत्वंतर्हि तिरात्रेषोडशिनंगृह्णातीतिविहितस्यापिषोडशिग्रहणस्यनातिरात्रेषोडशिनंगृह्णा
विधिसंस्पृष्टइत्यादिना १॥

राम॰
१०२

न चैतद्युक्तं आह हिंसाया अपि स्याद्विधिस्पृष्टे निषेधो नैव तादृशं विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवदित्यर्थः व्यापारद्वैविध्यं वि-
धेर्दर्शयन् श्येनयागस्याधर्मतामुपपादयति पूर्ववादी नन्वित्यादिना तदेतदग्नीषोमीयहिंसायामपि समानमिति परिहरति।
नोक्तोत्तरत्वादिति प्रकारान्तरेणाधर्मतामाशंकते नन्विति अहीनोऽहर्गण निर्वर्त्यः क्रतुविशेषः अन्हः स्वः क्रतावितिस-
सूत्रे गम्यमाने अहः शब्दात्खप्रत्ययविधानात्परिहरति मैवमिति निषिद्धत्वानिर्णये प्रायश्चित्तानिर्णयात् नहि खानस्य
च नैमित्तिकत्वेनाप्युपपत्तेः निषिद्धत्वविधानात्प्रायश्चित्तविधानाच्च निषिद्धत्वे परस्पराश्रयमिति भावः ननु व्यपोहनी

ननु विधेर्द्विविधो व्यापारो भावार्थफलयोः साध्यसाधनसंबंधबोधो भावार्थानुष्ठानबोधश्चेति तत्रैव चा-
नुष्ठानबोधो यत्र भावार्थेऽन्यतो न प्रवृत्तिः श्येनादौ च फलोपायत्वेऽधिगते रागत एव प्रवृत्त्युपपत्तेर्नानुष्ठा-
पकत्वं तत एव निषेधप्रवेशाच्छ्येनादेरनर्थत्वमिति चेन्न उक्तोत्तरत्वात् उक्तं हि नैमित्तिकत्वेऽप्येवं करणत्वात्तत्र
रागतः प्रवृत्तावपि तिकर्तव्यापि तत एव प्रवृत्तौ श्येनवदग्नीषोमीयस्यापीतिकर्तव्यस्यानर्थताप्रसक्त्येति।
नन्वभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहतीति प्रायश्चित्तविधानादनर्थता निश्चीयत इति चेन्मैवं नैमित्तिक-
त्वेनाप्यस्योपपत्तेः यथा हि वर्णिनां हि वधो यत्र तत्र साध्यनृतं वदेदित्यनृतवदनविधानेऽनंतरं तत्पावनाय नि-
र्वाप्यश्चरुः सारस्वतो द्विजैरिति नैमित्तिकत्वेन सारस्वतश्चरुर्निर्वाप्यो विधीयते न त्वनृतवदनजनितपापनिव-
र्हणाय॥

ति दोषनिवर्हणश्रवणात्प्रायश्चित्तत्वमिति तत्राह यथा हि वर्णिनामिति यत्र यस्मिन्समये ब्राह्मणादीनां व-
धः प्राप्नोति तत्र तदा साध्यनृतं वदेत् अनृतवदनमवदनस्याप्युपलक्षणं ततश्च यदि वदनमात्राद्वधः प्राप्नोति तदा न वदेत् यदा
तु सत्यवदनात्तदानृतं वदेदित्यर्थः तत्पावनायेति तच्छब्दार्थं द्विजैस्त्रैवर्णिकैः सारस्वतः सरस्वतीदेवताकश्चरुर्निर्वाप्यः नि-
र्वपणेन यागपर्यन्तं लक्ष्यते ननु तत्पावनायेति श्रवणात्प्रायश्चित्तत्वं नैव किन्नस्यादित्यत आह नत्वनृतवदनेति॥ ॥

तत्र हेतुः अनृतवदनेति कामतः प्राप्तं ह्यनृतवदनं नानृतं वदेदिति निषिद्धं निषिद्धानुष्ठाने च प्रायश्चित्तं प्रकृते तु विधितः प्रवृत्तेर्न प्रायश्चित्तं युक्तं निषिद्धानुष्ठानशंकाभावादित्यर्थः एवं च विषयविभागेन प्रायश्चित्तव्यवस्थापनमपि केश्चित्क्रियमाणमयुक्तमित्यनेन विचारमुपसंहरति तदेवमिति यच्च प्राधान्यसमर्थनं कृतं स्वर्गादिसाधनत्वे पि तद्दूषयति न चेति पूर्वपक्ष्याशयमनूद्य दूषयति न वेति गर्भदासस्वामिनोश्चेन ननया स्वस्वप्रयोजनोद्देशेन प्रवृत्तिर्युक्ता अत्र तु नियोगस्य स्वामिस्थानीयतानयुक्ता अवेतनत्वात्

अनृतवदने कामतो प्रवृत्ते विधित एव तत्र प्रवृत्त्यंगीकारात् एवमत्रापि तदेवं नित्यकाम्यवैषम्यस्य वक्तुमशक्यत्वान्नित्यकाम्ये पि नियोगस्य फलसाधनत्वकल्पनातिः प्रामाणिका पुरुषार्थत्वे नियोगस्य स्वर्गसाधनतास्युपगमानर्थकतापसंगात् न च स्वर्गादिसाधनत्वे नियोगस्य प्राधान्यमपि संभवति। स्वर्गादिसुखशेषत्वात् न च स्वानुकूलनियोज्यसिद्धये स्वर्गादिकं साधयतो नियोगस्य स्वामिवत्प्राधान्यानुपघातः दृष्टान्तवैषम्यात् तथाहि द्वौहि तत्र स्वामिभृतयोः प्रयत्नौ स्वार्थोद्देशेन प्रवृत्तौ परस्परमुपकुर्वाते ननत्वेह नियोगस्य चेतनता येन स्वकीयप्रयत्नेन स्वर्गमात्मार्थतया आक्षिपेत् प्रस्तुत गर्भदासस्थानीयो नियोज्यः स एव स्वर्गाय प्रवृत्तो नियोगमेव स्वर्गशेषतयास्वीकुर्यात् न च स्वर्गादिसुखस्यान्यार्थतास्वभाववैपरीत्यापत्तेः यदर्थं सर्वं यच्च नान्यार्थं तत्सुखमिति हि सुखस्य लक्षणमाचक्षते तत्कथमन्यशेषता स्वर्गादिसुखस्य भवेत् न चालौकिकत्वेपि नियोगस्य यूपाहवनीयादिवत्प्रदानतस्स

अतएव न प्रवृत्तिरपीत्यर्थः नकेवलं नियोगस्य प्राधान्याभावः प्रत्युत स्वर्गप्रति शेषत्व (समभिव्याहारात्संबंधग्रहणम्॥

मेवेत्याह प्रत्युतेति ननु कथमिदमवधार्यते स्वर्गशेषो नियोगः ननु विपरीतमिति तत्राह न चेति अथवा पूर्वमचेतनत्वान्नियोगस्य न स्वर्गस्य न शेषत्वमित्युक्तं इदानीं स्वभावविरोधादपि न तदित्याह न च स्वर्गादीति यच्च नान्यार्थं तत्सुखमित्युक्ते दुःखेपि स्यादत उक्तं यदर्थमिति स्वर्गादिसुखस्यान्यशेषत्वं यच्च नान्यार्थमिति लक्षणविरुद्धमित्यर्थः यत्तु यूपाहवनीयादिदृष्टान्तं तदपि वैषम्यं दर्शयन् परि

मत्यनुमानमेव श्लोके नदर्शयति विवादाध्यासिता इति लौकिकलिङ्गादौ सिद्धसाधनतापरिहाराय विवादपदं वैदिकलिङ्गादयइ
त्यर्थः क्रियारूपं कार्यं क्रियाकार्य्ये तदभिधायिन इत्यर्थः नियोगेनार्थान्तरता निरासाय क्रियाग्रहणं नचलौकिकलिङ्गादित्वमुपा
धिः लौकिकपदवैयर्थ्यं नपक्षेतरत्वात् नन्वेवमपित्वत्पक्षे किं प्रमाणं नतावदिदमेव प्रतिरोधमात्रतयास्वपक्षासाधनत्वात् नैनत्सावं
बाधकत्वेन प्रतिरोधकत्वासिद्धेः समबलेवोधितसाध्यविपर्ययत्वं नचात्र समबलत्वं अधिकबलत्वादितरस्य दुर्बलत्वात्तदाह इष्टसा
धनेति वादिनो वेदान्तिनइ निवेद्द्वितीयासाध्यवैकल्यमेव विवृणोति लौकिकेति एतत्क्रियातिरिक्तकार्याभिधायि — त्वेनामानयेत्या

तत्रयूपाहवनीयादेर्यूपतस्तीत्यादिप्रसिद्धपदसमभिव्याहारान्यथानुपपत्तिगम्यत्ववन्नियोगस्यार्थापत्तिगम्यत्वा
नङ्गीकारात् अङ्गीकारेवापूर्वत्वव्याघातात् वयन्तु लिङ्गादेः क्रियातिरिक्तकार्याभिधायित्वानुमानं तत्प्रत्यनुमानपराहत
त्वादसाधनं तथाहि विवादाध्यासिताः शब्दाः क्रियाकार्याभिधायिनः कार्यप्रत्ययहेतुत्वात् आनयेत्यादिशब्दवत् १२ इष्ट
साधनवादिनो वेदान्तिनः प्रतिसाध्यविकल्पत्वाच्च लौकिकलिङ्गादिशब्दानामपि श्रेयःसाधनबोधकत्वाभ्युपग
मात् व्यापकानुपलब्धिपराहतत्वाच्च तथाहि तदभिधायकत्वं तत्र संगतिग्रहणेन व्याप्तं तच्च मानान्तरानधि
गतात् पूर्वाद्यावर्तमाने लिङ्गादीनां तदभिधायकतां व्यावर्तयति नच क्रियातिरिक्तकार्यानभिधाने स्वर्गका
मोयजेतेत्यादिशास्त्रस्याप्रामाण्यप्रसंगः क्रियाया एवापूर्वावान्तरव्यापाराया परमेश्वरप्रसादावान्तरव्यापाराया

दि परं हि पूर्ववादिना दृष्टानि तं तच्च तत्रापि कार्याभिधायित्वमिष्टसाधनताभिधायित्वांगी(वा)फलसाधनत्वोपपत्तेः प्रदर्शि
कारान्मयेत्यर्थः इदं चासिद्धेरप्युपलक्षणं दूषणान्तरं चाह व्यापकेति व्यापकं विवेचयति तदनुपलब्धिमिहोपलंभयति तथाहि
त्यादिना यद्यद्विषयस्याभिधायकं तत्तस्यगृहीतसंगतिकमिति व्याप्तं नच प्रमाणान्तरानधिगते पूर्वे तत्संभवइतिव्यापकव्यावृ
त्या व्याप्यव्यावृत्तिरग्निव्यावृत्त्येव धूमव्यावृत्तिरित्यर्थः यत्तु तेन विपक्षे बाधकः तर्केउक्तस्तमपि प्रशिथिलमूलमुन्मूलयति नच क्रि

वादार्थसंग्रहं तस्य समन्वयोपयोगमाह तदेवमित्यादिना हितसाधनतामचलं अपदावच्छेने विधिबोधकवाक्यमपि परमात्मतत्त्वबो
धविधौ सुतरां परमात्मनि शिरोमणिवदखंडबोधकत्वं युक्तमाक्षिपति ननु कथमित्यादिना अखंडार्थत्वस्यासंभवलक्षणानि दूषयति
किमिदमित्यादिना खंडशब्दस्य च विशेषभेदं चार्थमादाय प्रथमद्वितीययोः प्रवृत्तिस्तृतीयचतुर्थयोः स्वविषयाभावं तेषामेवेत्यप
र्यायशब्दानामेवेत्यर्थः पंचमस्तु खंडशब्दस्य संसृष्टमर्थमादाय निर्विशेषाणामप्यंत्यविशेषाणां भिन्नत्वं परैरंगीकारात् नाद्यः
द्वितीयशंकरः नान्वय्यं अपि हितेषु लक्षितेषु वा संभवति यथा गंगायां याग्दसीति यथा वा गंगायां घोष इति तत्तु भयमपि प्रकारं



तदेवं विधिवाक्यानामपि सिद्धार्थबोधकत्वाद्विधिसंस्पर्शविधुराणां सत्यज्ञानादिवाक्यानामखंडैकरसब्रह्मल
क्षणसिद्धार्थबोधकत्वं सुतरां सिद्धमिति सिद्धम् १० ननु कथं वेदान्तानामखंडार्थत्वं तस्य निर्वक्तुमशक्यत्वात्
तत्र प्रमाणासंभवाच्च तथाहि किमिदमखंडार्थत्वं किं निर्विशेषवस्तुपरत्वमुत निर्भेदार्थनिष्ठत्वमाहोस्वित्पर्या
यशब्दानां प्रातिपदिकार्थमात्रपर्यवसायित्वं अथवा तेषामेवैकप्रातिपदिकार्थमात्रपर्यवसायित्वं संसर्गागो
चरप्रमाजनकत्वं वा नाद्यः विकल्पासहत्वात् तथाहि पदानां निर्विशेषवस्तुपर्यवसायित्वमभिधायकतया ल
क्षकतया वा स्यात् न प्रथमः तस्यात्यन्तमप्रसिद्धतया संबंधाग्रहणेन पदानां तत्पर्यवसायित्वासंभवेन लक्षणस्या
संभवित्वप्रसंगात् नापि द्वितीयः अप्रसिद्धत्वादेवाभिधेयाविनाभावस्य लक्षणाहेतोरसंभवेन प्राचीनदोषानुषंगात्

विकल्प्य दूषयति तस्यात्यन्तमिति अंत्यविशेषाणां भवद्भिरनंगीकारादिति भावः लक्षणापक्षं दूषयति नापीति अभिधेयाविना
भूतं हि लक्ष्यं दृष्टं यथा गंगायां घोषः प्रतिवसतीत्यत्र गंगा विनाभूतं तीरं गंगापदेन लक्ष्यते न तु विनाभूतं अविनाभावश्चासंभूय
संबंधदर्शनमात्रं मंचाः क्रोशन्तीत्यत्र मंचपुरुषयोर्मुख्याविनाभावाभावेपि लक्षणादर्शनात् नचात्यन्ताप्रसिद्धस्य निर्विशेष
वस्तुनो विधेयाविनाभावः सम्भवतीति लक्षणासंभवाल्लक्षणासंभव इत्यर्थः ॥

नन्वभिधेयासंबद्धमपि कंचिद्वाक्यं दृष्टं यथा कश्चित् किमस्य गृहे भोक्तव्यमिति केनचित् पृष्टः तन्निवारयन्नाह विषं भुंक्ष्वेति नचात्र ल
क्ष्यमाणे तद्गृहे निष्टभोजननिवृत्तेः विषभक्षणस्य च संबंधोस्ति अथ च लक्ष्यते तत्कस्य हेतोर्वाक्यप्रामाण्यानुपपत्तेरेवमत्रापि समा
दिवाक्यप्रामाण्यानुपपत्तेरेव किमिति न लक्षणेत्यत आह नचाभिधेयेति न हेतुः अन्यत्राप्रसिद्धेति अनुपपत्तिरपि द्वितीयास्य लक्ष
णाप्रवर्त्तयति नत्वयोग्येर्थे नरशृंगखपुष्पादेरपि लक्षणाप्रसंगात् तस्मात् प्रामाण्यानुपपत्तिरपि अन्यपरतायामेव बीजं न त्वखंडार्थ
तायामिति भावः द्वितीयं दूषयति अर्थनिर्भेदत्वस्त्विति निर्भेदत्वं नाम भेदाभावविशिष्टत्वमिति प्रथमपक्षं दूषयति नाद्य इति यथा

नचाभिधेयाविनाभावं विना पिबरसमम्बुहरे इत्यादिगिरामिव वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाक्षेपिका अन्यत्राप्रसि
द्धत्वेन गगनारविन्दादेरिव लक्ष्यत्वानुपपत्तेः अथ निर्भेदवस्तुपरत्वं तदपि न निर्भेदत्वस्यानिरुक्तेः तथाहि निर्भेद
त्वं नाम किं भेदाभावविशिष्टत्वमुत भेदाभावोपलक्षितत्वं नाद्यः तत्परत्वे वाक्यस्य निर्घटं भूतलमितिवत् संसृष्टार्थ
त्वप्रसंगात् न द्वितीयः तत्रापि संसृष्टार्थत्वस्यानतिवृत्तेः तथा भेदस्य योभावस्तेनोपलक्षणेनोपलक्षितवस्तुपर
त्वे कथं न संसृष्टार्थता वस्तुमात्रमेव तत्र प्रतिपाद्यं भेदाभावस्तु द्वारमिति चेत् तथापि नाखंडार्थता उपलक्ष्य
माणस्य स्वेतरेभ्यो व्यावृत्तत्वेन प्रतीतावखंडार्थत्वासंभवात् अप्रतीतौ चानुपलक्षकत्वादेवोपलक्षणस्य वै

हि निर्घटं भूतलमिति घटाभावविशिष्टभूतलबोधकस्य नाखंडार्थत्वमेवं तत्रापीत्यर्थः भेदाभावोप ९ यर्थ्यप्रसंगात् ॥
लक्षितत्वपक्षं दूषयति न द्वितीय इति तत्रापि वक्तव्यं किं भेदाभावोपलक्षितविशिष्टमुत वस्तुमात्रमित्याद्ये प्राह भेदस्य योभाव
इत्यादिना द्वितीयं शंकते वस्तुमात्रमेवेति दूषयति तथापीति भेदाभावेन यद्वस्तूपलक्ष्यते तत्किमितरेभ्यो व्यावृत्तं प्रतीयते न
वा प्रथमे प्राह उपलक्ष्य माणस्येति व्यावृत्ति विशिष्टस्याखंडत्वाभावादित्यर्थः द्वितीयं दूषयति अप्रतीताविति कदाचित्क
व्यावर्त्तकमुपलक्षणं नाम तस्य चाव्यावर्त्तकत्वं व्याहतमित्यर्थः ॥

चि॰सु॰ टी॰न॰ १०५

अपर्य्यायशब्दानां प्रातिपदिकार्थमात्रनिष्ठत्वमिति तृतीयं दूषयति नापितृतीय इति यस्य हि लक्षणवाक्यं लक्ष्यप्रातिपदिकार्थमा-
त्रपर्य्यवसितमितिमतं तस्येमे लक्षणवाक्ये लक्ष्यजलानलस्वरूपपर्य्यवसिते तथापि नाखंडार्थे नाभिन्नत्वाल्लक्ष्ययोरित्यर्थः अथवा
पयःपावकशब्दयोरपि शीतोष्णस्पर्शवत्तावेवार्थौ जातिमात्रपरत्वायोगात् तथा च शीतोष्णस्पर्शवच्छब्दयोः पयःपावकशब्दयो-
श्च प्रातिपदिकार्थमात्रपरत्वमस्ति न चात्राखंडार्थतेत्यर्थः अपर्य्यायशब्दानामेकप्रातिपदिकार्थत्वमिति चतुर्थपक्षं दूषयति नापि
चतुर्थ इति यद्येकमेव वस्तु बुबोधयिषितं तदैकेनैव बुद्धमिति पदान्तरप्रयोगो व्यर्थ एव स्यात् न च पदमात्रं वाक्यमस्ति तस्माद्

नापि तृतीयः शीतोष्णस्पर्शवन्तौ पयःपावकावित्यत्रापर्य्यायशब्दानां प्रातिपदिकार्थमात्रपर्य्यवसायित्वेप्य-
खंडार्थत्वादर्शनात् नापि चतुर्थः तथा सत्येकेनैव तत्प्रतिपत्तेः पदांतरप्रयोगस्य वैयर्थ्येन लक्षणस्यासंभ-
वित्वापातात् व्यवच्छेद्यभेदाद्वैयर्थ्यमिति चेन्न तदनिरुक्तेः तथाहि किं व्यवच्छेद्यानां व्यावृत्तयः पदैः
प्रतिपाद्यंते अथ वा तद्विशिष्टमाहोस्वित्तदुपलक्षितं स्वरूपमात्रं वा तत्र न प्रथमद्वितीयौ तथा सति संसृ-
ष्टार्थत्वेनाखंडार्थत्वानुपपत्तेः नापि तृतीयः तत्राप्यन्यतो व्यावृत्तस्य प्रतिपादने प्राचीनदोषानुषंगात् स्व-
रूपमात्रप्रतिपादने च पदांतरप्रयोगवैयर्थ्यस्य दुर्निवारत्वात् नापि पंचमः तथात्वस्यान्यतादृक्चरत्वेन लक्ष-
णासंभवित्वात् ॥ ६ ॥

संभविलक्षणमित्यर्थः यद्यप्येकमेव लिलक्षयिषितं तथापि व्यवच्छेद्या बहवः संति असमर्थ
जाड्यादयः न चैकपदमात्रात्सर्वेषां व्यवच्छेदः तदर्थमात्रेण तेषां विरोधाभावात् अतो न पदांतरवैयर्थ्यमिति शंकते व्यवच्छेद्ये-
ति दूषयति न तदनिरुक्तेरित्यादिना तद्व्यवच्छेदमात्रप्रतिपादनं व्यवच्छेदविशिष्टवस्तुप्रतिपादनं च संसृष्टार्थतया अखंडार्थता-
विरोधीति दूषयित्वा व्यवच्छेदोपलक्षितवस्तुप्रतिपादनमिति तृतीयं पक्षं दूषयति नापि तृतीय इति संसर्गागोचरप्रमाजनकत्वमिति
पंचमपक्षं दूषयति नापीति सर्वत्र हि वाक्यार्थस्य पदार्थसंसर्गतया वा संसृष्टपदार्थतया वा संसर्गग्राहि वाक्यमित्यसंभविलक्षण-

सिद्धान्त्यभिमतसंभवस्थलमाशंक्यते ननु प्रकृष्टेति अत्र हि चन्द्रप्रातिपदिकार्थमात्रं पृष्टं एतद्वाक्यविषयः न पुनः प्रकर्षादिसंसर्गोऽस्ति।
स्यादनुपपत्तिस्तत्त्वाहेति तदेतद्दूषयति मैवमिति न हि तत्र व्याहृतिर्येन तच्छब्दव्यवहारो वा लक्षणार्थः उभयथापि संसृष्टार्थपरत्वान्
निष्कर्षितस्यादिप्रकर्षादिसंसर्गपरताभावेऽपि भवत्येव विधान्तरेण संसृष्टार्थत्वमित्यर्थः उदाहरणान्तरमाशंकते ननु सोयं देवद
त्त इति देवदत्तैकत्वस्यैकैकपदादपि सिद्धेर्वाक्यवैयर्थ्यमाशंक्योक्तं भेदभ्रमव्युदासेनेति यद्यपि लक्षणवाक्यमिदं न भवति तथा
पि महावाक्याखण्डार्थत्वसंभावनायामवत्येव भूमिरितीदमाशंकितं यदि ह्युभयोरपि लक्षणया देवदत्तमात्रपर्यवसितमिदं सा

ननु प्रकृष्टप्रकाशश्चन्द्र इत्यादिलक्षणवाक्ये शुद्धसंसर्गागोचरप्रमितिजनकत्वमिति चेन्मैवं लक्षणवाक्यैरपि
लक्ष्यस्य सजातीयविजातीयेभ्यो व्यावृत्तत्वेन प्रतिपादनात् तच्छब्दैर्व्यवहर्तव्यत्वेन प्रतिपादनाद्वा लक्षणवाक्याना
मपि संसृष्टार्थत्वानतिवृत्तेः ननु सोयं देवदत्त इत्यादिषु देवदत्तगतभेदभ्रमव्युदासेन तत्स्वरूपमात्रपर्यवसायित्वम
पर्यायशब्दानां दृष्टमिति चेन्मैवं तत्रापि परोक्षदेशकालोपलक्षितस्यैतद्देशकालविशिष्टत्वप्रतिपादकतया
संसृष्टार्थत्वानतिवृत्तेः तावतैव च भेदभ्रमव्युदासादुभयपदलक्षणाभ्युपगमे गौरवप्रसंगाच्च तदेवं नाखण्डार्थत्व
निरुक्तिः नापि तत्र प्रमाणं प्रकृष्टप्रकाशः इति वाक्यार्थश्चन्द्रप्रातिपदिकमात्रार्थस्तन्मात्रप्रश्नोत्तरार्थत्वात् यन्नैवं तन्नैवं यथा
(१ यो वाक्यान्तरार्थ इति व्यतिरेक्यनुमानमस्तीति चेन्मै

त्वाखण्डार्थत्वं तत्त्वे तदस्मिन्नेतद्देशकालसंसर्गप्रतिपादनपरत्वात् तत्र
दस्यैव केवलं लक्षणाश्रयणात् तावन्मात्राद्देवभेदभ्रान्तिनिवृत्तेः विनाकारणं लक्षणाप्रतिप्रसंगात्तदेतदाह मैवं तत्रापीति गौरवप्रसं
गादिति प्रथमं मुख्यार्थप्रतीतिस्तत्परित्यज्य तत्संबन्धादर्थान्तरप्रतीतिश्चेति बहुकल्प्यमित्यर्थः एतेनार्थादेकत्वप्रतिपादनाद्वा संसा
सादेकत्वप्रतिपादनमित्यपि परास्तम् लक्षणागौरवादेव यदत्र न्यायरत्नदीपावल्यामनुमानमुक्तं तदनुवदति प्रकृष्टेत्यादिनासि
द्धसाधनतानिवृत्त्यर्थं मात्रग्रहणं संसृष्टपदार्थानां वाक्यार्थत्वेन चन्द्रपदार्थेऽपि तत्स्वीकारात् तन्मात्रप्रश्नस्योत्तरवाक्यं तदर्थत्वादित्यर्थः

मा

अत्र साध्यं चंद्रप्रातिपदिकार्थः क्वचिदप्रसिद्धो न वेति विकल्प्य दूषयति तथाहीत्यादिना ननु माभूत्केवलव्यतिरेकिणा अन्वयव्यतिरे-
किणा तु भवतु किमेतावतेत्यत आह अन्वयेति कति वराटका इति प्रश्नोत्तरार्थे वराटकसंख्याविशेषे वराटकप्रातिपदिकार्थत्वेन ना-
स्तिसंख्यासंबंधपरत्वाद्वाक्यस्येत्यर्थः वराटकः कपर्दकः न च तत्प्रातिपदिकप्रश्नोत्तरार्थत्वोपाधौ व्याप्तिः क्वचिदपि प्रातिपदिकमा-
त्रनिष्ठवाक्यासंप्रतिपत्तेः अन्यथा तस्यैव दृष्टांततोपपत्तौ एतत्प्रसाधनवैयर्थ्यापातादिति अत एव चंद्रप्रातिपदिकप्रश्नोत्तरार्थ-
त्वोपाधावपि तव्याप्तिरसिद्धेरेव आनंदबोधाचार्यास्तु मानमुद्भाव्य दूषयति विमतमित्यादिना विज्ञानादिवाक्यमित्यर्थः उक्तप्रका-



तथाहि चंद्रप्रातिपदिकमात्रार्थोऽयमप्रसिद्धो न वा आद्ये तत्र हेतोर्दृष्टान्तावन्वयव्यतिरेकितया केवलव्यतिरेकित्वव्याघा-
तः अदृष्टान्तो तु सत्यपि सपक्षे तत्र हेतोरसाधारणानैकान्तिकता द्वितीये पुनरप्रसिद्धविशेषणत्वेनैव अन्वयव्यतिरेकितायां च
योऽयमप्रश्नोत्तरार्थः स तत्प्रातिपदिकमात्रार्थ इति व्याप्तिरभ्युपेया तथा च त्वत्करे कति वराटका इति प्रश्नस्य पाणौ पंच व-
राटका इति प्रतिवचने व्यभिचारः न च विमतमखंडार्थं लक्षणवाक्यत्वात् पृथुबुध्नोदराकारः कुंभ इति वाक्यवदित्य-
नुमानं मानलक्षणवाक्यानामप्युक्तप्रकारेण संसृष्टार्थपरतया दृष्टांतस्य साध्यविकलत्वात् नहि एवं लक्षणप्रमाण-
योरभावात्त्वाखंडार्थत्वं शब्दानां विवादाध्यासितं पदार्थसंसर्गप्रतीतिजनकं वाक्यत्वाद्गामानयेत्यादिवाक्यवत्
न च जरद्गवादिवाक्ये व्यभिचारः तस्य वाक्याभासत्वात् आकांक्षासन्निधियोग्यतावंति पदानि वाक्यमिति हि वाक्यवि-

रेणेति इतरव्यावृत्तेर्व्यवहारस्य वा बोधनादित्यर्थः स्वपक्षे चानुमानमाह पूर्ववादी विवादाध्यासितमिति सम्यग्ज्ञानादिवाक्यमित्यर्थः
प्रतीतिः प्रमितिः प्रयोगः दृश्यते च संसृष्टपदार्थस्य पदार्थसंसर्गस्य वा पक्षीकरणे बाधस्तदितरस्य त्वप्रसिद्धेराश्रयासिद्धिरित्यपि द्र-
ष्टव्यं जरद्गवेति जरद्गवः कंबलपादुकाभ्यां द्वारि स्थितो गायति मद्रकाणि तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य
कोऽर्घ इति श्लोकार्थादावित्यर्थः वाक्याभासतामेव दर्शयति आकांक्षेति न तत्र योग्यतास्तीत्यर्थः ॥ ॥ ६ ॥ ॥

ननु खंडितुमित्यत्र वाक्यत्वमस्ति न च साध्यमस्ति अनेकपदार्थाभावेन संसर्गाभावादतो व्यभिचार इति तत्राह खंडितुमितीति अ
त्र समाधानस्तु पक्रमते अत्रेति संसर्गेति गिरामपर्यायशब्दानां यासंसर्गो विषयत्वेन सम्बन्धी हेतुनाऽयमखंडार्थतो काअ
पर्यायाणामेव शब्दानां तत्प्रातिपदिकार्थेनान्वेति संसर्गराहित्येन लक्षितमेकत्वपरामृशति एकप्रातिपदिकार्थेनेति लक्षणसं
ग्राहकश्लोकयोजना अनेन च चतुर्थपञ्चमपक्षोपपत्तिर्गृहीतो श्लोकं विवृणोति अपर्यायेति हस्तः करइत्यादौ व्यभिचारवारणाय।

न च खंडितुमित्यादौ व्यभिचारः तस्यापि लक्षणवाक्यत्वेन लक्ष्यस्य सजातीयविजातीयेभ्यो व्यावृत्तिप्रतिपादनपरत्वेना
खंडार्थत्वाभावात् न च विपक्षे बाधकतर्काभावः संसर्गप्रतीत्यजनकत्वे वाक्यत्वाभावप्रसंगस्यैव बाधकत्वात् तदेवं नाखंडा
र्थता वेदान्तानामिति अत्राभिदध्महे नतावल्लक्षणासंभवो यतः संसर्गासंगिसम्यग्धीहेतुतायामिति विशेषितमि उक्ताखंडार्थताय
द्वानत्प्रातिपदिकार्थता ९९ अपर्यायशब्दानां संसर्गगोचरप्रमितिजनकत्वमखंडार्थतानचेदमसंभवि लक्षणं प्रकृष्ट
प्रकाशादिवाक्येषु तत्सद्भावात् न च लक्षणवाक्यमपि संसृष्टार्थं लक्ष्यस्य सजातीयविजातीयेभ्यो व्यावृत्तिवैशिष्ट्यप्रति
पादनपरत्वात् तत्र चन्द्रे स्वेव दतेष्वत्वप्रतिपादनादिति युक्तं विकल्पासहत्वात् किं प्रकृष्टप्रकाशादिवाक्यं साक्षादन्यतो
व्यावृत्तिं प्रतिपादयति किं वा स्वरूपप्रतिपादनेनार्थात् नाद्यः व्यावृत्तिप्रतिपादकशब्दाभावात् नापि द्वितीयः नांतरीयकतया
सिध्यतोर्थस्य शब्दार्थत्वाभावात् यच्चार्थादर्थो न स चोदनार्थ इति न्यायात् अन्यथा गामानयेत्यादिवाक्येष्वश्वाद्यानयनव्यावृत्ते

पर्यायग्रहणं इंद्रियव्यावृत्त्यै शब्दग्रहणं गामानयेत्यादिव्यवच्छेदाय संसर्गगोचरग्रहणं वाक्याभासव्यावृत्त्यर्थं प्रमितिग्रहणं तत्सद्भावाल्ल
क्षणसद्भावादित्यर्थः तत्रापि संसृष्टार्थत्वं पूर्ववादिनो क्रमनूदितं दूषयितुं विकल्पयति किं प्रकृष्टेत्यादिना साक्षादित्यभिधानेनेत्यर्थः अ
र्थादिति नांतरीयकतयेत्यर्थः यच्चार्थो त्वनार्थो नांतरीयकतयालभ्यते न च स चोदनार्थो वेदार्थ इति शबरस्वामिवाक्यार्थः न चाश्वा
द्यानयनव्यावृत्तिरपि तद्वाक्यार्थः वाक्यभेदप्रसंगादिति भावः॥

१
वि॰सु॰
टी॰न॰
१०७

ननु माभूद्व्यावृत्तिप्रतिपादनपरत्वं व्यवहारसाधनमेव लक्षणप्रयोजनं ब्रूमः तावताप्यखंडार्थता खंडितैवेति शंकते नन्वयमित्यादिना
चंद्ररूपार्थविशेषितव्यवहारकर्तव्यतासाधने दोषमाह आद्य इति यस्य कर्तव्यतात्रसाध्यते स किं चंद्रविशेषितो व्यवहारः प्रतिवादिनो
ऽज्ञातो ज्ञातो वा यद्यज्ञातस्तदाऽप्रसिद्धविशेषणत्वं अविदितदहने प्रतीवदहनानुमानप्रवृत्तिरित्याह तदा लक्षणवाक्यादपीति अपि
नास्वरूपसाधकत्वं लक्षणस्य सूच्यते द्वितीयं दूषयति अथेति चंद्रव्यवहारस्य कर्तव्यतामात्रमेव तावत्साध्यते न पुनरग्निसंबंध

नन्वयं चन्द्र इति व्यवहर्तव्यः प्रकृष्टत्वे सति प्रकाशत्वात् यन्नैवं न तदेवं यथा नक्षत्रादि न तथा चायं तस्मान्न
तथेति केवलव्यतिरेकिन्यायलक्षणवाक्यं पर्यवस्यति तथा च कथमखंडार्थता चंद्र इति व्यवहर्तव्यता लक्षण
धर्मवैशिष्ट्यप्रतिपादनपरत्वादिति चेन्नैवं चंद्रतया व्यवहर्तव्य इति किं चंद्ररूपार्थविशेषितो व्यवहारः कर्त-
व्यः उत चंद्रशब्दमात्रविशेषितो व्यवहारः आद्ये चंद्रविशिष्टं व्यवहारं यदि नाज्ञासीत्तदा लक्षणवाक्यादपि
विषयविशेषितकर्तव्यतां तस्य कथमधिगच्छेत् नह्यविदिताग्निरनुमानादप्यग्निसंबंधमधिगमयितुं श-
क्तः अथाधिगतवांस्तदा लक्षणवाक्यरूपमनुमानं निष्प्रयोजनं ज्ञातस्यैव ज्ञापनात् अथ सामान्यतो जानात्य-
स्मिकश्चिद्विषयविशिष्टव्यवहारस्येति विशेषतस्तु न जानातीत्युच्यते तथापि किं सामान्यतो व्यवहारस्य निमित्तवत्तां
जानाति किं वा व्यवहारविशेषस्य॥

द्वान्यत्र सिद्धस्यान्यत्र संबंधः केवलव्यतिरेकिताभंगात् तत्रैव तु विशिष्टं सिद्धमनु-
मानसाध्यमित्यर्थः ज्ञाताज्ञातविकल्पात्मकदोषपरिहरन्नाशंकते अथ सामान्यत इति अयमर्थः यद्यपि तस्यलांतरे सिद्धिः केवल-
व्यतिरेकित्वात् तथापि नाप्रसिद्धत्वं सामान्यतः सिद्धत्वादिति तदेतद्दूषयति तथापीति कीदृशमिदं सामान्येन ज्ञानं किं वक्ष्यमाण-
दिशा चंद्रशब्दविशेषितत्वासिद्धेश्चंद्रलक्षणार्थो ज्ञानाज्ञात्मकर्णादि व्यवहारमात्रस्य नाम चंद्रव्यवहार इति ततो व्यवहारमात्रनि-

रामः
१०७

किंवा चंद्रव्यवहारो निमित्तमात्रं वा इति आद्ये गवादिव्यवहारस्य निमित्तमात्रवत्त्वज्ञानेन चंद्रव्यवहारकर्त्तव्ये अनुमानस्याप्रसिद्ध
विशेषणतां निवारयति नह्यग्निमत्त्वप्रसिद्धिरिति त्वं तानुमानेनाधारयितुमलमित्यभिप्रेत्याह आद्ये प्रकृतानुपयोग इति द्वितीये च
द्रविशेषितव्यवहारः किं चंद्रलक्षणार्थविशेषितो व्यवहारः उत चंद्रशब्दविशेषितः द्वितीयस्तु प्राथमिकद्वितीयविकल्पसमा
नजीवनः प्रथमेपि किं चंद्रः विदितो विदितो वा आद्यमाह द्वितीयेपि चेति द्वितीयमाह ज्ञाने चेति चन्द्रशब्दविशेषितो व्यवहारः
साध्यत इति द्वितीयपक्षं दूषयति नापि द्वितीय इति अत्र चंद्रशब्दः प्रयोक्तव्य इति वाच्यवाचकसंगतिग्रहो हि पदालक्षणप्रयोजनं

आद्ये प्रकृतानुपयोगः व्यवहारविशेषस्य विचार्यमाणत्वात् द्वितीयेपि चंद्रलक्षणार्थविशेषापरिज्ञाने न हि शिष्टव्य
वहार एव विज्ञातुमशक्यः ज्ञाने च लक्षणवाक्यवैयर्थ्यमित्युक्तं नापि द्वितीयः लक्षणं विनापि गवादिशब्दानामिव वृ
द्धव्यवहारादेव वाच्यवाचकसंबंधग्रहोपपत्तेः पूर्वं प्रतिपन्न एव वाच्यवाचकभावो लक्षणवाक्येन स्मार्यत इति
चेत् न अवगतसंबंधस्य तत्र तच्छब्दादेव संबंधस्मरणोपपत्तौ लक्षणाभिधानवैयर्थ्यात् अवगतसंबंधस्या
पि शब्दलक्षणवाक्यादेव संबंधस्मरणनियमे लक्षणवाक्यस्य पदानामपि प्रत्येकं लक्षणवाक्यैः संबंधस्म
रणप्रसंगादनवस्थादुरवस्था स्यात् तस्माद्गवानयनादिवाक्यवदाप्तोपदेशान्नैव लक्षणवाक्यमवबोधकं॥

तत्र लक्षणं अर्थं अंतरेणापि लक्षणं गवादिपदानामिव संगतिग्रहसंभवादित्यर्थः प्रथमतोऽवगतस्यापि शब्दसंबंधस्य लक्षण॥
वाक्यात्स्मरणसाधनमप्यनर्थकं गवादिपदानामिवांतरेणापि लक्षणं स्मरणसंभवादित्युक्तं इदानीं न केवलमानर्थक्यमपि त्वनव
स्थालक्षणानर्थोपि स्यादित्याह अवगतसंबंधस्यापीति तत्र हि वाक्यस्य पदानामपि तैस्तैरर्थैः संबंधो लक्षणैरेव स्मारयितव्यः एवं त
त्तत्स्मारकवाक्यस्य पदानामपीति न क्वचिदपि स्यादित्यर्थः तत्किं लक्षणमेव तेषु ग्रंथेषु न प्रयोक्तव्यं तथा च गतं सत्संज्ञानमनेन।
मिति ब्रह्मलक्षणे तत्र सूत्रं जन्माद्यधिकरणेनाधीयत आह तस्मादिति न लक्षणमनुमानतयोपयुज्यते अपि तु शब्दप्रमाणत

ननु भवतु लक्षणं शब्दतत्त्वोपयोगि किमायातमखण्डार्थतायामिति तत्राह तच्चेत्सर्वमिति उक्तमेतत्पुरस्तादेव स्वरूपमात्रं शब्देन बो-
ध्यते इतरस्यानुन्निस्त्वार्थिको न वाचिकः शब्दार्थ इति यद्यपीदं संभवति तथाप्यव्यापकमिदं लक्षणं संयोगसमवायात्मकसंबंधस्य
यत्तल्लक्षणवाक्यं तस्य लक्ष्यसंसर्गविषयत्वेन संसर्गगोचरत्वलक्षणाभावादिति शंकते नन्वेवमपीति संसर्गगोचरप्रमितिजन-
कत्वमिति कोऽर्थः यद्बोधयति तदीयसंसर्गगोचरत्वे सति तत्प्रमितिजनकत्वमिति अस्ति चेत्तदत्रापि न हि संयोगस्य समवायस्य वा
तत्तद्विशेषणसंसर्गबोधपरं इदं वाक्यं तस्याबुभुत्सितत्वादित्यभिप्रेत्य परिहरति मैवं तेषामपीति न च विशेषुस्वेत्यादि सर्वलक्ष-

तच्च सर्वस्वरूपमात्रपर्यवस्यति अर्थात्तु नरन्यतो व्यावृत्तिः फलतीति युक्तं नन्वेवमपि नैतल्लक्षणं अप्राप्तयोः प्राप्तिः
संयोगो नित्यः संबंधः समवाय इत्येवमादिसंबंधप्रतिपादकलक्षणवाक्येष्वव्याप्तेः तेषां संसर्गगोचरप्रमितिजनकत्वा-
दिति चेत्त मैवं तेषामपि स्वस्वपदस्मारितपदार्थानामन्योन्यसंसर्गगोचरप्रमितिजनकत्वात् संसर्गगोचरप्रमिति-
जनकत्वशब्देन चासौ वाच्यार्थस्य विवक्षितत्वात् नाप्यतिव्याप्तिः संसर्गप्रमितिजनके गुणवानयं नादिवाक्ये पुलक्ष-
णाभावात् यद्वा अपर्यायशब्दानामेकप्रातिपदिकार्थमात्रपर्यवसायित्वमखण्डार्थता न चैवं पदान्तरवैय-
र्थ्यं व्यावर्त्यभेदार्थत्वेनोपपत्तेः तथाहि लोके प्रकृष्टप्रकाशश्चन्द्र इत्यत्र प्रकृष्टपदेनाप्रकृष्टस्य द्योतादेः प्रकाशपदेना-
प्रकाशात्मप्रकृष्टसेनमसादेश्च व्यवच्छेदेन बुभुत्सितश्चन्द्रप्रातिपदिकमात्रार्थः प्रतिपाद्यते ॥ ९ ॥ तावकोष — तिव्याप्तिः

प्रतिपिपादयिषित संसर्गगोचरत्वात् तदभावस्येह विवक्षितत्वात् यद्वा तत्प्रातिपदिकार्थेनेति श्लोकावयवं विवृणोति यद्वा
पर्यायेत्यादिना यद्यप्येकपदलक्ष्यमेव पदान्तरपर्यवसानभूमिस्तथापि नैकपदव्यावर्त्यमेव पदान्तरव्यावर्त्यं जाड्यानृतादीनां
विभिन्नत्वात् ततो न संसृष्टार्थता वैयर्थ्यं इत्युक्तं एतदेव लौकिकोदाहरणेन दर्शयति तथाहीत्यादिना सत्तमसं विषक्रमः
अत्र च व्यवच्छेदेनेति व्यवच्छेदानां द्वारतो का प्रतिपाद्यत इति तात्पर्यविषयत्वे तेन तच्छून्यनिष्ठतापत्तिः ॥ ६०७ ॥

ननु किमिति स्वरूपमात्रपरताश्रयणं न पुनर्यथा प्रकर्षादिसंसर्गपरत्वमिति तत्राह अन्यथेति यदि हि स्वरूपमात्रे प्रकृष्टगुणादिसंसर्गं प्रतिपाद्येत तर्हि अज्ञेयवचनः स्यादित्यर्थः यत्तु पूर्वपक्षिणा त्रेधा विकल्प्य दूषणद्वयमुक्तं तन्निराकरोति न च व्यावृत्तीति ननूक्तं स्वरूपमात्रपरत्वे पदानां पर्यायत्वमिति तत्राह व्यावर्त्यभेदेनेति तदेवं लौकिकेषूदाहृत्य विवक्षितं सत्यादिवाक्येषु लक्षणं वर्त्तयति तथा वेदेऽपीति ननु स्ववाच्यप्रक्षेपेणैव पदानां विरोधिव्यावर्त्तनेन मप्रक्षेपेण वा न तावद् द्वितीयः विरोध्यदर्शनेनानृतादिव्यावृत्तेरशक्यज्ञानत्वात् प्रथमे तु विभिन्नैर्ज्ञानत्वादिभिराकारैर्ब्रह्मणोऽप्यनेकाकारत्वमिति तत्राह नचैवमनेकाकारेति

अन्यथा वृत्तत्वमुत्सितमर्थं प्रतिपादयतोऽनवधेयवचनत्वप्रसंगात् न च व्यावृत्तिपरत्वे व्यावृत्तिमत्परत्वे वा। संसृष्टार्थत्वं स्वरूपमात्रपरत्वे च पदान्तरवैयर्थ्यमिति वाच्यं व्यावृत्तिद्वारा पदानां स्वरूपमात्रपर्यवसायित्वाङ्गीकारात् व्यावर्त्यभेदेनावैयर्थ्योपपत्तेः तथा वेदेऽपि सत्यं ज्ञानमनन्तं ब्रह्मेत्यादौ सत्यज्ञानानन्दानन्तात्मशब्दा अनृतजडदुःखान्तवत्त्वानात्मत्वभ्रान्तिनिवृत्तिद्वारा लक्ष्ये ब्रह्मणि पर्यवस्यन्ति न चैवमनेकाकारविज्ञानजनकत्वात्पदानां लक्ष्यस्य ब्रह्मणोऽनेकाकारत्वप्रसंगः लक्षणासमये भिन्नाकारविज्ञानजनकानामपि पदानां तत्तद्भ्रान्तिनिवृत्तिमात्रप्रयोजकतया लक्ष्ये ब्रह्ममात्रे तात्पर्येण पर्यवसानात् एवं च तत्तत्पदजन्यविज्ञानानां तत्तद्भिन्नाकारसमर्पिणां नान्तरीयकतया तत्तद्विरोध्याकारनिवर्तकत्वाद्वाक्यस्याखण्डार्थत्वसि-

लक्षणासमय इति सामीप्यात् लक्षणाप्रक्रमसमयो विवक्ष्यते न हि तत्तदाकाराः प्रतिपिपादयिषिता इति प्रतिपाद्यन्ते किं तु कथं तु नामानृताद्यारोपरहितं ब्रह्म प्रतिपत्तिरिति तद्यावदनृतादिव्यावृत्तिस्तावदेव सत्यत्वाद्याकाराणां स्थितिः निवृत्तेषु तु तेषु एते एवाकारा अनृता जायन्ते कः खलु विशेषोऽनृतादिभिराकाराणामद्वैतविरोधे तस्मादेकानन्दव्यक्तिपरमेव सत्यादिवाक्यं न सत्यत्वादिपरं नाप्यनृतादिव्यावृत्तिपरमित्यर्थः विधिमुखेषु वाक्येषु उक्तं न्यायं निषेधमुखेन प्रतिपादकेष्वप्यतिदिशति एवं च तत्तत्पदजन्येति

परे तद्विरोधिनिवृत्त्यर्थमेव तत्तदाकारविधानं किंचिदुक्तं तत्तदाकारविरोधिनिवृत्तेश्चाशब्दत्वमुक्तं तदावाक्यवचनेन द्रढयति ।
उक्तं चैतदिति तैत्तिरीयके वार्त्तिके सत्यं ज्ञानमनन्तमिति वाक्यव्याख्यानसमये इति शेषः पदान्तरादेः पदार्थसत्यत्वादिब्रह्मणि प्रतिपा
द्यत्वात्तेन तद्विरोधाद्धेतोर्विरोधिनोऽनृतादेरभावं जानाति तत्र निदर्शनं व्यवधानकवदिति यथा खल्वाखुभूषितां भूमिं दृष्ट्वाऽस्यो
न्मार्जाराभावोऽवगम्यत एवमिति नन्विदमुभयमपि शाब्दं माहोस्विदन्यतरदिति तत्राह शाब्दादिति प्रथमं धर्माधर्मिणोः सत्यत्वा
देः ब्रह्मणश्च संगतिः शब्दात्प्रतीयते तावताचास्यास्तात्पर्यविषयत्वं द्योत्यते अपोहस्तु विरोधिव्यावृत्तिर्मानान्तरादनुपपत्ति
लक्षणात् ज्ञायते तेन स अपोहस्तु न शाब्दः नन्वत्र किं त्रयाणामविशिष्टोऽयं न्याय इति नेति वैषम्यमाह तत्रानन्त इति तत्रेत्युभयथे

उक्तं चैतत्सुरेश्वराचार्यैः प्रतिपाद्यपदार्थविरोधात्तद्विरोधिनः पश्चात्तदभावं जानाति व्यवधानकवत्पदात् १
शब्दात्प्रतीयते तावत्संगतिर्धर्मधर्मिणोः मानान्तरादपोहस्तु न शाब्दस्तेन स स्मृतः २ तत्रानन्तो न वस्तु।
व्यावृत्त्यैव विशेषणम् स्वार्थार्पणप्रणाड्या च परिशिष्टौ विशेषणं ३ तद्विरोध्यर्थसंत्यागः सामर्थ्यात्स्यात्त
शब्दत इति नच गुणगुण्यादिभावप्रतिपादनेऽपि तत्तद्विरोध्याकारनिवृत्त्युपपत्तेः कथमखण्डैकरसत्वसि।
द्धिरिति वाच्यं ब्रह्मशब्दार्थमात्रस्यैव बुभुत्सितत्वात् ॥ ॥ऽनन्तः अनन्तशब्दार्थः अन्तवद्वस्तुव्यावृत्त्यैव विशेषणं व्याव

र्तकं साक्षादेव ब्रह्मणो व्यावर्तकमित्यर्थः परिशिष्टौ तु सत्यज्ञानशब्दौ स्वार्थसमर्पणप्रणाड्या व्यवधानेन विशेषणं न हि यथाऽन
न्तमित्युक्ते तदभावः साक्षात्प्रतीयते तथा सत्यं ज्ञानमित्यत्रानृताद्यभावः अपि तु स्वार्थविधानव्यवधानेनेत्यर्थः तर्हि तयोर्विरोधि
व्यवच्छेदः किंनिबन्धन इति तत्राह तद्विरोधीति सा तत्त्वमानान्तरादपोह्य इत्यस्यैव प्रपंचः ननु विरोध्याकारनिवृत्तिरखण्डा
र्थतामंतरेण संसर्गपरत्वेऽपि संभवति किमर्थमखण्डार्थताऽऽग्रह इति तत्राह नचेति लौकिकवाक्येषु संसर्गपरतायामुक्तबाधकं
प्रकृतेऽप्याह ब्रह्मशब्देति ब्रह्मविदाप्नोति परमिति श्रुतस्य ब्रह्ममात्रस्य बुभुत्सितत्वादित्यर्थः ॥ छ ॥ छ ॥ छ ॥

न केवलमबुभुक्षितार्थपरत्वं बुभुक्षितार्थपदानां तादिपदविरोधश्चेत्याह सर्वं तइति साक्षादेवैकार्थप्रतिपादकानां नाकारनिवारकत्वं
न विरोधश्चेत्याह एकधैवेत्यादिना ननु प्रसिद्धमेव लक्ष्यं न त्वप्रसिद्धं गगनारविंदादेर्लक्ष्यत्वादर्शनात् अप्रसिद्धं च ब्रह्म सर्वप्रमाणाग-
म्यत्वादिति तत्राह नचेति अथवा लक्षणलक्ष्यत्वमत्राक्षिप्यसमर्थ्यते स्वप्रकाशस्य प्रत्यगात्मतयाप्रसिद्धिरस्तीति संभवत्येव लक्ष्यत्वमित्य-
र्थः न केवलमस्माकमेवेयं रीतिः अपितु सर्वेषामेव लक्षणवादिनामित्याह अन्यथेति घटादिषु सामान्येन प्रसिद्धस्य पृथिवीत्वस्य व्रह्मा-
दस्थेतरेभ्यो भेदस्य च परमाण्वादि भूगोलकांत समुदायैः प्रसिद्धस्य लक्षणेन साधनमिति परांगीकारादित्यर्थः यत्तु सोयं देवदत्त इत्यत्रास-

सर्वेणोनवच्छिन्नवस्तुप्रतिपादनपरत्वात् ब्रह्मानंतशब्दाभ्यां विरोधाच्च एकधैवानुद्रष्टव्यं एकमेवाद्वितीयमित्यादेरेकरसत्वप्र-
तिपादकवाक्यविरोधाच्च नेह नानास्ति किंच नेत्यनेकरसत्वप्रतिषेधाच्च नचाप्रसिद्धत्वाद्ब्रह्मणो लक्ष्यत्वासंभवः प्रत्यगात्म-
तयास्वतः सामान्येन प्रसिद्धत्वात् नचतथात्वे लक्षणवैयर्थ्यं लक्षणस्य विशेषाकारसमर्पणार्थत्वात् अन्यथा गंधवती पृथि-
वी नित्यज्ञानाधार ईश्वर इत्यादिलक्षणानामपि लक्ष्यस्याप्रसिद्धत्वप्रसिद्धत्वयोर्वैयर्थ्यापातात् एतेन सोयं देवदत्त इत्य-
त्रापि तत्कालोपलक्षितस्यैतत्कालवैशिष्ट्यं प्रतिपाद्यत इत्येतन्निरस्तं देवदत्तस्वरूपमात्रस्यैव बुभुक्षितत्वात् एतत्का-
लवैशिष्ट्यस्य दृष्टत्वेनाबुभुक्षितत्वात् नच पूर्वकालोपलक्षितस्यैतत्कालवैशिष्ट्यप्रतिपादनेपि भेदभ्रमनिरासः सिध्य-
तीति वाच्यम् एतत्कालविशिष्टस्य पूर्वकालसंबंधासंभवेन तदुपलक्षितत्वस्यासंभवात् तयोरभेदप्रतिपादनत्वस्याशक्य-

डार्थतात्पर्याभावाय पूर्वपक्षिणोक्तं तत्राप्युक्तन्यायमतिदिशति एतेनेति एतेनेत्यस्यैव विवरणं देवदत्तस्वरूपेति तत्त्वितरदपि बुभुक्षितं किं-
तस्यात्तद्धि देवदत्तमात्रमत्र केनचिन्न दृष्टं येन लक्षणवाक्यवत्तन्मात्रमेव बुभुक्षितं स्यादिति तत्राह एतदिति न केवलमबुभुक्षितत्वादप्रति-
पाद्यत्वं बुभुक्षितैक्यविरोधाच्चेत्याह नचेति तत्किमेतत्कालविशिष्टस्य पूर्वकालोपलक्षितेनैक्यं बोधयति किं वा पूर्वकालोपलक्षितस्यैत-
त्कालविशिष्टेन नाद्य इत्याह एतत्कालेति संबद्धं खलूपलक्ष्यं नासंबद्धं न चैतत्कालविशिष्टस्य पूर्वकालसंबंधः संभवति एतत्काले पूर्वका-

द्वितीयं शंकते नन्विति किमुपलक्षितस्य विशिष्टेनाभेदः शब्दगम्यः किंवोपलक्षिते वैशिष्ट्यमात्रे शब्दार्थः अभेदस्यानुपपत्तिकइतिवि
कल्पं दूषयति मैवमित्यादिना एतत्कालविशिष्टस्य पूर्वकालोपलक्षितस्वरूपस्य चैक्यासंभवेन प्रथमं पक्षं दूषयति नाद्य इति किमित्य-
संभवस्तत्राह तथासतीति द्वितीये तु शब्दाद्विशिष्टमर्यादस्वरूपमात्रे वृत्तिमितिकल्पनागौरवाद्वरं शब्दादेवोभयोपलक्षितस्यैक्यप्रति
पादनमित्याह साक्षादेवेति ननु साक्षाच्छब्दादभेदप्रतिपत्तावुभयोरपि लक्षणाप्रसङ्गेन ततो वरमेकलक्षणयापारंपर्याश्रयणमि
ति शंकते उभयेति पारंपर्यकल्पनातो लक्षणाश्रयणं न्याय्यं व्यापारवत्प्रमाणगौरवात् व्यापारगौरवस्य लघीयस्त्वात् यदुद्दिश्य

ननु तथापि पूर्वकालोपलक्षितस्यैतत्कालवैशिष्ट्यसंभवात्संभवत्येव तयोरभेदप्रतिपादनमिति चेत् मैवं विकल्पासहत्वा
त् किं पूर्वकालोपलक्षितस्यैतत्कालविशिष्टेनाभेदः प्रतिपाद्यत इत्युच्यते किंवा पूर्वकालोपलक्षिते वर्तमानकालवैशिष्ट्यल
क्षणधर्मप्रतिपादनेनार्थादभेदः सिध्यतीति नाद्यः विशिष्टाविशिष्टस्वरूपयोरभेदासंभवात् तथासति वर्तमानकालविशिष्ट
स्य पूर्वमपि सद्भावप्रसंगात् नापि द्वितीयः साक्षादेवाभेदप्रतिपादने संभवति परंपरया तत्प्रतिपादनाश्रयणस्यायुक्तत्वात्
उभयपदलक्षणाश्रयणे कल्पनागौरवात्तथाश्रीयत इति चेन्मैवं अत्रापि परंपरया अभेदप्रतिपादनात्साक्षादभेदप्रतिपा
दने बुद्धिलाघवस्यादर्शितत्वात् तथापि विनिगमनायां को हेतुरिति चेत् बुभुत्सितार्थस्य साक्षात्प्रतिपादनलाभ एवेति ब्रूमः
उक्तंच प्रतिज्ञावचनस्य साधनांगत्वमाचक्षाणेनाचार्यवाचस्पतिना अनिर्दिष्टं शब्दं बुभुत्समानाय निर्देशः शब्द इत्यनुक्त्वा
च वाक्यं प्रवर्तते तस्य बुभुत्सितस्याभेदस्य साक्षात्प्रतिपादनं न्याय्यं इतरथा अनुद्दिष्टस्य साक्षात्प्रतिपादनं भवति ९ यदेव किंचिदुच्यते

उद्दिष्टस्य पारंपर्येणेति क्लिष्टकल्पना स्यात् तदेतद्धृदि निधाय परिहरति मैवमत्रापीति अनधिगतपराभिसंधिः शंकते तथापीति विनि
गमनानिर्णयः अभिसंधिमुद्घाटयन्परिहरति बुभुत्सितेति बुभुत्सितस्यार्थिकप्रतिपत्तेः साक्षात्प्रतिपत्तिरभ्यर्हितेत्यत्राचार्यवाचस्प
तिवचनमपि प्रमाणयति उक्तंचेति हेतूदाहरणावयवद्वयवादिनं सौगतंप्रति —— प्रतिज्ञानानन्तर्ये हेतोरनुवर्तनं व्यर्थः ॥ ० ~ ० ॥

अत्र च यत्कृतकं तदनित्यमित्युदाहरणनिर्देशः कृतकश्च शब्द इति हेतुनिर्देशः एतदुक्तं भवति यद्यप्युदाहरणहेतुनिर्देशादप्यर्था-
दुक्तस्यानित्यत्वं पर्यवस्यति तथापि साक्षादनिर्देशापराधमात्रादिदमसंबद्धत्वाभिधानमिति एतेनैतस्यैव विवरणं बुभुत्सि-
तार्थेति लक्षणसमर्थनमुपसंहरति तदेवमिति प्रमाणं श्लोकेन संगृह्णाति सम्यग्ज्ञानादीति सम्यग्ज्ञानादिगीर्वाक्यमेतत्संसर्गव्यतिरे-
किण्यर्थे यस्ते समादयः पदार्थास्तेषां संसर्गो व्यतिरिक्ते संसर्गरहिते प्रमाणमिति प्रतिज्ञानिर्देशः शेषं विशदं सिद्धसाधनतानिवृ-

यत्कृतकं तदनित्यमिति वा कृतकश्च शब्द इति वा न तस्यैवमसंबद्धत्वाद्यानप्रत्येति प्रतिवादीति एतेनोभयपरलक्ष-
णस्वीकारे गौरवदोषो निरस्तो वेदितव्यः बुभुत्सितार्थप्रतिपादनप्रयोजनतया गौरवस्यैवोचितत्वात् प्रमाणं त्वदृष्टा-
निकल्प्यानित्युक्तव्यपीनित्यायात् तदेवमसंबद्धार्थत्वेन लक्षणासंभवः नापि प्रमाणासंभवः तथाहि सम्यग्ज्ञानादिगीरेत-
त्संसर्गव्यतिरेकिणि अर्थे प्रमाणं मानत्वान्नयनादिप्रमाणवत् २० सत्यादिवाक्यमेतत् पदार्थसंसर्गातिरिक्तेऽर्थे प्र-
माणं प्रमाणत्वाच्चक्षुरादिवत् विपक्षे चैकरसत्वप्रतिपादकश्रुतीनामुदाहृतानामप्रामाण्यप्रसंगः बुभुत्सितेत्या-
दाणि प्रामाण्याभावप्रसंगश्च बाधकस्तर्क उन्नेयः यत्तु वाक्यत्वाद्वानयनादिवाक्यवत्संसर्गपरत्वानुमानं तदे-
करसत्वप्रतिपादकश्रुतिविरोधात्कालात्ययापदिष्टं उक्तनीत्या च संसर्गप्रतीतिजनकत्वाभावेऽपि वाक्यत्वोपपत्तेः

न्ये संसर्गव्यतिरेकिणीत्युक्तं तथापि यत्किंचित्संसर्गव्यतिरिक्तत्वेनार्थान्तरतात् निवृत्त्यर्थमेतत्पदं ११ संदिग्धव्यतिरेको हेतुः॥
यद्यपि गामानयेत्यादिवाक्यं संसर्गविषयं तथाप्येतत्संसर्गव्यतिरेकिण्यर्थे प्रमाणमेवेति न व्यभिचारः ततश्चासंसृष्टार्थप्रमिति-
जनकत्वसिद्धिः एतदेव विवृणोति सत्यादिवाक्यमित्यादिना पूर्वमद्वैतश्रुतीनामप्रामाण्यप्रसंग उक्तः इदानीं सम्यग्ज्ञानादिवाक्य-
स्य गुणागुण्यादिपरत्वेऽप्यप्रामाण्यप्रसंगमाह बुभुत्सितेति पूर्वपक्षिणोऽनुमानं दूषयति यत्त्वित्यादिना विपक्षे बाधकतर्काभावाच्च
क्तिोपाधितां चाह उक्तेति उक्तनीत्या वाक्यत्वोपपत्तेरिति संबंधः॥

१ चि·सु· टी·न· १११

ननु संसर्गपरत्वाभावे वाक्यत्वभंगप्रसंगादेव बाधक इत्यत आह आकांक्षेति ननु प्रामाण्यभंगप्रसंगो बाधको नेत्याह आचार्येति शा-
स्त्रविज्ञानाच्छब्दविषयज्ञानादसन्निकृष्टेऽर्थे प्रमाणान्तरेण तथात्वानधिगते यद्विज्ञानं जायते तेन च्छास्त्रं शब्दप्रमाणमिति शाबरवाक्या-
र्थः अत्र चानुवादविसंवादव्यवच्छेदायासन्निकृष्टपदं अपेक्षितादिपदं निराकरणायार्थग्रहणं अनुमानत्वनिराकरणाय शब्दविज्ञा-
नग्रहणं सतावदेवावाक्यार्थे लक्षणमभिहितं शब्दप्रमाणस्य ननु संसर्गविषयत्वमपीत्यर्थः द्वितीयपक्षे त्वर्थापत्तिप्रमाणमाह प्रातिपदि-
केति अनुपपत्तिमेव दर्शयति अबुभुत्सितेति वाक्यार्थमुपसंहरन् वर्तिष्यमाणमेवोद्घाटयति तदेवमिति अद्वैतवादेस्तमादिपदवाच्यौ
यतां तथा अपर्यायद्वयध्वंसं वादिवागीश्वरोऽब्रवीत् तस्य वाक्यार्थतानात्वात् लक्ष्यस्यैकत्वसमाश्रयात् नपर्यायद्वयध्वंसावित्यनुत्त

आकांक्षासन्निधियोग्यतावन्ति पदानि वाक्यमिति वाक्यविदः ननु संसर्गप्रतिजनकान्यपीति विशेषणवैयर्थ्यो
न् आचार्यशबरस्वामिना च शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानमित्येतावतैव लक्षणस्याभिधानात् प्रा-
तिपदिकमात्रार्थप्रश्नोत्तरत्वानुपपत्तिश्च लौकिकवैदिकलक्षणवाक्यानामेकप्रातिपदिकार्थमात्रपर्यवसायि-
त्वे प्रमाणं प्रदर्शितावता चानुपपत्तिः अबुभुत्सितार्थप्रतिपादनेऽनवधेयवचनत्वप्रसक्तेरिति तदेवमशेषोप-
निषद्वाक्यखंडैकरसे ब्रह्मणि स्वतःसिद्धमेव प्रामाण्यमिति सिद्धं ११ ननु किमिदं प्रामाण्यस्य स्वतस्त्वं न तावत्स्वत एव

वस्तुतत्त्वं यत्तु प्रकृष्टप्रकाशाश्रयत्वाद्विप्रकर्षादिवत्ता प्राकृताविति तदबुभुत्सितत्वेनात्रैव परिहृतं यत्तु पृथक्प्रवृत्तयोः प्रकृष्टप्रकाशा-
शब्दयोरेकत्र प्रयोगात् उज्यते अर्थविशेषबोधकत्वं ततश्चेह लौकिकज्ञानादेरपि प्रसङ्गत्वादिति तत्रोपहितज्ञानादेर्न प्रसक्तस्वरूपत्व-
मनुपहितं तु वाच्यमित्यस्त्येव पृथक्प्रवृत्तिः ज्ञानादिशब्दस्येति न कोऽपि व्यतिकरः अद्वयवस्तुसुखबोधविताने देहहृषीकमनोम-
तिहीने विश्वविवर्तनिदानमबोधं प्रतिवचासि समन्वयपरोऽस्मि स्वतःसिद्धमेव प्रामाण्यमित्युक्तमुपसंहरन् परतः प्रामाण्यवादी प्रत्यव-
तिष्ठते नन्विति तत्र लक्षणं तावदाक्षिपति न तावदित्यादिना तत्र किं स्वत एव प्रामाण्यस्य जन्म स्वतःप्रामाण्यं नाम आहोस्वित्स्वाश्रय-
ज्ञानजन्यत्वं उत स्वाश्रयज्ञानसामग्रीजन्यत्वं अथवा ज्ञानसामग्रीजन्यप्रमाश्रितत्वं किंवा ज्ञानसामग्रीमात्रजन्यप्रमाश्रितत्वं नाद्य

प्राम· १११

विरोधादिति स्वस्यैव स्वकारणतयाभाकूलक्षणे सत्त्वं कार्य्यतया च प्रागसत्त्वमिति व्याघातादित्यर्थः द्वितीयं निषेधति नापीति एतच्च
स्वग्राहकस्य स्वीयवच्चनत्वमाश्रित्य स्वाश्रयप्रामाण्यजनकत्वे हि समवायिकारणतया इत्यत्रापातो ज्ञानस्येत्यर्थः तृतीयं निषेधति
नापि ज्ञानेति तत्सामग्र्यामपि हि यथाकथंचित्स्वीयतया स्वग्राह्योऽभवत्येवेति भावः तदेतदसंभवेन दूषयति प्रामाण्यस्येति बाधा
त्यन्ताभावो घटादेरप्यस्तीति ज्ञानेत्युक्तं तथापि स्मृतावतिव्याप्तिस्तदर्थं स्मृतित्वानधिकरणस्येति अबाध्यानुभवत्वमित्यर्थः
विषयापहारश्च बाधस्तदभावश्चापाततः संशयादेरप्यस्तीत्यत्यन्तग्रहणं अत्र च प्रमादौ धर्म्यंशे जातिसंकरप्रसंगात् प्रामा

स्वस्य हेतुकत्वविरोधात् नापि प्रमाणादेव जन्म ज्ञानस्य गुणत्वेन स्वप्रामाण्यं प्रति समवायिकारणत्वासंभवात् ना
पि ज्ञानसामग्रीतो जन्य प्रामाण्यस्योपाधित्वे जातित्वे च जन्मासंभवात् तथाहि उपाधिपक्षे स्मृतित्वानधिकरणस्या
ज्ञानस्य बाधात्यन्ताभावः प्रामाण्यं न च तस्योत्पत्तिः संभवति अत्यन्ताभावत्वादेव नापि ज्ञाने जन्म नित्यत्वात् ज्ञा
नसामग्रीजन्यत्वं प्रमायाः प्रामाण्यस्य स्वतस्त्वमिति चेन्नैवं अप्रमायामपि स्वतस्त्वप्रसंगात् तस्या अपि ज्ञान
सामग्रीजन्यत्वात् अथ ज्ञानसामग्रीमात्रजन्यत्वं स्वतस्त्वं अप्रमा तु न तन्मात्रजन्या दोषसहकृतज्ञानसामग्रीज
न्यत्वादिति चेन्नैवं विकल्पासहत्वात् तथाहि दोषाभावसहकृतज्ञानसामग्रीजन्यत्वं मात्रशब्दार्थः किं वा दोषासह

प्रत्युपाधिरिति केचित् अपरे तु तत्र गौणव्यवहारमादाय जातिरिति वदंति तेनेदं द्वैविध्यमुक्तं ((कृतज्ञानसामग्रीजन्यत्वम्
चतुर्थं शंकते ज्ञानसामग्रीति यद्यपि प्रमायां ज्ञानसामग्रीजन्यत्वं न प्रामाण्यस्य स्वतस्त्वमिति योजना तदेतदतिव्याप्त्या दूषयति मै
त्वमिति ज्ञानविशेषो ह्यप्रमा विशेषसामग्र्यां च सामान्यसामग्र्यनुप्रविशति शिंशपासामग्र्यामिव वृक्षसामग्री इतरथा तस्या आकस्मिक
त्वप्रसंगात् अतः परतस्त्वेनाभिमतायामप्रामाण्येऽपि ज्ञानसामग्रीजन्यत्वाप्तेः अतिव्याप्तिरित्यर्थः अप्रमायामपीति अप्रामाण्यस्येत्यर्थः
पंचमं शंकते अथेति अप्रमायामतिव्याप्तिपरिहाराय मात्रग्रहणेन विवक्षितं स एव विवृणोति अप्रमा त्विति ॥छ॥ ९ ॥छ॥

नहेतुतयाऽपि ४

अग्रमात्रग्रहणेनाप्रमासामग्रीरूपदोषासाहित्यद्वारेण तदभावसाहित्यमधिज्ञानसामग्र्यां विवक्षितं उत्तासाहित्यमात्रमिति विक-
ल्पद्वयं दूषयति नाद्य इति एवं स्वतःप्रामाण्यपक्षस्त्वप्युपपद्यते इत्यर्थान्तरमित्यर्थः द्वितीयं दूषयति नापि द्वितीय इति यथाहि प्रमाणज्ञा-
नहेतोर्विशेषदर्शनस्याभावोऽप्रमाणज्ञानहेतुः एवमप्रमाणज्ञानहेतोर्दोषस्याभावोऽपि प्रमाणहेतुर्भवत्येव एवमपवृत्तस्याभाव्यादन-
योरित्यर्थः यद्यपि प्रमासामग्र्यां दोषाभावोऽविद्यमानस्तथापि तद्वर्जनीयसन्निधिराकाशवदयुक्तं चैतत् इत्याह तथा नित्यस्येश्वरज्ञान-
स्य तदनुत्पाद्यतयाऽप्रामाण्याभावप्रसंगादिति शंकते नन्विति जन्यप्रमा दोषाभावसहकृतज्ञानसामग्रीजन्या न भवति प्रमात्वादीश्वरप्र-

नाद्यः परतःप्रामाण्यवादिमतानुप्रवेशप्रसंगात् तेऽपि हि दोषाभावसहकृतज्ञानसामग्रीजन्यत्वमेव परतःप्रामाण्य-
मितीच्छन्ति नापि द्वितीयः विशेषदर्शनस्य भ्रमनिवृत्तिहेतुत्वेन तद्विपर्ययस्य भ्रमहेतुत्ववद्दोषसहकृतज्ञानसामग्रीज-
न्यज्ञानमप्रमेत्यंगीकुर्वता प्रमां प्रति दोषाभावस्य हेतुताया अनिराकार्यत्वात् नन्वीश्वरज्ञाने ईश्वरदोषाभावस्यावर्ज-
नीयतया अस्मत्प्रमास्वपि तथा सन्निधिः किं न स्यात् नहीश्वरज्ञानेऽपि दोषाभावः प्रयोजक इति युक्तं वक्तुं तत्प्र-
युक्तत्वस्य तदंतर्भूतसामग्रीजन्यत्वानतिरेकात् तस्य च नित्यतया विशिष्टसामग्रीजन्यत्वासंभवादिति चेन्मै-
वम् अंतरेणापि तत्सामग्रीजन्यत्वं नित्यद्रव्येषु गुणवत्त्वप्रयुक्तद्रव्यत्ववत्तत्प्रयुक्तत्वोपपत्तेः॥

मावदिति भावः साध्यवैकल्यं परिहरति नहीति ननु जन्यत्वाभावेऽपि तत्प्रयुक्तत्वं किं न स्यादित्यत आह तत्प्रयुक्तत्वस्येति त-
दंतर्भूतेति सदोषाभावादिरंतर्भूतो यस्यां सामग्र्यां सा तदंतर्भूता सामग्री अथवांतर्भावः एवांतर्भूतं भावे निष्ठा तदंभाववती साम-
ग्रीत्यर्थः न तदंतर्भूतसामग्रीजन्यत्वं नहि गुणवत्त्वप्रयुक्तं द्रव्यत्वमित्यत्र गुणवत्त्वद्रव्यत्वयोर्जन्यजनकभावः परस्परमेकस्यो-
पाधित्वात् एकस्य च जातित्वात् किं तर्हि समव्यापकत्वमात्रेण प्रयोज्यप्रयोजकभावः एवमत्रापीति परिहरति मैवमिति
अनित्येस्वाश्रयद्वारा कादाचित्कत्वमपि कथंचित्संभाव्यमिति नित्यद्रव्येष्वित्युक्तं ॥ ॥ ॥ ॥

ननु भावस्य कारणत्वेनैवायुक्तानि: स्वभाववत्त्वादिति तत्राह नन्वेति किमिदं नि:स्वभावत्वं यद्यसत्त्वं तत्किं सत्तानधिकरणत्वं तर्हि गतं सामान्यादीनां
वृद्धिकारणत्वेन न च स्वरूपसत्त्वरहितत्वं तदसिद्धम् यथाहोदयन: नह्यसौ विधिरूपेणानुल्लेख्य इति स्वरूपेणापि तथा इतरथाऽभावस्यापि
तथात्वापातादिति अथ भावत्वानधिकरणत्वं किमेतावता किं वाभावस्य कार्य्यत्वमङ्गीक्रियते न वा न यदि तदा प्रध्वंसानुत्पत्त्या घटस्यानि
त्यता स्यात् अस्ति चेत् कारणत्वेन किमपराद्धं कः खलु विशेषो नियतप्राक्क्षणसत्त: प्रागसत्त्वे सति सत्तायोगित्वं सत्त्वे अथान्य
थैव भूत्वाभावित्वाद्यात्मकं तत्र कार्य्यत्वं श्लिष्यति कारणत्वमपि तथा श्लिष्यतीति सूक्ती भाव: उक्तं चोदयनेन भावो यथा तथा भाव:।
कारणं कार्य्यवन्मतइति किं च न सर्वत्र भावरूपास्सर्वदोषा: येन तदभावस्याभावतया न कारणत्वमपि त्वभावरूपा: अपि सन्ति दोषा: न
दभावस्य न किमिति कारणता स्यात् अथ भावस्य तत्र तत्र दृष्टचरं कारणत्वं न त्वभावस्येति तत्र अभावस्यापि तत्र तत्र दर्शनात्स्वीकाराच्च

ननु दोषाभावस्याभावत्वादेवाकारणत्वं विशेषदर्शनाभावस्य भ्रमहेतुत्ववत्प्रमाणाभावस्य प्रमेयाभावप्रमितिहे
तुत्ववद्विहिताकरणस्य प्रत्यवायहेतुत्ववच्च तदुपपत्ते: न च प्रामाण्यस्य स्वतस्त्वे मानमस्ति प्रामाण्यं ज्ञानहेतुमा
त्रजन्याश्रये अप्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वात् ज्ञानत्ववत् दोषजन्यत्वेन व्यभिचारो मा भूदिति ज्ञानैकधर्म
((त्वादित्युक्तम्

भवद्भिरित्याह विशेषदर्शनेत्यादिना साधारणधर्मदर्शने विशेषादर्शनाभ्यां सर्वत्र भ्रम इत्यर्थ: आहानेवमत्याह
प्रमाणाभावस्येति योग्यानुपलब्ध्या ह्यभावप्रमितिरङ्गीक्रियते अनुपलब्धिश्चोपलब्ध्यभाव इत्यर्थ: मतद्वयसंमतमुदाहरणमाह वि
हिताकरणेति यन्नत्रस्त्वकालेपदकुर्वन् हि करोति यदवेतन: प्रत्यवायोस्य तेनैव नाभावेन सजन्यतेइति ब्रुवतेनैरप्यतिप्रसक्तिपरि
हाराया कुर्वन् यदन्यत्करोतीति विवचनादभावहेतुता: अतएव प्रत्याख्यानाय एवं लक्षणमाक्षिप्य प्रमाणमाक्षिपति न च प्रामाण्येति व
त्रदीपावलीकृतमनुमानमुद्भावयति प्रामाण्यमिति ज्ञानहेतुजन्याश्रयत्वसाधने सिद्धसाधनता तदर्थमात्रग्रहणं ज्ञानैकधर्मत्वम
प्रामाण्येप्यस्तीति तत्र व्यभिचारवारणाय अप्रामाण्येतरत्वे सतीत्युक्तं घटत्वादिव्यावृत्त्यै ज्ञानग्रहणं उत्तरविशेषणकृत्यमाह दोषेति
तद्व्याधेरपि धर्मइतिन ज्ञानैकधर्म इत्यर्थ:॥

२
वि·सु·
टी·न·
२२३

तदीयमेवानुमानांतरमाह तथेति ज्ञानत्वन्यूनवृत्तित्वमप्रामाण्येऽप्यस्तीति अत उक्तमप्रामाण्येतरत्वे सतीति सत्तागुणत्वज्ञानत्वे व्य
भिचारनिवारणाय ज्ञानत्वन्यूनवृत्तित्वग्रहणं अत्र किं ज्ञानहेतुमात्रजन्यवृत्तित्वमात्रं साध्यं किं वा ज्ञानहेतुभिन्नजन्यावृत्तित्वे सति
ज्ञानहेतुमात्रजन्यवृत्तित्वमिति विकल्प्याद्येंऽशतः सिद्धसाधनमाह अंशत इति यथाचैतेषां स्वतः प्रमात्वं तैरंगीकृतं तथा सिद्धान्ते दर्श
यिष्यते साध्यविकलत्वमेव दर्शयति ज्ञानत्वस्येति दोषजन्येऽप्यतिरिक्तजन्यत्वमुक्तं अत्रांतरा सिद्धांतिमतमवलंब्य कश्चिच्चोदयति नाप्र

तथाप्रामाण्यमुक्तविधमप्रामाण्येतरत्वे सति ज्ञानत्वन्यूनवृत्तित्वात् प्रत्यक्षत्ववदित्यनुमानं मानमिति केचित्तन्न विक·
ल्पासहत्वात् तथाहि किं तथाविधव्यक्तिवृत्तित्वमात्रं विवक्षितमुतान्यावृत्तित्वे सति तथाविधव्यक्तिवृत्तित्वं नाद्यः अंशतः सि
द्धसाधनत्वात् अनुव्यवसायानुमित्युपमितीनां स्वतः प्रमात्वस्य परैरप्यंगीकारात् न द्वितीयः आद्यप्रयोगे दृष्टान्तस्य साध्य
विकलत्वात् ज्ञानत्वस्य दोषजन्याप्रमाणज्ञानवृत्तित्वस्याप्यंगीकारात् नाप्रमाणज्ञाने ज्ञानत्वस्य वृत्तिस्तस्य ज्ञानाभासत्वा
दिति चेत्तन्मैवं तथासत्यप्रामाण्येतरत्वे सतीति विशेषणस्य वैयर्थ्यात् अप्रमाणज्ञानस्य ज्ञानाभासत्वेनाप्रामाण्यस्य ज्ञा
नवृत्तित्वाभावात् द्वितीयानुमाने च संशयत्वादिना व्यभिचारः तथाहि तदपि ह्यप्रामाण्येतरत्वे सति ज्ञानत्वन्यूनवृत्ति भव
ति न तु भवति ज्ञानहेतुमात्रजन्याश्रयं तिमिरादिदोषजन्याश्रयत्वात् दृष्टान्तस्य साध्यविकलताच्च प्रत्यक्षत्वस्यापि·
परतःप्रामाण्यवादिना ज्ञानहेतुमात्रजन्याश्रयत्वानाश्रयणात् प्रमात्वमेव यस्य ज्ञानमात्रजन्याश्रयं न भवति गुणा·
विशिष्टज्ञानसामग्रीजन्यवृत्तित्वात् तस्य कथं तदवांतरजातिप्रत्यक्षत्वं तद्धेतुमात्रजन्याश्रयं स्यात् अस्ति च परतस्त्वेऽपि प्रमयो

राम·
२२३

माणेति उक्तं हि अविद्यावेद्यैः सहस्रमस्त्यभिमानः एवं प्रकृतदूषणं परिहरतो विशेषणवैयर्थ्यं तथाचैकं संधित्सतोऽपरं प्रच्यवत
इत्याह मैवमिति व्यभिचारमेव स्फोरयति तथाहीति दूषणांतरं चाह दृष्टान्तस्येति तस्यैव विवरणं प्रत्यक्षत्वस्यापीति ननु किमिति प्रत्य
क्षत्वेनांगीक्रियते नहि तत्प्रमात्वमित्यत आह प्रमात्वमेवेति गुणविशिष्टसामग्रीजन्यप्रमाश्रयं प्रमात्वमिति यस्यांगीकारः स कथं
तदवांतरजातिप्रत्यक्षत्वं ज्ञानहेतुमात्रजन्याश्रयमंगीकुर्यादित्यर्थः॥

गुणग्रहणं दोषाभावस्याप्युपलक्षणं एवं स्वतस्त्वलक्षणप्रमाणे दूषयित्वा परतस्त्वे कुसुमाञ्जलीयमनुमानं दर्शयति अनीश्वर
प्रमेति इदं च तत्रत्युक्तं प्रसिद्धमीश्वरप्रमायां बाधासिद्धी मा भूतामिति यद्यप्यत्र दीपावल्यामनुमानदूषणमुक्तं तदुद्दिधीर्षुरत्र
वदति ननु किं ज्ञानव्यक्तेरिति किं ज्ञानत्वाश्रया या ज्ञानरूपिणी व्यक्तिस्ततो भिन्ना प्रमात्वाश्रयः प्रमाव्यक्तिः किं वा नेति विक
ल्पाद्ये व्यभिचारमाह प्रत्यक्षेति द्वितीये ज्ञानरूपायाः प्रमाव्यक्तेर्ज्ञानहेत्वतिरिक्तहेतुजन्यत्वसाधनं व्याहतं ज्ञानं ज्ञानहेतु
त्वानधिकरणजन्यमिति हि तदर्थः स्यादित्याह द्वितीयेपीति तदेतद्दूषयति मैवमिति यद्यपि व्यक्त्योर्भेदो नास्ति तथापि ज्ञान

अनीश्वरप्रमा विज्ञानहेतुव्यतिरिक्तहेत्वधीना कार्यत्वाद्घटवत् ननु किं ज्ञानव्यक्तेः प्रमाव्यक्तितोऽस्ति कश्चिद्वि
शेषः किं वा प्रमाव्यक्तिरेव ज्ञानव्यक्तिः आद्ये प्रत्यक्षज्ञानव्यक्त्या स्पष्टो व्यभिचारः प्रत्यक्षज्ञानव्यक्तेर्विज्ञा
नहेतुव्यतिरिक्तहेत्वधीनत्वाभावात् द्वितीयेऽपि जन्याऽपि विज्ञानरूपा प्रमा न ज्ञानहेतुव्यतिरिक्तहेत्वधीनेति बाध
इति चेन्मैवं ज्ञानव्यक्तेः प्रमाव्यक्तितो भेदाभावेऽपि विज्ञानत्वप्रमात्वधर्मयोर्भेदात् ततश्च घटत्वस्य पृथिवी
त्वप्रयोजकातिरिक्तप्रयोजकत्वसाधनवत् प्रमाया विज्ञानत्वप्रयोजकातिरिक्तप्रयोजकत्वसाधने बाधाभावात् वि
पक्षे च प्रमात्वस्य विज्ञानत्वप्रयोजकमात्रप्रयोज्यत्वात् ज्ञानत्ववत् प्रमा ज्ञानवृत्तित्वं स्यादिति बाधकस्तर्कोऽन्वेयः
ननु ज्ञानसामग्र्या एव तन्निरूपणात् तदतिरिक्तहेत्वधीनत्वं दुर्ज्ञानमिति चेत्

॥ त्वप्रमात्वयोर्भेदात् प्रमाया अपि ज्ञा
नत्वप्रयोजकव्यतिरिक्तप्रयोज्यत्वमुपपद्यते यथा ह्येकस्मिन्नेव घटे द्रव्यत्वपृथिवीत्वघटत्वानां विभिन्नप्रयोजकतया द्रव्यादीना
मपि विभिन्नप्रयोज्यत्वमित्यर्थः ज्ञानहेत्वतिरिक्तहेत्वधीनत्वाभावे च बाधकमाह विपक्षे चेति यदि ज्ञानहेतुमात्रप्रयोज्यं तर्हि ।
तत्प्रयोज्यज्ञानवृत्तिज्ञानत्ववत्प्रमात्वमप्यप्रमायां वर्ततेत्यर्थः ननु साध्यमेवेदं नोपधारयति ज्ञानहेतोरेवानिरूपणादिन्द्रिया
दीनां परस्परव्यभिचारादात्ममनःसंयोगस्य च सुखादिसाधारण्यात् अतस्तदतिरिक्तहेतुरपि दुर्निरूप इति शङ्कते नन्विति ॥

दूषयति मैवमिति अवश्यं तावद्दोषाननुषक्तविज्ञानसामग्रीजन्यत्वम् प्रमायां मन्तव्यं तेन ज्ञानसामग्री तावन्निरूपणीया सा च तन्मते दंड-
चारितां भवितव्यं च तया अन्यथा विलक्षणकार्यादर्शनप्रसंगादिति भावः किमाश्रयज्ञानवेद्यत्वं प्रामाण्यस्य ज्ञप्तौ स्वतस्त्वं किं वा ज्ञानग्राह-
कग्राह्यत्वमिति विकल्पाद्यं दूषयति नाद्य इति नीलसंवेदनस्य स्वप्रामाण्यग्राहकत्वाभावमेवोपपादयति तथाहीति इन्द्रियार्थसन्निकर्षो य-
न्नेह नीश्वरप्रत्यक्षं तदिदं वहिरिन्द्रियस्यांतरस्य वा प्रामाण्येन सन्निकर्षाद्भवेद्यत इति वक्तव्यं प्रत्यक्षत्वादिना तत्र वहिरिन्द्रियग्राह्यत्वं प्रा-
माण्यस्यातद्धर्मत्वादेवासंभवीत्याह न तेनेति नापि मानसत्वं तदा हि प्रामाण्यस्य मनःसन्निकर्षसमये तत्सत्त्वार्थं तदाश्रयज्ञानस्यापि सत्त्वं व-

मैवं स्वतस्त्वं प्रमायाः परतस्त्वं दत्तजलांजलिः स्यात् तदपि हि ज्ञानसामग्रीनिरूपणाधीननिरूपणं तस्य दोषाननुषक्तवि-
ज्ञानसामग्रीजन्यता प्रज्ञानात् तस्मान्नोत्पत्तौ प्रमायाः स्वतस्त्वं नापि ज्ञप्तौ तथाहि नीलसंवेदनस्य प्रामाण्यं नीलसं-
वेदनेनैव वेद्यत इति स्वतस्त्वमुच्यते किंवा तद्वेदनग्राहकमात्रग्राह्यत्वेन नाद्यः तस्य तत्राप्रमाणत्वात् तथाहि
यदेतन्नीलप्रकाशनं प्रत्यक्षं तन्नीलं प्रति तावत् प्रत्यक्षम् इन्द्रियार्थसन्निकर्षोत्पन्नत्वात् स्वप्रामाण्यपरिच्छित्तौ
तु कथं तत्प्रमाणं तस्य बहिरिन्द्रियैरसन्निकर्षात् अपि च तत्प्रत्यक्षं विज्ञानस्यैव प्रामाण्यं गृह्णीयाद् उत तत्फल-
स्य नाद्यः ज्ञानस्य फललिंगानुमेयत्वेन तस्याप्रत्यक्षतया तत्प्रामाण्यस्यापि प्रत्यक्षतानुपपत्तेः॥ ९ ऋब्धं तथा च तत्तदेव

ति

ज्ञानं स्वाश्रितप्रामाण्येन्द्रियसन्निकर्षोद्भवत्वमर्हतीति सिद्धस्वभावात् ज्ञानान्तरस्योत्पत्तौ तु परतःप्रामाण्यप्रसक्तिरिति लिंगादिजन्यत्वाभावा-
च्चानानुमित्यादिरूपताशंकापि किंचेदं प्रामाण्यमिति वा तत्तेन गृह्यते तत्प्रामाण्यमिति वा आद्ये ज्ञाननिष्ठतया अग्रहणात् गृहीतेनस्मिन्
संशयप्रसंगः द्वितीये स्वविशेषितप्रामाण्यग्रहणे स्वग्रहापत्तिः अपि तु यथा तथा भवतु तत्तु कस्य प्रामाण्यं गृह्णातीति भाट्टं प्रति विकल्प-
यति अपि चेत्यादिना तत्फलं प्राकट्यं प्राकट्य लिंगानुमेयं विज्ञानं भाट्टैरभ्युपेयते न चाप्रत्यक्षगतं प्रामाण्यं भवितुं प्रत्यक्षमर्हतीति न
च स्पर्शघ्राणादितुल्यता जातित्वात् जातेरेव व्यक्तिप्रत्यक्षतानियतप्रत्यक्षत्वं वक्ष्यते च जातित्वमतमनंतरमेवेति भावः॥ ७ ॥

प्रतीतेऽपि ३॥

फलगतप्रामाण्यग्रहणपक्षेऽपि किं बहिरिन्द्रियेणान्तरेण वा नाद्य इत्याह फलस्यापीति अर्थनिष्ठत्वादेव नान्तरप्रत्यक्षत्वमपि यदि क।
श्चिदात्मनिष्ठत्वं मन्वीत सुचरितमिश्रमतानुसारेण तथापि स्वप्रकाशत्वादेवाविषयत्वेन तद्गतप्रामाण्यमविषय इत्यपि द्रष्टव्यम ज्ञान
ग्राहकादेव तत्प्रामाण्यग्रहणं ज्ञप्तिस्वतस्त्वमिति द्वितीयपक्षं दूषयति नापि द्वितीय इति दृश्यते हि क्वचिज्ज्ञाने प्रामाण्ये संशयः स न स्या
त् ज्ञाननिश्चायकादेव तन्निश्चयप्राप्तेरित्यर्थः तत्र ज्ञानग्राहकमात्रग्राह्यत्वेऽप्युपपन्नः सन्देहः ज्ञानगततद्धर्मविशेषितत्वस्य ज्ञान।
ग्राहकमात्रग्राह्यत्वेऽपि तत्र संदेहदर्शनादतः प्रशिथिलमूलस्तर्कः हेतुश्च सव्यभिचार इत्यौदयनं परतस्त्वानुमानं केचिद्दूषयां।

फलस्यापि स्वप्रकाशतया बाह्येन्द्रियाविषयत्वात् तद्गतयथार्थत्वलक्षणप्रामाण्यस्यापि बाह्येन्द्रियप्रत्यक्षविषयत्वानुप
पत्तेः नापि द्वितीयः ज्ञानग्राहकमात्रग्राह्यत्वे प्रामाण्यस्य क्वचिदपि ज्ञाने प्रमाणमप्रमाणं वेति संशयाभावप्रसंगात् ननु ज्ञान।
ग्राहकमात्रग्राह्यत्वेऽप्यर्थविशेषितत्वस्य सांशयिकत्ववत्प्रामाण्यस्यापि सांशयिकत्वमुपपद्यते तथा हि कुंभज्ञानस्याम्भोविषयी
भूतत्वेति संशयानाद्दृश्यन्ते जनाः साम्भसाम्भसामपि कुंभानामुपलम्भात् एवं प्रामाण्येऽपि संशयः किन्न स्यादिति चेन्नैवं।
अंभसः कुंभग्राहकसामग्रीमात्रग्राह्यत्वानंगीकारात् अंगीकारे वाऽविशेषेण सकलकलशानां सलिलवत्त्वप्रसंगात् तस्मा
न्नारिकेलफलान्तर्गतसलिलादिवद्भिन्नसामग्रीग्राह्यत्वादेव तत्र संशयः प्रामाण्ये तु न तथेति युक्तमुत्पश्यामः किं च वि
ज्ञानग्राहकसामग्रीमात्रग्राह्यतायां प्रामाण्यस्य शुक्तिकारजतादिबुद्धिष्वपि तद्ग्रहप्रसंगः स्वयं गृहीतमेव तत्॥

बभूवुः तत्प्रसंगादनूद्य दूषयति नन्वित्यादिना ज्ञानग्राहकग्राह्यत्वे समानेऽपि कुंभसलिलयोर्भिन्नसामग्रीग्राह्यत्वात् सोदकेऽपि कुंभे कुत
श्चिन्निमित्तात्सलिलग्राहकसामग्रीवैकल्याद्विषयत्वोपपत्त्वेन संभवत्यपि तावत्यंशे संशयः इह तु न तथा किंचिदस्ति संशयकारण
मिति परिहरति नैवमिति बाधकान्तरमाह किं चेति पूर्वमुत्पत्तिस्वतस्त्वे विभ्रमेऽपि तत्सत्त्वं स्यादित्युक्तं संप्रति ज्ञप्तिस्वतस्त्वे तदुच्यत इ
ति तज्जामिता उत्सर्गतः प्राप्तस्यापि तत्र तस्यापवादमाह स्वतः प्रामाण्यवादी सत्यमिति सत्यमङ्गीकारे

अनंगीक्रियमाणांशमाह बाधकादिति बोधात्मकत्वेन ज्ञानत्वादेव प्रवृत्तिरजतादिबुद्धेरपि प्रमाणताप्राप्ता गृहीतान्तत्वाप्रथोन्यथा
त्वज्ञानैः प्रतीतार्थस्यान्यथात्वबोधकैः बाधकज्ञानैर्हेतूत्थदोषज्ञानैर्हेतुगतदोषज्ञानैश्चापोद्यते बाध्यत इति भङ्गोक्तेरर्थः परतः प्रा
माण्यमापादयन्त निष्ठतामेव समर्थयत एवमिति प्राप्तप्रामाण्यस्यापि बाधकज्ञानादपवादे तत्सद्भावाभ्यां प्रामाण्याप्रामाण्य
व्यवस्थेति परतः प्रामाण्यापत्तिः प्राप्नोतीत्यर्थः ज्ञप्तिस्वतस्त्वानिरुक्तिमुक्त्वा प्रमाणमपि तत्राक्षिपति नचेति रत्नदीपावलीयमत्रमा
न सूचयति ननु प्रमेति स्वतो ज्ञायत इति ज्ञानज्ञापकमात्रात् ज्ञायते परनिरपेक्षेति ज्ञानसामग्रीमात्रादुत्पन्नत्वादित्यर्थः परतः

बाधकादपनीयते यथाहुः तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता अर्थान्यथात्वहेतूत्थदोषज्ञानैरपोद्यते इति तस्माद्
स्वाभाविकमिष्टं प्रसञ्जनमिति चेन्नैवं परतः प्रामाण्यप्रसङ्गात् तथाहि प्रसक्तमपि प्रामाण्यं रजतादिबुद्धिषु बाधकज्ञानादपनी
यत इति बहुता बाधकज्ञानाभावनिबन्धनमेव प्रामाण्यावधारणमभ्युपगतं स्यात् नच ज्ञप्तिस्वतस्त्वे मानमस्ति ननु प्रमा
स्वतो ज्ञायते परनिरपेक्षोत्पत्तिकत्वात् ज्ञानवत् तथा प्रामाण्यं स्वतो ज्ञायते अप्रामाण्येतरत्वे सति ज्ञानैकधर्मत्वात् ज्ञानत्व
वदित्यस्त्येवानुमानमिति चेन्नैवं आद्यप्रयोगे परतःप्रामाण्यवादिनं प्रति हेतोरसिद्धेः दृष्टान्ताभावाच्च नहि परतोत्क
तं प्रमा विपक्षकुक्षिनिक्षिप्ता प्रमा च विहाय ज्ञानस्यापराकोटिरस्ति यादृशं तत्परत्वीत्युपारोहेत् द्वितीये च प्रयोगे प्राभाक
करस्य स्वयंप्रभत्वे ज्ञानैकधर्मभाट्टस्य च ज्ञाततानुमेयत्वधर्मे व्यभिचारः तयोर्ज्ञानैकधर्मत्वेपि ज्ञानग्राहकसामग्रीमात्रग्रा
ह्यत्वाभावात् ॥ ६ ॥

प्रामाण्यवादिनः परनिरपेक्षोत्पत्तिकत्वं प्रमाया असिद्धमिति दूषयति नैवमिति किंच प्रमाणाप्रमाणाभ्यां
देरास्थमेव ज्ञानस्य न त्वप्रमाणवर्गः पक्षः सर्वः इतरस्तु विपक्षः ततो दृष्टान्तोपि नास्तीत्याह दृष्टान्तेति अप्रामाण्येतरत्वे सति ज्ञानैक
धर्मत्वादिति द्वितीयानुमानेपि गुरुमतभाट्टमतयोर्यथायथमनैकान्तिकमाह द्वितीये चेति ज्ञाततयानुमेयं हि ज्ञानं भाट्टमते ततो
ज्ञाततानुमेयत्वं नाम कश्चिज्ज्ञानस्य धर्मोस्ति इत्यर्थः ज्ञानसामग्रीजन्यत्वधर्मे च व्यभिचारो द्रष्टव्यः ॥ ६ ॥ ६ ॥

अथ किमिति तयोरपि न स्वतो ज्ञानमिति तत्राह अन्यथेति यदि हि ज्ञानग्राहकादेव तयोरपि ज्ञानं स्यात्तर्हि ज्ञानवदेव तयोरपि न विवादो वादि
नां स्यात् विवदंते चेत्यर्थः सांशयिकत्वादित्युक्ते भागासिद्धिः स्यात् नहि करतलस्पर्शनादिप्रत्यक्षे मुग्धोपि संदिग्धे तत उक्तमनभ्यासदशाया
मिति विपक्षबाधकस्तर्क इति संबंधः यद्गत्रत्नदीपावल्यां दूषणमुक्तं तदनुवदति ननु नैवमिति प्रवृत्तिसामर्थ्येन विमतमर्थाव्यभिचारि
समर्थप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा ज्ञानाभास इति व्यतिरेकिणानुमानादिवदित्यन्वयिना वा अनभ्यासदशापन्नेषु प्रामाण्यमनुमी
यते संशयाच्च प्रवृत्तिरभ्यासदशापन्नेषु तु तज्जातीयत्वलिंगेन इत्यभ्युपेयत इत्यर्थः क्वचिदनिर्णीतस्य साधारणधर्मदर्शनाद्युपस्थापित।

अन्यथा तत्र वादीनां विप्रतिपत्त्यभावप्रसक्तेः ज्ञप्तिपरतस्त्वे चानुमानं न्यायकुसुमांजलावुदयनः प्रामाण्यं परतो ज्ञा
यते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत् विपक्षे प्रामाण्यसंशयो न स्यात् ज्ञाननिश्चायकादेव तन्निश्चयप्राप्तेर्बा
धकस्तर्कः ननु नैवमनुमानमुदेति धर्मिहेत्वोरसिद्धेः तथा हि प्रामाण्यं प्रवृत्तिसामर्थ्यलिंगावगम्यं भवद्भिरुपगम्यते।
तस्य च लिंगस्य प्रवृत्तिः प्रामाण्यसंशयपूर्विका असंदिग्धे सिषाधयिषाभावात् अनुमानाप्रवृत्तेः तत्संशयश्च क्वचि
न्निश्चयाधीन इति प्रामाण्यसंशयनिश्चययोरन्योन्याश्रयाद् अनवस्थानाद्वा नैकमपि सिद्ध्यतीति चेन्नैवम विकल्पा।
सहत्वात् किं स्वार्थानुमानमसंदिग्धे न प्रवर्त्तते किं वा परार्थं नाद्यः सद्यः समुन्मीलितविलोचनशिखरिशिखरवि
परिवर्त्तमानधूमलेखावलोकनसमनंतरमप्रत्यूहधूमध्वजमनीषासमुन्मेषात् नापि द्वितीयः॥ ——— ॥

तया संशयकोटिनाः भावात् तन्निर्णयस्य च संशयसापेक्षानुमानाधीनत्वात्संशयनिर्णयोः परस्परसापेक्षत्वे परस्पराश्रयात् सं
शयांतरनिर्णयांतरापेक्षायामनवस्थानाच्च नैकमपि सिद्ध्यति लोकसिद्धं च किंचिद्रूपं सर्वत्र प्रमाणतः सिद्धमभिवांछतो नास्ति अ।
तो निर्णीतप्रामाण्याभावाद्धर्म्यभावः संशयाभावाच्च हेत्वभाव इति खंडलार्थः अत्र विकल्पपूर्वकं संशयव्यतिरेकेणापि निश्चयमुप
पादयन्धर्मिहेतू समर्थयते नैवमित्यादिना शिखरी पर्वतः तस्य शिखरमग्रिमभागः अप्रत्यूहं निर्विघ्नं धूमध्वजो वह्निर्मनीषा बुद्धिः
स्वार्थानुमानं च हि तत्साधनादिज्ञानप्रामाण्यानुमानमित्यर्थः

पदार्थोनुमानेपि न संशयपूर्वकत्वनियमः विपर्यस्तं प्रत्यपि प्रयोगादित्याह विपर्यस्तमिति जल्पवितंडयोरिति नहि तत्र संदिहानः
प्रतिवादी यं प्रत्यनुमानं प्रयुंक्ते न अपितु विपर्यस्तः तथा चाह वाचस्पतिः निश्चितो हि वादं कुरुते इति वादेनुसंधान एव वाद्यार्थो वा संशयोस्ति
न त्वितरयोरित्यर्थः ननु संदिग्धे न्यायः प्रवर्तते इति इत्यस्य वचनस्य तर्हि का गतिरित्यत आह संदिग्ध इति नेन न संदेहाभावेऽनुमाननिवृत्तिपरं।
अपितु अनुमानस्थले संदेहोप्यस्तीत्ययोगव्यावृत्तिपरमित्यर्थः अयोगव्यावृत्तिमेवोपपादयति क्वचिदिति यच्च नैवानभ्यासदशायामि
ति विशेषणव्यर्थं व्यभिचाराऽनिवारकत्वाद सिद्धिपरिहाराय च विशेषणप्रक्षेपाप्रयोगादित्युक्तं अनभ्यासदशायामित्यादिना तदनूद्य दू
षयति नचानभ्यासेत्यादिना रूपव्यंजकत्वादित्युक्ते मनस्यनैकांतिकता तदर्थं रूपस्यैवेत्युक्तं तथा चासिद्धिः द्रव्यसामान्यादेरपि व्यंजे

विपर्यस्तमपि प्रतिप्रतिवादिनमनुमानप्रयोगोपगमात् अन्यथा जल्पवितंडयोः प्रमाणतर्काभ्यां स्वपरपक्षसाधनो
पालंभासम्भवात् संदिग्धे न्यायः प्रवर्तते इति वचनस्यायोगव्यवच्छेदपरत्वात् क्वचित्साधकबाधकप्रमाणानुदया।
संदेहसति न्यायप्रवृत्त्युपपत्तेः नचानभ्यासदशायामिति विशेषणस्य वैयर्थ्ये असिद्धिवारकत्वात् नच व्यभिचारवारक
मेव हेतोर्विशेषणमिति नियमः चक्षुस्तैजसं रूपादिषु मध्ये रूपस्यैवाभिव्यंजकत्वात् प्रदीपवदित्यादिचिरंतनानुमानेषु सि
द्धिनिवारकाणां विशेषणानां बहुलमुपलंभात् अपिचासिद्धिनिवारणार्थेपि विशेषणोपादानेन दोषं पश्यामः क्षित्या
दिकं सकर्तृकं शरीराजन्यत्वादाकाशवदित्यादावि व्याप्यत्वासिद्धिरिति चेन्न सेवं तत्राकर्तृकत्वे साध्ये तदेकदेशस्याज
न्यत्वस्यैवोपाधितया विशिष्टस्य व्याप्यत्वासिद्धेः॥९॥ कत्वाच्चक्षुस्तदर्थं रूपादिषु मध्य इत्युक्तं यद्यपि रसाग्राहकत्वे सति रूपव्यंज
कत्वादित्युक्त एव मनस्यपि न व्यभिचारः तथाप्यसिद्धिपरिहारार्थमपि भवति विशेषणमिति दर्शयितुमिदं चिरंतनैर्विशेषणं प्रक्षिप्तमिति
भावः तत्किमनुपपन्नो व्याप्तवचनेनैव साध्योयमर्थ इति मत्वा तं प्रत्यनुपपत्त्यभावं दर्शयति अपिचेत्यादिना दोषं शंकयति क्षित्यादिकमि
ति अत्र ह्यजन्यत्वादित्युक्ते अंकुरादेर्जन्यत्वादसिद्धिः स्यात् तदर्थं शरीराजन्यत्वादित्युक्तं तदत्र यथासिद्धिपरिहाराय विशेषणं कृतं व्याप्यत्वा
सिद्धिः अजन्यत्वस्यैवाकर्तृकत्वोपाधित्वात् इहापि स्यादित्यर्थः न तत्रासिद्धिपरिहारप्रयोजनविशेषणवत्त्वाद्व्याप्यत्वासिद्धिः किंतर्हि तदे

सकामसिद्धिमिति स्वतः प्रामाण्यसिद्धिं परिहरतो व्याप्यत्वासिद्धिरिति बौद्धधिक्कारे उदयनेनोक्तमित्यर्थः परतो ज्ञायमानानामिति ज्ञानग्रा-
हकातिरिक्तग्राह्याणामित्यर्थः प्रकृतानुमानस्य तर्कपराहतीं शङ्कते ननु प्रमाणस्येति येन हि प्रमाणेन प्राथमिकस्य प्रामाण्यं गृ-
ह्यते तत्प्रामाण्यमपि प्रमाणान्तरेणैव सुतरामित्याद्यनवस्थेत्यर्थः उक्तञ्च वाचस्पतिमिश्रैः परीक्षितं तच्चरमं वा ज्ञानमभ्युपेयते अर्थ-
क्रियानिर्भासं वा ज्ञानं तच्च चरमं तान्तरीयकार्थदर्शनं वा तत्स्वतः स्वयमवधृतप्रामाण्यमाकुलसन्देहप्रवर्तकज्ञानपूर्वमनाकु-
लयेदिति ननु कथमवश्यंभावनियमाभावः यावता स्फुरत एव प्रमाणस्य स्वविषयनिश्चायकत्वनियमात् नन्वत एव प्रमाणानाम्

उक्तं हि एकामसिद्धिं परिहरतो द्वितीयासिद्धिरापद्यत इति प्रकृते तु परतो ज्ञानेन सांशयिकत्वमुपाधिः स्फीता-
लोकविपरिवर्तिनां परतो ज्ञायमानानामपि घटादीनां सांशयिकत्वादर्शनात् ननु प्रामाण्यस्य परतो ज्ञानेन
व्याप्तत्वात् प्रामाण्यग्रहणार्थमन्यस्यान्यस्य प्रमाणस्यापेक्षणादतः प्रतिकूलतर्कपराहतं परतः प्रामाण्यानुमानमि-
ति चेत् मैवं मानान्तरस्यावश्यंभावनियमाभावात् न च स्फुरत एव मानस्यार्थनिश्चायकत्वमन्यथा ज्ञाने पन्न-
तरसंदेहापत्तेरिति वाच्यम् ज्ञानतयानुमेयं ज्ञानमिति मतेऽनिलीनस्यापि ज्ञानस्यार्थनिश्चायकत्वात् स्वयंवेदनं सं-
वेदनमिति वदतः प्राभाकरस्यापि मते प्रामाण्यस्य तद्धर्मस्य तद्ग्रहणगुणत्वादेरिव न स्वतः स्फुरणं तस्यापि संवेदनं
(१) वस्तु स्वयमप्रभावतो-
पि भवितव्यमेव स्फुरणेनेति नेत्याह न च स्फुरत एवेति न च वाच्यमित्युक्तं तत्र हेतुः ज्ञानतयेति स्वतः
प्रामाण्येऽपि समानैवानवस्थेत्यपि द्रष्टव्यं भवतु भाट्टान्प्रति अज्ञायमानप्राकाश्यहेतुत्ववादिनो व्यभिचारः स्वप्रकाशवादिनं प्रा-
भाकरं प्रति किं वक्तव्यमित्याह प्राभाकरस्यापीति तत्र किं ज्ञानगतं प्रामाण्यं अर्थप्रकाशानसमसमये ज्ञानेन स्फुरति स्वत एव
वा ततावज्ज्ञानेन पूर्वमेव निरस्तत्वात् द्वितीयं निषेधति न स्वतः स्फुरणमिति कुतो न स्वतः स्फुरणमिति तत्राह तस्यापीति ॥ ६ ॥

ततोऽपि वा किमनिष्टमिति तत्राह तथात्वेचेति तथाप्यपरितुष्यन्नपरमाह ततश्चेति ननु साक्षिवेद्यत्वं विज्ञानवादिनां तन्मते च सा
क्षिणैव प्रामाण्यमपि स्फुरतीति वदतामखण्डितैव व्याप्तिरित्यत आह वेदान्तिनां चेति तेषां सन्देहानुपपत्तिरेव बाधिकेत्यर्थः
एवमुत्पत्तौ ज्ञप्तौ च स्वतस्त्वं दूषयित्वा परतस्त्वं समर्थितं इदानीं व्यवहृतावपि तदुभयं व्याकरोति न च प्रमाणमिति न च वस्तु
ज्ञानमात्राद्धानादयोऽपि तु इष्टसाधनतादिज्ञानात् ततश्च घटज्ञानस्येष्टसाधनतादिज्ञानाधीनव्यवहारजनकत्वं न स्वव्यवहृतौ
परतस्त्वमित्यर्थः लक्षणं तावत्समर्थयते ततावदिति श्लोकेन लक्षणं संगृह्णाति आहुरित्यादिना यद्विज्ञानसामग्रीजन्यत्वे।

तथात्वे चाप्रमात्वस्यापि स्वत एव स्फुरणप्रसंगात् ततश्चाप्रामाण्यं परतः प्रतीयत इति स्वसिद्धान्तभंगप्र
संगः वेदान्तिनां च प्रामाण्यस्य साक्षिवेद्यत्वेन स्फुरणनियमादिदं प्रमाणमप्रमाणं वेति सन्देहो न भवेत् न च प्र
माणं स्वत एव फलं जनयति हानोपादानोपेक्षालक्षणस्य त्रिविधस्यापि फलस्य वस्तुज्ञाना
तिरिक्तगुणदोषप्रमाध्यस्य दर्शपूर्वकत्वाभ्युपगमात् तस्माद्वेदान्तः स्वत एव प्रमाणमिति न प्रामाणिकप्रती
ति यथामवतरति अत्राभिदध्महे तावत्प्रमायाः स्वतस्त्वानिरुक्तिः यतः आहुर्विज्ञानसामग्रीजन्यत्वे सत्य
जन्यतां तदन्यतः प्रमायास्तत्स्वतस्त्वमिति तद्विदः २१ विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्तहेत्वजन्यत्वं प्र

सति तदन्यतः तदतिरिक्तसामग्रीतोऽजन्यता प्रमायास्तत्स्वतस्त्वं (मायाः स्वतस्त्वं नाम न चैतल्लक्षणमव्यापकमसंभवं
प्रमा स्वतस्त्वमिति तद्विद आहुरिति योजना लक्षणवाक्यं विवृणोति विज्ञानेति विज्ञानसामग्रीजन्यत्वे सति विज्ञानसामग्री
त्वानधिकरणजन्यत्वानधिकरणत्वं स्वतस्त्वमित्यर्थः विज्ञानसामग्रीजन्यत्वमप्रामाण्येऽप्यस्तीति परतः प्रामाण्यवादिभि
रस्वीक्रियत इत्यतिव्याप्तिरर्थान्तरता वा स्यात् तन्निवृत्त्यर्थं तदतिरिक्तहेत्वजन्यत्वमित्युक्तम् ॥ ॥ ६ ॥ ॥

ननु कथं नाव्यापकं यावतेश्वरज्ञाने ऽजन्ये व्याप्तिः विशेषणाभावादितित्यत आह नचाजन्यत्वादिति विज्ञानसामग्रीजन्यत्वे सति
तदतिरिक्तसामग्रीजन्यत्वं परं प्रमासु प्रसिद्धं तदत्यन्ताभाववत्त्वं हि लक्षणं एतच्चेश्वरज्ञानेऽस्तीति नाव्याप्तिरित्यर्थः अत्र चाप्रमाण्य
तिरिक्तं सर्वं तस्य समानयोगक्षेमपराभिमतं परतस्त्वं व्यतिरिक्तस्वतस्त्वस्य विवक्षितत्वात् श्लोकविवरणयोः प्रमापदस्य प्रस
क्तोपयोगमात्रनिबन्धनत्वात् अत एव वक्ष्यमाणानुमाने पटादीनां सपक्षीकरणं एवं च सति पटादिष्वव्याप्तिपरिहारार्थं विज्ञान
सामग्रीजन्यत्वग्रहणमिति द्रष्टव्यं स्पष्टार्थं वा विज्ञानग्रहणं प्रमायामुक्तस्वतस्त्वसद्भावेऽनुमानमाह श्लोकेन प्रमेति अत्रेजा

नचाजन्यत्वादव्याप्तिरीश्वरज्ञाने तस्याजन्यत्वेऽपि ज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तकारणजन्यत्वलक्षणवि
शिष्टधर्मवत्त्वाभावात् नाप्यतिव्यापकमप्रमाया विज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तहेतुजन्यत्वात् अस्ति चे
हमानमनुमानं तथाहि प्रमा विज्ञानसामग्रीजन्यत्वे सति नान्यतो जायते व्यतिरिक्तत्वादप्रमातः पटादिवत् २२
प्रमा विज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तजन्या न भवति अप्रमातिरिक्तत्वात् पटादिवत् नच ज्ञानत्वानधिकरण
त्वमुपाधिः ईश्वरज्ञाने साध्याव्याप्तेः नापि ज्ञानसामग्र्यजन्यत्वमुपाधिः यज्ज्ञानसामग्रीजन्यं तज्ज्ञानसामग्री
जन्यत्वे सत्यतिरिक्तजन्यमप्रमाणवदिति व्यतिरेकिव्याप्ताववप्रमात्वस्यैवोपाधित्वात् ॥ यतइत्वं तत्प्रतिज्ञा अप्रमातो

व्यतिरिक्तत्वादिति हेतुः अतिरिक्तसामग्रीजन्या न भवतीत्युक्ते बाधः यत्किंचिद्व्यतिरिक्तसामग्रीजन्यत्वात् तदर्थं विज्ञानसामग्री
जन्यत्वे सतीत्युक्तं नाव त्युक्ते परतस्त्वेऽप्युपपद्यमानत्वात् यथार्थान‾रत्वात् तदर्थमुत्तरे विशेष्यग्रहणं ईश्वरज्ञाने विज्ञानसामग्रीजन्यत्वे
सत्यतिरिक्तसामग्रीजन्यत्वाभावलक्षणसाध्यमस्ति नच ज्ञानत्वानधिकरणत्वस्योपाधिः अतः साध्याव्याप्तेरनुपाधिरित्याह ई
श्वरेति ननु तर्हि ज्ञानसामग्र्यजन्यत्वमुपाधिः तथा चेश्वरज्ञानेऽपि विद्यमानत्वात् साध्याव्याप्तिरिति तत्राह नापीति नायमुपा
धिर्व्यतिरेके सोपाधिकतया साध्याव्यापकत्वादित्याह यज्ज्ञानेत्यादिना ईश्वरप्रमायां चाप्रमा

त्वस्यव्यतिरेकसिद्धिः न चाप्रमाविज्ञानसामग्रीजन्यत्वे सत्यतिरिक्तजन्या न भवति प्रमातिरिक्तत्वात् घटवदित्याभाससमानयोग
क्षेमतादोषान्वयव्यतिरेकबाधात् प्रतियोग्यप्रसिद्ध्या अप्रसिद्धविशेषणत्वाच्च विपक्षे बाधकतर्कमाह विपक्षे चेति यत्तु पूर्वपक्षा
परतस्त्वे नुमानमुदयनीयमुक्तं तत्रापि गौरवतर्कपराहत्या शंकितोपाधितामतिदिशति एतेनेति सम्प्रति पक्षतां चाह प्रमेत्यादिना
ज्ञानहेत्वतिरिक्तहेतुजन्यत्वानधिकरणत्वमात्रसाधने दृष्टान्ते साध्यवैकल्यं अतिरिक्तदोषजन्यत्वादप्रमायास्तन्निवृत्त्यर्थं दोषातिरि
क्तेत्युक्तं दोषातिरिक्तजन्या न भवति इत्युक्ते बाधस्तदर्थं उत्तरं विशेषणं दोषव्यतिरिक्तज्ञानहेत्वतिरिक्तजन्यत्वं दोषजन्यत्वादज्ञा

विपक्षे च विज्ञानसामग्रीमात्रादेव प्रमोत्पत्तिसंभवेन तदतिरिक्तस्य गुणस्य दोषाभावस्य वा कारणत्वकल्पनागौरव
प्रसंगो बाधकस्तर्कः एतेन प्रमा विज्ञानहेत्वतिरिक्तहेत्वधीना कार्यत्वात् घटवदिति योपमुदयनस्य परतस्त्वे पि प्रयो
गः प्रमा दोषव्यतिरिक्तज्ञानहेत्वतिरिक्तजन्या न भवति ज्ञानत्वादप्रमावदिति प्रतिसाधनग्रस्तत्वाच्च न च प्रमात्व
स्य विज्ञानसामग्रीमात्रप्रयोज्यत्वादप्रमाज्ञानवृत्तित्वं स्यादिति वाच्यं तत्र प्रयोजकाभावादेव प्रयोज्यस्याप्रसक्तेः
दोषासहकृतज्ञानसामग्रीप्रयोज्यं हि प्रमात्वं तत्र दोषस्यैव सद्भावात् कथं प्रमात्वस्य वर्तमानत्वसंभावनापि सम्
द्भवेत् दोषस्याप्रमाहेतुत्वेन तदभावस्य गलेपादुकान्यायेन प्रमां प्रति हेतुत्वं स्यादिति चेत् स्यादेवं यद्यनन्यथासिद्धा
वन्वयव्यतिरेकौ कारणत्वावेदकौ स्यातां तौ

नहेत्वतिरिक्ताजन्यत्वाद्भ्रान्तेः प्रमायास्तु भयानभिमतं हि तत्तद्द्वितीये भीष्टसि
द्धिः न च सिद्धसाधनतानिवृत्त्यै प्रथमं विशेषणं अनधिकरणत्वस्य विवक्षितत्वात् न चाप्रमात्वमुपाधिः ईश्वरज्ञाने साध्याव्याप्तेः यत्तु स
तस्त्वे बाधकतर्क उक्तः विज्ञानसामग्रीमात्रजन्यत्वे ज्ञानत्ववदप्रमाणवृत्तित्वमपि स्यादिति तत्परिहरति न चेति प्रयोजकमेव दर्शयन्
तदभावं दर्शयति दोषेत्यादिना अत्रापि पूर्वपक्षोक्तं स्मारयति दोषस्येति नान्वयव्यतिरेकमात्रात्कार्यकारणभावावसायः माभूद्धूम
पैङ्गल्ययोस्तथाभावः स्तौ अन्वयव्यतिरेकाविति किं त्वनन्यथासिद्धाभ्यां न वा तत्र तथाविधाविति परिहरति स्यादेवमिति प्रमोत्पत्तौ यावि रोधि

यथा च न प्रतिबंधाभावस्य कारणता न तथोपपत्तिरनंतरादेव विवरिष्यते यत एवं स्वतः प्रामाण्यं तस्माद्गुणेभ्यो दोषाणामभाव एव परं जायते
ननु प्रमाणोत्पत्तिः ननु तर्हि दोषाभावादेव तु प्रामाण्यं तथापि सेत्स्यति परतः प्रामाण्यविशाधिका विशेष इति तत्राह तदभावत इति दोषाभावा
दप्रामाण्यद्वयस्य मिथ्यात्वसंशयत्वलक्षणस्यासत्त्वमेव जायते अनुत्पत्तिलक्षणाऽप्रामाण्यस्यानाश्रुभावतया दोषाद्युत्पन्नत्वसंभवेन तत्
दभावेन भावस्याप्यसम्भवात् तेन कारणेनोत्सर्गो ज्ञानसामग्रीमात्रप्रयुक्तत्वलक्षणोऽनयोदित अपोदितो न भवतीति भट्टवार्तिका
र्थः भवतु दोषाभावस्य विरोधिप्रतिबंधकत्वं तथापि किमायातं प्रमानुत्पादकत्वे नहि संस्कारस्य स्वजनकानुभवविनाशकत्वमित्येता
माप्रतिबंधकत्वेनोपक्षीणो न कारणमात्रत्वमावेदयतः तथाचाह भट्टपादाः तस्माद्गुणेभ्यो दोषाणामभावस्तदभावतः अ
प्रामाण्यद्वयासत्त्वेनोत्सर्गोऽनपोदित इति नन्वेकस्यापि दोषाभावस्याप्रमाप्रतिबंधकत्वं प्रमाहेतुत्वं च किं न स्यात् एक
स्यापि संस्कारस्यानुभवनाशकत्वस्मृतिहेतुत्वयोरपि दर्शनादिति चेन्मैवं तत्र संस्कारस्यानुभवनाशकत्वेऽपि स्मृतेः संस्का
रातिरिक्तकारणांतरानिरूपणात् उभयहेतुताया अवश्याश्रयणीयत्वात् न च तत्रापि संस्कारनाशात्स्मृतिः किं न स्यादिति
वाच्यं स्मृतिसमुदयव्यतिरेकेण संस्कारनाशस्यैवासंभवात् प्रकृते तु ज्ञानसामग्रीत एव प्रमोद्भवसंभवे दोषाभावस्यापि त
द्धेतुत्वकल्पनानिष्प्रामाणिका तस्मात्प्रमा विज्ञानसामग्रीमात्रादेव जायत इति सिद्धम् तथा प्रमायाः परिपि विज्ञानज्ञापक
वतास्मृतिप्रतिहेतुत्वमपनीयत इत्याशंकावैषम्येण परिहरति नन्वित्यादिना ननु किमिति तत्र कारणांतरानिरू सामग्रीत एव ॥
पणं यावता संस्कारनाश एव स्मृतिकारणं भवत्विति तत्राह न च तत्रापीति नित्यद्रव्येषु गुणनाशस्य गुणांतरोत्पादनियतत्वादिति भावः
एवं तत्रानन्यगतिकत्वमुक्त्वा प्रकृते तदभावमाह प्रकृते त्विति एतेनाप्रामाण्ये दोषाणामन्यथासिद्धिरुदयनाचार्यादिनापोदिता तत्र हे
त्वंतराभावाद्भावहेतुताया निरस्तत्वादिति न च सामग्र्येकत्वे ज्ञानप्रमालक्षणकार्यभेदानुपपत्तिर्बाधिका एकस्मादप्यग्निसंयोगात्पा
र्थिवपरमाणौ रूपरसगंधस्पर्शादाहादीनां बहूनामंगीकारात् प्रागभावभेदस्य च तदभावे कार्याभावलक्षणव्यतिरेकाभावाद्कारण
त्वादुत्पत्तिस्वतस्त्वमुपसंहृत्य ज्ञप्तिस्वतस्त्वमपि निर्वक्ति तथा प्रमेति ॥

यत्तत्राप्युक्तं विज्ञानग्राहकसामग्रीमात्रग्राह्यत्वेन प्रामाण्यस्य संदेहो न स्यात् ज्ञानवदेव निर्णीतत्वादिति तन्निरस्तं परिहरति नचेति तथाहि भवतां धर्मिमात्रग्राहकत्वेनैव प्रमाणं संवेद्यं ज्ञानं धर्मिण्यंशे तमिति स्वीकारात् तथानुव्यवसायज्ञानप्रामाण्यमपि तज्ज्ञानस्फुरणसमयस्य स्फुरति तथा तत्र वौद्धानां धर्मधर्मिभावाद्यपलापायवद्विपुरोपवादिनां स्वप्रकाशज्ञानरूपीनां अप्रामाण्यं च द्रुष्ट्वा विपर्यासः तथानुमित्युपमित्योश्च भवदभिमतस्वाभाविकमानभावयोश्चार्वाकवैशेषिकयोर्विपर्यासः यथावा प्राभाकरार्कबंधुप्रभृतीनां स्वरूपभेदवादिनां स्वरूपे स्फुरत्यपि भेदाग्रहात् संदेहविपर्ययौ तथात्रापि किं न स्यातामित्यर्थः समाधानसाम्यं दर्शयितुं तत्त्वेनैव समाधानमुद्भावयति स

नचैतथात्वे विज्ञाने इव प्रमाणमप्रमाणं वेति संशयानुदयप्रसंगः स्वतःप्रमाणत्वेन भवदभिमतधर्मिज्ञानेऽनुव्यवसायेच स्फुरत्यपि सुगतमतानुसारिणाम प्रमाणमेवेति विपर्यासदर्शनात् स्वतःप्रमाणत्वेन भवदंगीकृतानुमित्यादाव प्रवृ पि ज्ञायमाना सा चार्वाकस्य प्रामाण्ये विप्रतिपत्त्युपलब्धेः स्वरूपभेदवादिनां च गृह्यमाणेपि स्थाणोः स्वरूपे स्थाणुर्वा पुरुषो वेति संदेहं पुरुष एवेति विपर्ययस्य चोपलंभात् सत्यपि प्रतिभासपुष्कलकारणे प्रतिबंधकदोषादिसमवधानात् तत्र तत्र संशयविपर्ययासयोरुपपत्तौ प्रकृतेपि समं समाधानमन्यत्राभिनिवेशात् न च ज्ञानज्ञापकादेव प्रामाण्यग्रहणे मिथ्यारजतादिवुद्धिषु प्रामाण्यग्रहणप्रसंगः प्रसक्तस्यापि प्रामाण्यग्रहणस्य कारणदोषावगमबाधबोधाभ्यामपनयात् न च ताभ्यामपनये तयोरभावज्ञानस्य प्रामाण्यग्रहहेतुत्वापत्तौ परतः प्रामाण्यापत्तिरिति वाच्यं दोषबाधबोधयोरनुदयमात्रेण प्रामाण्यस्फुरणोररीकरणात् ॥ ९ ॥ त्यपीत्यादिना प्रतिभासस्य पुष्कलकारणे सत्यपि प्रबल

प्रतिबंधवशात् तत्र तत्र संशयाद्युत्पत्तिरत्रापि समानेत्यर्थः यत्तु ज्ञप्तिस्वतस्त्वेन बाधकमुक्तं तत्परिहरति नचेति हेतुमाह प्रसक्तस्यापीति ननु कारणदोषज्ञानबाधकज्ञानाभ्यां प्रसक्तस्यापि प्रामाण्यग्रहणस्यापनयस्तर्हि तयोरभावज्ञानस्य प्रामाण्यज्ञाने हेतुत्वस्यादिति युक्तमिति तत्राह नच ताभ्यामिति न वयं प्रामाण्यज्ञाने कारणदोषज्ञानबाधकज्ञानयोः प्रामाण्यावगमे तयोरभावज्ञानं कारणमाश्रयामहे अपितु तज्ज्ञानानुदयमात्रं तेन न परतः प्रामाण्यापत्तिरित्यर्थः उररीकरणं स्वीकारः ॥ १० ॥ १० ॥

दोषाभावादिज्ञानस्य प्रामाण्यज्ञानहेतुताभावं भट्टाचार्य्यवचनेन द्रढयति तथा चाहुरिति यदा स्वतः प्रमाणत्वमस्याश्रीयते तदान्य-
ज्ञानग्राहकातिरिक्तं नैव मृग्यते ननु दोषाभावज्ञानमतिरिक्तं मृग्यत इति तत्राह निवर्त्तत इति दोषज्ञानानुदयमात्रात् अयत्नतो मि-
थ्यात्वशंका निवर्त्तत इत्यर्थः न च दोषज्ञानानुदयमादायैव परतस्त्वापत्तिरिति वचनीयं विरोधिबुद्ध्युदयप्रतिबन्धकतयैव तत्कृतस-
माधानत्वात् दोषाभावावगमस्यापि प्रामाण्यहेतुत्वेऽनवस्थाबाधकमाह अन्यथेति येन हि दोषाभावज्ञानेनास्य प्रामाण्यमवग-
म्यते तत्प्रामाण्यावगमार्थमपि दोषाभावज्ञानान्तरं गवेषणीयमेवंकारमुपर्य्युपरीत्यनवस्थेत्यर्थः यत्तु ज्ञप्तिपरतस्त्वेऽनुमानमुदयनीयं
तत्राप्युक्तं दूषणमतिदिशति। तथाचेति तथाचेत्येतदेवोद्घाटयति स्वतःप्रमाणत्वेनेति ननु यद्यनुमानादि स्वतःप्रमाणमिति प्र-

तथाचाहुर्भट्टपादाः यदा स्वतःप्रमाणत्वं तदान्यन्नैव मृग्यते निवर्त्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः इति अन्यथा
तदभावावगमस्यापि प्रामाण्यस्फुरणहेतुत्वेन तदभावावगमस्यापि प्रामाण्यावगमाय तत्तदभावावगमान्तराणा-
मप्यवश्याश्रयणीयत्वादनवस्था तथाचानभ्यासदशायां सांशयिकत्वादिति हेतोः स्पष्टमनैकान्तिकत्वं स्वतःप्रमाण-
त्वेन भवदभिमतेष्वेवानुमानोपमानानुव्यवसायधर्म्यव्यवसायेषु व्यभिचारस्य दर्शितत्वात् उक्तंचैतदनुमानादेः
स्वतःप्रामाण्यमाचार्य्यवाचस्पतिना न्यायवार्त्तिकटीकायाम् विमतं ज्ञानं समर्थव्यभिचारि समर्थप्रवृत्तिजनक-
त्वात् यदि पुनरेवं नाभविष्यन्नसमर्थाप्रवृत्तिमकरिष्यत् यथा प्रमाणाभास इति व्यतिरेकी॥ ॥६॥ ॥

रैरंगीकृतं स्यादयं मनोरथस्तदेव तत्कुत इति तत्राह उक्तंचैतदिति प्रमाणतोऽर्थप्रतिपत्ताविति प्रथमभाष्यव्याख्यानावसर इति शे-
षः समर्थप्रवृत्तीति फलाभिसंधिप्रवृत्तिजनकत्वादित्यर्थः व्यतिरेकव्याप्तिं दर्शयति यदि पुनरेवमिति अभविष्यदिति च क्रियाति-
पत्तौ लृङ्रूपं अत्र चोपेक्षाज्ञानानां पक्षत्वेनानुपादानान्न भागासिद्धिः व्यतिरेकी सर्वत्र सपक्षाभावमभ्युपेत्य वर्त्तत इति नास-
धारणानैकान्तिकता ननु नास्त्येव वादी यः प्रामाण्यनिश्चये विप्रतिपद्येत न हि प्रामाण्यं स्वीकृत्य तन्निश्चये विप्रतिपत्तिः स्वीकार-
स्य निश्चयमूलत्वात् नाप्यस्वीकृत्य प्रमाणशून्यविप्रतिपत्तेः सर्वत्र सुलभतया सर्ववादविधिनिषेधप्रसंगात्॥ ॥

१

वि.सु.
टी.न.
१२०

अनिश्चितेतु प्रामाण्येन तत्तद्रूपसंदेहोपि क्वचिदुर्लभः विशेषस्मृतेरभावात् तस्मादेकत्वाच्च संशयानां नापि सर्वत्राप्रामाण्यप्रसंज
नं प्रामाण्यग्रहणोपायनिराकरणस्याप्रामाण्येपि तुल्यत्वात् नह्यस्ति प्रामाण्यादिकं तन्निश्चयश्च तदुपायस्तच्चिंतामहे इति एवं चान्व
योस्त्येव तत्कथं केवलव्यतिरेकीत्याशंक्य संप्रत्युत्तरमाह अन्वयव्यतिरेकीति नन्वनुमानमेव कथं स्वतःप्रमाणं यद्दृष्टांतादन्वयित
मित्याशंक्य तत्त्वापि तदीयमेव ग्रन्थं पठति तथानुमानस्येति परितः सर्वप्रकारेण निरस्ता समस्तविभ्रमाशंका यस्येति विग्रहः अनु
मेयेनाग्न्यादिना यल्लिंगमव्यभिचारितेनोत्पन्नत्वात् प्रत्यक्षज्ञानं तद्यथार्थं तदुत्पद्यमानमपि न गृहीताव्यभिचारादुत्पद्यते अपितु स
त्तामात्रेणावस्थितादेव एवमिन्द्रियाणीत्यपि न गृहीताव्यभिचाराणि व्यभिचारीणि वार्थेन शाब्दज्ञानं तु नार्थादुत्पन्नं न च शब्दस्या
र्थाव्यभिचारस्तस्मात्तत्तयोः स्वतोऽव्यभिचारग्रहणमिति प्रवृत्तिसामर्थ्येन ज्ञातीयत्वेन वा अर्थाव्यभिचारायानुसरणीय अनुमाने

अन्वयव्यतिरेकी वा अनुमानस्य स्वतः प्रमाणतया अन्वयस्यापि संभवात् तथानुमानस्य तु परितो निरस्तस
मस्तविभ्रमाशंकस्य स्वत एव प्रामाण्यम् अनुमेयाव्यभिचारिलिंगसमुत्थत्वात् एतेनोपमानव्याख्यानमित्या
दि स्वत्रापि पक्षसाधनत्वाच्च विवादस्थले प्रमात्वविज्ञानग्राहकसामग्रीमात्रग्राह्यं अप्रमामात्रवृत्तित्वानधि
करणत्वे सति ज्ञानैकवृत्तिजातित्वात् ज्ञानत्ववत् ॥

उपमानानुव्यवसायधर्मिज्ञानानां धर्मिज्ञाने स्वत एव तद्व्याप्तिपक्षधर्मत्वग्राहकेणैवानुमानेक्षणतः स्वरूपतश्च व्यभिचाराशं
का निरासाद्धुपमाने व्यतिदेशवाक्यसादृश्यज्ञानयोः प्रामाण्यावधारणे तत्त्विरासात् अनुव्यवसाये व्यज्ञानानुव्यवसायादित्यर्थः ए
वमनैकांतिकतामुद्धारात्मनि पक्षितामप्याह सत्रापि पक्षसाधनत्वाच्चेति विवादस्थलइति अनुमित्यादिव्यतिरिक्तस्थलइत्यर्थः
इतरस्यांशतःसिद्धसाधनतापातादिति यतः प्रामाण्यवादिनोऽप्यंतरतानिरूप्ये मात्रग्रहणगुणत्वादिव्यभिचारवारणाय ज्ञानैकवृत्तीत्युक्तं
अप्रमात्वे संशयत्वादिव्यभिचारनिरासार्थं मप्रमावृत्तित्वानधिकरणेत्युक्तं साधनवैकल्यनिरासार्थं मात्रग्रहणं प्रमामात्रवर्तितामा
मान्यत्वादिना व्यभिचारनिरासार्थं जातिग्रहणं तस्यान्योन्याभावत्वेन प्रतियोगिज्ञानापेक्षत्वेन विवक्षितत्वात् ॥ ० ॥

राम.
१२०

उद्भावनीयां विशेष्यासिद्धिं शङ्कते ननु कथमिति साक्षात्कारित्वप्रमात्वयोः परापरभावाभावं सत्त्वोपपादयति तथाहीत्यादिना अत्र साक्षात्का-
रित्वं किं परं व्यापकं प्रमात्वमपरं व्याप्यमिति मतं विपरीतं वा नाद्य इत्याह यदीति साक्षात्कारित्वव्याप्यत्वे प्रमात्वस्य तद्रहितेषु परोक्षानु-
मानादिषु प्रमात्वं न स्यादस्ति च तत् तेन न व्याप्यमित्यर्थः द्वितीयमाशङ्क्य दूषयति अथापरमित्यादिना यदि हि साक्षात्कारित्वं प्रमात्वाव्याप्यजा-
तिस्तदा तद्रहितेषु विभ्रमेषु साक्षात्कारित्वं न स्याद्यदि स्यात्तर्हि तद्व्यापकं प्रमात्वमपि स्यादित्यर्थः ततः परापरभावशून्ययोरेकत्र वृत्तौ
संकरः स्यात्स च जातिबाधकः पथ्यावस्थातिसंकर इति संकरान्तरमाह किंचेति यदि प्रमात्वं जातिस्तर्हि जातिसंकरपरिहाराय विभ्रमेष्व-
प्रमात्वाधिकरणेषु सा नेष्टव्या ततश्च सर्वज्ञानानां धर्म्यंशे प्रामाण्यं प्रकारे रजतादौ विपर्यय इति यौक्तिकपरिभाषा निरर्थका स्यादि-

ननु कथं प्रमात्वं जातिः साक्षात्कारित्वेन तस्य परापरभावासंभवात् तथाहि यदि साक्षात्कारित्वं परं तदा तदपरसामान्यस्य प्रमा-
त्वस्य परसामान्याविनाभावनियमात् तस्यैव प्रमा साक्षात्कारिण्येवेत्यनुमानादेः परोक्षस्याप्रमात्वमेव भवेत् अथापरं तदा सा-
क्षात्कारित्वस्य प्रमात्वाविनाभावादिदं रजतमित्यादिसाक्षात्कारिणो विभ्रमस्य प्रमात्वप्रसंगः किंच यदि प्रमात्वं जाति-
स्तदा सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय इत्येषा परिभाषा परिलुप्येत एकस्यैवेदं रजतमिति ज्ञानस्य धर्म्यंशे प्रमात्व-
मप्रमात्वं चेतरांशे इति जातिसंकरप्रसंगादिति चेन्न मैवम् साक्षात्कारित्वस्य रजतादिविभ्रमावृत्तित्वात् न च तद्व्यवहार-
स्येन्द्रियसंप्रयोगजन्यत्वोपाधिमात्रेणोपपत्तेः धर्म्यंशे प्रमात्वव्यवहारस्य चाबाधितानुभूतित्वोपाधिनिबंधनतयापि संभवा-

त्यर्थः साक्षात्कारित्वमपरं प्रमात्वं परं विभ्रमेषु च साक्षात्कारित्वव्यवहारस्तु औपाधिकस्ततो न जातिसंकर इति परिहरति मैवमिति
प्रमात्वाप्रमात्वसंकरं परिहरति धर्म्यंश इति न चाबाधितानुभूतित्वसंभवेन ह्यन्यया जातिरपि तत्र भवेदिति वाच्यं प्रसाधने संकरबाधात्
प्रसंजने विपर्ययपर्यवसानात् न तावदिदं प्रयोजकं मीमांसकानां यथाह सूत्रकारः अर्थेऽनुपलब्धे तत्प्रमाणमिति तथा तद्व्याख्याका-
रोऽपि असन्निकृष्टेऽर्थे ज्ञानमिति संशयविपर्ययस्मृतिव्यतिरिक्तज्ञानानि स्वतदतिरिक्तवृत्तित्वानधिकरणजातिमन्ति जातिमत्वात्सं-
प्रतिपन्नवदिति च प्रमात्वजातावनुमानं अत्र चैतदवसेयं परसिद्धान्तमाश्रित्यैवं जातिसंकरपरिहार इति यतो विज्ञानत्वमधिष्ठान

१

चि·सु· टी·न· १२१

धियामारोपितेत्युच्यते अविद्यापरिणामत्वाद्विज्ञानाभासतामतायेन यत्तत्र विज्ञानं तत्प्रमाणमुपेयते अप्रमाणं न विज्ञानं न तत्कृतसंकर संभवः ननु तर्हि सर्वमेव ज्ञानं प्रमाणमप्रमाणं च ज्ञानाभास इति ज्ञानस्य परतोऽप्रामाण्यमिति वचसः कोऽर्थः न कोपि विज्ञानपरतः प्रमाणं अपि तु स्वत इत्येतावदुपपादनीयं अथवा अप्रामाण्यं परत इत्यस्यैवार्थः पर्यवसितोऽर्थः यद्विज्ञानव्यतिरिक्तसमवाय्यप्रामाण्यमिति सामग्रीभेदस्य कार्यभेदनियमात् प्रमायाश्च ज्ञानविशेषत्वस्यासिद्धेरिति न च सर्वप्रत्ययानां यथार्थत्वेऽख्यातिमतापातः अविद्यापरिणामरूपभ्रमारोप्ययोरंगीकारेण ततो विशेषादिति नन्वेकत्रोपाधिनिबंधनश्चेत्प्रामाण्यव्यवहारः सर्वत्र तन्निबंधन एव भवतु किमित्यङ्गीकरणीयकल्पनमिति तत्राह नचैवमिति तत्र किं कल्पकं नास्तीत्युच्यते अन्यथा सिद्धिर्वा प्रथमे प्राह प्रमिणेता। मीति एषसत्त्वसर्गः यदनुवृत्तव्यवहारस्यानुवृत्तालंबनमिति तच्चेत्कथमपि दुःसंपादं तदात्यैवाश्रीयते साधारणशब्देन यथासास्नादीनां

नचैवं सर्वत्रोपाधिनिबंधन एवास्तु प्रमाव्यवहारः कृतं जातिकल्पनयेति वाच्यम् प्रमितो मीत्यबाधितानुगतव्यवहारस्य गौगौरितिव्यवहारस्येव जातिमंतरेणानुपपत्तेः उपाधिमाद्यजातिप्रत्याख्यानस्य गोत्वादिष्वपि तुल्यत्वात् न स्याद्यत्र व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः रूपहानिरसंबंधो जातिबाधकसंग्रह इत्युक्तबाधकानामन्यतमोपि बाधको न प्रसरति तत्र जातिनिमित्तो व्यवहार इतरत्र तूपाधिनिबंधन इति विभागो द्रष्टव्यः॥ ९ संभवति चेदानुवृत्तोऽर्थः तत्रा।

पिवक्ष्यमाणबाधकाभावे जातित्वमेवेति भावः द्वितीये प्राह उपाधीति यदि हि संभवेत्युपाधिना जातिप्रत्याख्यानं तदा गोत्वादिष्वप्यना। श्वासः स्यात् तत्तद्व्यंजकस्यैवोपाधेः संभवादित्यभिप्रायः ननु तर्हि पाचकादावपि किमिति जातिर्न कल्प्यते अस्ति हि अनुवृत्तप्रत्यय इति तत्राह तस्मादिति यत्रैकैव व्यक्तिः यथाकाशत्वादौ न तत्र जातित्वकल्पना अनुवृत्तप्रत्ययहेतुत्वाभावात् अनेकसमवेतत्वाभावाच्च तस्य च तल्लक्षणत्वात् तथा यत्र तुल्यव्यक्तित्वं यथा कुम्भत्वकलशत्वयोः तत्रोभयोर्जातित्वे एकयैवानुगतव्यवहारसिद्धेः इतरस्यापर्यायत्वाविलयप्रसंगात् तथा यत्र संकरप्रसक्तिः परस्परव्यभिचारिणोरेकत्र स्थितिर्यथा दंडित्वकुंडलित्वयोस्तत्रापि न जातित्वं प्रथममस्य दूषणत्वं स्पृष्ट्वा परस्परपरिहारेणैव वर्तमानतयावधृतस्य भावयोरेकत्र प्रतीतिरूपत्वद्यमाना मानमेव ध्येति वत हि रुद्धार्थविषयतया अप्रमाणी

प्राम· १२१

नीतिप्रमाणाभावादेव तदभावः परस्परपरिहारेण वर्तमानयोः सामान्ययोरेकत्र समावेशेन तज्जातीयविरोधोच्छेदापत्तिश्चेति तथा यत्रान
वस्थाप्रसक्तिः यथा सत्तायां सत्तास्वीकारे तत्रापि न जातिकल्पना यत्र रूपहानिप्रसक्तिः गगनत्वादिनाः नित्यत्वहानादिना यथा पाचकत्वादौ यथा
वा विशेषेषु तत्रापि न जातिकल्पना यत्र जातिकल्पनायां व्यक्त्या सह संबंधाभावः यथा समवाये जातिकल्पनायां समवायाभावात् जातित्वत्वोस्य
तन्नियमात्तत्रापि जातिरिति किरणावलीकारसंगृहीतजातिबाधकानां अन्यतमस्यापि यथाभावस्तत्र जातित्वमितरत्रोपाधित्वमिति खंडलार्थः
प्रमात्वजातिसमर्थनस्य प्रकृतोपयोगं दर्शयितुमुपसंहरति तस्मादिति तुल्लिपरतस्त्वे बाधकमाह विपक्षे चेति पूर्वपक्ष्याशयमनूद्य दूषयति।
तत्वेत्यादिना ननु भवतु तदस्तित्वलोभात् ज्ञानस्य स्वतः स्फुरणप्रामाण्यन्तु किमिति न परतः स्फुरतीति प्राभाकरमतिपूर्वोक्तं स्मारयति पूर्वपक्षीअ

तस्माज्ज्ञानैकनिष्ठजातित्वादिति न विशेष्यासिद्धो हेतुः विपक्षे चानवस्थाप्रसंगो बाधकस्तर्कः न च निलीनस्यैव प्रमाणस्यार्थे
व्यवहारजनकत्वोपपत्तेर्नानवस्थेति वाच्यं तथात्वे निश्चायकप्रमाणानुदये तदस्तित्वस्यैव निश्चेतुमशक्यत्वात् अस्तु तर्हि ज्ञान
स्य स्वत एव स्फुरणं तथापि तत्प्रामाण्यं तद्गतगुणत्वादिवदन्यत एव स्फुरिष्यति को विरोध इति चेत् मैवं तस्मादित एव प्रमाणत्वेन
स्फुरणे तद्विषये निःशंकप्रवृत्त्यनुपपत्तेः नहि ज्ञानमित्येतावता प्रवृत्तिः मरुमरीचिकादौ सत्यपि विज्ञाने तदप्रामाण्यनिश्चये प्रवृ
त्त्यदर्शनात् अस्तु तर्ह्यप्रामाण्यास्फुरणे प्रामाण्यस्फुरणमन्तरेणापि ज्ञानमात्रात्प्रवृत्तिरिति चेन्मैवं विज्ञानस्य प्रामाण्याप्रामाण्य
योरस्फुरणे संशयान्निःशंकप्रवृत्त्यनुपपत्तेः अस्ति चान्यासदृशायां नववनस्थलीस्थितेषु फलितरसालादिषु तत्फलादाने क्वो
निःशंकप्रवृत्तिः अपि च त्वयापि पारलौकिकफलसाधनेषु निःशंकप्रवृत्तिः प्रामाण्यनिश्चयाधीनाभ्युपगता॥ तर्हीति अर्थेत्

निःशंकप्रवृत्तिः प्रथमतः प्रमाणतयास्फुरण एव घटते नेतरथेति परिहरति मैवं तस्मादितइति तद्विषये तस्य ज्ञानस्य विषय इत्यर्थः एतदेवावि
पक्षे बाधकेन विवृणोति नहीति मरुभूमिषु मरीचिका मरुमरीचिकाः नन्वप्रामाण्यस्फुरणादेव तत्र प्रवृत्त्यभावः न प्रामाण्यास्फुरणात् प्रामाण्या
स्फुरणेपि प्रवृत्तिर्घटत इति प्रसक्तं तत्किं केन संगतमिति शंकते अस्तु तर्हीति प्रामाण्यास्फुरणेन निःशंकप्रवृत्तिरुपपन्नेति परिहरति मैवं वि
ज्ञानस्येति ननु ज्ञानोदयसमसमयमेव निःशंकप्रवृत्तिः क्व दृष्टा यद्बलादिदं साध्यत इति तत्राह अस्ति चेति रसाल आम्रः अपि च त्वयापि पारलौ

किकसाधनेष्विहलौकिकेषु अभ्यासदशापन्नेषु च निःशंक
प्रवृत्तिः प्रामाण्यनिश्चयाधीनैवेति स्वीकृता तत्साम्यात्त्वं

निःशंकप्रवृत्तिस्थलेषु शक्यं प्रामाण्यनिश्चयाधीनत्वमनुमा
तुमित्यभिप्रेत्याह अपि च त्वयेति॥

ननु संशयादपि निःशंकप्रवृत्तिः कृष्यादौ दृष्टा इति सव्यभिचारइत्यत आह नच कृष्यादाविति एवं पारलौकिकेषु निःशंकप्रवृत्तेर्निर्णयपूर्व कत्वस्य व्याप्तिनिश्चयात् सर्वत्रैवं शक्यानुमानमित्याह एवं च यत्र यत्रेति यदि च संशयात् प्रवृत्तिस्तदा संशयस्य कोटिद्वयसमानत्वात् प्रवृत्ति वन्निवृत्तिरपि स्यात् नचानर्थजनत्वाद्वैधर्म्यमात्रत्वात् अथाप्रामाण्यानिश्चयाच्च निवृत्तिः प्रामाण्यानिश्चयात्प्रवृत्तिरित्यपि पश्यतस्त्वा न्निःशंकप्रवृत्तिः प्रामाण्यनिश्चयाधीनैवेत्यभिप्रेत्याह अपरथेति यदत्र कुसुमाञ्जलावुदयनेनोक्तमिति सचुरसमर्थप्रवृत्तेः स्वतः प्रा माण्यानधीनतामुपपादयतो कंकटेति प्रवृत्तिर्हीनसामुपक्रमेच्छा च प्रवृत्तेः कारणं सा च समीहितोपायताज्ञानमपेक्षते तच्चेष्टसाधना तीयत्वलिंगानुमवसोऽपीन्द्रियसन्निकर्षात् प्रामाण्यग्रहणं तु न कुत्राप्युपयुज्यते उपयोगेऽपि वास्तवत इति कुत एतदिति तदपि न स्कन्दस्वपुरतः कस्तकवर्णमंतुयतः सर्वांगोद्घाटनमिवयतः समीहितसाधनताज्ञानमेव प्रमाणतयावगम्यमानमिच्छाजनयति

नच कृष्यादौ संशयेऽपि प्रवृत्तिर्दृष्टेति वाच्यं तत्र निःशंकप्रवृत्तेरभावात् एवं च यत्र यत्र निःशंकप्रवृत्तिः तत्र तत्र प्रामाण्य निश्चयाधीनत्वमेव स्वस्मादुपगन्तव्यम् अपरथा प्रामाण्यानिश्चयान्निवृत्तेरपि प्रसंगात् नच फलेऽपि परत — स्त्व ज्ञेयाभिव्यक्ति लक्षणफलस्य ज्ञानमात्रादेव सिद्धेः उपादानादीनां पुनरिष्टसाधनादिज्ञानाधीनत्वात् द्विविधप्रमाणस्य तत्रापि फल जनकत्वं स्वत एव तस्मादबाधितविषयगुणगणमनपेक्ष्यैव दोषाभावस्य शङ्कैव स्वार्थमावेदयतीति वेदान्तादिति सिद्धं ॥ ५॥

इत्यत्रैव स्फुटं स्वतः प्रामाण्योपयोगः किंच क्वचिदपि चेन्न निःशंकसमर्थप्रवृत्तिः संशयादुत्पद्यते तर्हि सर्वत्रैवं तन्निष्ठाभावसंभवात्। प्रामाण्यनिश्चयो निरर्थकः अनिश्चितत्वस्य सत्त्वमेव दुर्लभमिति प्रामाण्यस्य जलाञ्जलिरेव दत्तः स्यादिति एवमुत्पत्तौ ज्ञप्तौ च स्वतस्त्व मुपपाद्य व्यवहारेतो स्वतस्त्वमुपपादयति नच फलेऽपीति यदि तावज्ज्ञानानां ज्ञेयाभिव्याप्तिः फलं यथाहुः ज्ञेयाभिव्याप्तितो यस्मान्नच ज्ञानात्फलान्तरमिष्यते इति तस्य फलं ज्ञानमात्रादेव न पुनरन्यनिबंधनमित्यर्थः अथोपादानादिकं सर्वत्र फलविज्ञानस्य तच्चेष्टसाध नादिज्ञानाधीनमिति परतस्त्वं पुरस्तादेव वर्णितमिति तत्राह उपादानादीनामिति नवस्तुमात्रज्ञानफलमुपादानादि अपितु गुणदोष माध्यस्थ्यज्ञानानां तेषां च स्वत एव तज्जनकत्वमिति तत्रापि वर्णितस्वतस्त्वमव्यभिचरतीत्यर्थः वादार्थमुपसंहरन् समन्वयोपयोग

इतिस्वतन्त्रपरितःप्रसाधितं प्रमाणमात्रस्यस्वतःस्वतो यद्वा निषिद्धं पूर्वदोषकक्ष्येषु लीलया समस्तं वेदान्तवचस्सु सिध्यति स्वशक्तौ
वेदान्ताः स्वार्थमावेदयन्तीत्युक्तं तत्र स्वस्वरूपसहकार्यतिरिक्तशक्तिसहिष्णु वस्तु लौकिकाः प्रत्यवतिष्ठन्ते नन्वित्यादिना समवधानमे
लनं तत्र किं कार्योत्पत्तिप्रयोजकधर्ममात्रं शक्तिः किं वातीन्द्रियत्वे सति तादृशो धर्मः किं वा मृदादिगतातीन्द्रियप्रयोजकधर्मविशे
षो वा मृदादिस्वरूपमात्रगतस्तादृशो वा प्रथमे न विवादः घटत्वाग्नित्वादिजातीनामङ्गीकारात् द्वितीयेपीश्वरेच्छादीनामङ्गीकारा
द विवादः तृतीयेपि कालादिसंयोगस्य मृदादावङ्गीकारादविगानमेव चतुर्थेऽस्य तत्राह तत्र प्रमाणाभावादिति तत्र किमर्थापत्ति
रनुमानमागमो वा प्रमाणं तत्रार्थापत्तिं द्विधा विकल्प्य दूषयति तथाहीत्यादिना कार्योत्पत्त्यनुपपत्तिर्वा दृष्टस्योपादानं दृष्टादि

ननु स्वरूपसहकारिसमवधानातिरिक्तां शक्तिमेव न जानीमः तत्र प्रमाणाभावात् तथाहि स्फोटादिलक्षण
कार्यान्यथानुपपत्तिस्तत्र प्रमाणमुतोपादानोपादेयभावनियमानुपपत्तिः नाद्यः स्वरूपादेव पावकादेः प्रति-
बन्धकाभावादिसहकार्युपबृंहितात् स्फोटादिलक्षणकार्योत्पत्त्युपपत्तावतीन्द्रियशक्तिकल्पनानुपपत्तेः न
चाभावस्याकारणत्वात्प्रतिबन्धकाभावो न सहकारीति साम्प्रतं किमन्वयव्यतिरेकित्वं नास्त्युताभावस्याकारणत्वे
ऽतिप्रसक्तिः नाद्यः भाववदभावस्यापि कार्यान्वयव्यतिरेकित्वात् न द्वितीयः ॥ ((दृष्यादेर्न पुनस्तिलादीनिति तिलाद्येव

तैलस्य न पुनर्दृष्यादीनीति योऽयं नियमस्तदनुपपत्तिर्वेत्यर्थः स्यादेतत् यदि स्वरूपसहकारिसमवधानमात्रात्कार्योत्पत्तिः प्रतिबन्ध
दशायामपि किमिति नोत्पद्यते स्फोटादिर्न हि तदाग्निरनग्निः सहकारिणो वैधनादयोऽनिन्धनादयः तस्मात्तत्र प्रतिबन्धात्कार्यनो-
त्पद्यते सैव शक्तिरित्यनुपपत्त्यैव कार्योत्पत्तिरन्तरेण शक्तिमिति तत्राह प्रतिबन्धकाभावादीति एतदुक्तं भवति प्रमाणद्वयविरोधोऽ
र्थापत्तिः यथा देवदत्तस्य जीवनग्राहकस्य गृहाभावग्राहकस्य च विरोधो बहिर्भावं कल्पयति विरोधपरिहाराय न चात्र तथा विरोधः
स्फोटोत्पत्त्यनुपपत्तिग्राहकयोरग्निमात्रे विरोधेपि प्रतिबन्धाभाववद्वाहित्ववदग्निविषयत्वेन विरोधशान्तेरिति ननु न प्रतिबन्धाभाववदग्नि

१
वि॰सु॰
टी॰न॰
२२३

चक्षुरित्याह योग्येति गुर्वेत्नुवर्त्तिनः मन्याह विवेकाग्रहस्येति   विभ्रमशब्दोऽयथार्थव्यवहारपरो गुरुनये अत्र प्रतिबंधाभावस्य
कारणत्वं विकल्प्यैकैकं व्यभिचारेण दूषयति शक्तिवादीनन्वित्यादिना यदा ह्युत्तंभकः प्रतिबंधकसविधे निधीयते तदा सत्यपि
प्रतिबंधके मण्यादौ कार्य्यमुत्पद्यते न तत्र प्रागभावोऽस्तीत्यर्थः इयमपि प्रतिबंधध्वंसव्यभिचारभूमिर्भवत्येव तथाप्यसाधारणं
दूषणमाह प्रतिबंधकेति नह्यनुदितप्रतियोगिप्रध्वंसः संभवतीति भावः तदेतत्परिहरति मैवमिति नास्माभिर्मण्यादिस्वरूपमा
त्रं प्रतिबंधकत्वमुच्यते अपितूत्तंभकाभावविशिष्टस्य न च तादृशमुत्तंभकसन्निधानेऽस्तीति तदापि प्रतिबंधकप्रागभावस्य न।

योग्यानुपलब्धेरभावप्रमितिहेतुत्वात् विवेकाग्रहस्य च विभ्रमहेतुत्वात् ननु किं प्रतिबंधकप्रागभावस्य
कारणत्वमुत तत्प्रध्वंसस्य नाद्यः उत्तंभकसद्भावे सत्यपि प्रतिबंधके विनापि प्रागभावं कार्य्यदर्शनात् न द्वितीयः
यः प्रतिबंधकानुदयेऽपि कार्य्योपलब्धेरिति चेत् मैवं उत्तंभकमणिमंत्राद्यभावसहकृतस्यैव प्रतिबंधक
स्य प्रतिबन्धकत्वात् तेन तत्र प्रतिबन्धकप्रागभावसहकृतस्यैव कारणत्वान्न व्यभिचारः एतेनानियत
हेतुकत्वमप्यपास्तम् ॥ १ व्यभिचार इत्यर्थः उक्तं च कुसुमांजल्यामुदयनेन प्रतिबंधकोत्तंभकाले तर्हि व्यभिचा
रः स्यात् यदि यादृशे सति कार्यानुदयस्तादृशे एव समुत्पादः नन्वेवं तदापि प्रतिपक्षस्याभावात् असत्प्रतिपक्षो हि प्रतिबंध
कोऽभिमतो न सन् प्रतिपक्षः स च तादृशो नास्त्येव यस्त्वस्ति नासौ प्रतिपक्ष इति स्यादेतत् प्रतिबंधकाभावस्य सामग्र्यन्तःपातित्व
मयुक्तं अनियतहेतुकत्वप्रसंगात् तथाहि यत्राग्न्यादिसमवधाने प्रतिबन्धकमण्याद्यभावे झटिति कार्य्यमुत्पद्यते तत्र विशेष्यम
ण्यादिप्रतिनिबंधकाभावादिति वक्तव्यम् यत्र मण्यादौ विद्यमानेऽपि उत्तंभकसन्निधौ कार्य्यमुत्पद्यते तत्रोत्तंभकाभावस्य
विशेषणाभावादिति नैकहेतुनिरूपणमिति तत्राह एतेनेति ॥ ॥ ॥ ॥

राम॰
२२३

एतेनेत्यस्यैव विवरणं सर्वत्रेति न विशेषणाभावो विशेष्याभावो वा हेतुस्तयोरप्रतिबंधकत्वात् किंतु विशिष्टाभावः स चोभयथापि न भिद्यते तथा
हि केवलदंडसद्भावे दंडपुरुषसद्भावे दंडाभावे केवलपुरुषाभावः सर्वत्राविशिष्टः तथा केवलोत्तेजकसद्भावे प्रतिबंधकोत्तेजकसद्भावे दंडाभावे वा केवलप्र
तिबंधकाभावोऽविशिष्टः संसर्गाभावशब्देन न द्विशेषप्रागभावादिः किंतु विवक्षितं प्रागभावप्रध्वंसाद्यपेक्षया चेदप्रनियतहेतुकत्वमाशंक्य परिह्रियते
तदा च संसर्गाभावशब्दोऽप्यनुगुणः अयमनुगतत्वात् यस्मिन्सति कार्यं न जायते तस्मिन्सत्येव कार्यं जायते इत्येवं संसर्गाभावमात्रस्यैव प्रयोजकत्वादित्यु
क्तयतोक्तेश्च अतश्चैव मेवांगीकर्तव्यं अन्यथा तुल्यन्यायेनाभावप्रमितिहेतुतायामपि उक्तदूषणसाम्यादित्याह अन्यथेति अलं वा स्थलांतरप्रतिबंधा
शंकावैयर्थ्यं सुग्रहाक्षापि ह्यप्रतिबद्धाकार्योत्पादप्रसंगभवतीति तत्स्थलेऽपि प्रतिबंधाभावे समानत्वे वै मा वा क्षेपपरिहाराविल्याह शक्तिपक्षेऽपीति एवमभाव
विकल्पप्रयुक्तदोषपरिहारेण प्रकारांतरेण प्रतिबंधाभावस्य कारणतामाक्षिपति शक्तिवादीनन्विति यत्तदभावः प्रतिबंधकाभावः कारणमसौ प्रति

सर्वत्र प्रतिबंधकसंसर्गाभावविशिष्टस्यैव कारणत्वांगीकारात् अन्यथानुपलब्ध्यापि उपलब्धिप्रागभावप्रध्वंसाभावविकल्पे
नाभावप्रमितेरनियतहेतुकतापादकः परिहरत्वात् शक्तिपक्षेऽप्यप्रतिबद्धा याएव तस्याः कारणत्वादभावविकल्पोक्तदोषतत्परिहा
रयोः समानत्वात् ननु न प्रतिबंधकाभावस्य कारणता प्रतिबन्धापेक्षत्वात्तदभावः कारणं कारणापेक्षश्च तदभावः प्रतिबंध
इत्यन्योन्याश्रयग्रस्तत्वात् प्रतिबंधो विसामग्री तद्धेतुः प्रतिबन्धक इत्यंगीकारादिति चेत् ॥

बंधापेक्षः तन्निरूपणीयत्वात् यश्च कारणाभावः प्रतिबंधः सोऽपि कारणापेक्षः तन्निरूपणीयत्वादेव तत्तश्च प्रतिबंधाभावरूपकारणस्य।
कारणाभावरूपप्रतिबंधस्य च परस्पराधीननिरूपणादन्योन्याश्रय इत्यर्थः ननु कारणाभावस्य प्रतिबंधत्वे स्यादयमन्योन्याश्रयस्तदेव तु क
थं यावता कार्यानुत्पाद एव प्रतिबंध इति तत्राह प्रतिबंध इति अयमर्थः न तावत्कार्यानुत्पादः प्रतिबंधः तस्यानादित्वया प्रतिबंधकाधीनत्वा
भावात् नापि तस्य कालांतरसंबन्धः कालस्यैकत्वात् औपाधिकानेकत्वे च कालोपाधेरेव यावज्जन्यत्वात् कस्तर्हि कारणाभावात्कार्याभाव इ
तिपरिभाषार्थः भावधर्मोपचारात् सामग्रीकार्ययोः पौर्वापर्यनियमः तद्भावयोरप्युपचारात्प्रयुज्यते वस्तुतस्तु समसमयत्वमेव क
स्तर्हि प्रतिबंध इति हृदि निधायोक्तमुदयनेन भावो यथा तथाभावः कारणं कार्यवन्मतः प्रतिबंधो विसामग्री तद्धेतुः प्रतिबंधक इति

अत्रपूर्वार्द्धेनाभावस्यकारणता निरूपणेनप्रतिबंधाभावस्यकारणत्वमुक्तं उत्तरार्द्धे नचप्रतिबंधप्रतिबंधकौनिर्दिष्टौप्रतिबंधोनामविसामग्री
सामग्रीवैकल्यंमंत्रादितद्धेतुस्तुमंत्रप्रयोक्ताप्रतिबंधकइति तस्मात्सामग्रीप्रतिबंधयोरन्योन्याश्रयत्वेनेति यद्यप्युभयाभावत्वमुभयस्य
तथाप्यन्योन्यनिरपेक्षस्यशक्यनिरूपणत्वान्नान्योन्याश्रयत्वमितिपरिहरन्ति मैवमिति मंत्रादेःस्वाभावकारणताज्ञानमंतरेणैवकार्यानुद
येन्वयव्यतिरेकाभ्यांकार्यप्रतिकूलतालक्षणप्रतिबंधकत्वावगमादित्यर्थः मंत्राद्यभावस्यकारणत्वमपि मंत्रादिप्रतिबंधकत्वज्ञानव्यति
रेकेणैवशक्यंज्ञातुमित्याह अनवलंब्यैवचेति यथाग्न्यादेःकारणत्वंकार्यान्वयव्यतिरेकाभ्यामेव तथामंत्राद्यभावस्यापीत्यर्थः एवंसाधा
रण्येनपरिहारमुक्त्वाविकल्प्याह किंचेति यद्यपिमंत्रादिप्रागभावस्यमंत्रादिप्रतिहेतुतासंभवति तथापितत्प्रतितत्हेतुतामंत्रादेरतआह परे।

मैवमवधीर्यैवाभावस्यकारणतांकार्यानुदयमात्रेणैवमंत्रादेःकार्यप्रतिकूलतावगमात् अनवलंब्यैवचमणिमंत्रादेःका
र्यप्रतिबंधकतातदभावस्यान्वयव्यतिरेकाभ्यामेवकारणताध्यवसायात् किंचेदमन्योन्याश्रयत्वमुत्पत्तौज्ञप्तौवास्यात् नाद्यः
मंत्रतदभावयोःपरस्परहेतुत्वाभावात् नापिद्वितीयः अज्ञानयोरपिमंत्रतदभावयोःकार्यंप्रतिप्रतिकूलत्वकारणत्वयोरु
पपत्तेः ननुकार्याभावावसेयकार्यप्रतिकूलभावामंत्रादयःशक्तेरपह्नवायकारणाभावरूपादुष्यन्ते अतएवमंत्राद्यभावो
पिकारणमिष्यते ततोमंत्रतदभावनिष्ठप्रतिबंधकत्वकारणत्वयोरन्योन्यौपाधिकत्वादुत्पत्तौज्ञप्तौवान्योन्याश्रयतादुर्वारेति
चेन्न उक्तोत्तरत्वात् अंतरेणैवाभावस्यकारणतावगमंमंत्रादेःकार्याभावमात्रेणकार्यप्रतिकूलभावस्यावगंतुंशक्यत्वात्

स्येति ज्ञप्तौपरस्पराश्रयंपरिहरन्ति नापीति नहियद्यत्कारणंतत्सर्वंज्ञानमेवकारणंचक्षुरादेरदर्शनात् एवंप्रतिबंधाभावोपीतिभावः तमि
ममुदयनीयमन्योन्याश्रयतापरिहारंपरिजह्रुःन्यायरत्नदीपावलीकृतस्तदनुवदन्ति नन्विति यद्यपिकार्यानुदयोदयान्वयव्यतिरेकावसेये
मंत्रतदभावयोःप्रतिबंधकत्वकारणत्वेतथापिसामग्रीवैकल्यरूपतयामंत्रादेःप्रतिबंधकत्वंनतुस्वरूपेणएवंतदभावस्यापिप्रतिबन्धका-
भावतयाकारणत्वंनस्वरूपेणतथाचप्रतिबंधकत्वयोरपरिहार्यैवसमानाज्ञप्त्योरन्योन्याश्रयतेतिखंडनकार्याःदूषयन्ति नेति उक्तमेवोत्तरंदर्श
यति अंतरेणेत्यादिना यद्यपिकोष्टगत्याविद्यतएवायमर्थःतथापीतरेतरनिरपेक्षत्वमन्वयव्यतिरेकाभ्यांप्रतीयमानमनुभवसिद्धंनयुक्तिसह

कारणत्व २

ननु प्रतिबंधान्यथानुपपत्तिः शक्तौ प्रमाणं तथाहि अग्न्यादिस्वरूपं तावन्न प्रतिबध्यते पूर्ववदेवाविकलस्योपलभ्यमानत्वात्तस्मात्तदनेन प्र-
तिबध्यते तदतीन्द्रियं शक्तिर्नामेति तदिदं सहेतुकमनूद्य प्रतिषेधति नचेत्यादिना वाच्यमित्यन्तेन तत्र हेतुः कार्यौदासीन्येति अग्न्यादिस्वरू-
पावैकल्येपि मंत्रादिसन्निधाने कार्योत्पादप्रस्तुदासीना भवन्त्यग्न्यादयः अयमेव प्रतिबंध इत्यर्थः शक्तिपक्षेप्ययमेव प्रतिबंधशब्दार्थो वक्त-
व्यः समत्वपक्षेपि समान इति प्रतिवादी गृह्णाति अन्यथेति एतदेव शक्तिपक्षे परिशोधयति नहीत्यादिना ननु सा शक्तिर्विनष्टैव उत्तरकालं तु शक्त्य-
न्तरमुत्पन्नं तदा कार्योदय इति तत्राह नच स्फोटस्येति न तावदग्निसामग्रीतस्तस्योत्पादः तस्या नष्टत्वात् नाप्याश्रयभूताग्नेः तस्याः शक्त ।

तदभावकारणत्वस्याप्यन्वयव्यतिरेकाभ्यामेव सुकरावगम्यत्वात् इति नच शक्त्यनंगीकारे प्रतिबंधासंभवः मणिमंत्रादि
सन्निधानासन्निधानयोः स्वरूपस्याविशेषादिति वाच्यं कार्यौदासीन्यस्यैव प्रतिबंधशब्दाभिधेयस्य विशेषत्वात् अन्यथा
शक्तिपक्षेपि प्रतिबंधस्य दुर्विवेकत्वात् नहि शक्तेर्नाशः प्रतिबंधः प्रतिबंधापाये कार्याभावप्रसंगात् नच स्फोटस्य ।
कार्योत्पत्तये शक्त्यन्तरं तत्रोत्पन्नं तत्कारणानिरूपणात् नच प्रतिबंधाभावः कारणं अभावस्य कारणतानंगीकारात्
अंगीकारे वा तस्यैव स्फोटादिकार्यजनकत्वमस्तु कृतमतीन्द्रियशक्तिकल्पनादुर्व्यसनेन शक्तेः शक्त्यन्तरं प्रतिबध्य-
ते इति वदतोऽनवस्था तस्मात्कार्यस्यान्यथाप्युपपन्नत्वान्नातीन्द्रियशक्तिकल्पनावकाशः नापि द्वितीयः ॥ उपादानोपादे-
यभाव नियमस्याप्यनादिसिद्धवृद्धव्यवहारावसिततत्कार्यानुकूलस्वभावभेदादेवोपपत्तेः ॥ ९ ॥

स्यानुत्पादकत्वात् उत्पादकत्वे वा कार्ये तथा इति कृतं शक्तिपिशाचिकया शक्तशक्तेरेव शक्तिः कार्येप्यस्तु सुधोत्याद्याशक्तिः तस्मात्कारणं तदनिरूपणात्तु शक्त्यंतरो-
त्पाद इति भावः ननु किमिति कारणाभावः यावत्प्रतिबंधाभावादेवोत्पद्यतामिति तत्राह नचेति तच्छक्तेरपि शक्तिरस्ति सैव प्रतिबद्ध्य-
तामिति तत्राह शक्तेरिति तत्राप्युक्तदूषणपरिहाराय शक्तिप्रतिबंधो वक्तव्यः तथा चानवस्थेति भावः प्रथमार्थापत्तिदूषणमुपसंहरति
तस्मादिति अनादिसिद्धो यो वृद्धव्यवहारस्तेनावसितो यस्तत्कार्यानुकूलस्वभावस्य भेदो विशेषः तस्मादेवोपादानोपादेयनियमोपप-
त्तेः तदर्थमपि शक्तिर्न कल्पनीयेति द्वितीयामर्थापत्तिं दूषयति उपादानेति ॥

यदिहि स्वभावो नियामको न स्वीक्रियते नहि शक्तावपि तस्या नियमः स्यात् अन्यथेति तिमिरादिप्रयोगमनुवदति विमतमिति विमतमव्या
दि अतिशययोगीत्युक्ते अविद्यमानदशातो विद्यमानदशायां सत्त्वलक्षणातिशयवत्त्वात् सिद्धसाध्यता तदर्थमजनकेति विशेषणम् इदंश
क्तिसाधकं न भवति सहकारिसमवधानस्यातिशयस्यापि जनकावस्थायां साधकतया अर्थान्तरत्वादिति परिहरति नसहकारीति व्यापारत्वे दीपा
वलीस्थमनुमानमुद्भावयति अस्तु तर्हीति निःक्रियाश्रय इत्युक्ते सामान्याभावाद्याश्रयत्वेन सिद्धसाधनं तदर्थं सामान्यवदित्युक्तं तथापि
गुणकर्मभ्यां सिद्धसाधनता तदर्थमतीन्द्रियेत्युक्तं तेजोद्व्यणुकरूपादिना सिद्धसाधनतापरिहाराय तत्सामान्यग्रहणं तस्येन्द्रियकसामा॥

अन्यथेयमिहैव किमिति शक्तिर्नान्यत्रेति पर्यनुयोगे कः स्वभावभेदादन्यः परिहारः स्यात् तस्मादर्थापत्तिद्वयमपि नात्र
प्रमाणं अस्तु तर्ह्यनुमानं तथाहि विमतमजनकदशातो —— जनकदशायामतिशययोगि कारकत्वात् कुठ
कुठारवदिति चेत् न सहकारिसमवधानातिशयेनैव सिद्धसाधनत्वात् अस्तु तर्ह्यग्निरतीन्द्रियसामान्यवन्निःक्रियाश्रयः
कारणत्वात् गुरुत्वाश्रयवदिति प्रयोगः तेजोद्व्यणुकमतीन्द्रियरूपस्पर्शवायोर्वाधिकरणमिति तद्व्यावृत्त्यर्थमतीन्द्रिय
सामान्यवन्निःक्रियेत्युक्तमतः शक्तिसिद्धिरिति कश्चित् तन्न योगिस्वीकारवादिनं प्रत्यतीन्द्रियविशेषणस्याप्रसिद्धत्वा
त् विमतं तद्गुरुत्वजातिविषयमिन्द्रियत्वादस्मदादिचक्षुर्वदित्यतीन्द्रियसिद्धिरिति चेन्न योगिनमनङ्गीकुर्वतो मीमांसकस्याश्रया
सिद्धेः तत्सिद्धौ वा धर्मिग्राहकप्रमाणबाधात् अस्तु तर्ह्यस्मदाद्यभिप्रायेणातीन्द्रियत्वविशेषणं॥ ९॥ न्यवत्त्वात् वा व्याश्रयत्वेनाग्नौ
तरत्वान्निवृत्त्यै निःक्रियेत्युक्तं गुरुत्वगुणाश्रयः पार्थिवमाप्यं वाऽत्र दृष्टान्तः गुरुत्वत्वजातेरतीन्द्रियतया गुरुत्वाश्रयस्योक्तरूपत्वात् तेज
सि गुरुत्वासंभवेन शक्तिसिद्धिः तदुक्तमेव व्यावर्त्यमाह तेज इति तदेतद्दूषयति योगीति तार्किकाणां हि सर्वं योगिप्रत्यक्षमित्यतीन्द्रि
यविशेषणस्यासिद्धत्वात् अप्रसिद्धविशेषणः पक्षः स्यादित्यर्थः अत्र तैरेव गुरुत्वत्वजातेर्योगिनः प्रत्यतीन्द्रियत्वसमर्थनेनैवाप्रसिद्धविशे
षणतासाध्यवैकल्ये परिहृते तदनुवदति विमतमिति योगीन्द्रियमित्यर्थः एवमनुमिमानस्य योगीन्द्रियं प्रसिद्धमप्रसिद्धं वा हि नी
त्याह योगिनमिति प्रश्नमेवाह तत्सिद्धौ वेति साध्यं विशेषयति अस्तु तर्हीति ॥ ॥ ॥ ॥

तथाप्यप्रसिद्धविशेषणतामाह मैवमिति यद्यपि परमाणुं जानाम्याकाशं जानामीत्यनुव्यवसायो जायते तदापि परमाण्वादिज्ञानं चानुव्यव-
सायस्य मानसप्रत्यक्षस्य विषयो भवति तथापि सर्वोऽप्यैन्द्रियकज्ञानविषयत्वप्रसिद्धमतीन्द्रियत्वमस्मदादिप्रत्यक्षेऽपीत्यर्थः अनुव्यवसायेनतु
त्वसत्तीति विशेषणमीमांसकादूषयति तत्प्रमाणान्तरेति येषां हि व्योमशिवप्रभृतीनामतीन्द्रियत्वमिच्छन्तिम्यादिविशिष्टज्ञानानि प्रमाणान्तरेण
घ्राणादिनोपनीतगन्धादिकमपि विषयीकुर्वन्ति मन्यमिश्रैर्वत्तेऽपि श्रमितिमतं तन्मते सर्वस्याप्यतीन्द्रियस्यार्थविशेषणतयैन्द्रियकबुद्धि-
वोध्यत्वसंभवात् अप्रसिद्धविशेषणतानवकाशेत्यर्थः अथ विशिष्टज्ञानानुव्यवसायाभिव्यक्तास्मदादिसैन्द्रियकबुद्धाविषयत्वमतीन्द्रियत्व-
मभिप्रेतमिति विशेषणं परं परामेवमाणधात्वनिरपत्रपतयापरिगृह्णीयात् समष्टव्यः किमत्राश्रयशब्देन संयोगीतया धाराधेयभावो वि-

मैवं अनुव्यवसायप्रत्यक्षगोचरतया सर्वेस्यास्मदादिविशेषणत्वीकारेपि पूर्वोक्तदोषतादवस्थ्यात् अनुव्यवसायेनास्मदा-
द्यैन्द्रियकबुद्धगोचरत्वाभिप्रायेणातीन्द्रियत्वविशेषणमिति चेत् तत्प्रमाणान्तरोपनीतविशेषणावगाहिविशिष्टज्ञानवादे सर्वे-
षामप्यैन्द्रियकत्वसंभावनया पूर्वोक्तदोषानुतारात् आश्रयपदस्य च समवाय्यर्थतायामाहद्रव्यसमवायानङ्गीकारवादिनोऽप्रसिद्ध-
विशेषणत्वात् वृक्षे स्थितिस्थापकसंस्कारसिद्धेः सिद्धसाधनत्वाच्च ननु कथं सिद्धसाधनत्वं तत्सत्त्वे मानाभावादिति चेन्मैवं
विमतः स्थितिस्थापकसंस्कारवान् स्पर्शवत्त्वात्कटवदित्यनुमानसद्भावात् न च स्थितिस्थापककार्यवत्त्वमुपाधिः उत्पन्नमा-
त्रविनष्टकटादिषु कार्यानुपलंभेपि तथाविधसंस्काराभ्युपगमेन साध्याव्याप्तेः किंच यः स्वसिद्धान्तानुसारेण सिद्धसाधनतां
ब्रूयात् स कथमनुमानशतैरपि स्वसिद्धान्तात्प्रच्याव्येत कथं वा तदीयसिद्धसाधनताभिधानं प्रत्युद्ध्रियेत ॥ वृक्षितः समवायितया
वाताद्यः दृष्टान्ते साध्यवैकल्यात् द्वितीये प्राह आश्रयपदस्येति साधारणाकारविवक्षायां सिद्धसाधनतामाह वृक्षाविति अत्रापि तद्दोषपरिहारमुद्भा-
वयति ननु कथमिति अस्मिन्नप्यनुमाने तदीयं दूषणमुद्भाव्य दूषयति न चेति साध्याव्यापकत्वेनोपाधिं परिहरति उत्पन्नेति नहि यत्र यत्र स्थिति-
स्थापकवत्त्वं तत्र तत्र तत्कार्यवत्त्वमस्ति यस्मादुत्पन्नः कटोऽनुत्पादितपूर्वावस्थानसमानसंस्थानादिस्थितिस्थापककार्यो विनश्यति तदा साध्यव-
त्त्वेप्युपाधेरभावात् साध्याव्याप्तिरित्यर्थः अत्र चोत्पन्नमात्रेति अनुत्पादितकार्यवत्त्वमात्रं विवक्षितम् इतरथा तत्र साध्याभावस्यापि सुवचत्वा-

ननु यदि स्वसिद्धान्तानुरोधेन सिद्धसाधनतां वदतोऽनुमाने स्वकीयसिद्धान्तात्प्रच्यावनमशक्यं सिद्धसाधनताया अपरिहार्यत्वात् तर्हि स्थि-
तिस्थापकेतरेति विशेषणीयमिति शङ्कते अस्तु तर्हीति तथापि प्राभाकरमते कर्मणोऽर्थान्तरतानभ्युपगमात् कर्मण्यप्रत्यक्षे निःक्रियेऽतीन्द्रिय-
सामान्यवत्त्वादिरूपसाध्यस्य विद्यमानत्वादित्याह मैवमित्यादिना तथाहि यद्यत्कदाचित्कं तत्स्वाश्रयातिशयपुरःसरं दृष्टं य-
था संयोगविभागजन्यकार्यं संयोगविभागलक्षणं स्वाश्रयातिशयपुरःसरमिति व्याप्त्या संयोगविभागयोरपि कादाचित्कत्वात्
स्वाश्रयातिशयपूर्वकत्वमनुमीयते योऽसावतिशयः तत्कर्मेति तेषां मतेन तस्माद्भवत्येव तेनाऽर्थान्तरतेति भावः एवं प्रतिज्ञानिव-

अस्तु तर्हि स्थितिस्थापकेतरातीन्द्रियसामान्यवन्निःक्रियाश्रय इति प्रयोग इति चेत् मैवं तथापि कर्माप्रत्य-
क्षवादिनं प्राभाकरं प्रत्यर्थान्तरत्वापातात् वह्नेरतीन्द्रियसामान्यवन्निःक्रियकर्माश्रयत्वात् कारणत्वादि-
तिहेतोः शक्त्यानैकान्तात् शक्तेश्च शक्त्यन्तरानभ्युपगमेऽनवस्थापातात् जनकशक्तियोगित्व एव कारणत्वे
तद्विवक्षितत्वात् न शक्त्यावनैकान्तिकतेति चेत् मैवम् शक्तियोगित्वस्य विशेषणशक्त्यसिद्धावसिद्धेः
मानान्तरात् तत्सिद्धौ कृतमनया ग्रन्थकन्थाकदर्थनया गुणादावनैकान्त्यं च ॥ ६ ॥ ६ ॥ ६ ॥

दूषणान्युक्त्वा अनैकान्तिकतां चाह कारणत्वेति ननु किमित्यनैकान्तिकता यतः शक्तेरपि साध्यवत्तया सपक्षत्वादिति तत्राह शक्तेश्चे-
ति उक्तं च लीलावतीकारेण शक्तेरपि शक्त्यन्तरापेक्षायामनवस्थितेरनपेक्षत्वे तयैव व्यभिचारादिति स्यादेतत् यदि न शक्तेः सप-
क्षत्वं तर्हि हेतुरेव तत्र प्रवर्तते इति शङ्कते जनकशक्तीति शक्तिमद्धि कारणं न तु शक्तिरित्यर्थः तर्हि हेतोरसिद्धिरित्याह मैवमिति का-
रणत्वादिति कोऽर्थः शक्तियोगित्वादिति तथा च विशेषणस्यैतदनुमानात्प्रागसिद्धेरेव हेतोरित्यर्थः अथ ब्रूयान्मानान्तरादेव विशेष-
णं साधयामीति तत्राह मानान्तरादिति ग्रन्थमयी कन्था ग्रन्थकन्था सा हि सदृशविशकलितग्रथितत्वात् तया कदर्थनं मुहुर्जननेन क्लमल-

अनैकान्तिकत्वोदाहरणान्तरमाह गुणादावपीति तथाहि द्रव्यगुणकर्मणामेव हि सामान्यव त्त्वं तत्र निष्क्रियत्वविशेषणात् यद्य
पि द्रव्याश्रयत्वं नायाति आश्रितद्रव्यस्यावयवित्वेन सक्रियत्वात् तथापि गुणकर्मणोरन्यतराश्रयत्वं स्यादेव तत्तद्द्वयमपि द्रव्यलक्ष
णं द्रव्यत्वव्याप्नोत्यतो गुणादेरपि प्रसक्तं नैव द्रव्यत्वमिति तद्द्वयोर्न द्वित्वं हि न त्ववक्तव्यं तथा च तत्र कारणत्ववर्त्तते इत्यनैकान्तिकमि
त्यर्थः अनुमानान्तरं शंकते अस्त्वत्र हीति स्फोटकारणत्वानधिकरणकारणजन्यत्वस्य उक्तेर्व्याहतिस्तदर्थमुभयवादिसंप्रतिपन्ने
त्युक्तं अप्रसिद्धविशेषणतानिवृत्त्यै स्फोटग्रहणं उभयवादिसंप्रतिपन्नकारणातिरिक्तकारणं भवति प्रतिबंधकाभावस्त्वविप्रति

गुणादेरप्यतीन्द्रियसामान्यवन्निष्क्रियाश्रयत्वे च घटादिवद्द्रव्यत्वप्रसंगात् न यथोक्तशक्त्याश्रयत्वोपपत्तिः अ
स्त्वत्र हीति विवादाध्यासितः स्फोट उभयवादिसंप्रतिपन्नस्फोटकारणातिरिक्तकारणजन्यः कार्यत्वाद्घटवदि
ति प्रयोग इति चेन्मैवं प्रतिबंधकाभावेन प्रतिवादिनोऽसंप्रतिपन्नेन कारणेन सिद्धसाधनत्वात् भावजन्यइ
ति विशेषणेऽपीश्वरेण सिद्धसाधनत्वात् ननु माभूदर्थापत्तिः प्रमाणं मास्तु भूदनुमानं व्रीहीन्प्रोक्षतीत्युपनतस्य
श्रीनादधीनेत्याद्याः श्रुतय एव प्रमाणम् तथाहि व्रीहीनित्यादिवाक्येषु द्वितीयाश्रुत्या ग्रामं गच्छतीत्यादिष्विव
व्रीह्यादीनां कर्मतावगमात् तेषु कश्चिदतीन्द्रियः प्रोक्षणजन्योऽतिशयोऽत्यवसीयते दृष्टस्य फलान्तरस्यादर्श
नात् स चायमतिशयः शक्तिरिति शक्तिवादिभिर्गृह्यत इति ॥

पन्नत्वात् अतस्तेनार्थान्तरत्वमिति दूषयति मैवमिति भावजन्यइति विशेषणाभावेन नार्थान्तरतेति चेत्तत्राह भावेति ननु यद्यपि
सहजशक्तावर्थापत्तिरनुमानं वा न सम्भवति तथाप्याधेयशक्तावागमः प्रमाणमस्तीति तद्बलात्सहजशक्तिरपि सिध्यतीत्यभिप्रेत्य
शंकते न त्विति तत्तु नैतेष्वागमेषु शक्तिवाचकं पदमुपलभ्यत इति तत्राह तथाहीति क्रियाजन्यातिशयभाक्त्वं हि कर्मत्वमित्यर्थः
अतीन्द्रियत्वे हेतुमाह दृष्टस्येति उपन्यास्तविकृति संस्काराणां मध्ये तीन्द्रियसंस्कारः प्रोक्षणादिक्रियाफलमित्यर्थः तावतापि कथं श
क्तिसिद्धिस्तत्राह स चेति ॥ २०१ ॥

परिहरति सैवमिति आत्मनो गुणो ह्यदृष्टं नानात्मसु व्रीह्यादिषु संभवति न चैतावता प्रोक्षणादिवैयर्थ्यं कर्तृसंस्कारकत्वात् यथाहुः संस्का रः पुंस एवेष्टः प्रोक्षणात्पुंक्षणादिभिरिति भावः ननु व्रीहीनिति द्वितीयया व्रीहीणां संस्कार्यत्वावगमात् तत्संस्कृता व्रीहय इति प्रसिद्धेश्च तद्द्वि रूढश्चैतत्संस्कारस्वीकार इति तत्राह घटविषयेति तथाहि घटविषयज्ञानादुत्पन्नः संस्कारो घटसंस्कार इत्युच्यते तत्कस्य हेतोः घटविषयत्वा त् न पुनर्घटाधारत्वात् एवमत्रापीत्यतो न द्वितीयाश्रुतिः प्रसिद्धिर्वा व्रीह्यादिगतशक्तिसाधिकेत्यर्थः प्रयोगमेव दर्शयति विवादेति अध्या दीत्यर्थः अतीन्द्रियसापेक्षं न भवतीत्युक्ते बाधः स्यात् ईश्वरेच्छादृष्टादिसापेक्षत्वात् तदर्थं निजरूपसंबद्धेत्युक्तं नावत्युक्ते चादृष्टवदात्मसं

सैवं संस्कारात्माहदृष्टस्य चेतनगतस्याचेतनेषु व्रीह्यादिषु समवायासंभवात् घटविषयज्ञानजनितभावनाया घटविषय त्ववत् व्रीहिप्रोक्षणाद्युद्भूतसंस्कारस्यापि तद्विषयक्रियाजन्यतामात्रेण तदीयत्वमतोऽप्युपपत्तेर्व्रीह्यादिषु शक्तिकल्पनायां प्रमाणाभावात् तस्मान्न शक्तिसद्भावे प्रमाणमस्ति तथा च प्रयुक्तं लीलावतीकारेण विवादाध्यासितं न निजरूपमात्रसं बद्धातीन्द्रियसापेक्षं प्रमाणेन तथानुपलभ्यमानत्वात् यत्प्रमाणेन यथा नोपलभ्यते न तत्तथाभूतं यथा नीलं पीतरूपता- मिति अत्र च निजरूपमात्रसंबद्धशब्देन द्विष्ठस्य संप्रयोगादेर्व्यावृत्तिः क्रियत इति अत्रोच्यते न तावदुक्तो प्रमा णाभावः यस्मात् परस्य शक्तिर्विविधा सर्गाद्याभावप्रशङ्कयः इति श्रुतिस्मृतिमितां शक्तिः केन निवार्यते २२ न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥

योगादिसापेक्षत्वाद्बाधः स्यात्तदर्थं निजरूपमात्रसंबद्धेत्युक्तं तस्य द्विष्ठत्वेन व्यापित्वेन तदभावादिति तत्र तावदुक्तावागमं प्रमा णयति श्लोकेन परेति विवृणोति न तस्येति तस्येश्वरस्य कार्यं स्थूलशरीरं करणं सूक्ष्मशरीरं न विद्यते तथा तेन परमेश्वरेण समोऽभ्य धिको वा न दृश्यते श्रुतिस्मृत्योरित्यर्थः तथा शक्तिः परोत्कृष्टा विविधैव बहुप्रकारा श्रूयते तथा ज्ञानलक्षणबलस्य क्रियासंपादने स्वाभाविकी अथवा ज्ञानबलेन क्रिया जगन्निर्माणादि स्वाभाविकी नान्याधीनेति अथवा ज्ञानं च बलं च क्रिया चेत्येतत्सर्वं स्वाभावि कं स्वरूपज्ञानादात्मनोऽध्यस्ताचिन्त्यमायाशक्तिविजृम्भितमिति श्वेताश्वतरोपनिषन्मंत्रस्यार्थः ॥ ६ ॥ ६ ॥ ६ ॥

श्लोकोक्तश्रुतेरुपलक्षणत्वात्प्रमाणविषयकृत्स्नं नराज्याह ते ध्यानयोगेत्यादिना ये किंकारणमित्यादि बहुविधं संदिहते स्म ते ब्रह्मवादिनः ते ध्यानमेव योगो ध्यानयोगः तं ध्यानयोगमनुगताः प्राप्ताः संतोऽपश्यन् दृष्टवन्तः किं देवात्मशक्तिं देवो द्योतनात्मकस्तस्यात्मा चेति देवात्मा ब्रह्म तस्य शक्तिमनाद्यनिर्वचनीयाचिन्त्यानन्तशक्तिमयीं महामायां स्वगुणैः सत्त्वरजस्तमोमयैर्वियदादिकार्यैर्निगूढां छन्नामित्यर्थः पराकोऽवर्णाः करणकर्मसंभूयस्यानामरूपं च वर्णस्तद्रहितः सन् शक्तियोगात् बहुधा बहुप्रकारं वर्णान्विदधातीति च श्वेताश्वतरोपनिषन्मन्त्रौ स्मृतिं विवृणोति शक्तय इति तथा विष्णुपुराणे निर्गुणस्याप्रमेयस्य विशुद्धस्य परात्मनः कथं सर्गादिकर्तृत्वं ब्रह्मणोऽप्युपपद्यते इति मैत्रेयेण पृष्टस्तूवाच पराशरः शक्तय इत्यादि सर्वभावानामचिन्त्यज्ञानगोचरा अचिन्त्या अनिर्वच

ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढां पराकोऽवर्णो बहुधा शक्तियोगात् शक्तयः सर्वभावाना
मचिन्त्यज्ञानगोचराः यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः सर्वज्ञता तृप्तिरनादिबोधः स्वातन्त्र्यता नित्यमलुप्त
शक्तिः अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्येत्यादिश्रुतिस्मृतिशतैर्गीयमाना शक्तिः शक्याते
कथमपह्नोतुं न चैतानि वचांसि स्वरूपसहकारिमात्रप्रतिपादकानि कार्यकरणादिसहकारिनिरासपुरःसरं तस्याः

नीयत्वात् ज्ञानगोचरा अन्तरदुपासनास्तूपाधिताया ता अचिन्त्यज्ञानगोचराः शक्तयः संति यतोऽतः परमेश्वरस्य प्रतिपादनात्
स्यापि ताः सर्गाद्या भावशक्तयः संतीत्यत्तदुक्तं भवति सर्वभावानामेव तावच्छक्तयः संतीति किमु वक्तव्यं ब्रह्मणः परमेश्वरस्यातस्ताभिः स
र्गादिकर्तृत्वमुपपद्यत इति अथवा सर्वभावानामिति कर्मणि षष्ठी ज्ञानगोचराः अचिन्त्याः शक्तयस्तावत्संति यतोऽतस्ताः सर्गाद्या भावशक्त
यो ब्रह्मणः संति अन्यस्य तादृग्विधशक्तिनियन्तुरभावादतः सर्गादिकर्तृत्वं ब्रह्मण उपपद्यत इत्यर्थः पुराणान्तरवचनमुदाहरति सर्वज्ञ
तेत्यादिना अचिन्त्यशक्तिरिति तु प्रकृतोपयोगिनी विधिज्ञा वेदज्ञाः परमेश्वरज्ञा इति वा नन्वेतेषु शक्तिशब्दः स्वरूपसहकारिमात्रपरः ना
तीन्द्रियशक्तिपर इत्यत आह न चैतानीति तत्स्य कार्यकरणं च विद्यत इति सहकारिनिषेधेन शक्तेरुच्यमानत्वान्न सहकारिमात्रपरत्व

१

चि·सु· शक्तेर्ब्रह्मस्वरूपत्वाभावे हेतुमाह   परास्येति पूर्व्वाशङ्केः ब्रह्मस्वरूपाद्भेदप्रतिपादनात् विविधेति शक्तय इति च बहुत्वाभिधानात्स्वेनैव
टी·नं· स्वस्य भेदायोगात् एकस्यानेकत्वायोगाच्चेत्यर्थः नैयायिकादिभिः स्वीकृतं चासामीश्वरपरत्वमित्यर्थः नैयायिकेति परितोषयामः परितो
१२८ षयिष्यामः प्रथमामर्थापत्तिं समर्थयते तथाहीति स्फोटादीति प्रतिबंधाभावस्य कारणत्वाभावे शक्तेः प्रतिबद्धायाः कारणत्वं न स्यादिति य
दुक्तं तद्विकल्प्य दूषयति मैवमिति प्रतिबंधाभावस्य कारणत्वाभावे शक्तिकारणत्वापलापलक्षणप्रतिकूलतर्कं दर्शयित्वा विपर्य्ययपर्य्य

नच स्वरूपत्वमपि शक्तेः परास्येत्यादिषष्ठ्या स्वरूपातिरिक्तत्वप्रतिपादनात् अस्य शक्तिर्विविधा नानातु शक्तय इ
ति च नानात्वेन श्रूयमाणाया एकरूपब्रह्मत्वासंभवाच्च नचासां श्रुतिस्मृतीनामर्थवादत्वमुपक्रमोपसंहारादिलिंगै
रीश्वरस्वरूपत्वाध्यवसायात् नैयायिकादिभिरेतासामीश्वरस्वरूपपरत्वाभ्युपगमाच्च अथैवमपि नार्थापत्त्यनुमा
नैर्विना नान्यकिंकमन्यत्तुष्यति भवान् तदर्थापत्त्यनुमानोपन्यासेन भवंतं परितोषयामः तथाहि स्फोटादिकार्यो
त्पत्त्यन्यथानुपपत्तिलक्षणोदाहृतैवार्थापत्तिः ननु तत्राप्युदितैवान्यथाप्युपपत्तिः प्रतिबंधकाभावसहकृताद्वह्नि
स्वरूपात्कार्य्योत्पत्तेः नच प्रागभावप्रध्वंसाभावादिविकल्पेनाभावस्याकारणत्वं शक्तावपि तत्प्रसंगस्य तुल्यत्वादप्र
तिबद्धाया एव शक्तेः कारणत्वादिति चेन्मैवं विकल्पासहत्वात् तथाहि यदि प्रतिबंधकाभावः कारणं न स्यान्न स्यात्तर्हि
शक्तिरपि कारणमिति प्रतिकूलतर्कमात्रमिदं किंवा भवति च शक्तिः कारणं ततः प्रतिबंधकाभावोपि कारणमिति
विपर्य्ययपर्य्यवसानादभावस्य कारणत्वसाधकं वा नाद्यः तर्कमात्रस्योपालंभानंगत्वात् नेतरः भवति च शक्तिः
कारणमिति विपर्य्ययस्य शक्तिमनिच्छता वक्तुमशक्यत्वात् ॥ २१ वसानरूपप्रमाणादभावस्य कारणतासाधकत्वमिति

द्वितीयं पक्षं दर्शयति भवतीत्यादिना विपर्य्ययपर्य्यवसानरहितस्य तर्कस्याभासत्वात्ततः प्रतिपक्षनिराकरणसिद्धिरित्याह नाद्य इ राम·
ति द्वितीयं दूषयति नेतर इति एवं हि विपर्य्ययपर्य्यवसाने मृदादिविशेषणप्रतिबंधाभावः कारणं प्रतिबंधाभावत्वात् शक्तिविशेष १२९
णप्रतिबंधाभाववदिति तथैव तच्छक्त्यानुमाने दृष्टान्तस्याश्रयहीनत्वादिदोषग्रस्तत्वादित्यर्थः ॥

ननु द्विविधस्तर्कः स्वपक्षसाधकानुकूलः प्रतिपक्षदूषकश्च तत्राद्यः स्वविपर्यये पर्यवसानमपेक्षितं इतरथाऽसाधकानुकूल-
त्वासिद्धेः चरमस्य तु न तदपेक्षितं परसिद्धव्याप्तिमादाय परस्यानिष्टप्रसक्तेः शक्यकरणत्वात् तादृशश्चायमिति तत्राह नचेति
तत्र हेतुः प्रमितत्वादिरस्य हि मते प्रमितेऽधिकरणे प्रमितप्रतियोगिक एव निषेधः नाप्रमितप्रतियोगिकस्तस्य वादिनो यदि प्र-
तिबंधाभावः कारणं न भवेत् तर्हि शक्तिरपि कारणं न भवेदिति शक्तिकारणत्वनिषेधं न शक्यं शक्तेस्तत्कारणत्वस्य चाप्रमितत्वात्
प्रमितत्वेनास्वरूपेण निषेधानुपपत्तेः उक्तं च प्रमितस्यैव निषेधप्रतियोगित्वधर्मित्वं चोदयनेन व्यावर्त्याभाववत्त्वैव भाविकी हि वि-
शेष्यता अभावविरहात्मत्वं वस्तुनः प्रतियोगितेति नहि द्रव्यत्वनामविपर्यये पर्यवसाय्यपि तर्को निषेध एव शक्तिकारणत्वस्यापा

नच परसिद्धेन परस्यानिष्टापादनं प्रमितप्रतियोगिकनिषेधवादिनः शक्तिरपि कारणं न भवेदित्येवं विधिनिषे-
धस्याप्यसिद्धेः तथापि जलस्यकस्यामवधीर्य प्रतिबंधकाभावस्याकारणत्वे प्रतिबद्धापि शक्तिः किमिति का-
र्यं न जनयेदिति सुहृद्भावेन पृच्छतः किमुत्तरमिति चेत् श्रूयतां न हि दर्शनरहस्यं सतिपुष्कलकारणे कार्यमा-
दविरोधिप्रतिबंधकमिति हि शक्तिवादिनः॥ ॥ दृष्टिं तु न शक्यत इति भावः वस्तुव्याप्तिं तु भवांस्तु पृच्छति तथापीति य-
दि प्रतिबंधाभावः कारणं न भवेत् प्रतिबंधे विद्यमानेऽपि किमिति शक्तिः कार्यं न जनयेदित्यर्थः अत्र सामग्रीवैकल्यस्य प्रतिबं-
धताभावेनावराह सतीत्यादिना कारणाभावस्यावच्छेदार्थं सतिपुष्कलकारणमित्युक्तं कार्योत्पत्तिं प्रति कारणपौष्कल्ये सति यदु-
त्पत्तिविरोधि तत्प्रतिबंधकमिति शक्तिवादिन इष्टं तेन प्रतिबंधसमयेऽपि कारणपौष्कल्यात्तु प्रतिबंधाभावस्य कारणांतरभाव इति
भावः यद्वात्रोदयनेन सति पुष्कलकारणे कार्योत्पादविरोधी प्रतिबंधक इति मतमसहमानेनोक्तं येतु प्रतिपादयंति कार्यानुत्पा-
द एव प्रतिबंध इति तैः प्रतिबंधमकुर्वन्नेव प्रतिबंधक इत्युक्तं भवति तथा हि कार्यानुत्पाद इति कोऽर्थः कार्यप्रागभावो वा स्यात् का-
र्यप्रागभावस्य कालांतरसाप्तिर्वा स्यात् नाद्यः तस्यानादित्वेन मणिमंत्राद्यजन्यत्वात्॥

न द्वितीयः कालस्यैकत्वेन कालांतराभावात् अथ कालभेदकउपाधिः कालांतरं तस्य तावत्स्वकारणजन्यत्वेन न मण्यादिजन्यत्वम् अ-
थ प्रागभावावच्छिन्नकालोपाधिर्मंत्रजन्यः न प्रागभावस्यानादित्वेन तदवच्छिन्नकालोपाधेरपि मंत्रादिजन्यत्वानुपपत्तेः तस्मात्साम-
ग्रीतत्कार्ययोः पौर्वापर्यनियमात् भावयोरपि पौर्वापर्यभावउपपद्यते यत्तु तत्तु तस्य कालत्वमेवेति नायं पंथाः किंतु सामग्रीवैकल्यं
प्रतिबंधपदार्थो मुख्यः स च मंत्रादिरेव न तत्सोऽप्रतिबंधकः न च तस्याः किंचित्करत्वं दोषाय तत्प्रयोक्तारस्तु प्रतिबंधकाः ते च किंचित्करा
इति तदेतदपि गजेन कारणानां कार्योदासीनस्यैव प्रतिबंधकत्वेन निर्वक्ष्यमाणत्वात् आकाशमुष्टिहननायते किंच भवतु कालस्य प्रा-
गभावस्यानादित्वं कालोपाधेश्च स्वकारणाधीनत्वात् मंत्राद्यजन्यत्वं च तथापि प्रागभावावच्छिन्नकालोपाधिस्तत्संबंधो वा किमिति
मंत्रादिजन्यो न भवेत् न हि स प्रागभावो नाप्युपाधिमात्रं नापि कालमात्रं तस्मात्सति पुष्कलकारणे कार्य्योत्पादविरोधी प्रतिबंधक इत्य-

तेन न सामग्रीवैकल्यात्तत्र कार्य्यानुदयः किंतु विरोधिसद्भावादेव न च सामग्रीवैकल्यमेव प्रतिबंधो लोकप्रसिद्धि-
विरोधात् न हि कुसूलनिहितबीजानि क्षितिपवनपाथस्तेजस्संसर्गविरहितानि तंतवो वा मंजूषानिहितास्तुरीवेम-
कुविंदादिविरहिणः प्रतिबद्धा इति प्रतियंति लौकिकाः सामग्रीविधुरतामात्रस्य च प्रतिबंधतायां समस्तस्यापि हे-
तुजातस्य प्रतिबंधाभावत्वेनैवोपक्षीणत्वादिदमस्य कारणमयं च प्रतिबंधाभाव इति परीक्षकाणां विशेषावधारणमेव ॥ मू ॥

यमेव पंथाः ननु भवतु अयं प्रतिबंधकस्ततः किमिति तत्राह तेनेति सामग्रीवैकल्यस्य प्रतिबंधकत्वाभावात्ततः कार्यानुत्पादः
किंत्वस्माद्विरोधिन इत्यर्थः ननु सत्यं न सामग्रीवैकल्यं प्रतिबंधकः किंतु प्रतिबंध इति तत्राह न च सामग्रीति प्रसिद्धिविरोधमे-
व दर्शयति नहीति पाथ उदकं यद्धि हि सामग्रीवैकल्यं प्रतिबंधः ततः सहकारिरहितबीजेषु सहकारिरहिततंतुषु प्रतिबद्धबुद्धिः स्या-
त् न त्वेतदस्ति ततो नियमेन तदनुपलब्धिरर्थाभावनिवेदिका इत्यर्थः इतश्च न सामग्रीवैकल्यमात्रं प्रतिबंध इत्याह सामग्रीविधुरेति
अस्ति तावदिदमस्य कारणमयं प्रतिबंधाभाव इति विभागः इतरथा प्रतिबंधसहितकारणानां सामग्रीत्वाभावप्रसंगात् स चायं वि-
भागस्त्वत्पक्षे न सिद्ध्येत् सर्वस्यैव कारणस्य सवैधुर्यलक्षणप्रतिबंधाभावरूपत्वादित्यर्थः ॥

तदेवं सामग्रीवैकल्यप्रतिबंधनिरसनेन प्रतिबंधाभावस्य कारणत्वमपि निरस्तं तत्रान्वयव्यतिरेकविरोधं शंकते अभावस्येति विरोध्यभाववि
षयतयान्यथासिद्धत्वात् न तावदभावस्य कारणत्वं कल्प्यत इत्याह सेयमित्यादिना उक्तस्यायमर्थः स्वतःप्रामाण्यवादे स्वशक्तिप्रतिबंधा
परिहारायापूर्वादिना प्रतिबंदीं स्मारयति पूर्ववादी तदनुपलब्धेरिति शंकयति तत्रापि वक्तुं घटाभावोपलब्धेर्विरोधिनो घटोपलब्धिस्तदभा
वश्च तदनुपलब्धिस्ततो योग्यत्वे सत्यनुपलब्धेरभावोपलब्धेश्चान्यथासिद्धान्वयव्यतिरेकत्वात् न कार्यकारणभाव इत्यभावप्रमाणाभावः
स्यादित्यर्थः यद्यप्येवं तथापि कारणान्तराभावाद्गत्यानुपलब्धेरनन्यथासिद्धायास्तत्र कारणत्वमाश्रितं इदं तु न तथेति वैषम्येण परिहर

अभावस्याकारणत्वे कार्येणान्वयव्यतिरेकविरोध इति चेन्मैवं अन्यथासिद्धत्वात् अनन्यथासिद्धौ चान्वयव्यतिरेकौ कार
णत्वक्लृप्तिं कुर्वाते इति न्यायात् तर्ह्यनुपलब्धेरप्यभावोपलंभहेतुता न भवेत् विरोधिन्याभावोपलब्धेरभावतया तदन्वय
व्यतिरेकयोरप्यन्यथासिद्धेर्वक्तुं सुकरत्वादिति चेन्न तद्व्यतिरेकेणाभावोपलंभकारणानिरूपणात् इंद्रियमेव का
रणमिति चेन्न तस्याभावेन सन्निकर्षाभावात् संयोगसमवाययोस्तत्राभावात् विशेषणविशेष्यभावस्य च संबं
धान्तरगर्भस्यैव प्रत्यक्षांगत्वात् न तत्राभावस्य प्रत्यक्षगम्यत्वं किं त्वनुपलब्धिगम्यत्वमेवेति निश्चीयते अन्यथायं
पर्वतो वह्निमानित्यत्र वह्नेरपि संयुक्तविशेषणतया प्रत्यक्षत्वप्रसंगात् नन्वसंबद्धस्यैवाभावस्येंद्रियग्राह्यत्वमस्तु त
त्प्रतीतेरिन्द्रियान्वयव्यतिरेकानुविधायित्वेनापरोक्षत्वात् ॥ ॥ ति न तदिति गत्यंतरं शंकते इंद्रियमिति सन्निकर्षाभाव
मेवाह संयोगेति द्रव्ययोर्हि संयोगो गुणत्वान्न चाभावोऽद्रव्यं तथा कार्यद्रव्यगुणकर्मसामान्यविशेषाणामेव समवायः न चैषामन्य
तमोऽभाव इत्यर्थः ननु संयुक्तविशेषणत्वादिकमस्ति संबंधान्तरमिति तत्राह विशेषणेति संबंधाभावात् प्रत्यक्षत्वमुक्तमुपसंहरति
न तत्रेति यदि च संयुक्तविशेषणतैव प्रत्यक्षबुद्धिनिमित्तं तर्हि प्रत्यक्षधर्मिकानुमानोच्छेदः स्यादित्याह अन्यथेति नन्वपरोक्षाभा
वप्रतीतिरिन्द्रियान्वयव्यतिरेकौ चान्यथानुपपन्नावसंबद्धस्यापि ग्रहणं कल्पयत एव यथा हि भावेषु विशेषणविशेष्यभावस्य मूल
संबंधनिबंधनस्य तन्निबंधनस्यापि च स्वीकारस्तथाऽभावे तदभावेपि प्रतीतिबलादेवांगीकार इति शंकते नन्विति ॥ ॥

चि.सु.
टी.न.
१३०

नन्वेतदपरोक्षत्वप्रादिवद्भातिरेवेत्याशंक्य मैवं वाधाभावादित्याह गत्यंतरेति विशिष्टप्रतीतेरुभयवादिसंमतत्वात् मूलसंबंधरहितो
पि विशेषणविशेष्यभावः प्रत्यक्षागमिति वक्तव्यं नतु तथाविधस्य प्रत्यक्षागत्वे मानमस्ति अपरोक्षत्वस्यासिद्धत्वात् सोपकप्रमाणाभा
वादयोगीन्द्रियाणां संबद्धार्थग्राहकत्वनियमभंगो नांगीकरणीयः इदं निर्घटं भूतलमिति व्यवहारस्याय घटो गुरुत्ववपर्वतो वह्निमानि
त्यादिव्यवहारवदधिकरणप्रत्यक्षतामात्रेणोपपत्तेरित्यभिप्रेत्य परिहरति मैवमिति योगीन्द्रियव्यावृत्त्यै अयोगीति पदं अपरो
क्षत्वानुपपत्तेरनुदयमाह अभावेति स्वाप्नापरोक्षवद्भानित्यादित्यर्थः विशेषणादिभावे तु गत्यंतरं नास्ति आश्रयापरोक्ष्याच्च निर्घटं

गत्यंतराभावाच्चेति चेत् मैवं अयोगिप्रत्यक्षप्रमितानामिंद्रियाणां संबद्धार्थग्राहकत्वनियमस्य निराकर्तुमशक्यत्वा
त् अभावप्रतीतेरपरोक्षत्वस्यासिद्धत्वादिंद्रियान्वयव्यतिरेकयोरधिकरणग्रहणमात्र एवोपक्षीणतयान्यथा।
सिद्धत्वाच्च नन्वधिकरणग्रहणमात्रोपक्षीणत्वमन्वयव्यतिरेकयोरयुक्तं अंधस्य त्वगिंद्रियेणोपनीते घटादौ रू
पाभावप्रतीतिप्रसंगात् अधिकरणस्य गृहीतत्वात् इंद्रियस्य चाभावाग्राहकत्वात् तस्मादंधस्य प्रतियोगि
ग्राहकेंद्रियाभावादेव रूपाभावप्रतीत्यनुदय इति वाच्यं तथा चाभावस्येन्द्रियकत्वसिद्धिरिति चेन्नैवम् अ

मू भावस्य प्रतियोगिग्राहकेंद्रियग्राह्यत्वमतेप्यंधस्यापि मेवादौ घटतद्रूपाद्यभावस्य चाक्षुषत्वं किं न स्यात् ॥

भूतलमिति प्रतीति घटो गुरुत्ववानित्यादिवदिति भावः अधिकरणविषयतयेन्द्रियान्वयव्यतिरेकयोरन्यथासिद्धिरयुक्ता अतिप्र
संगादिति शंकते नन्विति यद्यप्यभावस्यैन्द्रियग्राह्यता नहांधस्यापि त्वगादिना घटादावधिकरणे गृहीते तत्र रूपाभावग्रहणप्रसं
गः तत्र हेतुः अधिकरणस्येति अथेन्द्रियाभावान्न रूपाभावप्रत्यक्षमिति चे— तत्राह इंद्रियस्येति तस्मादधिकृतादभावाग्रहणं त
दिन्द्रियमभावग्राहकं वक्तव्यमित्याह तस्मादिति तामिमामुद्भावनीयामनुपपत्तिं परिहरति मैवमिति यस्यापि मते प्रतियोगिग्राहकेन्द्रिय। राम.
ग्राह्यत्वमभावस्याभिमतं तस्यासन्निहितमेवादौ घटाद्यभावः किमिति चक्षुषा न गृह्यते इति पर्यनुयोगेयः परिहारः प्रतियोगिग्राहकेन्द्रियाग्र १३०
हणमधिकरणस्य सोऽस्मन्मतेपि समान इति खंडनकार्थः ॥ ८ ॥ ९ ॥

यत्प्रतियोगिग्राहकेणाधिकरणे गृहीतेऽभावस्य योग्यानुपलब्धिगम्यत्वं तर्हि गंधग्राहकेन्द्रियागोचरे कुसुमे रूपग्राहकेन्द्रियागोच
रे च वायौ गंधरूपयोरभावे न योग्यानुपलब्धिगम्य इति प्रत्यक्षो वक्तव्यः सत्तस्थाने प्रत्यक्षत्वं चैवंविधस्थलेषु प्रमाहितमुदयनेनाकाशे
शब्दाभावस्याप्रत्यक्षत्वसमर्थनात् एवं हि मन्ये धर्मिसन्निकर्षो निदानं न तु पुनर्धर्मिग्रहणं भूतलादेरत्रुटेश्च गन्धाद्ययोग्यत्वात् घ्राणस्य तन्नाये
न धर्मिधिषणास्य सन्निधापति नत्वभावग्रहणोपयोगितया तस्मादिन्द्रियसन्निकृष्टे धर्मिण्यभावः प्रत्यक्षः स एव तितनः शब्दाभावः प्रत्य
क्ष इति परिहरति माभूदिति अत्र तावद्वाय्वादौ रूपाद्यभावस्य चाक्षुषत्वे कोऽप्यानमेव शरणं तद्व्यवहारस्य प्रमाणान्तरवेद्यत्वेना
नुपपत्तेः अस्तु न प्रतियोगिवद्धर्मिणोऽप्यभावनिरूपकत्वात् तत्प्रतीतौ च प्रतीतिरेव तद्धस्त्यैव प्रतीति घटाभाव इति इह घटाभाव इत्ये

ननु तत्र प्रतियोगिनश्चाक्षुषत्वेऽप्यधिकरणस्याचाक्षुषत्वान्न तत्र रूपाभावश्चाक्षुष इति चेत् एवं तर्हि सन्ततेऽपि
न अंधस्य त्वगिन्द्रियगृहीते घटादौ रूपाभावप्रतीतिः प्रतियोगिग्राहकेणाधिकरणस्य घटादेरग्रहणात् तर्हि घ्रा
णागोचरकुसुमादौ वायौ वा चाक्षुषे गंधस्य रूपस्य चाभावः प्रत्यक्षो न स्यादिति चेत् माभूत् तत्र प्रमाणान्तरवे
द्यत्वेऽपि तद्व्यवहाराविरोधात् न च सर्वत्र षष्ठप्रमाणत्वादिनामनुपलब्धिगम्य एवाभाव इति नियमः व्यापकाभा
वाद्व्याप्याभावस्य कारणाभावेन कार्याभावस्य वाऽनुमेयत्वाङ्गीकारात् ९ वप्रतीतेः उक्तं च वृद्धैः सद्भावमभावो निरूप्य

ते नासद्भावमिति न चैतदुभयनिरूप्यसंयोगादिप्रतियोगिकाभावविषयं संकोचे प्रमाणाभावात् तस्माद्धर्मिग्रहणमपि कारणमेवा
भावग्रहणे तर्हि तेषु च प्रमाणान्तरवेद्यत्वमित्यपरिपंथी पंथाः प्रमाणान्तरं च कुसुमे गंधानुपलब्धिरेव तदभावेऽनुमानं वायावपि
द्रव्यत्वसमानाधिकरणद्रव्यत्वावान्तरजात्यनधिकरणत्वादिभिरनुमानमित्यादि स्यात् एतदास्ववादिनः प्रत्यक्षानुमानागमैः यथा
यथमभावो गृह्यत इति मतं तस्यैव स्यात् यस्य तु योग्यत्वे सत्यनुपलब्ध्यैकवेद्योऽभावः प्रतियोगिग्राहकेन्द्रियगृहीत एव धर्मिणि तस्य
स्वरूपं ज्ञाने विरोधः स्यादिति तत्राह न चेति अयमर्थः यदि हि वक्ष्यमाणतत्तद्दृष्टसंमतिवशात् प्रमाणान्तरगम्यत्वमप्यभावस्यास्ति त
दा योग्यानुपलब्धिगम्यस्थल एव प्रतियोगिग्राहकेणाधिकरणग्रहणनियमः तत्कस्य हेतोः तत्तदविनाभूतकारणव्यतिरिक्तकारण

पोक्षत्वं हि योग्यत्वं तत्तदन्तःपातित्वेन्द्रियमिति तदभावेपि योग्यत्वं न भवेत् यत्र तु प्रमाणान्तरगम्यत्वं तत्र तद्विरहे पिशाचोऽभावो गृहीतु
मिति व्यापकाभावाद्व्याप्याभावानुमाने भट्टसंमतिमाह उक्तं हीति अग्निधूमयोर्भावयोर्यादृशौ नियम्यत्वनियंतृत्वे गम्यगमकत्वे संमते
ते एव च गम्यगमकत्वे तदभावयोर्विपरीते प्रतीयेते धूमो गमको वह्निर्गम्य इति हि भावयोः स्थितिः अभावयोस्तु तद्वैपरीत्येनाग्न्यभावो ग
मको धूमाभावो गम्य इति स्थितिरित्यर्थः कारणाभावेन कार्याभावानुमाने मंडनमिश्रवचनमुदाहरति तथा च ब्रह्मेति नहि कारणसद्भा
वे कार्यसत्ता वियोगतादृति श्लोकविवरणे दोषाभावादप्रहाशंकानिवर्तनेन इत्यस्यानि पक्षे ऽविनिगम्यत्वमुक्तोस्त्वपक्षे वैषम्यमाह
स्वदोषाभावाद्धि पर्य्यवसन्नानाभावः शक्योनुमातुं हेतोरभावे फलाभावस्य नियमादिति अन्यथानुपपत्तिबलादभावस्य कारणतासंभ

उक्तं हि भट्टपादैर्नियम्यत्वनियंतृत्वे भावयोर्यादृशी मते विपरीते प्रतीयेते ते एव तदभावयोरिति तथा च ब्रह्मसिद्धौ
मंडनमिश्रैर्विपर्ययाभावस्तु युक्तोनुमातुं हेत्वभावे फलाभाव इति तस्मादनुपलब्धेरन्यथासिद्धान्वयव्यतिरेकब
लादभावप्रतीतिहेतुता स्थलविशेषवर्णीयते प्रस्तुते च स्वपुष्कलकारणादेव कार्योत्पत्त्युपपत्तौ न प्रतिबंधकाभा
वस्य कारणता अन्योन्याश्रयता चास्य मतेद्वीरा यद्यपि मण्यादेः कार्यप्रतिकूलत्वमन्वयव्यतिरेकावसेयं तथा
पि विसामग्रीरूपतालक्षणं यदिदं प्रतिबंधत्वं तत्तदीयाभावस्य सामग्र्यन्तर्भावविज्ञानसापेक्षं प्रतिबंधो विसा
मग्रीत्वमीकारात् तेन प्रतिबंधत्वसामग्रीत्वयोरन्योन्यापेक्षमेवाधिगतिरिति परस्पराश्रयता कथं न स्यात्

थेन समुपसंहरति तस्मादिति प्रतिबंधकाभावस्य तु न कारणत्वे किंचन प्रमाणमित्याह प्रस्तुते चेति उक्तान्योन्याश्रयमपि समर्थय
ते अन्योन्येति नन्वत्राप्युक्त एव परिहारः कार्यप्रति कूलस्य स्वरूपप्रतिबंधकत्वमनुत्पत्त्यन्वयव्यतिरेकाभ्यामेवावसीयते इति त
त्राह यद्यपीति वैसामग्र्यं हि प्रतिबंधः प्रतिबंधाभावलक्षणकारणवैकल्यं च वैसाग्र्यं तथा च मंत्राद्यभावस्य सामग्र्यन्तर्भावज्ञान
सापेक्षं मण्यादेर्वैसामग्र्यरूपप्रतिबंधकत्वज्ञानं मण्यादेः प्रतिबंधकत्वज्ञानाधीनं तदभावस्य सामग्र्यन्तर्भावज्ञानं प्रतिबंधाभावल
क्षणकारणवैकल्येन वैसामग्र्योपपादनादिति वक्तव्यमन्योन्याश्रयत्वमिति खंडलकार्थः ॥ ॥ १ ॥ ॥

प्रतिबंधकत्वस्य तदभावस्य सामग्र्यंतर्भावे तज्ज्ञानापेक्षज्ञानत्वेपि तदभावस्य सामग्र्यंतर्भावः प्रतिबंधकज्ञानानपेक्षः शक्यो ज्ञातुं न ह्यस्मदादेः कारण-
त्वेन तदभावस्य विसामग्रीत्वज्ञानाधीनमिति परस्पराश्रयपरिहारं पुरैवोक्तं स्मारयति पूर्ववादी नन्विति परिहरतिमेवमिति अनुगत-
रूपभावाद्यद्यन्वयव्यतिरेकौ प्रतीयेते तत्तु व्यक्तं तस्यानन्तत्वेनाशक्यज्ञानत्वात् घटविशेषचिकीर्षया मृद्विशेषापादानानुपपत्तेश्च न
ह्येतद्व्यक्तिमात्रेणैतद्व्यक्तेरन्वयव्यतिरेकावभूतां तद्विशेषस्याप्रागनुपपत्तेः अनुगतेनापि नाद्य सा भवितव्यं यदनतिप्रसंगितदिह प्रतिबंधा-
भावस्यापि कार्यं प्रति हेतुत्वं व्यावृत्ताकारेणाशक्यग्रहणं सदनुगतं पुरस्करोति रूपमः भावत्वं चानुगतमप्यतिप्रसंगि न चाभावेषु जाति

ननु मण्याद्यभावस्य सामग्र्यंतर्भावे ज्ञानसापेक्षमस्तु नाम मण्यादेर्विसामग्रीत्वज्ञानं तथापि तदभावस्यान्वयव्यतिरे-
काभ्यामेव वह्निस्वरूपवत् सामग्र्यंतर्भावावगतिसंभवान्नान्योन्याश्रय इति चेत् मैवं विकल्पासहत्वात् तथा हि किं म-
ण्याद्यभावाः प्रत्येकमन्वयव्यतिरेकाभ्यां कारणतया अवसीयंते अथवा प्रतिबंधाभावत्वोपाधिनाक्रोडीकृताः नाद्यः
मण्याद्यभावानामनंतानामनुपसंग्राहकं विना प्रत्येकमन्वयव्यतिरेकाध्यवसानस्य पुरुषायुषेणाप्यशक्यत्वा-
त् नापि द्वितीयः तथा सति विसामग्रीलक्षणप्रतिबन्धज्ञानाधीनप्रतिबन्धाभावत्वोपाधिज्ञानमंतरेण मण्या-
द्यभावानां सामग्र्यंतर्भावस्य दुरधिगमतयान्योन्याश्रयतादवस्थ्यात् न च शक्तिपक्षे प्रतिबंधासंभवः शक्ति-
मनभ्युपगच्छतामिव शक्तिमभ्युपगच्छतामपि कारणानां कार्योदासीनस्यैव प्रतिबंधत्वोपपत्तेः वैसामग्र्यस्य प्र-
तिबंधस्योद्दीपितरीत्यानिरस्तत्वात् ९ रहितत्वप्रतिबंधाभावत्वमनुगतरूपमुपाधिमादाय कार्येणान्वयव्यतिरेकावव-
गंतव्यौ यदाहोदयनः माभूज्जातिः ननु पहितगृहीतानामेव व्यवहारांगत्वं सर्वत्रोपाधिमद्व्यवहारलोपप्रसंगादित्यतोऽयं दुष्परि-
हर एव दुरात्मा परस्पराश्रयस्तदेतद्विकल्पपूर्वकमाह विकल्पेत्यादि यस्तु शक्तिपक्षेकः प्रतिबंधः शक्तेर्नाशश्चेत्यादिना प्रतिबंधाभा-
वोऽभिहितस्तत्राह न चेति ननु न परस्य कार्योदासीन्यं प्रतिबंधो येनेदं समीक्ष्यते अपितु वैसामग्रीमेव तत्राह वैसामग्र्यस्येति उद्दीपित-
रीतिः परस्पराश्रयः यदत्रलीलावतीकारेणार्थापत्तिमाशंक्योक्तं तत्रान्यथैवोपपत्तेः मणिमंत्रादिनादाह प्रतिपक्षभूतस्यशैत्रसमवा-

अन्यतरेणापि तस्य पुरुषस्य दाहो न स्यादिति चेन्न प्रतिनियताग्निसाध्यदाहप्रतिपक्षस्यैवादृष्टस्य जननादिति तत्त्वेनावहृतत्वं कि
मति विशेषोद्देशेन मन्त्रादि प्रयुक्तः किंवा दाहो न स्यादिति दाहकाग्निमात्रमुद्दिश्यैव नित्वयमेव परिभाव्यतामिति किंच दाहानुकूलमहा
पातकनिकेतने पुंसि दाहप्रतिकूलस्फुटादृष्टप्रभावस्याप्यसंभवात् औषधिलिप्तकाष्ठादिष्वदाहाभावप्रसंगाच्च इदमपि तेनैव शंकितं।
मिति चेत् सम्यग्शंकितं परिहारस्तु संदेहः तत्राप्यौषधलेपकारिपुरुषसमवेतादृष्टस्य दाहप्रतिपक्षभूतस्योत्पादादिति हि परिहारस्त
त्र किं पुरुषकृतौषधलेपादृष्टोत्पत्तिरौषधलेपमात्राद्वा नाद्यः पवनाद्युपनीतौषधिसंपर्के काष्ठादावग्निसंयुक्तेऽदाहभावप्रसं
गात् न द्वितीयः काष्ठादावप्यदृष्टोत्पादापातात् तदलमनेन लीलावतीविलासवचनोद्विलपनेन प्रकृतमर्थोपपत्तिसमर्थनमुपसंहर

अतः प्रतिबंधाभावस्याकारणत्वासंभवात् कार्यार्थापत्तेरन्यथोपपत्तिः उपादानोपादेयभावनियमानुपपत्तिरपि स्थि
तौ प्रमाणमेव ननु तत्र स्वभावभेदादेवोपपत्तेरन्यथोपपत्ते रुक्तेति चेन्नैवं तथा सति सर्वत्र स्वभाववादापादप्रसा
रिकया सामान्यसमवायविशेषादेरपि पराकरणप्रसंगात् तथा हि सत्तायाः स्वभावभेदादेव सदिति व्यवहार
वत् द्रव्यादिष्वपि सद्व्यवहारोपपत्तौ सत्तासामान्यापलापः प्रसज्येत एवं समवायवानयं घट इत्यादाविव संबंधमंत
रेणापि गुणकर्मादेर्विशेषणत्वोपपत्तौ समवायापह्नवः स्यात् विशेषाणां विशेषान्तरेणेव व्यावृत्तिव्यवहार
हेतुत्ववच्च नित्यद्रव्याणामपि स्वभावभेदादेव तथात्वोपपत्तौ विशेषपदार्थपरित्यागप्रसंगः॥ ६ ॥ ६ ॥

ति अत इति द्वितीयार्थापत्तिं समर्थयते उपादानेति तत्र किं शक्तिवादिनोप्यतः स्वभावशास्त्रग्रहणमेव शरणं तदिदमादावेव स्वभावा
श्रयणमिति अभिसंधिनाशुम्नतामाहो कश्चिदपि स्वभावातिरिक्तशक्तौ प्रमाणं नास्तीत्याशंक्य प्राह तथा सतीति सामान्याद्यपलापं यथा
यथमुपपादयति तथाहीत्यादिना सत्तायामनवस्थाभयात्सत्तान्तरमन्तरेणैव स्वभावविशेषात्सद्व्यवहारहेतुत्वांगीकारवदितरत्रापि
स्यादिति सत्तापलापः तथा समवायवानयं घट इत्यत्रापि अनवस्थाभयादन्तरेणैव समवायान्तरं समवायस्य घटं प्रति विशेषणत्ववद्
न्कुलः पटश्चलतीति चेत्तावत्तत्रापि गुणकर्मणोः स्वभावभेदादेव विशेषणविशेष्यभावप्रसंगात् समवायापलापः तथा चा

न्यविशेषेषु परस्परव्यावृत्तिः स्वभाववशात् तत्कस्य हेतोर्विशेषेषु विशेषान्तरस्वीकारे तेषामप्यनुगतरूपवत्तया रूपादिवदन्य विशेषत्वहानेरनवस्थानाच्च कश्चिन्नगत्या निर्विशेषस्वीकारे च तेषामेवान्यविशेषत्वादिति तद्वन्नित्यद्रव्याणामपि स्वभाववशाद्व्या वृत्तिबुद्धिजनकत्वं योगिनामिति न्यायविशेषा पलाय इति रुद्दलकार्थः उपलक्षणं चैतत् कालादेस्तत्संबंधमन्तरेण सत्त्ववदित रेषामपि स्यादिति कालाद्यपलापस्यापि दुष्टत्वम् द्वितीयमाशंकां परिहरति अथेत्यादिना उपादानादिग्रहणमुपलक्षणं चक्षुरा दीनां रूपादिग्रहणनियमस्यापि न हि सन्निकर्षमात्रात्तत्संभवः रसादेरपि तत्स्यादेवमर्थापत्तिं समर्थयित्वा अनुमानमपि समर्थ यितुं श्लोकेन संगृह्णाति स्थितिस्थापकेति इहेत इति धर्मिनिर्देशः पूर्वार्द्धेन साध्यनिर्देशः संग्रहं विवृणोति वह्निरित्यादिना आ

अथ यत्र यत्र प्रमाणमस्ति तत्र तत्र वस्त्वं तदधीनस्तु तद्व्यवहारः यत्र तु तन्नास्ति तत्र तत्स्वभावभेदादेव व्यवहार इति व्यवस्थेति चेत् हन्तैवमत्रापि प्रमाणसद्भावादेव स्वरूपातिरेकिणी शक्तिरंगीक्रियताम् कृतं स्वभाववादपादावलंबनकातरतयेत्यलमतिविस्तरेण अनुमानमपि तत्र प्रमाणम् तथाहि स्थितिस्थापकधर्मोन्यातीन्द्रियाद्यिष्टसंश्रयः इहेतो गुणयोगित्वाद्रूपाश्रयकुंभवत् २४ वह्निरहितातीन्द्रियस्थितिस्थापकेतरभावाश्रयः गुणवत्त्वात् घटवत् न चेश्वरवादिनामतीन्द्रियत्वमसिद्धम्॥

काष्ठादिसंयोगव्यावृत्त्यर्थं अहितेत्युक्तं रूपादिव्यावृत्त्यर्थं अतीन्द्रियेत्युक्तं प्रत्यक्षावयविनः पक्षत्वाद्द्व्यणुकादिगतरूपेण नार्थान्तरता स्थितिस्थापकनिवृत्त्यै स्थितिस्थापकेतरेत्युक्तं अतीन्द्रियाकाशाद्यन्योन्याभावस्याग्निगतस्य व्यावृत्त्यर्थं भावग्रहणं आश्रयग्रहणेन चायुतसिद्धतयाश्रितत्वसंबंधित्वं विवक्षितं तेन न वायुपरमाणुभिरर्थान्तरता गुरुत्वमादाय घटादौ साध्यप्रसिद्धिः आकाशादौ च परममहत्त्वादिना पूर्ववादुक्तमनूद्य दूषयति न चेत्यादिना प्रमाणान्तरोपनीतविशेषणालंबनव्यतिरिक्तमनुव्यवसायव्यतिरिक्तं यदस्मदादिप्रत्यक्षं तद्विषयत्वमतीन्द्रियत्वं विवक्षितं तच्च गुरुत्वादौ प्रसिद्धं तेन न पूर्वोक्तविधाप्रसिद्धविशे

२
वि॰ सु॰
टी॰ न॰
१३३

प्रशस्तपादवचनसंमतिपूर्वकं दर्शयति प्रमाणान्तरेति भाष्ये भावनाग्रहणं स्थितिस्थापकस्याप्युपलक्षणं कुंडमिव बदराणामाश्रयो भवति वायोरप्यग्निरिति तेनार्थान्तरताइति प्रथमं पक्षं दूषयित्वा द्वितीये भाट्टमत्यप्रसिद्धविशेषणतामाह नापि द्वितीय इति अस्तित्वा वद्गगनेवीच्याश्रयत्वविलक्षणाश्रयत्वं स्वकीयरूपस्पर्शादिप्रति तन्मात्रं तु नाम समवायित्वं स्वरूपादितुल्यमेवेदमाश्रयत्वमभिम तं तेनेनार्थान्तरताऽप्रसिद्धविशेषणतेऽत्याह मैवमिति अयुतसिद्धतयेति द्वयोरन्यतरस्यैवापृथगाश्रयित्वराहित्यं पृथगाश्रितत्वराहित्यं वा अयुतसिद्धिस्तत्तयेत्यर्थः ननु तथापि कर्मप्रत्यक्षवादिनः प्राभाकरस्यार्थान्तरतोक्तेत्यत्राह नचेति भाट्टवेदान्तिनोस्तावदक्षीणमिद

प्रमाणान्तरोपनीतविशेषणालंबनानुव्यवसायेन रस्मदादिप्रत्यक्षाविषयत्वस्यातीन्द्रियशब्दार्थस्य गुरुत्वादेर्भावनादेश्चाप्रसिद्धत्वात् गुरुत्वधर्माधर्मभावना अतीन्द्रिया इति प्रशस्तपादेरुक्तत्वात् ननु किमिहाश्रयशब्देनाधारत्वमात्रं विवक्षितमुत तत्समवायित्वं नाद्यः वह्नेः कदाचित्परमाण्वाधारत्वसम्भवेन सिद्धसाधनत्वात् नापि द्वितीयः समवायमनिच्छतो भाट्टस्याप्रसिद्धविशेषणत्वादिति चेन्मैवं समवायानंगीकारेऽपि स्वीयरूपादीनामिवायुतसिद्धतया वह्नेर्विशिष्टधर्माधारत्वस्याश्रयशब्देन विवक्षितत्वात् न चातीन्द्रियकर्माश्रयत्वेन मीमांसकस्यार्थान्तरता शक्तिवादिनोरपि प्राभाकरवद्भाट्टवेदान्तिनोः कर्मातीन्द्रियत्वस्यासिद्धत्वात् विपक्षे च वह्निस्वरूपस्यैव कारणत्वात् प्रतिबंधकाभावकारणत्वस्य पुरस्तान्निरस्तत्वात् मंत्रादिसमवधानेसमवधानयोरविशेषेण कार्यजननप्रसंगो बाधकः ९. सनुमानं तयोः कर्मप्रत्यक्षवादित्वात् प्राभाकरस्य तु भ्रान्तिमात्रमप्र

त्यक्षत्वाभिमानः तथाहि कादाचित्कातिशयः स्वाश्रयातिशयपूर्वक इति तत्तावद्वह्नावस्ति तस्यामेव क्रियायां व्यभिचारात् या या क्रिया सा कादाचित्की न वा न चेत्तन्नित्यत्वं तथा संयोगादिनित्यतापत्तिः कादाचित्की चेदतिशयान्तरपूर्वकत्वेऽनवस्था अतत्पूर्वकत्वे। हेतोस्तत्रैव व्यभिचार इति भावः विपक्षे बाधकमाह विपक्षे चेति विपक्षे मंत्रादिसमवधानासमवधानयोरनादरे तत्सप्तमी अविशेषेण कार्यजननप्रसंगो बाधकः कुतोऽग्निस्वरूपस्यैव कारणत्वात् प्रतिबंधाभावकारणत्वस्य पुरस्तान्निरस्तत्वादिति योजना ॥ ६ ॥

राम
१३३

दूषणांतरमुक्तं निराकरोति नचैवमिति यद्यपि शक्तिवादिनां गुणादिष्वप्येवंधर्मोऽभिमतस्तथापि माभूदुक्तस्थितिस्थापकादेः
कं रूपं तत्तदवान्तरजात्याश्रयत्वमात्राद्द्रव्यत्वप्रसक्तिः अथ तदप्यनेकवृत्तित्वादिष्टमपि भवतीति मतं तथापि गुणवत्त्वं द्रव्यप्र
योजकं न च तद्गुणादावप्यस्तीति न द्रव्यत्वप्रसक्तिरित्याह तेषामिति नह्येतेनैव गुणाधिकरणमपि प्रसंजनीयमिति तत्राह न
चैवमिति प्रशिथिलमूलतया आपादनं दूषयति प्रसंगस्येति एवं ह्यस्य विपर्ययः विप्रतिपन्नगुणाद्येवंविधधर्मानधिकरणं
गुणानधिकरणत्वादिति न चात्र व्याप्तिरस्ति शक्तिगुरुत्वाश्रयव्यतिरिक्तस्य सर्वस्य पक्षकोटिनिक्षिप्तत्वात् अस्तु तर्हि शक्तिरेव

नचैवंविधधर्माश्रयत्वे गुणकर्मादेरपि द्रव्यत्वप्रसंगः तेषां गुणानधिकरणत्वात् नचैवंविधधर्माश्रयत्वा
द्गुणाधिकरणत्वमपि स्यादिति वाच्यं प्रसंगस्य विपर्ययापर्यवसायित्वात् नहि यद्गुणानधिकरणं तदेवं
विधधर्माधिकरणं न भवतीति प्रतिवादिसंप्रतिपन्नमुदाहरणमस्ति येनायं प्रसंगो विपर्यये पर्यवसा
यी स्यात् शक्तिव्यतिरिक्तस्य सर्वस्य पक्षकोटिनिक्षिप्तत्वात् द्वितीयानुमानेऽपि मायावादिनं प्रति नेश्वरकार
णत्वेन सिद्धसाधनता तस्योभयवादिसंमतकारणातिरिक्तत्वाभावादीश्वरकारणत्वस्य वेदान्तिभिरभ्युपग
मात् जन्यभाववजन्यइति विशेषणान्तरप्रक्षेपेण भाट्टस्याप्यर्थान्तरपरिहारसम्भवात् ॥ विपर्ययपर्यवसान।

भूमिः तस्याः गुणानधिकरणत्वादद्विष्ठातीन्द्रियत्वादिविशिष्टधर्मानाश्रयत्वाच्च तथा शक्तावपि शक्तिस्वीकारेणानवस्थापा
तादिति चेन्मैवं नैयायिकादिमतेन तदसिद्धेः न च परसिद्धेन दृष्टान्तेन प्रसंगः प्रसरमासादयतीति सांप्रतमुभयवादिप्रमितस्य साध
नांगतानियमभंगप्रसंगादिति भावः एवं प्रथमानुमानं समर्थयित्वा स्फोटः संप्रतिपन्नस्फोटकारणातिरिक्तकारणजन्यइत्यनु
मानेऽर्थान्तरतामुक्तां परिहरति द्वितीयेति ननु भवतु वेदान्तिभिरीश्वरांगीकारादुभयवादिसंप्रतिपन्नत्वेन तदतिरिक्तत्वाभावा
त्तेश्वरेणार्थान्तरता मीमांसकानां त्वनीश्वरवादित्वाद्भवत्येव तेनार्थान्तरतेति तत्राह जन्यभावइति तथा च नतिरामीश्वरेणार्थान्तरते

भाट्टस्यापीत्युपलक्षणं नहि नित्यगतनित्यशक्त्याव्याप्तिरित्याशंक्य निषेधति नचेत्यादिना नित्यद्रव्येषु द्रव्यत्वेन नित्यगुणेषु गुणत्वेन सामान्यादिषु च शक्त्यन्यनियतत्वेन संप्रतिपन्नवदेव शक्त्यनुमानादिति भावः स्यादेतत् साध्यतानामनित्यतानुकर्षस्यात् यावता शक्त्युपाधिविकरूपायां नित्यत्वानित्यत्वविरोधादिति तत्राह सलिलेति इदमत्राकूतं नैयं शक्तिरेकैव येनैकस्याः शक्तेर्नित्यत्वमजन्यत्वं च विप्रतिषिध्यते अपितु प्रतिपदार्थं विभिन्ना नयावा वयविषु अनित्यत्वेपि रूपस्य पाथः पावकपरमाणुषु नित्यत्ववन्नित्यत्वं किं न स्यादिति आधेयशक्त्या वागमप्रमाणं समर्थयते व्रीहीनिति यत्तु मुख्यार्थानुपपत्त्युपन्यासेनार्थान्तरत्व

नचैवं सति नित्येषु शक्त्यभावप्रसंगः अनित्येषु शक्तिसिद्धौ न दृष्टान्तावष्टंभत एव नित्येष्वपि तत्सिद्धेः सलिलपरमाणुरूपादिवन्नित्येषु नस्यानित्यत्वोपपत्तेः व्रीहीन्प्रोक्षतीत्यादिद्वितीयाश्रुतिभिश्च व्रीह्यादिषु अतीन्द्रियशक्तिसद्भावसिद्धिः नचादृष्टस्यैवेतन धर्मस्याचेतनेषु व्रीह्यादिष्वसंभवात् तद्विषयक्रियाजन्यतामात्रेण तदीयत्वप्रतिपत्त्युपपत्तेश्च द्वितीयाश्रुतिर्गौणीति वाच्यं धर्माधर्मलक्षणादृष्टविलक्षणस्यैव कस्यचिदतिशयस्य तंडुलपिष्टपुरोडाशादिपरम्परयाप्रधानापूर्वजननसामर्थ्यापरनामधेयस्याभ्युपगमात्॥

युक्तं तददूषयति नचेत्यादिना वाच्यमित्यंतेन तत्र हेतुमाह धर्माधर्मेति तास्माभिर्धर्माधर्मात्मकादृष्टं व्रीह्यादिष्वभ्युपेयते अपितु तद्विलक्षणं तदातीन्द्रियातिशयः सर्वो धर्माधर्माभिधानो गुरुत्वादेरपि प्रसंगात् यो हि सुखदुःखफलो पुरुषार्थो वा तमयोपुरुषसमवेतो तो नाम पुण्यापुण्याभिधानो स्तनादृशानियुक्तत्वर्थानि तर्थैव श्रुत्यादिप्रमाणैरवगमादित्यर्थः यथा च प्रोक्षणादीनां गुणकर्मतया स्वतंत्रापूर्वकल्पना नवकाशः तथा मेदलक्षणभाचार्यपादैरतानिर्द्वेधं गुणप्रधानभूतानीत्यत्रोक्तम्॥

ननु व्रीहीणामेव प्रोक्षितानां तण्डुलादिपरंपरया प्रधानापूर्वनिर्वर्तकत्वमस्तु किमत्रादृष्टेन विनानुपपन्नमिति तत्राह अन्यथे
ति एतदनुपपत्त्यात्मकं प्रमाणान्तरमेव वाच्यत् त्रिविधं ह्यंगदृष्टार्थमदृष्टार्थमुभयार्थं चेति तत्र दृष्टार्थेष्वपि नियमादृष्टमस्त्येव।
केवलं दृष्टविधिवैयर्थ्यात् अनन्यलभ्यस्य च शब्दार्थत्वात् अतो विध्यन्यथानुपपत्तिरप्यदृष्टसाधिकेत्यर्थः ननु दृष्टसंभवेनादृ
ष्टकल्पनायुक्तेति तत्राह दृष्टस्येति ननु भवतु विध्यन्यथानुपपत्त्यादृष्टं तच्च येन न समवायित्वेन न धर्मत्वात् भावनाया इति तत्रा
ह संभवति चेति अयमर्थः व्रीहीन्प्रोक्षतीति द्वितीयाश्रुत्या व्रीहीणामेव प्रोक्षणेन संस्कार्यत्वश्रुतेन ननु सक्तूनामिव होमेन भस्म
साद्भूतानां विनियोक्ष्यमाणत्वानुपपत्तिः येन सक्तुभिरितिवद्व्रीहीभिरिति श्रुतविनियोगभंगावकाशः नचनीर्थेस्तानादिव

अन्यथा स्वरूपेणैव व्रीह्यादीनां तत्साधनत्वे प्रोक्षणादिविधानवैयर्थ्यप्रसंगात् दृष्टस्यासंभवे चा
दृष्टस्यैव कल्पनीयत्वात् सम्भवति च मुख्ये लक्षणाश्रयणस्यानवकाशत्वात् एतेन लीलावतीका
रस्यापि निराकृतः प्रयोगः प्रमाणानामागमार्थापत्त्यनुमानानां दर्शितत्वेन प्रमाणेनानुपलभ्यमा
नत्वादिति हेतोरसिद्धेः॥

त्कर्त्तृधर्मत्वात् दिह न विषयतामात्रेण द्वितीयाश्रूयते किंतु संस्कारजन्यातिशयाधारतया तथासति लक्षणास्यात् न
च विना कारणं लक्षणा अतिप्रसंगात् न चागमैकभूमिषु प्रमाणान्तरावतारो येन विरोधशंकापि स्यात् तदुक्तं भाष्यकृद्भि
न विधौ परः शब्दार्थ इति यत्तु श्रीवल्लभेन शक्यपदव्याप्यानुमानमुक्तं तद्दृष्टमुक्तप्रकारेण दूषितमित्याह एतेनेति एतेनेत्ये
तद्दिवृण्वन्न सिद्धिमाह प्रमाणानामिति किंच यच्छब्द तच्छब्दयोस्तावदर्थपर्यालोचनायां अनुमानं शरीरं पूतिकूष्माण्डायते
तथाहि यत्तच्छब्दाभ्यां साध्यविवक्षायां यथा नीलं पीतरूपेणेति दृष्टान्तासंगतिः नीलरूप विवक्षायामनुपक्षासंगतिः अन्य।
थ्यानुगतोऽर्थः न तिप्रसंगी इति रूपः सत्प्रतिपक्षत्वाच्च तथाहि विवादपदं स्वरूपमात्रसंबद्धानीन्द्रियसापेक्षजन्यजनकत्व

१
वि.सु.
टी.न.
१३५

शक्यमनुमातुं नचात्रात्मत्वमुपाधिः स्वरूपमात्रसंबद्धानींद्रियग्राह्यत्वसापेक्षाणां पतनेमापाणादीनामात्मत्वाभावेनसा- ध्याव्यापकत्वात् नच विचारपदं स्वरूपमात्रसंबद्धानींद्रियभावनासापेक्षं अदृष्टसापेक्षमितिवाजनकत्वादात्मवदित्यपिप्र संगेनाभाससमानयोगक्षेमत्वात् आत्मत्वस्यैव तत्रोपाधित्वात् यच्चतेनोक्तं शक्तेरपि शक्त्यन्तरापेक्षायामनवस्थितिः अनपेक्ष त्वेतत्रैव व्यभिचारइतितदसत् शक्तेः स्वकारणत्वाभ्युपगमात् नचातनः प्रतीतिप्रत्यपि कारणत्वमस्तीति वचनीयं प्रत्यक्षप्रती तेरेवार्थजन्यत्वात् शक्तेश्चाप्रत्यक्षत्वात् अनुमानादीनांतु नार्थजन्यत्वमितरथा ऽतीताद्यनुमानाद्युदयप्रसंगात् नचयोगिना मतीताद्यपि प्रत्यक्षमिति प्रत्यक्षेप्यर्थजन्यत्वं शक्यभंजनमतीतादीनां प्रत्यक्षत्वस्यचविवादात् यथाह परमर्षिः विद्यमानोप

तदेवमर्थप्रत्यायनशक्तिसद्भावात्पदानां तदभिहितेभ्यः पदार्थेभ्यः सन्निधानादिसहकारिवशात्पदार्था नामन्योन्यान्वयप्रतिपत्तिलक्षणयासिद्धातीति सिद्धम् १३ ननु पदानामेवान्योन्यान्वितस्वार्थाभिधायक त्वसंभवे किमिति पदार्थानां लक्षणयान्योन्यान्वयप्रतिपत्तिजनकत्वमास्थीयते तथाहि योग्येतरान्वित स्वार्थेषु पदानामावापोद्वारदर्शनात्तत्रैव सामर्थ्यं मध्यवसीयते ९१ लंभनादिति वादार्थमुपसंहरन् शक्तिसा-

मर्थ्येनस्यसमन्वयोपयोगमाह तदेवमित्यादिना अर्थप्रत्यायनशक्तिसद्भावात्पदानांपदैरेवस्वा भिहितपदार्थेभ्योद्वारभूतेभ्यः सन्निधानादिसहकारिवशात् पदार्थानामन्योन्यान्वयप्रतिपत्तिलक्षणयासिद्धातीति सिद्धमित्यन्वयः इत्येषास्मदसंप्रकारविष्व गामायाकुहूर्तीतितोमूलत्वात्प्रकृतिः प्रबोधभयतो ऽविद्यासहायोहिताशक्तिर्विश्वमयस्यपरस्य विग्राहानटमवोधोदधेर्निर्धूता- खिलभेदगंधममलंवंदेभवानीपति पदार्थान्वयप्रतिपत्तेः पदैर्लक्षणयासिद्धातीत्युक्तं तत्र पदार्थानामन्वितावस्थापिपदैरभिधे येवनलक्ष्येति अन्विताभिधानवादिनः प्रत्यवतिष्ठन्ते नतावत् नन्वित्यादिना श्रोत त्वसंभवे लक्षणानन्याय्यामुख्यासुख्ययोर्मुख्यस्या प्यहितत्वादिति भावः नन्वन्विते सामर्थ्याश्रयणाद्वरं स्वरूपमात्रेसामर्थ्याश्रयणमतिलाघवात् इतरथा गौरवप्रसंगादिति तत्राह त

राम.
१३५

नन्वेकस्मिन् प्रयोगे वृषभानयनान्वितं गोत्वं प्रतीयते अपरस्मिन्नानयनान्वितं अपरत्र दर्शनान्वितमिति व्यभिचारिणौ पदार्थान्तरतद
न्वयौ अव्यभिचारि च गोत्वं अव्यभिचारिणि सामर्थ्ये युक्तमाश्रयितुमेकरूप्यादतः पदार्थमात्रमेव पदशक्तिगोचर इति तत्राह यद्य
पीति ननु किमित्येवं व्यभिचारिणोरपि पदार्थान्तरतत्संसर्गयोरनुगतमेकरूपमापाद्यानुगतशक्तिकल्पनानिर्बन्ध इति तत्राह प्र
थममेति तद्धक्तवाक्यार्थमात्रकार्यानाशेनाकांक्षासन्निधिसाम्यप्रयोग्यार्थान्तरसंगमात् स्वार्थानाहुः पदानीति व्युत्पत्तिः संभिन्नापदा।
अन्वयव्यभिचाराभ्यां तदादोषो न कश्चनेति प्रयोगान्तरेषु तु गामानयेत्यादिषु इत्यर्थः अत्राभिहितान्वयवादिना माक्षेपमवतारयति

यद्यपि प्रतिप्रयोगं विशेषान्तरतत्संसर्गयोर्व्यभिचारः तथापि योग्येतरान्वितस्य स्वार्थमात्रस्याव्यभिचारात् प्रथमाव
गतयोग्येतरान्वितस्वार्थाभिधानसामर्थ्यानुसारेण प्रयोगान्तरेष्वपि तथैव कल्पयिष्यते ननु कि— मनभिहितेन पदा
र्थेनान्वितं स्वार्थमवबोधयति गोपदमुत पदान्तराभिहितेन नाद्यः एकस्मादेव पदात् तदर्थान्वितस्वार्थावबोधसं
भवेन पदान्तरस्य वैयर्थ्यप्रसङ्गात् न द्वितीयः परस्पराश्रयप्रसङ्गात् तथाहि गामानयेत्यत्र गोपदं यावदानयपदेन गोप
दार्थान्वितस्वार्थो नाभिधीयते न तावत्तदन्वितस्वार्थमभिधातुमर्हति एवं तदपि पदं यावत्स्वार्थान्वितमर्थं गोपदं ना
भिदध्यात् तावत्तदन्वितस्वार्थं नाभिधत्ते ततश्च गोपदेन तदन्वितस्वार्थेऽभिहिते पश्चादानयपदेन तदन्वितः स्वा
र्थोऽभिधातव्यः सति च तस्मिन् गोपदेन स्वार्थोऽभिधातव्य इति व्यक्तमेव परस्पराश्रयत्वम्

नन्वित्यादिना येन पदार्थान्तरेणान्वितं स्वार्थमभिदधाति गोपदं तत्किमन्येनानभिहितमुताभिहितं आद्ये पदान्तरवैयर्थ्यं विनैव तद
भिधानं तदन्वयलाभात् एकपदादेव सर्वार्थप्रतीतिप्रसङ्गात् न च योग्येतरमात्रान्विताभिधानेऽपि तद्विशेषान्विताभिधानसिद्धये
पदान्तरोपादानं विशेषान्विताभिधानेऽप्यभिहितविकल्पस्य तुल्यत्वात् द्वितीयं दूषयति न द्वितीय इति आनयपदेनेति पदेन गोत्वान्वि
तत्रानयनाभिधाने सति आनयनान्वितं गोत्वं गोपदमभिदध्यात् एवं गोपदेनानयनान्विते गोत्वेऽभिहिते तदन्वितमानयनमा
नयेति पदमभिदध्यादित्यन्योन्याश्रय इति संदर्भार्थः॥

ननु नान्यपरस्य शब्दस्य तथा अवगतः परस्परनिरपेक्षाणि प्रथमपदानि पदार्थान् असंसृष्टान् अभिधाय पश्चादन्योन्यान्वितांस्तानेव प-
दार्थानभिदधतु इति तत्राह पदार्थमात्रेति न केवलमेवं कल्पनायां प्रमाणाभावः अपितु प्रमाणविरोधश्चेत्याह अनुपपद्यमानं चे-
ति तथाहि संसृष्टार्थोपि चेत् पदानि गृहीतसंगतिकानि तमपि प्रथममेवाभिदधतु अगृहीतसंगतिकत्वे पश्चादपि नाभिदधतु इत्यस्यैवा-
नुपपत्तिः सकृत्प्रयुक्तशब्दस्यैव विरम्य व्यापारानुपपत्तिर्वानुपपत्तिः ननु न प्रथममभिधायकानि पदानि येन द्विरभिधानं प्रसज्येत अपितु प्र-
थमं पदार्थेषु स्मृतिरेव जायते सहचरितदर्शनात् सहचरितानि हि पदार्थैः प्रथमं पदान्यनुभूतानि देवदत्तदर्शनादिव तत्सहचरित-

पदार्थमात्राभिधानपूर्वके तु तदन्विताभिधाने द्विरभिधानमप्रमाणमनुपपद्यमानं चापद्येत ननु द्विरभिधानं न पद-
जातस्य साहचर्यवशात् तदर्थेषु प्रथमं स्मारकाणां पश्चादन्विताभिधायकत्वाभ्युपगमादिति चेन्नैवं साहचर्यद-
र्शनदशायामन्वितानामेवानुभूततया तथैव स्मरणस्यावश्याश्रयणीयत्वात् न हि पदं पदार्थमात्रप्रतिपत्त-
ये प्रयुज्यते किन्तु व्यवहाराय स चान्वित एवेति कथमनन्वितानामेव पदार्थानां पदेभ्यः स्मृतिः स्यात् त-
था च गां पश्येति प्रयोगे गोपदेन पूर्वानुभूतानयनान्वितस्वार्थस्य स्मारितत्वात् पश्येति पदमनाकाङ्क्षिता-
र्थमसंगतं प्रसज्येत एवं प्रासादं पश्येत्यत्र प्रासादान्वितस्वार्थाभिधायकत्वात् पश्येति पदस्य न गोपदं तेन
संबध्येत ॥ ८॥

यत्तु दत्ते अनन्तरं तु संसृष्टस्य स्मारकाणां पदार्थानामभिधानमिति तदेकं कथयित्वा परिहरति नैवमिति
अन्वितपदार्थैः साहचर्यमेवोपपादयति न हि पदमिति व्यवहारसमर्थसंसृष्टपदार्थैः साहचर्यान्नासंगतार्थस्मारकपदानां पदार्थ-
मात्रस्मारकत्वमप्रसिद्धमिति स्यार्थ अंगीकारे च दूषणान्तरमाह तथा चेति अयमर्थः गामानयेति प्रयोगे गोपदस्यानयनान्वितगोत्वे-
न साहचर्योपलम्भात् गां पश्येति प्रयोगेपि कारकाभिधायि गोपदमानयनान्वितमेव गोत्वं स्मारयेदिति पश्येति पदमनाकाङ्क्षितार्थ-
मसंगतं प्रसज्येत एवं तस्मिन्नेव प्रयोगे गोपदमपि पश्येत्यनेनान्वितक्रियावाचिना नाकाङ्क्षितार्थस्मारकमसंगतमेव स्यात् पश्येत्यस्य प्र-
योगान्तरेऽर्थान्तरसाहचर्यदर्शनादिति ॥

उक्रामन्यवस्थां सर्वेवाक्येष्वतिदिशति तथा चेति साहचर्याविशेषेपि पदार्थानवैषम्यं शंकते नन्विति व्यभिचारेपि भूयो दर्शनाद्याहि
तत्संस्कारोद्बोधादुत्पद्यमाना स्मृतिर्नान्तरितान्विना न्विनपदार्थयोर्विशिष्यत इति परिहरति मैवमिति भावनासंस्कारः सकृद्दर्शनेपि तद्
दृष्टे पटुप्रत्ययः कुङ्कुमादावभ्यासप्रत्ययः अद्भुते चादरप्रत्ययः तथाप्यप्रबुद्धस्य न स्मृतिजनकत्वमिति प्रबोधग्रहणं तत्तु भावनोद्बोध-
श्च न तथा व्यभिचारिणि यथा अव्यभिचारिणि पदार्थमात्र इति तत्राह तत्प्रबोधस्येति प्रबोध उद्बोधः परिगणितेभ्यः प्रणिधानसाहचर्यादिभ्यो
जन्यमुच्यमप्रबोधस्य तस्येत्यर्थः यथावदस्यपादेन परिगणितानेव ग्राह्यानेरस्मृतिहेतून्दर्शयति परिगणिता हीति स्मृतिहेतवः संस्कारोद्बो-
धनत्वेनेति शेषः प्रणिधानं मनोऽवधानं अभ्यासः प्रसिद्धः लिंगाद्व्याप्तिसंस्कारः लक्षणं धवलछत्रादि चिह्नं राजादिसंस्कारोद्बोधकं

तथा च वाक्यार्थः क्वापि परिनिवृत्तो न सिद्ध्येत् नन्वव्यभिचाराद्योपदं स्वार्थमात्रमेव स्मारयति नार्थान्तराणि तेषां
व्यभिचारित्वादिति चेत् मैवं पदस्यासादरप्रत्ययेनाहिताया भावनायाः प्रबोधवत्याः स्मरणहेतुत्वाङ्गीकारात् तत्प्र-
बोधस्य च व्यभिचारिण्यर्थान्तरेऽपि परिगणितप्रणिधानसाहचर्यादिजन्मनोऽविशेषात् परिगणिता हि स्मृतिहेतवः
प्रणिधानाभ्यासलिंगलक्षणसादृश्यपरिग्रहाश्रिताश्रयसंबन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्ति-
व्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्माः प्रामाणिकै रस्ति चेह योग्येतरान्वयस्यापि साहच-
र्यं स्मरणहेतुः तस्मात्तैरभिहिताः पदार्था यथाकांक्षादिमन्तः परस्परान्वयबोधयन्तीति युक्तमाश्रयितुम् ॥ ६ ॥

सादृश्यं शुक्तिभास्वरतादि रजतादिसंस्कारोद्बोधकम् परिग्रहः स्वीकारः कलत्रादिसंस्कारस्य एवमाश्रिताश्रयावपि परस्परसंस्कारस्य संबो-
धः सहचारः सहचरितसंस्कारस्य आनन्तर्यं पूर्वेण तत्पदार्थसंस्कारस्य वियोगः कामिन्यादेः एककार्यमेकस्याऽन्यकार्याणामन्यतम-
संस्कारस्य विरोधः सर्पनकुलादौ अतिशये नास्ति प्राप्तिर्व्याप्यव्याप्यव्यापकयोर्व्यवधानं प्रियतमव्यवहिते सुखदुःखादि तज्जातीयस्य
तद्वेषोऽर्थित्वमर्थनीये अर्थित्वं तु मात्रविषयपुनः पुनरिच्छा तेनेच्छयान्नपानस्मृतम् क्रियारागः क्रियाशक्तिः स्वविषयस्य धर्माध-
र्मौ शुभाशुभविषयसंस्कारोद्बोधकौ यस्मादेव मन्वितानभिधानपक्षेन घटतेऽतोऽभिहितान्वयपक्ष एव श्रेयानित्युपसंहरति अभिहिता

१
वि·सु·
टी·न·
२३७

अन्वितानिधानवादी स्वपक्षदूषणं प्रतिबंधासमाद्धाति मैवमित्यादिना पदार्था एव पदैरभिधीयंते तदन्वयस्तु लक्ष्यत इति यस्या
भिहितान्वयवादिनो मतं तेनापि पदार्थविषयाः प्रत्ययाः प्रमाणत्वेन नाभ्युपगंतुं शक्याः अनधिगतार्थगंतृत्वाभावात् सर्वस्य सत्त्वप्रसं
गात्त्व नापि विपर्ययसंशयत्वाभ्यां यथार्थनिश्चयत्वादतः परिशेषात्स्मृतिरूपा एवैष्टव्याः तास्तु न पदार्थमात्रगोचराः सहचरितदर्शनात्
तत्स्वल्पसंस्कारोद्बोधः साहचर्यं च नित्यं पदार्थैः न तु नित्यैरित्यपि पुष्पं नैवावेदितम् तथा च कथं तत्स्मृतेः पदार्थमात्रस्य प्रथमस्म
रणं सोऽयमात्मीयः स्वपक्षः वाणीभूतं न प्रवर्तत इति भावः ननु द्विविधा स्मृतिः पदजनिता साहचर्यादभिधानाच्च तत्र साहचर्यमन्वितेऽपि स
मानं अभिधानं तु पदार्थमात्रे अभिधानद्वारा च पदस्मारितं तदेव वाक्यार्थान्वयोपयोगि नेतरदिति ब्रूमो देवदत्त गामानयेत्यादौ तस्य

मैवं तथापि पदार्थविषयाः प्रत्ययाः प्रमाणविपर्ययसंशयादिष्वनंतर्भावात्स्मृतिरूपा एष्टव्यास्ताश्चान्वितगोचरात्
स्वरूपमात्रगोचरा इति तु स्थितो दोषः न च वाच्यमभिधानतः स्मारितमेव वाक्यार्थान्वयि न साहचर्यमात्रादिति
गंगायां घोषः प्रतिवसतीत्यादौ यदानभिहितं तीरादि तस्य वाक्यार्थान्वयप्रसंगात् अभ्यासातिशयश्च पदा
र्थस्मरणहेतुः स च यथा पदानां स्वार्थेषु न तथार्थान्तरेष्विति व्यभिचारित्वात् तथा च स्वरूपमात्रेणैव पदैः
स्मारिताः पदार्थाः आकांक्षादिमन्तः पदैरन्विता अभिधीयन्त इति न परस्पराश्रयता ॥ ९ ॥ इत्युक्तिं यत्तु दत्तादेरन्वय

दर्शनात्तत्तो वैयर्थ्यमिति तत्राह नचेति हेतुमाह गंगायामिति यदि ह्यभिधानेन स्मारितमेव वाक्यार्थोपयोगि न हि तीरादिपदार्थानां वाक्या
र्थान्वयो न स्यात्तेषामभिधानाभावात् न तु तथा साहचर्यादेव स्मारितत्वादित्यर्थः तत्किमेवमनुपपन्नं स्मारकं तेन निर्दृष्टो भवान् तथा
च मतानुज्ञा राजपक्ष्मकसीकारः स्यादित्यतः स्वपक्षे परिहारमाह अभ्यासेति यस्मादव्यभिचारिपदार्थेषु अभ्यासातिशयात्तावन्मात्रस्य
प्रथमं स्मरणोपपत्तिः अतः पूर्वोक्तः परस्पराश्रयपरिहारः स्थित एवेत्याह तथा चेति तदुक्तं शास्त्रे निर्णये क्रमेणावगतान्यर्थान्यु
गपत्तदहमनंतरमभिमीलनस्यदानीति नान्योन्याश्रयदोष इति नार्थैरपि श्रूयमाणपदसंवेस्मारितानन्वितार्थकं न्यायसंपादितव्यक्ति
पश्चाद्वाक्यार्थबोधकं स्मृतिसन्निहितैरेवमर्थैरन्वितमात्मनः अर्थमाह पदसत्वमिति नान्योन्यसंश्रय इति ॥

राम·
२३७

यत्तु सर्वेषां पदानामन्योन्यानाकांक्षितार्थसमर्पणमापादितं तत्त्वभिधानापर्यवसानाद्वा अभिहितार्थापर्यवसानाद्वा पदार्थान्तरे
त्तु हवस्य जिज्ञासास्था कांक्षा नाम यथाहुः अभिधानावसानाद्धि जिज्ञासार्थोन्त्यजायते प्रयोजनावसानाच्च पदार्थे सा निवर्त्तत इति नार्थेना
पि अन्वितस्याभिधानार्थं स्मिन्नाहितादिद्धाभिधानानवसानजनिताकांक्षा पदार्थान्तरेपि समानान्तद्धि शेषनिर्णयक्रमसन्निहितयो
र्यपदावमर्शो हि त्वभिप्रेत्य परिहरति नापीति न च पदत्रया ग्राम्यके अन्यतरानाकांक्षाकारणद्वयोभावादिति वाच्य अश्रूय
माणे हि तथा श्रूयमाणे तु वक्रपदन्याये नाकांक्षाकल्पनात् अभिधानापर्यवसानोदाहरणमाह यथा रश्मेति हसइति पदेनापि

नापि पदान्तरानाकांक्षा आकांक्षा हि प्रतिपत्तुर्जिज्ञासा चाभिधानापर्यवसानादभिहितार्थापर्यव-
सानाद्वा भवति यथा वृक्ष इत्युक्ते प्रातिपदिकार्थमात्रे प्रथमाविभक्तेः स्मरणात्तेनैव तस्यान्विताभिधा
नासम्भवादन्यस्य चानभिधानादभिधानपर्यवसानायैवाकांक्षा यथा वा विश्वजिता यजेतेत्यत्र
कार्यस्य विषयकरणान्वितनया प्रतीतस्यैवापर्यवसानाद्धिशिष्टाधिकारिकल्पना ॥ ॥ ॥

हि पदत्वादन्वितो वृक्षोभिधातव्यः स च केनान्वित इति विमर्शे नतावद्वृक्षं वृक्षेण वा वृक्षेभ्य इत्यादौ कर्मकरणादिभिरिव विभक्त्यर्थैर्नसा
तिपदिकार्थमात्रे प्रथमाविधानात् प्रातिपदिकार्थलिंगपरिमाणवचनमात्रे प्रथमेति प्रातिपदिकार्थादिविषये प्रथमा पाणि
निः स्मरति स्म न च पदार्थान्तरमभिहितमस्ति तस्मादभिधानपर्यवसानायैव तत्र तिष्ठतीत्यादौ जिज्ञासेत्यर्थः अभिहिताप
र्यवसानस्योदाहरणमाह यथा वेति विषयो धात्वर्थः स एव करणं तत्र हि पदान्तरश्रवणादभिधानपर्यवसानेप्यभिहि
तापूर्वापर्यवसानमस्ति विषयनियोज्यत्वात्तत्तो हि नियोगः प्रतीयमानोऽनुष्ठानायकल्प्यत इति विषयवन्नियोज्यमप्यपेक्ष्यते

२

वि.सु. टी.न. १३८

प्रतिपादितामाकांक्षां प्रकृते प्रदर्शयति तदेवमिति यद्यप्यन्योन्याश्रयादिदोषो नास्ति तथाप्यभिहितपदार्थेभ्य एव संसर्गोऽस्ति
त्वे पदानामपि सामर्थ्यकल्पनायां कल्पनागौरवं दूषणमित्यभिहितान्वयवादी शंकते नन्विति यदि हि पदार्थानां संसर्गबोधकत्वं
स्यात्तदा तदुपहाय पदानामपि सामर्थ्यकल्पनायां स्यादेव गौरवं न तु तदस्ति प्रमाणान्तरगृहीतपदार्थेष्वदर्शनादित्याह मैव
मिति तदुक्तं च नार्थेन किन्तु तेषां न दृष्टेषां शक्तिः मानान्तरोद्गतो कस्माद्विशिष्टार्थे परस्परसंसर्गभाविनेऽपि प्रमाणान्तरगृहीताना
मप्यस्त्येव संसर्गबोधकत्वमिति शंकते नन्विति अत्र हि दृश्यमाने श्वेतमारूपमव्यक्तरूपं श्रूयमाणे च हेषाखुरनिक्षेपशब्दे

तदेवंभूताकांक्षावशात्पदानामन्विताभिधानेन विरुध्यते ननु तथापि पदानामन्विताभिधाने सा
मर्थ्यं न कल्पनीयं परस्मारितानामेव पदार्थानामाकांक्षादिवशादन्योन्यान्वयप्रत्यायकत्वोपपत्ते
रिति चेन्न मैवं मानान्तराधिगतानां पदार्थानां वाक्यार्थप्रत्यायकत्वादर्शनात् ननु पश्यतः श्वेतमारूपं।
हेषाशब्दं च शृण्वतः खुरनिक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीरिति न्यायादस्त्येव पदार्थानां संसर्गबोध
जनकत्वमिति चेन्न अनुमानादर्थापत्तेर्वा तत्र संसर्गावगमात् तथा हि एषां पदार्थानामेकाधिकरणत
यावगतानां प्रत्यायकत्वेनानुमानानतिरेकः विशकलितावगतानां वा योग्यतराभावे निश्चिते थोपपत्तिरेव
श्वेतोऽश्वो धावतीति संसर्गबुद्धिं जनयतीत्यर्थः अत्र किमेकनिष्ठत ((परिशिष्यते अनिश्चितेन न व्यवसाय एव ॥ ८

यावगतत्वेन तत्र यं संसर्गबोधकं विशकलितं तया वा प्रथममेवानुमानतां दर्शयति तथा हीति यत्र ह्येतत्त्रयमेकत्रावगतं तत्राश्वत्वं दृष्ट। वाम
ष्टमिति व्याप्त्या बोधकत्वादनुमानमित्यर्थः द्वितीयेऽर्थापत्तिमाह विशकलितेति नन्वर्थान्तराभावे विनिश्चितेऽनुपपत्त्याश्वत्वबोध १३८
कत्वाद्वेदर्थापत्तित्वमर्थान्तराभावोऽपि यदा न निश्चितस्तदा कथमर्थापत्तित्वमिति तत्राह अनिश्चितेनेति ॥

किंच शब्दाजन्यत्वे संसर्गबुद्धेः प्रामाणिकत्वं पदार्थान्वयस्याप्रमेयप्रमाणाभ्युपगमो वा प्रसज्येत प्रत्यक्षादिष्वन्तर्भावादित्याह अपि चेति । अथ पदस्मारितानामेवेदं सामर्थ्यं न ह्यनेकशक्तिकल्पनागौरवं स्यादित्याह किंचेति पदार्थानां तावत्संसर्गबुद्धिजनने सामर्थ्यमेकमप रमपि पदानां पदार्थेषु संसर्गप्रत्ययजननसामर्थ्यमुत्पादयितुं सामर्थ्यं पदैरेवाभिहितपदार्थेषु तादृशं सामर्थ्यमाधीयते अनभिहितेषु सामर्थ्यादर्शनात् नैवमस्मत्पक्षे न्वितस्वार्थेषु पदानामेकसामर्थ्याश्रयणात् यद्यप्यर्थसामर्थ्यादन्विते सामर्थ्यकल्पनायां गौरवम स्ति तथापि न सामर्थ्यद्वित्वं अपि तु स्थौल्यमात्रमिति भावः अत्र च सामर्थ्यद्वयाभिधानं प्राथमिकपदार्थबुद्धेः साहचर्यात्स्मृति।

अपि च शब्दसामर्थ्याजन्यत्वे वाक्यार्थप्रत्ययस्य पदार्थान्वयस्याप्रमेयप्रमाणमभ्युपेयं स्यात् प्रत्यक्षादिषु तस्या न्तर्भावात् किंच पदार्थानामनभिहितानां संसर्गबोधकत्वाभावादभिहितानामेव तद्वक्तव्यं तथा च पदार्थानां संसर्गप्रत्ययजननसामर्थ्यं पदानां च पदार्थेषु तत्सामर्थ्याधानसामर्थ्यमिति द्वयं कल्पनीयमिति कल्पनागौ रवमभिहितान्वयवादिनः अन्विताभिधानवादिनस्तु पदानां योग्येतरान्वितस्वार्थाभिधानसामर्थ्यमेकमेव कल्पनीयमिति कल्पनालाघवमित्ययमेव पक्षः श्रेयानिति अत्राभिहितान्वयवादिनः प्रत्यवतिष्ठन्ते वि नाभिधेयस्मरणमन्वयाप्रतिपत्तितः तत्तत्पदार्थस्मृतयस्तेषामन्वयबोधिकाः ॥२५ पदैकदेशवर्णश्रवणसमनन्त रमपि कुतश्चिन्मानसापराधादनुपजनितपदार्थस्मृतेर्वाक्यार्थप्रत्ययानुदयात्तच्चोपजातपदार्थस्मृतेरन्वयव्य तिरेकाभ्यां पदार्थस्मृतीनां वाक्यार्थप्रत्ययहेतुत्वं तावदवसीयते ९ त्वमभिप्रेत्य तत्परिहारावसरे स्वयमेव स्फुटी करिष्यति उभयसाधारणत्वाद्वावधीरितं पदार्थस्मृतिजननसामर्थ्यमिति अभिहितान्वयवादे अन्वयव्यतिरेकौ तावत्प्रमाणमाह विनेत्यादिना श्लोकेन अभिधेयपदार्थस्य स्मरणं विनान्वयस्य वाक्यार्थस्याप्रतिपत्तिरित्यत्राविगानमायुष्मतोऽपि ततो व्याप्ते रुणी याभिधेयस्मरणैः स्मृतैर्वाभिधेयैरन्वयव्यतिरेकवद्भिरन्वयो बोध्यत इत्ययमेव श्रेयानिति श्लोकार्थः श्लोके विवृणोति पदै कदेशेत्यादिना एकदेशवर्णसमूहः एवं पूर्वार्द्धेनान्वयव्यतिरेकौ प्रदर्श्योत्तरार्द्धं व्याचष्टे अन्वयेति ॥

दुस्ता

१ वि. सू. टी. न. १३९

पूर्वपक्षिणोऽनुशयबीजमुन्मूलयति नचेत्यादिना विप्रकलितपदार्थमात्रस्मृतीनामदर्शनेपि पदस्मारितपदार्थस्मृतीनां स॰
हकारिवशादुपपद्यतइत्यर्थः सहकारीति सहकारिणो भेदो विशेषस्तत्त्वं वधारि त्यर्थः अन्यत्रादृष्टस्य कथं कल्पनमित्याशंक्य प्रतिवंदीमा
ह इति कथमिति यथान्यत्र द्विभिन्नविषयनिष्ठतयादृष्टयोश्चक्षुःसंस्कारयोः प्रत्यभिज्ञायां सहकारिवैचित्र्यवशात्तौ एवं दत्तइत्ये॰
कार्थविषयत्वमेवमत्रापि संभाव्यतइत्युपपाद्य सन्नसप्रमाणत्वं पदार्थानामापादितं परिहरति नचेति तथाहि श्रुतिवाक्यसमाख्या
नां शब्दरूपत्वेपि लिंगप्रकरणस्थानानां न शब्दरूपत्वं अथ च न शब्दान्तरप्रथक्प्रमाणत्वं तथेहापीत्यर्थः यद्यपि प्रकरणमप्यंगवाक्या
पेक्षं प्रधानवाक्यमिति शब्दरूपमेव प्रतीयते तथापीति कर्तव्यताकांक्षायाअर्थरूपतारः शब्दत्वमभिप्रेतमिति द्रष्टव्यं अविनियोजकत्वाद्वान

नच पदार्थस्वरूपमात्रविषयस्मृतीनामन्योन्यान्वयबोधकत्वमनुपपन्नमन्यत्रादृष्टत्वादिति वाच्यम् स्मरणमा
त्रस्य सामर्थ्याभावेपि समभिव्याहृतपदकदम्बकसमुपजनितपदार्थस्मृतीनामाकांक्षादिसहकारिणीनां संभव
त्येव तद्बोधकत्वं सहकारिभेदोपादानात् कथमन्यथा संस्कारेन्द्रिययोरन्यत्र परस्परसंगतार्थाविषययोः प्रत्य
भिज्ञायां पूर्वापरदेशकालसंसृष्टैकवस्तुबोधकत्वं परस्परसहकारितया तथात्वं तु प्रकृतेपि तुल्यं न च पदार्थस्मृ
तीनां स्मृतानां वा पदार्थानामन्वयबोधकत्वे सन्नप्रमाणाभ्युपगमप्रसंगः लिंगप्रकरणस्थानानामिव शब्दप्र
मान्तर्भावोपपत्तेः ननु लिंगादिषु श्रुतिकल्पनयैव विनियोगप्रतीतेः स्वीकाराच्छब्दत्वं न विरुध्यते॥ ~ ॥

हि लिंगादीनि साक्षाद्विनियोजकानीति लिंगादिभ्यो वैषम्यं दर्शयितुं तद्वृत्तान्तमाह नन्विति शाब्दस्यार्थस्यापेक्षितोर्थः शब्देनैव समर्पणी
यः न प्रमाणान्तरेण नहि त्रयो ब्राह्मणा आगताः कठश्च माठरश्च ते सुक्त्वा तृतीयमंगुल्या निर्दिशंतः सन्तः प्रशंसन्ति प्रशंसति तु कौंडिन्य
इति शब्देनैव समर्प्यते न तु हि ह्यापि श्रुतिभिरेव चेतनतंगानि समर्प्यन्ते समस्तानि तदाश्रुतेन प्रधानेनैनैन तदर्थानि श्रुतिकल्पनयैव तेषां लि राम·
गादीनां विनियोजकत्वं न स्यात् क्रमेण श्रुतिकल्पनायां च व्यासंगस्य तारतम्ये तेषां प्राबल्यदौर्बल्ये यथाह परमर्षिः अर्थविप्रकर्षात्॥ १३९
इति अन्येपि एकद्वित्रिचतुष्पंचव्यवस्थानतारतम्यकारितं श्रुत्यपेक्षं प्रतिवैषम्यं लिंगादीनां प्रतीयतइति॥ ~ ॥ ~ ॥ ६ ॥

प्रकृते तु वैषम्यमाह इह त्विति नशाब्दस्येति शेषः नन्वशाब्दत्वेपि पदार्थानां शब्दावगतत्वात्तज्जन्यप्रतीतिरपि शाब्दी स्यादेवेत्यति
प्रसंग इत्याशंक्याह शब्दावगतेनेति तामिमां शंकां परिहरति सिद्धान्तीमेवमिति नात्र शब्दावगतपदार्थजन्यत्वमात्रादन्वयप्रतीतेः
शाब्दत्वमुच्यते येनानुमितेरपि चाक्षुषत्वप्रसक्तिः किंतु शब्दावान्तरव्यापाररूपपदार्थस्मरणजन्यत्वात् उक्तं हि साक्षाद्यद्यपि कुर्व
न्ति पदार्थप्रतिपादनं वर्णास्तथापि नैतस्मिन्पर्यवस्यन्ति निष्फले वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकं पाके ज्वालेव काष्ठानां पदा
र्थप्रतिपादनमिति ततो नातिप्रसक्तिरिति भावः ननु तथापि पदार्थव्यवधानात् पदानां कथमन्वयप्रतीतिं प्रति करणत्वं तत्रा

इह तु पदार्थस्मृतीनां स्मृतानां वा पदार्थानामन्वयबोधकत्वमिति वैषम्यम् शब्दावगतपदार्थजन्यत्वेनान्व
यप्रतीतेः शाब्दत्वे चक्षुषावगतधूमजन्यस्यापि वह्निज्ञानस्य चाक्षुषत्वप्रसंग इति चेन्नैवं अन्वयप्रती
तिं जनयतां पदानामवान्तरव्यापारत्वात्पदार्थस्मरणानां नच स्वव्यापारव्यवधानाद्व्यापारवतः करण
त्वं विहन्यते यागादीनामपूर्वव्यवधानेन फलसाधकानामकरणत्वप्रसंगात् नच चक्षुषो लिंगज्ञानम
वान्तरव्यापारः अगृहीताविनाभावस्याप्यनुमानानुदयात् अचाक्षुषस्यापि लिंगस्य बोधकत्वात्॥

न्तरफलत्वमिति तत्राह नचेति यागादीनामिति गुरुमतेपि यागस्य फलं प्रति करणत्वमस्त्येवेति भावः पदार्थेभ्यो लिंगज्ञा
नस्य वैषम्यमाह नचेति अथ किमिति न व्यापारस्तत्राह अगृहीतेति तज्जन्यस्तदाश्रितो वा यस्तत्क्रियाहेतुः स हि तद्व्यापारो ना
म तथा च कथं चक्षुषि व्याप्रियमाणेप्यगृहीतव्याप्तिकस्य लिंगज्ञानमनुत्पद्यमानं चक्षुर्व्यापारः स्यात् नहि धूमज्ञानमात्रे लिं
गज्ञानमपि तु व्याप्तस्य सतः पक्षधर्मतया ज्ञानमिति भावः चक्षुर्व्यतिरेकेणोत्पद्यमानत्वादपि न तद्व्यापारत्वमित्याह अचाक्षु
षेति अथवा न चक्षुर्जन्यानुमितिः तस्मिन्सत्यपि नियमेनोत्पत्त्यभावात् असति चोत्पत्तेरतो नेदं तस्य व्यापार इति ग्रन्थार्थः॥ ६॥

यत्तु लिंगप्रकरणादि उदाहृतं तदन्विताभिधानवादिनः प्राभाकरस्य भवत्येवोदाहरणं शक्तिकल्पनाव्यतिरेकेणैव लिंगादीनि विनि-योजकानीति हि गुरूणां मतमित्याह गुरुमत इति यत्तु शक्तिकल्पनागौरवमुक्तं तत्परिहर्तुमुत्थापयति नन्विति ननु कथं शक्तित्रय-कल्पना यावता सादृश्यवशादेव प्रथमं स्मृतिः पदार्थेषूत्पद्यते भवतामिवेति तर्हि शक्तिद्वयमवश्यंभावीत्याह पदानामिति यत्तु पूर्वपक्षे स्पष्टीकरिष्यतीत्युक्तं तदत्र स्पष्टीकृतं स्वपक्षे च लाघवं स्मारयति अन्वितेति अत्राभिहितान्वयवादी अन्विताभिधानेपि शक्तित्रयकल्पनामापादयन् परिहरति मैवमिति स्यादेतत् यथा नित्यत्वे सत्यनेकसमवेतरूपजातिवाचकमपि पदं नानेकात्मक



गुरुमतानुसारिभिरपि लिंगप्रकरणादीनामंतरेणैव शक्तिकल्पनं विनियोजकानां शब्दप्रमाणान्तर्भावाभ्युपग-मात् ननु त्वयाप्यभिहितान्वयवादे त्रयः शक्तयः कल्पनीयाः पदानां तावदर्थस्वरूपानुभवजननशक्तिरर्था-नां चान्योन्यान्वयप्रत्यायनशक्तिस्तदनु शक्तिश्चापरा पदानामिति पदानां सादृश्येणार्थस्मारकत्वे पुनः शक्तिद्वयं कल्पनीयं पदार्थानामन्वयबोधनशक्तिस्तेषु तदाधानशक्तिश्च पदानां अन्विताभिधाने तु पदानाम-न्योन्यान्वितस्वार्थाभिधानशक्तिरेकैवेति कल्पनालाघवमिति चेन्मैवं त्वयाप्यर्थान्तरे तदन्वये स्वार्थे च पदश-क्तीनां कल्पनीयत्वात् न चार्थान्तरान्वितस्वार्थाभिधायकमपि पदं स्वार्थस्यैव वाचकं नार्थान्तरतदन्वययोर्जाति-वाचकमपि पदं व्यक्तितदन्वययोरिवेति वाच्यम् विकल्पासहत्वात् तथाहि किं जातिवाचकपदेन व्यक्तेरिव ल-क्षणत्वमर्थान्तरतदन्वययोरुत वाच्यत्वं नाद्यः पदानामन्विताभिधानभंगप्रसंगात्

व्यक्तीनां तदन्वयस्य समवायस्य वा वाचकं गोत्ववाचकं यथा तद्व्यक्तितदन्वययोरवाचकं तद्वदन्यान्वितस्वार्थवाचकमपि पदं स्वार्थमा-त्रस्यैव वक्तीति न शक्तित्रयं कल्पनीयमिति तत्राह नचेति किं पदं वगन्यान्वितं तद्वाचकमित्यन्वयस्योपलक्षणत्वं आहोस्विदन्वितस्य वाचकमिति विशेषणत्वमिति विकल्पासहत्वं दूषयति नाद्य इति अभिहितान्वयवादिभिरप्येवमभ्युपगमाज्ञावसेति भावः॥ ॥

द्वितीये तु शक्तित्रयमवश्यंभावीत्याह न द्वितीय इति सपरिशृंखलान्विताभिधानवादे शक्तित्रयं न द्योतदर्थे त्रयमपि तु एकस्य विशिष्टार्थेऽप रं तु सविशेषणत्वमिव शक्तेरिति तत्प्रकारान्तरेण शक्तित्रयमापादयति किं चेति यथा हि अन्विताभिधानपरिपाटी प्रथमं श्रूयमाणैः स्मर्यमा णैर्वा पदैरन्योन्यासंसृष्टार्थाः प्रत्याय्यन्ते अनन्तरं चैकस्मृत्यारूढानि तान्येव पदानि पदार्थान् अन्योन्यान्वितान् प्रत्याययन्तीति तथा च पदार्थ मात्रेषु संसृष्टपदार्थेषु च प्रत्यायनाधाने पदा नां सामर्थ्यद्वयं सकलपदविषयस्मरणस्य सकलपदेष्वन्विताभिधानसामर्थ्याधानसामर्थ्यं तृतीयमेकस्मृत्यनारूढपदानां तत्सामर्थ्याभावादित्यर्थः ननु शक्तित्रयकल्पनायामुभयोः समानायां कोऽयमाग्रहः यदभिहितान्वयवादस्य वक्ष्यमाणमिति तत्राह न चेति अनन्यलभ्यो हि शब्दार्थः लभ्यते चान्येभ्योऽपि व्यवहारसमर्थसंसृष्टपदार्थबोधार्थं प्रयुक्तपदस्मारितेभ्यः पदार्थेभ्यः

न द्वितीयः वाच्यत्वेन तयोरपि शक्तेरवश्यकल्पनीयतया गौरवस्य तादवस्थ्यात् किं चैकैकस्य पदस्य श्रूयमाणस्य स्मर्यमाणस्य वा तत्तदर्थस्मरणजननशक्तिः पुनरेकस्मरणगोचराणां च तेषामेव पदानामन्योन्यान्वितपदार्थाभिधानशक्तिः सकलपदगोचरस्य स्मरणस्य पदेष्वन्विताभिधानसामर्थ्याधानशक्तिश्चेति शक्तित्रयकल्पनान्विताभिधानवादेऽपि तुल्या न चाभिहितान्वयवादेऽपि शक्तिकल्पनागौरवस्य तुल्यत्वात् विनिगमनाभाव आशंकनीयः विशिष्टार्थप्रत्यायनप्रयुक्तपदकदंबसमभिव्याहारान्यथानुपपत्त्या पदस्मारितानामर्थानामन्योन्यान्वयस्य लक्ष्यमाणत्वेनोपपत्तेः शक्तेरकल्पनीयत्वात् लक्ष्यः शब्दार्थ इति न्यायात् उक्तं च विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जनैः इति ॥

नय

न च तस्याशाब्दत्वं शब्देनैव लक्ष्यमाणत्वात् ततो न शक्तित्रयमिति खण्डनकार्थः एतदुक्तं भवति पदानां पदार्थस्मृतिजनकत्वं न वापि तु तत्स्मृतपदार्थानामन्वयप्रतिपत्तिहेतुतामात्रमपि तुल्यमेव इतरथा साधर्मिके पदार्थे स्मृते तत्र वापि वैयर्थ्यात् करणत्वं नकत्वं न वापि तु तत्स्मृतपदार्थानामन्वयप्रतिपत्तिहेतुतामात्रमपि तुल्यमेव यद्यपि नेष्यते पदानां पदार्थेष्वन्वयप्रतिजननसामर्थ्याधानसामर्थ्यं भवदीयसमुदायस्मृतिसामर्थ्येन तु तत्पदानां स्मृतपदार्थान्वय बोधने यत्सामर्थ्यमभिधानाख्यं कल्प्यते तत्राप्यपरिकल्प्यते न न्यायप्रसक्तं नास्तीति मन्महे लाघवमिति जनेन प्रथमं लोकव्यवहार इति वा पदसमभिव्याहृतिरुक्तमर्थः इत्युक्तपदप्रयोगो वा विशिष्टार्थप्रयुक्तेति मण्डनमिश्राभियोजना ॥ ॥ ॥

पत्ति

चि·सु·
टी·न·
२४१

परस्परान्वये पदानां लक्षणैव वृत्तिर्नेनु मुख्ये त्युक्तं तदाक्षिपति मुख्यवृत्तिमन्वानोन्विताभिधानवादी ननु नेयमिति लक्षणाभा
वं दर्शयितुं शालिकनाथोक्तं तल्लक्षणमाह तथाहीति वाच्यस्यार्थस्य गंगादिरूपस्य वाक्यार्थे घोषप्रतिवासादिरूपे संबन्धानुप
पत्तौ सत्यां वाच्यार्थसंबंधवशात् प्राप्तस्य वाक्यार्थान्वयाद्धेतो यो शब्दस्य तत्र प्रवृत्तिः सा लक्षणेति श्लोकार्थः प्रकृते च वाच्यार्थानां वा
क्यार्थे संबन्धानुपपत्तिरूपलक्षणभागो नास्तीत्याह न चेति पिठरं भांड यस्कन्तत्संबन्धवशात् प्राप्तस्यान्वयादिति लक्ष्यमाणार्थ
स्य पुनर्वाक्यार्थे योन्वय उक्तः सोपि नास्तीत्याह न च पदार्थैरिति न ह्यत्र वाक्यार्थद्वयमस्ति येन लक्ष्यमाणवाक्यार्थस्य वाक्यार्थे सं

ननु नेयं लक्षणा भवितुमर्हति तल्लक्षणाभावात् तथाहि वाच्यस्यार्थस्य वाक्यार्थे संबंधानुपपत्तितः तत्सं
बन्धवशप्राप्तस्यान्वयात् लक्षणोच्यते इति न चौदनं चैत्रः पचति पिठरइत्यादौ चैत्रपिठरादीनामर्थानां वा
क्यार्थे संबन्धानुपपत्तिः न च पदार्थैर्लक्षितानां पदार्थानामन्वितानवस्थायाः पुनरन्वयांतरशालिता तेने
यं न लक्षणा तल्लक्षणविरहादिति चेन्मैवं अव्यापकत्वादेतस्य लक्षणालक्षणत्वासंभवात् नहि विषं भुंक्ष्व
त्यादावेतल्लक्षणमस्ति तत्र सर्वेषां पदानां लक्षकत्वेन वाच्यार्थाभावात् वाच्यार्थाविनाभूतस्य वाक्यार्थे न पु

धोभवेत् स्वेनैव स्वसंबंधानुपपत्तेरिति भावः लक्षणमेवेदं लक्षणाया न संभवति अव्यापकत्वात् अतो ॥ तदन्यथाभावात्र॥
नैतदभावमात्राल्लक्षणा क्षयइति परिहरति अभिहितान्वयवादीमेवमित्यादिना वाक्यार्थे संबन्धानुपपत्तिरत्र कोयं वाक्यार्थो
भिमतः किं न्यायपरिशोधनया निष्पन्नोर्थः किं वा क्रिया आहोस्वित्पविशिष्टपदवाच्योर्थः नाद्यः तदानीमनिष्पन्नत्वात् वाक्यार्थस्ये
त्यभिप्रेत्याह नहीति नापि द्वितीयः विषं भुंक्ष्वेत्यत्र क्रियाया अविवक्षितत्वात् भुंक्ष्वेत्यस्यापि तन्निवृत्तिपरत्वात् अत एव न तृतीयइत्या
शयवानाह तत्रेति तृतीयोपि लक्षणांशो नास्तीत्याह वाच्यार्थेति नहि भोजननिवृत्तिव्यतिरेकेण परो वाक्यार्थोऽस्ति येनान्वियादिति भा

लक्षणांतरमप्यनुवदति यद्यपीति मुख्यार्थस्य परिग्रहे मानांतरविरोधे सति मुख्यार्थेनाविनाभूते संबद्ध इति यावत् गंगायां घोष इति त्यत्राविनाभावाद्दर्शनात् तस्मिन्नविनाभूते या प्रतीतिः सा लक्षणोच्यत इति योजना अस्ति कुंडपायिनामयनगतं कर्म मासमग्निहोत्रं जुहोतीति श्रूयमाणं तत्र चाग्निहोत्रशब्दो गौण्या प्रयुज्यत इति स्थितं उक्तं हि याभिधानमित्यत्र गौण्यपि हि गुणलक्षणयोगेन वर्त्य त इति लक्षणोच्यते लक्षितलक्षणा गौणी न च तत्र एतल्लक्षणमस्तीत्यव्याप्त्या दूषयति तदित्यादिना ननु किमिति गौणो मुख्य एवाग्निहोत्रशब्दः किन्न स्यादत आह उपसङ्क्रितेति एतच्च भाष्यकारीयमतं वार्तिककारमतं त्वनुपादेयमाससंबन्धात् विच्छिन्न

हि

यद्यपि मानांतरविरोधेन मुख्यार्थस्य परिग्रहे मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यत इति लक्षणालक्षणं तदप्यव्यापकं कुंडपायिनामयने मासमग्निहोत्रं जुहोतीत्येतल्लक्षणाव्यापकत्वात् उपसङ्क्रिष्वरि। त्वा मासमग्निहोत्रं जुहोतीति श्रूयमाणत्वात् प्रसिद्धाग्निहोत्रे चोपसदामभावात्कर्मांतरेऽग्निहोत्रशब्दः प्रसिद्धाग्निहोत्रसाधर्म्याल्लक्षणया वर्तते न च तत्र मानान्तरविरोधस्तदर्थस्य मानांतरागोचरत्वात् तस्मात्पदानां पदार्थस्वरूपमात्रपरत्वे वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाक्षेपकेति तदेव लक्षणं लक्षणायाः सर्वलौकिकवैदिकलक्षणायां व्यापकत्वात्॥

प्रकरणत्वाच्च प्रत्यभिज्ञाभावाच्च कर्मांतरमिति तच्च दर्शितं प्रकरणांतराधिकरणमनुक्रामद्भिरस्माभिर्मिथ्यात्ववादपूर्वपक्षावसरे अस्तु लक्षणात्व --- लक्षणस्य तत्र कथमभाव इति मानांतरविरोधाभावादित्याह तचेति यथा हि गंगायां घोष इत्यत्र तद्वाक्यव्यतिरेकेण मानांतरविरोधो मुख्यार्थपरिग्रहे न तथेह प्रमाणांतरविरोधः तदर्थस्य तदयोग्यत्वात् केवलमेतद्वाक्यव्यापारपर्यालोचनया मुख्यार्थपरित्याग इति भावः एवं पराभिमतलक्षणं दूषयित्वा सर्वलक्षणानुगतं लक्षणमुपसंहारफलेनाह तस्मादिति॥ ८०१ ॥

ग। ए।

लौकिकवैदिकलक्षणास्वलक्षणव्याप्तिमेव दर्शयति तथा हीति आदित्यो यूप इत्यत्रादित्यशब्दस्तेजस्वित्वलक्षणापरः निर्णीतं खल्विदं प्र
माणलक्षणे नामधेयपादे त्रिविधा जातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रया इत्यत्र सारूप्यादादित्यशब्दो यूपे वर्त्तत इति न
त्वेतेषूदाहरणेष्वस्मल्लक्षणमपि वाच्यार्थस्य वाक्यार्थे संबन्धानुपपत्त्यात्मकमस्ति तत्कथं निर्णेय इति शंकयित्वा तल्लक्षणे हि
तेऽपि स्वकीयलक्षणानुवृत्त्या लक्षणान्वयं लोकवेदयोर्दर्शयति सैवमित्यादिना सुवर्णपुष्पमिति सुवर्णमयपुष्पशालिनीं पृथ्वीं चिन्व
तीति तत्र योजना —— अथवा पृथिवीं सुवर्णपुष्पां चिन्वंति पृथिव्येव सुवर्णपुष्पा यथा भवति तथा चिन्वंति संपादयन्ति स

तथा हि गंगायां घोषः प्रतिवसति आदित्यो यूपः कुंडपायिनामयने मासमग्निहोत्रं जुहोतीत्यादावस्ति पदार्थ
मात्रपरत्वे वाक्यप्रामाण्यानुपपत्तिः ननु तत्र वाच्यार्थान्वयानुपपत्तिरप्यस्ति तत्कथमिदमेव लक्षणमिति नि
यम्यत इति चेन्नैवम् वाच्यार्थान्वयानुपपत्त्यभावेऽपि लोकवेदयोर्लक्षणादर्शनात् तथा हि लोके स्वर्णपुष्पां
पृथिवीं चिन्वंति पुरुषास्त्रयः शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् इत्यादौ पदार्थानामन्वयसंभवेऽपि नि
ष्प्रयोजनेनात्यर्थासंभवेन वाक्यप्रामाण्यानुपपत्तेः प्रतीयमानवाक्यार्थे हि ताम्बूलादित्वं सपदोहेतुरिति
धुनिना सूच्यते तथा च वेदे वायुर्वै क्षेपिष्ठेत्यादौ संभवत्येव वाच्यार्थान्वये कैमर्थक्यवशेन देवताप्राशस्त्यल
क्षणया कर्मणः प्राशस्त्यलक्षणेन तस्माद्वाक्यप्रामाण्यानुपपत्तिरेव लक्षणाबीजमिति निश्चिनुमः अस्ति चेहापि

वं तन्नाम बहु स्वर्णमुपार्जयतीत्यर्थः तांश्च त्री (( लोकानुसारतो विशिष्टार्थप्रत्यायनप्रयुक्तसमभिव्याहृतीनां
नाह शूरश्चेत्यादिना कैमर्थक्यवशेनेति न हि वायोः क्षेपिष्ठत्वं प्रमाणान्तरेण विरुध्यते अविरुद्ध एव तु तस्मिंस्तावतो निष्प्रयोजनतया प
र्यवसानाभावात् किमर्थमिदमित्यपेक्षावशेन रक्तपटन्यायेन वा नष्टाश्वदग्धरथन्यायेन वा देवताप्राशस्त्यलक्षणया कर्मप्राशस्त्य
मिति वाक्यार्थः एवं लौकिकवैदिकलक्षणास्वलक्षणस्यानुगतिं दर्शयित्वा प्रकृतेऽपि तदनुगतिमाह अस्तीति विशिष्टार्थप्रत्यायनप्रयुक्ता
समभिव्याहृतिरुच्चारणं येषां पदानां तानि विशिष्टार्थप्रत्यायनप्रयुक्तसमभिव्याहृतीनि तेषामित्यर्थः ॥ ॥

अर्थः पदार्थः ननु वाक्यार्थे संबंधानुपपत्तेः अन्वयांतरशालित्वस्य च सर्वलक्षणास्वननुगमे ऽपि तत्संबंधवशप्राप्तेः स्यादन्वयः इह च पदा
र्थानामेव वाक्यार्थत्वात् न तत्संबंधप्राप्तिरिति तत्राह अस्ति चेति वाच्यार्थस्वरूपाणां परस्परं यः संबंधः तद्वशात् परस्परान्वितावस्थासाक्षा
द्दानां प्राप्तिरस्तीत्यर्थः अथवा अर्थस्वरूपाणां यो वाक्यार्थे नान्वयः विशिष्टस्वरूपयोग्यतायोग्यांगीकारात् तद्वशाच्छब्दानामपि प्राप्तिर
स्ति वाक्यार्थ इत्यर्थः एवं च यदन्विताभिधानवादिनामतिरिक्तसामर्थ्यद्वयं पदानामन्वितबोध
नसामर्थ्यमेकं स्मृतेष्वपरेष्वन्वितबोधनसामर्थ्यं धानसामर्थ्यमपरमिति तद्विनिष्प्रयोजनं नास्मन्मते स्तीत्याह तथा चेति स्यादेतत् तप
दानां पदार्थाभिधायकत्वं येन तत्सामर्थ्याद्धिकं न कल्पनीयं स्यात् अपि तु साहचर्यवशात्संस्कारोन्मेषकतया स्मारकत्वं न चैतदेवाभि

मर्थमात्रपरत्वे पदानां प्रामाण्यानुपपत्तिः विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जनेनेति न्यायात् अस्ति च शब्दा
नामर्थरूपसंबंधवशप्राप्तिरन्वितावस्थायां तथा चार्थरूपबोधनसामर्थ्यान्नाधिकसामर्थ्यद्वयकल्पनापि ननु प
दानां संस्कारोन्मेषमात्रोपयोगान्नाभिधातृत्वं पदार्थानामपि स्ववाचकपदसंस्कारोन्मेषकाणां तत्स्मारकतयाभि
धायकत्वप्रसंगात् इति चेत्न पदानामेव पदार्थस्मारकाणामभिधातृत्वस्य लौकिकपरीक्षकप्रसिद्धिसिद्धस्यानिवा
रणीयत्वात् शब्दविषयविज्ञानस्यैव पदार्थस्मरणजननशक्त्युपहितस्याभिधाव्यापारत्वेन स्वीकारात् ॥ ६ ॥

धायकत्वं अर्थानामपि शब्दाभिधायकत्वप्रसंगात् अस्ति चैतेषामपि शब्दस्मारकत्वमिति ततश्च तदतिरिक्ताभिधाव्यापारस्वीकारेऽन्वि
ताभिधानवादस्वीकार इत्यभिप्रेत्य शंकते नन्वित्यादिना यद्यपि स्मारकत्वं पदतदर्थयोः समानं तथापि पदानामेवाभिधायकत्वं लौ
किकप्रसिद्धं नेतरस्येति परिहरति नेपदानामिति नन्वन्यस्त्वेवाभिधाव्यापारः शब्दस्य भाट्टैरभ्युपेयते न तत्कथं स्मारकाणामेव प्रसिद्धिव
शादभिधायकत्वमिति तत्राह शब्देति अथवा स्मृतिजननशक्तिविशिष्टशब्दविज्ञानमभिधाव्यापारः न चैवं विधो व्यापारोऽर्थस्यास्तीति
कथमभिधायकत्वप्रसक्तिरित्याह —— शब्दविषयेति अथवाभिधायकत्वं न निवारयामः
किंतु स्मरणजनकतातिरिक्तमेव तत्स्वीकर्तव्यमिति तत्राह शब्दविषयेति पदजनितविज्ञाने परिशेषात् स्मृतित्वेन तज्जनकत्वमेव शब्दस्या

१
वि. सु.
टी. न.
२४३

अन्वयकृतविशेषानुमापकशब्दविज्ञानेनतदनभिधानरूपेणेति व्याप्तिनिवृत्त्यैपदार्थेग्रहणंसहदृष्टत्वस्यत्वनरस्थानेऽतिव्याप्तिनिवृत्त्यैशब्दप्र
गांनतुपरिस्पंदःप्रयत्नोवाअन्यएवव्यापारोलोकप्रसिद्धःयथातरूणांयथाचार्कोमारिलानामात्मनः तत्कथंविज्ञानस्यव्यापारत्वमित्या
शंक्याह अन्यस्येति विभाविति भट्टनये विभुगुणइति काणादादिनयेनतदनेनमूर्तद्रव्यानुविधायिपरिस्पंदोनिरस्तः प्रयत्ननिरासायाह चैतन
स्येति अयमभिसंधिः तज्जन्यस्तदाश्रितश्च तत्क्रियारेतुस्तद्व्यापारइति चक्षुःसंयोगादौयद्यपिदृष्टस्तथापिश्रोत्रशब्दसन्निकर्षेतज्जन्यत्वा
भावेपितद्व्यापारत्वंदृष्टंतथाअपूर्वस्ययागाश्रयत्वाभावेपियागजन्यतयातद्व्यापारत्वमभ्युपगतंतदिहापिशब्दविषयविज्ञानस्यशब्दाश्रय
त्वाभावेपितज्जन्यत्वाद्विभवति तद्व्यापारत्वमिति स्वपक्षदूषणसमाधानमुपसंहरति तस्मादिति लाक्षणिकत्वःतएवशाब्दत्वेचभट्टपार

अन्यस्यचपरिस्पंदप्रयत्नलक्षणस्यव्यापारस्यविभौविभुगुणेवाशब्देतेनत्यानधिकरणेदुर्निरूपत्वात् तस्मात्समभिव्याहृ
तपदकदंबकस्मादितपदार्थानांपरस्परान्वयप्रत्ययोलाक्षणिकःशाब्दश्चेतिसर्वेमववदातं तथाचोक्तंमीमांसावार्तिके
वाक्यार्थमिश्रैः नविमुंचतिसामर्थ्यं वाक्यार्थेपिपदानि नः वाक्यार्थोलक्ष्यमाणोहिसर्वत्रैवेतिचस्थितिरिति प्रयोग
श्चशब्दास्तान्यर्थविषयव्यतिषंगस्यलक्षकाः ततास्मर्याभिधानत्वात्स्वेलभुक्ष्वेतिशब्दवत् इह विवादपदानिपदानि
लक्षणयापदार्थानामन्योन्यान्वयप्रतिपत्तिपराणिअन्वितप्रतिपत्तिपरत्वेसतिपदत्वाद्विषंभुक्ष्वेतिपदकदंबवत्

स्समतिमाह तथाचेति ननुतथापिवाक्यार्थस्यलाक्षणिकत्वेकिंप्रमाणंतद्धेतदभियुक्तवचनैकगम्यमितितत्राह प्रयोगश्चेतितान्यर्थविष
योव्यतिषंगःसंबंधस्तस्यलक्षकाइति साध्यनिर्देशः विषंभुक्ष्वेतिशब्दवदिति अयमर्थः श्लोकेनसंगृहीतमनुमानंविवृणोति विवादपदेति वि
षंभुक्ष्वेत्यादौसिद्धसाधनतानिवृत्त्यैविवादपदग्रहणंअन्विताभिधानेनार्थान्तरतानिवृत्त्यैलक्षणयेत्युक्तं पदार्थानामिति अन्वयितात
पुनःस्वस्मादितरानतेनतदृष्टांतस्यसाध्यवैकल्यंपक्षेचसामर्थ्यान्त्यस्मादितरान्वयसिद्धिः इतरस्यासंभवात् गौरश्वइत्यादिपदैरनैकांति
कतापरिहारायहेतौप्रथमंविशेषणंलिंगीलिंगसंबंधपरलिंगव्यवच्छेदायपदग्रहणंअनन्वितानधिकरणेत्यपिविशेषणीयमिति के
चित् इतरथास्वपुत्रानुमापकपदेषुव्यभिचारादिति ॥ ॥

राम.
२४३

आभाससमानयोगक्षेमतां निराकरोति नचेति उदाहृतानुमानवाक्ये याच्यार्थपरित्यागापरित्यागयोः प्रकृतानुविघातं दर्शयति तथाहीत्यादिना
अनैकान्तिकत्वादिति तत्रैव व्याघातकाभावाद्व्याघातदूतिशेषः उपाधिमप्याह मुख्यार्थैरिति साधनव्याप्तिं परिहरति इह चेति किंचेदम
न्विताभिधानं नाम न तावदन्वितप्रतिपादनमात्रम विप्रतिपत्तेः नापि पदार्थाभिधायकशब्दस्यान्वितेनान्वयः अत्राप्यविवादादेव नापि प
दार्थमात्रगृहीतसंगतिकस्यान्विताभिधायकत्वं पदार्थसंगतेरन्यत्रोपक्षीणत्वात् इतरथातिप्रसंगात् अन्वितपदार्थसंगतिबलेन त
त्प्रतिपादनमिति चेन्न तत्र वक्तव्यं किमन्वयविशेषवति संगतिग्रहः किं वान्वयमात्रवति आद्ये वाक्यार्थस्यापूर्वत्वक्षतिः अन्वयपदार्थे।

न च पदानि स्वार्थपरित्यागेन लक्षणयान्वयप्रतिपत्तिपराणि उक्तसाधनत्वात् तदुदाहृतवाक्यवदित्याभाससमानयो
गक्षेमतोऽस्त्येव तदुदाहृतानुमानवाक्यस्य स्वार्थपरित्यागापरित्यागयोस्तदनुपपत्तेः तथाहि स्वार्थपरित्यागे विशिष्ट
साध्यप्रतीत्यभावाद्व्याघातकत्वात् अपरित्यागे च तत्रैवानैकान्तिकत्वात् मुख्यार्थबाधोपाधिग्रस्तत्वाच्च
स्वार्थपरित्यागस्य इह च बाधाभावान्न स्वार्थपरित्यागानुमानं तस्मादभिहितान्वयवाद एव श्रेयानिति केचिदाचा
र्याः न चैवमपसिद्धान्तः भाष्यकारसंमतत्वात् तथा च समन्वयसूत्रे वेदान्तवाक्यानि प्रस्तुत्य भाष्यकारः प्रतिपादय
न्ति स्म न च तद्गतानां पदार्थानां ब्रह्मस्वरूपविषये निश्चिते समन्वये अवगम्यमानेऽर्थान्तरकल्पना युक्ता श्रुतहान्यश्रुत
कल्पनाप्रसंगात् तत्र च पदार्थानामेवान्योन्यान्वयप्रत्यायकता प्रतीयते मण्डनमिश्रादिभिरप्यङ्गीकृतत्वात्॥ ॐ॥

प्रतीत्योः समसमयतया योग्यतादिप्रतिसंधानविरहिणामपि पदार्थप्रतीतिवदन्वयप्रतीत्यापत्तेश्च द्वितीयस्त्वसंभवनिरस्तः न
ह्यन्वयमात्रवति गृहीतसंगतिकस्यान्वयविशेषवद्वाचकत्वसंभवति जातौ गृहीतसंगतिकस्यापि व्यक्तिवाचकत्वप्रसंगात् अन्वय
मात्रवति गृहीतसंगतिकेन तावन्मात्रमभिधीयते विशेषस्तु लभ्यत इति चेन्न तर्हि पदार्थाभिधायिभिरेव शब्दैरयं लभ्यतामिति कृतमंतर्ग
डुनान्वयमात्रेण प्रमाणप्रयोजनरहितेनेत्यलं केचिदाचार्याः वाचस्पतिमिश्रप्रभृतयः यदि चैवं न्यायपरिशुद्धेऽपि पक्षे विवरण
कारादिमतमवलंब्यापसिद्धान्तगंधितां कश्चिद्दाढ्यात्तन्मुखं भाष्यकारप्रभृतिवृद्धवचनप्रतिबंधेनापिदधाति न चेत्यादिना॥

१
चि·सु·
टी·न·
१८८

पदार्थोन्तरेति पदार्थानां संसर्गो न विध्याकांक्षानिबंधनः कुतः विधेरपि पदार्थान्तरतुल्यत्वात् तस्मात्संबंधयोग्यरूपेण स्वशब्दैः प्र
काशिताः पदार्थाः स्वयमेव संसर्गभागिनः संबंधयोग्यतया पदार्थप्रकाशकारणमाह विशिष्टार्थेति सप्रयोजनकथनवाद्यर्थमुपसंह
रति तस्मादिति संसृष्टपरवाक्येषु संसृष्टार्थस्य लक्षणा अखंडार्थपरवाक्यमखंडस्यैव लक्षणं यद्वा अखंडार्थपरत्वादेव स्तिसंसर्गल
क्षणा न स्यापि च न तत्त्यागः तेन नाखंडखंडना अपौरुषेयेष्वित्युक्तमनूद्यमाणा वैशेषिकादयः प्रत्यवतिष्ठंते ननु कथमिति जीर्णकू
पारामादिष्व भिचारवारणाय संप्रदायाविच्छेदे सतीत्युक्तं कालिदासादिवचस्सु व्यभिचारवारणायास्मर्यमाणकर्तृकत्वादित्यु ।

पदार्थोन्तरतुल्यत्वाद्विध्याकांक्षानिबन्धनः न संसर्गः पदार्थानां स्वशब्दैस्तु प्रदर्शिताः संबंधयोग्यरूपेण त
स्मात्संबन्धभागिनः विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जनैः दृष्टा य तद्धि भेदेन यद्दृष्टयोगीकारात् भेदपरेष्व
वाक्यार्थस्य सर्वत्र लाक्षणिकत्वस्वीकारात् वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति च स्थितिरिति तस्मात्पौरुषेयवा
क्येष्विदृवापौरुषेयेष्वो वेदान्तवाक्येष्वो लक्षणया यथोक्तलक्षणं ब्रह्म सिद्ध्यतीति सिद्धं ४५ ननु कथमपौरुषेयत्वं
वेदानां तत्प्रतिपादकप्रमाणाभावात् नन्वपौरुषेया वेदाः संप्रदायाविच्छेदे सत्यस्मर्यमाणकर्तृकत्वादात्म
वदित्यनुमानमस्तीति चेत् मैवं विशेषणासिद्धेः पौरुषेयवेदवादिभिः प्रलये संप्रदायविच्छेदस्याभ्युपगमात्
अस्मर्यमाणकर्तृकत्वं च किमप्रमीयमाणकर्तृकत्वं विवक्षितं उत स्मरणागोचरकर्तृकत्वं नाद्यः तस्माद्यज्ञात्स
र्वहुत ऋचः सामानि यज्ञिरे छंदांसि जज्ञिरे तस्माद्यजुः तस्मादजायत त्रयो वेदा अजायंत

तं विशेषणासिद्धिमेवाह पौरुषेयेति अस्मर्यमाणेत्यत्रापि स्मृतिपदं किं मूलप्रमितिपरं किं वा मुख्यवृत्तीति विकल्प्याद्ये तद्विषय
त्वं वेदकर्तुरसिद्धमित्याह नाद्य तस्माद्यज्ञादिति तस्मात्प्रकृताद्यज्ञाद्यज्ञरूपिणः परमेश्वरात् सर्वहुतः हुतं हुतं यस्मिन् तत्सर्वं विद्य
ते स सर्वहुत् ततः सर्वहुतः सकाशात् अथवा सर्वैर्जुहोतीति सर्वहुत् यष्टापि स एवे ति यावत् प्रलयकाले वा सर्वस्वमात्रं न या जुहोतीति सर्वहुत्
ततः ऋगादयो जज्ञिरे उत्पन्ना इति पुरुषसूक्तार्थः त्रयो वेदा इति श्रुत्यंतरं ॥

राम·
१८४

इदं सर्वमित्यपराशङ्कते । मुक्तके इति विप्रकीर्णाः श्लोकाः मुक्तकश्लोकाः तेषु ये केचित् स्मर्यमाणकर्तृकत्वमस्ति न चास्य पौरुषेयत्व
मित्यर्थः । नित्यत्वप्रतिपादकागमविरोधात् सृष्टिश्रुतीनामन्यार्थत्वं शङ्कते नन्वित्यादिना हे विरूपाक्ष नित्यया वाचा सुष्टुतिं चोद
यस्वेत्यर्थः । तथा यः परमेश्वरो ब्रह्माणं हिरण्यगर्भं विदधाति विहिताय च तस्मै वेदांश्च प्रहिणोति प्रददाति उपदिशतीति यावत् न तु करो
तीति श्वेताश्वतरोपनिषन्मन्त्रार्थः । नाचिकेतमिति कठवल्लीश्रुतिः । अनादिनिधनेति स्मृतिः । आदिनिधनरहिता अत एव नित्या उ

ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यादिदं सर्वमसृजत ऋचो यजूंषि सामानीत्यादिश्रुतिभिः
कर्त्तुः प्रमीयमाणत्वात् नापि द्वितीयः विकल्पासहत्वात् तथाहि किमेकेनास्मरणं विवक्षितमुत सर्वस्मरणेनाद्यः मुक्त
कश्लोकादावनैकान्तिकत्वात् न द्वितीयः सर्वास्मरणस्यासर्वज्ञविज्ञानाविषयत्वात् ननु वाचा विरूप नित्यया यो
ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनं अनादिनिधना ।
नित्या वागुत्सृष्टा स्वयंभुवेत्यादिश्रुतिस्मृतिवाक्येभ्यो वेदस्य नित्यत्वावगमात् पौरुषेयत्वप्रतिपादकानि कृ-
त्यादीनि सम्प्रदायप्रवर्त्तकत्वपराणीति चेन्मैवं वाचा विरूप नित्ययेत्यस्य वाक्यस्य वृष्णे चोदस्व सुष्टुतिमिति
वाक्यशेषादग्निस्तुतिविधिपरत्वावगमात् अन्यार्थदर्शनस्य प्राप्त्यभावे प्रमाणत्वानुपपत्तेः यो वै वेदांश्च प्र
हिणोतीत्यस्य च पौरुषेयत्वापौरुषेयत्वयोः साधारणत्वात् स्वयं निर्मायापि वेदानां प्रदानसंभवात् मृत्युप्रोक्तं
सनातनमित्यस्य वाक्यस्योक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते इति वाक्यात् उपाख्यानानुवचनश्रवणप्रशंसा

सर्वा

परत्वे तु परिहृतेत्यर्थः । अनन्यपरत्वादाम्नायस्य सापेक्षाणां तदभावे नास्ति स्वार्थप्रामाण्यं अतोऽन सृष्टिश्रुति विनिवार ॥ परत्वात् ॥
कत्वमिति परिहरति मैवमित्यादिना अन्यार्थेति अन्यशेषवाक्ये यद्दर्शनं यत्समभिव्याहारमात्रात्तदन्यार्थदर्शनं साधारण्यमे
व दर्शयति स्वयमिति उपाख्यानेति उपाख्यानस्यानुवचनं श्रवणं च यत्तयोः प्रशंसापरत्वादित्यर्थः ॥ ६६ ॥ ॥

वि·सु·
टी·नं·
१४५

स्मृतेः स्मृत्यंतरविरोधमाह अनादीति एवं नित्यत्वानुमानागमदूषणपूर्वकमनित्यत्वागमं प्रदर्श्यानुमानमप्यनित्यत्वे दर्शयति अनु
माने निर्गतिरिति पेषु कुंफडादिस्तोभभागेषु चाक्षिद्धिपरिहारार्थं वाक्यानीति विशेषणं ईश्वर कृतत्वे प्यनुमानमाह वेदेति उन्मत्त
वाक्ये प्रत्यक्षादौ च व्यभिचारवारणाय विशेषणद्वयं गृहीतं सम्प्रतिपन्नसंज्ञकत्वे नन्विति अत्र किंकृतत्वं वेदाध्ययने पक्षः उतातीत

अनादिनिधनानित्येति स्मृतेश्च प्रतिमन्वंतरं चैषाश्रुतिरन्या विधीयत इति स्मृत्यंतरविरोधेनानिर्णायकत्वात् एवं
च नित्यत्वप्रतिपादकानामन्यार्थतया पौरुषेयप्रतिपादकवाक्याबाधकत्वात् पौरुषेयत्वमेव वेदानामनुमिनिश्चि
नुमः अनुमानतोपि तथात्वमध्यवस्यामो वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् कालिदासवाक्यवदिति वेदवाक्य
त्वाप्तप्रणीतानि प्रमाणत्वे सति वाक्यत्वान्मन्वादिवाक्यवत् ननु वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकं वेदाध्यय
नत्वात् अधुनाध्ययनवदित्यनुमानात्सम्प्रतिसाधनतेति चेन्न मैवं सर्वं वेदाध्ययनपक्षीकारे दृष्टान्तासिद्धेः
अतीतकालीनाध्ययनपक्षीकारे चांशतः सिद्धसाधनत्वात् सर्गकालीनाध्ययनपक्षीकारे सर्गमनंगीकुर्व
तो मीमांसकस्याश्रयासिद्धेः भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकं भारताध्ययनत्वेन साम्प्रताध्ययनवदित्य
त्याभाससमानयोगक्षेमत्वात् अथ तत्र कर्तृस्मृत्या बाधः कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुं कोह्यन्यः
पुंडरीकाक्षान्महाभारतकृद्भवेत् तर्हि इहापि समर्कर्तृकत्वाप्रतिपादकश्रुतिभिर्बाध इति समानं विपक्षे चाप्त
प्रणीतत्वाद्वालोन्मत्तादिवदप्रामाण्यप्रसंगो बाधकस्तर्कः अथ बालोन्मत्तादिवाक्यानामनाप्तप्रणीतत्वेनाप्रा
माण्यमिह तदभावादाप्तवाक्यत्वप्रामाण्यमुपपद्यत इति चेत् ॥

कालीनं उत सर्गकालीनाध्ययनमिति विकल्प्य क्र
मेण दूषयति मैवमित्यादिना आभाससमानयोगक्षेमतया दौर्बल्यमाह भारतेति ननु तत्र व्यासः कर्तेति स्मर्यते को ह्यन्यः पुंडरीका
क्षान्महाभारतकृद्भवेदित्यादौ तेन बाधाद्धेतुप्रयोग इति तन्नाह अथेति शंकितोपाधिनां निराकरोति पूर्ववादी विपक्ष चेति सोपाधिनयाप्र

राम·
१४५

अनाप्तप्रणीतं वेदाप्तप्रणीतमेवेति नित्यत्वाभावाद्वाक्यस्येति हृदि निधाय परिहरति मैवमिति आत्मादिषु व्यभिचारवारणाय वा
क्यग्रहणं ननु वक्त्रा शब्दानां निष्पादनं क्रियते किन्त्वभिव्यक्तिरेव तेन न वक्त्रभावोऽनुत्पत्तिव्याप्त इति प्रशिथिलमूलतां शंकते अथेति अतिप्र
सक्त्या परिहरति मैवमिति तदेवं सदोपलब्ध्यनुपलब्धिप्रसंगं नित्यत्वबाधकमभिधायानित्यत्वेऽप्यनुमानमाह किंचेति अथायमभि
व्यक्तिवादिना मीमांसकः कृतकत्वे सत्यपि विवक्षितादिनं तदपि साधनीयमित्याह कृतको वेति ईश्वरप्रत्यक्षघाकाशादिषु व्यभिचारनि
वृत्त्यर्थमिन्द्रियप्रत्यक्षत्वमित्युक्तं तथापि मनोग्राह्यात्मनि व्यभिचारस्तदर्थं बाह्येति तथापि योगीबाह्येन्द्रियप्रत्यक्षपरमाण्वादिषु व्यभि

मैवं अनाप्तप्रणीतवाक्यस्य जगत्याप्तप्रणीतत्वनियमदृष्टेः अन्यथा वक्तुरभावे वाक्यस्योत्पत्तिप्रतीत्योरसंभवा
त् अथाभिव्यक्तिरेव शब्दानां वक्तृव्यापाराद्वोत्पत्तिः मैवं एवं सति पाखण्डाद्यागमानामपि नित्यत्वप्रसंगात् किं
च शब्दो नित्यः कृतको वा सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियप्रत्यक्षत्वात् घटवदित्यनुमानेन शब्दानां कृतक
त्वेन पौरुषेयत्वसिद्धिः न च मीमांसकं प्रति योगिव्यवच्छेदार्थमस्मदादिपदं व्यर्थं तेन योगिनामनभ्युपगमा
दिति वाच्यं स्वमतेन व्यभिचारनिवारणार्थत्वात् तथा च चिरंतनाचार्याणामपि स्वमते व्यभिचारनिवारणार्थं वि
शेषणोपादानं दृश्यते नित्यः शब्दो ध्वनिधर्मान्यत्वे सति श्रावणत्वात् शब्दत्ववदिति नहि वर्णा नित्यत्ववादिमते
वर्णातिरिक्ता ध्वनयः उदात्तादयो वा तद्धर्माः सन्ति ये व्यावर्त्तेरन् स्वमते तु ध्वनेस्तद्धर्माणां चोदात्तादीनां सद्भावादुपप   व
द्यते ध्वनिधर्मान्यत्वे सतीति विशेषणम् ॥ १ ॥

चारस्तदर्थमस्मदादीत्युक्तं तथापि सामान्ये व्यभिचारस्तदर्थं सामान्यवत्त्वे सतीत्युक्तं
अत्रास्मदादीति विशेषणं मीमांसकं प्रति व्यर्थं तेन तन्निवर्त्ययोग्यनंगीकारात् तद्वारे च तत्वन्मते व्यभिचार इति केचिद्दूषणमूचिरे तत्परिहरति
नचेति ननु न स्वमतमात्रव्यभिचारनिवारणाय विशेषणमुक्तमदृष्टचरत्वादित्यत आह तथा चेति ध्वनिषु तद्धर्मोदात्तादिषु च व्यभिचार
निवारणायोक्तं ध्वनिधर्मान्यत्वे सतीति स्वमतसंमतव्यभिचारवारकत्वं दर्शयति नहीत्यादिना वर्णग्रहणं शब्दपरम् एतदुक्तं भवति व्य
भिचारमात्रनिवृत्त्यापि भवति सार्थको हेतोरिति यत्त्वदूषणान्तरमुच्यते अस्मदादिबाह्येन्द्रियग्राह्यत्वसुपत्वादिषु नास्तीति भागासिद्धिरिति तत्रा

वि·सू·
टी·न·
१५६

नचोपांत्याहीति ननु तथापि धर्म्यसिद्धिः भेरीदण्डसंयोगान्निमित्तकारणात् भेर्य्याकाशसंयोगादसमवायिकारणात् महाकाशप्रदेशे सम
वायिकारणे प्रथम एकः शब्द उत्पद्यते तस्य च शब्दस्य विभुगुणतया आश्रयद्वारा स्वतो वा गमनानुपपत्तेः प्रदेशान्तरोत्पन्नत्वात् स्वभावभे
दाद्वा न श्रोत्रेण संबंधः ततश्च तस्माच्छब्दादसमवायिकारणात् अदृष्टादिनिमित्तकारणाद्द्वितीयशब्दाश्रयाकाशप्रदेशान्तराकाशप्रदे
शेषु समवायिकारणेषु सर्वतो दिशि शब्दा उत्पद्यन्ते तेभ्यश्चान्ये तेभ्यश्चान्ये इति वीचीसंतानवत् यावच्छ्रोत्रसमवेत शब्दशब्दसंतानादुत्पद्यन्ते तत्रेयः
कर्णशष्कुल्यवच्छिन्नाकाशप्रदेशे शब्द उत्पद्यते स श्रोत्रसमवायात् श्रोत्रेण गृह्यते स च न श्रोत्रान्तरग्राह्यः तत्रासमवेतत्वात् स्वभाव

नचोपांत्यादिशब्देषु भागासिद्धिः श्रोत्रग्राह्यशब्दविशेषस्यैव पक्षीकरणात् नचैवमपि विशिष्टधर्मिहेत्वोरसि
द्धिस्तत्तच्छ्रोत्रैकस्यैव शब्दस्य समवायानंगीकारात् एकस्य शब्दस्य बहूनां प्रत्यक्षत्वानुपपत्तेरिति वाच्यम् श
ब्दनित्यत्वानुमानेप्यस्य दोषस्य तुल्यतया स्वव्याघातकत्वेन जात्युत्तरत्वापत्तेः तथाहि भवदिन्द्रियग्राह्यः शब्दः
पक्षोस्मदिन्द्रियग्राह्यो वा नाद्यः प्रतिवादिनं प्रत्यसिद्धेः न द्वितीयः वादिनं प्रत्यसिद्धेः तस्माल्लोकप्रसिद्धशब्दत्व
जात्याधार एव शब्दो नित्यत्वसाधने पक्ष इति वाच्यं एवमनित्यत्वसाधनेपीति न कश्चिद्दोषः न च स एवायं गकार
इति प्रत्यभिज्ञाप्रत्यक्षविरोधात् कालात्ययापदिष्टमनित्यत्वानुमानं प्रत्यभिज्ञाया जातिविषयत्वेन व्यक्तिविष
यत्वे न च संदिग्धमानामप्यबाधकतानुपपत्तेः ननु विवादाध्यासितः कालो वेदाध्ययनशून्यः कालत्वात् संप्रतिप

भेदाद्धि वैशेषिकादिदर्शनं न तथ्यं न वादिप्रतिवादिश्रोत्रग्राह्य एकः ((न्नकालवदिति प्रत्यक्षानुमानविरोध इति चेन्मैवं ॥ ६ ॥
शब्दोस्तीति धर्म्यसिद्धिः अत एवोभयसंमतहेत्वसिद्धिरिति तदेतदनूद्य निराकरोति नचैवमित्यादिना जात्युत्तरतां दर्शयितुं परपक्षेपि·
विकल्पसाम्यमुत्तरमात्मं च दर्शयति तथाहीत्यादिना लोकप्रसिद्धः श्रावणत्वेन लोकप्रसिद्धः ननु प्रत्यभिज्ञाप्रत्यक्षबाधितमिदमनि
त्यत्वानुमानं स एवायं गकार इति प्रत्यभिज्ञया गकारस्थैर्यमवगम्यत इति तत्राह न च स इति यथाहि ज्वालादौ जातिमवलंब्य प्रत्यभिज्ञा
प्रवर्तमाना न व्यक्तिस्थैर्यं साधिका तद्वदिहापीत्याह प्रत्यभिज्ञाया इति॥

राम·
१५६

नकेवलं वेदप्रणयनोत्साद्व्वंनं माकुर्वन्तो मीमांसकस्य प्रणयनात् प्राक्कालोत्पादोत्तरकालप्रणयनकालानामसिद्ध्या धर्म्यसिद्धिः किंतु
प्रथमपक्षे वेदसर्गात्प्राक्कालेपि वेदाध्ययनप्रयुक्त इति प्रतिज्ञाविरोधश्चाधिक इत्याह प्रथमे चेति दूषणांतरं चाह कालेति ननु यदी
श्वरो वेदकर्त्ता तर्हि शरीरी स्यादिति तर्कविरुद्धं वेदकर्तृत्वानुमानमिति शंकते नन्विति दुष्टप्रसंगतया परिहरति मैवमिति लीलया विग्र
हस्य ग्रहणे लीलाविग्रहग्रहणं सिद्धांतयति अत्र समाधिरिति समाधिः समाधानं अभिधीयत इति शेषः अत्र किं पुरुषादुत्पन्नत्वमात्रं पौरुषेयत्वं किं साध
यितुं इष्टं यथास्मदादिभिर्विरच्य उच्चार्यमाणो वेदः किं वा प्रमाणेनार्थमुपलभ्य तत्प्रकाशनाय विरचितत्वात्मकत्वं वेदानां पौरुषेयत्वम् य

थिकस्यासत्त्वात् तथा हि किं वेदप्रणयनात्प्राक्कालः किं वा तदुत्पादोत्तरकाल उत सर्गकालः पक्षीक्रियते पक्षत्रयेपि
मीमांसकस्य धर्म्यसिद्धिः प्रथमे च प्रतिज्ञापदयोर्व्याघातो निरिच्यते कालिदासादिवाक्यपाठेप्येवमनुमानोत्थानादा
भासस्समानयोगक्षेमतां चानुमानस्य तन्त्वशरीरस्येश्वरस्य तात्वादिविरहाज्जिरूपवर्णोच्चारणासम्भवात्क
थं तत्प्रणीतत्वं वेदस्येति चेत् मैवं स्वभावतो शरीरस्यापि परमेश्वरस्य भक्तानुग्रहार्थं लीलाविग्रहग्रहणोपप
त्तेः तदेवं वेदपौरुषेयतानुमानस्य निरस्तसमस्तदूषणतया वेदाः पौरुषेया इति प्राप्ते अत्र समाधिः श्रुतीनामी
श्वराज्जन्मकेवलं स्यान्निपुणस्त्वतमानान्तरोपलब्धेऽर्थे रचनात्तु नमीयते २७ इति किमिदं पौरुषेयत्वं नाम यत्र श्रुतयः स्मृतयश्च
प्रमाणत्वेनोदाहृताः किं पुरुषाधीनोत्पत्तिमत्त्वं वेदानां पौरुषेयत्वम् उत प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वं तत्राद्यो

यास्मदादिभिरेव वह्यमानग्रन्थपद्धतिः आद्ये त्वविवादः द्वितीयेपि किमागमबलात् तत्साधनमनुमा १ गीक्रियते आकाशवन्नि
नाद्यं नाद्य इत्याह श्रुतीनिश्लोकेन श्रुतिप्रधीश्वरात् श्रुतीनां केवलं जन्मश्रुतं न तु पुनरुपलभ्य विरचनं न तस्तु नरत्नु मीयते तच्चायुक्तं वक्त
यदोषादित्यर्थः विषयविवेचनपूर्वकं श्लोकं व्याचष्टे किमित्यादिना ननु नित्यस्य कथं पौरुषेयत्वमिमं विनु द्वन्द्वानामागोकारमेव विवृ।
णोति आकाशवदित्यादिना क्रमविशेषवान् शब्दराशिर्हि वेदः क्रमश्च कालतो देशतो वा नियतः स चोभयविधोप्यत्र संभवति वस्यमाण
नित्यत्वप्रमाणबलान्नित्यानां विभूनां च शब्दानां कालतो देशतो वा क्रमासंभवात् प्रतीयते च तेनाभिव्यंजकोच्चारणप्रतिपत्तोः

गा

अन्यतरक्रमोपरागात्क्रमवत्त्वं वक्तव्यं तत्रोच्चारणप्रतिपत्ती अनित्ये इति तत्क्रमविशिष्टः शब्दराशिरपि तद्वाधाव नित्यस्वेति इष्टमेवे
ष्टं अपौरुषेयत्वमित्यर्थः ननु प्रतिपुरुषं क्रमद्वारा नित्यत्वे कथं सम्प्रदायवेद इति प्रत्यभिज्ञानमिति तत्राह पूर्वेति क्रमस्येदं प्रथमतया अ
पौरुषेयत्वभंगमाशंक्य वेदमुत्तरं सांप्रतमपीति स्मृतीश्रुत्याभ्यां तद्विरुद्धमेव प्रतिपादयितुमुचितमित्यर्थः एवं पूर्वार्द्धं व्याख्यायोत्तरार्द्धं
व्याचष्टे द्वितीयइत्यादिना अदर्शनहेतुमाह प्रमाणेति स्यादेतत् यद्यपि न साक्षात्क्रतो यमर्थः तथापि क्रतोत्पत्त्यनुपपत्त्या कल्प्यते।
पौरुषेयत्वं सोपि हि भवति कश्चित् क्रतोर्व्यापारः यथाहुः अर्थाद्वा कल्पनैकदेशत्वादिति तत्रैवं वक्तव्यं किं पुरुषाधीनोत्पत्त्यनुपपत्त्या

त्यत्वेन सर्वगतत्वेन कालतो देशतश्च क्रमशून्यानां वर्णानामनित्योच्चारणप्रतिपत्तिक्रमविशिष्टानां पूर्वपूर्वक्र-
मानुस्मृतिनिमित्तेन तत्सदृशोत्तरोत्तरक्रमवतां वेदशब्दवाच्यानां सांप्रतमपि पुरुषाधीनोत्पत्तिमत्त्वात्सर्गसमये-
पि श्रुत्या तथात्वस्य प्रतिपादयितुमुचितत्वात् द्वितीयस्तु न प्रमाणान्तरेणार्थमुपलभ्य तत्रेश्वरेण वेदा विरचिता
इति श्रुतिभिरप्रतिपादितत्वात् न च पुरुषाधीनोत्पत्तिमत्त्वश्रवणान्यथानुपपत्त्यैव प्रमाणान्तरेणार्थमुपलभ्य विर-
चितत्वसिद्धेः तदिदानीमस्मदादिभिरुच्चार्यमाणवेदवाक्येषु मालतीमाधवादिवाक्येषु च व्यभिचारात् एतेन प्रमा-
णभूतवाक्यस्य रचनान्यथानुपपत्त्या मानान्तरोपलब्धेर्थे विरचितत्वकल्पनापि प्रत्युक्ता अस्मदादिभिरुच्चार्यमाणम-
त्यादिवाक्येषु व्यभिचारात् किं च यदि विरचितत्वान्यथानुपपत्तिर्मानान्तरोपलब्धेर्थे रचनां कल्पयेत् तदा तेनैवमृग्वेद
एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यादिति वेदानामग्न्यादिभ्यो जन्मश्रवणात् तत्तत्कर्तृकतया ईश्वर

कल्प्यते उत प्रमाणभूतवाक्यरचनान्यथानुपपत्त्या नाद्य इत्याह नचेति प्रायुक्तनीत्या वेदवाक्याऽकर्तृकत्वनियमो न स्यात्॥
लिकाव्यवाक्यानि च उच्चारणसमयेस्त्येतेन तत्र प्रमाणान्तरेणोपलभ्य विरचनव्यतिरेकेण पुरुषाधीनोत्पत्तिमत्त्वमुपपद्यमानं न
वेदेष्वपि तत्कल्पयतीत्यर्थः द्वितीयपक्षेपीदमेव दूषणमतिदिशति एतेनेति किं च भवतैवायमंगीकर्तव्यो यदिदं तूत्पत्तिश्चेतर-
न्यथा सिद्धो प्रतिवन्दीमाह किन्त्वित्यादिना ॥ ६ ॥

अथश्रुत्यन्तरव्याख्यानेनतद्व्यंतरिदमिति तदस्यान्यनेपिसमानमित्याह अथेत्यादिना ब्रह्मवेदः पूर्वपक्षाशयमनुवदति नन्वेषामिति
देवताधिकरणन्यायेनेति द्वेधा हि वाक्यार्थो द्वारभूतः प्रधानं चेति तत्र प्रधानेनास्यैर्द्वारेत्वतत्परमपि प्रमाणम् अबाधितासंदिग्धा
नधिगतार्थबोधकत्वं हि प्रमाणत्वं न चान्यपरैरपि मन्त्रादिभिः प्रतीयमानो वज्रहस्तेन्द्रादिलक्षणोऽर्थः संदिग्धः नापि विपर्यस्तो बाधाभा
वात् प्रमाणान्तरायोग्यत्वाच्चानधिगत इति प्रमाणमेव तस्मिन्नपि मन्त्रादयः न चार्थभेदे वाक्यभेदप्रसक्तिः प्रधानार्थस्याभेदाभावात्
अवान्तरवाक्यस्येष्टत्वाच्च न चातत्परत्वादप्रामाण्यं अतत्परस्याप्यवान्तरस्य द्वारभूतार्थे प्रामाण्यस्वीकारात् इतरथा तद्द्वारतत्प्रधा
नेऽपि तत्प्रामाण्याभावकृण्वाद्यस्तु तत्सिद्धिरित्यादि सूत्राणामनारम्भप्रसङ्गात् विशिष्टविधौ च तात्पर्याद्विषयेऽपि विशेषणे प्रामाण्यस्या

अथ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे इत्यादिवाक्यैर्वेदानामीश्वरकर्तृकत्वाधिगमादधिष्ठात्
देवतापरं तत्तद्वाक्यमिति कल्प्येत न तर्हि प्रजास्वयंभुवा चाविरूपा नित्यया अनादिनिधना नित्या वागुत्सृष्टेत्या
दिश्रुतिस्मृतिशतेभ्योऽपि वेदानां नित्यत्वावगमात् तस्माद्यज्ञादित्यादिवाक्यं संप्रदायप्रवर्तकत्वपरमिति
कल्पना न प्रकृतेऽपि दण्डवारिता नन्वेषामन्यपरत्वान्नैतेभ्यो नित्यत्वसिद्धिरिति चेन्नैवं देवताधिकरण
न्यायेन प्रमाणान्तरप्राप्तिविरोधयोरसतोरन्यपराणामपि स्वार्थे प्रामाण्योपपत्तेः एतेन वाक्यत्वादिति पौ
रुषेयत्वानुमानमपि परास्तं पुरुषप्रणीतत्वमात्रसाध्ये सिद्धसाधनत्वात् । ९ वक्ष्यस्वीकर्तव्यत्वात्तत्रापि विशेष।
णांशे तात्पर्यं विध्यन्तरसमुन्नीयते इति चेत् किं तद्—न्यायकं विशिष्टविधानमेवेति चेत् हन्त परस्पराश्रयप्रसंगात् विशिष्टविधिप्रवृत्तौ च विध्यं
तरोन्नयनं विध्यन्तरप्रवृत्तौ च विशिष्टविधानमिति न च प्रमाणान्तरगोचरत्वं विशेषणस्य सर्वत्र संभवति चारवन्तीपादौ तदभावात् तस्मा
दतत्परमपि प्रमाणान्तरप्राप्तिविरोधयोरभावे प्रमाणमेवेति सोयं देवताधिकरणन्यायसारः तेनासामपि श्रुतीनां वेदनित्यत्वे प्रामाण्यम
स्त्येवेत्यर्थः ननु नेदं पौरुषेयत्वश्रुतेः सामर्थ्यसिद्धं वेति अस्माभिः स्वीक्रियते किं त्वनुमानबलादिति तत्राह एतेनेति एतद्धि शरद्यति पुरुषे

श्रुत

१
वि॰सु॰
टी॰न॰
१४८

मालतीमाधवादिष्विति यद्यपि प्रथमं कविकृतवाक्येषु साध्याभावान्न व्यभिचारः तथाप्यस्मदुच्चार्यमाणमालतीमाधवादिवाक्ये व्यभिचारः नहि तत्तद्वाक्यं तत्स्यान्यत्वादित्यर्थः कविकृते त्वौत्प्रेक्षिकचित्रकथापरेषु वाक्येषु व्यभिचार इत्यपि द्रष्टव्यं द्वितीयानुमानेपि सिद्धसाधनतामाह तथेति अत्रापि किमाप्तेनोच्चार्यमाणत्वं पौरुषेयत्वं किं वोपलभ्य विरचनं प्रथमे सिद्धसाधनतां विशदयति आप्तेनेति स्यादेतत् द्वितीयपक्ष एव नः पक्षः स्वसाधयिषितः न चेदानीमुच्चार्यमाणवेदवाक्यैरनैकान्तिकता तेषामपि पक्षतुल्यत्वे नातः परमेश्वरविरचितत्वसिद्धेरित्यादि तत्राह प्रमाणेति अन्यथासिद्धिमेव दर्शयति अस्मदादीति यदि हि विरचनं प्रमाणान्त

प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वसाधने च मालतीमाधवादिनैकान्तिकत्वात् तथा च प्रमाणत्वेसति वाक्यत्वादाप्तप्रणीतत्वानुमानेपि सिद्धसाधनता आप्तेनोच्चार्यमाणतया प्रणीतत्वस्य पौरुषेयवादिभिरप्यभ्युपगमात् प्रमाणान्तरेणार्थमुपलभ्य विरचितत्वानुमाने तु हेतोरन्यथासिद्धिः अस्मदादिभिरुच्चार्यमाणेदानींतनवेदवाक्यानामिव सर्गकालीनानामपि तेषामीश्वरेणोच्चार्यत्वमात्रेणापि प्रमाणवाक्यत्वोपपत्तेः प्रमाणान्तराधिगतिपूर्वकविरचितत्वस्यानुमातुमशक्यत्वात् तस्य च सर्वज्ञत्वादतीतकल्पी-
(१तद्गतवेदापरोक्ष्यसम्भवात्॥ ६ ॥

तत्

रेणोपलभ्य विरचनेन व्याप्तं तदास्मदादावपि तथा स्यात् न चास्ति ततोवगम्यते नूनमनयोः संबन्धोऽन्यप्रयुक्त इति भावः स्यादेतत् कल्पाङ्गीकारे निर्लेपप्रलीनस्य चिरकालातीतस्य संस्कारप्रमोषात् कथमीश्वरेणापि शक्यः पूर्ववदेवोच्चारयितुमिति तत्राह तस्य चेति तथा च निर्लेपः प्रलयः तत्संस्कारं जिनमायोपहितपरमेश्वरस्य मूलकारणस्यवाधिद्यमानत्वात् अत एव तत्संस्कारवशात् तत्सदृशक्रमवद्वेदोच्चारणमपि सम्भवतीत्यर्थः॥ ॥ ॥

कथं

तथापि ताल्वादिकरणरहितस्य कर्तृत्वं संप्रदायप्रवर्तकत्वं चेति तत्राह अविग्रहस्यापीति अभ्युपगम्येदमुच्यते वस्तुतस्त्वीश्वरस्य शरीराहित्ये प्रदेष्टृत्वमेव नास्ति कल्यादिभुवामतीतकल्पानुष्ठितविशिष्टज्ञानपरंपरापरितुष्टपरमेश्वरानुग्रहवशाल्लब्धनिरतिशयज्ञानसमृद्धीनां हिरण्यगर्भप्रभृतीनां बुद्धौ यो वेदानामाविर्भावः स खलु परमेश्वरस्य वेदोपदेष्टृत्वं नाम इदमेव च यो वै वेदांश्चेति श्रुत्याप्युच्यते न तत्र शरीरेण किंचित्प्रयोजनमिति यत्तु वेदाध्ययनस्यानिदंप्रथमताया अनुमानमुद्भाव्य दूषितं पूर्ववादिना तदपि संस्कारप्रमोषादित्यादिना समर्थितमित्याह एतेनेति यत्तु तेनाश्रयासिद्धिरित्युक्तं तत्र भवतु मीमांसकं प्रत्ययं दोषो नास्मान्प्रति तानपि परिहरति न चेति तन्मतेपि याद्दग्गृहो यत्रादिपर्यायणानादिशिष्टस्य सर्गकालत्वपराणीकृतं तत्कालः शक्यः पर्यालोकयितुमिति द्रष्टव्यं आभाससमानयोगक्षेमत्वा

अविग्रहस्यापि तस्य भक्तानुकंपितया लीलाविग्रहग्रहणेन तदुच्चारणोपपत्तेश्च एतेन सर्गकालीनाध्ययनस्य पूर्वपूर्ववेदाध्ययनपुरःसरत्वमपि समर्थनीयम् न चाश्रयासिद्धिः वेदान्तिभिः सर्गांगीकारात् न च भारताध्ययनस्य तथात्वप्रसंगो नाभाससमानयोगक्षेमत्वात् तत्र दृढतरकर्तृस्मरणेन बाधात् न चेहापि कर्तृस्मृत्या बाधस्तस्याः संप्रदायप्रवर्तकत्वपरतयाप्युपपत्तेः अन्यथा नित्यत्वप्रतिपादकवाक्यानामनवकाशत्वप्र

परिहरति न चेति ननूक्तमत्रापि कर्तृप्रतिपादकश्रुतिस्मृती विरुध्येते इति तत्राह न चेहापीति अथ किमित्युपलभ्य विरचिता कर्त्रैताभिः श्रुतिभिः न स्त्रीक्रियते तत्राह अन्यथेति नित्यत्वं चेदं पुरुषास्वातंत्र्यं न पुनः सर्वथैव निश्वसितमित्यादिश्रुतिविरोधप्रसंगात् उक्तं च वृद्धैः यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतंत्रतेति स्यान्मतं एवमपि तावदेतदुच्चारणद्वारेण विरचयामः परमेश्वरोपि चेत्तथैव रचयति ननु पूर्वक्रममनुसृत्य रचयति नाप्युपलभ्यार्थं विरचयति कस्तर्हि विशेषः परमेश्वरस्यास्मादृशेभ्यः येन निश्वसितमित्यादिश्रुतयः परमेश्वरमेव कर्तारमावेदयंतीति उच्यते उपादानत्वात्स खलु परमेश्वरः प्रतिसंचरसमये समस्तमेव जगत्संहरन्विपदादिवदेव वेदवाक्यमपि शब्दराशिं संहरति महासर्गसमये च तत्तद्वासनावासिताचिन्त्यशक्तिराशिमहामायासहायमापन्नः शब्दाकारेण ॥

१ वि·मु· टी·न· १५९

विवर्त्तेते तदनु च पूर्वक्रमसदृशक्रमवच्छब्दराशिरूपवेदाकारेण विवर्त्तेते सर्गादिभुवां हिरण्यगर्भप्रभृतीनां च तमुपदिशतीति श
ब्दकर्त्तृत्वसंप्रदायप्रवर्त्तकत्वं चेश्वरस्यैवेत्युच्यते यद्यपि सर्वज्ञस्येश्वरस्य वेदार्थविषयमपि ज्ञानमस्ति तथापि न तस्य वेदनिर्माणे कारणभा
वः पूर्वपूर्वक्रमानुसरणमात्रेण तत्सदृशक्रमनिर्माणक्षमत्वात् अस्मदादीनामिवेदानीं तन भारतादिक्रमनिर्माणे तेन नापौरुषे
यत्वक्षतिः नन्वेवं भारतस्यापि संप्रदायप्रवर्त्तयितैव व्यासः न तु कर्त्तेति तस्याप्यपौरुषेयत्वं स्यादित्यत आह भारतस्येति यद्वा
नाप्तप्रणीतत्वे सत्याप्तप्रणीतत्वमेवायातीति गत्यंतराभावादित्युक्तं तत्र किं नाप्ताप्रणीतत्वमात्रेणाप्तप्रणीतत्वमनुमीयते उ
ह्त्वविशेषितेन वानाद्य इत्याह नचेति द्वितीयं शंकते अथेति तत्रापि किमाप्तप्रणीतत्वमात्रमनुमीयते उपलभ्यविरलत्वं वा

भारतस्य नित्यत्वप्रतिपादकप्रमाणाभावाच्च नच वेदानामनाप्तप्रणीतत्वादाप्तप्रणीतत्वमनुमातुं शक्यमा।
त्माकाशादौ व्यभिचारात् अथ शब्दत्वे सतीति विशेषणाद्दोषः मैवं आप्तप्रणीततामात्रस्य पूर्वोक्तन्यायेन
वेदेप्यंगीकारात् नचैवं सति पाषंडागमानामपौरुषेयत्वं ज्ञानांतरेणार्थमुपलभ्य तत्तत्पुरुषविरचि
तत्वस्य सौगतादिभिः स्वयमेवांगीकारात्प्रसिद्धेश्च नच सामान्यत्वे सत्यस्मदादिबहिरिंद्रियग्राह्यतया
वर्णानां कृतकत्वानुमानम् अस्मदादिबहिरिंद्रियप्रत्यक्षस्य कालाकाशादेर्नित्यत्वेन भादृप्रत्यानैकांत्या

आरोप्राह मैवमिति द्वितीयेन पूर्वोक्तमेव दूषणमिति भावः यत्तु पाषंडागमानामप्यपौरुषेयत्वमेवं स्यादित्युक्तं तत्राह न
चेति अथ तदंगीकारे प्रांतो नैयायिकादीनामिव वेदपौरुषेयत्वेपि तत्राह प्रसिद्धेश्चेति ननु सर्वमेतच्छब्दनित्यत्वे सति स्यात्तदेव तु
नास्ति अनुमानाच्छब्दानित्यत्वसाधनान्नित्यत्वप्रमाणदूषणाच्चेति तत्राह नचेति अत्र तावदेकदेशिमतेन दूषणमाह अस्मदादी
ति आकाशमस्मदादिप्रत्यक्षं प्रदेशवृत्तिविशेषगुणवत्त्वात् आत्मवत् दिक्कालाकाशानि अस्मदादिप्रत्यक्षाणि विभुत्वादात्मवत् श्रो
त्रं विभुग्राहकं इंद्रियत्वान्मनोवदित्यादिना च तेषां प्रत्यक्षत्वसिद्धेः नच संबंधासंभवो बाधः अजसंयोगसंभवात् वस्तुतश्च नत्र प्रमा

राम· १५९

तन्मते नैव सत्प्रतिपक्षतामप्याह सरितिजातौ सिद्धसाधनतानिवृत्त्यै द्रव्यपदं घ्राणे रूपे वानैकान्त्यनिवृत्त्यै हेतौ पदद्वयं प्रत्यनु-
मानविरोधं निराचष्टे नचेति अनित्यायोभूतविशेषगुणस्तस्येत्यर्थः वेदान्तिप्राभाकरयोर्मते सिद्धसाधनतापरिहाराय अनित्यग्रह-
णं शब्दनिष्ठद्वित्वादिना भाट्टमतस्यानैकान्त्यनिवृत्त्यै विशेषग्रहणं नभोगुणत्वार्थं भूतपदं मानसप्रत्यक्षात्मवादिनां मनस्यभिचारवा-
रणाय बहिरिंद्रियेत्युक्तं अत्रापि भाट्टमतेन दूषणमाह प्रथमेति नैयायिकादीनां च योगीन्द्रियैर्व्यभिचारः अस्मदादिविशेषणं च पर-
स्य व्यर्थमिति दूष्यं नावतापि नवमते किं दूषणं अस्येत्याशंक्य प्रत्यभिज्ञाबाधं दर्शयितुं तस्या अपि जातिविषयत्वेनोक्तामन्यथासिद्धिं च

सत्प्रतिपक्षत्वाच्च श्रोत्रं नित्यद्रव्यग्राहकं निरवयवेंद्रियत्वात् मनोवदिति भाट्टमतेन प्रयोगसंभवात् नच श्रोत्रं
न नित्यद्रव्यग्राहकं अनित्यभूतविशेषगुणग्राहकं वा बहिरिंद्रियत्वादिंद्रियत्वाद्वा चक्षुर्वदिति प्रत्यनुमान
बाधः प्रथमानुमाने नयनस्य नित्यगगनादिग्राहकत्वेन दृष्टान्तस्य साध्यवैकल्यात् द्वितीये च ध्वनिग्राहक
तया सिद्धसाधनत्वात् व्यक्तिभेदासिद्धौ च स एवायं गकार इति प्रत्यभिज्ञाया जातिविषयत्वकल्पनानुपप
त्तेः तद्विरोधश्च नित्यत्वानुमाने दुर्वारः नच द्रुतो गकारो विलंबितो गकार इति विरुद्धधर्मसंसर्गित्वाद्गकारव्य
क्तिभेदसिद्धिः तस्याः प्रतीतेर्ध्वनिविषयतया वर्णविषयत्वाभावेन प्रामाणिकविरुद्धधर्मसंसर्गस्यासिद्धेः ॥

रिहरति व्यक्तीति अथ कथं व्यक्तिभेदासिद्धिर्यावतोदात्तानुदात्तादितारतमत्वादिविरुद्धधर्माध्यासाद्भेद एव गकारादेरवसीयत इतित
त्राह नचेति अत्र किं प्रामाणिकविरुद्धधर्माध्यासाद्भेदः साध्यते प्रातीतिकाद्वा आद्यः सिद्धिमाह तस्याः प्रतीतेरिति यदि व्यक्तिभेदः स्यात्त
दा द्वौ गकाराविति स्यात् न पुनर्द्विर्गौरुच्चरित इति तदिह स्वारसिकं प्रत्यभिज्ञयैक्यं प्रतीयते विरुद्धधर्मसंसर्गस्तु परोपाधिकः नच परोपा-
धिभेदेन स्वाभाविकमैक्यं विहन्यते मा हि भून्नभसोऽपि कुंभाद्युपाधिभेदादाजानतो भेद इति तेनानुवृत्तिव्यवहारः स्वरूपेण व्यावृत्तव्यव
हारस्तूपाधिनिदान इत्यनवद्यं उक्तं च वृद्धैः तेन यत्नाध्येते जातेस्तद्ग्रहणादेव लभ्यते व्यक्तिलभ्यं तु नादेभ्य इति गत्वादिगीर्वृद्धैरिति ॥

द्वितीयेऽप्यनैकान्तिकतामाह प्रातीतिकस्येति यथा हि मणिकृपाणदर्पणादिगतभेदेन भिन्नमिव प्रतीयमानमपि मुखं न स्वतो भि-
द्यते एवमित्यर्थः एतेन तीव्रादिधर्मोपेतत्वादुत्कर्षनिकर्षवत्त्वादित्यादिकमनित्यत्वसाधकहेतुजातमपहस्तितं मन्तव्यं तथा च प्रत्य-
भिज्ञा यदा शब्दे जागर्ति निरवग्रहा अनित्यत्वानुमानानि सैव सर्वाणि बाधते किं च सामान्यवत्त्वे सतीत्यनुमाने शब्दमात्रपक्षीकारे
पि ध्वन्यंशे सिद्धसाधनता तदितरत्वविशेषणे त्वनिष्टाव्यवच्छेदाद्वैयर्थ्यं हेतोश्चोपाध्यादिप्रसिद्धिः अन्यशब्दपक्षीकारे च पूर्ववद्
व वैयर्थ्यं तथा स्वमतेन सोपाधिकत्वं अश्रावणत्वस्योपाधित्वात् शब्दत्वादिनित्यत्वसद्भावाच्च न पक्षेतरत्वम् एतेनेदमप्यपास्त

प्रातीतिकस्य च तस्य मणिकृपाणादिष्विवाननस्य भेदासाधकत्वात् ॥

मू. यदाह मानमनोहरकारः अनित्यः शब्दः इन्द्रियविशेषगुणत्वात् चक्षूरूपवदिति तत्रापि हि समानं ध्वन्यंशे सिद्धसाधनत्वं
तदितरविशेषणे वैयर्थ्यं अश्रावणत्वोपाधिहतत्वं चेति उदयनस्तु आम्नायाप्रत्यक्षत्वेऽप्यभावस्य प्रत्यक्षतां महता संरंभेणास्म-
र्थयन्नेव निवृत्तकोलाहलः उत्पन्नः शब्द इति व्यवहारस्त्वरणैकशरणः प्रत्यक्षमेव शब्दानित्यत्वे प्रमाणयति स्म स चाविरुद्धध-
र्मसंसर्गे सोपाधिकत्वोपपादनन्यायेन दत्तवेलिरवचेनालः सोऽपि नित्यत्वे सर्वदोपलब्ध्यनुपलब्धिप्रसंगो न्यायभूषणकारोक्तः
सोऽपि ध्वनिसंस्कृतस्योपलम्भाभ्युपगमान्निरस्तः अत्र युगपदिन्द्रियसंबद्धत्वेन प्रतिनियतसंस्कारसंस्कार्यत्वाभावानुमानं तद्वत्त्वा-
त्तस्याप्यनैकान्तिकमित्यलमतिकलकलेन ॥

यत्तु वैदिक्यानुपूर्वी इदं प्रथमा वर्णानुपूर्वीत्वात् संप्रतितन्त्रवदित्यनुमानं नैयायिकानां तदसत् विगीतः कालो वेदाध्ययनयुक्तः काललादिदानींतनवदिति सत्प्रतिपक्षत्वात् यतत्र पूर्वं पक्षिणोक्तं तत्परिहरति वेदांतवादिभिरितिवादार्थमुपसंहरन्प्रथमपरिच्छेदार्थं संकलयति एवमपौरुषेयतयेत्यादिना अत्र च पुरुषदोषासंभवग्रहणमितरशब्ददोषासंभवस्याप्युपलक्षणं तेन स्वतःप्रामाण्यशक्त्याभिहितान्वयापौरुषेयसिद्धार्थप्रामाण्यकार्य्याप्रमाण्यवादानां संग्रहः हेतुः विगलितनिखिलभेदग्रहणेनाखंडवाक्यार्थप्रपञ्चमिथ्यात्वतदुपप

वेदांतवादिभिः सर्गस्य तद्विशेषित कालस्य चांगीकारात् अतीतकालशब्देन तत्पक्षीकारेणानुमानप्रवृत्तावपि न धर्म्यसिद्धिः न चाभाससमानयोगक्षेमता भारताध्ययनानामनादित्वनिरासेन पुरस्तान्निरस्तत्वात् एवमपौरुषेयतया वेदांतानामसंभाविनाशेषपुरुषदोषसंसर्गेभ्यस्तेभ्यो विगलितनिखिलभेदविशुद्धब्रह्मप्रमितिः सिद्ध्यतीति सिद्धम् १५ इति श्रीमत्परमहंसपरिव्राजकाचार्य्य श्री ज्ञानोत्तमपूज्यपादशिष्य श्री चित्सुखाचार्य्यमुनिविरचितायां तत्त्वप्रदीपिकायां प्रथमः परिच्छेदः॥ सं॰ २१००

दृक्भावरूपाज्ञानतदुपयोगीनमःख्यातिविशेषविचाराः संगृहीताः परिशुद्धब्रह्मग्रहणेन विज्ञानात्मस्वप्रकाशवादो संगृहीता वितिपरिच्छेदार्थः सकलः संकलित इति सर्वं निर्मलम् विज्ञानं स्वप्रकाशं भवति चतुरुषस्तद्दृग्भावरूपं ध्वांतमिथ्याप्रपंचो भ्रमभरनिलयो नारिभावोऽप्रबोधः आरोपारोप्यसिद्धप्रमितिजनकताखंडता स्वप्रमात्वम् शक्तिः लक्ष्यः पदार्थान्वय इति कथिताः पौरुषेयो न वेदः इति श्रीमत्परमहंसपरिव्राजकाचार्य्य प्रत्यक्प्रकाशपूज्यपादशिष्यस्य प्रत्यग्रूपभगवतः कृतौ तत्त्वप्रदीपिकायां नयनप्रसादिन्यां प्रथमपरिच्छेदः॥ संख्या ग्रंथका ४२००२५॥ ६ ॥

ओंश्रीगणेशायनमः ओंनत्वातं नमस्येमानैर्द्वैः प्रमितममितं स्थाणुमनिशं समस्तं त्वं लोकत्रिनयनयनं सत्रिनयनं सकालं कालारिं सकल
वपुषं निष्कलमुमासहायं कामारिं भवमभवमीशं पशुपतिम् १ ब्रह्मणि वेदान्तानामुदितोऽद्वैते समन्वयस्तस्य भेदावगाहिमानैर्विरोधतुल्यैप
रःपरिच्छेदः २ यद्यप्यद्वये ब्रह्मणि वेदान्तानां प्रामाण्यं साधितं तथापि भेदग्राहिप्रत्यक्षादिविरोधादसाधितसमं तदोत्पत्तिलक्षणप्रामाण्या
भावेपि विरोधान्मिथ्यात्वलक्षणमप्रामाण्यं भवेत्कः खलु विशेषः स्वगोचरमूढानां प्रत्यक्षादीनामागमेभ्य इति प्रामाणिकभेदवादिनः प्रत्यवतिष्ठं
ते ननु कथमित्यादिना अनेन परिच्छेदयोर्विषयविषयिभावलक्षणा संगतिरपि दर्शिता पूर्वस्य विषयत्वादुत्तरस्य विषयित्वादिति अत्र

ओंश्रीगणेशायनमः ननु कथं विगलितनिखिलभेदब्रह्मप्रतिपत्तिः प्रत्यक्षादिविरोधात् तथाहि प्रत्यक्षेण तावदिदमस्माद्भिन्न
मिति नीलपीतादेर्भेदमध्यवस्यामः अथ मतं किं प्रत्यक्षं भेदमेव गोचरयत्युत वस्त्वपि यदि वस्त्वपि तदापि भेदपूर्वकं तद्गोचरयेत्तत्पूर्व
कं वा भेदं युगपद्वोभयं नाद्यः धर्मिप्रतियोगिवस्तुप्रतिपत्तिमन्तरेण भेदस्य प्रत्येतुमशक्यत्वात् अतएव न भेदग्रहपूर्वको वस्तुग्रहः न
च वस्तुग्रहपुरस्सरो भेदग्रहः बुद्धेर्विरम्यव्यापाराभावात् नापि युगपदुभयग्रहः कार्यकारणयोर्यौगपद्यायोगात् धर्मिप्रतियोगिप्र
तिपत्तिर्हि भेदप्रतिपत्तेः कारणं सन्निहितेपि धर्मिण्यसन्निहितप्रतियोगिप्रतिपत्तिमन्तरेण भेदप्रतिपत्तिव्यतिरेकस्य वादिप्रति
वादिनोः संमतत्वादिति॥

मंडनमिश्रैर्भेदवस्तुनोः किमेकैकग्राहकं प्रत्यक्षमुतोभयग्राहकमुभयग्रहपक्षेपि युगपत्क्रमे
ण वा क्रमपक्षेपि किं पूर्वं किमपरमिति विकल्प्य दूषयद्भिर्भेदग्राहित्वमेव प्रत्यक्षस्य नास्तीत्युक्तं तदनुवदति पूर्ववादी अथ मतमिति व
स्त्वेवेति तु पक्षस्तदनर्थबीजमिति परित्यक्तः धर्मिप्रतियोगिरूपं वस्तु धर्मिप्रतियोगिवस्तु इदमेव दूषणमुभयग्रहेपि भेदपूर्वक
वस्तुग्रहपक्षे व्यतिदिशति अतएवेति कार्यकारणभावमेवोपपादयति धर्मिप्रतियोगीति ननु यद्यपि भेदप्रतिपत्तिसमये धर्म्या
दिज्ञानमस्त्वेति तथापि तन्नावनाकारणत्वं शक्याध्यवसायं व्यतिरेकाभावादित्यत आह सोपि निमित्तकारणतापातात् अस्तिह्यन्वयइति

राम
१

नमिममनूद्दितं पक्षं प्रतिक्षिपति मैवमिति किं वस्तुस्वरूपमेव भेद इति नस्य मतस्य प्रतीमानि दूषणान्युच्यंते किं वा धर्मभेदवादिनं प्रति प्रथमे चौरापराधान्माण्डव्यनिग्रहन्यायः उच्यमानदूषणानां नद्विषयत्वादित्याह स्वरूपभेदेति ननु वस्तुस्वभावत्वमेव भेदस्य न घटेन तथा सति घटस्वभाववदेव प्रतियोग्यनपेक्षितत्वप्रसंगात् प्रतियोगिसापेक्ष एव सर्वत्र भेदः प्रतीयत इति तत्राह न च वस्तुस्वभावस्येति अत्र यदि वस्तुस्वभावो भेदः स्यात्तर्हि सापेक्षप्रतीतिर्न स्यादिति ह्यापादनं न च प्रागुक्तं वस्त्वेव भेद इति वदंतं मां प्रति व्याप्यसिद्धेः प्रशिथिलमूलत्वादित्याह वस्तुस्वभावत्वेति प्रतीतिविशेषो व्यवहारविशेषप्रयुक्तः न वस्त्वतिरेकप्रयुक्त इति भावः अथैवमापाद्यते यदि हि निरपेक्ष दृष्टिदृष्टं स्यात्तस्या न

मैवं स्वरूपभेदवादिनं प्रत्येतेषां विकल्पानामनवसरः दुःस्थत्वात् वस्तुग्रहस्यैव भेदग्रहत्वात् न च वस्तुस्वभावस्यैव भेदत्वे तद्ग्रहस्य प्रतियोग्यनपेक्षत्वप्रसंगः वस्तुस्वभावतया भेदस्यानपेक्ष दृष्टिदृष्टस्य सविकल्पके व्यवहारे प्रतियोगिसापेक्षत्वोपपत्तेः दृश्यते हि प्रादेशमात्रपरिमाणवस्तुनो ऽनपेक्षदृष्टिदृष्टस्य ह्रस्वदीर्घमिति सविकल्पके व्यवहारे न्यूनाधिकपरिमाणवस्तुग्रहसापेक्षता ॥ न च धर्मभेदवादिनं प्रत्यप्येते विकल्पाः प्रसरमर्हन्ति युगपदुभयग्रहेऽपि विरोधाभावात् असन्निहिते धर्मिणि प्रतियोगिनि वा युगपदुभयग्रहाभावेऽपि सन्निहितस्थले दंडिदेवदत्त इतिवत् पर्यायमेवोभयग्रहोपपत्तेः न च धर्मभेदवादे तस्य तस्य भेदस्य भेदांतरभेद्यत्वादनवस्थादोषापत्तिः मूलक्षतेरभावा

हि सापेक्षदृष्टिदृष्ट इति तत्रापि प्रशिथिलमूलतामाह दृश्यते हीति दीर्घमिति व्यवहारे न्यूनवस्तुग्रहापेक्षा ह्रस्वव्यवहारे त्वधिकग्रहापेक्षा अधिकत्वं चात्र दीर्घत्वं विवक्षितमित्यर्थः अस्तु तर्हि द्वितीयो नेत्याह न च धर्मभेदवादिनमिति ननु कथं युगपदुभयग्रहः यावता कार्यकारणभावस्तदुभयग्रहयोर्वर्णितः असन्निहितप्रतियोगिस्थले स्थितत्व्यतिरेकत्वादिति तत्राह असन्निहिते धर्मिणीति यथा हि विभिन्नेंद्रियग्राह्यासन्निहितविशेषणविशेष्यज्ञानयोर्विशिष्टज्ञानपूर्वभावित्वेप्येकेंद्रियग्राह्यसन्निहितस्थले पूर्वभावित्वं नास्तीयनेन तत्कस्य हेतोर्व्याप्तेः संकोचाद्व्याप्तिसंकोचश्च दर्शनबलादेवं तथेहाप्यसन्निहितस्य

रग्निविशिष्टपर्वतवत्प्रमाणांतरगम्यत्वेपिसन्निहितस्थलेयोगपद्यंभवतुकोदोषइत्यर्थः मूलस्तनेति मूलंप्राथमिकभेदप्रतीतिस्तत्क्षणेरभा
वादज्ञायमानामेवभेदानांप्रथमभेदोपपादकत्वादित्यर्थः धर्मभेदपक्षेधर्मिप्रतियोगिज्ञानयोः परस्पराश्रयदोषमाशंकते ननुधर्मपक्षेपीति।
परस्पराश्रयमेवाभिनयति स्तंभादिति ननुनभेदेनप्रतिपन्नस्यप्रतियोगितायेनायमनंतरोदोषः प्रसज्येतापितुस्वरूपेणप्रतीतस्ये
तितत्राह अप्रतिपन्नेति तदेतत्परिहरति मैवमिति नस्वरूपेणप्रतीतिमात्रंविवक्षितमपितुविद्यमानभेदत्वमपितथाचस्वस्यस्वस्मात्तेदभा
वात्तभेदग्रहप्रसंगोनाप्यन्योन्याश्रयतेत्यर्थः तदप्यप्रयोजकमितिशंकते ननुक्षीरेति समानेरभिहारोमिश्रणं।प्रतिवंधेसतिकार्यानुत्या।

मूलक्षतिकरीमाहुरनवस्थांहिदूषणमितिन्यायात् ननुधर्मपक्षेपिधर्मिणोभेदेनप्रतिपन्नस्यप्रतियोगितायांपरस्पराश्रयदोषः
स्तंभात्कुम्भस्यभेदसिद्धौकुम्भात्स्तंभस्यभेदसिद्धिरिति अप्रतिपन्नभेदस्यतुप्रतियोगितायांदुष्परिहरःस्वात्मनोपितत्प्रसंगइतिचेन्नै
वंविद्यमानभेदयोरपिस्वरूपेणचस्फुरतोर्धर्मिप्रतियोगित्वोपपत्तौएकस्मिन्भेदग्रहप्रसंगाभावात् ननुक्षीरनीरयोर्विद्यमानभेद
योरपिस्वरूपग्रहणेभेदग्रहोनदृश्यतइतिचेन्नैवंतत्रसमानाभिहारलक्षणदोषप्रतिवंधादेवतदग्रहोपपत्तेःएतेनदूरस्थवन
स्पत्योरपिभेदग्रहप्रसंगःप्रत्युक्तः उक्तंचाति दूरात्सामीप्यादिंद्रियघातान्मनोनवस्थानात् सौक्ष्म्याद्व्यवधानादभिभवात्समाना
भिहाराच्चेति॥

द्योनकारणत्वंविहंतीतिभावः यच्चविद्यमानभेदस्यस्वरूपेणप्रतीतेः प्रतियोगित्वधर्मित्वप्रयोजकतायांदूषणंकेचिदु
च्यते दूरस्थवनस्पत्योरपिभेदग्रहप्रसंगादितितत्राप्युक्तंपरिहारमतिदिशति एतेनेति अत्रचप्रतिवंधमात्रमतिदेश्यमतिदूरत्वप्रतिवद्धत्वात्तयोः अ
तिदूरादिति अतिदूराद्गिरिशिखरवर्तितवादेः अतिसामीप्यान्नेत्रेचननिलीनसलिलविंद्वादेः इंद्रियघातादंधादेः मनोनवस्थानात्तीव्रदुःखाद्युदये
अतिसौक्ष्म्यात्परमाणवादेः व्यवधानादपवरकांतरवर्तिषु अभिभवाद्दिवादीपादेः समानाभिहाराच्चीराशयेनीरदमुच्यमाननीरेषुयथा।
वद्ग्रहणप्रतिवंधोभवति चस्त्वनुक्तसमुच्चयार्थः तेनदुग्धादिषुदध्यादेरनुद्भवादग्रहोपिगृहीतः तेनतानुपलब्धिमात्रादतींद्रियप्रधाना

प्रकारांतरेण परस्पराश्रयं परिहरति  किंचैकस्यामेवेति  यदि धर्मिप्रतियोगिसापेक्ष एव सर्वदा भेदः प्रतिभायात्तदा स्यादयं-
दोषः नत्वेतदस्ति निर्विकल्पकसंविदि  निरपेक्षप्रतीतिसंभवादित्यर्थः यच्च कैश्चिदुच्यते विशेषणतया विशेष्यतया वा सर्वत्र भेदः प्र-
तीयते तच्च द्वयं भेदेन प्रतीतस्य तथा च विशेष्यत्वेन विशेषणत्वेन वा प्राथमिकभेदप्रतीतिर्भेदांतरप्रतीतिपूर्विका तदपि भेदांत-
रं तथैवेत्यनंतभेदप्रतीत्यापत्त्या मूलक्षतिकारिण्यनवस्थेति तदप्युक्तेन परिहृतमित्याह एतेनेति भेदभेदिनोरिति एतेनेत्यस्यैव

किंचैकस्यामेव निर्विकल्पिकायां संविदि भेदस्य भेदिनोश्च युगपत्प्रतीतिभासे सत्येकं भेदिनं प्रतियोगीकृत्यैतन्।
स्मादयं भिन्न इति सविकल्पकबोधोपपत्तौ कुतः परस्पराश्रयो दोषः एतेन भेदभेदिनोर्भेदांतरप्रतीतिमंतरेणाविशेष-
णाविशेष्यभावासंभवाद्भेदस्य विशेषणत्वेन विशेष्यत्वेन वा प्रतीतिनियमादनवस्था मूलक्षयकरी स्यादित्यपि प्रत्युक्तं।
विद्यमानभेदयोः स्वरूपेणास्फुरतोरेव धर्मिप्रतियोगित्ववद्विशेषणविशेष्यभावस्याप्युपपत्तेः तदेवं प्रत्यक्षप्रमितिगोचरो भेदः
अनुमानमपि लिंगविशेषस्य लिंगिविशेषप्रत्यायकत्वाद्भेदे प्रमाणं आगमोपि शब्दांतराभ्याससंख्यागुणप्रक्रियानामधेयैः क-
र्मोपासनादिभेदमेव बोधयति उपमानमपि प्रत्यक्षदृष्टगवयसादृश्यविशिष्टपरोक्षगोविषयमनेन सदृशी मदीया गौरिति भे-
दमेव गृह्णाति  अर्थापत्तिरपि तिलेभ्य एव तैलं पयस एव दधीति व्यवस्थान्यथानुपपत्तिप्रभवा भेदमेवावलिंगते योग्यानुप-
लब्धिरप्यन्योन्याभावलक्षणा भेदं बोधयत्येव तदेवं भेदग्राहकप्रत्यक्षादिविरोधान्नाद्वैतं प्रतिपादयितुमर्हंति वेदांताः॥

विवरणं विद्यमानेत्यादि एवं प्रत्यक्षगम्यत्वं भेदस्योक्त्वाऽनुमानादिरपि भेदं गमयतीत्याह  अनुमानमपीत्यादिना सुरभिधूमेन चं-
दनदहनानुमानमितरव्यावृत्तवस्तुनि प्रमाणमित्यर्थः शब्दांतराद्यधिकरणान्यनुक्तानि प्रपंचमिथ्यात्ववादे यद्युपासनान्य-
धिकमेव तथापि मानसत्ववैषम्येण भेदेन निर्दिष्टानि आदिशब्देन निर्गुणविद्याया इतरेभ्यो भेदसंग्रहः उक्तलक्षणमेवोपमानं द-
र्शयति अनेनसदृशीति अन्योन्याभाववद्युपलक्षणं भूतलादौ घटादिसंसर्गाभावस्यापि बोधकत्वात्॥

अत्र च साक्षादेव प्रमेयो भेदो भविष्यंतीत्येतेषां प्रमाणानां लक्षणानि तत्तत्खंडनसमये भेदसत्त्वेप्यनुमानं मानमाह – प्र
योगश्चेति व्याख्यानं चैतत्प्रपंचमिथ्यात्ववादे पूर्वपक्षावसरसमये स्वरूपभेदपक्षे दूषणानि श्लोकेन संगृह्णाति सापेक्ष।
त्वादिति नरूपं वस्तुनो भिदेत्यनेनैषां हेतूनामन्वयः सापेक्षप्रतीतित्वाद्भेदस्य वस्तुनश्च निरपेक्षप्रतीतित्वात् तथा सावधेः
सप्रतियोगिकस्य भेदस्य नत्त्वं वस्तुस्वरूपत्वे सति तद्द्वारा प्रतियोगिनामपि धर्मिस्वरूपत्वाद्द्वैतप्रसंगादिति द्वितीयो हेतुः तथा वि
दारणात्मकस्य भेदस्य वस्तुस्वरूपत्वे तस्यापि विदीरणात् ऐक्याभावात् तन्निमित्तानेकाभावाच्च शून्यतापातादिति तृतीयो हेतुः तथा

प्रयोगश्च घटः घटनिष्ठमिथ्याभेदातिरिक्तभेदाश्रयः दृश्यत्वात् पटवत् अत्राभिदध्महे सापेक्षत्वात्सावधेश्च त
त्त्वे द्वैतप्रसंगतः ऐक्याभावाद् संदेहात् न रूपं वस्तुनो भिदा १ न तावत्स्वरूपं भेदः प्रतियोग्यनपेक्षत्वप्रसंगात् न च प्रा
देशमात्रपरिमाणस्य ह्रस्वदीर्घादिव्यवहारवत् विकल्पकव्यवहारे भेदस्यापि प्रतियोगिसापेक्षत्वं वैषम्या
त् तथा हि प्रादेशमात्रपरिमाणं स्वतो न्यूनाधिकपरिमाणाभ्यामेकद्रव्यसमवायविरोधिधर्मद्वयविशिष्टं त
योपलंभे प्रतियोगिनमपेक्षत इत्यस्त्येव तत्र मेयभेदः प्रकृते तु न तथा स्वरूपस्यैव भेदत्वात् यदि चास्मादयं भि

स्वरूपत्वे भेदस्य धर्मिणि दृष्टमात्र एव तत्स्वरूपभेदोपि दृष्ट इति संदेहो न भवेत् उपलक्षणं चैतत् विपर्ययस्य १ तदिति प्राप्ति॥
यस्यापि विशेषाग्रहनिबंधनौ हि तौ न ग्रहणं तस्यानामिति चतुर्थो हेतुः एतेभ्यो हेतुभ्यो न स्वरूपं वस्तुनो भिदा भेद इति श्लोकयो
जनाश्लोकं विवृणोति न तावदित्यादिना पूर्वपक्ष्याशयमुन्मूलयति न चेति वैषम्यमेव विवृणोति तथा हीति स्वतो न्यूनपरिमाणो
न स्वतो धिकपरिमाणो न च सहैकद्रव्ये समवायविरोधि यद्धर्मद्वयं दीर्घत्वह्रस्वत्वात्मकं अस्य प्रादेशमात्रपरिमाणस्य तद्विशि
ष्टतया प्रतीतावेव प्रतियोग्यपेक्षा न स्वरूपमात्रप्रतीताविति न भेदस्योदाहरणं तदित्यर्थः सावधेश्चेत्यादि द्वितीयं हेतुं विवृणोति य

घटितत्वयेति विशिष्टत्वयेत्यर्थः नत्वनु प्रतियोगिविशिष्टो भेदः किंतु तद्रूपस्त्वस्मिन्तः तेन भेदस्य धर्मिस्वभावत्वेपि न प्रतियोगिनस्तद्वन्नत
भूतस्य धर्मिस्वभावतेत्याह अथ प्रतियोगीति परिहरति मैवं प्रतियोगिन इति तदानीमहेतुप्रसंगाभावेपि धर्मिवदेव तत्स्वरूपभूतभेदो
पि न प्रतियोगिनिरूप्यः स्यादित्ययमेव दोषः स्यादित्यर्थः तथा स्तंभस्य परिदृश्यं कुंभप्रतिप्रतियो गित्वं नानावधिघटितत्वं तदपि स्तंभस्य
स्वरूपं धर्मो वा आद्ये सावधेस्तस्य तत्त्वे स्वभावत्वेऽहेतुप्रसंगः कुंभस्यापि प्रतियोगित्वान्तर्भूततया लंभानः यातित्वादिति योजनांतरं वि
वक्षन्नाह किंच कुंभमिति द्वितीये दूषणमाह धर्मत्व इति नत्वकुंभविशेषितप्रतियोगित्वस्य स्तंभधर्मत्वेपि न विशेषणीभूतकुंभस्य स्तंभध

योगिघटितत्वया प्रतीयमानो भेदो वस्तुनः स्वरूपं स्यात्तदा तस्य सपरिकरस्य भेदस्य स्वरूपेंतर्भावात् प्रतीयोगिनोपि स्वरूपतया
निमज्जनादहेतुमेव पर्यवस्येत् अथ प्रतियोगी भेदस्य स्वरूपे नांतर्भूतः किंतु तदस्य एव तन्निरूपकत्वेनो नाहेतुतापत्तिरिति मैवं प्रति
योगिनो भेदस्वभावानंतर्भावेपि स्वभावभूतस्य भेदस्य वस्तुस्वभाववदेवान्यनिरूप्यत्वानुपपत्तेः किंच कुंभप्रतिस्तंभस्य यत्प्रतियो
गित्वं तदपि स्तंभस्य स्वरूपेंतर्भूतं चेत्कुंभस्यापि स्तंभात्मना पर्यवसानादहेतुतापत्तिः धर्मत्वे च कुंभोपि स्तंभधर्मतामनुप्रवि
शेत् कुंभविशेषितस्य प्रतियोगित्वस्य स्तंभधर्मत्वात् अथ विशेष्यांशस्य धर्मतायामपि न विशेषणांशस्य तद्धर्मता देवदत्तस्य चित्रगु
रित्यादौ बहुव्रीहिसमासाभिहितस्वामित्वस्य देवदत्तधर्मतायामपि गवां चित्रतायाः अदेवदत्ताश्रितत्वेन धर्मत्वादर्शनादिति

मैवं तथालोके दर्शनाभावादिति शंकते। अथ विशेष्यांशस्येति चित्रगुः सत्यमेषा विभीषिका न दास मुन्मिषेद्यदि लोकेष्वा
रित्यत्र चित्रा गावो यस्येति यस्याः स्वामित्वं देवदत्तस्य विशेषणीभूतमभिधीयते स्वाम्यस्य विशेषणं चित्रा गावः चित्रगवां स्वामी
तितत्र चित्रगवां न देवदत्तविशेषणत्वं स्वविशेष्यस्वाम्यस्य तद्विशेषणत्वेपि तद्दित्यर्थः देवदत्तादिति स्वामित्वपरं धर्मिणो धर्मत्वस
णया भिन्नत्वेनेति च यत् न सिद्धिपरं यस्य भेदमात्रमेव अप्रामाणिकमविद्याविजृम्भितं मतस्य तत्प्रयुक्तविशेषणादिव्यवहारोपि नादे
शइति मतं तस्य कथं पक्षविशेषस्य व्यभिचारभूमिः स्यादिति परिहरति सत्यमेषेत्यादिना किंचादर्शनादिति कोर्थः किं नियमेन किं वाक्ष

अन्येव्याप्यभावादशक्यप्रसंजनमिति न त्वत्काचित्का दर्शनमतिप्रसंजकं। प्रथमस्त्वसिद्ध इत्याह दृष्टश्चरं चैतदिति अत्र हि भावत्वादिविशे-
षणां कृतकत्वादेरितरथा विशेषणविशेष्यासिद्ध्योरभावप्रसंगात् तथा शब्दस्यापि न हि शेषणं। तदेवस्तुद्वेपद्वयं समाधाय प्रकृतदूषणोपजीवने
न दूषणांतरमाह कुंभस्यापि स्तंभधर्मेनेत्यादिना स्तंभो धर्मी यस्यासौ कुंभस्तद्धर्मा तद्भावस्तंभधर्मता अयमर्थः यदा हि स्तंभप्रतिप्रतियो-
गित्वं कुंभस्य तदा तस्य कुंभस्वरूपत्वे ऽद्वैतापातः धर्मत्वेपि तद्वा यस्तंभोपि कुंभधर्म इत्यन्योन्यधर्मत्वं स्यात् ततश्च यद्घटारूढोयः पटस्तत्पटा-
रूढश्च स एव घट इति घटनास्यात् एवमेकस्य विश्वप्रतियोगितायां विश्वधर्मकत्वं स्यात् एवमितरेषामपि स्यात् अतश्च न धर्मधर्मिभावा-

कमपि भेदं परमार्थसत्यमभ्युपगच्छेम यदा पुनरद्वैतमेव परमार्थमवलंब्य समस्तं भेदजातं मन्या चिरव्यास्यामस्तदा घटस्य स्तंभधर्म-
तायां गवादेश्च दत्तधर्मतायां वा कं विशेषमवलोकयसि येनैवमुपलभसे दृष्टश्चरं चैतन्न विशिष्टस्य धर्मतायां विशेषणानामपि तद्ध-
र्मत्वं तेषु तेषु वह्न्युत्स्थलेषु तद्यथा शब्दो नित्यः भावत्वे सति कृतकत्वात् नित्यः ध्वनिधर्मी त्यत्वे सति श्रावणत्वात् अनित्यः सामान्यव-
त्वे सति अस्मदादिबाह्येंद्रियग्राह्यत्वादित्यादिषु तदेवं स्तंभस्य कुंभधर्मता कुंभस्यापि स्तंभधर्मेति सर्वस्यान्योन्यधर्मतायामशेष-
वस्तुधर्मकमेकमेव धर्मिपर्यवसानेन चैवमुपलभ्यते किंच विदारणात्मकभेदस्य भावस्वभावतायां न किंचनैकं वस्तु स्यात् अभे-
देकार्थश्रमवाप्येकताया भेदेन विरोधात् परमाणुरपि नैक इति तत्तत्समाहाररूपो ऽनेकोपि स्यात् भेदस्य च वस्तुस्वभावत्वेन्या-
येसत्वनिरासाद्वेत्यायेक्षं वस्तुस्वरूपं भेदो ननु केवलमनोनोक्तदोष इत्यपि निरस्तम्॥ द्विकल्पनाऽस्यामनेकधर्मकमेव वस्तु पर्य-
वसेदिति एकाभावादित्येतद्दूषणोति किंचेति तत्र हेतुः अभेदेति अभेदेन सह कस्मिंश्चदर्थे वर्त्तन इति तथोक्ता ननु माभूदेकमनेकमेव सम-
स्तवस्तु तथा च बौद्धैः स्वरूपभेदवादिभिरवयवव्यतिरेकेणैव परमाणुपुंजेष्वेकस्थूलादिमन्यथाभ्युपगम्यत इति तत्राह परमाणुरपी-
ति अथवा निरवयवपरमाणूनामविदारणात्मकत्वात्तत्समूहस्यानेकात्मकमस्त्वित्याशंक्य तत्स्वरूपस्यापि भेदात्मकत्वादुक्तदोषो-
पपादनमनेन क्रियते अत्र केचिदद्वैतैकाभावप्रसंगदूषणद्वयपरिहारायेदं वदंति द्विविधं वस्तूनां स्वरूपं स्वारसिकमन्यापेक्षं चेति तत्राद्यं

असंदेहादिति हेतुं विवृणोति यदि चेति अयमर्थः अस्ति यज्ञदत्ते दृष्टे कदाचित्पृष्टं च देवदत्तस्य सोयं देवदत्तो न वेति संदेहः तत्कस्य हेतोस्तुतो भे-
दाग्रहात्तत्तस्यास्तत्स्वरूपभेदवादिनः स्वरूपग्रहे तन्मात्रभेदस्यापि गृहीतत्वात् भेदस्य दर्शनेन च संदेहानवकाशात् एवं स्थाणुर्वा पुरुषो वेत्यादौ तथा
विपर्ययोपि संदेहग्रहणं विपर्ययस्याप्युपलक्षणमिति एवं स्वरूपभेदं दूषयित्वा धर्मभेदेपि दूषणानि श्लोकेन संगृह्णाति युगपदिति धर्म-
भेदेपि न प्रत्यक्षाधीः प्रमाणं कुतः धर्मिप्रतियोगिभेदानां युगपद्ग्रहणायोगात् दण्डादावपि युगपत्प्रतिपत्तेः स्वपरासंमतत्वात् तथानवस्थाप्रसंग-
तः भेदेन प्रतीयमानयोरेव विशेषणविशेष्यभावनियमात् तं तं भेदप्रतीतिं विना प्रथमभेदप्रतीतेरसंभवान्मूलक्षयापत्तेः तथा धर्मिप्रतियो-

यदि च स्वरूपं भेदस्तदा धर्मिणि दृष्टे स्वरूपं दृष्टं न क्वचिदपि संशयावकाशः तथा विपर्ययस्यापि भेदस्वभावस्य वस्तुनस्तथै-
वावभासनात्तस्मान्न स्वरूपभेदे प्रत्यक्षं प्रमाणं तथा धर्मभेदेपि युगपद्ग्रहणायोगादनवस्थाप्रसंगतः परस्पराश्रयत्वाच्च ध-
र्मभेदेपि नास्ति धीः २ यद्यपि दंडदेवदत्तौ तुल्योपलंभयोग्यत्वेन युगपद्गृहीतेन तथापि न तयोर्विशेषणविशेष्यभावस्तदे-
व प्रत्येतुं युक्तः विशिष्टप्रत्ययस्य विशेषणविशेष्यस्वरूपप्रत्ययाधीनत्वात् विशेषणं विशेष्यं च संबंधं लौकिकीं स्थि-
तिं गृहीत्वा संकलय्येत्तत्तथा प्रत्येति नान्यथेति भट्टमतानुसारिभिः स्वीकारात् तथा नार्किकैरपि समवायिनः श्वैत्यात्
श्वैत्यबुद्धेः श्वेत बुद्धिस्ते कार्यकारणभूते इति कणादसूत्रात् अस्यायमर्थः पटसमवायिनः श्वैत्याच्छौक्ल्यगुणात्कर्मका-
रणाभूतात्तस्मिन्गुणे शौक्ल्यमिति मतिरुत्पजायते तस्माच्छ्वैत्यबुद्धेर्नोर्गुणविशिष्टे शुक्लमिदमिति बुद्धिरुत्पजायते ते च बुद्धी कार्यका-
रणाभूते इति ॥ ९

गिनोरपि पूर्वन्यायेन प्रतीयमानयोरेव धर्मिप्रतियोगित्वप्रतीतिनियमात् भेदस्य च निर्विकल्पके निरपेक्षप्रत्यक्षत्वे स्व-
भावहानिप्रसंगेन पूर्वोक्तपरस्पराश्रयस्यापि विश्रांतत्वादिति श्लोकार्थः आद्यं हेतुं दृष्टान्तपूर्वोक्तं दृष्टांतं विघटयति यद्यपीति कः खल्वियं कथये-
द्विशेषणादिप्रत्ययानधीना विशिष्टप्रतिपत्तिरिति किं भट्टप्रभुजावलंबी किं वा तार्किककरावलंबी प्रथमे भट्टाचार्यवचनविरोधमाह विशेषणमिति
लौकिकीं स्थितिमिति विशेषणविशेष्यत्वयोग्यतामित्यर्थः तेन च संयोगस्य द्विष्ठत्वाद्दंडी पुरुष इतिवत्पुरुषीदंड इत्यपि स्यादिति शंकापरिहृता संकलनमे-

चि॰ प्र॰
टी॰ न॰
५

नकेवलंपरैरंगीकरणंयुक्तिरप्यत्रास्तीत्याह तथाचसुरभीति अस्तुतर्हिविभिन्नेंद्रियग्राह्ययोरेवमेकेंद्रियग्राह्येयुकावानेतितत्रापिवि॥
मतंविशिष्टप्रत्यक्षंविशेषणादिप्रत्ययोत्तरकालीनंविशिष्टप्रत्ययत्वात्सुरभिचंदनमितिप्रत्यक्षवदित्यनुमानंविवक्षन्नाह तथाचेति नचभि॥
न्नेंद्रियजन्यत्वमुपाधिः व्यतिरेकेप्रकृत हेतुव्यतिरेकस्योपाधेः अस्तुप्रकृतेकिंस्यादतआह इतीति नदेवंयुगपद्ग्रहणायोगादित्येतदुपपाद्य॥
द्वितीयंहेतुंविवृणोति भेदभेदिनोश्चेति पूर्वपक्ष्याशयमनुवदति नचानंतभेदेति हेतुमाह भेदस्येति प्रतीतिनियमादित्युत्तरत्रान्वयः विशेष॥
णादिभावेनहिभेदःप्रतीयतेसचभेदेनप्रतीतस्यस्यवंद्वितीयोभेदःपूर्वभेदवद्धिभिन्नतयाप्रतीयमानएवप्रथमंभेदंप्रतिविशेषणंभवति एवंतृ

तथाचसुरभिचंदनमितिसौरभस्यगुणस्यघ्राणेंद्रियैकगोचरस्यचंदनस्यलोचनगोचरस्यैकेंद्रियाविषयत्वात्क्रमेणग्र
हीतयोरेवविशेषणविशेष्यभावप्रतीतिरित्यनिच्छताप्यभ्युपेयं तथाचसर्वत्रविशेषणविशेष्यभावप्रतीतावयमेवन्यायः
इत्यस्मादिदंभिन्नमितिधर्मिप्रतियोगिज्ञानपुरस्सरमेवतद्विशिष्टभेदज्ञानमेष्टव्यं तथाचसतिनयुगपदुभयग्रहसं
भवः भेदभेदिनोश्चभेदेऽनवस्थापितदवस्थैव नचानंतभेदाभ्युपगमेपिमूलक्षतेरभावादनवस्थाऽदोषाय भेदस्येदम॥
तोभिन्नमयमनयोर्भेदइतिवाविशिष्टत्वेनैवप्रतीतिनियमात् भेदेनैवचप्रतिपन्नस्यविशेषणत्वात् ततश्चपूर्वपूर्वभेदप्रती॥
तिमंतरेणोत्तरोत्तरभेदप्रतीतेरसंभवात् युगपदनंतभेदप्रतीतेरयोगाच्चजातैवमूलक्षतिः॥ तीयोपीत्यनंतभेदप्रतीतिप्रसक्तिरित्यर्थः

अस्तुतर्ह्यनंतभेदप्रतीतिस्तत्राहयुगपदिति क्रमपक्षेविषयांतरसंचारोच्छेदादिप्रसंगापादनार्थश्चकारः अत्रमानमनोहरकारोन्नयतिस्म नचभेदा॥
नवस्थाबाधिकाभेदांतरप्रसक्तौमूलाभावात् भेदभेदिनोभिन्नाविति व्यवहारादर्शनात् नचैकभेदबलेनान्यभेदानुमानं दृष्टांतभेदाविघातेनोत्था
नेदोषाभावात् सोपिप्रियाकयाचनार्थिगतस्यपाचिनःखारिकानैतदानृत्वाभ्युपगमदेव दृष्टांतभेदविमर्देत्वनुत्थानमेवउपजीव्यस्यप्रबलत्वेनबा
धात् स्वात्मव्याघातकत्वेनजात्युत्तरत्वाच्चएतेनदृश्यत्वादयोनिरस्ताः नचानिर्वचनीयत्वंभेदस्य तत्रप्रमाणाभावादितिगायन् तत्रतावद्भेदानवस्थाया
बाधकत्वंउक्तरीत्यामूलक्षयकरित्वादित्यवेहि नचव्यवहारादर्शनात्प्रसंजकाभावः घटाभिन्नोघटस्यभेदइतिविशेषणविशेष्यभावेनभेदव्यवहारस्ये

विशिष्टप्रत्यक्षसमानकालीनभेदप्रत्यक्षकत्वात्॥

रम॰
५

ननु नहीयमेवानंतभेदानवस्थानिरूढमूलः प्रौढो भवेत् नजानीमः किमारूढमूलतया प्ररूढः किंवाऽनुपलब्धिपराहततन्
त्तन्मूलतया निर्मूलत्वेन संसारवह्नौ लीयेतेति यच्चैकभेदबलेनान्यभेदानुमानं मायावादिमतेन तयाऽऽशंक्य दृष्टांताव्याघातव्याघातयोर्दू-
षणमुक्तं तत्रैकोऽनेकप्रश्नस्य तवैव शोभनः कः खल्वनुमानेनानिर्वचनीयसर्वभेदमायावादिमतेनैवमाशंकेत अथ योऽयं विशेषणविशेष्य-
भूतभेदव्यवहारो भेदपरंपराप्रसंजकः नच्चैवेदं दूषणद्वयमास्तामिति चेन्न दृष्टांतभेदानंगीकारात् तर्हि व्याप्तिग्राहित्वं स्वव्याघातकत्वं चेति चेन्न प्रामाणि-
कत्वाभावेऽपि विशेषणादिभावस्य भिन्नतया प्रतीतेरव्यभिचाराभावात् यत्र दृष्टः स एव प्रामाणिको भेद इति चेन्न प्रामाणिकत्वासिद्धेस्तदसाधकमि-
ति चेन्न प्रतिबिंबदेहात्मभावादीनामिव व्यावहारिकसत्तोऽपि लौकिकवैदिकव्यवहारांगत्वोपपत्तेः तत्रापि मुग्धोऽयं मिथ्यात्ववादं व्याचष्टे तद्व्याघातस्य

अथ विद्यमानभेदस्य स्वरूपेणागृहीतस्य विशेषणत्वोपपत्तौ भेदाप्रतीतिः किंकरिष्यतीति तत्र क्षीरनीरयोर्दूर-
स्थयोस्तयोश्च तथात्वाप्रतीतेः नच तत्र दूरत्वादिदोषप्रतिबंधात्तदग्रह इति वाच्यं विद्यमानभेदयोरपि भेदेनाप्रती-
तौ विशेषणविशेष्यभावाग्रहे सिद्धे कारणविशेषोपन्यासस्य निष्प्रयोजकत्वात्॥ यदि शून्यताकारणं तत्र अन्यत्राकरणम्।
न यद्यनिरूपितरूपतापादनं अनुमोदयस्व तत्र एतेन दृश्यत्वादयोऽपि समर्थिताः नन्वनिर्वचनीयत्वे प्रमाणाभावः तत्र स्मरणप्रमाणयोः
रुद्धोऽधितत्वादनिर्वचनीयवादे एवं चेतनादृशमुत्तरदानं पिण्याकयाञ्चिनेत्वा विकानेत्वदानं वा सकललोकवेदनिंदितवैशेषिकदर्शनमदिरामा-
नाम्यसरणांतिकमायश्चित्तरूपतीव्रतरतर्कनष्टमदिराधारादानं वेत्यात्मनि परिभावयेत्यलम् पूर्वोक्तानवस्थापरिहारमुद्राव्यदूषय-
ति अथेत्यादिना यत्त्वत्रापि तेनोक्तं समानाभिहारादिप्रतिबंधादग्रहणमिति तदनूद्य दूषयति नचतत्रेति अयमभिसंधिः तत्र तेषां
परस्परं भेदोऽगृहीतो न वा यदि गृहीतस्तदा दोषवशेनापि न विपर्ययादिशक्यमुत्पादयितुमसाधारणाकारग्रहणेऽपि भ्रमोत्पत्तावतिप्रसंगात्
नचेद्भेद एव न गृहीतस्तदग्रहे चातिदूरत्वादिकारणमिति वक्तव्यं तथा चासदुक्तं प्रयोजकमनुसृत्यैव तत्र कारणावरणमनुकूलमेवेति।

किंच भवदभिमत प्रयोजकस्य प्रयोजकत्वं क्वा दृष्टं येनास्य प्रतिबंधकतेत्याह नह्युभयवादीति प्रतिबंधरहितस्यस्लेपिक्षीरनीरयोः स्वरू
पप्रतीतिमात्रादुभयोर्दिभावाद्दृष्टेर्भेदप्रतीतिपूर्वकत्वेचान्योन्याश्रयतास्यादेवेत्यर्थः यस्तुधर्मिप्रतियोगिभेदबोधयोरितरेतराश्रयपरिहारोभिहितः
पूर्ववादिनातत्राप्युक्तदूषणमतिदिशन्परस्पराश्रयत्वादिति श्लोकावयवे विवृणोति एतेनेति तस्यैवविवरणं भिन्नतयेति परिहारांतर
मुक्तं दूषयति नचनिर्विकल्पकायामिति निष्प्रतियोगिकभेदसद्भावेप्रमाणमेवनास्तीत्यर्थः एतेनप्रतियोगित्वेनाप्रतीतावधिकरणत्वे
नप्रतीतिरधिकरणत्वेनास्फुरतीच प्रतियोगिस्फुरतिरित्यादिवौद्धधिक्कारस्यंउदयनीयसमाधानमपिनिरस्तंमंतव्यं तदेवंसाधारण्येनधर्मि

नह्युभयवादिसंमतंतथाविधंस्थलमस्तियत्रविद्यमानभेदयोः स्वरूपप्रतिपत्तिमात्रेणविशेष्यभावग्रहणं एतेनभिन्नतया
प्रतिपन्नयोरेवधर्मिप्रतियोगिभावइतीतरेतराश्रयदोषोवज्रलेपायते नचनिर्विकल्पकायांसंविदिभेदस्यभेदिनोश्चयुग
पदंगुलित्रयवदवभासनादिदमस्माद्भिन्नमितिसविकल्पकव्यवहारोपपत्तेः कथमितरेतराश्रयतेनिवाच्यं निष्प्रतियोगिकस्य
स्यप्रमाणागोचरत्वात् नित्यंप्रतियोगिघटितएवतस्मिन्प्रमाणप्रसरात् कश्चायंधर्मभेदःकिमन्योन्याभावःकिंवावैधर्म्यमुत पृ
थक्त्वमाहोस्विद्भिन्नलक्षणयोगित्वं नतत्रतावत् नान्योन्याभावरूपोयंहेत्वाभावप्रसंगतः तादात्म्यस्याप्यमानत्वात्प्रतियोग्यनिरूपणा

भेददूषणमुक्त्वाविशेषतोपिदूषणानिदर्शयितुंविकल्पयति कश्चायमिति वैधर्म्यंघटत्वपटत्वनित्यत्वानित्यत्वादिलक्षणलक्षणसाधार
णंलक्षणंनसाधारणंनेनचनहितीयचतुर्थसंकरः अन्योन्याभावभेददूषणंश्लोकेनसंगृह्णाति नान्योन्येति अयंभेदोऽन्योन्याभावरूपोनभव
तिकुतःसप्रतियोगिकस्यान्योन्याभावस्यधर्मस्यधर्मिस्वभावत्वेविश्वप्रतियोगिकान्योन्याभावद्वाराविश्वस्यापिधर्मिभूतवस्तुमात्रत्वाद्वैतस्यैवाभाव
प्रसंगतः धर्मत्वेपूर्वोक्तानवस्थाविश्वधर्मवत्त्वाच्चघटादेरित्यादिवहिरेवद्रष्टव्यं किंचान्योन्याभावस्यैवानिरूपणात्तद्रूपोपिभेदोदुर्निरूपइति।
कथं तादात्म्यप्रतियोगिकोह्यभावोऽन्योन्याभावः नच्चसर्वत्रभेदवादिनस्तात्त्विकस्याप्रामाणिकंततस्तन्निरूप्याभावोपिप्रतियोग्यनिरूपणादप्र

राम:
६

अथ तादात्म्यं घटपटयोः प्रमितं तर्हि तत एव तन्निषेधरूपोऽन्योन्याभावस्तयोर्न घटते एवं सर्वत्रेति पुनरप्यद्वैतापात इति घट्टकुटीप्रभातं नचा
न्यत्र प्रमिततादात्म्यस्यान्यत्र निषेधः संसर्गाभावत्वप्रसंगादित्यपि द्रष्टव्यं अस्तु तर्ह्यन्य एवान्योन्याभावप्रतियोगीति तत्राप्येतदेवाहेत्यायोजनीयं प्रति
योग्यनिरूपणादिति श्लोकयोजना श्लोकं विवृणोति अन्योन्याभावोपीत्यादिना अन्योन्याभावोपि हि भेदो यस्मात्प्रतियोगिनः सकाशादेष्टव्यः तम।
पि प्रतियोगिनं स्वस्मिन्नंतर्भावयन्कथं न धर्मतया स्वस्य घटधर्मत्वात्तमपि घटधर्मतयैवांतर्भावयेत् घटधर्मतामापादयेदित्यर्थः तथापि द्वैताभावः क
थमित्यत आह तथाचेति यदुक्तमस्माभिर्बहिरेव द्रष्टव्यमिति तत्र प्रथममाह वस्तुनो भेद इति द्वितीयं हेतुं विवृणोति किंच तादात्म्येति अभावं निरू

अन्योन्याभावोपि हि यस्माद्भेदस्तं प्रतियोगिनमपि धर्मतया स्वस्मिन्नंतर्भावयेत् तथाच विश्वप्रतियोगिघटितान्योन्याभावस्य व।
स्तुनो भेदेन वस्त्वप्रसंगात् वस्तुतावन्मात्रत्वेकथं नाद्वैतं पर्यवस्येत् किंच तादात्म्यप्रतियोगिकोऽभावोऽन्योन्याभाव इति तद्वादि।
भिरभ्युपेयते तथाचाभावप्रतियोगिभूतं स्तंभकुंभयोस्तादात्म्यं यदि न प्रमाणगोचरस्तदा कथं तदभावः प्रामाणिकः स्यात् एवं
कुंभस्य विश्वप्रतियोगिकं तादात्म्यमादावेव प्रमितमित्यद्वैतसिद्धावूर्द्ध्वमपि तद्विरोधिनोन्योन्याभावग्रहस्य न समुदयः स्यादुपजीव्य
विरोधात् ननु कुंभः स्तंभो न भवतीति स्तंभप्रतियोगिकोऽभावो यः कुंभमाश्रितः सोन्योन्याभाव इति कथमप्रमितप्रतियोगित्वप्रसक्तिः॥

पयता प्रतियोगिना विशेषणेनोपलक्षणेन वा भवितव्यमुभयथापि तस्याप्रामाणिकत्वेन हि विशिष्टं तदुपलक्षितं वाऽप्रामाणिकमेव स्यादित्यर्थः।
वादींद्रस्तु पक्षधर्मत्वादीनां धर्माणामभावत्वमुररीकृत्य प्रतियोगिपर्यनुयोगे प्राह वस्तु न स्तु न किंचिदिति तं प्रत्येतावदुक्तव्यं वस्तुनाभावत्वमपीति अ।
निषेधात्मकत्वेऽभावत्वव्याघातान्निषेधात्मकत्वे तु निषेध्यप्रतियोगिनमनंगीकृत्य न निस्तार इति प्रतियोग्यनिरूपणादित्यस्य द्वितीययोजनां द।
र्शयितुं शंकामाह ननु कुंभ इति न तादात्म्यप्रतियोगिकोन्योन्याभावः किंतु स्तंभादिप्रमितपदार्थप्रतियोगिकः ततश्च कथमप्रसिद्धप्रतियोगित्वम्।
अथवा भवतु तादात्म्यप्रतियोगिकत्वं तथापि नोक्तदूषणद्वयसंभवः स्तंभादिस्वरूपमात्रत्वात्तस्यातिरिक्ततादात्म्ये प्रमाणाभावादिति शंकते नन्वि

सि॰प्र॰ टी॰न॰ ७

दूषयति मैवमिति प्रतियोग्यभेदमेव दर्शयति स्तंभ इत्यादिना अयमभिसंधिः स्तंभः कुंभे नास्तीति संसर्गाभावोपि स्तंभप्रतियोगिकः कु-
म्भाधिकरणक एव न च संसर्गप्रतियोगिकोसौ न स्तंभप्रतियोगिक इति वाच्यम् तथा सति संसर्गमात्रस्यैव प्रलयप्रसंगात् स्तंभविशेषितसंसर्ग-
निषेधे तु स्तंभोपि प्रतियोगिकोटिं टीकत इति पूर्वोक्तदोषतादवस्थ्यं तथा चान्योन्याभावोपि चेत्स्तंभप्रतियोगिकः व्यक्तमतिव्याप्तिर्लक्षणस्य।
स्येति एतेन तादात्म्यं नाम घटस्वरूपमित्यपि निरस्तं घटमात्रोच्छेदप्रसंगादेव न च स्तंभस्य कुंभे निषेधः संसर्गाभावत्वापादनात् साहृष्टस्य स्तंभस्वरूपत्वा-
निषेध्यं तथा चायमर्थो न क्वचित्सिद्ध इति नोक्तदूषणलंघनजंघालता न च प्रतियोग्यैक्येपि प्रागभावादिवदनयोरपि भेदः स्यादिति वाच्यं असिद्धेः पू-
र्वोत्तरकालत्त्विनयरूपविशेषणान्वयविशिष्टस्यैव घटस्य तत्रापि प्रतियोगित्वात् इहैव संसर्गाभावान्तरत्वापादनाच्च लक्षणभेदाद्भेदशंक-

मैवं प्रतियोगिभेदाभावादन्योन्याभावसंसर्गाभावयोर्भेदाभावप्रसंगात् स्तंभः कुंभे नास्ति कुम्भः स्तंभो न
भवतीत्युभयत्रापि स्तंभस्यैव प्रतियोगित्वांगीकारात् प्रतियोगिनिष्ठो भावोऽत्यंताभावः प्रतियोग्यनिष्ठत्वे सत्यका-
दाचित्कोभावोन्योन्याभाव इति लक्षणभेदादभावयोर्भेद इति चेन्मैवं॥ १ ते प्रतियोगिनिष्ठ इति न हि स्वस्मिन्स्वयं व-

र्त्ततेऽतः प्रतियोगिन्यपि वर्त्तन एवात्यंताभावः न चाप्रमेयत्वादावसंभवः प्रमेयत्वादेस्सकलवस्तुनिष्ठत्ववादिनां स्वस्मिन्निवान्यत्रात्यं-
ताभावाभावात् अन्यमते तु स्वस्मिन्नप्यत्यंताभावभावात् एतेन चेतरेतराभावस्य संसर्गाभाववर्गोपि व्यवच्छिन्नः नह्यन्योन्याभावः स्वप्रतियो-
गिनि वर्त्तते न स्वैव तदन्यत्वापत्तेः एवं प्रागभावप्रध्वंसाभावावपि तत्समये प्रतियोगिनोरेवाभावेन तत्र वृत्तेः शंकितुमप्यशक्यत्वादिति सा-
दृश्यादिव्यवच्छेदार्थमभावपदं अपरे तु रूपादिव्यवच्छेदार्थमभावपदं प्रागभावादिव्यवच्छेदाय अकादाचित्कविशेषणं द्रष्टव्यमिति वदंति
इदं चान्योन्याभावनिष्कर्षायोक्तं न तु तथा प्रकृतानुपयोगात् अन्योन्याभावलक्षणमाह प्रतियोगीति अकादाचित्के इति प्रागभावप्रध्वंसाभा-
वयोरुत्पत्तिविनाशवत्तया कादाचित्कयोर्व्यवच्छेदः तावति चात्यंताभावेपि स्यादित्याद्यं विशेषणम् तत्रात्यंताभावलक्षणं दूषयति मैवमि-

राम॰ ७

प्रतियोगिनिष्ठत्वशब्देन यत्किंचित्प्रतियोगिनिष्ठत्वं स्वप्रतियोगिनिष्ठत्वं वा विवक्षितमिति विकल्प्याद्यं दूषयति यत्किंचिदिति द्वितीयं शंकते स्वेति अत्रापि स्वशब्देनाभावमात्रं विवक्ष्यते अत्यंताभावो वा प्रथमे पूर्वोक्तमेव दूषणं द्वितीये प्राह मैवं स्वशब्देनेति अत्यन्ताभाव प्रतियोगिनिष्ठत्वमेवान्योन्याभावस्य दर्शयति पटे घट इत्यादिना तेनैव च तल्लक्षणादात्माश्रयभावात् न चान्योन्याभावप्रतियोगि निष्ठत्वं लक्षणं वाच्यं प्रागभावादावपि भावात् अनेकान्योन्याभावपक्षे तेनैव चानैकांतिकता यस्मिंश्च प्रतियोगिनि तत्त्वं तत्तिभ्यामभाव

यत्किंचित्प्रतियोगिनिष्ठत्वस्यान्योन्याभावेपि भावादतिव्याप्तेः स्वप्रतियोगिनिष्ठत्वं विवक्षितमिति चेन्मैवं स्वशब्देनात्यन्ता भावोपादानेन तत्प्रतियोगिनिष्ठत्वस्यान्योन्याभावेपि भावेनातिव्याप्तेस्तदवस्थत्वात् पटे घटो नास्तीत्यत्यन्ताभावस्य घटः प्रति योगी पटप्रतियोगिकान्योन्याभावोपि घटे वर्त्तत इति किंचेदं प्रतियोगित्वं निरूपकत्वं चेद्धर्मिणोपि प्रतियोगित्वप्रसंगः अथ पत्त्वम न शब्दवाच्यत्वं तर्हि घटः पटो न भवतीत्यत्रान्योन्याभावे पटस्य प्रतियोगिता न स्यात् पत्त्वस्य नत्रशब्देनानिर्देशात् अथ धर्मिणोन्यत्वे सति निरूपकत्वं प्रतियोगित्वं तदपि न प्रतियोगित्वस्यानिरूपणादेव धर्मिप्रतियोगिकान्यत्वस्याद्याप्यसिद्धेः तदेवं नान्योन्याभा वो भेदः नापि द्वितीयः वैधर्म्ये वैधर्म्यान्तराभ्युपगमेऽनवस्था ॥ १ ॥ स्वैलक्षण्यं विवक्षितं तदेव प्रतियोगित्वं दुर्निरूपमित्याह किंचेदमि त्यादिना एतदपि प्रतियोग्यनिरूपणादित्यस्यार्थः ननु न निरूपकत्वमात्रं प्रतियोगित्वं येन धर्मिण्यपि प्रसंगः किंतु धर्म्यन्यत्वे सति निरूपकत्व मिति शंकते अथेति धर्म्यन्यत्वं हि धर्मिप्रतियोगिकान्योन्याभाववत्त्वं न च प्रतियोगित्वमद्यापि सिद्धमित्यात्माश्रयत्वमिति परिहरति तदपि नेत्यादिना एते नान्योन्याभावलक्षणमपि निरस्तम् तत्रापि प्रतियोगिप्रयुक्तदूषणानां सुवचत्वादिति वैधर्म्यपक्षं दूषयति नापि द्वितीय इति वैधर्म्ययोरपि घट त्वपटत्वयोर्भेदोस्ति न वा आद्ये स्वरूपान्योन्याभावयोर्दूषितत्वात् वैधर्म्यमेव मंतव्यं तथा चानवस्थेत्याह वैधर्म्य इति ननु नानवस्था वैधर्म्यानराश्रीक

चि॰प्र॰ टी॰न॰ ८

द्यधिकारे ऽनवस्था हि प्रवाहं प्रापयति गन्धे गन्धान्तराभ्युपगमइवेति तत्राह अनभ्युपगमेवेति तयोर्हि भेदाभावे घटत्वमेव पटत्व-
मिति तदधिकरणं घटोपि पटः स्यादेवमितरदपीत्यर्थ्यं तापात इत्यर्थः पृथक्त्वपक्षं दूषयति नापीति पृथक्त्वस्य धर्मिणो भेदाङ्गीकारे ऽनव-
स्थाभयादभेदापत्तिः स्यात् तथा च घटस्वरूपमात्रं न भेदः प्रतिषिद्धत्वादित्यर्थ्यं तापात इत्यर्थः अत्रान्यधिकमपि दूषणमाह किं-
चेति तत्र गुणादिष्विन्यर्थः पृथक्त्वमेव तावत्प्रामाणिकं तद्रूपभेदः सुतरामप्रामाणिक इत्याह तत्त्वतावेदकेति अत्रमानमेतोर-
स्यमत्रानुमानं शंकते अथाकाश इति स्पर्शवद्द्रव्यगतगुणासमवायिकारणभूतौ यावद्धि स्वगुणौ तयोरधिकरणमित्यर्थः अ-

अनभ्युपगमेवावैधर्म्ययोरेकतापत्त्या तद्धर्मिणोरप्येकतापत्तावहेतप्रसंगः नापि तृतीयः पृथक्त्वे पृथक्त्वान्तराभावादे-
वधर्मिणास्तस्यैकतापत्तेः किंच पृथक्त्वस्य गुणत्वान्निर्गुणेषु गुणादिषु पृथक्त्वगुणासम्भवेन भेदो न स्यात् तत्रान्योन्याभावनिबंध-
नो भेदव्यवहार इति चेन्न हि द्रव्येष्वपि तन्निबंधन एव तद्व्यवहारोस्तु कृतं पृथक्त्वेन तत्त्वतावेदकप्रमाणाभावाच्च अथाकाशः स्पर्शवद्गु-
णासमवायिकारणाद्विस्वगुणयोराश्रयः द्रव्यत्वाद्भूतत्वाद्वा घटारम्भकतन्तुवत् तेन विषयतयोरेकत्वपृथक्त्वयोः सिद्धिः मानमनो-
हरकारः प्रत्यतिष्ठिपदिति चेन्नवेदान्तिनम्प्रति हेत्वन्तस्य साध्यविकलत्वात् तेन कारणगुणानां कार्यगुणान्तरारम्भस्यान-

द्विस्वगुणाधिकरणमित्युक्ते शब्दपरममहत्त्वाद्यधिकरणत्वेनार्थान्तरता नतदर्थमितरद्धि ''अभ्युपगमात् स्पर्शकत्वोपाध्युपहतत्वा-
शेषणं तावन्मात्रोक्तौ वाकाशतन्तुसंयोगविभागाभ्यामाकाशघटसंयोगविभागलक्षणस्पर्शवद्गुणोऽप्रत्यसमवायिकारणाभ्यामर्थान्तर-
तानतिवृत्त्यर्थमद्विस्वेत्युक्तं तेनैकत्वसंख्यैकपृथक्त्वयोः सिद्धिः तथाहि आकाशतदितरवृत्तित्वात् स्पर्शवद्गुणाभवनिर्द्वित्वद्विपृथक्त्वादि-
यस्तत्कारणो चैकत्वैकपृथक्त्वे इत्यर्थः साध्यवैकल्यमेव विवृणोति नेनेति आरम्भवादिनां खल्वियं प्रक्रिया यत्समवाय्यसमवायिनिमित्तकारणात्-
यात्कार्योत्पत्तिरिति यस्मत्तु पुनरज्ञानरशनेव पवनाशनादिभावे नैकमात्मतत्त्वमनादिभावाविद्यासहायं विपदाद्याकारेण विवर्तत इतिमतं नतस्यै

यत्त्विममेवोपाधिमुद्भाव्य नेनोक्तं स्पर्शवत्त्वं घटादीनामपि तथाविधगुणाद्याश्रयत्वप्रसंगादिति तदेतत्प्रतिसाधनमनूद्य दूषयति नचांत्याव-
यविनामिति न चानुपाधित्वमित्युक्तं तत्र हेतुमाह विषमव्यापकेति अयमर्थः पक्षादुपाधिव्याप्त्या साध्यस्यापि निवर्तनमुपाधिफलमस्मिंश्च समवद्वि-
षमः समः स्वव्याप्त्या साध्यस्य पक्षाद्व्यावृत्त्याऽव्यापकत्वमित्युत्पत्तिप्रतिबन्धो वा हेतोरपहृतसाध्यतया विपक्षभूते पक्षे वर्तमानस्यानैकान्तिक-
तापादनं वोपाधेः कृत्यमिति हि नूतनोत्त्रयनेन तत्र समव्याप्तिवद्विषमव्याप्तिरपि शक्नोति संपादयितुमग्निमत्त्वमिव निवर्तमानं धूमवत्त्वं व्यावर्त-
यितुमतो विषमव्याप्तिरपि सम्भवत्येवोपाधिरिति अभ्युपगम्य चैतदुक्तं वस्तुतस्तु समव्याप्तिरेवायमन्त्यावयविनां पक्षतुल्यत्वेन साध्याभावानि-
रूपणात् विपक्षत्वे च द्रव्यत्वादेस्तत्रानैकान्तिकत्वात् सपक्षत्वे च तत्रोपाधेरपि वृत्तेः समव्याप्ति त्वादिति नन्वधिकव्याप्तेरप्युपाधित्वे पक्षेतरत्वमा-

नचांत्यावयविनामनारम्भकत्वादेव तादृशगुणानधिकरणानामपि स्पर्शवत्त्वेन साध्यसमव्याप्त्यभावादेवानुपाधित्वं विषमव्यापको-
पाध्यंगीकारेऽपि दोषाभावात् नचैतत्पर्वतान्यत्वादेः पक्षेतरत्वस्याप्युपाधित्वप्रसंगो दोषः एतत्पर्वतो न वन्हिमानिति व्यतिरेकासिद्धेव
तस्यदुष्टत्वात् एकसाध्याविनाभावे मिथः संबंधशून्ययोस्साध्याभावाविनाभावी स उपाधिर्यदत्यय इति चोपाधित्वस्वरूपस्य समा-

व्युपाधिस्स्यात् तथा च गगनं धूमानुमाने नाधिकव्याप्तेरुपाधित्वाभ्युपगमेन हि पक्षेतरत्वनिवारणमिति तत्र “समव्यापकयोस्तुल्यत्वात्॥
ह नचैतत्पर्वतेनेति यदि हि पक्षेतरत्वस्य साध्यव्यापकता स्यात्स्यादयं दोषः न त्वेतदस्ति एतत्पर्वतेतरत्वरहितेऽप्येतत्पर्वतेऽग्निमत्त्वविरहानिश्चयेन व्यतिरेक-
व्याप्त्यसिद्ध्या साध्याव्यापकत्वादीदृशश्च सर्वत्र पक्षेतरः यत्र तु साध्योपाध्योर्व्यतिरेकव्याप्तिनिर्णयस्तत्र न पक्षेतरत्वसंज्ञा अपि तूपाधित्वमेवेत्यभिसंधिराह
प एतत्पर्वत इति अत्रोदयनलक्षणविरोधमाशंक्य परिहरति एकसाध्येति मिथः परस्परं संबंधशून्ययोर्धर्मयोरेकेन साध्येनाविनाभावे निरूप्यमाणे सहभा-
वोऽविनाभावः तस्मिन्सति यदत्ययः यस्याभावः साध्याभावाविनाभावी साध्याभावेन व्याप्तः स तदभावप्रतियोगी उपाधिः अत्र च मिथः संबंधशून्ययोरिति सा-
धनाव्यापकत्वमुक्तं अत्रापि साध्याभावस्य व्यापकत्वमुपाध्यभावस्य व्याप्यत्वं च प्रतीयते तेन च साध्यस्य व्याप्यत्वमुपाधेश्च व्यापकत्वं सिध्यतीति तद्द्वयमपि घ-

नकेवलसमागमको विषमव्याप्तिनागमकस्येनरथ्योद्योनकराचार्य्यवचनविरोधप्रसंगादित्यभिसंधिस्तदीयग्रंथमाह समवायः समवे
तइत्यादिना संयोगेहिसंबन्धत्वेसतिसमवेतत्वेकार्य्यत्वमुपाधिः कार्य्यत्वंचसमवायाद्यावर्त्तमानंसंबंधत्वेसतिसमवेतत्वंव्यावर्त्तयतितत्र
त्रापिसंबंधत्वमुभयवादिसंमतमितिसमवेतत्वव्याहृत्तिरुपाधिफलंयद्यप्ययंसाधनावच्छिन्नसाध्यव्यापकोनतुकेवलसाध्यव्यापकस्तथापिवि
षमव्याप्तिकत्वेनप्रकृतोदाहरणंसाधनावच्छिन्नसाध्येनचविषमव्याप्तिकता कार्य्याणामपिगुणादीनामुक्तसाध्यकत्वाभावादिति एतेनसमासमा
विनाभावावेकत्रस्तोयदासमेनयदितोव्याप्तस्तयोर्हीनोऽप्रयोजकइतिभट्टाचार्य्यवचनमपिप्रतिभटितंमंतव्यंवस्तुतस्तुउभावपिप्रकारौसंग्रा

समवायस्समवेतः संबंधत्वात् संयोगवदितिप्रयोगेसंबंधत्वेसतिसमवेतत्वेकार्य्यत्वमुपाधिरितिविषमव्यापकोपाधे
रुद्योनकराचार्य्यैरंगीकारात् अपिचान्योन्याभावाद्यो भेदाः किंभिन्नमेवधर्मिणांपरिभन्तेउताभिन्नंनाद्यो नंतभेदा
भ्युपगमप्रसंगात् अस्तुकिंनः छिन्नमितिचेच्छृणुक्रमेणतेषांधर्मिणासंबंधेधर्मिणाश्चघटादेः कादाचित्कत्वेनन

संबंधासम्भवः॥संभवेवाऽ
द्योनद्वेतत्सामान्यलक्षणमपितुविशेषलक्षणंतस्यचानेकप्रकारत्वंनदोषाय सामान्यलक्षणंत्वन्यतो
भावप्रतियोगिधर्मइति अभावमात्रप्रतियोगित्वंप्रमेयत्वादेरप्यस्त्यन्योन्याभाववत्त्वात् सचनोपाधिः तस्यसर्ववस्तुनिष्ठतयासाधनव्यापकत्वेनसा
ध्यानपहारित्वादतउक्तमन्यत्ताभावेनिधर्मग्रहणंतुपरमाण्वादीनामनाश्रितानामुपाधित्वनिरसनार्थमितिनवीनानामुन्नयनं यथाचैतत्सर्वमविचारि
तरमणीयंतथोदर्केदर्शयिष्यते इदानींसर्वस्यधर्मभेदस्यसाधारणमाश्रयानिरूपणंदूषणमाह अपिचेत्यादिना किंपरस्परंविभिन्नंघटादिकमालि
गंतेभेदाउताभिन्नमित्यर्थः ननूत्तरोत्तरभेदवर्त्तनार्थंपूर्वपूर्वाश्रयभेदेऽनंतभेदश्चेत्प्रसज्येततनप्रसज्यतांनामअज्ञायमानतयोपपादकत्वेनमूलक्षया
भावादित्याशंक्यपरिहरन्ति शृणिवति तत्रानंतानांभेदानांक्रमेणघटेवर्त्तमानत्वंयुगपद्वाक्रमपक्षेतुसावधिकेवस्तुनितेषामसम्भवइत्याह क्रमे

किमितिपृष्टस्सतिरितितत्राह भेदसंबंधमिति यदीदानीमेव निष्पन्नं घटमाश्रयते भेदस्ततः पूर्वमभिन्नत्वात्तस्यस्यादेवपक्षस्या-
तिरित्यर्थः ननु यद्यपीयं प्रथमैव प्रवृत्तिस्तथापि प्रथमः स्वपरनिर्वाहकतया स्वस्य परस्य चाश्रयभेदं संपादयति तदुपरि चोत्तरोत्तरमुत्तरो-
त्तरस्य यथा खल्वति शूरः पदातिः परदुर्गेषु परेषामात्मनश्च कपाटविघटनेन द्वारमापादयति तद्वदिति तत्राह तत्संबंधेनेत्यादेवंपदापद्य-
तिरिव कश्चिद्भेदः प्रमाणेन प्रथमप्रवृत्त इति निर्णीयेत तन्नेत्यादिति भावः केन भेदेन विशिष्टे घटादौ कस्य भेदस्य स्थितिरिति योजना युगपदेव वक्ष्य-
माने भेदे स्वाधारभेदशंकायां वायं ग्रंथः एवमविनिगम्यत्वमुक्त्वा प्राग्लोपापत्तिं चाह उत्तरोत्तरेति प्रतीतिक्रमापेक्षयोत्तरमुपपादकं पूर्वमुपपा-

तीतानागतानां च भेदानां क्रमसंबंधाय घटोऽनादिरनंतश्च स्यात् अथ युगपदेव धर्मिणा सर्वे भेदाः संबध्येरन् तर्हि भिन्ने
भेदस्थितिरिति पक्षस्सतिः भेदसम्बन्धं विना तस्याभिन्नत्वानुपपत्तेः तत्संबंधेनैव च भिन्नत्वे किं भेदविशिष्टे किं भेदस्थि-
तिरिति नियामकाभावादेकोऽपि भेदो न भवेत् उत्तरोत्तरेणैव च भेदेन पूर्वपूर्वभेदोपयोगोपपत्तावनन्तभेदाभ्युपगमोऽपि नि-
ष्फलः स्यात् एवमपि भेदाः स्वीक्रियेरन् यदि भेदपरंपराभरमंथरा कापि संविदुदयमासादयेत् तथा चाहुः खंडनकाराः प्रा-
ग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवेत् अनवस्थितिमास्थातुरचिकित्स्यस्त्रिदोषतेति ॥ एवं घटपटयोर्भेदव्यवहारसिद्धिर्हि प्रथम-
भेदोपयोगः स चोपपादकेन द्वितीयेन सिध्यतीति मुधा प्राथमिकभेदः एवमधोऽधोऽपीत्यर्थः तदुक्तं श्रीहर्षकविभिः अग्रे धावत्यथाद्यु-
पयानो विसरणशीलश्च तत्वस्य भेदप्रवाहः किमालंबनेनेति प्रमाणापगममपि दूषणमाह एवमपीति विषयभूतया भेदपरंपरया मंथरा स्या-
त्सेत्यर्थः उक्तदूषणत्रितयं श्रीहर्षनतयोक्त्योपोद्बलयति तथा चाहुरिति भेदानवस्थितिमास्थातुः प्राग्लोपादिभिर्दोषैरचिकित्सा-
त्रिदोषतायां चिकित्स्यो मतिक्रांतो यस्त्रिदोषो वातपित्तश्लेष्मणां प्रकोपः सन्निपातस्तद्भावः स्यादिति श्रीहर्षोक्तेरर्थः धर्मरूपो भेदो भिन्नेऽवर्त्तत इति प्र

अभिन्नेवर्त्तनादिति द्वितीयं पक्षं दूषयति नहीति द्वितीय इति । यद्यपि पटाद्भिन्ने घटे वर्त्तमानः पटाद्भेदोऽभिद्यान्यटमपि पटाद्भिंद्यात्समानयोगक्षे-
मत्वादिति भावः भिन्नलक्षणयुक्तत्वं भेद इति चतुर्थं धर्मभेदविकल्पं दूषयति नापीति अत्र चान्योन्याश्रयद्वारानन्तफलमात्माश्रयः स च
तृतीये आत्माश्रयमेव सुबोधेन ग्रन्थेन विवृणोति नानालक्षणेति लक्षणानामेव दुर्निरूपत्वात्तद्रूपोपाधिभेदो दुर्निरूप इत्याह किं चेति ना-
नि च दूषयितुं नानालक्षणानि संकल्पयति तथाहीति यानि नानालक्षणानि अभ्युपगम्यन्ते तानि द्रव्यादीनां तु लक्षणानि न तत्र अधा-
नत्वात् तस्तेषां दुर्निरूपत्वे दुर्निरूपतया तानि तद्वान् तल्लक्षणानीत्यभिप्रायः भेदज्ञाने प्रविष्टस्ते भेदज्ञानेक विभ्रमानागमापायिनः सर्वा-
नागमा बाधितुं क्षमाः द्रव्यलक्षणं दूषयति तत्र तावदिति आश्रयत्वं गुणकर्मणोरप्यस्तीति तत्त्वात्याधारत्वात् न उक्तं गुणाश्रय इति तथा ।

न हि द्वितीयः अभिन्नेऽपि चेद्भेदो निविशेत्तदा न तदपि नेकं स्यादित्येकाभावादनेकमपि न सिद्ध्येत् नापि वैलक्षण्यं भेद आत्माश्रयत्वा-
त् नानालक्षणयोगो हि वैलक्षण्यं नानात्वं च भिन्नत्वापरपर्यायमद्याप्यसिद्धं तेन च न सिद्धेन्न सिद्धिरिति किंच नानालक्षणयोगोऽपि दुर्नि-
रूपः तथा हि द्रव्यादीनां यानि लक्षणानि नानाविधान्यभ्युपगम्यन्ते तत्र तावद्गुणाश्रयो द्रव्यमित्यलक्षणं यतः अव्याप्तेरप्यति-
व्याप्तेर्द्रव्यं नैव गुणाश्रयः आद्यक्षणे गुणाभावाद्गुणादावपि वीक्षणात् ४ उत्पन्नमात्रं द्रव्यं क्षणमगुणं तिष्ठतीत्यंगीकाराद्व्याप्तेः ॥

गुणो द्रव्यमित्युक्ते व्याघातस्तदर्थं गुणास्येत्युक्तं तथापि तत्संबंधित्वं नित्यव्याप्तिस्तदर्थमाश्रयग्रहणं श्लोकेन दूषणं संगृह्णाति अव्याप्तेरिति गुणाश्र-
यो द्रव्यमिति पत्तन्नैव न भवत्येव तत्लक्षणं कुतोऽव्याप्तेरतिव्याप्तेश्चेति योजना नस्य व क्रमेणोत्तरार्द्धेन विवृणोति आद्य इति आद्यक्षणे गुणाभावं दर्श-
यन्नव्याप्तिमेव विवृणोति उत्पन्नमात्रमिति कार्य्यस्य गुणस्य समवायिकारणं वक्तव्यं तच्चाश्रयभूतं द्रव्यमेवेति तस्य गुणात्प्राक्क्षणवर्त्तित्वं
वक्तव्यं नियत प्राक्क्षणसत्ताः कारणत्वादित्यवयविनुगुणावत्त्वलक्षणं नास्तीत्यव्याप्तिः ननु केनैवमुक्तं यावद्वस्य तल्लक्षणो न भवितव्यमिति यथा हि का-
दाचित्कमपि पतनं भावत्वं गुरुद्रव्यलक्षणं एवमत्रापि किं न स्यादिति उच्यते लक्षणं हि केवलव्यतिरेक्यनुमानविशेषः तथा चाद्यक्षणावच्छेद्यपि द्रव्यं
पक्षः एव न च तत्र हेतुवृत्तिरिति त्य सिद्धिः स्यात् पतनस्यापि ॥

लक्षणत्वमसंप्रतिपन्नं किंचोत्तरक्षणे गुणो नष्टोऽन्यत्वमात्रस्यानुगतत्वगुणस्यापि तद्विनाशसंभवात्तत्रसर्वथैवाव्यापकमिदं स्यात् अपिचगुणस्यक आश्रयइतिपृष्टे किमुत्तरंदेयं यदिद्रव्यमिति नतदापरस्पराश्रयं अथान्यत्किंचित्सकलगुणाश्रयानुगतमनतिप्रसक्तं चाभिधीयेत नहि तदेव भवत्तु लक्षणमितीतरहार्थं द्रव्यविलक्षणगुणज्ञानेचलक्षणसिद्धिः तज्ज्ञानेच चक्रकपरस्पराश्रयात्माश्रयाणीति तदेतच्छ्लोकस्यापि तादर्शितं गुणादावपीत्येतद्धि हरवत्तन्तिव्याप्तिं दर्शयति गुणादिष्वपीति स्यादेतत् अगुणागुणाइतिलक्षणत्वेतु संख्यावत्वप्रतीतिभ्रांतेति तत्राह नचतत्रेति बाधाभावात्तद्भ्रमत्वमितरथाऽतिसंगात् अत्रलीलावतीकारः प्राह गुणाश्रयोद्रव्यं अत्रय

गुणादिष्वपिचतुर्विंशतिर्गुणा इत्यादिसंख्यागुणान्वयवीक्षणादतिव्याप्तेः नचतत्रसंख्यावत्त्वप्रतीतिर्विभ्रमः नवैवद्रव्याणीत्यादाविव बाधकादर्शनात् अथमतमास्तामिदंमृजुपथप्रस्थितानां दूषणाभिधानमस्माकं पुनरभिनववक्रनयवर्त्मानुसारिणां नैषा विभीषा समुन्मिषति यतो गुणवत्त्वात्यन्ताभावानधिकरणत्वमेव गुणाधिकरणतामाचक्ष्महे तेनतनाव्याप्तिर्नाप्यतिव्याप्तिर्गुणादीनां पञ्चानामपि निर्गुणत्वनिष्क्रियत्वे इति प्रशस्तपादभाष्यदर्शनादिति मैवं तत्रैवात्यन्ताभावेऽतिव्याप्तेः सोपि हि गुणवत्त्वात्यन्ताभावस्तस्यानधिकरणं स्वस्य स्वस्मिन्नवृत्तेः अथानेकत्वादत्यन्ताभावानामत्यन्ताभावेप्यत्यन्ताभावोऽस्तिमैवं विकल्पासहत्वात् ॥

धपिसंबंधो न सद्यतनः योग्यतानुस्वरूपमननुगतंच द्रव्यत्वंतुक्लिष्टं नथाप्यत्यंतायोगव्यवच्छेदेन क्षणार्थइतितदेतद्हृदि निधायशंकते अथमतमिति अभिनवंवक्रंचयत्नयवर्त्मन्यायमार्गस्तदनुसारिणामित्यर्थः वक्रमार्गमेवदर्शयति यतइत्यादिना नथाप्यतिव्याप्तिरित्याह मैवंतत्रैवेति किंगुणवत्त्वात्यंताभावोऽनेकः किंवैकः आद्ये तदाह सोपिहीति योपिहिगुणवत्त्वात्यन्ताभावः सोपिहि स्वस्यानधिकरणमेव स्वस्मिन्स्वस्यावृत्तेरिति नचप्रमेयत्वादिवत्केवलान्वयित्वं येनाधुनिकनीत्यापिस्ववृत्तितास्यात् केवलान्वयित्वेचभग्नंद्रव्यलक्षणमितिभावः अनेकत्वपक्षमुद्भाव्यदूषयति अथानेकत्वादित्यादिना ॥

अनन्ताभावप्रतियोगिभेदादभावभेदो वक्तव्यः न ह्यभावस्य स्वतो भेदोऽस्ति निर्विशेषत्वात् तथा च गुणावत्त्वभेदो वक्तव्य इति स्थिते विकल्पयति किमेकैकेत्यादिना रूपादिगुणानां मध्ये यदेकैकगुणवत्त्वं तत्प्रतियोगिको न्यनाभावस्तदनधिकरणत्वं वा उत चतुर्विंशतिगुणीयानि चतुर्विंशतिगुणावत्त्वानि तेषां योऽन्यनाभावस्तदनधिकरणत्वं वेत्यर्थः प्रथमेऽपि किं नियतस्य कस्य चित् अन्यतमाभावानधिकरणत्वमनियतस्य वा नियमपक्षे दूषणमाह रूपादीनामिति। रूपान्यनाभावानधिकरणत्वस्य लक्षणत्वे वाय्वादिष्वसिद्धिरेवमितरत्रापीति भावः सर्वगुणावत्त्वान्यनाभावानधिकरणत्वपक्षं दूषयति सर्वेति सर्वगुणावत्त्वान्यनाभावानधिकरणत्वं तत्प्रतियोगिसर्वगुणाधिकरणत्वे सति

किमेकैकगुणावत्त्वान्यनाभावानधिकरणत्वं द्रव्यलक्षणमुत सर्वगुणावत्त्वान्यनाभावानधिकरणत्वं नोभयमुभयत्राप्यव्याप्तेः तथा हि रूपादीनां गुणानामनेकत्वात्तदेकगुणाधिकरणस्यापि तदितरगुणान्यभावाधिकरणत्वादेव तदन्यनाभावानधिकरणत्वाभावात् सर्वगुणावत्त्वान्यनाभावानधिकरणत्वस्य सर्वस्मिन्नसम्भवात् सति हि सर्वगुणाधिकरणत्वे सर्वगुणान्यनाभावानधिकरणता स्यात् न च सर्वगुणाधिकरणत्वमेकैकस्यास्तीति कथं नाव्याप्तिः अथ चतुर्विंशतिगुणानामन्यतमगुणावत्त्वान्यनाभावानधिकरणताविवक्षितातदपि न अन्यतमशब्देन रूपादेरेवैकैकस्य सर्वस्य वा विवक्षा। (तयोः पूर्वाभिहिताव्याप्तिदोषस्य तदवस्थत्वा

त्) न चैतदस्ति न हि नरस्ति किञ्चिद्द्रव्यं यच्चतुर्विंशतिगुणाधिकरणमिति असंभव एव लक्षणस्येत्यर्थः अनियतपक्षं शंकते अथेति किमन्यतमशब्देन प्रत्येकं समुदितं वा विहायान्यस्य कस्य चिन्निर्देशः उत नैतयोरेवान्यतरस्योभयस्य वानाद्यस्तथाविधस्य तस्यानियमेनादर्शनात् उत्तरत्र तूक्तमेव दूषणमित्याह अन्यतमशब्देनेति अथ भावत्वे सति गुणावत्त्वान्यनाभावानधिकरणत्वमित्युच्येत तत्र रूपादावतिव्याप्तेर्वैयर्थ्यमायात्वात् ननु संयोगान्यतमाभावानधिकरणत्वस्य लक्षणत्वे को दोषः तदन्यताभावस्यैकत्वेन तस्मिन्नेवातिव्याप्तिरनेकत्वे पुनः किमेकैकसंयोगान्यतमाभावः सर्वसंयोगान्यतमाभावोऽन्यतमसंयोगान्यतमाभावो वेति विकल्पैरुन्मूलनात् एतेन विभागपरि

किंचैवं विवक्षायामपि न पूर्वोक्ताऽतिव्याप्त्युपशम इत्याह किंचेति यत्तु प्रशस्तपादवचनान्निर्गुणत्वं गुणानामुक्तं तत्राह नच प्रशस्तेति अत्र किरणाव लीकारः सूत्रं सहसमानजातीयगुणाभावस्तावदनवस्थाप्रसंगाद्रूपादौ रसादिवैगानभावे मूर्त्तत्वप्रसंगात् बुद्ध्यादीनां च प्रतिसंधानात्मगुणत्वेन व्यवस्थितेर प्रसक्तिरेव शब्दस्य नभो नियमात् गुणेऽगुणायोगे च समवायिकारणत्वप्रसक्तौ द्रव्यत्वापत्तेर्गुणत्वव्याघातः एवं रूपावयवि रूपेष्वेव वर्त्तत इति घटादेर्नीरूपत्वप्रसंग इत्यादि एवं निर्गुणत्वे निष्क्रियत्वे च रसादयो गच्छन्ति चतुर्विंशतिर्गुणा महान्शब्द इत्यादयो व्यवहारास्तदे कार्थसमवायादिना साधर्म्येण गौणाः समर्थनीया इति नदेतदाशंकां दूषयति नच मन्तव्यमिति अनवस्थाप्रहरणाय इत्युक्तं बाधकं तदन्यत्रा मप्युपलक्षणं नच मंतव्यमित्युक्तं तत्र हेतुमाह रूपादिष्विति अयमर्थः सत्यं सजातीयगुणांगीकारेऽनवस्था विजातीयसंख्यापृथक्त्व

किं त्वासित्वपि वक्तलक्षणो गुणादिष्वपि संख्यापृथक्त्वगुणयोः प्रतीतेः कथं नातिव्याप्तिः नच प्रशस्तपादभाष्यमनुवच नं येन निर्गुणतागुणादीनां प्रामाणिकी स्यात् नच मन्तव्यं गुणेष्वपि गुणाभ्युपगमेऽनवस्थाप्रसक्तेः संख्यापृथक्त्वप्रतीति भ्रान्तिरिति रूपादिषु तदभ्युपगमेऽपि संख्यापृथक्त्वयोस्संख्यापृथक्त्वान्तरानभ्युपगमेनैवानवस्थापरिहारात् यथा भव तां सम्बन्धे सम्बन्धान्तरमंगीकुर्वतामपि समवायेन तदनभ्युपगमादेवानवस्थापरिहारः द्रव्यगतसंख्यापृथक्त्वाभ्यामेव त देकार्थसमवायलक्षणप्रत्यासत्त्या गुणादिष्वपि तद्व्यवहारोपपत्तौ व्यर्थान्तरकल्पनेति चेन्नैवं विपर्ययस्यापि सुवचत्वात् ॥

योराश्रयणे किं बाधकं नच समवायिकारणत्वप्रसक्तिर्बाधिका इष्टत्वात्संख्यादिसमवायिकारणत्वस्य अत एव द्रव्यत्वप्रसक्तिरपि नाति ष्टाय कथं च द्रव्यत्वप्रसक्तिः पदिष्टे न द्रव्यलक्षणं तस्यास्त्वाद्द्रव्यत्वप्रसंगः तदेव त्वद्यापि न निर्णीतं नच रूपाद्यारब्धत्वे संख्यायां रूपादिप्र तित्वात्तद्द्रव्ये संख्या स्यादिति वचनीयं गुणेऽपि पर्य्यनुयोगस्य तुल्यत्वात् प्रत्ययसाम्याच्च यथा तन्तुगतशौक्ल्यव्यतिरेकेणापटेऽपि शौक्ल्यमंगीक्रि यते प्रतीतिबलादेव तत्रापि संख्याद्वयं किं न स्यात् नच संख्यायां संख्यान्तरस्वीकारादनवस्थाप्रसक्ति स्तत्र पृथक्त्वस्वीकारात् पृथक्त्वे च संख्यास्वीकारादिति भवदुदरीकृताचेयरीतिरित्याह यथाभवतामिति अन्यथोपपत्तिं शंकते द्रव्यगतेति द्रव्यगतसंख्यादिप्रतीतेरयीयं समा

गुणगतसंख्यया द्रव्ये संख्याप्रतीतिरशक्योपपादना गुणानामनेकत्वेऽपि तदाश्रयद्रव्यस्यैकत्वादन्यथाश्रयद्रव्यस्यानेकत्वप्रसंगा
दितिशंकते अथगुणानामिति एवानुपपत्तिरत्रापितुल्यायदिहिद्रव्यसंख्ययैवगुणेषुसंख्यास्यात्तदाद्रव्याणांनवसंख्यावत्त्वादति
रिक्तगुणानभवेयुरितिपरिहरति नहीति नन्ववान्तरद्रव्येषु चतुर्विंशतिसंख्यासद्भावात्तन्निमित्तो व्यवहार इति शंकते अथावान्तरे।
ति नहिचतुर्विंशतित्वनियमः किंतु नः अधिकसंख्यानामपिद्रव्येषु विद्यमानत्वात् नच चतुर्विंशतित्वजातिनिमित्तं चतुर्विंशतित्वंजाने।

अथगुणानामनेकत्वेऽपिद्रव्यस्यैकत्वदर्शनात्कथंगुणसंख्ययाद्रव्येतद्व्यवहारः नहीहापिमाध्यस्थ्यमवलंब्यकि
मितिनदीयतेदृष्टिः नवैवद्रव्याणिचतुर्विंशतिर्गुणाइतिसंख्यावैषम्यात् अथावान्तरद्रव्यसंख्यासंभवनिमित्तोऽयंव्यव
हारः नहिपरार्द्धसंख्याव्यवहारोऽपिगुणेषुस्यात् द्रव्येषुतत्संभवात् द्रव्यगतसत्तासामान्यादिभिरेवगुणकर्मणोरपिसद्व्य
वहारोपपत्तौतत्रसत्तासामान्यकल्पनावैयर्थ्यप्रसंगाच्च एतेनसमवायिकारणंद्रव्यमित्यपास्तं ज्ञानमात्रस्यतदभावात्तदव्य
गभावानधिकरणत्वस्यचात्यन्ताभावेएवव्यभिचारात् रूपादिगुणानामपिसंख्यापृथक्त्वसमवायिकारणत्वसंभवा
त् अस्तुतर्हिद्रव्यत्वजातियोगित्वंद्रव्यलक्षणं नयतः द्रव्यत्वजातियोगित्वमपिन द्रव्यलक्षणं तज्जातिव्यंजकाभावा
त्तस्मात्तस्यानिरूपणात् ५ द्रव्यत्वंजातिमभ्युपगच्छतांतज्जातिव्यंजकंकिंचिदवश्यमभ्युपेयंनचतन्निरूपणंसुशकं॥

रेवचतुर्विंशतित्वासंभवादित्यभिप्रेत्यपरिहरति नहिपरार्द्धेति अतिप्रसंगंचाह द्रव्यगतेति नन्वेवंक्रियावद्गुणवत्समवायिकार
णंद्रव्यमिति काश्यपसूत्रोक्तलक्षणेषुगुणवत्त्वलक्षणंदूषयित्वातदीयलक्षणान्तरेऽपितदेवदूषणमतिदिशति एतेनेति अतिदि
श्यमानाव्याप्तिमव्याप्तिंविशदयति ज्ञानमात्रस्येति लक्षणान्तरंशंकते अस्तुतर्हीति जातियोगित्वंगुणकर्मणोरप्यस्तीतिद्रव्यत्वग्रहणं
नियतव्यंजकप्रमाणयोरभावाद्द्रव्यत्वजातिरेवासिद्धाततस्तद्युक्तलक्षणमप्यसिद्धमितिश्लोकेनदूषयति द्रव्यत्वेति तज्जातिव्यंजकाभावादित्ये

नद्दि हृणोति द्रव्यत्वंजातिमिति॥

नचव्यंजकनियमो नास्तीति युक्तं तथा सति किन्त्वया दृष्टं किं वा श्रुतमिति पृष्टे न जानामि दृष्टं श्रुतं वेति ज्ञानं तावदिति प्रत्यक्षत्वादौ सन्दिग्धं नचव्यंज
कास्फुरणाव्यतिरेकेण संदेहकारणं तत्रास्ति ज्ञानस्याश्रयभूतस्य मानसप्रत्यक्षेणानुभूयमानत्वात् तस्माज्जातिमिच्छतानियतव्यंजकं वक्त
व्यमेव तत्र किं गुणावत्त्वं तद्व्यंजकं समवायिकारणत्वं वा स्वातन्त्र्येण प्रतीतियोग्यत्वं वा नाद्य इत्याह गुणविशिष्टस्येति तद्व्यंजकतयेति द्रव्य
त्वजातिव्यंजकतयेत्यर्थः यस्य हि विशेषणाद्यनतिरिक्तं विशिष्टं तस्यायं दोषः यस्य त्वतिरिक्तं तस्य घटादिव्यक्तेरप्यद्रव्यतापातः तन्मात्र।
स्य विशिष्टताभावादित्यपि द्रष्टव्यं द्वितीयं दूषयति एतेनेति तत्र हि समवायविशिष्टस्य कारणस्य तद्व्यंजकत्वे समवायस्यापि तद्व्यंजकत्वाद्द्रव्यत्व
प्रसंगः संख्यादिसमवायिकारणत्वाद्गुणकर्मणोरपि तद्व्यंजकतयाद्रव्यत्वप्रसंग इत्यर्थः तृतीयं शंकते स्वातन्त्र्येणेति शब्दादेरपीति शब्दस्य वा

गुणविशिष्टस्य तद्व्यंजकत्वे विशेषणभूतस्य गुणस्यापि तद्व्यंजकतयाद्रव्यत्वापत्तेः रूपादीनामपि संख्यादिगुणवत्तया त
द्व्यंजकतयाद्रव्यत्वप्रसंगाच्च एतेन समवायिकारणस्यापि तद्व्यंजकता निरस्ता स्वातन्त्र्येण प्रतीतियोग्यत्वं व्यंजकमिति चेत् कि
मिदं स्वातन्त्र्यं किमाश्रयप्रतीतिमन्तरेण प्रतीतियोग्यत्वमुतानाश्रितत्वमेव नाद्यः शब्दादेरपि तत्सम्भवात् न द्वितीयः अवयवि
नामद्रव्यत्वापत्तेस्तेषामवयवाश्रितत्वात् तदेवं न व्यंजकं द्रव्यत्वजातेः नापि प्रमाणमस्ति द्रव्यं द्रव्यमित्यनुगतप्रत्ययः प्रमाणमि
ति चेन्न सुवर्णमुपलभ्य मृत्तिकामुपलभ्यमानस्य लौकिकस्य तदेवेदं द्रव्यमिति प्रत्ययाभावात् परीक्षकाणां चानुगतप्रत्यये विप्र
तिपत्तेः रत्नतत्त्वमिवोपदेशसहकृतप्रत्यक्षेणैव द्रव्यत्वमीक्ष्यत इत्यपि स्वशिष्यधीबंधनमेव॥ रूपरसगंधस्पर्शेत्यादि गुणानामेवात्र

यप्रतीतिनिरपेक्षप्रतीतीनां स्वातन्त्र्यसंभवेन तद्व्यंजकतयाद्रव्यत्वप्रसंग इत्यर्थः अवयविष्वव्याप्तिः तेषामप्यवयवप्रतीतिव्यतिरेकेणाप्र।
तीतेरिति केचित् अनाश्रितत्वं स्वातन्त्र्यमिति द्वितीयं दूषयति न द्वितीय इति अवयवाश्रितावयविनां स्वातन्त्र्याभावेन द्रव्यताव्यंजकत्वात्तत्र त।
ज्जात्यभावेनाद्रव्यत्वप्रसंग इत्यर्थः तन्मा नस्तानिरूपेणादित्येतद्धि दृष्टेति नापि प्रमाणमिति तत्र प्रमाणं प्रत्यक्षं शंकते द्रव्यं द्रव्यमिति अ
नुगतप्रत्ययवेदनीयं हि सामान्यं अस्ति चात्रानुगतप्रत्यय इत्यर्थः अत्र किं तदेवेदमिति बुद्ध्या जातिसिद्धिः किं वैकाकारप्रत्ययमात्रात् प्रथमे लौ।
किकानामियं बुद्धिः परीक्षकाणां वा नाद्य इत्याह नसुवर्णमिति द्वितीये प्राह परीक्षकाणामिति यत्तु श्रीवल्लभेनोक्तं जातिसमवायस्य रत्नतत्त्व

यत्तु तेनोक्तं प्रतारणो वेति चेन्न एतच्छास्त्रेऽपि प्रतारणाप्रसक्तेरिति तत्रैतत्त्वेऽपि वैयर्थ्यमाह एतत्तत्त्वस्येवेति द्वितीये दूषणमाह धर्माधर्मयोरि
ति यद्येकाकारबुद्धिमात्रा जातिसिद्धिस्तर्हि धर्माधर्मयोरप्यदृष्टमदृष्टमित्येकाकारबुद्धेरदृष्टत्वं नाम जातिः स्यात् नचैतदिष्टमनुगतजा
तिव्यंजकाभावादित्यर्थः एवं प्रत्यक्षं निरस्यानुमानमपि द्रव्यत्वजातौ निरस्यति यदपीति जातिमत्य इत्युक्ते सत्तया सिद्धसाधनत्वं तन्नि
वृत्त्यर्थं सत्तेतरेत्युक्तं तथा चाकाशत्वादेरभावाद्द्रव्यत्वजातिसिद्धिरित्यर्थः अत्र च संयोगजनकत्वं संयोगप्रागभावस्याप्यस्ति एवं विभाग
प्रागभावस्यापि विभागजनकत्वमस्तीति तद्व्यभिचारपरिहारायोभयजनकत्वादित्युक्तं हेतुद्वयं वात्र विवक्षितं दृष्टान्तस्य साध्यवैकल्यं
एवं परिहरति नचेति अत्र प्राभाकरमते दृष्टान्तस्य साध्यवैकल्यमाह तदपि मंदमिति किंच कालाकाशदिशः सत्ताद्रव्यत्वातिरिक्ता

एतत्तत्त्वस्यैव जातेः सर्वपरीक्षकासंमतत्वात् धर्माधर्मयोरदृष्टत्वजातेरप्युपगमप्रसंगाच्च अदृष्टमदृष्टमित्युभयोरप्यनु
गतप्रत्ययदृष्टेः यदपि लीलावतीकारस्तन्त्रे आकाशकालदिशः सत्तेतरजातिमत्यः संयोगविभागजनकत्वात्कर्मवत् नच क
र्मत्वमप्रसिद्धं चलतीत्यनुगतप्रत्ययवेद्यत्वादिति तदपि मंदं कर्मप्रत्यक्षवादिनां चलतीति प्रत्ययस्य संयोगविभागप्रवाह
विषयतया कर्मविषयतानंगीकारात्कर्मत्वासिद्धेः दृष्टान्तस्य साध्यविकलत्वात् आत्माशावलेयवृत्त्यवृत्तिशावलेयनिष्ठजा
तिमान् संयोगित्वाच्छावलेयवत् जलादेश्च पक्षतुल्यत्वान्न तेन व्यभिचारः तथा सत्तादिकालाकाशनिष्ठजातेरप्यामेयत्वात्पट
वत् आत्माऽनात्मवृत्तिरूपावृत्तिजातिमान् रूपान्यत्वे सति सामान्यवत्त्वाद्घटवदिति द्रव्यत्वजातिसिद्धिरिति चेन्न॥

जातिमत्यः संयोग
विभागजनकत्वात्कर्मवदित्यनुमानस्याभासत्वादाभासप्रमानयोगक्षेमत्वं विपक्षबाधकाभावाच्च शंकिताप्रयोजकमित्यपि नाः सूचितं द्र
व्यत्वजातावनुमानान्तराण्याशंकते आत्मेत्यादिना शावलेयनिष्ठजातिमानित्युक्ते सत्तया अर्थान्तरतात्तदर्थं शावलेयवृत्त्यवृत्तीत्युक्तं तस्याश्च शा
वलेयवृत्तित्वे सति गुणकर्मणोरपि वर्तमानत्वाद्व्यवच्छेदः तावन्मात्रोक्तावात्मत्वेन सिद्धसाधनेनात तदर्थं शावलेयनिष्ठेत्युक्तं तथापि शाव
लेयात्मवृत्तिद्वित्वादिधर्मैरर्थान्तरतात्तदर्थं जातिग्रहणं दृष्टान्ते गोत्वेन साध्यप्रसिद्धिः पक्षे च न व्याघातादुभयनिष्ठद्रव्यत्वसिद्धिः ननु
संयोगित्वमस्ति जलादौ नास्ति चैवंविधा जातिरिति तत्राह जलादेरिति द्वितीये तु जातेरप्येत्युक्ते घटत्वान्यत्वे॥ ९ ६ ९ ॥

नार्थान्तरत्वानदर्थं दिक्कालाकाशनिष्ठेत्युक्तं नावत्युक्ते न त्रिनिष्ठगुणाद्यन्यत्वेनार्थान्तरत्वानदर्थं जातिग्रहणं अत्र चानुमानत्रयसूच
नायनत्थेति ग्रहणाद्वितरथावैयर्थ्यादिति यासादिगादिनिष्ठा जातिः तद्द्रव्यत्वमिति द्रव्यत्वजातिसिद्धिः तृतीये तु जातिमानित्युक्ते सत्तया
र्थान्तरत्वानदर्थं रूपादिवृत्तीत्युक्तं नावति चात्मत्वेनार्थान्तरत्वानदर्थं अनात्मवृत्तीत्युक्ते रूपान्यत्वेनार्थान्तरतापरिहाराय जातिग्रहणं रूपैनै
कान्तिकतापरिहाराय रूपान्यत्वे सतीत्युक्ते रूपत्वानधिकरणत्वे सतीत्यर्थः सामान्यादिषु व्यभिचारवारणाय सामान्यवत्त्वग्रहणं तत्राद्यहे
तोर्व्याप्यत्वासिद्धिमाह मैवं संयोगीति द्वितीयानुमानं दूषयति मेयत्वेति न चाजातिरूपस्यापि पक्षत्वात्राश्रयासिद्धिः दृष्टान्ते साध्यवैकल्या
त् किं च दिक्कालाकाशनिष्ठजात्यन्यत्वं किं समानान्यत्वेन किं वा द्रव्यत्वान्यत्वेनोभयथाप्यप्रसिद्धविशेषणः पक्षः तत्र प्रथमे व्याघातात् चरमेऽसिद्धेरित्या

मैवं संयोगित्वहेतोर्वेगवत्त्वोपाधिहतत्वात् मेयत्वहेतोश्च सत्तामनङ्गीकुर्वतामाश्रयासिद्धेः दिक्कालाकाशनिष्ठजातित्वे।—
न तस्याः स्वविवक्षितत्वे चाप्रसिद्धविशेषणत्वाच्च प्रमेयत्वगुणवत्त्वज्ञानाधारत्वोपाधिभिरेव यथायोग्यं सद्द्रव्यमात्मे
ति ——— व्यवहारोपपत्तौ न तत्सामान्यस्वीकारवैयर्थ्यं न सामान्यवत्त्वहेतोरप्यसिद्धेः॥ २१॥ इह दिक्कालेति सत्ता गुणत्वजातिदिक्का-

लाकाशनिष्ठजातेरन्यामेयत्वादित्यपि संभवदाभाससमानतां चेति द्रष्टव्यं तृतीयहेतोः स्वरूपासिद्धिमाह प्रमेयत्वेति अयमभिसंधिः
निःसभिः खलु जातिभिरात्मनः सामान्यवत्त्वमभिमतं तत्तावच्च न किंचित्प्रमाणमस्ति अनुवृत्तप्रत्ययस्य च पुरस्तादेव निरस्तत्वादनुमानस्य चैतादृश
त्वात् असत्त्वानुवृत्तव्यवहारस्तथापि प्रमेयत्वादितत्तदुपाधिभिरेवायं व्यवहारः शक्यसमर्थनः न च प्रमेयत्वस्य सत्तात्वे चाक्षुषत्वं तस्या
त् प्रमाविषयत्वस्याचाक्षुषत्वादिति वचनीयं सामान्यत्वेऽप्यचाक्षुषत्वस्य तदवस्थत्वात् स्वरूपसद्विशेषो हि सामान्यं नाम न च प्रमेयत्वातिरिक्तं।
स्वरूपसत्त्वमस्ति रूपैकार्थसमवायाच्चाक्षुषत्वमिति चेत्तत्रापि तुल्यं अभाववत्तु प्रमेयत्वादेः शपथसाध्यमिति यानि च महाविद्यानुमानानि द्रव्य
त्वजातौ प्रवर्त्तितान्यपि परमाणुनिराकरणवादे निवेदनीयदूषणदूषितानीति नोदाहृतानि श्राचार्येण तदेवं व्यञ्जकप्रमाणयोरसिद्धा द्रव्यत्व
जातेरसिद्धौ तत्पुरस्कारेण यानि शिवादित्यमिश्रेण लक्षणानि लक्षणा॥ ० ॥ ः

मालायामुक्तानि तान्यपि निरस्तानीत्याह तदेवमिति अत्र चाकाशवृत्तीत्याद्येकं लक्षणं क्रियासमानाधिकरणेत्याद्यपरं संयोगवद्वृ-
त्तीत्यादिलक्षणांतरं तत्र सत्ताव्याप्यजातियोगिद्रव्यमित्युक्ते गुणादावतिव्याप्तिः गुणत्वकर्मत्वादीनामपि सत्ताव्याप्यत्वात्तदर्थमाकाशवृ-
त्तीत्युक्तं तावत्युक्तेपि गुणादावतिव्याप्तिः तेषामप्याकाशवृत्तिसत्ताजातियोगित्वात्तदर्थं सत्ताव्याप्येत्युक्तं आकाशगुणान्यान्यत्वभि-
त्याद्याकाशवृत्तिसत्ताव्याप्यान्योन्याभावादिरूपधर्मयोगिगुणादावतिव्याप्तिपरिहाराय जातिग्रहणं द्वितीये सत्तावांतरजातियोगीत्यु-
क्ते गुणादावतिव्याप्तिः तदर्थं क्रियासमानाधिकरणेत्युक्तं तावति च सत्तायुक्तगुणादावतिव्याप्तिस्स्यात् तदर्थं सत्तावांतरेत्युक्तं अत्र
च सत्तासाक्षाद्व्याप्यत्वं सत्तावांतरत्वं अनेन घटत्वादिकमादायाव्याप्तिभ्रमः तृतीयेपि गुणादावतिव्याप्तिपरिहाराय संयोगवद्वृत्तीति विशेष

तदेवं जातौ व्यंजकप्रमाणायोरसंभवेनाकाशवृत्तिसत्ताव्याप्यजातियोगि क्रियासमानाधिकरणसत्तावांतर-
जातियोगि संयोगवद्वृत्तिसत्तावांतरजातियोगिद्रव्यमित्येवमादीनि जातिपुरस्कारप्रवृत्तानि महाविद्यालक्षणानि
निरस्तानि वेदितव्यानि ॥२॥ णां सत्तामादाय गुणादावतिव्याप्तिपरिहाराय सत्तावांतरग्रहणं आदिग्रहणेन जातिमत्त्विष्ठा-
त्यंताभावप्रतियोग्याकाशवृत्तिजातियोगित्वं कार्य्यसमानाधिकरणसत्तावांतरजात्यधिकरणं वा रूपसमानाधिकरणसत्तावांतरजाति-
योगि वा स्पर्शसमानाधिकरणसत्तावांतरजात्यधिकरणं वा रससमानाधिकरणसत्तावांतरजात्यधिकरणं वेत्यादीनि लक्षणानि संगृहीतानि म-
हाविद्यालक्षणानीति महाविद्यारीत्या प्रवृत्तानीत्यर्थः द्रव्यलक्षणखंडनेन च तद्विशेषपृथिव्यादिलक्षणान्यपि खंडितानि वेदितव्यानि सामा-
न्याभावे तद्विशेषस्य सुतरामसंभवात्तत्तल्लक्षणानामपि जातिपुरस्कारेण प्रवृत्तत्वाच्च गंधसमानाधिकरणद्रव्यत्वावांतरजातिमती पृथिवीत्या-
दिरूपाणि हितानि तत्र द्रव्यत्व जातिदूषणेन तदवांतरत्वमपि दूषितमेव प्रदर्शयिष्यते च जातिमात्रस्य खंडनं तेनोपि तद्गर्भाणि लक्षणानि दु-
र्भणानि वादीन्द्रस्तु एतानि लक्षणानि दूषयित्वा स्वमतेन कार्य्याश्रयो द्रव्यं गुणाश्रयो द्रव्यमित्यादिलक्षणान्युदाजहार तानि च तन्नैव निरस्तमायासी

नन्वेतावतापि न नानालक्षणवत्त्वेन भेदसिद्धिः गुणलक्षणवत्त्वभेदसिद्धेः गुणलक्षणानामसिद्धत्वात्तदर्थं तान्यपि खंडयति तथा गुणल-
क्षणमपीति तत्र द्रव्याश्रयी अगुणवान्संयोगविभागेष्वकारणंनिरपेक्ष इति गुणलक्षणपरं सूत्रं तदर्थं तथा च कंदलीकाराद्यभिमतलक्षणं ना-
वद्दूषयति सामान्यवानित्यादिना अन्योन्याश्रयतायामेव हेतुः गुणस्येति यदि हि गुणो ज्ञातस्स्यात्तदा गुणरहितत्वज्ञानं स्यात् स चैतल्लक्षणा-
व्यतिरेकेण नाद्यापि सिद्धः स तल्लक्षणे न सिद्ध इत्यन्योन्याश्रय इत्यर्थः श्लोकं विवृणोति सामान्येत्यादिना सामान्यादिव्यावृत्त्यर्थं सामान्यवानिति।
विशेषणं द्रव्यव्यवच्छेदाय अगुण इत्युक्तं कर्मव्यवच्छेदाय संयोगविभागेत्यादि विशेषणं संयोगविभागयोर्हि निरपेक्षकारणं कर्म न तु भवति यत्स-
गुण इत्यर्थः वादीन्द्रस्तु पृथक्त्वानाश्रयः संख्यानाश्रयः संयोगकारणत्वे सति विभागनिरपेक्षकारणत्वरहितो गुण इत्यादिरन्यवादीन् न

तथा गुणलक्षणमपि न युक्तं लक्षयामः सामान्यवानगुण इत्याद्यप्यस्य न लक्षणं अन्योन्याश्रयतापत्तेर्गुणस्याद्याप्य-
सिद्धितः ३ सामान्यवानगुणः संयोगविभागयोर्निरपेक्षो न कारणं गुण इति कंदलीकारस्य गुणलक्षणं तावदयुक्तं सिद्धे गुणे
अगुण इति लक्षणसिद्धिस्तत्सिद्धौ च गुणसिद्धिरितीतरेतराश्रयत्वदूषणग्रस्तत्वात् यत्तु लीलावतीकारेणोक्तं सामा-
न्यवानचलनात्मकः समवायिकारणताहीनो गुण इत्यपि न रूपादीनामपि समवायिकारणत्वस्य दर्शितन्यायेन संभवा-
त्तद्धीनतालक्षणस्य लक्षणांशस्यासंभावितत्वात्॥ (( तत्संख्यापृथक्त्वाद्याश्रयत्वस्य पूर्वमेवोपवर्णनात् अन्योन्याश्रयतापरिहारा-

यश्रीवल्लभोपलक्षणमनुवदति यत्त्विति उक्तं च वैधर्म्यपरिच्छेदे इति शेषः अत्रापि सामान्यादिव्यावृत्त्यै सामान्यवानित्युक्तं द्रव्यव्यवच्छेदाय स-
मवायिकारणताहीन इत्युक्तं कर्मव्यवच्छेदायाचलनात्मक इत्युक्तं तत्र कार्यं यत्र समवैति तत्समवायिकारणमिति परेषां समवायिका-
रणलक्षणं तच्च पूर्वोक्तन्यायेन पृथक्त्वादिप्रति गुणादेरप्यस्तीत्यसंभव इत्यर्थः एतेन केवलनिमित्तकारणो वर्त्तमानापरजातीयत्वे वा स-
मवाय्यसमवायिकारणतारहितो वर्त्तमानापरजातीयत्वं वेति मानमनोहरकारोक्तलक्षणमपि परिभूतं मन्तव्यं उक्तन्यायेन सर्वगुणाना-
मपि पृथक्त्वादिसमवायिकारणतया केवलनिमित्तकारणत्वसमवायिकारणत्वरहितत्वयोरभावादिति॥ ॥ १०७ ॥ ॥

किरणावलीयं लक्षणं दूषयति सामान्यवानस्पर्शरहित इत्यादिना कर्मातिरिक्त इत्युक्ते द्रव्येऽतिव्याप्तिस्तदर्थं द्रव्याश्रय इत्युक्तं तथापि कार्य्ये द्रव्याः व्या
वृत्तिस्तदर्थं स्पर्शरहित इत्युक्तं यद्यपि गुणाद्भेदेन कर्मज्ञानं तस्मात्कर्मातिरिक्तता गुणस्य ज्ञाय्येत न चैतदस्ति गुणानिर्णये तद्व्यतिरेकस्यापि कर्मणो ज्ञातुमश
क्यत्वादेतल्लक्षणे न च गुणनिष्ठेत्यनतो निरिक्तं कर्मज्ञात्वा तदतिरिक्तत्वविशेषणाज्ज्ञानं वाच्छं तस्यान्यकायतिरित्यभिसंधिराह गुणात्कर्मण इति
यद्यपि गुणाद्ज्ञानभेदादपि कर्मणः सकाशादतिरिक्तत्वं सिद्धवद्व्यपदिश्येन तदारूपातिरिक्तो रसातिरिक्त इत्यपि किमिति न विशेषणं स्यात्तेन ल
क्षणे समानं ह्युभयोरपि गुणाद्ज्ञानभेदत्वं व्यतिरेकानंगीकारस्त्वप्रतिवादिन इत्याह अन्यथेति उक्तस्यायमर्थो गुणपदार्थपूर्वपक्षोपसंहारस
ये किरणावलीकारेणोक्त्याह तथा चेति यस्मात्त्व कर्मणो भेदकमस्ति तस्माद्भूषणो वरः अत्र कथं कर्मापि गुणस्तल्लक्षणायोगादिति हि तन्मतमि

सामान्यवानस्पर्शरहितो द्रव्याश्रयः कर्मातिरिक्तो गुण इत्यपि न गुणात्कर्मणो भेदासिद्धौ कर्मव्यावृत्तेरयुक्तत्वात् अन्य-
थारूपातिरिक्तो रसातिरिक्त इत्यपि विशेषणोपादानप्रसंगात् तथा च गुणपदार्थे किरणावलीकारस्तस्माद् दूरो भूषणः क-
र्मापि गुणस्तल्लक्षणायोगादिति ननु गुणत्वजातियोगी गुणः न च व्यंजकाभावः सामान्यवत्वे सति संयोगविभागका-
र्य्यद्वयाजनकत्वस्यैव गुणत्वव्यंजकत्वात् नापि गुणत्वजातौ प्रमाणाभावः संयोगः संयोगत्वातिरिक्तावांतरजातिमान्
जातिमत्वात्कर्मवदिति तत्सिद्धिरिति चेदत्र ब्रूमः॥

(१) त्यर्थः तस्माद्वादिनः सकाशादित्तिवार्थः एतेन कर्मान्यत्वे सति सामान्यैकाश्रयो गु
ण इति सर्वदेवीयमपि लक्षणं प्रतिक्षिप्तं पृथक्त्वाद्याश्रयतया सामान्यैकाश्रयत्वस्यासिद्धेरिति ननु गुणत्वजातिरेव नास्ति तद्व्यंजकप्रमाणयो
रभावादिति तत्राह न च व्यंजकेति द्रव्यकर्मणोर्व्यवच्छेदाय संयोगविभागकार्य्यद्वयाजनकत्वमित्युक्तं द्रव्यं हि संयोगविभागयोः समवायिकारणं
भवति कर्मत्वसमवायिकारणं गुणस्तु न तथा यद्यपि संयोगविभागयोरस्ति तज्जनकत्वं तथापि संयोगजनकत्वे सति विभागजनकत्वरूपोभयज
नकत्वं न संयोगस्यास्ति संयोगस्य संयोगं प्रत्येवासमवायिकारणत्वात् एवं विभागस्यापि विभागं प्रत्येव अजनकत्वं च समवाय्यसमवायिकारण
त्वराहित्यं तेनेश्वरेच्छादिसंग्रह इति नाव्याप्त्यतिव्याप्ती नाभावः संयोग इति संयोगो जातिमानित्युक्ते सत्तयार्थान्तरता तदर्थमवांतरजातिमानिति कृतं तथा
च संयोगत्वेनार्थान्तरता तदर्थं संयोगत्वातिरिक्तेत्युक्तं पासाव
वांतरजातिसद्गुणत्वमिति तत्सिद्धिरिति भावः॥

गुणत्वजातेस्तद्व्यंजकस्य चान्योन्याश्रयदुष्टत्वाद्गुणत्वजातियोगोपि गुणलक्षणं न भवेदिति ग्रन्थोकेन दूषयति गुणत्वजातियोगोपीति ॥
अन्योन्याश्रयं विशदयति सिद्धे हीति येन गुणत्वजातिर्निर्द्धार्यते तेन सत्तापि जातिर्निर्द्धार्यते एवेति तद्गर्भव्यंजकस्य तद्व्यंग्यजातेश्चासिद्धिरित्य
र्थः व्यंजकस्याव्यापकतां चाह अनित्यवियोगेति संयोगविभागद्वयाजनकत्वं तत्रासंभवीत्यर्थः सत्तासामान्यमात्रं विवक्षितान्वान्योन्याश्रय
परिहारमाशंक्य वार्यं ग्रन्थः ननु तदुभयासमवायिकारणत्वसमवायिकारणत्वयोरभावो लक्षणं विवक्षितं अस्ति चाहष्टस्यापि तदभावः निमित्तकार
णत्वात्तस्येति तत्राह न च तयोरिति समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणं प्रत्यासत्तिश्च द्विविधा लघ्वी महती च तत्राद्ये

गुणत्वजातियोगोपि न भवेद्गुणलक्षणं अन्योन्याश्रयदुष्टत्वाज्जातेस्तद्व्यंजकस्य च ७ सिद्धे हि सत्तासामान्ये गुणत्वसामा-
न्ये वा तद्विशिष्टव्यंजकसिद्धिस्तत्सिद्धौ च सामान्यसिद्धिरिति परस्पराश्रयत्वात् अनित्यवियोगेष्टसंयोगो हेशेनानुष्ठानसमु
पजनितधर्मे संयोगविभागहेतौ लक्षणस्यासंभवित्वात् तथाभिचारादिजनितेदुरिते शत्रोरिष्टवियोगानिष्टसंयोगहे
तौ च लक्षणस्यासंभवित्वात् न च तयोर्निमित्तत्वेनैव जनकत्वं न तु समवायिकारणतया समवायिकारणतया वेति वाच्य
म् आत्मनिष्ठसंयोगविभागहेतोरदृष्टस्य कार्य्यैकार्थसमवायिनोऽसमवायिकारणलक्षणोपपत्तेः समवायित्वासमवायित्वका
रणभेदस्याद्याप्यसिद्धेश्च नापि तत्र प्रमाणं जातिमत्त्वहेतोरसिद्धेः ॥ तु नकार्य्येण सह कार्थे कारणे स्वस्य यः समवायः सा लघ्वी प्रत्या

सत्तिः यथा तन्तुसंयोगस्य तत्कार्य्यस्य पटस्य चैकतन्तुसमवायः तत्कारणेन सहैकार्थे समवायो महती यथा पटगतशौक्ल्यासमवायिकारणस्य तन्तु
शौक्ल्यस्य तत्कारणेन पटेन सहैकत्र तन्तौ समवायः तदत्र संयोगं प्रति विभागं प्रति च समवायिकारणे आत्मनि संयोगेन सह वर्त्तमानस्यादृष्टस्या
स्ति लघ्वी प्रत्यासत्तिरित्यसमवायिकारणं भवत्येवादृष्टमित्यर्थः किंच यस्य द्रव्यगुणादिभेदमात्रमेवाद्याप्यसिद्धं तस्य समवाय्यसमवायि-
कारणविभागोपि न सिद्ध इत्याह समवायित्वेति एवं व्यंजकं दूषयित्वानुमानं दूषयति नापीति वक्ष्यमाणसामान्यमात्रखंडनेन सत्ताकर्मत्वजा

किरणावलीभास्करः॥

२
चि॰प्र॰
टी॰न॰
१६

एतेन रूपादयो रूपत्वाद्यतिरिक्तावान्तरजातिमन्तः सामान्यवत्त्वात्कर्मवदिति लीलावतीकारानुमानमपि निरस्तं गुणः कर्मव्यावृत्तजाति
मत्कार्य्यत्वाद्गुरुत्ववदिति सर्वदेवस्तदपि द्रव्यत्वजात्यनङ्गीकारेण परिहृतं संयोगित्वाद्युपाधिहृतत्वाच्च प्रध्वंसेनानैकान्तं च रूपत्वादिनार्थान्ति
रत्वाच्चेति यानि शिवादित्यमिश्रेण गुणत्वजातिगर्भाणि गुणलक्षणानि विवक्षितानि तान्यप्येकप्रहारेण परिहरति गुणत्वजातेरित्या
दिना जातिमान्गुण इत्युक्ते द्रव्येति व्याप्तिस्तदर्थं संयोगासमानाधिकरणेत्युक्तं एवं सति कर्मण्यतिव्याप्तिस्तदर्थं संयोगासमवायिकारणावृत्ती
त्युक्तं एवं च सति संयोगेऽव्याप्तिस्तस्य संयोगासमवायिकारणत्वेन तद्वृत्तिजातिमत्त्वस्यासंभवात् तत उक्तं संयोगाजन्येति संयोगाज-
न्यो यः संयोगस्तं प्रत्यसमवायिकारणं यत्तद्वृत्तिजातिमानित्यर्थः एतच्च संयोगस्याप्यस्त्येव तस्य संयोगजन्यसंयोगासमवायिकारणत्वे-

कर्मत्वादेरसिद्धौ दृष्टान्तस्य साध्यविकलत्वात् गुणत्वजातेरसिद्धौ संयोगाजन्यसंयोगासमवायिकारणावृत्तिसंयोगासमा
नाधिकरणजातिमान्विभागाजन्यविभागासमवायिकारणावृत्तिविभागासमानाधिकरणजातिमान्गुण इत्येवमादीनि जा
तिपुरस्कारप्रवृत्तानि गुणलक्षणानि निरस्तानि॥

१ पि संयोगाजन्यसंयोगं प्रत्यसमवायिकारणत्वाभावात्संयोगाजन्यसंयोगास
मवायिकारणावृत्तिजातिमत्त्वसम्भवाद्नोनाव्याप्तिरिति भावः द्वितीयेपि लक्षणे विभागविशेषेऽव्याप्तिपरिहाराय विभागाजन्येति
विशेषणं शेषं पूर्ववत् आदिग्रहणेनापक्षेपणावृत्तिसंयोगासमानाधिकरणसत्तासाक्षाद्व्याप्यजातिमानित्यादि संगृह्यते यत्तु तेन-
रूपाद्यन्यतमत्वं वा तच्च तदन्यान्यत्वमिति रीत्या सर्वत्र लक्षणनिर्वचनं कृतं तत्तदन्यतमत्वेऽन्योन्याश्रयग्रस्तरूपादिज्ञानेन तदन्यतमत्वज्ञा
नं तदन्यतमत्वज्ञानेन च रूपादिज्ञानमिति किं च रूपादिविशिष्टान्योन्याभावो वा तदुपलक्षितान्योन्याभावो वा लक्षणोपयोगी आद्ये कर्मादीनां रूपा-
दिमत्त्वे रूपादीनामपि कर्मादिमत्त्वं स्यात् अन्योन्याभावद्वयप्रतियोगिद्वयस्य विशेषणत्वात् द्वितीयेप्युपलक्षितत्वं विशेषणमुपलक्षणं वा द्विती
येऽनवस्था प्रथमे परस्परयोरुभयोरप्युभयवत्त्वं स्यात् अन्योन्याभावान्यतमाभावयोश्च प्रागेव प्रत्युक्तं निर्वचनं प्रत्याख्यास्यते च यद्दीधितीरेण तदुभयान्य

एम॰
१६

भाववत्वे सति इतरान्योन्याभाववत्वानधिकरणत्वमिति निर्वचनं कृतमेतदन्योन्याभावानित्यत्वान्यतराधिकरणं शब्दत्वान्यंताभावानि
त्यत्वान्यतराधिकरणमित्यादिषु तदप्ययुक्तं तथा सति हि रूपाद्यन्यतमत्वं नाम रूपान्योन्याभावाधिकरणत्वे सति रसादित्रयोविंशत्यन्योन्या
भावाधिकरणत्वरहितत्वमिति लक्षणार्थः स्यात् तथा च सत्यन्योन्याभावद्वयानधिकरणत्वं वा एकैकान्योन्याभावानधिकरणत्वं वा लक्ष
णं विवक्ष्यते उभयथाप्यनुपपत्तिः उभयान्योन्याभावानधिकरणत्वस्याव्याप्तेः नहि रूपे रसान्योन्याभावो नास्तीति शक्यं वक्तुं नापि रूपान्योन्याभा
वो रसादौ नास्तीति एकैकान्योन्याभावानधिकरणत्वपक्षे रूपादिप्रतियोगिकाभावविशेषविवक्षायां रसादिष्वव्याप्तिस्तदवस्था अनियत
तविवक्षायां तु अनुगतलक्षणास्यप इति ततो वादीन्द्रदर्पस्तेन दन्यतरत्वादिषु अखंडितनिरुक्तमुत्थः पंडितंमन्यखंडितः १ कमप्रसक्तं कर्म

तथा कर्मलक्षणमपि दुर्लक्ष्यं ननु तावत्संयोगविभागयोरनपेक्षकारणं कर्मेति यतः यथाश्रुते ऽसंभवित्वान्निरुक्ते
रप्ययुक्तितः नानपेक्षतया हेतुः कर्मयोगविभागयोः ८ नानपेक्षतया संयोगविभागहेतुत्वं कर्मणः समवायिकारणस्य
रेच्छादेशकालादृष्टापेक्षणात् अथैवं निरुच्यते पश्चाद्भाविनिमित्तं नापेक्षते कर्म तेन चेश्वरेच्छासमवायिकारणादयो
व्यावर्त्यन्ते तेषां पूर्वभावितया पश्चाद्भावित्वाभावादिति ॥ ८ ॥ लक्षणं खंडयति तथा कर्मलक्षणमपीति श्रीधराचार्याभि
प्रेतं लक्षणं तावद्दूषयति ननु तावदिति अनपेक्षपदेन द्रव्यव्यावृत्तिः संयोगविभागद्वयग्रहणेन संयोगविभागव्यावृत्तिस्तयोः संयोग
जनकत्वे सति विभागाजनकत्वात् तस्य चेहेतुत्वादित्यर्थः योगविभागयोः संयोगविभागयोरनपेक्षतया यो हेतुः तत्कर्मेति न लक्षणं कुत
तः यथाश्रुते ऽसंभवित्वात् स्वातिरिक्ते कस्मिंश्चिदप्यनपेक्षाया असंभवित्वात् तथा निरुक्तेरपि स्वोत्पत्त्यनंतरमुत्पद्यमानानपेक्षित्वादि
रूपाया अप्ययुक्तिरिति श्लोकयोजना श्लोकं विवृणोति नानपेक्षतयेति द्वितीयं पादं शंकापूर्वकं विवृणोति अथैवमित्यादिना व्या
वर्त्यन्ते अनपेक्षा न इति शेषः कर्मत्वादिति वा तेषां पश्चाद्भाविकर्मापेक्षित्वात् ॥ ८ ॥

दूषयति मैवमुत्तरेति एवाहि परिपाटी वैशेषिकाणामुत्पन्नमात्रात्कर्मणः स्वाश्रये पूर्वसंयुक्ताद्विभागो जायते ततः पूर्वसंयोगनाशस्ततउ-
त्तरसंयोगोत्पत्तिरिति तत्रोत्तरसंयोगोत्पत्तौ पूर्वसंयोगनाशं पश्चाद्भाविनमपेक्षते कर्मेत्यसिद्धिर्लक्षणस्येत्यर्थः ननु भावरूपं पश्चाद्भाविनं
नापेक्षत इत्यनपेक्षाशब्दार्थो विवक्षितस्ततो नासंभव इति शंकित्वा परिहरति न पूर्वसंयोगेति यस्मिन्क्षणे पूर्वसंयोगनाशः सः कर्मणः पश्चाद्भा-
वी औपाधिकस्तोत्पाद्यत्वाद्भावरूपश्चात स्तदपेक्षत्वात्कर्मणस्तदवस्थस्यैव पूर्वदोष इत्यर्थः स्यादेतद्यदनन्तरं संयोगविभागयोरुत्पत्तिस्तत्क-
र्मेति लक्षणं न चेश्वरेच्छादिषु प्रसक्तिस्तेषु सत्स्वपि यावत्कर्मोत्पत्त्यनुपपत्तेः नाप्यनपेक्षासिद्धिस्तुद्रोपद्रवावसर इति तत्राह यदनंतरमिति न
नु नात्र कर्मातिरिक्तसामग्र्यस्ति यत्रातिव्याप्तिरुच्येतेति तत्राह नच कर्मैवेत्यादिना यदि हि कर्ममात्रं सामग्री न दा सति भवत्येवेति नियमात्॥

मैवमुत्तरसंयोगे कर्त्तव्ये पश्चाद्भाविन्याः पूर्वसंयोगनिवृत्तेरपेक्ष्यमाणत्वात् पश्चाद्भाविभावरूपं निमित्तं नापेक्षत इति।
चेन्न पूर्वसंयोगनिवृत्तिक्षणस्य भावस्यैव पश्चाद्भाविनोऽप्यपेक्ष्यमाणत्वात् यदनंतरं संयोगविभागयोरुत्पत्तिस्तत्कर्मेति च।
कर्मलक्षणे तत्सामग्र्यामपि नतत्संभवादतिव्याप्तिः नच कर्मैव सामग्री तथा सति विभागोत्पत्तिसमसमयमेव पूर्वसंयोग।
निवृत्तेरुत्तरसंयोगस्य चोत्पत्तिप्रसंगात् सत्यां सामग्र्यां कार्यविलम्बायोगात्॥२२ विभागोत्पत्तिसमसमयमेव पूर्वसंयोगनाशोत्त
रसंयोगोत्पत्ती स्यातां न चैवमिष्यते युज्यते वा पूर्वसंयोगस्य विभागव्यतिरेकेण नाशकाभावात् आश्रयस्य चानष्टत्वादनिवृत्ते च पूर्वसंयोगे
नोत्तरसंयोगोत्पत्तिः अतः पृथगेव सामग्री तथा चातिव्याप्तिरिति भावः पूर्वसंयोगनाशस्य च समसमयत्वापादनं पूर्वभाविनस्योपलक्षणं
तद्व्यतिरेकेणोत्तरसंयोगानुत्पत्तेः वादीन्द्रः प्राह विभागकुर्वद्रूपत्वापरपर्य्याय विभागजननशीलत्वस्य धर्मविशेषस्यानपेक्षकार-
णत्वशब्दार्थत्वात् तस्य पदार्थान्तरत्वात् तत्तस्य कारणमात्रविभागकारणाकारणविभागजनकविभागकारणकर्मनिष्ठस्यैतद्विभागानपेक्ष
कारणं इदं विभागानपेक्षकारणमित्यनुभवसिद्धत्वादिति तदसत्तत्खलु त्वत्कुतर्कानुपहतबुद्धेरेवमनुभवोऽस्ति विभागजनकत्वं च विभागस्य विभे
जयिष्यते यानुमहाविद्यानपेक्षकारणत्वसाधनायोक्ता सा तदीयविडंबनोक्तदोषविडंबितेति नादरणीया॥

तदेवमेकद्रव्यमगुणं संयोगविभागानपेक्षकारणमिति सौत्रं लक्षणं दूषयित्वा लीलावतीलक्षणमुद्भावयति अस्तु तर्हीति निमित्तकारणे
ष्वरेखादौ समवायिकारणद्रव्ये चातिव्याप्तिपरिहाराय असमवायिकारणग्रहणं ननु तथापि संयोगविभागयोरतिव्याप्तिस्तयोरपि यथा
यथं तयोरसमवायिकारणत्वादित्यत आह नचेति उभयं प्रत्यसमवायिकारणत्वं विवक्षितं ततो नातिव्याप्तिरित्यर्थः उक्तं च लीलावती
कारेण द्वित्वेनान्यथ्यं तेन संयोगविभागव्युदास इति मिलितसंयोगविभागजनकत्वरूपकर्मलक्षणस्याव्याप्तिमाह मैवमित्यादिना कर्मविशे
षमेव दर्शयन्नव्याप्तिं विवृणोति तथाहि यदेति अत्र तावदवयवकर्मानन्तरमवयविन्यपि कर्म संभवतीति वक्ष्यं तेन तथा सत्यवयवभूततन्तुकर्म

अस्तु तर्हि संयोगविभागयोरसमवायिकारणं कर्मेति लक्षणं नच संयोगविभागयोरतिव्याप्तिस्तयोरेकैककारणत्वात्।
अत्र चोभयकारणत्वस्य विवक्षितत्वादिति चेन्मैवं कर्मविशेषे लक्षणस्याव्याप्तेः तथाहि यदा घटारंभकावयवे तन्त्वादिनिष्ठेन
कर्मणावयवान्तराद्विभागोऽवयवे तस्मिन्समये तदारब्धावयविनिष्ठं कर्म यदि भवति तदावयवानां विभागादवयव्यारंभक
संयोगनिवृत्तिसमयेऽवयविकर्मणा तस्मिन्नेवावयविनि यतः कुतश्चिद्विभागो जायते तेन तत्रासमवायिकारणावयवसंयो
गनिवृत्त्यनन्तरमवयविनो नाशात्तोत्तरसंयोगोत्पत्तिः संयोगिनोऽवयविनस्त्वाभावात् तत्रावयविनिष्ठस्य कर्मण उभयासमवायि
कारणत्वाभावादव्याप्तिः कथं न भवेत् नचावयवकर्मानन्तरमवयविनि कर्म न जायत इति वाच्यं हस्तचलनानन्तरं देवदत्तचलनस्य
शाखाचलनानन्तरं शाखिचलनस्य दृष्टत्वात्।

णा अवयविभूतघटारंभकसंयोगविरोधिविभागोत्पत्तिसमयेऽवयविगतकर्मणापि
विभागः शक्योत्पादः अवयविनोऽविनष्टत्वात् उत्तरसंयोगोत्पत्तिस्तु असंभविनी तदानीमाश्रयस्यावयविनः पटस्यासमवायिकारणभूता
वयवसंयोगनाशान्नष्टत्वात् असमवायिनाशात्समवायिनाशाद्वाऽवयविनाश इति सिद्धान्तात् तन्न तस्मिन्कर्मण्यव्याप्तिरुभयजनकत्वल
क्षणस्येत्यर्थः अवयविनो नाशादित्यस्यैव विवरणं संयोगिनोऽवयविन इति यत्तु दृश्यत इत्युक्तं तदाह नचावयवेति अवयवावयविनो
र्युगपत्कर्मोत्पत्तावप्येषा समानैवोत्तरसंयोगोत्पत्त्यनुपपत्तिस्तत्रापि तुल्यत्वात्॥ ॥

वि·प्र·
टी·न·
१८

ननु नास्ति तथाविधं कर्म यद्विभागमात्रमेवोत्पाद्योपरमेत स्वप्रयोजनासमर्थस्य हि स्थितिवैयर्थ्यात् यथाह विभागप्रकरणे प्रशस्तपादः उत्त
रसंयोगानुत्पन्नावनुपयोगित्वप्रसंग इति तत्राह नचोत्तरेति यदि मन्येत विभागमात्रजननेऽपि समस्तप्रयोजनानिष्पत्तेर्वैयर्थ्यमेवा
न्यत्र कर्मणस्तथैव दृष्टत्वादिति। तत्राह नहि यावदिति संप्रत्यति व्याप्तिं दर्शयितुमसमवायिकारणानामत्रत्यानिष्कर्षति अस्तु वेत्या
दिना ननु किमत्र निरूपणीयमस्ति प्रसिद्धं तल्लक्षणमित्याह पूर्ववादी समवायिकारणेति कार्येणोत्पद्यमानेन पटादिना सह क
स्मिन्नर्थे यः समवायस्तन्तु संयोगादेः स तावदेककालत्वभिधाना प्रत्यासत्तिः तथोत्पद्यमानपटेनांशोस्तन्त्वादेर्यत्समवायिकारणपटादि

नचोत्तरसंयोगानुत्पत्तौ कर्मणोऽनुपयोगित्वप्रसंगः विभागजननेनापि पुरुषार्थत्वोपपत्तेः नहि यावदशेषप्रयोजन
सिद्धिस्तावद्वस्तुनोऽवस्थाननियमः बीजादेरंकुराद्यजननेऽपि नाशाद्युपलम्भात् अस्तु वोभयकारणत्वं कर्मणस्तथाप्यसमवायि
कारणता निरूपणीया समवायिकारणप्रत्यासत्त्या मवधृतसामर्थ्यं तदसमवायिकारणमिति चेत् केयं प्रत्यासत्तिः का
र्यैकार्थसमवायः कारणैकार्थसमवायश्चेति चेन्न विकल्पासहत्वात् तथाहि उभयविधप्रत्यासत्त्या असमवायिकार
णशब्देन कर्मलक्षणेऽपि विवक्षिता उतान्यतरया नाद्येऽनंगीकारादसंभवाच्च नह्यन्त्यावयवविनिष्ठस्य कर्मणः संयोगविभाग
समवायिकारणेनान्त्यावयविना सहैकस्मिन्नर्थे समवायः संभवति कर्मण एकद्रव्यमात्रवृत्तित्वात् नहि द्वितीयः कारणैकार्थ

तेन सहैकार्थेनन्त्यादौ तंतुशोलमादेर्यः समवायस्स त्वहत्यभिधाना इति द्वितीया प्रत्यासत्तिरित्य ॥समवायस्यानंगीकारादेव॥
र्थः कारणैकार्थसमवायाभावं दर्शयन्नुभयाभावं विवृणोति नह्यन्त्यावयवविनिष्ठस्येति पटगतसंयोगकारणं कर्म पटस्य वप्रवर्त्तनेन
तन्तुष्वनेन न कारणैकार्थसमवायवदित्यर्थः अन्यतरपक्षे दृष्टहानिं दूषयित्वाऽलभ्यामतिव्याप्तिमाह कार्येति अदृष्टेऽतिव्याप्तिं दर्शयितुं ल
क्षणानिष्पत्तिं दर्शयति यन्निष्ठादिति कार्यैकार्थसमवायमदृष्टे संपादयति कार्येणेति नच प्रत्यासत्तावपि कर्मण एवासमवायिकार
णतानादृष्टस्येति निर्वचनीयं तल्लक्षणस्यातिव्याप्त्यापातात् उभयोरपि तदुपपत्तेश्च नचादृष्टव्यवकल्पना उभया ॥ ॥

एम·
१८

समवायिकारणत्वव्यनुपपत्तेः नचकल्पनागौरवं अवयवनिष्ठरूपादीनामनेकेषामप्यवयविरूपादिकंप्रत्यसमवायिकारणत्व-
कल्पनावदुपपत्तेः नचविभिन्नजातीयादेककार्यानुत्पादो बहुत्वप्रचयाभ्यांमहत्त्वस्यैवोत्पत्तिसंभवात् उभयासमवायिकारणत्व-
स्यवस्त्वनरेऽनुपलब्धचरस्यापिकर्मणिकल्पनावत्संयोगविभागविशेषेष्वदृष्टस्यचप्रत्यासत्तेरसमवायिकारणत्वकल्पनायांदो-
षाभावात् नचादृष्टस्यासमवायिकारणत्वेसर्वानैमित्तिकारणत्वानुपपत्तिः कालादीनांस्वगुणासमवायिकारणानामपिनिमित्त-
तावदुपपत्तेरिति अतिव्याप्तिमदृष्टेपरिहरन्तिपूर्ववादी गुणान्यत्वेसतीति गुणत्वानधिकरणत्वेसतीत्यर्थः दूषयन्ति नतदेति॥

कार्यैकार्थसमवायस्यतुलक्षणांतर्भावेतिव्याप्तेः यन्निष्ठौसंयोगविभागौतन्निष्ठतयासंयोगविभागयोर्यत्कारणंतत्क-
र्मेतिहितथालक्षणार्थः संपद्येततथाचात्ममनसोः संयोगविभागजनकादृष्टेऽतिव्याप्तिः कथंनस्यात्कार्येणासंयो-
गविभागाख्येनसहतज्जनकादृष्टस्यात्मन्येकस्मिन्नर्थेसमवायात् गुणान्यत्वेसतीतिविशेषणादयमदोषइति
चेन्न तदोभयकारणताभिधानस्यवैयर्थ्यापातात् गुणान्यत्वपदेनैवविभागजनकविभागस्यसंयोगजनकसंयोग
स्यचव्यवच्छेदात् एवंविभागाजन्यविभागासमवायिकारणंकर्मेत्यपिलक्षणंनिरस्तं असमवायिकारणतायादुर्निरू-
पत्वात्॥

एवैकजनकसंयोगविभागव्यवच्छेदायहिउभयकारणताकर्मलक्षणेविवक्षितातौचगुणान्यत्वग्रहणेनैव।
निरस्तौततश्चोभयकारणत्वविशेषणंव्यर्थंस्यादतोहित्वेनान्वर्थ्यमिति केवलंलीलावत्याविलपितमेवभवेदितिभावः गुणान्य-
त्वंचासिद्धं अद्यापि कर्मलक्षणानिर्णयात् गुणलक्षणानांचपरागुच्छिन्नत्वादितिवाभावः उक्तंलक्षणमन्यत्राप्यतिदिशन्ति एव-
मिति अतिदिश्यमानमेवविवृणोति असमवायिकारणतायाइति दुर्निरूपत्वादिति यथाऽदृष्टेनसंभवतितथानिरूपयितुमशक्यत्वात्तत-
श्चादृष्टेऽतिव्याप्तिस्तदवस्थागुणान्यत्वविशेषणेचपूर्ववद्वैयर्थ्यमित्यर्थः॥ १०१ ॥

व्यर्थविशेषणत्वंचाह विभागाजन्येति ननुत्रिविधो विभागः अन्यतरकर्मजः उभयकर्मजो विभागजश्चेति तत्राद्यः सक्रियेण निःक्रियस्य यथा स्थाणोः श्येनेन द्वितीयस्तु सक्रिययोर्यथा मल्लयोर्मेषयोर्वा तृतीयस्तु कारणमात्रविभागजः कारणाकारणविभागजश्चेति तत्राद्यो यः खलु पटावयवस्य स्वगतकर्मणा यदावयवान्तराद्विभागो जायते स तु विभागः पूर्वतनारंभकसंयोगनाशानन्तरकालीनावयविनाशसहकृतः स्वाश्रयस्याकाशदेशाद्विभागमारभते द्वितीयस्तु हस्तावयवाकाशयोर्विभागाद्धस्ताकाशविभाग इति एवं च सति यदि विभागासमवायिकारणं कर्मैव्येवोच्यते तदा विभागेति व्याप्तिः स्यात्तदर्थं विभागाजन्येति विशेषणमिति तत्राह नच विभागजेति अत्र च विभागजशब्दस्तत्कारणविभागोपलक्षणार्थः हेतुमाह कर्मणस्त्वेति नक्वचिदपि विभागो विभागजन्यः किंतु वंशदलविभागजनकादेवक

विभागाजन्यत्वविशेषणांच व्यर्थं व्यवच्छेद्याभावात् नच विभागजविभागव्यवच्छेदार्थमिति वाच्यं कर्मणस्त्वतदुत्पत्तौ विभागजविभागस्यैवाप्रामाणिकत्वात् ननु यत्नावदिह वंशावयवेषु प्रवर्तमानं कर्म तद्द्रव्यारंभकसंयोगविरोधिनं विभागमुत्पादयत्तदैव नाकाशादिभिः सह विभागमुत्पादयति यस्मादाकाशादिविभागजनकत्वं कर्मणो द्रव्यारंभकसंयोगविरोधिविभागानारंभकत्वेन व्याप्तमुपलभ्यते न तिनदले

र्मणो वंशदलादेराकाशस्य च विभाग इत्यर्थः अत्र वंशदलाकाशविभागस्य कर्मजन्यत्वं दूषयन्विभागजन्यत्वं वैशेषिकः परिशेषयति ननु यत्नावदित्यादिना तत्रावयवगतं कर्म किमवयवान्तराद्विभागजननसमय एवाकाशादिभ्यो विभागमारभते समयान्तरे वा द्वितीये तु प्रथमपक्षं दूषणमेवाभिदेश्यति प्रथमं दूषयति तदैवनेति द्रव्यस्य वंशावयविनः आरंभको यो वंशावयवयोः संयोगस्तद्विरोधिनं विभागमुत्पादयद्दिति योजना ननु किमिति नोत्पादयतीत्याशंक्य तत्रानुमानं वाधकं दर्शयितुं व्याप्तिं तावत्संपादयति यस्मादिति आकाशादिविभागेति द्रव्यानारंभकसंयोगविरोधिविभागोपलक्षणं तथा च किरणावलीकारः यत्कर्म द्रव्यानारंभकसंयोगविरोधिनं विभागमारभते नत द्रव्यारंभकसंयोगविरोधिनं यत्त्वेवं न तत्तद्विरोधिनमिति विकसत्कमलकुड्मलादौ न यथा नद

अथ कथं कमलकुड्मलदेलविदलनेपि विभागस्य द्रव्यानारंभकसंयोगविरोधित्वं न पुनरारंभकसंयोगविरोधित्वमिति तत्राह नहि तत्रेति य
दि हि द्रव्यारंभकसंयोगविरोधी स्यात्ततो विकसनसमयेन लिनावयवी नश्येत् नचैतदस्त्यक्षतोऽनुमानतो वावसातुं शक्यतेऽतो नतदारंभकसंयोग
विरोधी सविभाग इत्यर्थः व्यूहः आकारः कार्य्यद्रव्यान्तरमिति यावत् कस्तर्हि विरोधीत्यत आह किन्त्विति स्पर्शवद्द्रव्यं चेद्रानयादि द्रव्या-
रंभकसंयोगे च सत्येव यः संयोगः स्पर्शवद्द्रव्यसंयोगजात्कर्मण उत्पन्नः पद्मदलयोर्वर्त्तते तमेव निवर्त्तयतीत्यर्थः अत्र च संप्रतिमतमुदाह

नहि तत्र द्रव्यविनाशः प्रत्यक्षाधिगतः तदेवेदं नलिनमिति प्रत्यभिज्ञानात् नाप्यनुमानतः द्व्यादिष्विव व्यूहांतरस्य तदुन्नायक
स्य लिंगस्यादर्शनात् तथा च पद्मपत्रस्य पत्त्रान्तराद्विभाग उपलभ्यमानो न द्रव्यारंभकसंयोगविरोधी किंतु स्पर्शवद्द्रव्यसंयोगजा
त्कर्मण उत्पन्नो यः संयोगः सत्येव द्रव्ये द्रव्यारंभके च संयोगे पद्मपत्रयोर्वर्त्तते तमेव निवर्त्तयति यथांगुल्योर्विभागः प्रयत्नो
त्पादितं संयोगमेव निवर्त्तयति न तु द्रव्यारंभकसंयोगं तस्मादंगुलिविभागवत्पद्मपत्रक्रियाजनितो विभागो न द्रव्यारंभकसं
योगविरोधीति व्याप्तिनिश्चये प्रयोगः विवादाध्यासिता वंशदलक्रिया नाकाशादिविभागारंभिका द्रव्यारंभकसंयोगविरोधि
विभागारंभकत्वाद्यन्नैवं न तदेवं यथा पद्मपत्रक्रिया एककर्महेतुकत्वे च विभागयोर्द्रव्यारंभकसंयोगविरोधित्वाविरोधि
त्ववैलक्षण्यमनुपपन्नं कारणवैचित्र्ये कार्य्यवैचित्र्यस्याकस्मिकत्वप्रसंगादिति विपक्षे बाधकस्तर्कः तदेवमवयवक्रिया

रणमाह यथांगुल्योरिति तदेवं कमलकलिकाविकासकर्मणः सामर्थ्यं तां व्यतिरेकव्याप्तिमुपसंहृत्य प्रयोग अवयवविभागकाले॥
मारचयति विवादाध्यासितेति नाकाशादीति तद्द्रव्यानारंभकसंयोगविरोधिविभागारंभिकेत्यर्थः पद्मपत्रकर्मणि विभागारम्भके व्यभिचार-
वारणाय द्रव्यारम्भकेति विशेषणम् यन्नैवमिति यद्द्रव्यानारंभकसंयोगविरोधिविभागजनकं न तद्द्रव्यारंभकसंयोगविरोधिविभागोत्पादकमि-
त्यर्थः विपक्षे बाधकमाह एककर्मेति उक्तं च किरणावल्यां कार्य्यविपर्ययाद्भवितव्यं कारणविरोधेन नहि कार्य्यविरुद्धमविरुद्धजातीयं कारणमिति सं
भवतीति उपपादितं कर्मानारभ्यत्वमुपसंहरति तदेवमिति॥ ॥ ९ ॥

यत्तद्वक्ष्यामहीति येति देश्यतीति तदाह यस्मादिति तत्रापि समानोयमविनाभाव इतिभावः तथापि विभागजन्यत्वं कथमित्याशंक्य तत्र परिशेषं दर्शयिष्यन्सामान्यतो दृष्टानुमाने प्राप्ते हि परिशेषावसर इति तदाह नचासमवायिकारणमिति प्रसक्तप्रतिषेधे सत्यन्यत्राप्रसंगाच्छि॰ष्यमाणे संप्रत्ययः। परिशेष इति परिशेषविदः तदिह प्रसक्तं कर्म प्रतिषिद्धमन्यत्राप्रसंगमाह नचान्तरेणेति उभयं हि प्रत्यासन्नतयाऽसमवायिकारणं संभवति एकं वंशदलकर्म अपरं तु कर्मान्यत्वस्तत्र नो विभागस्तत्र कर्मणाईदृशीं दशां न नो विभागातिरेकि न संभवतीत्यर्थः अन्यत्राप्रसंगमुक्त्वा शिष्यमाणे संप्रत्ययमाह अवयवेति अत्र चासमवायिकारणलक्षणं संपादयति सचेति उपसंहरति सिद्ध इति परनिष्पादितपरिश्रमस्य प्रकृतोपयोगमाह तद्यद्यप्यर्थेति तत्रानुमानं नावदूषयति कर्मजत्वसंभवेन परिशेषं विघटयितुं मे

पश्चाद्धस्तादाकाशादिविभागमारभते तस्मादाकाशवंशावयवयोर्विभागो नक्रियाजः नचासमवायिकारणमन्तरेणाकार्योत्पत्तिः शक्याभ्युपगन्तुं नचान्तरेण क्रियामन्यदसमवायिकारणमवयवविभागातिरेकि शक्यमुत्पादयितुं अवयवविभागस्त्ववशिष्यते सचेतस्य प्रत्यासन्नएकार्थसमवायादिति सिद्धो विभागजो विभागस्तद्यद्यप्यर्थं च विभागाजन्यत्वविशेषणमिति चेत् मैवं व्याप्तेरसिद्धत्वादनध्यवसितत्वतः यौगपद्यप्रतीतेश्च प्रत्यक्षत्वमुपेयुषाम्॰॥९॥ ०००० ॥

वमित्यादिना श्लोकेन अत्र किं व्यतिरेकभूमावाकाशादिविभागारंभकत्वस्य द्रव्यारंभकसंयोगविरोधिविभागानारंभकत्वोपाधौ व्याप्तिर्गृह्यते किं वाद्रव्यानारंभकसंयोगविरोधिविभागारंभकत्वस्य द्रव्यारंभकसंयोगविरोधिविभागानारंभकत्वोपाधौ आद्ये प्राह व्याप्तेरसिद्धत्वादिति आकाशादिविभागस्याप्रत्यक्षत्वेन तज्जनकत्वमपि कर्मणोऽप्रत्यक्षमतो न प्रत्यक्षत्वसिद्धिर्व्याप्तेरित्यर्थः द्वितीये दूषणमाह अनध्यवसितत्वतइति आकाशादिविभागानारंभकत्वमस्ति रूपादौ नचतत्र हेतुरस्तीत्यर्थः किंचवंशदलयोर्विभागस्याकाशवंशदलविभागस्य च हेतुहेतुमत्वकल्पनापि अनुपपन्ना आकाशप्रत्यक्षवादिनामुभयोरपि विभागयोः प्रत्यक्षेणायौगपद्यप्रतीतेरित्याह यौगपद्येति अथ वाकाशप्रत्यक्षवादिमते व्याप्तिसिद्धिमाशंक्येदमुक्तं योजना तु पूर्ववत्॥ ॥ ००००० ॥

समं॰
२०

श्लोकं विवृणोति नतावदित्यादिना दिक्कालादिष्वसर्वोत्पत्तिमन्निमित्तकारणतयाउभयविधविभागजनकेष्वव्यभिचारोपिद्रष्टव्यः अनध्यवसि
तत्वतइत्येनद्विवृणोति अनध्यवसितइति अत्रचोक्तोविशेषोनप्रविस्मर्तव्यः उपलक्षणंचैतत्सत्प्रतिपक्षस्यापितथाहिविमतंकर्म आका
शादिदेशेनविभागमारभते आरंभककर्मत्वात् संप्रतिपन्नवत् विभागोवाकर्मजन्यः विभागत्वात्संप्रतिपन्नवत् इतिशक्यंसत्प्रतिपक्ष
यितुंतेनचपदार्थतत्वनिर्णयोक्तदोषोपिपरिहृतः एतेनव्यभिचारानध्यवसितत्वनिवारणायकर्मणाहेतुसाध्ययोर्विशेषणमपिनि
ष्फलीकृतं नच द्रव्यारंभकसंयोगविरोधिविभागानारंभकत्वमुपाधिः उभयविधविभागजनकेश्वरादौसाध्याव्याप्तेरिति उक्तरीत्या॥

नतावदाकाशादिविभागजनकस्यकर्मणोद्रव्यारंभकसंयोगविरोधिविभागानुत्पादकत्वंक्वचित्प्रत्यक्षसिद्धमाकाशादिवि
भागस्यातींद्रियस्यक्रियान्वयव्यतिरेकयोःप्रत्यक्षतोधिगंतुमशक्यत्वाद्याह्यसिद्धेः अनध्यवसितश्चायंहेतुराकाशादिविभा॥
गानारंभकेरूपादौसत्यपिसपक्षेततोव्यावृत्तत्वात् अपिचक्रमकल्पनेयमनुपपन्नाआकाशादिविभागप्रत्यक्षवादिनां॥
विभागद्वयस्यापियौगपद्यप्रतीतेः नचशतपत्रपत्रशतव्यक्तिभेदानुभववद्विभ्रमोयमनुभवः बाधकाभावात् नचोपन्यस्ता
नुमानंबाधकंतस्यानध्यवसितत्वेनापहस्तितत्वात् विवादाध्यासितंविभागजन्यगुणाधिकरणंनित्यद्रव्यत्वादात्मवत् अ
स्तिहिआत्मनोविभागविषयंप्रत्यक्षज्ञानंतत्कर्मकारकजन्यंतेननसाध्यविकलोदृष्टांत इतिमानमनोहरकारोक्तमनुमानं
बाधकमितिचेत्॥
चष्टे अपिचेति ननुपूर्वापरीभूतयोरपिविभागयोरतिशैघ्र्याद्यौगपद्यविभ्रमोयंयथातितीक्ष्णसूच्याकमलदल
शतवेधेयुगपद्विद्धत्वाभिमानइतितत्राह नचशतपत्रेति शतपत्रंकमलं व्यक्तिभेदः वेधअपहस्तितत्वाद्दृष्टपरिहारमात्रेणपरास्तत्वात्उप॥
लक्षणंचैतद्यौगपद्यप्रत्यक्षबाधव्यभिचारसत्प्रतिपक्षत्वानां विभागाजन्यत्वेनुमानांतरविरोधंशंकते विवादाध्यासितमिति आत्माका
शव्यतिरिक्तनित्यद्रव्याणिपक्षः दृष्टांतेसाध्यंदर्शयति अस्तिह्यात्मनइति विभागविषयंयत्प्रत्यक्षज्ञानंतद्विभागजन्यगुणएवमाकाशे
शब्दोविभागजन्यगुणः नचताभ्यामेवार्थांतरतापरमाण्वादेर्ज्ञानशब्दाधिकरणत्वाभावात्तत्रयोसौविभागजन्योगुणःपरमाण्वादिनिष्ठः

सविभागजविभागइष्टः॥

२
चि॰प्र॰
टी॰न॰
२१

ब्रह्माद्वैतवादिवेदांतिमते परमाणुवादीनां नित्यत्वमसिद्धमिति विशेषणासिद्ध्या हेतुं दूषयति नैवमिति दूषणांतरमाह आत्मन इति ॥
व्यर्थविशेषणतया चासिद्धिमाह किंचेति अनित्यद्रव्यव्यावृत्त्यर्थं नित्यपदं अद्रव्यस्य द्रव्यपदेनैव व्यावृत्तेः न च तद्व्यावृत्त्यर्थं पक्षतुल्य-
त्वादतो वैयर्थ्यमित्यर्थः आत्माकाशयोरुक्तगुणवत्त्वे विभुत्वमुपाधिः न च साधनव्यापकतापक्षीकृतपरमाणुमनसो रूपाधेरभावा-
दित्याह। न विभुत्वेत्यादिना ननु कालो विभागजन्यगुणाधिकरणं द्रव्यत्वादात्मवदित्यत्र को दोषः विशेषगुणवत्त्वोपाधिहतत्वं वि-
हाय न किंचिदन्यदाभाससमानयोगक्षेमतां चाह किंचेति विमतं कर्म न द्रव्यानारंभकसंयोगजनकं द्रव्यारंभकसंयोगजनकत्वान्

नैवं वेदांतिनं प्रति हेतोरसिद्धेः तेनात्मव्यतिरिक्तनित्यानंगीकारात् आत्मनो गुणानधिकरणत्वेन दृष्टांतस्य साध्यविक-
लत्वाच्च किंच नित्यविशेषणं व्यर्थं जीवाकाशव्यतिरिक्तस्य द्रव्यजातस्य विभागजन्यगुणाधिकरणतया विप्रतिपद्यमानस्य प-
क्षीकृततया पक्षव्यापकद्रव्यत्वहेतुमात्रेणैव साध्यसिद्धेर्नित्यपदव्यावर्त्याभावात् अस्तु तर्हि द्रव्यत्वमात्रं हेतुरिति चेन्न विभु-
त्वोपाध्युपहतत्वात् न च दिक्कालेश्वरेषु पक्षैकदेशेषु साधनव्यापकतापक्षीकृतपरमाण्वादिषु तदभावात् किंच कर्मणो द्र-
व्यारंभकसंयोगविरोधिविभागजनकस्य नभोभागविभागाजनकत्वे द्रव्यारंभकसंयोगजनकस्य तदजनकसंयोगजन-
कत्वमंगुल्याकाशसंयोगजनककर्मण इव न स्यात् तथा च तंतुद्वयसंयोगजनकात्कर्मणस्तंत्वाकाशसंयोगो न स्यात्
न त्वंगुल्याकाशसंयोगाच्छरीराकाशसंयोगवत्तंत्ववयवाकाशसंयोगादेव तंत्वाकाशसंयोगोपपत्तेर्नायं दोष इति चेत्

न यदेवं न तदेवं यथांगुल्याकाशसंयोगजनकं कर्मेत्यपि शक्यमनुमातुमिति खण्डनकार्थः भवत्वेवं किं नश्छिन्नमिति तत्र गूढा-
भिसंधिस्तावदाह तथा चेति द्वितंत्वारब्धपटारंभको यस्तंतुद्वयसंयोगस्तज्जनकात्कर्मणस्तंत्वाकाशसंयोगस्य द्रव्यानारंभकस्योत्प-
त्तिर्न स्यादित्यर्थः अभिसंधिमविद्वान् श्रीवल्लभः शंकते नन्विति अयमर्थः यथा हि संयोगजसंयोगविशेषस्य शरीराकाशसंयो-
गस्य तदवयवांगुल्याकाशसंयोगादेव जन्म न कर्मणः तथा तंत्वाकाशसंयोगोपि तदवयवाकाशसंयोगादेव भवेदिति कर्मजन्यत्वमि

राम॰
२१

अभिसंधिमुद्घाटयन्परिहरति एवंतर्हीति अवश्यंहि निरवयवपरमाण्वाकाशसंयोगस्यतदवयवसंयोगजन्यत्वासंभवात् अणुकारं-
भकपरमाणुसंयोगजनकपरमाणुकर्मजनितत्वंवक्तव्यं तदेवमसमुत्पत्तिकं दीर्घत्वमस्त्विति भावः अनिष्टांतरंचाह अपिचेति शकाते-
ऽहितत्रापिवक्तव्यं शब्दत्वयोर्विभागाद्धि शब्दत्वाकाशयोर्विभागः किंतु वंशदलावयवाकाशयोर्विभागादितितस्यचद्व्यणुकमिष्टवतोमू-
लमपितच्छंस्यादितिभावः तदेवंकर्मजन्यत्वसंभवान्यविशेषासिद्धिमुपसंहरति तस्मादिति यत्तु विपक्षेबाधकस्तर्कः उक्तस्तंप्रशिथि-
लमूलयति नचेति यथाकर्मैकहेतुत्वेपि संयोगविभागयोः परस्परंवैधर्म्यं तथेहापीत्यर्थः एतेनकार्यविरोधात्कारणविरोधोन्न

एवंतर्हिद्व्यणुकजनकसंयोगासमवायिकारणात्परमाणुकर्मणः परमाण्वाकाशसंयोगोनभवेत् नहितत्रावयवसं-
योगात्परमाण्वाकाशसंयोगः निरवयवत्वात् अपिचैवंवंशदलावयवाकाशविभागादेवदलाकाशविभागोपपत्तेर्दल-
योर्विभागस्याकाशविभागंप्रतिहेतुतानस्यादितिदलयोर्विभागादाकाशविभागः स्वाभिमतोनसिद्ध्येत तस्मादसमवायिका-
रणापेक्षिणोवंशदलाकाशविभागस्यवंशदलक्रियैवासमवायिकारणमितितत्पार्थिवत्वाद्विभागस्यविभागजनकत्वसिद्धिः न
चकर्मैकहेतुकत्वेविभागयोरुक्तवैलक्षण्यानुपपत्तिः कर्मैकहेतुकयोः संयोगविभागयोरिववैलक्षण्योपपत्तेः तस्माद्विभा-
गजविभागाभावात्तद्व्यावृत्त्यर्थविभागाजन्यत्वविशेषणंकर्मलक्षणेव्यर्थं व्यंजकप्रमाणयोर्निरस्तत्वाच्चकर्मत्वजातेर-
यनमपिकिरणावलीयंनिरस्तंविरुद्धयोरेवसंयोगविभागयोरेककर्मजन्यत्वात्सांसंगिकः। ((भावेनद्योगित्वमपिलक्षणंपराम्नं"
स्यास्यविचारस्यप्रकृतोपयोगमाह तस्मादिति ननुसंख्याऽवृत्तिसंयोगासमानाधिकरणसत्तासाक्षाद्व्याप्यजातिमदिति वासंयो-
गाजन्यसंयोगासमवायिकारणावृत्तिसंयोगत्वासमानाधिकरणजातिमद्वेत्यादीनिशिवादित्यमिश्रोक्तलक्षणानिभविष्यंतीति
तत्राह व्यंजकेति उक्तलक्षणानिखलुव्यंजकानिभवंति तानिचयथायथंदूषितानि प्रमाणंचप्रत्यक्षं द्रव्यखंडनावसरेदूषि-
तं अन्यच्चननिरूप्यतेअतस्तादृशीनास्तिजातिरित्यर्थः॥ ॥

वि॰ प्र॰ शी॰ न॰ २२

किंचसामान्यमेवयदादुर्लक्ष्यंतदादुर्लक्ष्यतरागितद्वांतरकर्मत्वादिसामान्यानिदुर्लक्ष्यतमानिचतल्लक्षणानीत्यभिसंधाय सामान्यखंडनंप्रस्तावयति सामान्यस्येति तत्रकिमनुवृत्तज्ञानस्यानुगतं कारणंसामान्यंतज्ज्ञानेनप्रमीयमाणंवा अनुवृत्तंवानित्यत्वे सत्यनुवृत्तंवानित्यमेकमनेकसमवेतं वाइति विकल्प्य दूषयति तथाहीत्यादिना असमवेतस्यापिसमवायवदनुवृत्तिसंभवा न्नचतुर्थपंचमयोनरूपत्वंतत्रतेषुमध्ये इत्युत्तरश्लोकस्योपकारः पक्षचतुष्टयेप्यतिव्याप्तिंदर्शयन्पूर्वार्द्धंव्याचष्टे नतावदित्या दिना तदेकदेशाधर्मादयः इदंचासाधारणासाधारणाकारणविवक्षयोर्यथा यथमुत्तरंतचविषयतयाकारणमितिविशेषणं

सामान्यस्यदुर्लक्ष्यत्वाच्चनहिशिष्टानिलक्षणानिसर्वाण्यपिनिरस्तानिवेदितव्यानि तथाहि किमिदंसामान्यंकिम नुवृत्तप्रत्ययकारणमुतानुवृत्तप्रत्ययप्रमाणक मथवानुवृत्तत्वमाहोस्विन्नित्यत्वेसत्यनुवृत्तत्वमथवानित्यमेक मनेकसमवेतं तत्रातिव्याप्त्यानिराकुर्यादाद्यंपक्षचतुष्टयं अनेकत्वानिरुक्तेश्चपक्षमन्त्यंप्रतिक्षिपेत् १० नता वदाद्यः सामग्र्यांतदेकदेशेषुचातिव्याप्तेस्तेषामपितत्प्रत्ययकारणत्वात् नापिद्वितीयोनुवृत्तप्रत्ययस्यस्वकारणा नुमापकतयाकारणस्यापितत्प्रमाणकत्वादतिव्याप्तेः नतृतीयः अनुवृत्तत्वस्यसंयोगादिष्वपिभावात् नापिच तुर्थः नित्येष्वनेककार्यवृत्तिषुपरमाणुषुव्यभिचारात् नापिपंचमःविकल्पासहत्वात् ॥ यंगौरितिविशिष्टव्यवहारेव्यक्ते रपितथात्वापातात् नापिद्वितीयइति यथानुवृत्तप्रत्ययः कारणतयासामान्यमनुमापयति एवंसामग्रींतदेकदेशांश्चेतित त्रातिव्याप्तिरित्यर्थः नतृतीयइति अनेकवृत्तिर्ह्यनुवृत्तिः साचसंयोगविभागद्वित्वादिष्वप्यस्तीतितेष्वतिव्याप्तिरित्यर्थः अ नेककार्यवृत्तिष्विति संयोगिनामपि वृत्तिरस्त्येवइत रथाकुण्डेषुवदराणांवृत्त्यभावप्रसंगादिति भावः समवायेप्यतिव्याप्तिः अ संबंधत्वविशेषणोपिपूर्ववदुत्तरं नन्वस्तुपंचमस्तथाचनातिव्याप्तिः समवेतशब्देनपरमाणवाकाशादिव्यावृत्तेर्नित्यपदेनैवसंयो गादेरिति तथाचश्रीवल्लभः नित्यमेकमनेकसमवेतंसामान्यमितिएकपदेनचान्यविशेषव्यावृत्तेरितितत्राह नापीति ॥ ९ ॥

एम॰ २२

दूषणान्तरं तयोत्तरार्द्धं योजयति किमनेकत्वेत्यादिना अनेकत्वसंख्या द्वित्वादिसंख्या स्वाश्रयेति स्वस्य सामान्यस्य य आश्रयस्तत्प्रतियो-
गिकान्योन्याभाववान् यस्तस्मिन्समवेतत्वं एवं द्रव्ये नैकाश्रयत्वमुक्तं भवति तस्यैव तत्स्यादन्यत्वायोगादित्यर्थः अनेकत्वसंख्याविशिष्टे समवे-
तत्वमनेकसमवेतत्वमित्ययुक्तं गुणत्वकर्मत्वतदवान्तरजातिषु तद्धर्मलक्षणस्याव्याप्तेरित्याह न प्रथम इत्यादिना तत्र हेतुः अद्रव्य-
त्वेनेति अन्त्यैर्विशेषैरितीदं ह्यन्त्यविशेषाणामपार्थिवपरमाणुविशेषगुणानामीश्वरज्ञानादीनां नित्यद्रव्यसमवेतैकत्वसंख्यापृ-
थक्त्वपरिमाणानामुपलक्षणं तेषां नित्यत्वात्तदाश्रयाणां च यत्किंचिदाश्रयप्रतियोगिकान्योन्याभाववत्त्वादतोतिव्याप्तिस्तेष्विय

तथाहि किमनेकत्वसंख्याविशिष्टेषु समवेतत्वमनेकसमवेतत्वमुताश्रयप्रतियोगिकान्योन्याभाववत्समवेत-
त्वमाहोस्वित्स्वाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वं न प्रथमः गुणकर्मवृत्तिसामान्येष्वव्याप्तेः अद्रव्यत्वेन गुण-
कर्मणोः संख्यानधिकरणत्वात् नापि द्वितीयः अन्त्यैर्विशेषैः परमाणुरूपैश्च व्यभिचारात् तेषामपि यत्किंचिदा-
श्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वात्तृतीयः स्वशब्देन जातिविवक्षायामात्माश्रयत्वप्रसंगात् नित्यत्वं च
स्वप्रच्युत्यनुपलक्षितसत्तायोगित्वं प्रध्वंसप्रतियोगित्वानधिकरणत्वं वा स्वप्रध्वंसप्रतियोगित्वानधिकरणत्वं
वा न प्रथमः जातेर्जात्यनधिकरणत्वे तल्लक्षणस्यासंभवित्वान्न द्वितीयः विकल्पासहत्वात् ॥ ०—०—० ॥

र्थः स्वशब्देनेति स्वाश्रयेत्यत्र स्वशब्देन यत्किंचिद्विवक्षायां पूर्वोक्तदोषः जातिविवक्षायां तेनैव तल्लक्षणादात्माश्रयः पूर्वोक्ता नित्यासिद्धश्च
तेषामपि सामान्याश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वादिति भावः एवमनेकसमवेतत्वानिरुक्त्या लक्षणं दूषयित्वा नित्यत्वानिरु-
क्त्यापि तद्दूषयति नित्यत्वं चेति इदमपि श्लोकस्य चशब्देनासूचि प्रच्युतिर्विनाशः तेनानुपलक्षितसत्तायुक्तत्वं सत्तायामसंभवि निःसामा-
न्यत्वात् सामान्यस्येति प्रथमपक्षं दूषयति न प्रथम इति आत्मादिष्वव्याप्तिः तत्र वर्त्तमानसत्ताया अपि घटादिप्रच्युत्युपलक्षितत्वात् एतेन स्वरू-
पसत्ताविवक्षापि प्रतिक्षिप्ता प्रमेयत्वरूपस्य तस्यानुवृत्तस्य तथात्वात् इतरस्य च व्यावृत्तस्यानुगतनित्यशब्दार्थत्वायोगात् स्वप्रच्युतीति वि-

२ म.
चि. सु.
टी. न.
२३

प्रतियोगित्वविकल्पस्य प्रक्रान्तोपयोगित्वमाह यदनधिकरणत्वमिति किं प्रध्वंसनिरूपकत्वं किं वा प्रध्वंससहानवस्थितत्वमित्य-
र्थः आद्ये प्रध्वंसानिरूपकत्वं तत्प्रतियोगित्वानधिकरणत्वमिति यावत् तच्चासिद्धमित्याह नाद्यो जातेरिति ध्वंसोऽन्य इत्यत्र कस्मादन्यत्वमि-
त्यपेक्षायां जातेरिति जातिनिरूपिके इत्यर्थः न चान्यत्वं प्रत्येवनदिति वाच्यं सतो घटस्य ध्वंस इत्यादौ विशेषणतया तस्यापि तयान्वा-
न् स्वरूपभेदवादिनां तस्यापि भावाच्चेति द्वितीयेऽपि ध्वंसासमानाधिकरणत्वस्य तत्प्रतियोगित्वे तदनधिकरणत्वं नाम ध्वंसासमाना-
धिकरणत्वानधिकरणत्वं वक्तव्यं न चैतदित्याह न द्वितीय इति यद्यपि कपाले सामानाधिकरण्यमस्ति तथापि तं त्वादिरूपपृथि-
व्यादौ तदभावादसमानाधिकरणत्वानधिकरणत्वं नास्तीत्यर्थः स्वध्वंसेनेति तु तृतीयपक्षदूषणे नैव दूषयिष्यते यत्किंचित्प्रध्वंसा-

किं तत्प्रतियोगित्वं यदनधिकरणत्वं नित्यतामभिदधासि किं तन्निरूपकत्वमुत तेन सहानवस्थितत्वं नाद्यः जातेर्ध्वं-
सोऽन्य इत्यत्र जातेरपि ध्वंसनिरूपकत्वात् न द्वितीयः सत्ताद्रव्यत्वपृथिवीत्वानां घटध्वंसेन सह पृथिव्यामनवस्थाना-
त् नापि तृतीयः जातिप्रध्वंसस्यैवाप्रसिद्धतया तत्प्रतियोगित्वस्याप्रसिद्धेः ननु ब्रह्मणो न वापि नित्यत्वं सिद्धं तत्किं जा-
नावपलपसि मैवं ब्रह्मणो निर्धर्मकतया नित्यत्वधर्मानधिकरणत्वात् कथं तर्हि तद्व्यपदेश इति चेत् विनाशस्य दुर्निरू-
पत्वादिति ब्रूमः ननु घटादेरपि विनाशो दुर्निरूपः सत्यं स्वरूपेणापरमार्थस्य तदनिरूपणे नित्यत्वव्यपदेशो घटादेश्च न तथात्वा ॥

प्रतियोगित्वं संयोगादेरप्यस्तीति तत्र लक्षणस्यातिव्याप्तिरिति द्रष्टव्यं स्वध्वंसप्रतियोगित्वानधिकरणत्वं नित्यत्वमिति तृतीयं पक्षं दूषयति ना-
पीति ननु ब्रह्मणो निर्धर्मकतया नित्यत्वं नास्तीति वक्तुमयुक्तं आकाशवत्सर्वगतश्च नित्यः नित्यं विभुं सर्वगतं चेत्यादिश्रुतिविरोधादिति शंकते क-
थं तर्हीति नात्र नित्यत्वं नाम धर्मो विवक्षितः अद्वैतश्रुतिविरोधात् किंतु दुर्निरूपविनाशत्वादिति परिहरति विनाशस्येति ननु ब्रह्मव्यतिरिक्ता-
निर्वाच्यत्ववादिनो घटादेरपि विनाशो दुर्निरूप इत्याशंक्य परिहरति सत्यं स्वरूपेणेति यथा हि रज्जुसर्पादेर्नाशो दुर्निरूपः न चैतावता तेषु नित्य-
त्वव्यपदेशस्तत्कस्य हेतोर्धर्मिणो दुर्निरूपत्वात्तथा वियदादेरपि ब्रह्मणस्तु स्वरूपेणापि परमार्थत्वात् स्वरूपेणापरमार्थत्वे सति दुर्निरूपविनाशत्व

२ म.
२३

नन्वस्मन्मतेपीदमेव नित्यत्वं सामान्यस्य भवत्विति तत्राह त्वंपुनरिति तथाहि सामान्यादीनां त्रयाणां स्वात्मसत्त्वं बुद्धिलक्षणत्व मकार्यत्व
मकारणत्वमसामान्यविशेषवत्वं नित्यत्वमर्थशब्दानभिधेयत्वं चेति प्रशस्तपादभाष्यं तत्र च स्वात्मसत्त्वं स्वरूपसत्त्वं बुद्धिलक्षणत्वं बुद्धिमिद्धो
नानिलस्यंते अनुवृत्तप्रत्ययकारणं सामान्यं अत्यंतव्यावृत्तबुद्धिहेतवोंत्या विशेषाः इहप्रत्ययहेतुः समवायः अकारणत्वं चानात्मगुण
कार्यं प्रति तत्र च नित्यत्वं साधर्म्यमभिप्रेतं साधर्म्यं समानो धर्म इत्यर्थः एतेन नित्यत्वे सत्यनेकसमवेतमिति मानमनोहरकारोक्तलक्षण
मपि निरस्तं शिवादित्यमिश्रोक्तलक्षणमुद्भावयति अस्तु तर्हीति सत्तानाश्रयः सामान्यमित्युक्ते अभावसमवाययोरतिव्याप्तिः स्यात्तद
र्थं समवेतमित्युक्तं तावति चान्त्यविशेषेष्वतिव्याप्तिस्तदर्थं नित्यमात्रसमवेतान्यत्वे सतीत्युक्तं एवं चात्मत्वमनस्त्वयोरव्याप्तिस्तयोर्नित्यमा

त्वंपुनः सामान्यादीनां त्रयाणां स्वात्मसत्त्वं बुद्धिलक्षणत्वमित्यादिभाष्यदर्शनान्नित्यत्वं साधर्म्यमिच्छसि अस्तु तर्हि स-
नस्त्वात्मत्वातिरिक्तनित्यमात्रसमवेतान्यत्वे सति समवेतं सत्तानाश्रयः सामान्यमिति सामान्यलक्षणं चेन्न यतः।
जातेरव्याप्यसिद्धेश्च सत्तादेरप्यसिद्धितः तदनाश्रयतान्यत्वलक्षणेऽन्योन्यसंश्रयः ११ जातिमात्रलक्षणासिद्धेस
नात्मत्वमनस्त्वसिद्धिस्तत्सिद्धौ चात्मत्वमनस्त्वातिरिक्तसत्तानाश्रयइतिलक्षणविशेषणासिद्धिरिति परस्पराश्रय
ता तथाहि घटवृत्तिवृत्तित्वे सत्यात्मवृत्तिर्जातिः सत्तेति परैरभ्युपेयते ॥ ११ त्रसमवेतत्वात् अतउक्तमात्मत्वमनस्त्वाति

रिक्तेति अत आत्मत्वमनस्त्वातिरिक्तं यन्नित्यमात्रसमवेतं तदन्यत्वे सतीत्यर्थः द्रव्यगुणकर्मव्यावर्त्तनाय सत्तानाश्रय इत्युक्तं जातिरेव
तावदव्यापिन सिद्धा अत एव तद्विशेषसत्तात्मत्वमनस्त्वानामप्यसिद्धिस्तत्श्च सत्तानाश्रयत्वेनात्मत्वमनस्त्वातिरिक्तत्वेन च सामान्यल
क्षणेऽन्योन्याश्रयः स्यादिति संग्रहश्लोकार्थः अन्योन्यसंश्रयं विशदयति जातिमात्रेति ननु यद्यपि सत्तादीनां जातिभेदत्वं तथापि न तेषां
सामान्यज्ञानाधीननिरूपणमतो नान्योन्याश्रयतेति तत्राह तथाहीति जातिः सत्तेत्युक्ते गुणत्वादावतिव्याप्तिरत उक्तमात्मवृत्तीति तथा
प्यात्मत्वेऽतिव्याप्तिस्तदर्थं घटवृत्तीत्युक्तं तथापि द्रव्यत्वेति व्याप्तिस्तदर्थं घटवृत्तिवृत्तीत्युक्तं घटवर्त्तिनो ये गुणकर्मणि तद्वृत्तीत्यर्थः ॥ ९ ॥

२
चि·प्र·
टी·न·
२४

ननु घटवृत्तिवृत्तिरात्मवृत्तिभावः सत्ता अथवा तथाविधो धर्मविशेषः कश्चिदिति सत्तालक्षणमस्तु न जातिविशेषणं प्रयुक्तं येनान्योन्या-
श्रयता स्यादिति तत्राह नधर्ममात्रमिति घटवृत्तीति रूपादेरात्मनश्चयोर्धर्मभूतो घटान्योन्याभावस्तत्रैव लक्षणमस्तीत्यतिव्याप्तिरित्यर्थः भावमा-
त्रत्वे दूषणमाह भावेति अस्ति हि गुणकर्मणोरात्मनश्चापरजातिमत्त्वधर्मः स च भावरूपोऽप्रतिषेधात्मकत्वादिति तस्यातिप्रसंगात् किंच
विशिष्टरूपमिदं विशिष्टं च विशेषणविशेष्यतत्संबंधात्मकं न च तेषां नियमेनाभावत्वमिति कथमीदृशानामभावान्तर्भावः यथाहु विशे-
षणं विशेष्यं च तत्संबंधफलार्पकं ज्ञानरूपं स्वसामर्थ्याद्वैशिष्ट्यमिति कीर्त्यते इति तत्रश्च तत्रातिव्याप्तिरित्यर्थः आत्मत्वमनस्त्वाति रि-
क्तेत्यंशेऽप्यन्योन्याश्रयमाह तथात्मत्वेति तयोरपि जातिगर्भत्वाल्लक्षणस्येत्याह तथाहीति सत्ताद्रव्यत्वयोरतिव्याप्तिपरिहाराय घटा

न धर्ममात्रं भावमात्रं वा धर्ममात्रत्वे घटवृत्तिरूपादेरात्मनश्चान्योन्याभावेऽतिव्याप्तेः भावमात्रत्वे वा परजातिमत्त्वलक्षणे
धर्मे गुणकर्मणोरात्मनि च वर्तमाने ऽतिव्याप्तेस्तादवस्थ्यात् अतः परिशेषादेवं विशेषिता जातिः सत्तेति वाच्यं तथा सति कथं नान्यो-
न्याश्रयता तथात्मत्वमनस्त्वलक्षणे च तथा हि घटावृत्तित्वे सत्यात्मनिष्ठात्यन्ताभावाप्रतियोगिनी जातिरात्मत्वं एवमाकाशावृ ॥
त्तित्वे सति मनोनिष्ठात्यन्ताभावाप्रतियोगिनी जातिर्मनस्त्वं ननु धर्ममात्रं भावमात्रं वा तदुभयनिष्ठान्योन्याभावे बहुत्वसंख्यायां ॥
च व्यभिचारात् तथा च तदतिरिक्तत्वलक्षणे कथं न प्राचीनदोषानुषंगः कथं च सत्सदित्यबाधितप्रत्यये सति सत्तायोगित्वादाव

वृत्तीत्युक्तं उदकत्वगुणत्वाद्यतिव्याप्तिवारणाय आत्मनिष्ठात्यन्ताभावाप्रतियोगिनीत्युक्तं मनस्त्वलक्षणमाह एवमिति अत्रापि सत्ताद्रव्यत्वा-
द्यतिव्याप्तिनिवृत्त्यर्थमाकाशावृत्तीत्युक्तं घटत्वादिष्विति व्याप्तिपरिहाराय मनोनिष्ठेत्यादिविशेषणं यदि हि धर्ममात्रमात्मत्वमनस्त्वे स्यातां त-
दा तदुभयनिष्ठावात्ममनोनिष्ठौ यावन्योन्याभावौ आत्मनि घटान्योन्याभावो मनसि चाकाशान्योन्याभावस्तयोरतिव्याप्ती स्यातां अथ भावमात्रं तदा भ-
त्मवृत्तिज्ञाने मनोनिष्ठबहुत्वसंख्यायां चातिव्याप्ती स्यातामित्यर्थः बहुत्वसंख्याग्रहणं ज्ञानादेरप्युपलक्षणं प्राचीनदोषोऽन्योन्याश्रयः सत्तानाश्र-
यवृत्तिविशेषणं सत्ताव्यतिरिक्तगोत्वादिष्वसिद्धं गोत्वं सद्द्रव्यत्वं सदित्यबाधितानुवृत्तप्रत्ययवशात्तेषामपि सत्ताश्रयत्वप्रतीतेरित्याह क-

एम·
२४

ननु गोत्वादिषु सदिति प्रत्ययो न सत्तानिमित्तः किंतु सत्तया सहैकस्मिन्नर्थे गवादौ समवायादिति तत्राह नचैकार्थेति गुणकर्मणोर
पि द्रव्येणैकार्थसमवायात्तदुपपत्त्या सत्ताभावः प्रसज्येत एवमवयविष्वपीति भावः किंच यदि सत्त्वैकार्थसमवायात्तत्र सदिति व्यव
हारस्तर्हि सत्तायाः सत्तान्तराभावेन समवायस्य चासमवायित्वेन सत्त्वैकार्थसमवायो नास्तीति सद्बुद्धिस्तत्र न स्यादित्याह सत्तास-
मवाययोरिति किंच सत्तायामेवाव्याप्तिस्तस्याः सत्ताश्रयत्वात् न चात्माश्रयान्योन्याश्रयानवस्थाउत्पत्तिज्ञप्तिप्रतिबंधकतया प्रमेयत्वा-
दाविव भवन्मते दूषणत्वाभावादिति विवादाध्यासितमिति गोत्वं विवक्षितं जातिरहितत्वादित्युक्ते साध्याविशिष्टता तदर्थमपरग्रहणं न

नचैकार्थसमवायात्सदिति प्रत्ययो गुणकर्मणोरपि तथोपपत्तौ सत्ताभावप्रसंगात् सत्तासमवाययोः सदिति-
व्यवहाराभावप्रसंगाच्च विवादाध्यासितं सत्तारहितमपरजातिरहितत्वात् सत्तावदिति बाधकमिति चेन्नैवं सद्गो-
त्वं सदश्वत्वमित्यादिप्रत्यक्षविरोधे कालात्ययापदिष्टत्वादन्यथा गुणकर्मणी सत्तारहिते ऽद्रव्यत्वात्सत्तावदित्यपि
स्यादथ तत्रानुभवविरोधः स तु प्रकृतेपि दंडवारितः तस्मादसंभवित्वात्सत्ताश्रयत्वमित्यलक्षणमेतत् विशेषल-
क्षणमपि दुर्निरूपं तथाहि नित्येष्वेव द्रव्येष्वेव वर्त्तन एव व्येने विशेषाद्विनिलक्षणं पतनः॥ हि द्रव्यत्वादिषु द्रव्यत्वादिकमस्ती-
तितेपि मतमिति भावः यदि प्रतीतावनादरस्तर्हि गुणादावपि न जातिसिद्धिरुक्तानुमानस्य तत्रापि प्रचारादित्याह अन्यथेति शिवादि-
त्यमिश्रलक्षणमुपसंहरति तस्मादिति कंदलीकारोक्तलक्षणमनुवदति नित्येष्वेवेति द्रव्येष्वेव वर्त्तनेनेति विशेषाद्युक्ते ऽभावसामान्यसम-
वायेष्वतिव्याप्तिस्तदर्थं द्रव्येष्वेवेत्युक्तं तथापि गुणकर्मणोः प्रागभावप्रध्वंसयोश्चातिव्याप्तिस्तदर्थं नित्येष्वेवेत्युक्तं तथाप्याकाशात्मनसोस्त्व-
योर्नित्यद्रव्यगतगुणविशेषेषु चातिव्याप्तिरत उक्तं वर्त्तन एवेति अनेन कदाचिद्वृत्तिः क्वचिद्वृत्तिश्च व्यावर्त्यते तेन अनित्यद्रव्ये कादाचित्कक्वाचि-
त्कानां ज्ञानादीनामकादाचित्कानामपि क्वाचित्कानां मनस्त्वादीनां व्यवच्छेदस्तेषां कालतो देशतश्चात्मनेरपि विद्यमानत्वाद्वर्त्तन एवेत्ययमंशो नस

नद्दलक्षणमित्युक्तं तत्र दूषणं श्लोकेन संगृह्णाति नित्यद्रव्येति यदिदं वर्त्तत एवेत्ययोगपरिहारतो नित्यद्रव्यैकवृत्तित्वं लक्ष-
णमुक्तं तत्तल्लक्षणं कुतः त्वन्मते आत्मत्वमनस्त्वयोरतिव्याप्तेरिति श्लोकयोजना अद्वैतवादिनो मनसो नित्यत्वं नास्ति नाप्यात्मत्व-
जातिरित्यत उक्तं तवेति संग्रहं विवृणोति आत्मत्वमिति पूर्ववादीहृदयं शंकते ननु कालेति नहि सर्वनित्यद्रव्यवृत्तित्वं किमे-
कैकविशेषलक्षणं किंवा संभूयमानानामन्योऽनुगतलक्षणायोगात्प्रथमे प्राह प्रतिविशेषमिति नन्वन्त्य एव पक्षः न चानुगतलक्ष-
णासिद्धिरयोगान्ययोगव्यवच्छेदेन नित्यद्रव्यावृत्तित्वानधिकरणत्वे सत्ययोगव्यवच्छेदेन नित्यद्रव्यवृत्तिवृत्तिजातिमत्त्वमिति।

नित्यद्रव्यैकवृत्तित्वमयोगपरिहारतः तल्लक्षणमतिव्याप्तेस्तवात्मत्वमनस्त्वयोः १२ आत्मत्वं मनस्त्वं च नित्यद्र-
व्येष्वेव वर्त्तत एवेति तयोरतिव्याप्तिः ननु कालाकाशादिषु नित्यान्तरेष्वसत्त्वान्न तत्सर्वत्र नित्येषु वर्त्तते विशेषास्तु-
नैवं वर्त्तन्त एवेति नियमादिति चेन्न प्रतिविशेषमव्याप्तेः सर्वेषां विशेषाणां सर्वत्राभावात् यज्जातीयमेवं स विशे-
ष इति लक्षणार्थ इति चेन्न विशेषत्वजातेरनंगीकरणात् उपाधेर्विवक्षितत्वाददोष इति चेन्न तदुपाधिसिद्धौ तदु-
पजीविनो लक्षणस्य वैयर्थ्यापातात् असिद्धौ च लक्षणस्य दुरवधारणत्वात् एकद्रव्याः स्वभावसंतो विशेषा इत्यपि न

लक्षणादिति शंकते यज्जातीयमिति अनंगीकरणादिति सामान्यादीनां लक्षणं एकद्रव्यत्वस्य दुर्निरूपत्वात्तथा हि॥
त्रयाणामित्युपक्रम्यासामान्यविशेष—वत्त्वमिति प्रशस्तपादैः साधर्म्याभिधानादन्त्यविशेषत्वहानेश्च जातिमत्त्वेऽप्यन्यतव्यावृत्तत्वेन स्वान
अतएवाश्रयस्यापि नान्यतव्यावर्त्तकाः स्युः ननु यज्जातीयमित्यत्र यदुपाधिकमित्युपाधिसामान्यं विवक्षितमित्याशंक्य तस्यैवाव्याप्त्यतिव्या-
प्तिरहितस्य लक्षणत्वमस्त्ववश्याश्रयणीयत्वात् कृतं तदुपजीविनानेनेति दूषयति ननूपाधिसिद्धाविति एतदेव विपक्षे बाधकतर्केण द्रढय-
ति असिद्धौ चेति श्रीवल्लभोदयनयोर्लक्षणमनुवदति एकद्रव्या इति स्वभावसंतो विशेषा इत्युक्ते सामान्यसमवाययोरतिव्याप्तिरत
उक्तं एकद्रव्या इति एकमेव द्रव्यं आश्रयो येषां तत्त्वं च यदि संयोगादिवदनेकतेन तथोक्ताः एकद्रव्या इत्येवोक्ते रूपादिगुणकर्मणोरतिव्या-

तदेतदेकद्रव्यानिरुक्त्या दूषयति किमिदमित्यादिना एकत्वसंख्यावतिवर्त्तमानत्वे सति स्वभावसत्त्वं द्रव्यगतसामान्येष्वतीत्यतिव्याप्तिरित्याह। द्रव्यनिष्ठेति स्वभावसत्त्वे हेतुः सत्तासामान्येति सामान्यादीनां त्रयाणां स्वात्मसत्त्वमिति भाष्यमिति भावः अद्विष्ठत्वमिति कोर्थः क्वचिद्वर्त्तमानत्वे सति क्वचिद्वर्त्तमानत्वं द्विष्ठत्वं तदभावोऽद्विष्ठत्वमिति किंवा स्वाश्रयान्योन्याभाववति वर्त्तमानत्वं द्विष्ठत्वं तदभावोऽद्विष्ठत्वमिति नाद्य इत्याह नप्रथमइति प्राचीनदोषमेवानुषंगयति सामान्यान्यपिहीति सामान्यान्यपि गुणादिषु वर्त्तमानानि गुणादिष्वेकत्र वृत्तित्वे सति तदन्याभावाद्यवृत्तीनीत्युक्तलक्षणाक्रान्तानीत्यर्थः अत एवेत्यतिदिष्टं विशदयति सर्वावृत्तित्वेनेति सामान्यादिष्ववृत्तित्वेन सर्वावृत्तित्वाभावादिति भावः ननु तादृगवृत्तित्वमात्रम

किमिदमेकद्रव्यत्वं किमेकत्वसंख्याविशिष्टद्रव्यसमवेतत्वमुताद्विष्ठत्वं नाद्यः द्रव्यनिष्ठसामान्येष्वतिव्याप्तेस्तान्यपिह्येकत्वसंख्याविशिष्टद्रव्यसमवेतानि स्वभावसंतिच सत्तासामान्यरहितत्वात् नापिद्वितीयः विकल्पासहत्वात् तदपि क्वचिद्वृत्तित्वे सत्यन्यावृत्तित्वमुतास्वाश्रयप्रतियोगिकान्योन्याभाववदवृत्तित्वं नप्रथमः प्राचीनदोषानुषंगात् सामान्यान्यपिहि किंचिन्निष्ठत्वे सति तदन्यावृत्तीनि सर्वत्रावृत्तेरेत एवन द्वितीयः सर्वावृत्तित्वेनाश्रयप्रतियोगिकान्योन्याभाववदवृत्तित्वस्यापि सामान्येषु भावात् स्वाश्रयप्रतियोगिकान्योन्याभाववद्वृत्तित्वानधिकरणत्वं विवक्षितमिति चेन्न स्वशब्देन विशेषविवक्षायामात्माश्रयप्रसंगात् एतदात्मवृत्तित्वे सत्येतदन्यनित्यद्रव्यावृत्तिरेतद्विशेष इति प्रतिव्यक्तिलक्षणं विवक्षितमिति चेन्नान्योन्याश्रयत्वात्॥ एवं तन विवक्षितं किंतु स्वाश्रयप्रतियोगि

कान्योन्याभाववद्वृत्तित्वानधिकरणत्वं तत्तत्सामान्येष्वस्ति तेषामनेकवृत्तित्वेनोक्तरूपत्वाभावादिति शंकते स्वाश्रयेति अत्र स्वशब्देन किं प्रकृतविशेषागृह्यते यत्किंचिद्वा द्वितीयेत्वसंभवः प्रथमे विशेषेरेव विशेषलक्षणादात्माश्रयत्वमित्याह नस्वशब्देनेति एकैकविशेषस्य सर्वनित्यद्रव्यवृत्तित्वासंभवेन परदूषणमुक्तं तन्निवृत्त्यर्थं प्रतिविशेषं पृथक्लक्षणं शंकते एतदिति नित्यद्रव्यावृत्तिरेतद्विशेष इत्युक्ते व्याहतिः असिद्धत्वप्यवर्त्तनप्रसंगात्तन्निवृत्त्यर्थं एतदन्यनित्यद्रव्यावृत्तीत्युक्तं तथाप्येतदात्मन्यतिव्याप्तिस्तदर्थमेतदात्मवृत्तित्वे सतीत्युक्तं एतदात्मवृत्तिरित्येवोक्ताववात्मत्वादिनार्थान्तरतातदर्थमेतदन्यनित्यद्रव्यावृत्तिरित्युक्तं अत्र सत्ताराहित्यमप्यवगंतव्यं वृत्तिशब्देन समवायस्य च विवक्षा इतरथा तन्मात्रवृत्त्यन्योन्याभावा

२
वि·प्र·
टी·न·
२६

अन्योन्याश्रयं विघटयति नित्येति तथाहि अनित्यद्रव्याणामाश्रयविशेषैरेव व्यावृत्तिसिद्धेर्न तेषु विशेषसद्भावे प्रमाणं गुणकर्मणो
रपि स्वाश्रयविशेषैरेव व्यावृत्तिसिद्धेः सामान्यमात्राश्रयत्वाच्च तेषु न विशेषसिद्धौ किंचिदस्ति प्रमाणं नित्यानामपि विभिन्नलक्षणानां पार्थि
वाप्यपरमाणवादीनां पार्थिवत्वादिनैव व्यावृत्तिरित्यतस्तुल्यलक्षणनित्यद्रव्यव्यावृत्तिहेतवो विशेषाः स्वीक्रियंते एवं च सति तादृग्वि-
शेषसिद्धावेतदात्मसिद्धिरेतदात्मज्ञप्तौ च विशेषज्ञप्तिरिति परस्पराश्रयत्वमित्यर्थः अथानुमानादिप्रमाणं तरेणैतदात्मादिरूपनित्य-
द्रव्यव्यावृत्त्यधिगतिस्तर्हि विशेषकल्पनं मुधा न च योगिनां प्रत्यक्षतया व्यावृत्त्यधिगत्यर्थं तत्कल्पनं पृथक्त्वेनैव तदुपपत्तेर्वक्ष्यमाणत्वा
दित्यभिसंधिराह अन्यत एव चेदिति किंचैतदात्मविशिष्टस्यैतल्लक्षणमुपलक्षितस्य वा आद्ये विशेषणासिद्धिः नह्येतदात्मविशिष्टस्यैत

नित्यद्रव्याणां भेदाधिगतिहेतवो विशेषाः परैरभ्युपगम्यन्ते न तत्र विशेषसिद्धौ नित्यद्रव्याणां भेदाधिगतिस्तत्सि-
द्धौ च विशेषाधिगतिरिति कथं नान्योन्याश्रयः अन्यत एव चेद्भेदाधिगमस्तदा विशेषाधिगमो व्यर्थः स्यात् आ-
त्मत्वमनस्त्वातिरिक्तत्वे सति नित्यमात्रसमवेतः सत्तारहितो विशेष इत्यपि न लक्षणं परममहत्त्वसामान्येऽतिव्याप्तेः।
अस्ति हीदं परममहदिदं परममहदित्यनुवृत्तप्रत्ययवेद्यापरममहत्परिमाणेषु परममहत्त्वं जातिः॥ दात्मवृत्तित्वं संभवत्यंशत

आत्माश्रयत्वप्रसंगात् द्वितीये त्वसंभव एतदात्मोपलक्षितस्याप्येतदात्मवृत्तित्वाभावात् तत्कस्य हेतोस्तदपि ह्येतदुपलक्षितत्वविशिष्टं तदु
पलक्षितं वा स्यादंत्ये ऽनवस्था आद्ये फलतो विशेषणपक्षान्न विशेष इति शिवादित्यमिश्रोक्तलक्षणमुद्भाव्य दूषयति आत्मत्वेति सत्तारहितो विशे-
ष इत्युक्ते समवायाभावयोरतिव्याप्तिस्तदर्थं समवेत इत्युक्तं तथापि सामान्येऽतिव्याप्तिस्तदर्थं नित्यमात्रेत्युक्तं तथाप्यात्मत्वमनस्त्वयोरतिव्याप्ति-
रत उक्तमात्मत्वमनस्त्वातिरिक्तत्वे सतीति सत्तारहित इति द्रव्यादिव्यवच्छेदः तदेतदतिव्याप्त्या दूषयति परममहत्त्वेति ननु परममहत्त्वं
नाम न सामान्यमस्ति प्रमाणाभावादिति तत्राह अस्तीति अनुवृत्तप्रत्ययस्यासति बाधके जातिविषयत्वनियमाद्धि त्वदंगीकारः स चात्रा-
प्यस्तीत्यर्थः परममहत्परिमाणं महत्त्वावान्तरजातिमन्महत्परिमाणत्वाद्घस्तविनस्यादिपरिमाणवदित्यनुमानादपि तत्सिद्धिरवगंतव्या॥

एम·
२६

ननु नात्र नियतव्यंजकमस्ति नित्यपरिमाणत्वस्य पारिमाण्डल्यसाधारण्यादिति तत्राह नचतत्रेति नित्यपरिमाणत्वं व्यंजकम-
पितु नित्यमहत्परिमाणत्वमिति भावः ननु तर्हि तेनैव व्यंजकेनानुवृत्तव्यवहारसिद्धावधिकजातिकल्पना मुधेति तत्राह तर्हीति॥
आभासस्समानयोगक्षेमत्वात्साशंक्य परिहरति नचैवमिति तत्र जातिसंकरप्रसंगो बाधकः नेह तथास्ति किंचिदित्याह तत्रेति परा-
परभावाभावमेव विवृणोति यदीति पृथिवीत्वस्य परत्वे तन्न्यूनवृत्तेः परमाणुत्वस्य तद्रहितसलिलपरमाणुषु वृत्तिर्न स्यादस्ति च त-
दित्यर्थः परमाणुत्वस्य परत्वे दूषणमाह अथापरमिति परमाणुत्वस्य परत्वे तन्न्यूनवृत्तेः पृथिवीत्वस्य तद्रहितद्व्यणुकादिषु वृत्तिर्न स्यादित्य-
र्थः समुदायदूषणमुक्त्वाऽवयवानिरूपणादपि दूषयति नित्यमात्रेति एकनित्यवृत्तित्वं सर्वनित्यवृत्तित्वं वा विवक्षितं आद्ये सर्वविशेषाव्या-

नच तत्र व्यंजकाभावः नित्यमहत्परिमाणस्यैव तद्व्यंजकत्वात् तर्हि तेनैव परममहत्त्वव्यवहारोपपत्तौ व्यर्था जातिकल्पनेति।
च न वाच्यं व्यंजकमादाय जातिनिरासे गोत्वादेरपि प्रत्याख्यानप्रसंगात् नचैवं परमाणुत्वजातेरभ्युपगमप्रसंगस्तत्र पृथि-
वीत्वादिना परापरभावस्यानिरूपणात् यदि पृथिवीत्वं परं तर्हि परमाणुत्वस्य पृथिवीत्वाव्यभिचारात्सलिलादिपरमाणु-
षु परमाणुत्वं न स्यात् अथापरं तर्हि परमाणुत्वस्य परत्वे पृथिवीत्वं परमाणुत्वं न व्यभिचरेदिति सर्वा पृथिवी परमाणुरेव स्या-
त्तेन न परमाणुत्वं जातिः न चैवमत्र बाधकमस्तीति परममहत्त्वजातौ भवेदेवा नित्यव्याप्तिः नित्यमात्रसमवेतत्वं च किंचिन्नि-
त्यसमवेतत्वं सर्वनित्यसमवेतत्वं वा उभयथापि लक्षणस्याव्याप्तिः सर्वेषां विशेषाणामेकनिष्ठत्वाभावात्सर्वनिष्ठत्वाभावा-

प्तिः सर्वविशेषाणामेकनित्यद्रव्यवृत्त्यभावात् द्वितीये न क्वापि संभवः एकैकविशेषस्य सर्वनित्यद्रव्यावृत्तेरिति खण्डलकार्थः एकनि-
त्यद्रव्यवृत्तित्वमपि किमेकत्वनित्यत्वविशिष्टद्रव्यवृत्तित्वं तदुपलक्षितद्रव्यवृत्तित्वं वा द्रव्यमात्रवृत्तित्वं वा आद्ये संख्यानित्यत्वयोरपि विशे-
षाधारत्वप्रसंगादसंभवि लक्षणं द्वितीयतृतीययोस्तु द्रव्यमात्रवृत्तित्वं स्यादुपलक्षणस्य कार्य्यानन्वयात् तथा च सर्वद्रव्यसामान्येऽतिव्या-
प्तिः तथा सत्ताविशिष्टे तज्ज्ञानसुखादावतिव्याप्तिः तेषामप्युक्तलक्षणवत्त्वात् सत्ताश्रयत्वं तत्रास्तीति चेन्नूनं बधिरदुर्भवता नाभाति कथमन्य-
था सत्ताविशिष्ट इति विशेषणं श्रुत्वैव तः शंकास्यात् नहि सत्ताविशिष्टेऽपि सत्तास्ति अंशतः आत्माश्रयप्रसंगादिति॥ ००७ ॥

नच नित्यत्वानधिकरणासमवेतत्वं तदितिवाच्यं नित्यमात्रनिष्ठकार्य्यप्रतियोगिकप्रागभावप्रध्वंसयोर्व्यभिचारात् नच भावत्वविशेषणं पूर्वोक्तजा
तावतिव्याप्तेः किंच किमेतैर्लक्षणैर्लक्ष्यं द्रव्यादिपंचकमुतातिरिक्तं नाद्यः असिद्धेर्नान्त्यः तत्र प्रमाणाभावेनासिद्धत्वादित्यभिसंधिराह किंचात्र प्रमाणमि।
ति श्रीवल्लभीयमनुमानद्वयं शंकते समानेति अत्र च जातिभिर्गुणैः कर्मभिस्तदारब्धकार्यैश्च व्यावर्त्तकैरर्थान्तरतापरिहारायपदैः समानतना
ग्रहणं निरवयवद्रव्यत्वादिभिर्घटादिव्यावर्त्तकैरर्थान्तरतापरिहारायान्योन्येत्युक्तं गवादिषु च गोत्वादिना साध्यप्रसिद्धिः तथासत्वेति भावः।
संसर्गिणीत्युक्ते सामान्यसमवायासंसर्गित्वसाधनेन तत्सिद्धिपर्यवसानादर्थान्तरता तथा संसर्गिणीत्युक्तेऽभावासंसर्गित्वपर्यवसापि
तथार्थान्तरता तदुभयनिवृत्त्यर्थं सामान्यसमवायातिरिक्तभावासंसर्गिणीत्युक्तं यस्माच्च भावात्सा व्यावर्त्यते सोऽन्यविशेषः द्रव्यादित्रयासंस
र्गित्वस्य व्याघातादिति दूषयति नैवमित्यादिना अत्र किमयोगिनः प्रतिव्यावर्त्तकधर्मसमवायित्वं विवक्षितं योगिनः प्रतिवा नाद्य स्तेषां।

किंचात्र प्रमाणं समानजातिगुणकर्मकार्य्याः परमाणवोऽन्योन्यव्यावर्त्तकधर्मसमवायिनः द्रव्यत्वाद्घटादिवत् तथासता
सामान्यसमवायातिरिक्तभावासंसर्गिणी जातित्वाद्घटत्ववदिति लीलावतीकारोक्तमनुमानं प्रमाणमिति चेन्नैवमाद्यप्र
योगे पृथक्त्वेन सिद्धसाधनत्वात् नच वाच्यं पृथक्त्वस्य पृथक्त्वान्तरसदृशत्वान्न ततो व्यावृत्तत्वबुद्धिसिद्धिः या हि यतो व्यावृत्तिबुद्धिः
सा न तत्सदृशधर्मकार्य्या यथाश्वात्कुंजरस्य तद्गणैरपि नागवन्नराश्वाद्व्यावृत्तबुद्धिः सदृशधर्मकार्य्येति ॥ परमाणुसाक्षात्काराभावाद्द्विती
ये तु योगिनः परमाणुव्यावृत्तिज्ञानमेव कुतः सिद्धं येन व्यावर्त्तकधर्मापेक्षा अथ ब्रूयात्समानजातिगुणकर्मकार्य्याः परमाणवोऽन्योन्यव्याव
र्त्तकसमवायिधर्मविशिष्टबुद्धिविषया द्रव्यत्वाद्घटवदिति तत्राह पृथक्त्वेनेति तदाह पतंजलिः योगिविवेकजज्ञानविषयं दर्शयन्पृथ।
क्त्वदूषणावसरे तत्रापि देशकाललक्षणभेदो मूर्तिविवधिजातिभेदश्चान्यत्वधीहेतुरिति तत्त्वसारटीकाकारोपीति सर्वभेदप्रत्ययस्यान्यथा
सिद्धेर्नान्त्यविशेषकल्पनेति भूतचरेण देहसंबंधेन मुक्तात्मभेदो योगिबुद्धिगम्य उन्नेय इति च इममपि दोषं स्वपरिजहारयन्नाह नच पृ
थक्त्वादिकमेव परमाण्वंतरात्परमाणोर्व्यावर्त्तकबुद्धिजनकमस्तु तस्य परमाण्वंतरवृत्तिपृथक्त्वादिना सदृशत्वात् या हि यतो व्यावृत्तिबुद्धिः।
सा न तत्सदृशधर्मकार्य्या यथाश्वात्कुंजरस्य तद्गणैरपि नागवन्नराश्वाद्व्यावृत्तिस्तत्सदृशधर्मकार्य्येति तदेतदनूद्य निराचष्टे नच वाच्यमित्यादिना न तत्स

नचवाच्यमित्युक्तं तत्रहेतुमाह अयंविशेषइति एतेननित्यद्रव्यव्यावृत्तिहेतवोन्त्यविशेषाइत्यपिलक्षणंप्रतिक्षिप्तं द्वितीयोपिप्रयोगइत्यप्रमाणतांनाभ्युपैतीत्युत्तरश्लोकस्यपदेनान्वयः तत्रहेतुभूतानि दूषणानिश्लोकेनसंगृह्णाति आश्रयेति आश्रयासिद्ध्यप्रसिद्धविशेषणतयोर्यथायथं प्राभाकरगणांभाट्टानां चसंबंधः इदमेवदूषणद्वयंविवृणोति सत्ताजातेरित्यादिना सर्वसाधारणंचार्थांतरत्वंदूषणमाह विशेषास्वेति सामान्यसमवायातिरिक्तभावासंसर्गित्वंसाध्यमानेननियमेनतत्सत्तांसाधयति तदभावेपितदसंसर्गित्वोपपत्तेः नहीदमसंसर्गित्वंनामविभागःयेन समवायिकारणतयातस्यापिसत्त्वमपेक्षेत नचतदसंसर्गित्वस्यतन्निष्ठान्यन्ताभावप्रतियोगित्वस्यधर्म्यपेक्षेतिवाच्यं अत्यंतासतोपिप्रति।

अयंविशेषोयंचविशेषइतिविशेषेष्वपिसदृशबुद्धेःस्वीकारात् द्वितीयोपिप्रयोगः आश्रयासिद्धिदुष्टत्वादप्रसिद्धविशेषणात् प्रमाणतामभ्युपैतिनप्राभाकरभाट्टयोः ॥ २३ ॥ सत्ताजातेरनंगीकारात्प्राभाकरंप्रत्याश्रयासिद्धिरुद्दिष्टा एवंसमवायस्यचानंगीकाराद्भाट्टंप्रतिसमवायातिरिक्तभावासंसर्गित्वप्रसिद्धविशेषणःपक्षः विशेषाख्यभावानभ्युपगमेपितदसंसर्गित्वसिद्धेरर्थांतरतानाच किंच सामान्यसमवायातिरिक्तभावशब्देनद्रव्यगुणकर्माण्यभिधीयंते किंवाविशेषाभावमात्रंवानाद्योऽपसिद्धांतापातात् सत्तायाद्रव्यगुणकर्मसुवृत्तेःस्वयमंगीकृतत्वात् नद्वितीयःविशेषाणामद्याप्यसिद्धेरप्रसिद्धविशेषणत्वात् नापितृतीयःविकल्पासहत्वात् असंसर्गित्वपदेनकिमसंसर्गितामात्रंविवक्षितमुतसंसर्गित्वात्यन्ताभावाधिकरणत्वंनाद्यःसिद्धसाधनत्वात् अतीतानागतव्यक्तिभिःसत्तायाअप्यसंसर्गित्वस्वीकारान्नापिद्वितीयोदृष्टांतस्यसाध्यविकलत्वात् ॥ योगित्वधर्मित्वयोरुपपत्तेरितिभावः भंग्यंतरेणाप्रसिद्धविशेषणतामाह किंचेति अपसिद्धांतापत्तिमेवदर्शयति सत्तायाइति अंगीकृतत्वादिति द्रव्यादीनांत्रयाणांसत्तासंबंधइतिभाष्यमतस्तादृशभावात्सत्ताव्यावृत्तिसाधनमयुक्तमितिभावः ननुनविशेषात्मकभावादसंसर्गित्वंसाधयामोयेनाप्रसिद्धविशेषणताअपितुविवक्षितविशेषाद्भावमात्रादितितृतीयंपक्षंदूषयति नापितृतीयइतिभावासंसर्गित्वंत्वासंसर्गित्वसंसर्गित्वाभावमात्रंकिंवासंसर्गित्वात्यंताभावइतिविकल्प्याद्यंदूषयति नाद्यइति तामेवविवृणोति अतीतेतिभावमात्रादसंसर्गित्वमात्रंहिसत्तायाःसिसाधयिषितंतच्चातीतादिभ्यःसिद्धमितिनविशेषसिद्धिःसिद्धसाधनंचेदमर्थांतरत्वम्

साध्यवैकल्यमेव दर्शयति गोत्वस्यापीति बाधश्चद्रष्टव्यः किंच सत्ता सामान्यसमवायविशेषातिरिक्तभावासंसर्गिणीजातित्वाद्गो
त्ववदित्यनुमानसंभवादाभाससमानयोगक्षेमत्वं विपक्षेबाधकतर्काभावाच्च किंताप्रयोजकताच मानमनोहरकारीयमनुमानं शक
ते आकाशमिति एतच्च तदीयविवादपदविवरणं एतच्च विभुद्रव्यमात्रोपलक्षणं समवायीत्युक्ते शब्दादिगुणस्य सामान्यस्य च स
मवायित्वेनार्थांतरतानदर्थं गुणसामान्यव्यतिरिक्ते त्युक्तं घटे च कर्मणा साध्यसिद्धिः आकाशे च तदभावाद्विशेषसिद्धिः अस्यार्थांतरत्वमा
ह मैवमिति शक्तिः पदार्थांतरमिति हि गुरूणां मतं तत्समवायिप्रयुक्तं च दूषणमाह भाट्टेति व्याप्यत्वासिद्धिमाह वेगवत्त्वेति इदमप्याभास

गोत्वस्यापि किंचिद्भावसंसर्गित्वेन तदन्यत्वाभावाधिकरणत्वाभावात् आकाशं गुणसामान्यव्यतिरिक्तसमवायिद्रव्यत्वा
द्घटवदितिमानमनोहरकारोक्तमनुमानांतरमस्तीति चेन्मैवं प्राभाकरं प्रति शक्त्यासिद्धसाधनत्वात् तेन शक्तेः गुणसामान्यव्यतिरिक्ता
यावियदाश्रयतामाश्रयणात्समवायमनभ्युपगच्छतो भाट्टं वेदांतिनो वा प्रसिद्धविशेषणत्वात् वेगवत्त्वोपाध्युपहतत्वाच्च तस्मान्न विशे
षलक्षणमपि साधु नापि समवायलक्षणं तथाहि अयुतसिद्धानामाधार्याधारभूतानामिह प्रत्ययहेतुर्यः संबंधः स समवा
य इति समवायलक्षणं परं परेषां भाष्यं अस्य चायमर्थः युतसिद्धिरुभयोरपि संबंधिनोः परस्परपरिहारेण पृथगाश्रया
श्रयित्वं सा ययोर्नास्ति तावयुतसिद्धौ तयोः संबंधः समवायः यथा तंतुपटयोः तत्र यद्यपि तंतवस्वारंभकावयवाश्रिता-
स्तथापि पटस्य तत्वाश्रितत्वात् द्वयोः परस्परपरिहारेण पृथगाश्रयाश्रयित्वम् ॥ २९ समानयोगक्षेमं शंकयते ऽनुमातुं आका-
शगुणसामान्यविशेषव्यतिरिक्तसमवायिद्रव्यत्वाद्घटवदिति यं च समवायमवलंब्यामुकसमवाय्यमुकसमवायीति निरर्गलं ज-
ल्पसि सोपि समवायो दुर्निरूप इत्याह नापि समवाय इति तत्र प्रशस्तपादोक्तं लक्षणमनुवदति तथाहीयुतसिद्धानामिति भाष्यं व्याच-
क्षाणः कृत्स्नस्य तस्य लक्षणपरतां दर्शयति अस्य चायमर्थ इति तत्रायुतसिद्धेः युतसिद्धिज्ञानाधीनत्वं तावद्दर्शयति युतसिद्धिरिति तंतुक
थं तंतुपटयोरयुतसिद्धिर्यावता पटसंबंधिव्यतिरेकेण तंतूनां स्वावयवाश्रितत्वमिति तत्राह तत्र यद्यपीति उभयोः पृथगाश्रयाश्रितत्वं
युतसिद्धिः न चेह तथा तत्वपटस्य संबंधितंतुव्यतिरिक्ताना श्रितत्वादित्यर्थः ॥

फलितमाह तेनेति द्वयोरपिसंबंध्यतिरिक्ताश्रयाश्रयित्वंयुतसिद्धिस्तद्विपरीताऽयुतसिद्धिरित्यर्थः नन्वियंचेद्युतसिद्धिर्गगनतर्हि प
रमाणूनांयुतसिद्ध्याभवितव्यंचतथाद्युतस्थापरमाण्वोःसंयोगाभावे न द्व्यणुकादिकार्य्यानारंभप्रसंगात्सदातनभावप्रसंगात् द्व्यणुका
देरयुतसिद्धपरमाणुसंबंधस्यसदातनत्वादित्यत आहानित्यानामिति कातर्हिनित्यानांपरमाणुमनसामाकाशादिभिःपरस्परंच
युतसिद्धिरितितत्राह नित्यानांत्विति यथाकाशद्रव्यत्वयोरिति नहितत्रान्यतरस्यापिपृथग्गतिमत्त्वमस्तियथाकाशपरमाण्वोरितिः
भावः उक्तश्चायंविभागः नदीयभाष्येसापुनर्द्वयोरन्यतरस्यवापृथग्गतिमत्त्वमियंतुनित्यानां अनित्यानांतुयुतेष्वाश्रयेषुसमवायो
तेनानित्यानांद्वयोःपृथगाश्रयाश्रयित्वंयुतसिद्धिरयुतसिद्धिस्तुतद्विपरीतानित्यानांतुपृथग्गमनयोगित्वंयुतसिद्धिस्त
द्विपरीतायुतसिद्धिः यथाकाशद्रव्यत्वयोः तत्रायुतसिद्धयोःसंबंधइत्येतावतिलक्षणेसुखस्यधर्मस्यचकार्यकारणभाव
संबंधोपिसमवायस्स्यात् आत्मैकाश्रितत्वयातयोरयुतसिद्धत्वात्तदर्थमाधार्य्याधारभूतानामितिपदं एवमप्याकाशस्या
काशपदस्यचवाच्यवाचकसंबंधःसमवायस्स्यात्तन्निवृत्त्यर्थमिहप्रत्ययहेतुरितिपदंनहितस्मात्संबंधादिहेदमितिबु
द्धिर्जायतेकेवलाकाशस्यैवप्रतीतेः आधार्य्याधारभूतानामिहप्रत्ययहेतुरित्येतावतिलक्षणेकुंडवदरसंबंधेःति
व्याप्तिस्तन्निवृत्त्यर्थमयुतसिद्धानामितिपदंतेनसमस्तमेवेदंसमवायलक्षणमिति॥९ सिद्धिरिति इदानींश्रीधराचार्य्यरीत्या
विशेषणानामुपयोगंदर्शयति तत्रेत्यादिना ननुकथंसुखधर्मयोरयुतसिद्धिरिति तांदर्शयति आत्मैकेति उभयोःपरस्परानाश्रय
त्वेसतिपरस्पराश्रयातिरिक्ताश्रयत्वंहियुतसिद्धिस्तद्राहित्यंचानयोरस्तीतिभावः इदन्तुचिन्त्यं कथमनयोःपरस्पराश्रयातिरिक्ता
नाश्रयोरयुतसिद्धिरिति द्वयोःपृथगाश्रयाश्रयित्वाभावस्यैवायुतसिद्धत्वोपपत्तौपरस्परपरिहारविशेषणवैयर्थ्यात् नचनित्य
रीत्याऽनित्यत्वात् तृतीयविशेषणकृत्यमाह एवमपीति अस्याकाशतद्वाचकाकाशादिपदयोरयुतसिद्धिराधाराधेयभावश्चाकाश
विशेषगुणत्वात्तस्येतिभावः इतश्चारभ्यासिद्धांतोपक्रमंनिगदव्याख्यातं॥ ॥ः

कंदलीकारइति किरणावलीकारपक्षेहिनसमस्तमिदंभाष्यंलक्षणमपित्वयुतसिद्धानांसंबंधइत्येतावत् तेनचनित्यःसंबंधइ
तिलक्षणमुक्तंभवति इहप्रत्ययहेतुरिति चतत्रप्रमाणोपन्यासः इहप्रत्ययस्यचनिर्विषयत्वेनासंभवपरिहारायाधाराधेयभा
वानामितिविषयनिर्देशइतिभाष्ययोजनेतिभावः तदेतद्दूषयति तदसदिति युतसिद्धिपुरस्कारेणयदिदंलक्षणमुक्तंतत्रस्यात्तु
तःविशेषणविशेष्यत्वसंबंधेव्यभिचारादितिश्लोकयोजनाउत्तरार्द्धंविवृणोति इहभूतलइति ननुयद्यपितयोराधाराधेयभावः
प्रतीयतेतथापिकथमयुतसिद्धिरितितत्राह अस्तिहीति अन्यतरस्यपृथगाश्रयाश्रयित्वाभावेभवत्येवायुतसिद्धिरितिभावःनिगद

कंदलीकारस्तदसत् तस्मादयुतसिद्धादिसमवायस्यलक्षणं विशेषणविशेष्यत्वसंबंधेव्यभिचारतः २४ इहभूतलेघ
टाभावइतिविशेषणविशेष्यभावलक्षणेपिसंबंधेलक्षणस्यातिव्याप्तिरस्तिहितत्रायुतसिद्धिर्भूतलघटाभावयोर्भूतल
स्यस्वावयवाश्रितत्वेप्यभावस्यभूतलातिरिक्ताश्रयाभावात् अस्तिचाधाराधारभावइहप्रत्ययश्च॥
अथभावयोरीदृशःसंबंधःसमवायः तथापीहपटेरूपसमवायोरूपसमवायवान्पटइतिविशेषणविशेष्यभावेलक्षण
स्यातिव्याप्तिरुक्तलक्षणस्यतत्रापिसंभवात् अथगुणगुणिनोःक्रियाकारकयोरवयवावयविनोर्जातिजातिमतोर्विशे
षतद्वतोश्चयःसंबंधउक्तरूपःसमवायइतिचेत्तत्तेषामेवान्योन्यविशेषणविशेष्यभावेतिव्याप्तेः॥ ॥

व्याख्यानेनग्रंथेनलक्षणविशेषंतत्रवर्णयति अस्तिचेति विशेषणांतरंशंकते अथेति तथापिभावरूपगुणगुण्यादिनिष्ठसमवा
यसमवायिगतविशेषणविशेष्यभावेतिव्याप्तिरित्याह तथापीति शंकते अथगुणगुणिनोरिति क्रियाकारकयोःकर्मतद्वतोरित्यर्थः
ननुकिमनेनाधिकरणमाशंक्यतेयावतात्रैवपूर्वमप्यतिव्याप्तिरुदीरितेतिसत्यंदुष्टोस्याभिप्रायःसचाभिप्रायदोषोनंतरमेवाविर्भविष्य
ति यत्रवस्तुहिस्थलेतुसमवायसंभवस्तत्रैतेनूक्तविधस्संबंधस्समवायोविशेषणविशेष्यभावस्तु तद्भिन्नेष्वपिव्यवहारप्रसवितेतिनातिव्याप्ति
रितिभावः तथाप्युक्तातिव्याप्तिनादवस्थ्यमितिपरिहरति तत्तेषामेवेति॥

योसावभिप्रायदोषः पूर्वमुद्भनस्तमुद्भिरन्यर्थ्यं नुयुंक्ते तत्र समवायस्यैवेति यद्यपीह पटे रूपमित्यादौ विशेषणविशेष्यभावोप्यस्ति त-
थापि नासाविह प्रत्ययहेतुः तत्कस्य हेतोरमुख्यत्वात् औपचारिकः खल्वयं विशेषणविशेष्यभावसंबंधः न च मुख्यसंभवेप्यौपचारि-
काश्रयणं युक्तं न खलु बलवर्मणि क्रौर्य्यशौर्य्यरोषवित्त्व न तरो नद्वस्कंधादिगुणयोगात्सिंह शब्दः प्रवृत्तः सिंहेपि तन्निमित्तः प्रयुज्य-
ते अस्ति हि तदिति तस्मात्समवाय एव तत्र हेतुरित्यत्र तावदिदं वक्तव्यं कथं विशेषणविशेष्यभावस्यौपचारिकत्वमिति नियामक-
त्वं वा संबद्धबुद्धिजनकत्वं वा संबंधत्वं तच्च सर्वसंयोगादिभ्यो विशेषणविशेष्यभावस्य न विशेष्यते न च मूलसंबंधापेक्षत्वादौप-

तत्र समवायस्यैवेह प्रत्ययहेतुत्वं नेतरस्येति चेन्न एवमपीहाकाशे शब्द इत्यत्रेह शब्दस्याकाशस्य च वाच्यवाच-
कसंबंधे इह प्रत्ययहेतावतिव्याप्तेस्तादवस्थ्यात् तत्र हि गुणगुणिनोराधार्य्याधारभूतयोरयुतसिद्धयोरिह प्रत्ययहे-
तुरिहेति शब्दाकाशयोरस्ति वाच्यवाचकलक्षणः संबंधः किंचाधार्य्याधारभूतानामिति व्यर्थं विशेषणमयुतसिद्धयो-
रिह प्रत्ययहेतुस्संबंध इत्येतावत्यपि लक्षणे भवतामव्याप्त्यतिव्याप्त्यभावात् अनाधार्य्याधारभूतयोरिह प्रत्ययस्यै-
वानुदयात् अस्तु तर्हि तावल्लक्षणमिति चेन्न तत्रापि प्रागुक्तवाच्यवाचकसंबंधेऽतिव्याप्तेः॥

चारिकत्वं संयोगस्यापि तथा-
त्वप्रसंगात् न च मूलसंबंधाभावादौपचारिकत्वं सर्वत्रासिद्धेः समवायेपि तथाभावप्रसंगाच्च तदेतदपि नासूचयन्दूषणान्तरमा-
ह एवमपीति यद्यप्याकाशवाचकपदमात्रवाच्यवाचकभावस्येह प्रत्ययहेतुत्वं नास्ति तथापीहाकाशे शब्द इत्यत्रेह शब्दस्याकाश-
स्य च वाच्यवाचकसंबंधेतिव्याप्तिस्स्यादित्यर्थः एतदेव विवृणोति तत्र हीति गुणगुणिनोरिति इहेति शब्दाकाशयोरित्यर्थः न च तत्रा-
पि समवाय एवेह प्रत्ययहेतुर्न वाच्यवाचकभाव इति वचनीयम् तथा सति अगृहीतसंगतिकानामपीहेति पदश्रवणादिहेतिबुद्ध्युदयप्रस-
गात् अस्ति हि समवाय इति किंचाधाराधेयभूतानामिति विशेषणं व्यर्थमिह प्रत्ययहेतुरित्यनेनैवाधार्य्याधारभावस्यापि सिद्धत्वादित्याह किंचे-

२
चि॰प्र॰
टी॰न॰
३०

लक्षणांतरं शंकते भवत्विति एतच्चैतद्व्याख्यातृयोर्द्वयोर्नेन समर्थितं लक्षणं तदेव श्रीवल्लभवादिवागीश्वरसर्वदेवानां संम-
तं लक्षणमत्र च संयोगव्यवच्छेदाय नित्यग्रहणं आत्मादिव्यवच्छेदाय संबंधग्रहणं ननु तद्विशेषणविशेष्यभावे लक्षणाप्रसक्तिस्तस्या-
नित्यत्वाभावाद्घटतद्रूपादिप्रतियोगिकोह्ययं संबंधः स च प्रतियोग्यनित्य इत्यनित्यः समवायमिति शंकते सोनित्य इति तत्रायमेकोऽने-
को वा एकत्वे नित्यवृत्तिलोभान्नित्यत्वमस्यापि वक्तव्यं तथा च तत्रातिव्याप्तिरनेकत्वे प्राह तथापीति न खलु सर्वत्रानित्ययोरेव विशेष-
णविशेष्यभावः नित्यानामप्यात्मतज्ज्ञानिप्रभृतीनामात्मत्वजातिमानित्यादौ विशेषणविशेष्यभावदर्शनात् तस्य तत्र न प्रतियोगिद्वारा-
प्यनित्यत्वमित्यर्थः किंचानित्यप्रतियोगिकत्वेपि न विशेषणविशेष्यभावस्यानित्यता समवायेपि तथाभावप्रसंगादित्याह प्रतियोगिनो

भवतु तर्ह्यर्वाचीनमतानुसारेणानित्यः संबंधः समवाय इति लक्षणमिति चेन्न विशेषणविशेष्यभावस्य व्यभिचारात् सोऽ
नित्यः प्रतियोगिनोरनित्यत्वादिति चेन्न तथापि नित्यप्रतियोगिकविशेषणविशेष्यभावे व्यभिचारस्य तुल्यत्वात् प्रतियोगिनोरनि-
त्यत्वेन संबंधानित्यत्वापादनस्य समवायेपि समानत्वाच्च भावरूपत्वे सतीति विशेषणाद्यमदोष इति चेन्न अजसंयोगे व्य-
भिचारात् स एव नास्तीति चेन्न एवं प्रमाणसिद्धत्वात् आकाशमात्मना संयुज्यते संयोगित्वाद्घटवत् न च क्रियावत्त्वमूर्तत्वादिरुपाधिः

रिति शिवादित्यमतं शंकते भावरूपत्वे सतीति तथाप्यजसंयोगे तिव्यापकं स हि विभुद्रव्यसंयोगत्वान्नान्यतरोभयकर्मभ्यां जायते नापि
संयोगजः कारणाकारणसंयोगाज्जायमानः खलु कार्याकार्यसंयोगः संयोगजसंयोगः न च विभुद्रव्यसंयोगस्यैवंभावस्तेषामकारणा-
त्वेन तत्संयोगस्य कारणाकारणसंयोगजन्यत्वाभावात् तस्त्वत्रातिव्याप्तिरित्याह नाजसंयोग इति नन्वजसंयोग एव नास्ति प्रमाणाभावादि-
त्याह भाष्यकारः नाजः संयोगोस्ति नित्यपरिमाण्डल्यवत्पृथगनभिधानादिति तदेतच्छंकते स एवेति विभुद्रव्ययोरपि संयोगेनुमानमाह आ-
काशमिति इदमनुमानमाशंक्यमानमनोहरकारो दूषयामास न च क्रियावत्त्वस्य मूर्तत्वस्य परत्वापरत्वयोर्वोपाधेः आत्माकाशेन न संयुज्यते अमूर्तत्वा-

राम॰
३०

उपाध्यभावसाध्याभावयोरपि व्याप्तिरेष्टव्या अन्यथा साध्याव्यापकत्वप्रसंगात्सा च नास्तीति सोपाधिकत्वादित्याह व्यतिरेक इति रूपा-
द्यवमूर्त्तत्वात्मसंयोगित्वयोर्व्याप्तावसंयोगित्वमुपाधिस्तथा च व्यतिरेकव्याप्तिभंगात्साध्योपाध्योरपि व्याप्तिभंग इत्यर्थः एतेन मानम-
नोहरोक्तं प्रत्यनुमानमपि निरस्तं तत्र च साध्याव्यापक उपाधिः आत्मना संयुज्यत इति कोऽर्थः आत्मनिष्ठात्यंताभावप्रतियोगित्वाना-
क्रांतसंयोगाधिकरणामिति तथा च कथं मूर्त्तत्वाद्युपाधिः संभवति आत्मन्येव साध्याव्याप्तेः यच्च तेन तस्यानुमाने द्रव्यत्वमुपाधिमाशंक्यो-
क्तमाकाशे तदभावेन साध्याव्याप्तेरिति न ह्येवं साध्यव्याख्याने क्रियमाणे निरवकाशमुपाधिवदेव साध्यस्याप्याकाशेऽभावेन साध्यव्याप्ते-
रीक्ष्यमाणत्वात् मूर्त्तत्वं च पक्षेतरत्वान्नोपाधिः तथा हि परिच्छिन्नपरिमाणवत्त्वं मूर्त्तत्वं तत्र परिमाणवत्त्वमित्यनेनैव साध्यव्याप्तिसिद्धेः परिच्छिन्न-
ग्रहणं पक्षीकृताकाशतत्तुल्यविभुद्रव्यव्यावृत्त्यर्थमिति कथं न पक्षेतरः सोऽयमविदितस्वपरसाध्यसत्त्वो निर्विषयानेव दूषणाभासा-

तद्व्यतिरेकेऽसंयोगित्वस्यैवोपाधित्वात् किंचाकाशमात्मना संयुज्यत इत्यात्मसंबंधाधार इति साध्ये क्रियावत्त्वमू-
र्त्तत्वयोरुपाधित्वमेव नास्त्यात्मनि साध्याव्याप्तेस्तस्मादुक्तयुक्त्या न समवायस्य लक्षणासंभवः प्रमाणमपि तत्र प्र-
त्यक्षमनुमानं वा नाद्यस्तदभावात् ॥ ११ नाहो पुरुषिकयैव भाष्यमाणो निमित्तादपराद्धेतोर्धातुषु कस्यैव वलितमि-
तिन्यायविषयतामाति वर्त्तते नित्यत्वानिरूपणाच्च न हि शिष्टलक्षणसिद्धिः तथा हि तत्किं ध्वंसाप्रतियोगित्वं स्वध्वंसाप्रतियोगित्वं वा
आद्ये संयोगे निव्याप्तिः तस्यापि यत्किंचिद्ध्वंसाप्रतियोगित्वात् नेतरः आत्माश्रयात् प्रतियोगिध्वंसादेश्चानिरूपणात् किंच तत्तत्क्षणवृत्त-
स्य तत्तत्क्षस्य नविद्यतेऽन्त्यात्माश्रयादतो व्याप्तिस्तेषु स्यात्सर्वलक्षणं १ न च तेषामलक्ष्यत्वं षट्पदार्थातिरेकतः न चात्यंतमसत्त्वं तद्बुद्धेर्वाधा-
द्यभावतः २ नाभावव्वर्गनिक्षेपस्तेषामप्रतियोगिनः प्रतियोग्यनिरूप्यस्याभावतानानिसक्तितः ३ किंच तत्तत्कालेषु लक्षणावत्तेरन्यानवा-
दवर्त्तेरन्यदिच तत्तत्कालेऽनिव्याप्तिरापनेत् ४ न चैतदा तदा तेषु लक्ष्येष्वव्याप्तिरक्षता न च तत्समवायित्वं तत्तद्धर्मेष्वसंभवात् ५ नित्यः सं-
बंध इति लक्षणे किं संप्रतिपन्नसंयोगादिसंबंधस्य तदतिरिक्तस्य कस्य चिद्वा नाद्यः अपसिद्धांतापातात् न द्वितीयस्तस्मिन्प्रमाणाभावादित्यभि-

ननु किमिति प्रमाणाभावः प्रत्यक्षस्य सत्त्वादिति शंकते इह तंतुष्विति यथाहि तंतुबुद्धेः पटबुद्धेश्च विषयतया हेतुभूतौ तंतुपटौ प्रतीयेते तथै
हेति बुद्धेर्जनकतया समवायोपि प्रतीयत इत्यभिमानः प्रत्यक्षवादिनः दूषयति नेति पक्षत्रयेपि दूषणमाह तंतुपटयोरिति आधारबुद्धिमात्रज
नकत्वे इह तंतुषु पट इत्युभयत्राप्याधारबुद्धिं कुर्यान्न द्वितीये तु तन्तवः पटे वर्तन्त इत्याधेयबुद्धिमेव कुर्यान्न तृतीये तु तंतुष्वाधाराधेयबु
द्धिं पटेप्याधाराधेयबुद्धिं कुर्यादित्यर्थः अविशेषेणोभयबुद्धेरिति चाच्चयः प्रत्यक्षांतरं शंकते जातिजातिमंताविति तदीयत्वेनेति जातिजातिमद
धीनत्वेनेत्यर्थः स्वरूपेणैवेति अपराधीनतयैवेत्यर्थः नाद्य इति तत्संबंधं विना तदीयत्वानुपपत्तेः समवायस्यापि संबंधांतरवत्त्वेऽनवस्थासादित्य

इह तंतुषु पट इति प्रत्यक्षमस्तीति चेन्न विचारासहत्वात् समवायो ह्याधारबुद्धिं कुर्यादाधेयबुद्धिं वोभयबुद्धिं वा सर्वथापि नोप
पद्यते तंतुपटयोरुभयोरप्याधारबुद्धेराधेयबुद्धेरुभयबुद्धेश्चाविशेषेण प्रसंगात् जातिजातिमंतौ मिथः संबद्धावित्यस्त्येवा
नुभवांतरमिह हि इति चेन्नैवं विकल्पासहत्वात् तथाहि अस्मिन्ननुभवे समवायस्तदीयत्वेन वान्यदीयत्वेन वा स्वरूपेण वाव
भासत इति वक्तव्यं नाद्यः तदीयत्वस्य संबंधांतरायत्तत्वेनानवस्थापातात् न द्वितीयः अन्यत्रैव संबंधबोधप्रसंगात् न तृती
यः क्वचिदपि संबंधप्रत्ययानुपपत्तेः असत्येव संबंधे तदीयत्वमनुभवसिद्धमिति चेन्न जात्यादेरप्यसत्येव संबंधे तदी

र्थः अनवस्थापि द्वितीयपक्षे द्रष्टव्या प्रथमपक्षेऽनवस्थापरिहारं शंकते अ ((यत्वानुभवप्रसंगात् असत्ख्यातिप्रसंगाच्च ॥ ६ ॥
सत्येव संबंध इति इह गवि गोत्वमित्यादौ तदीयत्वेनैव समवायः प्रतिभाति न च तावता संबंधवत्त्वमप्रतीतेः न च संबंधाभावे तदीयत्वबुद्ध्यभावः
जातिव्यक्तिसमवायबुद्धीनामेव स्वभाववशात्तदीयत्वव्यवहारजनकत्वादिति भावः एवं तर्हि समवायोपि न सिद्ध्यति तत्रत्यत्वेपि संबंधिबुद्धि
भिरेव जात्यादीनां तदीयत्वबुद्धिसंभवादिति दूषयति न जात्यादेरपीति दूषणांतरमाह असत्ख्यातीति यदि हि संबंधव्यतिरेकेण तदीयत्वं
प्रतीयते तदा संबंधाभावे एव तत्संबंधित्वप्रतीतिरित्युक्तं स्यात् ततोऽन्यत्र सदन्यत्र प्रतीयत इत्यन्यथाख्यातित्यागः असत्ख्यातिस्वीकार
श्च स्यान्न चान्यत्र सतः समवायस्य तत्र प्रतीतिरन्यत्रापि तद्भावस्यापादितत्वादिति भावः विषयाभावे जायमानशुक्तिरजतसंसर्गप्रत्ययवद्धी

ननु समवायस्य समवायिभ्यां यदिदं निरूप्यत्वं तन्न्यूनं तदीयत्वव्यापित्वेन नासत्त्वापत्तिप्रसंगः निरूप्यनिरूपकभावस्यैव तदालंबन-
त्वादिति तत्राह असत्येवेति तदेवं प्रत्यक्षं दूषयित्वाऽनुमानं दूषयति नानुमानमिति अनुमानं शंकते विवादेति इह पटे रूपसमवा-
य इत्यादीह प्रत्यये बाधपरिहाराय विवादाध्यासितग्रहणं जात्यादिप्रतियोगीत्यर्थः इह शब्दे पीनमित्यादिप्रत्ययेषु व्यभिचारपरिहा-
रायाबाधितग्रहणं असंबद्धपदार्थप्रत्ययव्यवच्छेदायेहेति विशेषणं तथा च कुंडबदरादिवज्जातिषु संयोगासंभवात्समवायसिद्धिरि-
त्यर्थः नेदं समवायसाधकं जात्यादेर्विशेषणविशेष्यभावादिसाधकतयाप्यर्थांतरत्वादिति परिहरति न विशेषणेति नन्विह प्रत्यय-

असत्येव संबंधे संबंधिभ्यां निरूपणात्तदीयत्वव्यवहारे ज्ञानेऽपि संबंधांतरं संतरेणाव्यक्तानि रूपणात्तदीयत्वव्य-
वहारप्रसंगः नानुमानमपि लिंगाभावात् विवादाध्यासित इह प्रत्ययः संबंधपुरस्सरोऽबाधितेह प्रत्ययत्वादि-
ह कुंडे बदराणीति प्रत्ययवदित्यनुमानमस्तीति चेन्न विशेषणविशेष्यभावाधाराधेयभावसंबंधादिना सि-
द्धसाधनत्वात् विशेषणविशेष्यादेरेव मूलसंबंधपुरस्सरत्वं सिसाधयिषितमिति न सिद्धसाधनत्वमिति चे-
न्न इह भूतले घटाभाव इत्यस्मिन्नेव विशेषणविशेष्यभावप्रत्ययेऽनैकांत्यात्॥ २२ स्यसंबंधपुरस्सरत्वमनुमित्वतामप

मभिप्रायः यत्तत्र न्यविशेषणविशेष्यभावस्य मूलभूतः संबंधः सेत्स्यतीति निशंकते विशेषणविशेष्यादेरिति नन्विमिदानीं जात्यादि-
गोचरो विशेषणविशेष्यभावः संबंधांतरपूर्वकः विशेषणविशेष्यभावत्वाद् दण्ड्यादिष्विवेत्यनुमिनोषि तथा चानैकांतिकत्वं इह भू-
तले घटाभाव इह पटे रूपसमवाय इत्यादिविशेषणविशेष्यभावस्य संबंधांतरपूर्वकत्वाभावादिति दूषयति नेति अत्र च शंकाया-
मपि विषयवाचकपदं विषयिप्रत्ययस्य लक्षकं प्रत्ययशब्दो वापविहारे प्रमादलिखितः अतो विषयस्य लक्षकत्वेन तन्मत्यये नैकांति-
कत्वाभिधानमयुक्तमिति नाशंकितव्यं अत्र लीलावतीकारः पूर्वपक्षावसरे स्वयमेवैतानि दूषणानि उद्धृत्य सिद्धांतेऽनुमिमाय॥ ॰॰ ॥

नदस्तुवदति यत्तु लीलावतीकारेणोक्तं अघटं भूतलमित्यादिष्ववाधपरिहारार्थं जात्यादिगोचरइत्युक्तं अवाधितविशिष्टव्यवहारत्वादित्युक्तेः।
अघटं भूतलमिति विशिष्टव्यवहारे नैकांतिकत्वं तदर्थं भावमात्रेत्युक्तं भावमात्रविषयेविशिष्टव्यवहारत्वादित्युक्तेपीतः शंखइत्यादिव्यवहारे
ऽनैकांतिकतातदर्थमवाधितेत्युक्तं इमौ घटपटावित्यादिव्यवहारव्यावर्त्तनायविशिष्टपदम् सघटं भूतलमित्यत्र संयोगमादाय साध्यसिद्धिः अ
नुमानांतरमपितदीयमुद्भावयति सामानाधिकरण्यज्ञानमिति अवाधितसामानाधिकरण्यज्ञानं पक्षः इतरथा भ्रांतिस्थलेवाधासिद्धोः प्रसंगात्
रूपं समवेतमिदं रजतमित्यादिस्थलेष्विवारोपितसंबंधज्ञानेनार्थांतरतानिहत्यर्थमवाधितग्रहणं नादृशस्थलेष्वनैकांतिकतानिहत्यर्थं च हेतावं

यत्तु लीलावतीकारेणानुमानमुक्तं जात्यादिगोचरो विशिष्टव्यवहारस्सम्बन्धनियतो भावमात्रविषयावाधितविशिष्टव्यवहा
रत्वात्सघटं भूतलमितिव्यवहारवत् सामानाधिकरण्यज्ञानमवाधितसम्बन्धज्ञानपुरस्सरमवाधितसामानाधिकरण्यज्ञान
त्वाद्दण्डकुण्डलेदेवदत्तसंसृष्टेइति ज्ञानवदिति तदप्ययुक्तं प्रागुक्तरीत्यासिद्धसाधनत्वात् अथ विशेषणविशेष्यभावा
देस्सम्बन्धत्वमेव नास्त्यद्विष्ठत्वात् द्विष्ठत्वे चोभयत्रापि विशेषणबुद्धेर्विशेष्यबुद्धेश्चाविशेषेणाजननप्रसंगात् एवमाधाराधे
यभावेपि तत्तो न सिद्धसाधनतेति चेन्नैवं द्विष्ठत्वेपि कुण्डवदराणीति प्रतिनियताधाराधेयभावबुद्धिजनकसंयोगवत्॥ ३॥

वाधितग्रहणं घटःपट इत्यादिज्ञानव्यवच्छेदाय सामानाधिकरण्यपदं इदं समवायस्य प्रत्यक्षत्वसाधनाय प्रयुक्तं न्यायनयेन तु प्रत्यक्ष एव समवाय
इत्युपक्रम्य नैयायिकमतेन समवायप्रत्यक्षतोपन्यासात्तदेव दूषयति तदप्ययुक्तमिति प्रागुक्तरीतिर्विशेषणविशेष्यभावः संबंधः ननु विशेषण
विशेष्यभावादेस्सम्बन्धत्वमेव नास्ति तत्कुतस्तेनार्थांतरतेति शंकते अथेति ननु द्विष्ठत्वमेव कुतस्तत्राह द्विष्ठत्वे चेति विशेषणविशेष्यत्वनियमो न
स्यादित्यर्थः इममेव न्यायमाधाराधेयभावेप्याह एवमिति तत्रापि वदरादेराधारत्वं कुण्डादेराधेयत्वं च प्रतीयेतेत्यर्थः दूषयति नैवमिति यथा
हि कुण्डवदरयोस्संयोगस्य द्विष्ठत्वाविशेषेपि कुण्डएवाधारबुद्धिं करोतीति कूपे न तु वदरेषु वदरेष्वेवाधेयबुद्धिं न तु कुंडे तत्कस्य हेतोः स्वभावविं

स्यान्मतं न संयोगित्वमात्रात्कुण्डादेराधाराधेयभावः किंतर्हि वदरपतनप्रतिबंधकत्वं कुण्डस्य तदाधारत्वं वदराणां च तत्प्रतिबद्ध-
गुरुत्वाधिकरणत्वं तदाधेयत्वं तच्च द्वयं प्रतिनियतमेवेति वैषम्यमिति तत्राह तंतुष्विति । नहि तत्रावयविगुरुत्वमवयवैः प्रति-
बध्यते नित्यप्रतिबंधप्रसंगेनावयविनो नियमेन पतनाभावप्रसंगात् रूपाद्याधारत्वाभावप्रसंगाच्च न हि तेषां पतनमस्ति यत्प्रतिबंध-
कतया तदाधारत्वं स्यात् न चौपचारिकत्वं मुख्यत्वे बाधाभावात् वैपरीत्यस्यापि सुवचत्वाच्च तस्मात्तंतुषु पट इत्यत्रोभयोः समवायाश्र-
यत्वाविशेषेऽपि समवाये स्वभावविशेषादेव तंतुष्विह बुद्धिः पटे चाधेयबुद्धिरित्यंगीकार्यं स च स्वभावविशेषोऽत्रापि समानः अथ तत्र
समवायस्यैकत्वेऽपि व्यंजकशक्तिवैचित्र्यात्प्रतिनियमः यथोक्तं भाष्यकृता समवायैकत्वेन द्रव्यत्वगुणकर्मसंकराशंकायाः परिहारस्तु-

तंतुषु पट इति प्रतिनियतप्रतीतिजनकसमवायवत्त्वबुद्धिवैचित्र्यजननोपपत्तेः प्रतिवादिनांगीकृतस्य बाधनंगीका-
रमात्रेणासिद्धसाधनतायाः परिहर्तुमशक्यत्वात् किंचेदमबाधितत्वं सर्वानुमानेषु विवक्षितं किं प्रत्यक्षेणाबाधितत्व-
मुत युक्त्या किं वा व्यवहारे बाधराहित्यं नाद्यः नीलं नभः प्रादेशिकः सवितेत्यादिविशिष्टव्यवहारे व्यभिचारात् नापि
द्वितीयः युक्तिबाधविरहस्यात्राप्यसिद्धेस्तथाहि समवायः स्वतंत्रः परतंत्रो वा । ( उपसंहरता यथा कुंडदध्नोः संयोगैक-
त्वेऽपि भवत्याश्रयाश्रयिभावनियमः तथा द्रव्यत्वादीनां समवायैकत्वेऽपि व्यंग्यव्यंजकशक्तिभेदादाधाराधेयत्वनियम इति मतं तन्न
हि इहाप्याधाराधेयभावस्यैकत्वेऽपि व्यंजकशक्तिवैचित्र्याद्वैचित्र्यव्यवहार इति समं समाधानमन्यत्राभिनिवेशादिति भावः किंच प्रतिवा-
दिना स्वसिद्धांतानुरोधेनाधाराधेयादिसंबंधेष्वर्थांतरत्वेऽभिहिते तद्वैशेषिकेणास्यानंगीकारमात्रात्तच्छंकापरिहारं तस्य स्वसिद्धांतात्प्र-
च्यावनाभावादित्याह प्रतिवादीति एवमर्थांतरतामुक्त्वानुमानत्रयहेतुष्वबाधितेति विशेषणप्रयुक्तदूषणान्याह किंचेदमिति नाद्य
इति प्रत्यक्षेणाबाधितविशिष्टव्यवहारत्वं नीलं नभ इत्यादिष्वस्ति न हि तत्र प्रत्यक्षेण वैपरीत्यमनुभूयते तदयोग्यत्वात्तेषामथा-
पि न साध्यमस्ति नैल्यादेर्वियदादेश्च संबंधासंभवादित्यर्थः युक्तिबाधविरहितत्वमबाधितत्वं प्रकृतेऽप्यसिद्धमिति सप्रपंचं दर्शयति ना-

२
चिं·प्र·
टी·न·
३३

यद्वि समवायः स्वतंत्रस्तदा स्वतंत्रयोः संयोगव्यतिरिक्तसंबंधाभावादद्रव्यत्वेन तस्याप्यसंभवात्संबंधिभ्यामसंबद्ध इति वक्तव्यं असंबद्धस्य च न
तद्घटकत्वमतिप्रसंगादित्याह नाद्य इति समवायिभ्यामिति परतंत्रपक्षे दूषणमाह नापि द्वितीय इति पराधीनो हि परतंत्रं तेनानेन वासंबद्धस्य तदधीनता
ऽतिप्रसंगात् तथा चानवस्थेति भावः ननु संबंधिभ्यां संबद्धोऽपि समवायो न संबंधांतरेणायेनानवस्था स्यादपि तु संबंधात्मकतया स्वभावादेव
यथाहुर्भाष्यकाराः यथा द्रव्यगुणकर्मणां सदात्मकस्य स्वभावस्य नान्यः सत्तायोगोऽस्ति एवमविभागिनां वृत्त्यात्मकस्य समवायस्य ना।
न्या वृत्तिरस्तीति तदेतच्छंकते अथेति संबंधिनोर्यत्संबंधनं घटनं तन्यत्वात्तत्स्वरूपत्वादित्यर्थः एतदेव विवृणोति नहि तस्मिन्निति
अयमत्र ग्रथितोऽर्थः समवायः संबंधांतरेणासंबद्धः संबंधित्वाद्घटवदिति सिद्धांतितोऽभिमतं न तत्र चासंबंधत्वमुपाधिरिति पूर्वपक्षिणोऽभि

नाद्यः समवायिभ्यामसंबंधे यदर्थांतरत्वं तद्घटकत्वाभावप्रसंगात् नापि द्वितीयः संबंधिभ्यां संबंधे संबंधांतरसापेक्षत्वेनानवस्था
प्रसंगात् अथ समवायः संबंधिभ्यां संबंधे संबंधांतरं नापेक्षते तेन स्वसंबंधिसंबंधनपरत्वात् नहि तस्मिन्सति संबंधिनावसंबद्धौ भवतः
तेनानवस्थेति चेन्न संयोगस्याप्युक्तनीत्या संबंधांतरानपेक्षत्वप्रसंगात् नापि तृतीयो नीलं नभ इत्यादावपि व्यवहारे बाधाभावेन व्यभि
चारस्य तादवस्थ्यात् घटस्तद्वत्यनित्यान्यभावसंबंधवान् अयं संबंधित्वादिति स्याद्वेत्ताभावे व्यभिचारतः २५ अयं घट एतद्दृष्टनिष्ठानित्य

प्रेतं न तत्र सिद्धौ तौ संयोगे साध्याव्यापकतामाह न संयोगस्यापीति न चासमवायत्वमुपाधिः पक्षेतर ((त्वानधिकरणाभावरूपसंबंधवान्संबं॥
त्वात् न चानेजस्त्वन्यायः संप्रतिपन्नबाधकाभावादिति व्यवहारे बाधाभावोऽबाध्यत्वमिति तृतीयपक्षे व्यभिचारमाह नापि तृतीय इत्यादिना एतेन
विवादाध्यासितं नित्यसंबंधेन संबद्धं द्रव्यत्वादाकाशवदिति मानमनोहरकारोक्तमपि निरस्तं विशेषणविशेष्यभावेनार्थांतरत्वादिति अनुमानांतर
मुद्भावयति श्लोकेन घट इत्यादिना संगृहीतमनुमानं विवृणोति अयं घट इति एतद्दृष्टनिष्ठानित्यत्वानधिकरणं च भावरूपश्चयः संबंधस्तद
धिकरणमिति योजना विशेषणविशेष्यादिरूपाभावात्मकसंबंधेनार्थांतरतानिवृत्त्यै भावग्रहणं भावरूपसंबंधवानित्युक्ते संयोगेनार्थांत
रतानदर्थमनित्यत्वानधिकरणमित्युक्तं तथा चाप्रसिद्धविशेषणतानिवृत्त्यर्थं एतद्दृष्टनिष्ठेत्युक्तं घटांतरसंयोगे साध्यप्रसिद्धिः तस्यानित्यत्वाधि

राम·
३३

मस्त्येवरूपनद्द्रव्वनित्यत्वानधिकरणत्वाद्गुणादयश्चपक्षास्तस्मादिति नव्यभिचाराशंकावकाशः नाभावेव्यभिचार इत्याशंक्याचष्टे अभाव इति न हितस्याभावरूपसंबंधाधिकरणत्वसंभवः अभावस्याभावानधिकरणत्वादयंच विशेषणाविशेष्यभावेनतत्रसंबद्धत्वमस्तीत्यर्थः अभावे हेतोर्वृ त्तिमेवदर्शयति तस्यापीति हेत्वंतरं शंकते अथेति तथापिसमवायेनैकांतिकता अद्रव्यत्वेनासंयोगित्वादनवस्थाभयाच्चनसमवायवत्वं। अथचभाववत्वंसमवायस्यास्तीत्यर्थः अस्तुतर्हिद्रव्यत्वादितिहेतुस्तथाचनव्यभिचारोपद्रवस्तत्राह द्रव्यत्वादि नीति इदंहिभावरूपेनित्येकस्मिं श्चित्संबंधेविश्राम्यतीतितथाचसंयोगनित्यत्वापत्तिसार्थक्यादर्थांतरमित्यर्थः ननुकथमर्थांतरत्वंयावतासंयोगस्यनित्यत्वमेव नसंभवतिननित्य त्वेःनित्यघटादिनिष्ठत्वानुपपत्तेः अथकथमनुपपत्तिः घटाद्यभावदशायामनाधारस्यस्थित्यनुपपत्तेरसमवेतस्यचगुणत्वानुपपत्तिः कदाचि

धित्वात्पटवदितिचेन्नैवं अभावेहेतोर्व्यभिचारात्तस्यापिविशेषणाविशेष्यभावसंबंधेनसंबंधित्वांगीकारादथभाववत्वा दितिहेतुस्तथापिसमवायेव्यभिचाराद्द्रव्यत्वादितिप्रयोगेपिसंयोगनित्यतापादकतयार्थांतरत्वप्रसंगः नचानित्यस्यघटादे र्नित्यसंबंधाधिकरणत्वानुपपत्तिः समवायाधारत्ववत्तदुपपत्तेः॥ [१] इसमवेततया स्थितस्ययुतसिद्धतयाकदाचिदप्यसमवाया दितितत्राह नचानित्यस्येति तत्किमियंराजाज्ञेत्याह समवायेति अयमभिसंधिः अस्माभिः पदार्थानामित्युपक्रम्याश्रितत्वंचान्यत्रनित्यद्रव्येभ्य इतिभाष्यकारैर्भाषणात्समवायस्याश्रितत्ववक्तव्यंतत्रानित्यघटादिविगमेयःपरिहारस्सचात्रापिभविष्यति अथतत्रसमवायस्यैकत्वात्कतिपय नित्यपदार्थद्वयाश्रिततयानाश्रितस्वभावताव्याघातः संयोगस्यैक्यं केनवार्यते अथतत्रघटसंयोगः पटसंयोग इतिबुद्धिभेदात्संयोगभेदः समवायेपिदीयतांदृष्टिः अस्तिरूपसमवायः गोत्वसमवाय इतिबुद्धिभेदः अथघटासमवेतसंयोगस्यघटगुणत्वानुपपत्तिर्युतसिद्धतयाचस मवायानुपपत्तिरिति नूनंवधिरइवभवान्दृश्यतेकथमपरथासमवायमेवनिराकुर्वन्नभ्युपगतरूपाणि ईदृशानिचवचनानिजल्पसि किं वासंसिद्धस्यरूपादेःसमवायोनसिद्ध्यतिसंसिद्धस्यापिरूपादेःसमवायोनसिद्ध्यतिअलब्धात्मकस्यरूपादेःसंबंधित्वाभावाल्लब्धात्मकस्यसंबंधे

[१] वक्ष्यत्वसत्याचोत्पन्नगुडरूनां नाशान इति न स्यान्साधूक्तं समवायाधारत्ववत्तदुपपत्तेरिति॥

तत्किं समवायनाममात्रएवायुष्मतः प्रद्वेषो न त्वर्थे यावता भवतापि भावरूपनित्यसंबंधः संयोगो नाम स्वीकृत इति तदिदं भिक्षुकपादप्र-
सारणं पूर्ववादिनः परिहरन्नुपसंहरति अतोयथेति नास्माभिरेतादृशः संयोगः स्वीक्रियते कथं तर्हि न गुणादीनामनन्यत्वापत्तिस्तत्संबंधव्यवहारस्य वा
ननिर्विषयता तत्तत्स्वभाववशादेव तयोरुपपत्तिरित्यवेहि तथा सति धर्मधर्मिभावस्यैवोच्छेदप्रसंग इति चेन्नोच्छेर्भेणिनव्यंयदिकोप्यभ्यूर्णमा
कर्णायेत्यहहहे तदहेन वादिभ्यो तस्मिन्योऽसमीक्ष्यादितं स्यादिति अवश्यं च समवायं स्वीकृत्यापि स्वभाववादस्यावालंबनं तदवस्थापेक्षणीयस्वभावः
एव सर्वत्राश्रीयतां किमनवस्थाकल्पनागौरवलोहगंधाधायिनाऽप्रामाणिकेन समवायकल्पनादुर्व्यसनेनेत्यर्थः समवायदूषणमुपसं-
हरति तदेवमिति भिन्नलक्षणयुक्तत्वं भेद इति पक्षदूषणमुपसंहरति अतो न क्वापि लक्षणभेदादिति किंच लक्षणानामेव तावदनुगतत्व-

अतो यथा समवायस्य स्वभावसामर्थ्यादेवात्मनि परत्र च संबंधव्यवहारहेतुत्वमेवं गुणगुण्यादेरपि स्वभावसामर्थ्यादे-
व संबंधव्यवहारहेतुत्वोपपत्तेर्न कल्पनागौरवानवस्थादुःस्थसमवायस्वीकारावकाशः तदेवं लक्षणासंभवात्प्रमाणाभावा-
च्च न समवायस्य द्रव्यादिभ्यो भेदसिद्धिः अतो न क्वापि लक्षणभेदाद्भेदसिद्धिरिति सिद्धं ॥ १ ॥ लक्षणमस्ति न वा न यदि तदा नेयामिति लक्ष्या-

वृत्ततया ज्ञानं न स्यात्तदंतरेणापि वा तथा ज्ञाने पदार्थेष्वपि तथैव स्यादिति लक्षणक्षतिः अथास्ति किंचिदनुगतं लक्षणं लक्षणं किं तत्सज-
तीयविजातीयव्यावर्तकत्वमिति चेन्न सामान्यादिलक्षणेऽव्याप्तेः नहि ते जातिमंतः येन तत्सजातीयमन्यत्तेलक्षणैर्व्यवच्छेद्यं स्यात् किंचैवं द्र-
व्यादीनामपि लक्षणं न स्यात्सामान्याद्यव्यवच्छेदकत्वात् नहि सामान्यादयः सजातीयतया विजातीयतया वा व्यवच्छेदमर्हंति जातिरहितत्वा-
देव प्रमेयाभिधेयादिलक्षणेषु चाव्याप्तिः नहि तत्र किंचिद्व्यवच्छेद्यमस्ति व्यवच्छेद्यस्य प्रमितेर्मेयतयाऽव्यवच्छेद्यत्वादप्रमितेश्च किंव्यवच्छे-
द्यं स्यात् एवमभिधेयत्वेऽपि किंचेदं साजात्यमभिमतं व्यवच्छेद्यस्य किं लक्ष्यमात्रवृत्तिजात्या किं वा यया कयाचन जात्या तस्य स्यापि व्यवच्छे-
दापातात् नहि तीयः विजातीयपदवैयर्थ्यात् अन्त्यतः सत्तयापि जातिमता साजात्याद्विजातीयव्यावर्त्तकमिति चेन्न सामान्यादिलक्षणेऽव्या-

नहितेजातिमंतः जातिरहितानांचवैजात्यस्याप्यभावात् जातिशब्दस्योपाधिपरत्वेप्येतेदोषाद्रष्टव्याः एतेनलक्ष्यलक्षणमपिप्रत्युक्तं तस्याप्युक्तदूषणालंघनाजंघालत्वात् नचसामान्यादीनामपिसामान्यवतामनवस्थानात् नचेहगगनवस्त्यादीनामदूषणत्वमवैषम्याद्दर्शन नियमसाम्यात् एवमुपाधावुपाधिस्वीकारेपिननुलक्षणानिरुक्तेश्चजातिलक्षणंचखंडितंखंडयिष्यतेचजातिःतेनजातिद्वारोपाधिद्वारावा वादींद्रादिभिरुक्तेस्यमारणलक्षणान्यपितुल्यानिमंतव्यानि अपिचवादींद्रस्येष्टदानावन्महाविद्यापुलोमजासाचव्यभिचारादिदोषैस्संदूषि तात्मना १ तामेवदूषयन्नेषतस्मादेनियतत्वपिकथंकारंमहेन्द्रेन्मनःअद्वैयवचनोभवेत् २ पक्षनद्धिन्नहृजित्वाप्युपज्ञाभिश्वरीतिभिःआशासाधकतासीमास्ताः पारिप्लवावहाः ३ नोपादेयामहाविद्याप्रुद्विताज्ञानुजानयः नत्वंचापिस्वीयपलाज्जिगीषपिशुभिर्बुधैः ४ शक्यतेचसर्वप्रकारविप्लवोमहाविद्याभिःसाध यितुंग्रंथगौरवभयात्नप्रपंच्यतेसः ५ तस्माल्लक्ष्यलक्षणाभावोयमत्स्योःभिन्नवस्तुनित्वयुक्त्यैवान्वितमनिर्वाच्याविद्याविजृंभितम् ६ इतिषट्पदार्थम

अन्येमन्यंतेमाभूल्लक्षणाभेदाद्भेदस्तथापिसामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गाद्बीजादीनांभेदस्सिद्ध्यतितथाहि ॥

तत्खंडनयापरिशुद्धचित्तनतुस्वैकनिधिःप्रतिषिद्धभेदद्वयःपरमःप्रतिपादितस्तमभितोमिभवं ७ ननुवैधर्म्यभेदनिरसनेनैवक्षणभंगवादि नामपिभेदहेतुर्विभंजितएवसामर्थ्यासामर्थ्ययोरपिवैधर्म्यरूपत्वाद्तोमुधैवायंक्षणभंगवादावतारइति उच्यतेनतावत्सुगतमतेवैधर्म्यरूपोभे दस्स्वरूपभेदवादित्वात्तथागतानांनापिसामर्थ्यासामर्थ्ययोर्द्धर्मरूपत्वंयतस्तयोःसत्वासत्वात्मकतयास्वरूपत्वमतःस्वरूपभेदस्यैवायंविशे षोभेदस्यतनरेणनिराक्रियते अथवाप्रत्यक्षतोभेदाधिगतिंनिराकृत्यानुमानिकभेदाधिगतिविध्वंसोनेनक्रियतेतत्रक्षणभंगवादिनोवावदंति एकस्वभावत्वायोगात्सामर्थ्यस्यचस्वभावत्वात्समर्थस्वभावस्यासमर्थस्वभावत्वमयुक्तंस्वभावहानिप्रसंगादतएकत्वेनभवद्भिरभिमन्यमानम पिभिन्नमेवयदाचसमर्थ क्षणादसमर्थक्षणमेवप्रत्यभिज्ञायमानमपिभिद्यतेतदाकिमुवक्तव्यमप्रत्यभिज्ञायमानतयाऽप्रतीयमानैक्या नांघटपटप्रभृतीनांभेदइतितदेतदाह अन्येमन्यंतइति धर्मनिर्देशश्चायंपरकीयपरीत्यास्मादेतद्यदिविरुद्धधर्मसंसर्गस्स्यात्स्यात्तदाबीजक्षणा

यावतासमर्थमेवकुसूलनिहितमपिवीजमंकुरजननइतितत्राह यदिकुसूलनिहितमिति तत्रजनकत्वेनसामर्थ्यस्यव्याप्तिंदर्शयन्व्यापकजनकत्व निवृत्त्याव्याप्यसामर्थ्यनिवृत्तिमनुमिनोति यद्यदेत्यादिना कुसूलनिहितंवीजमसमर्थमंकुरोत्पादेतदानींतदजनकत्वाद्यदेवंतदेवंयथापदार्थान्तरा मितिपरेरीत्याचप्रयोगः स्वकीयरीत्यातुयद्यन्नजनयतितत्तत्रासमर्थंयथापदार्थान्तरंनजनयतिचेदंकुसूलनिहितंवीजमितिस्वभावहेतुःन देवंप्रसंगतद्विपर्ययाभ्यामसामर्थ्यमुपपादितंइदानींक्षणानरस्यस्वसामर्थ्यंदर्शयतिविरुद्धधर्माध्यासमसिद्धये सहकारीति नत्वापियदिसहकारि समवेतंवीजमसमर्थमंकुरजननेस्यान्नजनयेदितिप्रसंगःयद्यज्जनयेत्तत्रसमर्थंयथासामग्रीजनयतिचेदमितिविपर्ययः धर्मद्वयप्रतिपाद नमुपसंहरति इतिसामर्थ्येति ननुतदानींतदजनकत्वादितिहेतुरनैकान्तिकोविपक्षाद्व्यावृत्तेस्संदिग्धत्वात् यदिहिसमर्थस्याजनकत्वमसंभ

यदिकुसूलनिहितंवीजंतदानीमंकुरजननेसमर्थंतर्हितदेवांकुरंजनयेत् यद्यदायज्जननसमर्थंतत्तदैवतत्करोतियथासाम ग्रीनचकुर्वदुपलभ्यतेतस्मादसमर्थंसहकारिसमवधानेचसमर्थमितिसामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गः नचसमर्थस्या पिसहकारिसमवधानाभावादजनकत्वमितिसंदिग्धव्यतिरेकिताजनकस्वभावत्वेतस्यसहकारिसमवधानाभावेपिस्वभाव विरोधादेवाजनकत्वानुपपत्तेः सहकारिसमवधानेजनकमजनकंचान्यदेतिस्वभावइतिचेन्मैवमेकस्यानेकस्वभावतानु

पपत्तेरितिनिर्णीयेतनर्ह्येवविपक्षव्यतिरेकनिर्णयोनचनहस्तिसमर्थस्यापिसहकारिमेलनाभावादजनकत्वसंभवात् तस्मात्संदिग्धविपक्षव्य तिरेकित्वात्संदिग्धानैकान्तिकमेवयथाहुः यावच्चाव्यतिरेकित्वंशतांशेनापिशंक्यते विपक्षस्यकुतस्तावद्धेतोर्गमनिकाबलमितितत्राह ना च समर्थस्यापीति तत्रवक्तव्यं किंवीजस्यजनकत्वंस्वभावउतजनकत्वमजनकत्वंचाहोस्विदजनकत्वमेवेतितत्रप्रथमंदूषयतिजन कस्वभावत्वइति स्वभावविरोधादेवेति स्वभावभूतेनजनकत्वेनविरोधादजनकत्वानुपपत्तिरित्यर्थः द्वितीयंशंकतेसहकारीति दूषयति मैवमेकस्येति सोहिभावस्वभावःअसाधारणइतियावत् तथाचोभयस्वभावत्वेकिंयुगपदुभयंस्वभावभूतंपर्यायेणवानाद्योभवद्भिरेवसहकारिसम वधानासमवधानावस्थनयाव्यवस्थापनात् नित्यकार्यसत्त्वासत्त्वयोःप्रसंगाच्च द्वितीयेतुनोभयोरपिस्वभावतातस्योभयत्रानुगच्छतोपितयोरननुगमने

यदिचसहकारिसमवधानासमवधानव्यवस्थया —— जनकत्वाजनकत्वयोरप्येकत्रव्यवस्थाभिप्रेयतेसापिनसंभवतीत्याह किंत्वेतिनतथाचन
हसमवधानाभावात्तत्प्रयुक्ताजनकत्वमपितस्यनास्तीतिजनकैकस्वभावत्वंस्यात्तथाचपूर्वोक्तमेवदूषणमितिभावः सहकारिसमवधानस्याप्यस्वभावत्वपक्षमु
तत्राशंकानिराकरिष्यति अजनकत्वमेवस्वभावइतितृतीयपक्षंशंकते अथाजकत्वमिति ननुनायंजनकत्वमजनकत्वंवास्यस्वभावः किंतर्हिस
हकारिसमवधानेसतियत्कार्यंभवतितस्मादनंतरपूर्वक्षणावर्तित्वंस्वभावस्तेननसहकारिसमवधानाभावेपिजनकत्वंनापिसहकारिसमव
धानेप्यजनकत्वमित्याह अथसहकारीति दूषयति नहीति एवंविधःस्वभावःकुसूलनिहितावस्थायामप्यस्तिविद्यतइतितदापिकार्यंजन्म।

किंचयदिसहकारिसमवधानमपिस्वभावांतर्भूतंतदातदपितदैवसंपद्येतस्वभावस्यानपायात् अथाजनकत्वंस्वभावस्तदानकदा
चिदप्यंकुरंजनयेत् अथसहकारिसमवधानानन्तरभाविनःकार्यात्समनंतरपूर्वक्षणावर्तित्वंस्वभावस्तर्हिकुसूलनिहितावस्था।
यामपिबीजस्ययथावर्णितस्वभावोभवेत् तत्स्वभावस्यतदानीमभावेस्वभावपरित्यागप्रसंगात् अथसहकारिसमवधानंनस्व
भावस्तर्हितत्कारणस्योपकरोतिनवानचेदनपेक्षणीयत्वं उपकरोतिचेदुपकारोवस्तुनोभिन्नोनवाभिन्नत्वेप्राप्ताप्राप्तविवेके।
नसएवकार्यजनकइतिनस्थिरस्यकारणता अभिन्नत्वेतुपूर्वावस्थस्यवस्तुनःसांप्रतमुपकाराभिन्नतयोत्पत्त्यसंभवाद्वस्त्वंतरो
त्पत्तेःक्षणिकस्यैवकारणताप्रसंगः उपकारस्यवस्तुतन्मात्रत्वेचसहकारिसमवधानात्पूर्वमपितद्भावात्तदापिकार्यजननम्॥ ॄ॥

प्रसंगइत्यर्थः विपक्षेबाधकमाह तत्स्वभावस्येति यत्तदाशंक्यनिराकरिष्यतीत्युक्तंतदाह अथेति ननुयद्यनुपकारिण्यपेक्षानुपपन्नानतूपकुर्वत्येवस।
हकारिणःकारणस्येतिशंकितेपरिहरति उपकारोवस्तुनइति उपकारस्यवस्तुनोभिन्नत्वेवस्तुनःकारणत्वंनस्यादन्वयव्यतिरेकाभ्यांतस्यैवकारणत्वादि
तिपरिहरति भिन्न त्वइति द्वितीयेदूषणमाह अभिन्नत्वइति अत्रवक्तव्यंकिंवस्तुनउपकारादभेदउपकारस्यवावस्तुनोऽभेदः प्रथमेप्राह पूर्वावस्थस्ये
ति उपकारःखल्विदानीमुत्पद्यतेपूर्वसिद्धस्यचवस्तुनस्तदभेदेतस्यैवपुनरुत्पत्तिःप्रसज्येतनचात्राप्युक्तंद्विरुत्पत्त्यभावात्ततोन्यस्यैवोत्पत्तिर्वक्तव्यातथाच।
कथयकथंनक्षणिकस्यकारणतापत्तिरित्यर्थः द्वितीयेदूषणमाह उपकारस्येति वस्तुनःपूर्वमेवविद्यमानत्वात्तदभिन्नोपकारोपिपूर्वमेवविद्यतइतिन
दापिकार्योत्पत्तिप्रसंगइत्यर्थः॥

दूषणांतरमाह सहकारिसमवधानेति वस्तुस्वभावस्य तस्य तत्पूर्वमपि भावादिति भावः भेदाभेदप्रयुक्तदूषणापरिजिहीर्षोरनिर्वाच्य-
मतमुद्भावयति अथेति दूषयति तदेति यथा भेदेनानिर्वचनीयत्वं तथाऽभेदेनापीति तद्वस्तुस्वरूपत्वमुपकारस्य तथा च क्षणिकस्य का-
रणत्वं हेतुरूपवादं वस्तु तस्याकारणतापत्तिरतिरिच्यत इति न भिन्नपक्षात्फलतो भेद इति भावः ननु किमिति वस्तुनोऽकारणता यावता-
न्वयव्यतिरेकाभ्यां तस्यापि कारणत्वमवसीयत इतरथोपकारस्यापि न तत्स्यादिति तत्राह नच वस्तुनोपीति हेतुमाह केवलेति तदेव वि-
वृणोति सत्युपकार इति यथा हि बीजे विद्यमानेप्युपकाराभावादनुत्पत्तिमप्युपेक्षिततथोपकारे विद्यमानेपि वस्तुनोभावादनुत्पत्तिः श-
क्यतिदर्शना अभेदवादिनो व्याघातात् भेदवादेप्युपकार्याभावे उपकारस्यैवासंभवात् अनिर्वचनीयेपि भेदपक्षप्रयुक्तदूषणानुषं-

सहकारिसमवधानवैयर्थ्यंच प्रसज्येत अथोपकारो वस्तुनस्तत्त्वान्यत्वाभ्यामनिर्वचनीयस्तदा तस्यैव कारणत्वमिति।
न वस्तुनः कारणता नच वस्तुनोप्यन्वयव्यतिरेकित्वात्कारणता केवलव्यतिरेकाभावात्सत्युपकारे वस्तुभावापराधेन का-
र्याभावानुपलंभात् तदेवं सामर्थ्यासामर्थ्यलक्षणविरुद्धधर्मसंसर्गाज्जनकाजनकयोर्भेदसिद्धिः॥ गादिति भावः तदित्थं वा-

धकपदैस्त्रिभिः संदिग्धव्यतिरेकिता निरसनेनाजनकत्वादसामर्थ्यानुमानमप्रत्यूहमिति स्थितं तथा च विरुद्धधर्माध्यासः सिद्ध इत्या-
ह तदेवमिति एवमुपपादितप्रकारेण यदा विरुद्धधर्मसंसर्गः सिद्धस्तदा तस्मादेव हेतोर्भेदसिद्धिरपि भवतीति योजना सहकारिभि-
राधीयमाने बीजस्यातिशये बीजमुत्पादकमन्यथा तदभावे तदुदयापत्तेः बीजं चातिशयमादधानं सहकारिणोपेक्षते अन्यथा सर्व-
दोपकारवृत्तावंकुरस्यापि सर्वदोत्पत्तिप्रसंगात् तस्मात्तदतिशयार्थमपि सहकारिभिरपेक्ष्यमाणैः सहकारिभिरतिशयांतरमा-
धेयं बीजेन क्वचित्त्वप्युपकारे पूर्वन्यायेन बीजं सहकारिसापेक्षं जनकमित्युपकारजनकोपकारजननार्थमपेक्ष्यमाणैः सहकारिभिरुपकारांत-
रं बीजे जनयितव्यमिति तत्तदतिशयार्थमपेक्ष्यमाणा सहकारिसंपाद्यबीजवृत्त्यतिशयानवस्थेति यद्वा बीजवर्तिनि सहकारिभिरतिशये
क्रियमाणे बीजमपि सहकारिभिरपेक्षणीयमिति बीजेन सहकारिष्वतिशय आधेय एवं बीजेन सहकारिष्वतिशय आधी ॥ ३ ॥

यमानेसहकारिणोपेक्षणीयाइतिनैवीजेपूर्वमतिशयांतरमाधेयंतस्मिन्नप्यतिशयेसहकारिभिर्वीजस्यक्रियमाणेवीजमपेक्षणीयमितिवीजेनपू
र्वसहकारिष्वतिशयान्तरमाधेयमित्यनवस्थितिः उपकारःकार्य्यार्थमपेक्ष्यमाणोवीजनिरपेक्षःकार्य्यंजनयतिवीजसापेक्षोवाआद्येवीजादेरहेतुता।
पातः द्वितीयेतुवीजादिनापेक्ष्यमाणेनोपकारेणातिशयआधेयःएवमाहितोप्यतिशयःकार्य्यार्थंवीजादीनपेक्षतइतिवीजादीनांतत्राप्यतिशयांत
रमाधेयमित्यप्यनवस्थितिरित्यपिद्रष्टव्यंवादीन्द्रस्थं ननुकिमनेनप्रमाणंभेदसिद्धावुक्तंभवतितत्राह प्रयोगश्चेतिवीजमात्रस्यसहकारिमध्यनिष्ठवी
जाद्भेदसाधनेर्थान्तरतापत्तिंचिकीर्षुःवीजस्यततोभेदसाधनेनाप्युपपत्तेःवाधायतिश्चननएवतस्यभेदप्रसंगात्हेतोरसिद्धिश्चनतउक्तंकुसूलस्थमि
तितथाचयतःकुतश्चिद्भेदसाधनेवीजमात्राद्भेदसाधनेचार्थांतरतातदर्थंसहकारिमध्यमध्यासीनादितिविशेषणंवीजादितिचाध्याहर्तव्यंअत्रचतत्

प्रयोगश्चकुसूलस्थंवीजंसहकारिमध्यमध्यासीनाद्भिन्नंविरुद्धधर्मसंसृष्टत्वाद्दहनतुहिनवत् तथाकुसूलस्थं
वीजमंकुरजनकवीजाद्भिन्नंकार्य्याव्यवहितातीतक्षणातिरिक्तक्षणासंवंधित्वाद्घटवत् एतामेवव्याप्तिमुपजी-
व्ययत्सत्तत्क्षणिकमित्यनुमानेनक्षणिकतामाचक्षतेक्षणभंगवादिनः॥ ११ देवेदमितिपरेषांप्रत्यभिज्ञास्यदत्तभेदसा
धनात्तत्सुद्रोपद्रवः यदिकश्चिद्घनदोरन्वयस्यदृष्टांतदार्ष्टांतिकयोर्वक्रतांमन्यानोनपरितुष्येत्तंप्रत्येवमनुमानव्यंविप्रतिपन्नवी
जंसहकारिमध्यमध्यासीनाद्भिन्नंनदंकुरंप्रत्यसमर्थत्वात्संप्रतिपन्नवदित्यनुमानांतरमाह तथेति अत्राप्यंकुरजनकवीजाद्भिन्नत्वेनाभि
न्नत्वेनविप्रतिपन्नंवीजंपक्षःकार्य्यापेक्षयाव्यवहितातीतक्षणातिरिक्तोयःक्षणास्तत्संवंधित्वादित्यर्थःअंकुरजनकवीजेस्वान्योन्याभावरहि
तेव्यभिचारवारणायातीतपदंतस्यापिकार्य्याव्यवहितोत्तरक्षणातिरिक्तकार्य्योत्पत्तिपूर्वक्षणासंवंधित्वात्जनकवीजेव्यभिचारनिरासार्थंअ-
सिद्धिपरिहारार्थंचातिरिक्तपदंननुक्षणिकत्वसिद्धावेतत्स्यात् यदजनकावस्थातोजनकावस्थंभिन्नमितिस्थितिपक्षेतदनुपपत्तेःनचक्षणि
कत्वेमानमस्तीतितत्राह एतामेवेति यदाहि अर्थक्रियाकारित्वाकारित्वयोःसामर्थ्यासामर्थ्याभ्यांव्याप्तिःसामर्थ्यासामर्थ्ययोश्चधर्मिभेदे

क्रियाकारित्वात्मकं सत्वं समर्थस्वरूपस्य क्षणिकतां साधयति स्थिराणां न रसत्वेन स्यैवासमर्थत्वप्रसंगादसमर्थस्य चानर्थक्रियाका
रित्वादनर्थक्रियाकारिणश्चार्थक्रियाकारित्वं व्याहतमिति सत्वक्षणिकत्वयोः प्रतिबंधसिद्धिः स्थिरस्य च क्रमाक्रमाभ्यामर्थक्रियाकारित्वा
ऽकारित्वानुपपत्तेर्विपक्षव्यतिरेकसिद्धिरिति भावः ननु प्रत्यभिज्ञाप्रत्यक्षेणात्मानात्मपदार्थज्ञानस्य स्थैर्य्यमवसीयते तेन तत्स्वरूपबाधित
विषयं कालात्ययापदिष्टमिदमनुमानमिति तत्राह न च य एवाहमिति अत्र किं ज्ञानद्वयमिदमेकमेव वाभिप्रेयते द्वित्वपक्षे ततः स्थैर्य्यांशासा-
नं खंडसुद्दाद्दासुग्धयोषितः पुत्रप्रार्थनमिव तदा हि स एवाहं स एवायमिति वाक्ताववद्विशकलितयोरैक्यानवगाहित्वात् द्वितीयस्त्वसि

न च य एवाहं रूपमद्राक्षं स एवाहमिदानीं स्पर्शमनुभवामीइति स एवायं घट इत्यादि प्रत्यभिज्ञाविरोधः सामग्रीभेदात्पा
रोक्ष्यापारोक्ष्यलक्षणविरुद्धधर्मसंसर्गाच्च प्रत्यभिज्ञानस्यैकत्वानुपपत्तेः तथा हि सा मे माता स मे पितेत्यादाविंद्रियनिरपेक्षस्य
संस्कारस्य स्मरणकारणत्वादयं घट इत्यादिप्रत्यक्षज्ञाने चेंद्रियस्य संस्कारनिरपेक्षस्य कारणतावगमादुभयोः संभू
यकारणतानुपपत्तिः स इत्ययमिति च पारोक्ष्यापारोक्ष्यविरुद्धधर्मसंसर्गस्य स्फुटमुपलंभाच्च ज्ञानभेदात्प्रत्यभिज्ञा
याः प्रत्यक्षत्वाभावान्न प्रकृतानुमानस्य प्रत्यक्षविरोधस्तस्माद्विरुद्धधर्मसंसर्गाद्वस्तूनां भेदसिद्धिरिति अत्रोच्यते ॥ ९

ह इत्याह सामग्रीत्यादिना स इत्यंशे संस्कारादिरेव सामग्री अयमंशे च संप्रयोगादिरिति तथा स इत्यंशे पारोक्ष्यमयमित्यंशे चापारो
क्ष्यमिति सामग्रीभेदाद्विरुद्धधर्माध्यासाच्च न प्रत्यभिज्ञानमेकमित्यर्थः ननु संस्कारसंप्रयोगयोः संभूयैकसामग्रीत्वात्कथं सामग्रीभेद इति त
त्राह तथा हीत्यादिना अन्यत्र पृथक्कार्यजनकतयावधृतस्वभावयोरत्रापि विभिन्नकार्य्यजनकत्वमेवेत्यर्थः विरुद्धधर्माध्यासे तु विप्रतिपत्ति-
शंकैव नास्तीत्याह स इति फलितमाह ज्ञानभेदादित्यादिना प्रत्यक्षत्वाभावादिति समस्तस्येति शेषः पूर्वपक्षमुपसंहरति तस्मादिति ॥ ९

विरुद्धधर्माध्यासाद्वस्तुभेदसाधनेन्योन्याश्रयं श्लोकेन संगृह्णाति सिद्धान्ती सिद्धे भेद इति धर्मयोर्जनकत्वाजनकत्वाद्यात्मकयोः परस्परं भेदे सिद्धे सति विरोधसिद्धिरभिन्नस्य विरोधाभावात्तयोः सिद्धे विरोधे न तदाश्रयतया धर्मिणोः कुसूलनिहितसहकारिसमवेतबीजयोर्भेदबुद्धिस्स्यात् यदा च तयो। र्भेद एव न सिद्धस्तदा विरोधस्य तद्द्वारकधर्मिभेदस्य च कुतस्सिद्धिः परस्पराश्रयादित्यर्थः श्लोकं विवृणोति अशेषेत्यादिना अभेदवादिन इति पदच्छेदः ननु कथमन्योन्याश्रयता यावता प्रत्यक्षेणाधर्मयोर्भेदस्सिद्ध्यति न तत्र विरोधसिद्धिस्तेन च धर्मिभेदसिद्धिरित्यत आह अन्यत इति तत्र वक्तव्यं कीदृशं तद्भेदग्राहि प्रत्यक्षमभिमतं किं निर्विकल्पकं सविकल्पकं वेति न तावत्सविकल्पकं तस्य प्रामाण्याभावाद्भवन्मते नापि निर्विकल्पकं तस्य वस्तुमात्रग्राहि। तया स्वलक्षणातिरिक्तविकल्पागोचरत्वात् यथाहुः कल्पनापोढमभ्रान्तं प्रत्यक्षमिति भेदस्यापि स्वलक्षणमात्रत्वे स्वरूपभेदविमर्देन प्रस्तावोक्तदोषानाद्वास्यामः एतेनेदमप्यपास्तं यथाहुस्तथागताः वर्तमानं परिच्छिन्दद्वर्तमानतान्यावृत्तिमपि परिच्छिनत्तीति अवर्तमानतान्यावृत्तेर्वर्तमानता

सिद्धे भेदे विरोधे च धर्मयोर्धर्मिभेदधीः तयोर्नाद्यापि संसिद्धिर्धर्मिभेदस्तदा कुतः ॥ २६ ॥ अशेषभेदानपाकुर्वतोऽद्वैतवादिनो यदा भेदमात्रमेव नास्ति तदा कुतो धर्मयोर्भेदः कुतस्तरां विरोधः कुतस्तमां च तदधीनो धर्मिभेदाध्यवसायः अन्यतो वा भेदविरोधयोः सिद्धौ तत एव धर्मिभेदसिद्धिः कृतमनुमानेनाजागलस्तनायमानेन विरुद्धधर्माध्यासेन कश्चायं धर्मयोर्विरोधो येन विरुद्धधर्मसंसर्गित्वेन भेदोऽभिधीयते ॥

यास्वधर्मत्वे प्रत्यक्षागोचरत्वात्स्वरूपत्वे चैकस्योभयस्वभावत्वायोगात् न च वर्तमानत्वावर्तमानतान्यावृत्तिः भावाभावयोरैक्यायोगात् यथा। ह्यात्मनस्त्वविवेकक्लृप्तविधिरात्मा स्वभावस्य निषेधस्तु ततः परः सोपि वात्मेति कः प्रेक्षः शृण्वन्नपि न लज्जत इति भूतभविष्यतोश्चावर्तमानत्वात् तद्व्यावृत्तेरप्युभयविधायाः एकरूपवर्तमानतात्मकत्वायोगात् भविष्यतश्चावर्तमानभूतव्यावृत्तत्वेपि वर्तमानत्वाभावात् भूतस्य च भविष्यद्वर्तमानव्यावृत्तत्वेपि वर्तमानत्वाभावात् वर्तमानतावगाहिता या उत्पन्नावगाहितारूपतयोत्पन्नबुद्धेर्वर्तमानव्यावृत्त्यवगाहिता या पुनरुत्पत्त्यभावात् जन्ममात्रव्यापारत्वाच्च बुद्धेस्तस्मात्प्रत्यक्षं भेदावभासनायालं अनुमानं त्वनन्तरमेव निराकरिष्यते तदेतादृशी दर्शनस्थितिः आचार्यैस्तु भवतु वा यत्किंचित्प्रमाणं तथापि न तत एव धर्मिभेदस्यापि सिद्धेस्सुधा धर्मभेदोपन्यास इति प्रौढिमारूढः प्राह अन्यतो वेति पूर्वं भेदासिद्धा विरोधासिद्धिरुक्ता

अधुना धर्मिभेदायादनकोविदः कोपि विरोधो दुःसाध्य इत्यभिप्रेत्याह कश्चायमित्यादिना ॥

किंसहानवस्थायित्वमिति जनकत्वात्यन्ताभाववति धर्मिण्यजनकत्वस्य वृत्तिरिति चतुर्थविकल्पार्थः प्रथमे पक्षे यदिदमवस्थानस्य।
साहित्यं निषिध्यमानं तत्किं देशतः कालतो वा इति विकल्पयति प्रथम इति एकस्मिन्नपि क्षण इति एकक्षणे सहानवस्थायित्वरूपो विरोधो ज-
नकत्वाजनकत्वयोरसिद्धः एकस्मिन्नपि क्षणे बीजवीरणयोरंकुरं प्रति जनकत्वाजनकत्वयोर्वर्तमानत्वादित्यर्थः द्वितीयेपि विरोधोऽसिद्धः एक-
स्मिन्नपि धर्मिणि जनकत्वाजनकत्वयोः कार्यभेदापेक्षया वर्तमानत्वादित्याह नेतर इत्यादिना ननु चैकधर्मित्ववदेकविषयत्वमप्यपेक्षितं ता-
दृशश्च विरोधो जनकत्वाजनकत्वयोरस्त्येवेति शंकते एककार्येति ईदृशश्च विरोधो न क्वापि संप्रतिपन्नः स्थायिवादिनामेकस्यैकं प्रत्येव
कालभेदेन जनकत्वाजनकत्वयोः सर्वत्रैवांगीकारादित्याह नस्थायिवादिनमिति क्षणभंगवादिनं प्रत्यसिद्धिमाह क्षणभंगेति यदिद-

किंसहानवस्थायित्वं वध्यघातकभावो वा भावाभावरूपत्वं वा तदत्यन्ताभावसमानाधिकरणत्वं वा प्रथमे किमेकस्मिन्काले स-
हानवस्थायित्वमुतैकस्मिन्नधिकरणे नाद्यः एकस्मिन्नपि क्षणे धर्मिभेदेन जनकत्वाजनकत्वयोः सहावस्थानाच्चेतरः एकजनक-
स्याप्यन्याजनकत्वेन जनकत्वाजनकत्वयोरेकस्मिन्नधिकरणे सहभावात् एककार्यप्रतियोगिजनकत्वाजनकत्वयोरे-
कत्र धर्मिणि सहानवस्थायित्वमिति चेन्न स्थायिवादिनं प्रत्यसिद्धेः क्षणभंगवादिनोपि तत्कार्यजनकस्यैकस्य क्षणान्तरे तदजनक-
त्वेन तयोरेकत्रैव वस्तुनि साहित्यात् नापि द्वितीयः वध्यघातकभावस्य युगपदेकधर्मिनिष्ठयोरेव धर्मयोः संभवेनाश्रयभेदासा-
धकत्वात्॥

मिदानीं तन्नांकुरजननसमर्थं बीजं तत्कालान्तरे तं जनयेन्न वा यदि जनयेत्सिद्धं तमनुसंधत्स्व ननु क्षणान्तरे तदेव ना-
स्ति कथं तस्य जनकत्वं मास्तु स्वक्षण एव तत्किमिति न जनयेत्तस्मात्तदनन्तरक्षणवर्तिनं प्रत्येव समर्थं तदिति चेदेवं तर्ह्यसमर्थं तत्तत्रेति व-
चनीयं तथा च तस्यैव बीजस्य तत्कालीनमंकुरं प्रति जनकत्वमन्यकालीनं तमेव प्रत्यजनकत्वमिति तादृशमपि सहावस्थानं त्वयैवा-
नुमतमित्यर्थः वध्यघातकभावपक्षं निषेधति नापि द्वितीय इति अजातस्य भिन्नाधिकरणस्य वा घातकत्वाभावादेकाधिकरणे वर्त-
मानयोरेव वध्यघातकभावो वक्तव्यः तदिहेदृशो विरोधोऽनयोः संभवति न वेति तावदास्तां विचारः संभवेपि नाधिकरणभेदकः प्रत्युत तदेकाधि

भावाभावरूपो विरोध इति तृतीयं पक्षं निषेधति नापि तृतीय इति ननु विषयभेदे न वर्त्तमानयोर्जनकत्वाजनकत्वयोर्भावाभावरूपत्वेपि न वि
रोधः परस्परनिषेधरूपत्वाभावात् नहि पटाभावो घटस्य परस्परं विरुध्येते अस्तिभावाभावरूपतेति तस्मादेकविषययोरनयोर्विरोध इति तत्राह ए
ककार्य्येति कृतोपपादनं चेदमनंतरमेव जनकत्वाजनकत्वयोः परस्परात्यंताभावसामानाधिकरण्यं विरोध इति चतुर्थं पक्षं निषेधति नापि चतुर्थ
इति यस्य हि स्थायिवादिनो जनकत्वमजनकत्वं चैकत्र वर्त्तत इति नियमस्तं प्रति कथं तयोः परस्परात्यंताभावसमानाधिकरणत्वं सिद्धवदुदा
ह्रियेतेत्यर्थः तदेवं स्वपक्षे विरुद्धधर्माध्यासं परिहृत्य परपक्ष एव तमासंजयति किंचेति ननु सहकारिविरहकालेन कार्य्यमत्यसमर्थं तत्

नापि तृतीयः कार्य्यभेदं प्रति जनकत्वाजनकत्वयोर्भावाभावरूपयोरेकस्मिन्नपि भावात् एककार्य्यप्रतियोगिजनक-
त्वाजनकत्वयोरेकस्मिन् वस्तुनि स्वरूपभेदेन भावाच्च नापि चतुर्थः स्थायिवादिनं प्रत्यसिद्धेः किंच सहकारिसमवधाने यः कार्य्यमुत्पा
दयति स भावः सहकारिविरहकालेन त्वसमर्थो न वासमर्थश्चेत्तदापि जनयेच्च चेत्तदेव वस्तु शक्तमशक्तं चेति दुर्निवारो विरो
धः सहकारिविरहकाले सोऽसन्नेव समर्थ इति चेन्न सहकारिविरहकालेपि यमसद्रूपता सा सहकारिसन्निधानकालेपि विद्यते
न वा विद्यते चेत्स्वकाल एवासत्त्वप्रसंगः न चेत्तर्हि सहकारिविरहकालेन तदसद्रूपमसद्रूपाभावेप्यस्य भावात् अथैकमेव
वस्तु सहकारिभावाभावयोः सदसद्व्यवहारयोग्यं तथैव तर्हि स्थिरमपि शक्ताशक्तव्यवहारयोग्यमिति तुल्यम्॥ ॥

त्किं तर्हि सहकारिवियोगसमये तदेव नास्ति ततो न विरुद्धधर्माध्यास इति शंकते सहकारीति तर्हि सहकारिविरहसमये येनासद्रूपेण
भवति तत्कारणं तत्सहकारिसमवधानसमयेपि विद्यते न वा प्रथमे सद्रूपावस्थायामप्यसत्त्वं स्यात् द्वितीये तु पूर्वसिद्धस्य वस्तुनः पश्चा
द्भाव्यसत्त्वं न स्वभावः सत्त्वावस्थायाः पूर्वमपि वस्तुनो विद्यमानत्वादिति परिहरति नेत्यादिना ननु यद्यपि तदेकं तथाप्युभयव्यवहारा-
लंबनं भवति सहकारिसमवधानासमवधाननिबंधनत्वेन विरोधाभावादिति शंकते अथैकमेवेति स एव तर्हि न्यायः सामर्थ्यासामर्थ्ययो

स्यादेतद्यदि च सत्त्वासत्त्वयोर्निदर्शनेन सामर्थ्यासामर्थ्ययोराश्रयणं भवति तर्हि सहकारिविरहकालेऽसत्त्वं तथा च क्षणिकत्वे । वेति गतं स्थैर्य्याशयेति तत्राह नचासामर्थ्यं विहायेति यदिदं सहकारिविरहकालेऽसत्त्वं तद्भवन्मतेतावदसामर्थ्यरूपमर्थक्रिया सामर्थ्यस्य सत्त्वाभ्युपगमात्तथा चैतादृशासत्त्वमेतादृशक्षणिकत्वं च नास्माकमपि दुष्टमिति भावः अथवा सहकारिविरहकाले यदिदमसत्त्वं तदेवासामर्थ्यं न तस्मात्सदेव न चासमर्थमित्ययुक्तमुक्तमित्याह नचासामर्थ्यमित्यादिना सामर्थ्यं हि सत्त्वमङ्गीकि यतेऽतस्तत्त्वासत्त्वमप्यसामर्थ्यमेवेत्यर्थः शंकते अथैकस्मिन्निति इयं च नितरुद्दयनसौगतशंका अहो मामकभाग्योद्रमस्सम

नचासामर्थ्यं विहायान्यदसत्त्वमस्ति अथैकस्मिन्नेव वस्तुनि सहकारिसमवधानानन्तरं कार्य्यजननस्वभावता तद्विरहे चासमर्थस्वभावतेत्युभयमप्यविरुद्धं तुल्यमिदमस्मन्मतेऽपि तथापि सहकारिसमवधाने यत्समर्थरूपं तदेव चेत्प्रागप्यस्ति पूर्वमपि कार्य्यप्रसवप्रसंग इति चेन्न सहकारिविरहे यत्तव कार्य्याऽसमर्थरूपं तदेव चेत्स हकारिसमवधानेऽपि ततोऽजननप्रसंग इति तुल्यत्वात् ॥ १९ योऽयं यदायुष्मतैवास्मत्तमीहितं स्वीकृतमित्यभिप्रेत्याह तुल्य मिदमिति यद्यपीदमावयोस्समानं तथापि स्थिरपक्षेऽनुपपन्नं तरसस्तीति शंकते तथापीति स्थैर्य्यवादिना सहकारिसमवधाने सामर्थ्यमे वं रूपं प्रागपि वर्त्तत इति वचनीयं तथा च प्रागपि कार्य्यप्रसवप्रसंग इत्यर्थः अस्य मिथो विरोधेन तत्कोभासतां दर्शयितुं प्रतिप्रसंगमाह न सहकारीति अंकुरक्षणोत्यादकमपि वीजक्षणं सहकारिविरहे तस्मिंश्चेवासमर्थमिति वक्तव्यमन्यथा तद्विरहेऽपि जनकत्वप्रसंगा त्तस्माद्यत्तदसमर्थं तदेव समर्थमपि तथा च तस्मादुत्पत्त्यनावसमर्थ्यादनुत्पत्तिप्रसंग इत्यर्थः अजननप्रसंग इति वा पदच्छेदः एवं सह कारिसमवधानासमवधानयोस्सामर्थ्यासामर्थ्ये चाविरुद्धमिति प्रौढिमारूढेः क्षणिकं वस्तु तत्तु समर्थमेव समर्थमपि सहकारिवैक

यत्तु समर्थस्यापि सहकारिसाकल्यमेव जनकत्वमित्युक्तमयुक्तं सहकारिणां स्वभावान्तर्भावे यावत्कारणभावित्वेन सर्वदा कार्योत्पत्तिप्र-
संगादिति पूर्वपक्षिणोक्तं तदङ्गीकारयन्नाह स्वस्मिन्नित्याह नच सहकारिणामिति यथा हि सौगतानां मते क्षित्यादिचतुर्विधधातूनां समर्थबीजक्षणोत्पाद-
कत्वमेव न समर्थस्य यान्स्वभावान्तर्भावः एवमस्मन्मतेऽपि सहकारित्वमेव न स्वरूपत्वं इयांस्तु विशेषः भवन्मतेन जनकत्वमस्मन्मते तदुपकारकत्वमि-
त्यर्थः पञ्चोपकारकत्वपक्षेऽपि तेनोक्तं तद्दूषयति नचेष्टे नच सहकारिकृतेनेति अनुपपत्तिरूपकारस्येति शेषः नन्वनिर्वचनीयोपकारस्य कारणत्वे का-
रणस्य कारणत्वं न स्यादित्युक्तमेव तत्राह लोकसिद्धकारणतायाइति कारणस्येति शेषः नन्वत्राप्युक्तं केवलव्यतिरेको नास्तीति तत्राह नच के-
वलेति केवलत्वं चेदमनौपाधिकत्वमितरथानुपयोगात्केवलस्य वस्तुमात्रस्येति वा यदि कारणादुपकारस्य भेदः स्यात्स्यात्तदा कारणस्यापि पृ

नच सहकारिणां स्वभावेऽन्तर्भावो येन गलेपादुकान्यायेन तेषामपि तद्वत्समुदयस्यात्किंतु भवन्मते समर्थक्षणोत्पाद-
कानां क्षितिपवनपाथस्तेजसामिव सहकारित्वेन नच सहकारिकृतोपकारस्य भेदाभेदविकल्पानुपपत्तिः वस्तुन-
स्तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वात् लोकसिद्धकारणताया अप्रत्याख्येयत्वात् नच केवलव्यतिरेकाभाव उपकारवस्तु-
नोर्भेदानभ्युपगमात् उपकारककारणताया एव वस्तुकारणताभ्युपगमात् प्रयोगस्तु धर्मयोर्विरोधनिरासेनैव निरस्तः अनै-
कान्तिकश्च सहकारिमध्यमध्यासीनस्याविरुद्धधर्मसंसृष्टत्वेऽपि स्वतो भेदाभावात्॥ यत्केवलव्यतिरेकप्रार्थनं तत्त्वेतरत्वभेदेना-
यनिर्वचनीयत्वादित्यर्थः ननु तथाप्यनुमाने किं दूषणमिति तत्राह प्रयोगस्त्विति पूर्वोक्तप्रकारेण विरोधानिरूपणे क्वचित्सिद्धिः क्वचिद्विरु-
द्धत्वं क्वचिदनैकान्तिकत्वमित्यर्थः अविवक्षितविशेषे प्रविरोधेऽनैकान्तिकतामाह अनैकान्तिकश्चेति तद्धि सहकारिमध्यमध्यासीनं कालान्त-
रीयमङ्कुरं न जनयति जनयति च तात्कालिकमिति विरुद्धधर्माध्यासवत् अथ च स्वयं स्वस्मान्न भिद्यते इति तत्रानैकान्तिकत्वमित्यर्थः
सहानवस्थायित्ववध्यघातकत्वभावाभावविरोधेषु यथायथमसिद्ध्यादयो ज्ञेयाः यद्वा कुसूलनिहितसहकारिसमवहितबीजयोः परस्प-
रविरुद्धधर्मसंसृष्टत्वस्याविशिष्टत्वात्स्यपि विरुद्धधर्मसंसर्गे सहकारिसमवहितस्य स्वप्रतियोगिकभेदानधिकरणत्वादनैकान्तिकत्वमित्य

द्वितीयानुमानेप्यन्यतरानैकान्तिकतामाह कार्य्याव्यवहितेत्यादिना यत्सत्तत्क्षणिकमित्यनुमानेप्युक्तं दूषणमतिदिशति तदेवमिति
यदि सहकारिसहितं वीजं तद्धि रहकालीनवीजात्तभिधेनार्थक्रियाकारित्वरूपसत्त्वेन स्यादिति प्रसंगस्तच्चेदं तस्माडिद्यनेइति न द्विपर्य्य
यस्तयोस्स्थायिन्यपिजनकत्वसमर्थनेन निरासात्सत्त्वहेतुकं क्षणिकत्वानुमानमपि निरस्तमित्यर्थः साध्यनिष्ठक्षणिकत्वस्याप्रसिद्धवि
शेषणत्वसिद्धसाधनत्वयोरन्यतरापातइति दर्शयिष्यन्विकल्पयति किंचेत्यादिना क्षणांतरासंवंधित्वमात्रत्वे सति क्षणसंवंधित्वं द्वितीये

कार्य्याव्यवहितानीतक्षणानिरिक्तक्षणसंवंधित्वादित्यपि हेतुस्स्थायिवादिनो मतेन सैव तथाविधक्षणसंवंधित्वान्न सि
द्धेवानैकान्तः तदेवं प्रसंगतद्विपर्य्ययो रपास्तत्वात्क्षणिकत्वानुमानं दूरोत्सारितं किं चेदं क्षणिकत्वं किं क्षणसंवंधित्वं क्षणान्त
रासम्वन्धित्वे सति क्षणसम्वन्धित्वं वा क्षणान्तरमात्रासंवंधित्वे सति क्षणसंवंधित्वं वा उत्पत्तिक्षणेसत्त्वं वा स्वोत्पत्तिक्षणेसत्त्वं ।
वा स्वोत्पत्तिक्षणमात्रसत्त्वं वा एकक्षणावस्थायित्वं वा अनेकक्षणानवस्थायित्वविशेषितं वा न तावत्प्रथमः सिद्धसाधनत्वादनेक
क्षणावस्थायिनोपि घटादेः क्षणसंवंधित्वान्न द्वितीयोर्थान्तरत्वात् क्षणांतरासंवंधित्वेप्यनेकक्षणसंवंधित्वाविरोधात् ॥
घटादीनामनेकक्षणसंवंधिनामपि स्वप्रध्वंसादिक्षणसंवंधित्वस्याभ्युपगमान्नतृतीयो व्याघातात् तत्सम्वन्धिक्षणस्या।
पि क्षणविशेषत्वेन क्षणांतरत्वे सति क्षणान्तरमात्रासम्वन्धाभावात् न चतुर्थस्सिद्धसाधनत्वात् अनेकक्षणसंवंधेप्युत्पत्तिक्ष
णसंवंधाविरोधात् अत एव न पञ्चमः॥

यःपक्षः तृतीयस्तु क्षणांतरसंवंधित्वात्यंताभावाधिकरणत्वे सति क्षणसंवंधित्वमिति वि।
शेषः सिद्धसाधनतामेव विवृणोति अनेकक्षणेति न केवलं क्षणांतरेणाकेनचित् संवंधोनेकक्षणसंवंधेन न विरुध्यत इति सम्भावनामात्रं
किन्त्वभ्युपगतश्चानित्येषु पदार्थेषु स्थायिवादिभिरित्याह घटादीनामिति व्याघातमेव दर्शयति तत्संवंधीति क्षणांतरत्वाक्रांतं यत्तत्संवं।
धात्यंताभाववत्त्वे सति क्षणसंवंधित्वमिति हि तृतीयः पक्षस्तत्त्व्याहतं येन हि क्षणेन संवध्यते सोपि यत्किंचित्क्षणापेक्षया क्षणांतरमेव
तथा च तेनाप्यसंवंधः संवंधश्चेत्यापातात् व्याघातः स्यादित्यर्थः अत एवेति यत एवानेकक्षणासतोप्युत्पत्तिक्षणसत्त्वसम्भव अत एव स्वोत्पत्ति

नापि षष्ठ इति स्वोत्पत्तीत्यत्र स्वशब्देन किं प्रतिनियतः कश्चिदभिधीयते सर्वे वा पदार्थाः आद्ये ऽव्याप्तिः सर्वपदार्थानामेकपदार्थोत्पत्तिक्षणसत्त्वाभावेन तेषु क्षणिकेषु लक्षणाभावादित्यर्थः द्वितीये ऽसम्भवमाह सर्वेति सप्तमपक्षेपि सिद्धसाधनतामाह नापि सप्तम इति नाप्यष्टम इति उत्पत्तिक्षणावस्थायित्वेन तावदेकक्षणावस्थायित्वमस्ति प्रध्वंसक्षणमारभ्य तत्र नानेकक्षणानवस्थायित्वं चास्तीति स्थायित्वेप्युपपत्तेरर्थान्तरत्वमित्यर्थः लक्षणान्तरं दूषयति उत्पत्तिक्षणेति उत्पत्तिक्षणासमनन्तरक्षणावर्त्तिध्वंसप्रतियोगित्वं स्थायिनि न सम्भवतीत्यभिमानः अत्र किमुत्पत्तिक्षणशब्देन यथाश्रुतोर्थो विवक्षितः स्वोत्पत्तिक्षणो वा आद्ये माह स्थिराणामपीति स्थिरस्यापि हि यो ध्वंसक्षणस्तत्पूर्वक्षणो पि यस्य कस्यचिदुत्पत्तिक्षणो भवतीत्यर्थान्तरमित्यर्थः

नापि षष्ठः स्वशब्देनांकुराद्येकैकविवक्षायां तदुत्पत्तिक्षणमात्रसत्त्वस्य घटादिष्वभावेन क्षणिकत्वाभावप्रसंगात् सर्वविवक्षायां तु लक्षणासंभवित्वमेकैकस्य सर्वोत्पत्तिक्षणासत्त्वासम्भवेन तन्मात्रसत्त्वासम्भवात् नापि सप्तमोऽनेकक्षणसत्त्ववादिभिरप्येकक्षणावस्थायित्वाङ्गीकारात् नाप्यष्टमः प्रध्वंसाद्यनेकक्षणानवस्थायित्वस्यैकक्षणावस्थायिनि स्थायिन्यपि सम्भवात् उत्पत्तिक्षणानन्तरक्षणावर्त्तिध्वंसप्रतियोगित्वं क्षणिकत्वमित्यपि न स्थिराणामपि यस्य कस्यचिदुत्पत्त्यनन्तरक्षणावर्त्तिध्वंसप्रतियोगित्वोपपत्तेः एतेन स्वोत्पत्त्यनन्तरक्षणावर्त्तिध्वंसप्रतियोगित्वमपि निरस्तं स्वशब्दखण्डनस्य पूर्ववदत्रापि तुल्यत्वात् अथ यस्य घटस्यैतद्घटोत्पत्त्यव्यवहितानन्तरक्षणावर्त्तिध्वंसप्रतियोगित्वं क्षणिकत्वमेवं प्रतिव्यक्ति क्षणिकत्वलक्षणमूहनीयमिति चेन्नैवं एवंविधक्षणिकत्वसाधने सत्त्वसाधनस्यानैकान्तिकत्वापातात् न ह्यतीतानागतानां च स

द्वितीयं दूषयति एतेनेति तत्रापि स्वशब्देन किं ध्वंसप्रतियोगी विवक्षितः किं वा प्रतिनियतः कश्चिदाद्ये नन्तरदोषानुषंगः द्वितीये तु षष्ठपक्षोक्ताव्याप्तिरित्याह स्वशब्देति ननु न समस्तक्षणिकेष्वनुगतमिदं माचक्ष्महे लक्षणं येनैवमव्याप्तिः स्यात् किंतु प्रतिविशेषं पृथगेवेत्यभिप्रेत्य शंकते अथेति अनंतरत्वं चात्रोत्तरत्वं विवक्षितं तस्य स्थैर्येप्युपपद्यमानतया अर्थान्तरतापरिहाराय अव्यवहितत्वग्रहणं तत्किं यत्सत्तत्क्षणिकमित्यत्र सत्त्वहेतुना एतादृशं क्षणिकत्वं सिसाधयिषितं तथा चानैकान्तिकत्वं गगनादितदन्तरितपदार्थानां चैतद्घटोत्पत्त्यव्यवहितोत्तरक्षणावर्त्तिध्वंसप्रतियोगित्वलक्षणक्षणिकत्वाभावेन विपक्षत्वात् सत्त्वहेतोश्च तत्र वर्तमानत्वादित्याह एवंविधेत्यादिना साध्यविकलश्च

अथ किमितितत्र नास्तितत्राह ननु हूंसानामिति उक्तं दूषणं लक्षणान्तरेप्यतिदिशति एतेनेनेति उत्पत्तिक्षणस्य यः प्रध्वंसस्तेनासमानकालीन
त्वं यदुत्पद्यमानस्य तत्क्षणिकत्वं स्थिरस्य ह्यनेकक्षणावस्थायिनो नोत्पत्तिक्षणप्रध्वंसासमानकालीनत्वं तेन नार्थान्तरत्वमित्यर्थः असंभव।
परिहारार्थं चोत्पत्तिपदं एतेनेत्येतद्विवृणोति यत्किंचिदित्यादिना पूर्वोक्तदोषो व्याप्तिः अथ विशेषलक्षणमिदं विवक्षितेनतदा पूर्वोक्त
मनुमानदूषणं स्यादित्याह प्रतिव्यक्तीति ननु विशेषलक्षणविवक्षायां न सत्त्वादिति हेतुरभिधित्सितः किंतु घटत्वात्पटत्वादित्यादि।

हुत्पत्त्यव्यवहितानंतरक्षणावच्छिन्नध्वंसप्रतियोगित्वमस्तितत्त हूंसानामेतद्घटोत्पत्त्यनंतरक्षणोऽनुत्पन्नत्वात् एतेनोत्पत्तिक्ष
णध्वंसासमानकालीनत्वं क्षणिकत्वमित्यपि निरस्तं यत्किंचिदुत्पत्तिक्षणध्वंसासमानकालीनत्वस्य स्थायिष्वपि भावात् क्षणशब्देन
विशेषणेऽपि पूर्वोक्तदोषानुषंगात् प्रतिव्यक्तिलक्षणे च सत्त्वसाधनस्यानैकांतिकत्वात् घटत्वात्पटत्वादित्यादिप्रयोगसाधनाभ्यू
हनेचानागतघटपटादिष्वनैकांतिकतातद्वस्थैव सर्वथ्रायमुदितोहेतुकलापः पूर्वोदितप्रत्यभिज्ञाप्रत्यक्षविरोधित
याकालात्ययापदिष्टः यत्पुनरुक्तं सामग्रीभेदाद्विरुद्धधर्मसंसर्गाच्च प्रत्यभिज्ञाज्ञानस्यैकत्वानुपपत्तिरिति तदयुक्तं संप्र
योगसंस्कारयोः संभूयसामग्रीत्वात् नचान्यत्र संप्रयोगसंस्कारयोः प्रत्येकमन्योन्यनिरपेक्षयोः कारणत्वादेकज्ञानकारणता
नुपपत्तिः यस्मात् अन्यत्र लिङ्गेन्द्रिययोरन्योन्यनिरपेक्षयोः दृष्टं संभूयकारित्वं विशिष्टानुमितिप्रति १८॥ व्यावृत्तधर्मा अतो नानैकांति।

कतातत्राह घटत्वादिति तथाप्यनागतेषु घटेष्वभिप्रेतसाध्यरहितेष्वनैकांतिकता एवं पटत्वादेरपीत्यर्थः एतद्घटत्वादित्यादिहेतुविवक्षायांव्याप्य
सिद्धिरित्यपि द्रष्टव्यं एवं साध्यप्रयुक्तदूषणान्युक्त्वा बाधमप्याह सर्वथ्रायमित्यादिना ननु कथं संस्कारसंप्रयोगयोः संभूयसामग्रीत्वं यावतान्यत्रानिरपे
क्षयोर्दृष्टयोस्तत्रापि तयोः साहित्याभावो वर्णित इतितत्राह नचान्यत्रेति किमन्यत्र निरपेक्षकारणत्वेनात्रापि निरपेक्ष्यमनुमितिस्तितं तर्ह्यनैकांतिकं लिंग
स्य संभूयमाणतया स्वार्थमाणतया वाक्वचिदिंद्रियनिरपेक्षतयानुमित्युत्पादकस्येंद्रियस्य च घटादौ लिंगनिरपेक्षतया परोक्षज्ञानजनकस्यायमप्रमाणान्य

इममेव श्लोकं विवृणोति श्रूयमाणस्येत्यादिना ननु किमित्यनुमितावपि तयोः साहित्यमिति तत्राह नह्यन्तरेणेति यद्ययं पर्वतो व-
ह्निमानिति प्रतिज्ञात्मकोऽवयवो नानुमन्यते गोतमगोत्रिभिस्तथापीदृशं ज्ञानं प्रत्यात्मवेदनीयमभ्यनुज्ञायत इति तन्निदर्शने विप्रतिपत्तिर्यत्तु पा-
रोक्ष्यापारोक्ष्यलक्षणविरुद्धधर्माध्यासाद्भेद इति तत्राह नच विरुद्धेति एतेन विषयभेदाद्भेदोन्नयनमपि निरस्तं अयं पर्वतो वह्निमानित्यत्रै-
व व्यभिचारात् कथं चात्र पारोक्ष्यमधिगन्तं नहि तदित्युक्ते स्वमात्रात्पारोक्ष्यापारोक्ष्ययोरप्यग्निमान्पर्वतो न सोऽग्निमान्पर्वत इति ज्ञानयोस्तदन्वया-
नन्वयदर्शनात् नच प्रत्यभिज्ञात्वादेव ज्वालाप्रत्यभिज्ञावदप्रामाण्यानुमानं विरुद्धधर्मसंसृष्टविषयत्वोपाधिहतत्वादत्र च तदभावस्य निवे-
दितत्वात् तथापि चाप्रामाण्ये सर्वत्रैकान्तात् क्वचिदेकक्षणस्यप्यसिद्धेः क्षणिकस्यापि क्षयरोगप्रसंगात् प्रत्यभिज्ञाबाधमनुमानस्य समर्थित-

श्रूयमाणस्य स्मर्यमाणस्य वा लिंगस्याक्षनिरपेक्षस्यानुमानज्ञानहेतुत्वं दृष्टं दृष्टं चेन्द्रियस्यानपेक्षस्यापरोक्षज्ञानकर-
णत्वं न यापि संभूयोभाभ्यामयं पर्वतो वह्निमानित्येकमनुमानज्ञानं जायमानमुपलभामहे नह्यन्तरेणेन्द्रियसंप्रयोगम-
यमिति पुरोवर्त्याकारोपलम्भसंभवः नच विरुद्धधर्मसंसर्गाद्भेदः अस्मिन्नेवानुमानवेदने वह्निमानिति चायमिति च पारो-
क्ष्यापारोक्ष्यविरुद्धधर्मसंसर्गोपलब्धेस्तदेवं प्रत्यभिज्ञाज्ञानस्यैकत्वेन प्रामाण्यसंभवान्नहि रूढं भेदानुमानं कालात्ययापदि-
ष्टं न भेदप्रत्यापनायालम्॥

मुपसंहरति तदेवमिति एतेन विज्ञानक्षणिकत्वानुमानमपि प्रत्युक्तं वेदितव्यं विनष्टाविनष्टत्वलक्षणवि-
रुद्धधर्मसंसर्गस्योपाधेर्विषयतयाऽसिद्धेर्नीलपीतादेश्च विज्ञानबहिर्भावात् अस्तु तर्हि प्रत्यक्षं न स्वतः परतो वाऽसिद्धेः किं विज्ञानस्य स्व-
यमेवोत्पत्तिनाशौ सिध्यतः ज्ञानान्तरेण वा न तावदन्त्यः अपसिद्धान्तात् नहि ज्ञानस्योत्पत्तिविनाशौ गृह्णत्तद्धि ज्ञानमपि गृह्णीयादपरथा किमी-
याविमावित्यावेद्येत नच विज्ञानस्य विज्ञानान्तरग्राह्यत्वं स्वप्रकाशदर्शने शोभनं स्वग्राहकं विज्ञानं स्वोत्पत्तिविनाशावप्यवगाहत इति
चेत् तत्किं स्वसमये स्वाभावसमये वा न तावदन्त्य असंभवादतिप्रसंगाच्च किं नाम न शक्यसाधनमसताज्ञानेन नापि प्रथमः संवित्समयेन

स्य चानीनाद्यगोचरत्वात्कथं च तदिन्द्रियसन्निकर्षाजन्यस्य तत्त्वमन्यस्य त्वं न हि ज्ञानोत्पत्तेः प्राक् तद्दृश्योऽस्ति येन तदिन्द्रियसन्निकर्षादुत्प
द्येत अस्तु न हि योगिप्रत्यक्षं तस्य च त्रैकाल्यगोचरत्वाद्यदाह कीर्त्तिर्न्यायबिन्दौ प्रत्यक्षं चातुर्विध्यं वदन् तदनुभूतार्थभावनाप्रकर्षपर्य्यन्तजं योगि।
ज्ञानं चेति तेन न कोऽपि कलंकलेपः इति तदपि चारु तथा हि किं तदीयनीलादिसंवेदनानामुत्पत्तिविनाशविषयत्वं उत्पत्तिविनाशमा।
त्रविषयस्य वा कस्यचित् नाद्यः नीलादिसंवेदनानां तन्मात्रविषयत्वेन स्वोत्पत्त्याद्यगोचरत्वात् अथान्यासंवित्सा पि किं स्वोत्पत्त्यादिविष
यिणी परोत्पत्त्यादिविषयिणी अपि वा नान्त्यः परबुद्धीनां तद्विषयत्वात् विषयत्वे चापरज्ञानात् अथ सा स्वोदयाद्येव विषयीकरोतीति यो
गिज्ञाननिदर्शनेन च तेनास्त्वनुमीयत इति मतं अस्तु न हि तदीयता दृशसंविदि प्रमाणपर्य्यनुयोगः ननु योऽयदभिनिविशमानोऽभ्यस्यति स

कथं च व्याप्यव्यापकभावभेदोपलंभाधीनात्मलाभमनुमानमसिद्धे भेदे भेदं गोचरयेत्॥

न स्य परां काष्ठां प्राप्नोति चित्रकार इव शिल्पकर्माभ्यासी अभ्यस्यति च कश्चिद्वहितो ध्यानमित्यनुमानं प्रमाणं न न स्पृत्रादिशोका।
वृशेनातिभावयतः कूटसाक्षात्कारस्यापि दर्शनात् अभ्यस्यति च कश्चिदिति च शपथसाध्यं अस्तु न हि बहुनि कद्दागमवशात्तादृशसर्वज्ञविति सि
द्धिः स एव न हि सर्वज्ञः केन सिद्धः ननु सोऽपि तदीयागमादेव अहो दुर्भगोऽसि यत्त वक गोत्रधुराधुरैर्मारजिल्लोकजिदित्यादीनुदारगुणग्राम।
नामान्युपार्जितानि त्वया तु सांप्रतं मंदास्तजिदिति नाम निस्त्रंशेनोपार्जितं कथमपरथा तत्प्रणीतागममेव तन्सिद्धावभिदधासि परस्परा
याद्यपि न विभेषि तदित्थं स्वतस्तावन्न विज्ञसेः सिद्धेनामुदयव्ययौ परतोऽपि न विज्ञसेः सिद्धेनामुदयव्ययौ १ तदेवं विरुद्धधर्मसंसर्गाद्भेदानुमा
नं निरस्तं इदानीं भेदशंकिनानुमानजातस्य साधारणं दूषणमाह कथं चेत्यादिना व्याप्यव्यापकयोर्भेदोपलंभः तमुपजीव्य प्रवर्त्तमानं क

इममेव दोषमागमेप्याह आगमोपीति नस्थितिरिति अभिधानाभिधेययोर्भेदद्वयमित्यर्थः यत्तु शब्दांतरादिभेदसाधकमित्युक्तं तत्परिहरति शब्दांतरा।
दीति एतेषां चोदाहरणानि मिथ्यात्ववादे दर्शितानि तत्र च शब्दांतरेण धातुभेदेन धात्वर्थभेदात्तदुपरक्तभावनाभेदाधिगतिस्तत्र शब्दादिभेदोपाप्यसि
द्धत्वतः कथं तदुपजीविनः समस्तभेदसाधकत्वमित्यर्थः उपलक्षणं चैतदभ्यासादेरपि तेषामपि हि पुनः श्रुतिसंख्याविशेषसंज्ञांतरगुणांतरा।
सन्निधिविशेषरूपाणामभ्याससंख्यासंज्ञागप्रकरणांतराणां भेदोपजीवनेनैव प्रवर्तमानानां तदसिद्धावप्रवृत्तेः उपमानेप्युक्तन्यायमतिदिशा।
ति उपमानमपीति मानांतरावसितं यद्गोगवयादिवस्तुद्वयं तदवच्छिन्नसादृश्यगोचरत्वात्तस्य च वस्तुद्वयस्यासिद्धावुपमानमपि न समस्तभेदा।

आगमोप्यभिधानाभिधेयभेदावगमपुरस्सरस्तस्मिन्नेवासिद्धे कथं तत्र प्रामाण्यमश्नुवीत शब्दांतरादिकमपि सिद्धशब्दादि
भेदोपजीवने न प्रवर्तमानं तदसिद्धौ कथं कर्मोपासनादिभेदमावेदयेत् नहि भेदासिद्धौ यजति ददाति जुहोतीत्यर्थो नाभेदसिद्धमिति
येन धात्वर्थभेदे सर्वत्र विज्ञेयं भावनांतरमिति वार्त्तिककारोक्तो भावनाभेदस्सिद्ध्येत् उपमानमपि मानांतरावसितगोगव।
यादिवस्तुद्वयावच्छिन्नसादृश्यगोचरत्वात् तदसिद्धौ न वस्तुभेदावभासनाय प्रभवति तिलेभ्य एव तैलं पयस एव दधीत्य
र्थक्रियान्यथानुपपत्तिप्रभवैरपि नांतरेण तिलादिकारणभेदावभासं व्यवस्थासिद्धिरित्यन्योन्यसंश्रयात्तत्कारणभेदाव
भासे प्रामाण्यं भजते अभावोपि नेदमिह नेदमिदमिति धर्मिप्रतियोगिभेदाधीनसिद्धिर्न वस्तुभेदं साधयत्यन्योन्याश्रयात्॥

त्वादर्थापत्तिर

वभासनाय प्रभवतीति योजना अर्थापत्तेरपि भेदे प्रामाण्यमाह तिलेभ्य एवेत्यादिना अर्थापत्तिरपि न कारणभेदावभासे प्रामाण्यं भजते कुत
स्तिलेभ्य एव तैलं पयस एव दधीति तैलदधिलक्षणार्थक्रियायाव्यवस्थानियतिः तदन्यथानुपपत्तिप्रभवत्वात् भवतु नाव ना पि किमाया।
तमित्यत आह नांतरेणेति तिलेभ्य एव दुग्धेभ्य एवेत्यत्र पदितिलदुग्धयोर्भेदो न प्रतीतः ततः किं कुत्र व्यवस्थाप्येत प्रत्युत व्यवस्थैव
तस्मात्तयोर्भेदसिद्धावेव व्यवस्थासिद्धिर्व्यवस्थान्यथानुपपत्तिलक्षणार्थापत्त्या च कारणयोर्भेदसिद्धिरभिप्रेतेत्यन्योन्याश्रयादिति योजना तत्त्वभावप्र
माणागम्यो वस्तुभेदः तस्य च परस्परव्यावृत्तिरूपभेदे संभवति प्रवृत्तिरिति तत्राह अभावोपीति संसर्गाभावेऽन्योन्याभावे वा प्रवर्तमानोऽभावो धर्मिप्रतियोगि

निर्भग्नः क्षणभंगरूपविषमो वद्धोतिदुर्बुद्धिभिर्बौद्धैर्विभ्रमविभ्रमालयमहामायाविमूढान्तरैः १ यं विश्वस्य समस्तभावविकृतिं व्या
कीर्णमायाकथं लब्धाऽविक्रियबोधमोदजलधिं स्थाणुं स्थिरं तं भजे २ प्रत्यक्षादिप्रमाणानां भेदविषयत्वाभावाद्भेदस्य च दुर्निरूपत्वान्न
हैतप्रतिपादकागमानां नैर्विरोध इत्यधस्तादभ्यधायि इदानीं पैः प्रमाणैर्विरोधं ब्रूषे तान्येव दुर्निरूपाणि कैर्विरोधः स्यादित्याह अ
पि च मानाधीनेति तच्चेति तत्त्वलक्षणमध्यक्षादिषु देवैरपि वक्तुं न शक्यत इत्यर्थः अनेन प्रमाणादिषोडशपदार्थव्युत्पादनरूपन्यायद
र्शनविरोधोऽपास्यते वैशेषिकदर्शनविरोधो हि षट्पदार्थनिर्मथनेन पुरः निवारितः श्लोकं विवृणोति प्रत्यक्षादीति यद्यपि प्रमाणसमानलक्ष
णखंडनानंतरं तद्विशेषप्रत्यक्षादेः खंडनं युक्तं तथापि प्रत्यक्षलक्षणखंडनप्रसंगेन तदपि खंडयिष्यत इति लाघवमभिप्रेत्य न्यायसूत्रोक्तप्र

अपि च मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात् तच्चाध्यक्षादिमानेषु गीर्वाणैरपि दुर्भणं १८ प्रत्यक्षादिप्रमाणा
धीना तत्प्रमेयव्यवस्थितिः प्रमाणानि च लक्षणाधीनाधिगमानि लक्षणं च दुर्निरूपणं तथा हि तत्र तावदिंद्रियार्थस
न्निकर्षोत्पन्नं ज्ञानमव्यभिचारीत्यक्षपादोदितं प्रत्यक्षलक्षणं घटते अव्यभिचारित्वस्य दुरधिगमत्वात् तदव्यभिचारित्वं
किमदुष्टसामग्रीजन्यत्वेन ज्ञाप्यते किं वा बाधरहितत्वेनाहोस्वित्प्रवृत्तिसामर्थ्येनोतान्येन केनचिन्न प्रथमः ॥

त्यक्षलक्षणं दूषयति
तत्रेति तेषु प्रमाणेषु मध्य इत्यर्थः यद्यपीन्द्रियार्थसन्निकर्षोत्पन्नमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षमिति सूत्रं तथापीयानेवांशो
लक्षणोपयोगी अव्यपदेश्यपदस्य निर्विकल्पकप्रत्यक्षभेदसूचकत्वात् व्यवसायात्मकपदस्य रूपं रस इत्यादिप्रत्यक्षज्ञानस्य शब्दानुवे
धेन शाब्दत्वशंकानिवर्तनेन सविकल्पकप्रत्यक्षप्रामाण्यसमर्थनार्थत्वात् इति हृदि निधायैतावदुदाहृतं तत्र चाव्यभिचारीति युक्तिरजत
ज्ञानादिव्यवच्छेदः सुखादिव्याप्त्यै ज्ञानपदं अनुमानादिव्यावृत्त्यर्थमाद्यं विशेषणं सकदेशस्य दुर्ज्ञानत्वादसिद्धिं लक्षणस्याह अव्यभिचारित्व
स्येति अत्र प्रत्यक्षेणानुमानेनागमेन वेदमधिगम्यत इत्यग्रे विकल्प्य दूषयिष्यत इदानीं तूभयानुगुणान् ज्ञापकत्वेनाभिमतान्धर्मान्विकल्प्य दूषयति त

ननु कथं प्रत्यक्षपक्षे धर्मिणामानुगुण्यमिति चेत् रत्नतत्त्वोपदेशस्यैव तत्प्रत्यक्षसाक्षित्वमित्यवेहि प्रवृत्तेरपेक्षायाः फलेन तोयादिना अव्यभिचा-
रत्वव्याप्तिनियमः प्रवृत्तिसामर्थ्यं अदुष्टसामग्रीजन्यत्वेनेति प्रथमपक्षे यदिदमदुष्टसामग्रीजन्यत्वं तत्किं प्रत्यक्षेण ज्ञायते उतानुमानेन आद्यमाह अप्र-
त्यक्षेति कार्यैकगम्यसामग्र्या दोषांशानां च प्रत्यक्षत्वाभावात् तन्निष्ठदोषाभावोप्यप्रत्यक्षः अतस्तज्जन्यत्वमपि ज्ञानगतमप्रत्यक्षमिति भावः द्विती-
येपि किं ज्ञानत्वलिंगेन तदनुमीयते किं वाऽव्यभिचारिज्ञानत्वेन नाद्य इत्याह नापीति तत्र हेतुः ज्ञानमात्रेणेति भावप्रधानो निर्देशः द्वितीयं दूषयति

अप्रत्यक्षसामग्रीनिष्ठदोषाभावस्याध्यक्षेणाध्यवसातुमशक्यत्वात् नापि ज्ञानाख्यलिंगेन ज्ञानमात्रेणादुष्टसामग्रीजन्यत्व-
साधने विभ्रमज्ञानेष्वनैकान्तिकत्वात् नाप्यव्यभिचरितज्ञानेन तदवगमः परस्पराश्रयत्वात् अदुष्टकरणजन्यत्वेन ज्ञानस्याव्यभिचरि-
तत्वसिद्धिरव्यभिचरितत्वज्ञानाच्चादुष्टकरणजन्यत्वसिद्धिरिति नापि द्वितीयो विकल्पासहत्वात् किं सर्वपुरुषबाधरहितत्वमुत प्रति-
पत्तुः नाद्यः सर्वपुरुषबाधरहितत्वस्यासर्वज्ञाविज्ञेयत्वात् न द्वितीयः प्रतिपत्तुर्देशान्तरगमननिधनादिना बाधानुदयेन दीपमरु-
मरीचिकाविभ्रमाणामप्यर्थाव्यभिचारित्वप्रसंगात् नापि तृतीयस्तस्याप्यनिरुक्तेः तथाहि प्रवृत्तिर्नाम पुंसः समीहा चेष्टा त-
स्याः फलेनोदकादिनाभिसंबंधः प्रवृत्तिसामर्थ्यं तेनोदकादिविज्ञानस्यार्थाव्यभिचारित्वमवगम्यत इति स्थितिः॥

२ नाप्यव्यभिचा-
रितेति परस्पराश्रयमेव विवृणोति अदुष्टेति बाधरहितत्वेनाव्यभिचारित्वावगम इति द्वितीयं पक्षं दूषयति नापीति उत प्रतिपत्तुरिति यो हि
येन प्रत्यक्षेणार्थं प्रतिपद्यते तत्र तस्य बाधाभावादित्यर्थः प्रतिपत्तुर्देशान्तरेति यदा हि मरुमरीचिकाविभ्रमोदयानन्तरं प्रतिपत्तुर्देशान्तरगमने देहव्या-
पत्तिर्वा भवति तत्र तस्य न बाधोदय इति तद्भ्रमाणामव्यभिचारित्वं स्यादित्यर्थः आदिग्रहणेन स्वस्यैव जिज्ञासाद्यभावो गृह्यते प्रवृत्तिसामर्थ्येने-
ति तृतीयं पक्षं दूषयति नापि तृतीय इति पूर्ववाद्यभिमतं प्रवृत्तिसामर्थ्यं विवेचयति तदनिरुक्तिं दर्शयितुं प्रवृत्तिर्नामेत्यादिना समीहेत्यस्यैव विव-

भवत्विदं प्रवृत्तिसामर्थ्यं ततः किं तत्राह तच्चेदमिति लिंगत्वादिति व्याप्तत्वपक्षधर्मतया ज्ञानं हि लिंगं भवति इतरथाऽसिद्धत्वप्रसंगादित्यर्थः न
च प्रवृत्तिसामर्थ्यं किं ज्ञानत्वलिंगेनावगतं सत्साध्यं बोधयति किं वा अव्यभिचारिज्ञानत्वेनावगतमिति विकल्प्याद्ये नैकान्तिकतामाह भ्रांतीति
अत्र च प्रवृत्तिसामर्थ्यं समर्थप्रवृत्तिजनकत्वमभिमतमितरथा वैयधिकरण्यं स्यात् पूर्वं प्रवृत्तिसामर्थ्यलक्षणो हेतुर्ज्ञान इत्युक्तं इदानीं
भवतु सुज्ञानत्वं तथापि कीदृशो हेतुरिति विकल्पयति किंचायमिति चः किंचार्थः पंचरूपः खल्वन्वयव्यतिरेकी अत्र च सपक्षे सत्वलक्षणं हि नी
यं नास्तीत्यभिप्रेत्याह सर्वज्ञानानामिति न च तदनुभवाभावे संदेहाभावः विपर्य्यासादपि प्रत्यवस्थानसंभवात् न च सोप्यन्यत्र सतस्त्वानिर्वचनीय

तच्चेदं प्रवृत्तिसामर्थ्यं लिंगत्वादवगतं सदव्यभिचारित्वं बोधयतीति वाच्यं तथा सति किं ज्ञानमात्रावगतं सत्तदव्यभिचरितं विज्ञा
नस्यावगमयेदुताव्यभिचारिज्ञानावगतं नाद्यः भ्रांतिस्वप्नादिज्ञानेनानैकान्त्यात् नापि द्वितीयः परस्पराश्रयत्वात् किंचायमन्वयव्यतिरे
की हेतुः केवलव्यतिरेकी वा नाद्यः सर्वज्ञानानामव्यभिचारित्वे विप्रतिपन्नं प्रति सपक्षासंभवात् अस्तु तर्हि द्वितीयस्तथाचार्य्येवा।
चस्पतेस्तात्पर्यटीकायां प्रयोगः विवादाध्यासितं ज्ञानमर्थाव्यभिचारि समर्थप्रवृत्तिजनकत्वात् यदि पुनरेवं नाभविष्यन्न सम
र्थप्रवृत्तिमकरिष्यद्यथा प्रमाणाभास इति मैवं हेतोर्विरुद्धत्वात् दृश्यते हि मणिप्रभायां मणिबुद्ध्या प्रवर्त्तमानस्य मणिप्राप्तेः
प्रवृत्तिसामर्थ्यं न चाव्यभिचारित्वं उक्तं हि मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः मिथ्याज्ञानाविशेषेपि विशेषोर्थक्रियां प्रतीति।

वादात् न च सर्ववादविधिनिषेधप्रसंगः उक्तवक्ष्यमाणसमाधानत्वादेतेनोदयनोद्धारोपि चिकित्सितः केवलव्यतिरेकिपक्षं शंकते अस्तु तर्हीति
तात्पर्यटीकान्यायवार्त्तिकटीका उदाहृतश्चायं ग्रंथः स्वतः प्रामाण्यवादे भ्रांतिव्यावृत्त्यै समर्थपदं तदेतद्दूषयति मैवमिति विरुद्धत्वं दर्शयति दृश्य
ते हीति या हि मणिप्रभायां मणिबुद्धिः सा तावदर्थव्यभिचारिणी अयथार्थत्वात् न च मणिप्रभैव मणिः अथ च समर्थप्रवृत्तिजनकत्वमस्ति
मणिप्रापकत्वादित्यर्थः अत्र सौगतवार्त्तिकसंमतिं दर्शयति उक्तं हीति यदि हि मणिप्रभायां प्रदीपप्रभायां च मणिबुद्ध्या पुरुषावभि
धावतस्तदा तयोरुभयोरपि विज्ञाने मिथ्याज्ञाने एव तथाप्यर्थक्रियां प्रति विशेषोस्ति मणिप्रभायां मणिबुद्धेर्मणिप्रापकत्वात् इतरत्र तदभावा

प्रवृत्तिसामर्थ्यस्य हेतुविशेषाणां मर्मावोदुर्निरूप इत्युक्तं इदानीं प्रवृत्तिसामर्थ्यमेव सर्वज्ञानानुगतमशक्यनिरूपणमित्याह कस्मायमिति
वृषभमहिषेति अयमर्थः वैशेषिकादिमते विज्ञानप्रतिभासितार्थप्रापकत्वं फलाभिसंबंधरूपप्रवृत्तिसामर्थ्यमित्ययुक्तं अव्यापकत्वात् यदा हि
दूरतरे सरसि यः सलिलं दृष्ट्वा तत्पिपासया सर्पति तदा समसमयमेव यदि महिषेण वृषभेण वा तदंभः क्षोभितं भवेत्तदा तस्य तदंभोवयव्यारंभकाव
यवेषु क्रियोत्पद्यते ततस्तस्य पूर्वेण तद्व्यारंभकसंयोगविघातकविभागोत्पत्तिस्ततस्य संयोगनाशस्ततश्च तदारंभकावयविनाशः उत्तरसंयो
गोत्पत्त्या चावयव्यंतरोत्पत्तिरिति तेषां दर्शनं तत्तस्य पूर्वज्ञानः सलिलावयवी विलीन एव पीयमानस्त्वन्य एवेति पूर्वज्ञानजनितप्रवृत्तेः फलाभि

कस्मायं फलाभिसंबंधः ज्ञानप्रतिभासितार्थस्य प्राप्तिरूपः तज्जातीयस्य नाद्यः वृषभमहिषपरिवर्त्तनादिना क्रियाविभागन्यायेन
विज्ञानावभासितस्य सलिलावयविनो विनाशेन ज्ञानस्य फलाभिसंबंधाभावप्रसंगात् न द्वितीयो ग्रहनक्षत्रादिविज्ञाने तस्य तज्जातीयस्य वा
प्राप्त्यभावात् नापि चतुर्थः अन्यदप्यनुमानान्तरस्तु न प्रत्यक्षं नाद्यः लिंगस्याव्यभिचरितत्वलक्षणसाध्येन व्याप्तिग्रहणदशायामेवाव्यभि
चारस्य गृहीतत्वे पुनरनुमानानुपयोगात् अगृहीतत्वे वानुमानस्याप्रवृत्तेः न द्वितीयः ज्ञानग्राहकेणैव मानसप्रत्यक्षेण तस्यार्थाव्य
भिचारित्वग्रहणेऽभ्यासदशायामिवानभ्यासदशायामपि संशयानुदयप्रसंगात्॥ संबंधो न स्यादस्ति च तदितरथाव्यभिचारितयाऽ

प्रामाण्यप्रसंगादिति विज्ञानप्रतिभासितार्थसजातीयार्थप्रापकत्वं फलाव्यभिचार इत्यप्ययुक्तं ग्रहतारकादिविज्ञानस्य सजातीयस्य वा वि
जातीयस्य वा ग्रहादेः प्रापकत्वाभावेनाव्यापकत्वादित्याह ग्रहेति पक्षद्वयेऽप्युपेक्षाज्ञानस्य प्रामाण्येन स्यादित्यपि द्रष्टव्यं अन्येनेति पक्षं नि
षेधति नापीति यत्तद्वोचाम प्रत्यक्षमनुमानं वेति विकल्प्य दूषयिष्यतीति तदाह अन्यदपीति येन हि लिंगेनाव्यभिचारित्वमनुमीय
तेतस्य तेन व्याप्तिर्गृहीता न वा आद्ये प्राह लिंगस्येति न हि ज्ञानविशेषेऽव्यभिचारित्वं विप्रतिपन्नं येनाग्निमत्त्वादिवदन्यत्र प्रसिद्धमेवान्यत्रानुमी
येतापि त्वव्यभिचारित्वमात्र इति भावः द्वितीये प्राह अगृहीतत्व इति प्रत्यक्षपक्षं दूषयति न द्वितीय इति प्रत्यक्षत्वे ज्ञानप्रतीतिसमसमयमेव त
व्य स्यापि निर्णीतत्वादनभ्यासदशायामव्यभिचारित्वे संशयो न स्यादित्यर्थः॥ ॥

तदित्थमव्यभिचारित्वस्य ज्ञापकाभावादसिद्धिरभिहिता इदानीमव्यभिचारित्वमेव दुर्निरूपमित्याह किंचेदमिति प्रमात्वमित्यपरः पर्य्या
योयस्याः सा तथोक्ता प्रमात्वमिति नामिकेति यावत् प्रमात्वरूपमव्यभिचारित्वं न जातिः इदं रजतमित्यादिभ्रमेषु धर्म्यंशेऽव्यभिचारित्वरूप
प्रामाण्यांगीकारादितरांशे चाप्रामाण्यांगीकारात् उभयोरपि परस्परव्यभिचारिणोरेकत्र वृत्तौ जातिसंकरादित्याह नतावज्जातिरित्यादि
ना जातिसंकरस्वरूपमेव तन्नद्वचनेन दृढयति अन्योन्यपरिहारेणेति न च स्वतःप्रामाण्यवादोक्तः परिहारः इदमंशेन व्यवहारस्योपाधि

किंचेदमव्यभिचारित्वं नाम विज्ञानस्य किं प्रमात्वापरपर्य्याया जातिः कृतोपाधिर्न तावज्जातिर्जातिसंकरप्रसंगा
त् तथाहि सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्य्ययः इति वदद्भिरिदं रजतमिति विभ्रमज्ञानमिदमंशे प्रमाणमप्रमाणं च
रजतांशेऽभ्युपगम्यते परीक्षकैस्तथा चान्योन्यपरिहारेणाभिन्नव्यक्तिनिवेशिनोः सामान्ययोः समावेशो जातिसंकर उच्य
ते इत्युक्तन्यायेन स्मृतो प्रमात्वपरिहारेण वाप्रमात्वस्य वृत्तेरप्रमात्वपरिहारेण च प्रत्यक्षादौ प्रमात्ववृत्तेरेकस्यां विभ्रमव्य
क्तावुभयसमावेशे कथं न जातिसंकरः स्यादुपाधिश्चाबाधितत्वाविसंवादित्वादिप्रागुक्तप्रकारेणावापाकरणीयः अ
स्तु वा यथाकथंचिदविचारितरमणीयमव्यभिचारित्वं तथापीश्वरज्ञाने ऽव्याप्तिः तस्य नित्यत्वादेवेंद्रियसन्निकर्षाजन्य
त्वात् जन्यप्रत्यक्षलक्षणमिति चेत् तथाप्यनुमितावतिव्याप्तिः मनोलक्षणेंद्रियस्यात्मलक्षणेनार्थेन सन्निकर्षादनुमिते
र्जायमानत्वात्॥

कत्वेन्यत्रापि तत एव तद्व्यवहारोपपत्तौ जातिसद्भावे प्रमाणाभावात् न च गोत्वाद्युच्छेदप्रसंग इष्टत्वात् न चाप्रमा
त्वमुपाधिः प्रमात्वं च जातिरिति वक्तुं युक्तं वैपरीत्यस्यापि संभवात् उपाधिपक्षं दूषयति उपाधिश्चेति प्रागुक्तप्रकारेणेति अबाधितत्वं किं सर्वस्य किं
वा प्रतिपत्तुः एवमविसंवादित्वमपि किं सर्वेषामुत प्रतिपत्तुरिति विकल्प्योक्तदूषणेनेत्यर्थः एवमवयवशो दूषणमुक्त्वा समुदितेऽपि दूषणं वक्तुमुपक्र
मते अस्तु वेति अनीश्वरप्रत्यक्षलक्षणमिदमतो नाव्याप्तिरिति शंकते जन्येति अनुमिताविंद्रियार्थसन्निकर्षजन्यत्वं दर्शयन्नतिव्याप्तिमेव विवृणो

नन्विंद्रियार्थसन्निकर्षोत्पन्नं संयुक्तेर्थे प्रत्यक्षमिति लक्षणं विवक्षितं न चैवमनुमानमनोनातिव्याप्तिरिति शंकते संयुक्तेर्थे इतीति
एतदुक्तं भवति इंद्रियार्थेत्यादिविशेषणायुक्तं संयुक्तार्थावभासकं प्रत्यक्षमिति तर्हि योगिप्रत्यक्षविशेषेऽव्याप्तिरित्याह नयुक्तावस्थायामि
ति आत्ममनःसन्निकर्षमात्रादशेषार्थग्रहणमिति भवतामभ्युपगमः युक्तं च न हि तदा परमाण्वादींद्रियसंयुक्तं वहिरिंद्रियाव्यापारा
न्मनसश्च वहिःस्वातंत्र्याभावादिति भावः तर्हि अयोगिप्रत्यक्षस्यैवेदं लक्षणमस्त्विति शंकते अयोगीति तर्ह्ययोगिप्रत्यक्षेप्यव्याप्ति।
रित्याह नप्रत्यभिज्ञानइति ननु कथमव्याप्तिः यावतानन्तायामपीदानीं चक्षुषा संयुक्तदेवदत्तविशेषणतया पारंपर्येणेंद्रियसन्निकर्षोस्ती

संयुक्तेर्थे इति विशेषणात्तत्रातिव्याप्तिरिति चेन्न युक्तावस्थायामुपजायमानपरमाणुविषययोगिप्रत्यक्षेऽव्याप्तेः अयोगिप्र।
त्यक्षलक्षणमिति चेन्न प्रत्यभिज्ञाने तत्तांशेऽव्याप्तेः तत्रापि संयुक्तविशेषणतालक्षणास्त्सन्निकर्षोस्तीति चेन्नैवं अयमग्निमान्पर्व।
त इत्यनुमानेऽतिव्याप्तेस्तत्रापि संयुक्तविशेषणता लक्षणसन्निकर्षस्य तत्तांशइव सद्भावात् लिंगाद्यजन्यत्वे सतीति
विशेषणाददोषइति चेन्नेंद्रियार्थसन्निकर्षपदवैयर्थ्यप्रसंगात् तेनाप्यतद्व्यावृत्तिमुखेन लिंगाद्यजन्यत्वमेवोच्य।
त इति चेन्न यत्किंचिदपेक्षया सर्वस्यापि लिंगत्वसंभवेन लक्षणस्यासंभवित्वप्रसंगात्॥ ऽतिशंकते तत्रापीति तर्हि प्र
त्यक्षधर्मिकानुमानेष्वतिव्याप्तिरित्याह मैवमिति ननु लिंगाद्यजन्यत्वे सत्युक्तविधसन्निकर्षजन्यत्वं तल्लक्षणं तथा च नानुमितावति।
व्याप्तिरित्याशंक्य तर्हि लिंगाद्यजन्यत्वे सति प्रमितित्वमित्येतावदेवास्तु प्रत्यक्षलक्षणं व्यभिचाराभावात् वृथेतरदिति परिहरति नेंद्रियार्थे
ति नन्विंद्रियार्थसन्निकर्षोत्पन्नमित्यत्र लिंगाद्यजन्यत्वं विवक्षितमतो न वैयर्थ्यं यदि हि लिंगाद्यजन्यत्वमिंद्रियार्थसन्निकर्षजन्यत्वं चोभयं
विवक्ष्येत स्यात्तदा वैयर्थ्यं न त्वेवमिति शंकते तेनापीति तर्ह्यसिद्धिरेव लक्षणस्य चक्षुरादेरपि यत्किंचित्प्रतिलिंगत्वेन सर्वप्रत्यक्षाणां लिंगज
न्यत्वादित्याह नयत्किंचिदिति तल्लिंगाजन्यत्वे सतीति तदिंद्रियसन्निकर्षजन्यत्वस्य लक्षणत्वविवक्षायां तच्छब्दार्थाननुगत्यसंभवेन लक्षणस्या

फलद्वारा लक्षणं शंकते पारोक्ष्येति अनुमित्यादिव्यावृत्तये पारोक्ष्यानधिकरणेत्युक्तं भ्रान्तिविशेषव्यवच्छेदाय प्रमाग्रहणं इन्द्रियेत्यादि विशेष-
णेन पारोक्ष्यानधिकरणत्वसूचनादव्यभिचारि तथा प्रमादिव्युदासेन प्रमात्वलाभात् अन्यथानुमानोपमानशब्दाः प्रमाणानीति सूत्रे करणस्य च प्र-
क्रान्तत्वादिदं लभ्यत इति भावः भ्रमज्ञान इति तत्र हीदमंशज्ञाने प्रमात्वमितरत्राप्रमात्वमिति जातिसंकर उक्त इत्यर्थः ननु न तत्र प्रमा-
त्वं जातिरस्ति येन जातिसंकरः स्यात् व्यवहारस्तूपाधिनिबंधन इति शंकते नेन तत्रेति आदिग्रहणेन पीतः शंखः उष्णं जलमित्यादौ पी-
तोष्णतादिप्रत्ययाः संगृह्यन्ते संसर्गमात्रप्रत्यये हि तत्राप्रमात्वं नहि तेनैवोपाधिना सर्वत्र प्रमाव्यवहारोऽस्त्वनुगतनिमित्तलाभात् अलं जा-

पारोक्ष्यानधिकरणप्रमा प्रत्यक्षफलं तत्करणं च प्रत्यक्षप्रमाणमिति सूत्रेण सूत्रितं लक्षणमिति चेन्न प्रमात्वपरोक्षत्वयोर्दुर्नि-
रूप्यत्वेन तदधीननिरूपणस्यापि लक्षणस्य दुर्निरूपत्वात् न च प्रमात्वस्य जातित्वेन निरुक्तिः भ्रमज्ञाने जातिसंकरस्योक्तत्वात् न तत्रेदमं-
शादिप्रत्यये प्रमात्वं जातिः किंतूपाधिनिबंधनः प्रमाव्यवहार इति चेन्न सर्वप्रमाव्यवहारस्यापि तथात्वोपपत्तौ जातेरपलापापत्तेः न चैवं गो-
त्वापलापप्रसंगः जातिमंतरेणोपाधिमात्रनिबंधनतया गोव्यवहारस्य क्वचिदप्यनंगीकारात् मृद्गवादौ गोव्यवहारो न जातिनिबंधनो
नाप्युपाधिनिबंधनः किंत्वौपचारिक इति न किंचिद्दुष्यति न च प्रमात्वजातेर्व्यंजकमस्ति तथाहि तत्किमबाधितानुभूतित्वं किं वा यथा-
र्थानुभूतित्वमाहोस्विदव्यभिचार्यनुभूतित्वमविसंवाद्यनुभूतित्वं वा संशयविपर्ययव्यतिरिक्तस्मृतित्वानधिकरणज्ञानत्वं वा॥ २॥

तिकल्पनया अर्द्धजरतीयदूषणेति परिहरति नेति ननु कथं क्वचिदपि गोत्वव्यवहारस्योपाधिनिबंधनताभावः यावता मृदादिविनिर्मितगवा-
दौ गोत्वव्यवहारस्योपाधिकत्वात् तत्र जातेरभावादित्यत्राह मृद्गवादाविति न तावन्मृद्गवादौ गवादिबुद्धिरस्ति शब्दप्रयोगस्तु परं न च सो-
पि जातिमुपाधिं वावलंब्य किंतूपचारात् नहि सिंहशब्दो बलवर्मणि उपचारात्प्रयुक्त इति उपाधिनिबंधनो जातिनिबंधनो वा भवति विभ्र-
मेदमंशादौ पुनर्मुख्यत्वं प्रमाव्यवहारस्य स्वीक्रियत इति विशेष इति भावः जातिसंकराच्च प्रमात्वं जातिरित्युक्तं इदानीं व्यंजकाभावाच्च न प्रमात्वं जा-

पक्षत्रयेऽनुभूतिग्रहणं स्मृतिव्यावृत्त्यर्थं विपर्ययादिव्यावृत्त्यर्थं च विशेषणान्तरं संशयाद्विपर्ययाच्च व्यतिरिक्तत्वे सति स्मृतित्वसाप्यनधि-
करणार्थज्ञानं तत्त्वमिति पंचमः पक्षः एतद्घटज्ञानमिति एतच्च घटज्ञानं चेति प्रत्यक्षज्ञानविशेषो विवक्षितः एतच्च धूमजन्यवह्निज्ञानं चेत्यत्राप्यनुमान-
ज्ञानविशेषः तयोर्वर्त्तमानत्वे सति संशयावृत्तिर्या जातिः प्रमात्वं तदधिकरणत्वं प्रमात्वव्यंजकमित्यर्थः अत्र च घटज्ञानवृत्तिजातिमत्त्वमित्युक्ते अनु-
मेयघटज्ञानवृत्त्यनुमितित्वजातिमत्त्वमनुमितित्वव्यंजकमादायार्थान्तरं तन्निरासार्थमेतद्घटज्ञानवृत्तीत्युक्तं तथापि प्रत्यक्षत्वजातिमत्त्वं प्रत्यक्षत्वव्यंज-
कमादायार्थान्तरं तन्निरासार्थं धूमजन्यज्ञानवृत्तीत्युक्तं तथापि प्रत्यक्षधूमज्ञाने पूर्वोक्तार्थान्तरं तदर्थं धूमजन्यवह्निज्ञानेत्युक्तं तथापि तथा-
विधस्मृतौ प्रसक्तिस्तदर्थमेतदित्युक्तं तथापि गुणत्वादिमत्त्वमादायार्थान्तरं तदर्थं संशयावृत्तीत्युक्तं संशयावृत्तित्वे सति परोक्षाऽपरोक्षानु-

एतद्घटज्ञानवृत्तित्वे सत्येतद्धूमजन्यवह्निज्ञानवृत्तिसंशयावृत्तिजातिमत्त्वं वा न प्रथमः इदानीं बाधविरहस्यातिप्रसंजकत्वात् का-
लान्तरे बाधविरहस्य दुरवधारणत्वात् सर्वपुरुषाबाधस्य पुरस्तादेव निरस्तत्वान्न द्वितीयः यथार्थता निरुक्तेः तत्किमर्थसत्तामा-
त्रविषयत्वमुत यावत्प्रतीयमानार्थसत्त्वमाहोस्विदबाधितार्थत्वं न तावदर्थसत्तामात्रविषयत्वं भ्रमस्यापि प्रमात्वप्रसंगा-
त् नापि यावत्प्रतीयमानार्थसत्त्वं प्रत्यभिज्ञायामतीतानागतानुमानेषु वैधज्ञाने च तदभावेन तेषामप्रमात्वापातात् ॥ ९ ॥

भवद्वृत्तिजातिमत्त्वमिति लक्षणार्थः तत्र प्रथममपक्षमबाधितत्वनिरुक्त्या दूषयति न प्रथम इति अतिप्रसंजकत्वादिति विपर्ययादावपीदानीं बाध-
विरहसंभवेन प्रमात्वव्यंजकत्वप्रसंगादित्यर्थः पुरस्तादेव निरस्तत्वादिति असर्वज्ञाविज्ञेयत्वादित्यर्थः वादीन्द्रस्तु बाधितत्वात्यन्ताभावोऽबाधितत्वमि-
त्याह तत्र वक्ष्यमाणबाधानिरुक्त्या निरासः अथवा बाधितमबाधितमित्यनुवृत्तबुद्ध्या जातिरूपाधिर्वाऽबाधितत्वं तद्बुद्धिमात्रादसिद्धेः अबाधित-
त्वे चेत् कं भ्रमस्यापीति भ्रमज्ञानेपीदं संशयस्यार्थस्य विद्यमानत्वात् तत्रापि व्यंजकसत्त्वयाऽव्यंग्यप्रमात्वप्रसंगादित्यर्थः द्वितीयं दूषयति नापीति प्रत्यभि-
ज्ञायां तत्ताविशिष्टोऽर्थः प्रत्यभिज्ञोदयसमये नास्त्यतीतत्वात् तथातीतानागतार्थविषयानुमानेऽपि तदानीमर्थो नास्ति तथा विधिवाक्यजन्यज्ञानेपि साध्या-
र्थविषयत्वात्तदानीमर्थो नास्तीति तेषामव्यंजकतयाऽप्रामाण्यप्रसंगादव्याप्तिरित्यर्थः ॥ ॥

द्वितीय तृतीयं दूषयति अबाधितार्थत्वं त्विति अव्यभिचार्य्यनुभूतित्वमिति तृतीयंपक्षं दूषयति नापितृतीयइति किंयत्रार्थस्त-
त्रज्ञानमितिदेशतोऽव्यभिचारित्वंविवक्षितं किंवापदार्थस्तदाज्ञानमिति कालतः नोभयमपीत्याह ज्ञानार्थयोरिति यद्यपिसुखादि
षुदेशतोऽविनाभावो वर्त्तमानेषुचकालतः संभवतितथापिनसर्वप्रमितीनामेवंभावइतिनात्वव्याप्तिरित्यर्थः अविसंवाद्यनुभूतित्व
मितिचतुर्थेपिपक्षेऽविसंवादित्वंविकल्प्यदूषयति चतुर्थेपीति किंसंवादाभावोविसंवादित्वंतदभावोऽसंवादित्वमितिप्रथमविकल्पा-
भिप्रायः द्वितीयेतुविपरीतसंवादोविसंवादस्तदभावोऽविसंवादित्वमितितत्रप्रथमंदूषयति नाद्यइति अस्तिहिइदंरजतमिदंरजतमिति

अबाधितार्थवत्वंतुपुरस्तादेवापहस्तितं नापितृतीयः ज्ञानार्थयोर्विभिन्नदेशकालयोर्धूमाग्न्योरिवाविनाभावाभावात्
चतुर्थेपिपक्षेज्ञानांतरेणानर्थेवोढिरव्यमानत्वंविपरीतनयावानुद्धिरव्यमानत्वमविसंवादित्वंनाद्यः रजतंरजतमितिधारावाहि
कविभ्रमेष्वपिभावात् नद्वितीयोऽसंज्ञानवाधस्यापिभ्रमस्यप्रमात्वापातात् नापिपंचमः संशयविपर्य्ययव्यतिरिक्तस्मृतित्वानधिक
रणाज्ञानत्वस्यविभ्रमेपिधर्म्यंशेभावात् अन्यथासर्वज्ञानंधर्मिण्यभ्रांतंप्रकारेतुविपर्य्ययइत्यभ्युपगमपरित्यागप्रसंगात् संश
यविपर्य्ययस्मृतीनामनिरुक्तेश्चतदतिरिक्तत्वमपिदुर्भणम् तत्रकिमनवधारणाज्ञानंसंशयः विरुद्धोभयकोटिसंस्पर्शिज्ञानंवा॥

धारावाहिकविभ्रमेज्ञानांतरेणपूर्वज्ञानप्रतीतार्थस्यतथैत्युलेखइत्यतिव्याप्तिरित्यर्थः द्वितीयेदेशांतरगमनादिनानुत्पन्नबाधेभ्रमेतिव्या
प्तिरित्याह नद्वितीयइति पंचमपक्षेप्यतिव्याप्तिः सर्वभ्रमाणामधिष्ठानांशेत्वदुक्तलक्षणवत्वेनप्रमात्वप्रसंगात्तचेष्टापत्तिः जातिसंकरोक्तेरि
त्यभिप्रेत्याह नापिपंचमइति किंच संशयादेरपिदुर्निरूपत्वात्तद्व्यतिरिक्तत्वमप्रसिद्धमित्यसिद्धिर्लक्षणस्येत्यभिप्रेत्याह संशयेति तत्रसंश
यलक्षणानिसंभवंतिविकल्पयति तत्रकिमित्यादिना निश्चयभ्रान्त्यर्थमाद्यंपदंअवधारणाभावव्यावृत्त्येज्ञानपदं घटपटौस्यातामित्यादि

अनिर्द्धारितत्वविशेषितमिति अनिर्द्धारितोभयकोटिसंस्पर्शि ज्ञानमित्यर्थः मिथ्याज्ञानमित्युक्ते विपर्य्ययेऽपि प्रसंगस्तदर्थं जिज्ञासाजनकेत्युक्तं तावत्युक्ते
तर्केऽपि प्रसक्तिः तदर्थं मिथ्याज्ञानमिति सर्वथापि दुर्निरूपणामित्युक्तं तत्र यथासंभवं दूषणानि श्लोकेन संगृह्णाति अनिरुक्तेरित्यादिना प्रथमपक्षेऽवधृ-
तेरनिरुक्त्या अनवधृतेरप्यनिरुक्तेरसिद्धिस्तथा द्वितीयतृतीययोरतिव्याप्तिश्चतुर्थे चाव्याप्तिः पंचमे विभ्रमाभेदात् षष्ठेऽपि जातिसंकरप्रसक्तिरिति यो-
जना। संगृहीतानि दूषणानि विवृणोति नाद्य इत्यादिना अवधारणानिरुक्त्याऽनवधारणानिरुक्तिं दर्शयितुमवधारणलक्षणानि विकल्पयति
किं ज्ञानमात्रमित्यादिना ज्ञानमात्रमवधारणमिति पक्षे ज्ञानत्वानधिकरणं ज्ञानमनवधारणज्ञानं स्यात् तथा चानवधारणज्ञानं संशय इति वदतो

अनिर्द्धारितत्वविशेषितं वा जिज्ञासाजनकं मिथ्याज्ञानं वा विपर्य्ययेतरमिथ्याज्ञानं वा संशयत्वजातियोगि वा सर्वथापि न निरूप-
णपथमवतरति अनिरुक्तेरवधृतेरतिव्याप्तेर्द्वयोरपि अव्याप्तेर्विभ्रमाभेदाज्जातिसांकर्य्यप्रसक्तितः १९ नाद्य अवधारणानिरुक्त्या-
वनवधृतत्वस्याप्यनिरूपणात् तथा हि किं ज्ञानमात्रमवधारणमुतैकाकारप्रतिनियतमाहोस्वित्संशयविरोधिज्ञानं वा सं-
शयविरोधिप्रमाणज्ञानं वा आद्ये व्याघातः ज्ञानं भवति न भवतीत्युक्तत्वात् द्वितीये चित्रः पटश्चैत्रो मैत्रश्चेत्यादिप्रमाणज्ञाना-
नामपि संशयत्वापातः एकाकारप्रतिनियमाभावात् नापि तृतीयचतुर्थौ संशयानिरुक्तौ तद्विरोधस्यानिरुक्तेः किं चैवं सति-
संशयविरोधिज्ञानादन्यज्ज्ञानं संशय इत्यापतेत् तथा चानुत्पन्नसंशय ॥१९ न्यायभूषणकारस्य वदनसरोरुहं व्याहन्ति हि माह न

मित्याह आद्ये व्याघात इति नहि चित्रः पट इत्यादिज्ञानानामेकाकारप्रतिनियमस्ततोऽनवधारणज्ञानतापत्त्या संशयलक्षणमतिव्यापकमिति द्विती-
यं पक्षं दूषयति द्वितीय इति संशयविरोधिज्ञानत्वं तथाविधप्रमाणत्वं वेति यदिदमवधारणस्य लक्षणद्वयं तत्संशयानिरुक्त्या न सिध्यतीत्यात्माश्रयप्र-
संगादित्याह नापि तृतीयेत्यादिना किं च यदि संशयविरोधिज्ञानमवधारणज्ञानं तदा संशयविरोधिज्ञानादन्यज्ज्ञानं संशय इति लक्षणं स्यात्तथा चानु-
त्पन्नसंशयस्योत्पद्यमानं निर्णयज्ञानमपि संशयः स्यात्तस्य सर्वसंशयाविरोधित्वादित्याह किं चेति तदेवमनिरुक्तेरवधृतेरित्ययमंशो विवृतः।
एतेन च कोटिद्वयानवधारणज्ञानं संशय इति लीलावतीकारलक्षणमपि निरस्तम् ॥

अतिव्याप्तेर्द्वयोरपीत्येतद्यथाक्रमं विवृणोति नापीत्यादिना निर्द्धारयोति निर्द्धारणविषयो हि निर्द्धारितं नाम तद्विपरीतं चानिर्द्धारितं नि-
र्द्धारणं चावधारणा एवं पर्य्यायस्तस्य च दुर्निरूपत्वमनंतरमेव निवेदितमिति तदुपजीविलक्षणमपि दुर्निरूपमित्यर्थः ननु कोटिद्वयाव्य-
वस्थिततत्वमनिर्द्धारितत्वं तेन न पूर्वोक्तान्योन्याश्रयत्वमिति शंकते अनिर्द्धारितेति यदि हि कोटिद्वयस्वरूपमव्यवस्थितत्वं तदा स्थाणुरेवा-
यं पुरुष एवायमिति कोटिद्वयनिश्चयस्यापि संशयत्वापत्तेरतिव्याप्तिरित्याह कोटिद्वयेति अव्यवस्थितत्वं कोटिद्वयधर्म इति द्वितीये पक्षे-

स्य संशयाविरोधितया जायमानप्रमाणज्ञानमपि संशयस्स्यान्नापि द्वितीयो भेदाभेदशीतोष्णादिविषयप्रमाणज्ञाना-
नां विरुद्धोभयकोटिसंस्पर्शिनां संशयत्वप्रसंगान्नापि तृतीयो निर्द्धारणानिरुक्तावनिर्द्धारितत्वस्यैवानिरुक्तेः अनिर्द्धारितत्व-
शब्देन कोटिद्वयस्याव्यवस्थितत्वं विवक्षितमिति चेत्तदेव विविच्यतां किमव्यवस्थितत्वं कोटिद्वयस्य स्वरूपमुत धर्मः
न प्रथमः कोटिद्वयस्वरूपनिश्चयस्यापि संशयत्वापत्तेर्नापि द्वितीयस्तादृग्धर्मविशिष्टकोटिद्वयग्राहिज्ञानविषयप्र-
माया अपि संशयत्वापातात् नापि चतुर्थः अजिज्ञासोरपि स्थाण्वादौ संशयदर्शनेन लक्षणस्याव्यापित्वात् नापि पंच-
मो विकल्पासहत्वात्तथा हि संशयस्य विपर्य्यासाद्विषयविशेषणाकारणविशेषणाज्जातिविशेषणाद्वा भेदस्स्यान्नाद्यो विषयविशे-

दूषणमाह तादृग्धर्मेति अव्यवस्थितत्वविशिष्टकोटिद्वयग्राहि यज्ज्ञानं तद्विषयप्रमायामपि परंपरया ऽव्यवस्थितकोटिविषयज्ञानमित्य-
तिव्याप्तिरित्यर्थः यदि च पुरुषत्वादिवदव्यवस्थितत्वमपि पारमार्थिको धर्मस्तदा तद्विशिष्टकोटिद्वयप्रमाणेऽप्यतिव्याप्तिः आरोपितत्वे
तद्विपर्य्ययेऽपि प्रसक्तिरित्यपि द्रष्टव्यं एतेन साक्षादिति विशेषणमपि निरस्तं अव्याप्तेरित्येतदपि विवृणोति अजिज्ञासोरिति नहि सर्वत्र सं-
शयानंतरं जिज्ञासोदेति उपेक्षायामपि संभवादिति भावः विभ्रमाभेदादित्येतद्विवृणोति नापि पंचम इत्यादिना विषयविशेषनिमित्तः
संशयस्य विपर्य्ययाद्विशेष इति पक्षं दूषयति नाद्य इति ॥ [illegible] ॥

तत्र संशयस्य किमुभयविधिर्विषयः यथा स्थाणुरयं पुरुषश्चेति किं वोभयनिषेधः किं वान्यतरनिषेध उतोभयविधिनिषेधौ नाद्य इत्याह न तावदिति द्विती
येऽसिद्धिमाह न स्थाणुरिति तदितरेति यद्यन्यतरनिषेधस्तदान्यतरस्यावधारणं पर्यवस्येत्तथा च संशयत्वव्याघातः चतुर्थेऽप्यसिद्धिमाह स्थाणु
रिति तथा चोभयविधिनिषेधयोरवधारणात्तथा संशयत्वव्याघात इत्यर्थः न केवलं व्याघातोऽसंभवश्चेत्याह नित्य इति —— नित्यत्वानित्यत्वयोः
परस्परप्रतिक्षेपरूपत्वादेकतरविधावेकतरनिषेध उभयविधानमुभयनिषेधश्च न संभवति उभयविधानातिरिक्तोभयनिषेधाभावादित्यर्थः एवं वि
षयविशेषाद्विशेषं निराकृत्य कारणविशेषाद्विशेष इति पक्षं निराचष्टे न द्वितीय इति कारणशब्देन किं सामग्री विवक्ष्यते सामग्र्येकदेशो वा आद्ये

तथा हि न तावदुभयविधिर्विषयः रात्रौ स्थाणुपुरुषाविति समुच्चयनिश्चयस्यापि संशयत्वापातात् नाप्युभयनिषेधः न स्थाणुर्न पुरुष इति
प्रत्ययप्रसक्तेः नाप्यन्यतरनिषेधः तदितरावधारणापत्तेः नाप्युभयविधिनिषेधौ स्थाणुर्भवति न भवति पुरुषो भवति न भवतीत्युभय
विधिनिषेधावधारणप्रसंगात् नित्यानित्यावेवं चैकतरनिषेधस्यान्यतरविधिरूपतयोभयविधिनिषेधयोरसंभवाच्च न द्वितीयः
कारणविशेषानिरुक्तेः स हि सामग्री वा तदेकदेशो वा नाद्यः अतीन्द्रियत्वेन तस्याः प्रत्यक्षत्वायोगात् लिंगाभावेनानुमानतोऽप्यसिद्धेः
न च संशयज्ञानं लिंगं तस्येदानीमेव निरूप्यमाणत्वात् नापि द्वितीयः प्रत्यक्षस्य तदेकदेशस्य साधारणधर्मदर्शनादेः स्वविषयतयानुव्यव
सायप्रत्यक्षजनकत्वेनातिव्यापकत्वात् प्रत्यक्षस्य च तदेकदेशस्य सामग्रीनिरासेन निरस्तत्वाच्च नापि तृतीयः जातिसंकरापत्तेः ॥

प्रत्यक्षतस्तज्ज्ञानमनुमानतो वा नोभयथापीत्याह स हीत्यादिना ननु किमिति लिंगाभावः यावता कार्यात्संशयज्ञानात्सामग्र्यंशस्यानुमानमि
ति तत्राह न च संशयेति सामग्र्येकदेशः कारणमिति पक्षेऽपि किं प्रत्यक्षगम्यस्तदेकदेशस्तदगम्यो वा नाद्य इत्याह प्रत्यक्षस्येति तदा हि तादृशाकार
राजमिति ज्ञानं संशय इति पर्यवस्येत् तथा चातिव्याप्तिरस्य साधारणधर्मदर्शनादेः स्वविषयानुव्यवसायं प्रत्यपि जनकत्वात् तस्य च प्रत्यक्षम
मिति त्वेन संशयत्वाभावादित्यर्थः आदिशब्देन च विशेषस्मरणाविशेषदर्शने गृह्येते सामग्रीनिरासेनेति न प्रत्यक्षतस्तत्सिद्धिः नाप्यनुमानतो लिंगा
भावात् न च संशय एव लिंगं अग्राह्यनिरूपणादित्यर्थः जातिविशेषाद्विशेष इति पक्षं दूषयति नापि तृतीय इति ॥ ~ ॥

जातिसंकरमेवविवृणोति अयंस्थाणुरिति संशयत्वजातियोगि संशयइतिपक्षेपिपक्षेसंकरप्रसंगमतिदिशतिएतेनेति सर्वसंशयानिरुक्तिमुपपाद्यविपर्ययानिरुक्तिंप्रतिज्ञानामुपपादयति नापिविपर्ययस्येति प्रमाणज्ञानसंशययोर्मिथ्याध्यवसायपदाभ्यांनिरासः उपदर्शितेतिनियद्विज्ञानं स्वेनप्रकाशितमर्थंनप्रापयितुंशक्नोतिसविपर्ययइतिकिंविवक्षितमित्यर्थः अर्थक्रियेत्यत्रोत्तरार्थशब्दोविषयपरः समासश्चबहुव्रीहिः सर्वपक्षेषुदूषणानिश्लोकेनसंगृह्णाति आद्येति प्रथमद्वितीयतृतीयेष्वतिव्याप्तेरंत्ययोस्तृतीयचतुर्थयोरव्याप्तेरितियोजनाचस्तु तृतीयपक्षेवाति व्याप्तिंचसमुच्चिनोति संग्रहंविवृणोति नाद्यइत्यादिना अप्रमात्वंमिथ्यात्वमितिपक्षेअप्रमारूपाध्यवसायोविपर्ययइत्युक्तंस्यात् तथाचस्व

अयंस्थाणुःपुरुषोवेत्यत्रधर्म्यंशेनस्यैवज्ञानस्यनिश्चितत्वंविशेषांशेविकल्पांशेचसंशयत्वमित्येकस्यैवज्ञानस्यविरुद्धजातिद्वयलिंगिनःप्रसंगात् एतेनपक्षोपिपक्षोनिरस्तस्तस्माच्चसंशयलक्षणानिरुक्तिर्नोपिविपर्ययस्यतथाहिमिथ्याध्यवसायोविपर्ययइतिभूषणकारभाषितंलक्षणंतावदयुक्तंमिथ्यात्वानिर्वचनात्तत्किमप्रमात्वमुतार्थव्यभिचारित्वमथोपदर्शितार्थाप्रापकत्वमर्थक्रियाशून्यार्थत्वंवा आद्यकल्पेष्वतिव्याप्तेरव्याप्तेश्चान्त्ययोर्द्वयोः नमिथ्याध्यवसायत्वंविपर्ययासस्यलक्षणम् २० नाद्यः अप्रमात्वेसत्यध्यवसायरूपायांस्मृतावतिव्याप्तेर्नद्वितीयः देशतःकालतोर्थव्यभिचारिषुप्रमाणज्ञानेष्वपिविपर्ययत्वप्रसंगान्नतृतीयश्चन्द्रतारकादिप्रमाणज्ञानेष्वतिप्रसक्तेरिदंरजतमित्यादिज्ञानेषुचोपदर्शितेदमंशप्रापकत्वादव्याप्तेर्नापिचतुर्थःमिथ्याहिदंशप्रतिसूर्य्यकाद्यनेकार्थानांनिधनप्रकाशनाद्यर्थक्रियादर्शनात् ॥२१ तावदतिव्याप्तिरित्याह अप्रमात्वइति अतीतादिज्ञानानामर्थव्यभिचारिणामध्यवसायरूपाणांविपर्ययत्वापत्त्यातिव्याप्तेर्द्वितीयपक्षोप्यनुपपन्नइत्याह देशतइति चंद्रतारकेति नहितदर्थाःज्ञानसमयेप्राप्तुंशक्यंतइतिपूर्वमेवोक्तमितिभावः अस्यैवपक्षस्याव्याप्तिंचाह इदंरजतमिति चतुर्थेऽव्याप्तिमाह मिथ्याहिदंशेति अस्तितावन्मिथ्याहिदंशादपिकस्यचिन्मरणं दर्पणादिप्रतिबिंबितसूर्यस्यचप्रकाशकत्वंउपसूर्यंवादृश्यमानःसूर्यःप्रतिसूर्यकस्तस्याप्युपारितिनरपतिमित्यादिशास्त्रान्मरणादिहेतुत्वावगमात्प्रकाशकत्वाच्चानलत्वंतदभिमतमिथ्यात्वाभावादव्याप्तिरित्यर्थः॥

ननु कथमव्याप्तिर्यावता तत्राप्यर्थस्यार्थक्रियाशून्यत्वात् ज्ञानस्यैव तद्धेतुत्वादिति तत्राह नचेति किं ज्ञानमात्रं मरणादिहेतुस्तादृगर्थविशेषितं वा आद्ये प्र
हज्ञानेति द्वितीये प्राह अर्थेति प्रतिपादितामप्रतिमयोरव्याप्तिमुपसंहरति तदेवमिति एतेनैककोट्यवलम्बी जाग्रतो मिथ्याज्ञानं विपर्यय इति श्रीवल्लभीयम
पि लक्षणं निरस्तं मिथ्यात्वानिरुक्तेरेवंभूतशाकारलक्षणं दूषयित्वोद्योतकराभिमतं दूषयति अतस्मिन्निति वल्मीकादौ स्थाणुत्वपुरुषत्वरहितेऽस्था
णुर्वा पुरुषो वेति प्रत्ययस्तावदतस्मिंस्तदिति प्रत्ययो भवति नच विपर्ययोऽसौ संशयत्वादतोऽतिव्याप्तिरित्यर्थः ननु प्रत्ययशब्देनावधारणं विवक्षि
तं तेन न संशयेऽतिव्याप्तिरिति मन्वानं प्रत्याह अतस्मिन्निति अतस्मिंस्तदिति प्रत्यय इति कोऽर्थः यत्तदत्यन्ताभावाधिकरणे तदिति प्रत्यय इति न

नच ज्ञानमेवार्थक्रियाकारि नार्थ इति वाच्यं ज्ञानमात्रस्य तद्धेतुत्वेऽतिप्रसंगादर्थविशेषितस्य तद्धेतुत्वे चार्थस्यापि तद्धेतुत्वापातात् एवं तत्री
यचतुर्थयोरव्याप्तिरतस्मिंस्तदिति प्रत्ययो विपर्यय इत्युद्योतकरीयमपि लक्षणमयुक्तमतिव्याप्तेर्भवति हि वल्मीकादौ स्थाणुर्वा पुरुषो वेति संश
यः तस्य स्थाणुत्वे पुरुषत्वे इत्युभयबाधदर्शनात् अतस्मिंस्तदिति प्रत्ययः नचासौ विपर्ययः अतस्मिन्निति च स्वात्यन्ताभावाधिकरणे तदिति
प्रत्ययविवक्षायां संयोगविभागशब्दात्मविशेषगुणेषु प्रदेशवृत्तिषु स्वात्यन्ताभावसमानाधिकरणेषु प्रमारूपोऽपि प्रत्ययो विपर्ययः स्यात्
एतेन बाध्यं ज्ञानं दुष्टकरणजन्यं वा ज्ञानं विपर्यय इति लक्षणं निरस्तं संशयेऽतिव्याप्तेर्दर्शितत्वात् बाधानिरुक्तेश्च किं विरोधिप्रमाणज्ञानं
बाधः किं वा विपर्ययविरोधिप्रमाणज्ञानं विषयापहारो वा आद्ये पूर्वोत्तरप्रमाणज्ञानानां वध्यघातकलक्षणेऽतिव्याप्तिः द्वितीये परस्पराश्र

याच्च मा भूत् संशयेऽतिव्याप्तिः प्रत्ययशब्देनावधारणस्य विवक्षितत्वात् तथापि प्रमाणज्ञानेष्वतिव्याप्तिः प्रदेशवृत्तिविशेषगुणेषु संयोगवियोगयो
श्च स्वात्यन्ताभावसमानाधिकरणतया तत्प्रमितीनां विपर्ययत्वापातादित्यर्थः एतेनैतस्यैव विवरणं संशय इति सोऽपि हि बाध्योऽदुष्टकरणजन्य
श्चेति भावः अथात्रापि ज्ञानशब्देनावधारणविवक्षा न च तदनिरुक्तेर्दर्शितत्वात् भवतु वा तथापि बाधानिरुक्तेरेवेदं दुष्टमित्यभिप्रेत्याह बाधेति ॥
पूर्वमेव बाध्यत्वं विकल्प्य दूषितं तथाप्यत्र भंग्यन्तरेण दूषणं क्रियत इति पूर्वोत्तरेत्यादि यदि हि विरोधिज्ञानमात्रं बाधस्तदा पूर्वज्ञानानामुत्तरज्ञानवि
॥ नाश्यतया बाध्यत्वात्सर्वज्ञानेषु लक्षणमतिप्रसक्तमित्यर्थः उत्तरो ग्रन्थः स्पष्टार्थः ॥ ९ ॥

विषयापहारो बाध इति पक्षमपि विकल्प्य दूषयति तथाहीत्यादिना तथाप्रमितिरिति पूर्वज्ञानोपदर्शितार्थस्यासत्त्वप्रमितिरितिभावार्थः नायं देवदत्त इति यदा हि देवदत्त इति वा जीवतीति वा प्रतीतिरेकस्योदेत्यपरस्तु भ्रान्तः प्राह नायं देवदत्तः न च जीवतीति तत्रोत्तरस्य बाधकत्वं पूर्वस्य बाध्यत्वाद्विपर्य्ययत्वं च स्यादितीष्टसिद्धिकारोक्तानि व्याप्तिरित्यर्थः द्वितीयेप्यतिव्याप्तिमाह देशान्तरेति॥ अनित्यानामविभूनां कालान्तरदेशान्तरयोरसत्त्वप्रमितिरस्तीति तज्ज्ञानेष्वतिव्याप्तिरित्यर्थः यदा हि देशकालविषयो भ्रमो जायते तेन तत्र तद्बाधस्योक्तरूपत्वमित्यव्याप्त्या तृतीयपक्षं दूषयति नापि तृतीय इति किंच यद्देशकालेऽन्यत्र यत्प्रतीतमित्यत्र च तस्य तद्देशकाले

न तृतीयस्तथा हि विषयापहारो नाम पूर्वज्ञानोपदर्शितार्थासत्त्वबोधनमात्रं स तु तथाप्रमितिरुत यद्देशकालविशिष्टतया यत्प्रतीतं तस्य तत्रैवासत्त्वबोधनं नाद्यः नायं देवदत्तो न जीवतीति विभ्रमप्रत्ययेन देवदत्तादिप्रत्ययानां बाधितत्वेनाप्रमात्वप्रसंगात् न द्वितीयो देशान्तरकालान्तरयोस्तदसत्त्वप्रमित्या घटादिज्ञानानामप्रमात्वप्रसंगात् नापि तृतीयो देशकालविषयबाधेष्वव्याप्तेर्देशकालयोर्देशकालान्तराभावात् यत्तदादिशब्दानां च सर्वविषयत्वे कतिपयविषयत्वे चाव्याप्तिरेव एतेन फलापहारोपि व्याख्यातोऽनुत्पन्नफलस्यापि ज्ञानस्य बाध्यत्वांगीकाराच्च विपर्य्ययत्वजातियोगी विपर्य्यय इत्यपि लक्षणान्तरं ज्ञानमित्यादौ धर्म्यंशे प्रत्यये जातिसंकरप्रसंगात् तस्मान्न विपर्य्ययस्य लक्षणं पश्यामः॥

यत्र च यत्तच्छब्दानां सर्वदेशकालसर्ववस्तुपरत्वे सर्वबाधाव्याप्तिरेकैकेन सर्वाबाधात् निष्कृष्य विशेषविवक्षायां च तदितरबाधाव्याप्तिरित्याह यत्तदादीति लक्षणान्तरमप्युक्तं दूषणमतिदिशति एतेनेति तत्राप्यभिवदने प्रवृत्तिरुपादानमर्थक्रियेति चतुर्विधफलानामेकैकापहारे सर्वापहारे वाव्याप्तिरित्यर्थः अव्याप्त्यन्तरं चाह अनुत्पन्नेति प्रवृत्तेषु विपर्य्ययज्ञानेषु फलं प्राक् तस्याभावात् तच्चानुत्पादितप्रवृत्तिकमपि क्वचिद्बाध्यं दृश्यते विरक्तादीनां तत्राव्याप्तिरित्यर्थः अस्तु तर्हि विपर्य्ययत्वजातियोगी विपर्य्यय इति तत्राह विपर्य्ययेति संशयत्वसमानयोगक्षेममिति भावः॥ ॥ ६ ॥

संशयविपर्य्ययव्यतिरिक्तस्मृतित्वानधिकरणं प्रमात्वव्यंजकमिति पंचमपक्षे संशयविपर्य्ययानिरूपणात्तल्लक्षणासिद्धिरुक्ता इदानीं स्मृत्यनिरूपणा-
दपि तत्त्वानधिकरणत्वमप्रसिद्धमित्यभिप्रेत्याह तथा स्मृतेरपीति संस्कारजन्यं ज्ञानं स्मृतिरित्युक्ते प्रत्यभिज्ञादिष्वतिव्याप्तिस्तदर्थं प्रमाकरणाज-
न्यत्वे सतीत्युक्तं अननुभूतविषयभ्रमनिवृत्त्यै द्वितीयं विशेषणं द्वितीये विपर्य्ययेतिव्याप्तिपरिहाराय दोषाजन्यत्वे सतीत्युक्तं ज्ञानपदेन घटादेः संस्कार-
जन्यपदेनानुवादस्य प्रत्यभिज्ञाया आद्येन पदेन निरासात् तृतीयेपि संस्कारजन्यत्वमनुमानादावस्तीति तदवच्छेदार्थं स्वसमानविषयग्रह-
णं न हि तत्र व्याप्तिसंस्कारादेरनुमितिसमानविषयत्वमिति भावः चतुर्थेपि पदजन्यज्ञानवृत्तिजातिमत्त्वं शाब्दप्रमित्यादीनामस्तीति तदवच्छेद-

तथा स्मृतेरपि तथा हि किं प्रमाकरणाजन्यत्वे सति संस्कारजन्यं ज्ञानं स्मृतिरुत दोषाजन्यत्वविशेषितं तमथवा स्वसमानविषयसंस्का-
रजन्यं ज्ञानं किं वा प्रमितित्ववृत्तिपदजन्यज्ञानवृत्तिजातिमदाहोस्वित्स्मृतित्वजातियोगी आद्ये कल्पेधिकव्याप्तेर्द्वयोश्चासंभवित्वतस्तुर्य्येति
व्याप्तिरन्त्येऽभावाद्व्यंजकमानयोः २१ नाद्यः भ्रमस्यापि स्मृतित्वप्रसंगात् तस्यापि प्रमाणाजन्यत्वे सति संस्कारजन्यत्वात्नापि द्वितीयोऽसं-
भवित्वापातात् संस्कारस्यापि स्वसामग्र्यनुमापकतया प्रमाकरणत्वात्नापि तृतीयोऽसंभवित्वादेव सा मे माता समेपितेत्यादिस्मृतीनां पू-
र्वानुभवसंस्काराधिकविषयत्वात् न हि पूर्वानुभवे सदित्याकारोपमितिवर्त्तमानतयावानुभवात् ॥२१॥ यत्प्रमित्यवृत्तीत्युक्तं श्लोकेन दूषणा-

तिसंगृह्णाति आद्य इति अधिकव्याप्तेरतिव्याप्तेर्द्वयोर्द्वितीयतृतीययोः आद्यपक्षेधिकव्याप्तिं निगदव्याख्यातग्रंथेन दर्शयति भ्रमस्यापीति द्वितीयेऽ-
संभवं दर्शयति संस्कारस्यापीति इदं च प्रथमपक्षेपि समानं समानेप्यस्मिन्नंशे ज्ञानरोपस्थापकं तदिति दूषणान्तरं तत्रोक्तं तृतीयेऽसंभवं दर्शयति सा-
मे मातेति अथ कथं स्मृतेः पूर्वानुभवसंस्काराद्धिकविषयता तत्राह नहीति ननु सदित्यत्र तद्देशकालवैशिष्ट्यं प्रतीयते स च देशादिः पूर्वानुभवस-
मयेप्यनुभूत इति कथं तदंशमादायाधिकविषयताऽत आह अयमितीति तद्देशादिवैशिष्ट्यमात्रं तत्ता अयं स इति अयमिति चोभयोर्विशेषप्रसंगात् किं-
त्वसन्निहितदेशकालावच्छेदः पूर्वानुभवसंभेदो वा न च तत्पुरस्तादनुभूतं वर्त्तमानतयैवानुभवात् स्वविशिष्टग्राहकत्वाच्च पूर्वानुभवस्येति भावः ॥ २ ॥

चि॰ प्र॰
टी॰ न॰
५९

ननु सदित्याकारः स्मृतेर्विषय एव न भवति पदान्यदार्थस्मृतावदर्शनात्तस्मात्कारणांतरप्रयुक्त एवायमतो न स्मृतेरधिकविषयतेति तत्राह न चे-
ति कुतो न वाच्यमिति तत्राह तत्कारणेति न च पदान्यदार्थस्मृतावदर्शनात्कारणांतरप्रयुक्तिकल्पना पदजनितबुद्धेः स्मृतित्वाप्रसिद्धेः अनुवादो ह्य-
यथा पदान्नदार्थबुद्धिर्युक्तं चैतदितरथा शक्तिवशादभिधायकत्वप्रसिद्धिर्न स्यात् न ह्युपाध्यायस्मारकस्य शिष्यस्य तदभिधायकत्वप्रसिद्धिरस्ति।
सत्यपि स्मारकत्वे शक्तिवैचित्र्यादभिधायकत्वप्रसिद्धिरिति चेत्तथैव तर्हि शक्त्याभिधानमात्रमेवास्तु कृतं स्मारकत्वेन अत एव चैतदन्यथानुपप-
त्त्या वाक्यार्थाभिधायकत्वं शालिकनाथोक्तं प्रत्युक्तं अनेकत्वाच्चाभिधात्रादीनां संबंधिनां न नियमेनार्थस्मृतिः स्मारकत्वपक्षे स्यात् न च नियमे-
न संबंध्यंतरदर्शने संबंध्यंतरस्मृतिर्भवति भवति च नियमेन गृहीतसंगतिकस्य शब्दस्य स्मरणेऽर्थबुद्धिः तदुक्तं नियमाच्छब्दतो बुद्धिर्न तथा।

न च सदित्याकारः कारणांतरोपनीतः पदान्यदार्थस्मृतौ हरिहरादिस्मृतौ चाभावादिति वाच्यं तत्कारणानिरूपणात् सोऽयं देवदत्त इति
प्रत्यभिज्ञाप्रत्यये तदित्यंशस्य संस्कारानुपनीतत्वे सन्नयमित्याकारस्य च संयोगमात्राधीनतया विशिष्टप्रत्यभिज्ञास्वरूपासिद्धिप्रसंगात्
अनुमिततत्तायां सदित्यभिलाप इति चेन्न संस्कारस्य प्रत्यभिज्ञाप्रत्यकारणत्वप्रसंगात् सदित्यंशेऽनुमानस्यैव सहकारित्वात् तं घटं स्मरा-
म्यहमित्यनुव्यवसायानुपपत्तेश्च॥

त्वयि दर्शनादिति तस्मादनुवाद------त्वान्यदजन्यबुद्धेर्न तत्रादर्शनात्तत्तायां कारणांतरप्रयुक्तिकल्पना न केवलं
कारणांतरानधीनतां संस्कारानधीनत्वे बाधकं चास्तीत्याह सोऽयमिति तत्र तदित्यंशस्य संस्कारानधीनत्वे संप्रयोगस्य च तत्रासत्त्वात् तद्धर्मप्रत्यभिज्ञाश-
रीरं न स्यादित्यर्थः ननु तत्त्वेनैव यादृच्छायादिना लिंगेनानुमानात्तत्तोपस्थापितासा चसदिति परामृश्यत इति शंकते अनुमितेति तर्हि तत्ताया अनुमा-
नसिद्धत्वादिदंतायाश्च संप्रयोगसिद्धत्वात् संस्कारस्य चाकारणात्तथा च दृष्टांतविरोध इति परिहरति न संस्कारस्येति आनुमानिकत्वेन तत्तायादूषणां-
तरमाह तं घटमिति तत्र किं प्रथमतत्तत्तानुमानमथ घटस्मरणं ततस्तं स्मरामीत्यनुव्यवसायः किंवा प्रथमं तत्स्मरणं ततस्तत्तानुमानं
ततोऽनुव्यवसाय इति न प्रथमः निर्धर्मिकतत्ताग्रहणाशक्तेस्तत्ताविशिष्टघटविषयानुमानं घटमात्रविषयं च स्मरणमिति तत्ता॥ ॥

प्रम॰
५९

विशेषितघटविषयस्मृतिग्राहकानुव्यवसायानुपपत्तिरिति द्वितीयं निषेधति नहितत्रेति अथ किमिति न तत्रानुमानव्यवधानं न स्यात्तत्राह न
ष्टा सतीति नत्र हि घटस्मृतिरेवानुव्यवसायेन सा चेत्सोदयेप्यानुमानिकतत्तावत्तिसत्यनुव्यवसायेन तथा सति चिरातीतनष्टाविनश्यद्वस्था
त्वस्याप्यभावात् वर्त्तमानस्मरणाग्राहकानुव्यवसायविषयत्वं न स्यात् अस्मार्षमित्येवानुव्यवसायप्रसंगाच्चेत्यर्थः संस्कारस्य विषयाभा
वादपि समानविषयत्वमसिद्धमिति प्रौढ्याह संस्कारस्येति असंविद्रूपत्वादिति ज्ञानत्वाभावादित्यर्थः ननु तर्हि तत्कथमिच्छादिषु सवि
षयत्वं समानं हि तेषामप्यसंविद्रूपत्वमिति तत्राह इच्छादिष्विति तदेवं स्वसमानविषयसंस्कारजं ज्ञानमिति लक्षणं दूषितमेव स तत्परि।

नहि तत्रानुमानव्यवधानमस्ति तथा सति स्मरणास्यातीतनष्टत्वेनानुव्यवसायविषयत्वानुपपत्तेः संस्कारस्यासंविद्रूपत्वात् निर्विषय।
त्वाच्च समानविषयत्वासिद्धिः नह्यसंविद्रूपस्य सविषयत्वं इच्छादिषु तज्जनकज्ञानविषयेण सविषयत्वोपचारात् नर्हि संस्कार
जनकानुभवसमानविषयत्वे सति संस्कारजन्यत्वं लक्षणार्थ इति चेन्न तदंशे समानविषयतायाः खंडितत्वात् ग।
रुडादिसाक्षात्कारे चातिव्याप्तेस्तस्य दीर्घकालनैरंतर्योपचितसंस्कारविषयविषयत्वात् ॥ ॥

हाराय भंग्यंतरं शंकते तर्हीति न स्वसमानविषयसंस्कारजन्यत्वमत्राभिप्रेयते येनासिद्धिरभिधीयते किं तर्हि संस्कारजनको योऽनु।
भवस्तेन समानविषयत्वे सति तत्संस्कारजत्वमित्यर्थः प्रत्यभिज्ञाव्यावर्त्तनाय द्यं विशेषणं समानविषयत्वं चान्यूनानतिरिक्तविषय।
त्वं संस्कारजनकानुभवसमानविषयधारावाहिकज्ञानव्यावृत्त्ये संस्कारजन्यपदं इदमपि पूर्वोक्तदूषणेन दूषितमित्याह तत्तांशइ
ति अतिव्याप्तिं चाह गरुडादीति गरुडादिध्यानाद्यः साक्षात्कारो जायते स पूर्वपूर्वभावनाजनितः तेत्र संस्कारजनकपूर्वानुभवस्य सा
क्षात्कारस्य चास्ति समानविषयत्वं अथ च न स्मृतिः साक्षात्कारिज्ञानस्य स्मृतित्वव्याघातादित्यर्थः ॥ ॥ ॥ ॥

संस्कारशब्देनात्र तज्जनकानुभवो लक्ष्यते संस्कारस्य सविषयत्वमंगीकृत्य वा प्रमित्यवृत्तीत्यादि चतुर्थलक्षणं दूषयति नापि चतुर्थ इति पदज-
न्येत्यत्र सकत्वमविवक्षितं विवक्षितं वोभयथापि क्रमेणाव्यभिचारमाह अज्ञातेत्यादिना अनाप्तवाक्यजनितं यद्धि ज्ञानं विपर्ययरूपं तत्र विपर्य्य-
यत्वादिर्जातिः प्रमित्यवृत्तिपदजन्यज्ञानवृत्तिजातिर्भवति तस्यैव ज्ञानस्याप्रमितत्वात् पदजन्यत्वाज्ज्ञानत्वद्योगिनि विपर्य्यये चातिव्या-
प्तिः तथाक्षगवादिशब्दैरनेकार्थवाचकैः श्रवणमात्राद्यः संशयो जायते किं विभीतकं किं वा देवनमिति तत्राप्यतिव्याप्तिरित्यर्थः स्मृति-
त्वजातियोगित्वमिति पंचमपक्षं दूषयति नापीति प्रासंगिकस्य प्रकृतोपयोगमाह तदेवमिति एतद्घटज्ञानवृत्तित्वे सतीत्यादि षष्ठं प्र-

नापि चतुर्थो नाप्तवाक्योत्थविभ्रमप्रत्ययेऽनेकार्थाक्षादिपदजन्यसंशये चातिव्याप्तेर्नापि पंचमस्तज्ज्ञानोव्यंजकप्रमाणानिरूपणा-
त्तदेवं संशयविपर्ययस्मृतीनामनिरुक्तौ तदतिरिक्तत्वविशेषणं दुर्निरूपं नापि षष्ठः तथा हि एतद्घटज्ञानवृत्तित्वे सत्येतद्धूमजन्यव-
ह्निज्ञानवृत्तिसंशयावृत्तिजातिमत्त्वमित्यपि न विकल्पासहत्वात्तथा हि किं घटज्ञानवह्निज्ञानशब्दाभ्यां ज्ञानमात्रं विवक्ष्यते किं-
वा प्रमात्वेन व्यवह्रियमाणमाहोस्विदबाधितप्रमाव्यवहारास्पदं नाद्यः विभ्रमज्ञानानामप्येवंभावान्नापि द्वितीयः उक्तदोषानुषं-
गात् विभ्रमज्ञानेष्वपि तात्कालिकप्रमात्वव्यवहारदर्शनात् नापि तृतीयोऽबाधितत्वस्य दुर्निरूपतायाः प्रागेवाभिहितत्वात्तदे-
वं प्रमात्वस्य न निरुक्तिः ॥ ६

मात्वव्यंजकमाशंकितं दूषयति नापि षष्ठ इति तमेव पक्षं दूषयितुमनिव्यवहित इत्यनुवदति तथाहीति एतद्घटज्ञानेतद्धूमजन्यवह्निज्ञानशब्दार्थं विकल्पयति किं घटज्ञानेत्यादिना विभ्रमेति येन हि विपर्ययत्वं नाम जातिरंगीक्रियते तस्य
विपर्ययेष्वेतल्लक्षणं गच्छति ज्ञानत्वाधिकरणवृत्तिसंशयावृत्तिजातिमदिति हि तदा लक्षणार्थः स च विपर्य्ययेष्वस्तीति भावः प्रमात्वेन व्यवह्रि-
यमाणं ज्ञानमिति द्वितीयपक्षेपीदमेव दूषणमतिदिशति उक्तदोषेति ननु विभ्रमेषु कथं प्रमात्वव्यवहार इति तत्राह विभ्रमज्ञानेष्वपीति ॥

पारोक्ष्यानधिकरणप्रमाकरणं प्रत्यक्षमिति लक्षणे प्रमात्वदुर्निरूपपादिना (लोप) पारोक्ष्यदुर्निरूपतां प्रतिज्ञातामुपपादयति नापिपरो
क्षतायामिति जातिसंकरमेव दर्शयति किंप्रमात्वमित्यादिना परोक्षभ्रमाभावप्रसंगमेवोपपादयति यत्रेति व्याप्यपरोक्षत्वजा
तिमत्त्वे सर्वत्र व्यापकप्रमात्वनियमात् पारोक्ष्यरूपभ्रमो न स्यादित्यर्थः द्वितीये प्रत्यक्षरूपप्रमा न स्यात् यत्र यत्र व्याप्यप्रमात्वं तत्र
तत्र व्यापकपारोक्ष्यवृत्तित्वनियमादित्याह नापिद्वितीय इत्यादिना ननु प्रमात्वं परमेव न तु द्वितीयेषु विभ्रमेषु पारोक्ष्यव्यवहारस्तौपा
धिक इति तत्राह नच विभ्रमेष्विति प्रतिपादितजातिसंकरं स निदर्शनमुपसंहरति तदेवमिति यथाहि भूतत्वमिति रिक्ते मनसि वर्त्तमानं

नापि परोक्षतायाः लक्षणाजातित्वे जातिसंकरप्रसंगात् तथाहि किं प्रमात्वं परं पारोक्ष्यमपरं विपरीतं वा नाद्यः पारोक्ष्यभ्रमा
भावप्रसंगात् यत्र परोक्षत्वजातिर्व्याप्या तत्र व्यापकं प्रमात्वमस्त्येवेति नियमात् नापि द्वितीयः तथा सति प्रमात्वं परोक्षतां
न व्यभिचरेदिति प्रत्यक्षप्रमाभावप्रसंगात् नच विभ्रमेषूपाधिनिबंधन एव परोक्षत्वव्यवहारस्तथा सति सर्वत्र तन्नि
बंधन तथैव तद्व्यवहारोपपत्तौ जातिकल्पनावैयर्थ्यप्रसंगात् तदेवमन्योन्यपरिहारेण वर्त्तमानयोर्मनोगगनव
र्त्तिनोर्मूर्त्तत्वभूतत्वयोः पृथिव्यादावेकत्र समावेशे जातिसंकरः स्यात् नच परोक्षतायां जातेर्व्यंजकमस्ति न।
त्किमिन्द्रियार्थसन्निकर्षाजन्यत्वे सति प्रमात्वमनुमानलिंगादिप्रमाकरणाजन्यत्वं वा नाद्यः ईश्वरज्ञानस्यापि परोक्षत्वप्रसंगा

मूर्त्तत्वस्यामूर्त्तेपि गगने वर्त्तमानस्य भूतत्वस्य चैकत्र पृथिव्यादौ वृत्त्या जातिसंकरप्रसंगात् न जातित्वमेवमनयोरपि परस्परपरिहा
रेण वर्त्तमानयोरेकत्रानुमित्यादौ वर्त्तमानतया जातिसंकरप्रसंग इति योजना नियतव्यंजकाभावादपि न पारोक्ष्यं जातिरित्याह न
चेति प्रत्यक्षप्रमितेः परोक्षभ्रमस्य च निरासाय विशेषणद्वयं प्रत्यक्षप्रमिति व्यावृत्त्यैव घटादिव्यावृत्त्यैव विशेषणद्वयं नित्यस्येश्व
रज्ञानस्य नेन्द्रियादिसन्निकर्षजन्यत्वमस्ति अस्ति च प्रमात्वमिति तस्यापि परोक्षत्वप्रसक्तिरिति प्रथमं पक्षं दूषयति ईश्वरेति ॥

लिंगादिप्रमाकरणाजन्यत्वं पारोक्ष्यव्यंजकमिति पक्षे स्मृतेः पारोक्ष्यं न स्याद्व्यंजकाभावादित्याह स्मृतेरिति एतेनेत्यस्य विवरणं व्यंजकेतिपा
रोक्ष्यस्योपाधिकत्वेप्यनयोरेवोपाधित्वसंभावनानन्वहृद्यं निरस्तमित्यर्थः प्रत्यक्षफलस्य लक्षणान्तरं शंकते ईश्वरेति अत्रच साक्षात्कारत्वा
जात्यधिकरणं प्रत्यक्षमिति लक्षणं साक्षात्कारत्वस्य लक्षणमीश्वरेत्यादि जातिः साक्षात्कारत्वमित्युक्ते सन्नादावतिव्याप्तिस्तदर्थं प्रमित्यह
तीत्युक्तं तथा च व्याघातः प्रत्यक्षप्रमितिवृत्तित्वात्तदर्थं परमाणुप्रमित्यवृत्तीत्युक्तं तथाप्यसिद्धिः परमाणुमहं जानामीत्यनुव्यवसायप्रत्यक्ष
स्य परमाणुविषयतया साक्षात्कारित्वस्य परमाणुप्रमितिवृत्तित्वात्तदर्थमुक्तमनुव्यवसायातिरिक्तेति तथाप्यनुव्यवसायातिरिक्तयो
गिप्रत्यक्षमादायासिद्धिरत उक्तमयोगीति तथापि घटत्वादावतिव्याप्तिस्तदर्थं ज्ञानवृत्तीत्युक्तं तथापि विपर्ययत्वस्मृतित्वादिष्वतिव्याप्ति

नापि द्वितीयः स्मृतेः परोक्षत्वाभावप्रसंगात् एतेन परोक्षत्वस्योपाधित्वमपि निरस्तं व्यंजकनिरासेन तयोरुपाधित्वस्यापि नि
रस्तत्वात् ईश्वरज्ञानवृत्तित्वे सत्ययोग्यनुव्यवसायातिरिक्तपरमाणुप्रमित्यवृत्तिर्जातिः साक्षात्त्वं तदधिकरणं प्रत्यक्षमित्यपि
न पुनः प्रमितेर्दुर्निरूपत्वाद्व्यंजकस्यानिरूपणात् साक्षात्त्वं जातिसांकर्यान्न प्रत्यक्षस्य लक्षणं २२ प्रमितेरेवानिरूपणे
परमाणुप्रमित्यवृत्तिविशेषणस्य दुर्ज्ञानत्वात् इंद्रियार्थसन्निकर्षजन्यत्वादेश्चाभिव्यंजकस्यापास्तत्वात् ॥ २१ तदर्थमीश्वरज्ञा

नवृत्तीत्युक्तं नहि तेषामपरोक्षेश्वरज्ञानवृत्तित्वमित्यर्थः ईश्वरज्ञानवृत्तित्वे सत्युक्तविधपरमाणुस्मरणरूपज्ञानावर्तिनि प्रमात्वप्रसंग।
निरासाय परमाणुप्रमितीत्युक्तं पारोक्ष्यानधिकरणत्वादिरूपोपाधिनिरासाय जातिपदं परोक्षज्ञानवृत्तित्वानधिकरणत्वे सति ईश्वरज्ञा
नवृत्तिर्जातिरिति फलितार्थः दूषणानि संगृह्णाति प्रमितेरित्यादिना प्रमितेर्दुर्निरूपत्वादित्येतद्विवृणोति प्रमितेरिति व्यंजकस्यानि
रूपणं विवृणोति इंद्रियार्थेति अव्यभिचारित्वखंडनादीश्वरज्ञानाव्यापकत्वाच्चेत्यर्थः इंद्रियार्थसन्निकर्षजन्यत्वासिद्धेश्च तथाहि तावदन्य
स्य न तदधिगमः इंद्रियार्थसन्निकर्षयोरप्रत्यक्षत्वेन तज्जन्यत्वस्याप्यप्रत्यक्षत्वात् नाप्यनुमानतो ज्ञानत्वप्रमितित्वादीनां व्यभिचारित्वात्साक्षात्का

तृतीयंहेतुंविवृणोति साक्षात्त्वस्यचेति तथा साक्षात्प्रतीतिः प्रत्यक्षंमेयमातृप्रमासुसामेयेष्विंद्रिययोगोस्त्याद्रव्यजातिगुणेषु सा १ सर्वविज्ञानहेतूत्था
मितौमानरिचप्रमासाक्षात्कारत्वसामान्यात्प्रत्यक्षत्वेनसंमतेति २ शालिकानाथलक्षणमपिपरिशुद्धंमंतव्यंअनेनसाक्षात्प्रतीतिसाधकतममध्यक्ष
सम्यगपरोक्षानुभवसाधनंप्रत्यक्षमित्यादिश्रीवल्लभभूषणप्रभृतिभि रभिहितंलक्षणजातंप्रत्याचक्षाणःसाक्षात्वानिरुक्तेरेवप्रत्यक्षभ्रमस्यपरो
क्षप्रमायावाऽभावप्रसंगादितिभावः एवंतार्किकप्रत्यक्षलक्षणानिदूषयित्वामीमांसकाभिमतंलक्षणंदूषयति सत्संप्रयोगइति सतावर्तमाने
नार्थेनेंद्रियाणांसंप्रयोगेसतिपुरुषस्ययद्बुद्धिजन्मतत्प्रत्यक्षमितिलोकसिद्धप्रत्यक्षलक्षणानुवादपरंजैमिनीयसूत्रस्यार्थः अत्रचजन्मग्रहणं

साक्षात्त्वस्यचप्रमात्वेनपरापरभावाभावाज्जातिसंकरप्रसंगाच्चनेदमपिप्रत्यक्षलक्षणं सत्संप्रयोगेपुरुषस्येंद्रियाणांबुद्धिजन्म
तत्प्रत्यक्षमित्यपिनप्रत्यक्षलक्षणंप्रत्यक्षाभासेपिसत्त्वात् वृत्तिकारमतेनतत्सतोर्व्यत्ययेपिलक्षणस्याव्याप्तिरतिव्याप्ति
र्वा तथाहि यदाभासविज्ञानंनतद्यदितत्संप्रयोगादेवभवतितत्समीचीनंप्रत्यक्षमितितदासूत्रार्थः तत्रकिंप्रतिभासमानेनाकारेण
कृत्स्नेनसंप्रयोगाज्जायमानत्वंविवक्षितमुतैकदेशेनापिनाद्यः सोयंदेवदत्तइतिप्रत्यभिज्ञायांतत्तांशेसंप्रयोगाभावादव्याप्तेः॥ ६

जन्मैवबुद्धेर्व्यापारइतिप्रदर्शनार्थंउक्तंहिव्यापारःकरणानांतुदृष्टोजन्मातिरेकतः ज्ञानेपिहितथामाभूदितिजन्माभ्युपेयतेइति। अस्यातिव्याप्ति
माह प्रत्यक्षाभासेपीति अस्तिहितत्रापिवर्तमानेनसंप्रयोगाद्बुद्धिजन्मयथाहुः केनचित्संप्रयोगेहिभ्रांत्यादिस्यान्नियोगतइति ततोतिव्याप्तिरित्यर्थः
स्यादेतत् यद्यपीदंभाष्यकारमतेदूषणंसंभवति तथापि वृत्तिकारमतेनसंभवतितेहितत्सतोर्व्यत्ययंकृत्वाव्याचक्षुः तत्संप्रयोगेपुरुषस्येंद्रियाणां
बुद्धिजन्मसत्प्रत्यक्षमितितदाचार्यसूत्रार्थः तत्संप्रयोगात्तद्विषयविज्ञानंसत्प्रत्यक्षमन्यसंप्रयोगादन्यविषयंज्ञानंप्रत्यक्षाभासइति ततः कथम
तिव्याप्तिःनहिशुक्तिकारजतज्ञानंरजतसंप्रयोगादुत्पन्नमिति तत्राह वृत्तिकारमतेनेति अव्याप्तमतिव्याप्तीदर्शयितुंसूत्रार्थमाह तथाहीति॥ विकल्

२
चि·प्र·
टी·न·
५४

ननु किमित्यभावप्रमाणवादिभिस्तस्य प्रत्यक्षांशत्वं नांगीक्रियते तत्राह अंगीकारेवेति इदंचासाधारणं साधारणं तु प्रत्यक्षधर्मिकानुमानोच्छेदात्मकं
दूषणमनेकवारमुक्तमेव एकदेशेनापि संप्रयोगे जन्येति पक्षं दूषयति नहि तीय इति विभ्रमेप्येकदेशसंप्रयोगमाह तत्रापीति तत्संप्रयोग इत्यत्र समित्युपस
र्गादिति व्याप्तिपरिहारं शंकते अथोच्यतेत्यादिना सम्यक् प्रयोगो हि संप्रयोग इति भावः अत्र वार्त्तिकसंमतिमाह यथाहुरिति पादशब्दः पूजार्थः पादा
इति नामांते देवा भट्टारकावापीत्यभिधानात् सम्यगर्थे प्रसिद्धोयं समिति शब्दो दुष्प्रयोगस्य निवारकः अथ कोयं प्रयोगः यस्यायं सम्यक्त्वमाचक्षीत
संशब्द इति तत्राह प्रयोग इति बुद्धींद्रियाणामर्थेषु यो व्यापारः स प्रयोगोभिमत इत्यर्थः कस्तर्हि दुष्प्रयोगोनेन निवर्त्यत इति तत्राह दुष्टत्वादिति क

नच तत्रापि तत्तांशे संयुक्तविशेषणतालक्षणः संप्रयोगोस्तीति वाच्यं षष्ठप्रमाणवादिना तस्य प्रत्यक्षतानंगीकारादंगीकारेवानिर्घटं भूतल
मित्यत्र तथाभूतसन्निकर्षभावादभावस्य प्रत्यक्षतोपपत्तौ षष्ठप्रमाणाभ्युपगमवैयर्थ्यापातात् नहि तीयो विभ्रमेष्वपि भावादिति व्याप्तेस्तत्राप्य
धिष्ठानसंप्रयोगस्य भावात् अथोच्यत संप्रयोग इत्यत्र समिति विशेषणेन दुष्टेंद्रियसंप्रयोगजन्यत्वस्य व्यावर्तितत्वात् दुष्टेंद्रियसं
प्रयोगजन्येषु विभ्रमेषु नातिव्याप्तिर्यथाहुर्भट्टपादाः सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः प्रयोग इंद्रियाणां च व्यापारोर्थेषु क
थ्यते दुष्टत्वाच्छुक्तिकायोगो वार्यते रजतेक्षणादिति तदपि न उक्तोत्तरत्वात् प्रत्यभिज्ञायां तत्तांशेन तथाभूतसंप्रयोगाभावादव्या
प्तेः इंद्रियेषु दोषाभावस्य प्रागुक्तन्यायेन दुरवधारणत्वात् तदेवं प्रत्यक्षलक्षणं प्रत्युक्तम् ॥ १ थं तस्य दुष्टत्वमिति तत्राह रजतेक्षणादिति

तन्निमित्तं रजतं ज्ञायत इति दुष्टो योसौ प्रयोगो नस्तस्यावर्जकोयं संशब्द इति वार्त्तिकयोजना अनेनापि हि सम्यक्त्वं प्रयोगः समर्थितः स च तत्तांशेना
स्तीति पूर्वमेवोक्तमित्याह तदपि नेति उक्तमेव दर्शयति प्रत्यभिज्ञायामिति ननु विस्मरणशीलद्रवभवानालोच्यते कथमन्यथा एकदेशसंप्रयो
गपक्षमुपक्षिप्य तत्तांशेनादृशसंप्रयोगाभावादव्याप्तिमाचष्टे इति तत्राह इंद्रियेष्विति प्रागुक्तन्यायो दुष्टसामग्रीजन्यत्वावधारणानिरसनन्यायः इं
द्रियसंप्रयोगयोरप्रत्यक्षत्वेन तन्निष्ठदोषाग्रहणेन दोषाभावस्याप्यग्राह्यत्वादित्यर्थः प्रत्यक्षखंडनमुपसंहरति तदेवमिति प्रत्यक्षधर्मिकानुमानेप्येकदेश

एसः
५४

भिन्नाः व्याप्तिरित्यपि द्रष्टव्यं अथवा भाष्यकारपक्ष एवाति व्याप्तिपरिहारमाशंक्येदमव्याप्तिदानं इंद्रियेष्विति दूषणांतरान्वाचयः अध्यक्षे
सर्वमानानामध्यक्षेऽस्मिन्प्रधर्षिते अनुमानादिषु त्वस्मनुमानेषु का कथा १ क्रमप्राप्तमनुमानलक्षणं खंडयितुमुपक्रमते नाप्यनुमानस्येति
प्रमाणखंडनस्य प्रस्तुतत्वादनुमितिं विहाय तार्किकानुमितिकरणलक्षणमुद्भावयति करणेति इदमेव वाचस्पत्युदनयोर्मतं इदं च तृतीयं
परामर्शमुत्तरत्र स्वयमेव दर्शयिष्यति ननु मास्तु व्यापारः करणत्वं किमिति तस्मादत आह व्यापारवत एव हीति व्यापारवत्कारणं हि का-
रकमुच्यते कारकविशेषश्च करणं ततो व्यापारवत एव करणत्वमित्यर्थः अस्तु तर्हि सापि व्यापार इति तत्राह तदिहेत्यादिना धूमध्वजो

नाप्यनुमानस्य लक्षणं निरूपयितुं शक्यं तथा हि करणपक्षे तृतीयलिंगपरामर्शः परामृश्यमानं वा लिंगमनुमानमिति नैयायि-
काः न तावत्तृतीयलिंगपरामर्शोऽनुमितेः करणमव्यापारत्वात् व्यापारवत एव हि सर्वत्र करणत्वं तदिह महानसादौ धूमधूमध्वजयोः
प्रथमं संबंधं गृहीतवतः शिखरिशिखरपरिवर्तितया पुनस्तमेव धूममवलोकयतस्तदनु चानुसंहितव्याप्तेर्योयं लिंगविषयः परा-
मर्शः तथा चायं धूमवानिति तत तस्य व्यापारांतरमुपलभामहे येनैतस्यानुमितिकरणता स्यात् न च व्याप्तस्य पक्षधर्मतावगमेप्यनु-
मानानुदयस्तथाभ्युपगम्यते येन व्यापारांतरं तत्र कल्प्येत अथानुसंहितव्याप्तिकस्य लिंगविषयो निर्विकल्पकप्रत्ययः करणं तस्य तथा-

वह्निः शिखरी पर्वत इति तृतीयलिंगपरामर्शमेवाभिनयति तथा चायमिति ननु यद्यपि व्यापारांतरं त्वा चायं धूमवानिति सविकल्पकप्रत्ययो व्यापारः
तस्य न दृश्यते तथापि करणत्वसिद्धये कल्प्यतामिति तत्राह न च व्याप्तस्येति यद्व्याप्ततया पक्षधर्मतया चावगतस्य लिंगस्य कदाचिदनुमितिजनकत्वं
न दृश्येत कल्प्येतापि तदा व्यापारांतरं केवलव्यतिरेकवत्त्वात्तथापि तत्कल्पनेऽतिप्रसक्तिरिति भावः ननु द्विविधस्तृतीयलिंगपरामर्शो निर्विकल्पकः सवि-
कल्पकश्चेति तत्र निर्विकल्पकः करणं सविकल्पकस्तु तस्य व्यापार इति शंकते अथेति अनुसंधानं प्रत्यभिज्ञानं एतच्च लिंगपरामर्शस्य तृतीयत्वसिद्धये श-
कमेव लक्षयितुं प्रत्यक्षलिंगोपलब्धिस्थले यत्र तु शब्दादनुमानाद्वा लिंगावगमः तत्र नैवं द्वैविध्यं प्रत्यक्षगोचरत्वादस्याः कथा मास्तु तत्र करणत्वे वाभावप्रसं-
गाद्व्याप्तिरित्याह मैवमिति स्यादेतत्तथा चायं धूमवानिति च तस्मादग्निमानिति च याविमाव ॥ ॥

पनयनिगमनाख्यावयवौ तत्र निगमनगतस्तस्मादितिपरामर्शो व्यापारस्तज्जनकश्चोपनयगतलिंगपरामर्शः सविकल्पकः करणमिति शंकि॰
त्वा तादृशपरामर्शं विनैवाप्तवचनादवगतधूमादनुमित्युदयेऽव्याप्त्या परिहरन्ति अथो च्येतेत्यादिनो दयादित्यंतेनं ननु तादृशपरामर्शव्यतिरेकेणोत्पद्यमानप्र
तीतिरनुमितिरेव न भवतीत्याशंक्य परिशेषादनुमितित्वमाह न चैषेत्यादिना परिशेषादनुमितित्वं दर्शयित्वा तत्राव्याप्तिं दर्शयति तत्कथमिति किंच
यदि परामर्शः करणं तदा तस्य ज्ञायमानतया करणत्वात्प्रत्यक्षाद्वैलक्षण्यं स्यादित्याह लिंगपरामर्शस्येति अस्तु तर्हि परामर्शोपि ज्ञायमानतया

शब्दानुमानाभ्यामवगतलिंगेष्वव्याप्तेरादावेव सविकल्पके तत्तेषां विषयीकरणाच्छब्दानुमानयोर्निर्विकल्पकप्रत्ययाजनकत्वाद्यो च्येत
तस्मात्स्यमग्निमानिति निगमनेन तस्मादित्युपनयार्थस्य लिंगाधिकरणत्वस्य परामर्शादुपनयार्थस्य पूर्वभाविनस्तृतीयलिंगपरामर्शस्य
तज्जनकतया तद्व्यापारोपपत्तिरिति तदपि नआप्तवाक्याद्व्यस्तिधूम इत्यधिगतवतोपि विनैव तस्मादिति परामर्शमात्राद्वस्तिधूमध्वज इति प्रती
तेरुदयात् न चैषा प्रतीतिः प्रत्यक्षा अनैद्रियकत्वात् नापि शाब्दी आप्तवाक्यस्य धूमसद्भावमात्रपर्य्यवसितत्वात् नापि स्मृतिस्तत्राग्निसद्भावस्य पूर्वम
ननुभूतत्वात् अतः परिशेषादनुमितिरेवेत्यास्थेयं तत्कथं तत्र व्यापारसंभवः लिंगपरामर्शस्य करणत्वेन प्रमाणोऽनुज्ञानाज्ञानकरणविभाग
श्च न स्यात् नयनादीनामेव हि करणत्वमज्ञानतया ज्ञानतया तु लिंगशब्दादीनामिति विभागः परामर्शस्य करणतायां न सिद्धेत् न च परामर्शोपि
ज्ञानतया करणं ज्ञानस्य निलीनस्यैव नयनादिवत्स्वरूपफलजनकतांगीकारात् अन्यथाऽनवस्थाप्रसंगात् अथ परामृश्यमानं लिंगमनुमितेः
करणं तदपि न तत्रासीद्धूम इत्यागमादुपयुज्यवह्निरपि तत्रासीदित्यनुमितावविद्यमानस्य कारणत्वानुपपत्तेः तत्परामर्शस्यैव कारणता यात्तस्य

करणमिति नेत्याह न च परामर्शोपीति ननु निलीनतया फलजनकस्याप्यपेक्षितस्य स्थले ज्ञायमानतया जनकता किं न स्यादित्यत आह अन्यथेति सप्रका
शतानंगीकारादिति भावः केवलव्यतिरेकाभावस्याप्युपलक्षणमिदं सति लिंगपरामर्शे तद्बोधापराधेनानुमित्यनुत्पाददर्शनात् ननु न परामर्शः कर
णं येनायं दोषः स्यादपि तु परामृश्यमानं लिंगं तस्य च ज्ञायमानत्वान्नोक्तदोष इत्युदयनमतं शंकित्वा अतीतादिधूमेनानुमानस्थलेऽविद्यमानस्य करण
त्वाभावात्परामर्श एव करणं मन्तव्यं तत्सामान्यात् तन्मानस्थलेपि तस्यैव करणत्वं वक्तव्यं तथा चापरिहार्य एव पूर्वोक्तदोष इत्याह अथ परामृश्यमानमि

एवं लिंगमंगीकृत्य तत्परामर्शस्य करणत्वं नास्तीत्युक्तं इदानीं लिंगनिरूपणादपि तत्परामर्शस्य करणत्वं न संभवतीत्यभिप्रेत्याह किंचेदमिति लिं
गस्य लक्षणमुद्भावयति व्याप्तीति व्याप्तिमल्लिंगमित्युक्ते करतलस्पर्शवद्रूपवत्त्वात्सुरभिगगनारविंदं अरविंदत्वात्कासारारविंदवदित्यादिसि
द्धसाधनताश्रयासिद्धोरनित्यः शब्दः सावयवत्वादित्यादिस्वरूपासिद्धौ चातिव्याप्तिस्तदर्थं पक्षधर्मतावदित्युक्तं तावत्युक्ते चानित्यः शब्दः प्रमेयत्वा
त् नित्यः शब्दः कृतकत्वादित्यादिसव्यभिचारविरुद्धादिष्वतिव्याप्तिस्तदर्थं व्याप्तिग्रहणं अविनाभावो व्याप्तिरिति पक्षं दूषयति नाद्य इति विक
ल्पदूषणे श्लोकाभ्यां संगृह्णाति किं व्यक्त्यो रित्यादिना तद्वतो रिति जातिविशिष्टव्यक्त्यो रित्यर्थः साध्यसाधनवत्त्वयो रिति धूमवत्त्वाग्निमत्त्व

त्वात् एकप्रयोजकतानुरोधेन धूमादेर्वर्तमानदशायामपि तत्परामर्शस्यैव कारणतायाः स्वीकरणीयत्वात् किंचेदं लिंगं यस्य परामर्शः परा
मृश्यमानं वा लिंगमनुमितिकरणं व्याप्तिपक्षधर्मतावल्लिंगमिति चेत्केयं व्याप्तिः किमविनाभावः किंवा स्वाभाविकः संबंधः निरुपाधिकः
संबंधो वा नाद्यः विकल्पासहत्वात् तथाहि किं व्यक्त्योरथवा जात्योस्तद्वतोर्वा विशेषयोर्व्याप्तिस्त्वयेष्यते किंवा साध्यसाधनवत्त्वयोः २३ सा न
व्यक्त्योस्तदानंत्यान्न जात्योस्तदसंभवान्न तद्वतो रुक्तदोषान्न चतुर्थो निरूपणात् २४ किं धूमधूमकेतनस्वलक्षणयो व्याप्तिरुत धूमत्ववह्नि
त्वजात्योरथ तज्जातीययो राहोस्वित् धूमवत्त्ववह्निमत्त्वयो नाद्यः व्यक्तीनामनंतत्वात्तत्र संबंधग्रहणासंभवात् नह्यसर्वज्ञेन सर्वा व्यक्तयो वि
शेषतो ज्ञायंते अथ व्याप्तिग्रहणसमये सामान्यलक्षणया प्रत्यासत्या सर्वा व्यक्तयस्तदिंद्रियैरवभासेरन्नन्यथा सर्वोपसंहारवती व्याप्तिरेव ना
योरित्यर्थः तदानंत्याद्व्यक्तीनामानंत्यादसर्वज्ञेन तत्संबंधग्रहणाशक्तेरित्यर्थः तदसंभवादिति अग्नित्वधूमत्वयोरैकाधिकरण्याभावेन
व्याप्तेरसंभवादित्यर्थः आनंत्यमुक्तदोषः श्लोकौ व्याकरोति किं धूमेत्यादिना धूमकेतनो वह्निः असर्वज्ञेनापि प्रमेयत्वाद्याकारेण सर्वा व्यक्तयो ज्ञा
तुं शक्यंत इति तन्निवृत्त्यर्थं विशेषत इति ननु यदा व्यक्तिद्वयं गृह्यते तदा तद्गतसामान्यद्वयसंबद्धाः सर्वा व्यक्तयः प्रत्यक्षीक्रियंते तत्र च सामान्या
त्मिकैव प्रत्यासत्तिः चक्षुःसंबद्धधूमवह्निव्यक्तिसमये तत्सामान्यद्वयद्वारा संबद्धविशेषणतया प्रत्यासन्नत्वाद्व्यक्तीनां ततो व्यक्त्योरेव व्याप्तिग्रहेपि

वि·प्र
टी·न·
५६

ननु मा भूत्सर्वोपसंहारवद्व्याप्त्यवगमः किं नश्छिन्नमिति तत्र श्रीवर्द्धमानोक्तं बाधकमाह इत्यानुमानिकेति अथ कथमुपादानादीनामानुमानि
कत्वमिति तत्राह नहि परिदृश्यमानेति किं नाम किन्त्वर्थः प्रतिबन्धो व्याप्तिः सर्वव्यक्तिनिष्ठव्याप्तिग्रहणासमर्थेनमुपसंहरति पूर्ववादी तत्सिद्धमिति॥
इष्टमोदनादिममसमीहितसाधनमोदनादित्वात् हस्तगतौदनादिवदित्यनुमाय तदादित्सते एवं परिवर्जनीयेऽपि न चेत्तत्सकलौदनादिगतहितसा
धनतावगमं विनाशक्यमनुमानमुदेतुं न च तदवगमे कथितोपायमन्तरेणोपायान्तरमस्तीति खण्डनकार्थः तदेतद्दूषयति तदयुक्तमिति ग्रहादिविम
तं प्रत्यक्षं प्रमेयत्वादभिधेयत्वादित्यादौ यदा प्रमेयत्वादेर्व्याप्तिं गृह्णाति तदा प्रमेयत्वादेः सर्ववस्तुनिष्ठत्वात्तद्ग्रहणे सर्वं गृहीतमेवेति क्वापि न तत्संश

इत्यानुमानिकोपादानादिव्यवहारविरहविरोधप्रसंगात् नहि परिदृश्यमानकदलीफलादेः प्रत्यक्षेण दृष्टमिष्टसाधन
त्वं येन तदुपाददीत किं नामानुमेयं न च प्रतिबन्धसिद्धिमन्तरेणानुमानप्रवृत्तिः न चान्तरेण विशेषप्रतिभासं तन्नियमावगमः त
त्सिद्धं व्याप्तिग्रहणसमय एव सकलविशेषाः प्रतिभासन्त इति तदयुक्तं प्रमेयत्वाभिधेयत्वयोर्व्याप्तिं गृह्णतः सर्वज्ञत्वप्रसंगात् न
नु प्रमेयतया सर्वं ज्ञायते न तु रूपान्तरेणेति चेन्नैवं रूपान्तरस्यापि प्रमेयत्वाधारतया ग्रहणप्रसंगात् अप्रमेयत्वे च सप्तम
रसादिवत्तदसिद्धेः येन येन रूपेण यद्यदस्ति तेन तेनाकारेण तत्तत्प्रमेयमिति स्यादेव सर्वज्ञता किं च व्याप्तिसंदर्शनसमय
एवाशेषग्रहणे पर्वतनितम्बगोचरोऽपि कृशानुर्गृहीत एवेति पुनर्धूमदर्शनेन तस्य स्मृतिगोचरतैव स्यान्नत्वनुमेयता ॥ ९ ॥

यादि स्यात् अस्ति च तन्मन्त्रिनवर्णिपदार्थेष्वनभिधानलिंगानुमित मत एव न प्रतिक्षत्येति भावः ननु प्रमेयत्वाक्रान्ताकारेण सर्वं ज्ञायते न तदाकारेण
च व्याप्तिग्रहणं ननु रूपान्तरेण तदभावादिति शंकते नत्विति तत्र वक्तव्यं येनाकारेणानि तज्ज्ञायते स किं प्रमेयो न वा आद्ये सोऽपि ज्ञात एवेति तन्पूर्वोक्त
दोषानिर्मोक्षः उत्तरस्मिंस्तु स एव नास्ति येन तज्ज्ञायेतेत्याशयेनाह मैवमिति सप्तमेति रसषट्कव्यतिरिक्तद्रव्यादेः सत्त्वस्याप्रमेयस्यासिद्धिवदित्यर्थः किं च
व्याप्तिग्रहणसमये सर्वव्यक्तिग्रहणपूर्वकं तन्निष्ठव्याप्तिग्रहणाभ्युपगमे तापसीकृतपर्वतेऽपि साग्निगृहीतानवानयदिनदा सर्वोपसंहारिणी व्याप्तिरेव न गृहीता

खं·ख·
५६

न च धारावाहिकवत्संप्लववादेऽनुमानप्रवृत्तिः परार्थानुमाने तं प्रति सिद्धसाधनतापातात् जात्योरिति द्वितीयं पक्षं दूषयति नापि द्वितीय इत्यादिना वृक्षशिंशपयोरिव स्वभावाविनाभावो वा धूमाग्न्योरिव सादेश्यनियमो वा वक्तव्यः कालकृताविनाभावस्य जात्यंतरेणापि साधारण्यात् न च द्वयं न संभवति भिन्नस्वभावत्वात् भिन्नदेशत्वाच्चाग्नित्वधूमत्वयोरिति भावः जातिविशिष्टव्यक्त्योरिति तृतीयं दूषयति नापि तृतीय इति यत्त्वत्र लीलावतीकारेणोक्तं न च प्रतिबंधासंवेदनं व्यक्तिमात्रसहितत्वजातिनिर्भासादिति तदसत् सर्वव्यक्तिग्रहणाग्रहणप्रयुक्तदोषापरिहारात् धूमवत्त्ववह्निमत्त्वयोरिति चतुर्थं पक्षमुद्घाटयति अस्तु तर्हीति ननु तयोरप्युपाधिसामान्यत्वात्समस्तधूमवद्वह्निमत्त्वस्योपधेयग्रहणाव्यतिरेकेणाशक्यग्रहणत्वात् पूर्वोक्तदोषस्तदवस्थ इति तत्राह न हि तत्रेति यथा हि कतिपयव्यक्तिग्रहणेऽपि समस्ता जातिर्गृह्यते तत्कस्य हेतोः प्रत्येकं परिसमाप्यवृत्तित्वात् इदं त्वापीति भावः

नापि द्वितीयः यद्धूमत्वं यत्र वा धूमत्वं तद्वह्नित्वं तत्र वा वह्नित्वमिति नियमासंभवात्तयोर्भिन्नत्वाद्भिन्नाधिकरणत्वाच्च नापि तृतीयः व्यक्तीनामिव तद्वतामपि आनंत्यात्संबंधग्रहणानुपपत्तेः अस्तु तर्हि चतुर्थः नहि तत्र संबंधग्रहणानुपपत्तिर्धूमवत्त्ववह्निमत्त्व॥२२ अत्र तावत्कतिपयव्यक्तिग्रहणे जातिर्गृह्यते इत्यत्रापि नास्ति संप्रतिपत्तिः यत्तत्र परिसमाप्यवृत्तित्वाद्गृह्यत इति मतं तन्न हि वक्तव्यं केयं परिसमाप्तिः यदि तत्रैव वर्तमानत्वं गतं तर्हि गवांतरगतगोत्वेन अथ पर्य्यवसिततया प्रमीयमाणत्वं अर्थाभावे तत्प्रमितत्वे कथमाश्वासः किंच सा किं व्यक्तिसर्वगता सर्वगता वा आद्ये तु नैकस्यां व्यक्तौ परिसमाप्तिः नहि सर्वगतायाः गृहोदरे परिसमाप्तिर्वास्तवी व्यक्तिसर्वगतत्वपक्षे गोद्वये वर्तमानात्तयोरंतराले वर्तनेन वा न यदि तदा विच्छिन्नदेशायाः कथमेकत्वं द्वितीये तु प्रागुक्त एव दोष उत्पद्यमानायां च व्यक्तौ कुतस्यागमिष्यतीति पतिष्यतीत्यपि चिंतनीयं तत्रापि तत्त्वे प्रागुक्तदोषः प्रतीत्यप्रतीतिव्यक्त्यंतरव्यक्तीनान्ये इति चेत्किं योगाचारनगरगोपुरं प्रविशसि अचिंत्यमहिमेयं वस्तुस्वभाववैचित्री यद्व्यक्तिद्वये वर्त्तमानाप्यंतरालेन वर्तत एकत्वं न जहाति व्यक्त्यनुत्पत्तिदशायां तत्रतत्कारणेष्वेवास्ति व्यक्त्यनुत्पत्तौ चास्तीत्यादीति चेत्सत्यं अचिंत्यमहिमैव सा न केवलं सैव भवदनवबोधोऽप्यचिंत्यमहिमैव यतस्सैवंविधमहामहि

नावकल्पयसि प्रमाणं युक्तीश्च तत्र संचारयन्विचारकताभिमानं च न मुंचसीति वक्ष्यते चायमुपरिष्टात्सविस्तरोर्थः तदेतादृशदोषरा
शिकालुष्यकर्षणमपि नासूत्रयन्दोषांतरमाह मैवं संभवेपीति ननु वह्निमत्त्वमात्रमत्रापि गृहीतमेव पर्वतगतवह्निमत्त्वं तु न गृहीतमित्यनुमानसार्थ
क्यमिति शंकते वह्निमत्त्वानि बहून्येवेति मन्यमानं प्रत्याह इतैवमिति शक्यते हि पर्वतगतधूमवत्त्वमन्यदेवेति वक्तुमिति भावः अनेकत्वपक्षं प
रित्यज्यैकत्वपक्षस्यैव पूर्वोक्तदोषस्य परिहारं शंकते अथैकैवेति धूमवत्त्वव्यापकतया प्रतीतवह्निमत्त्वस्य पर्वतसंबंधबोधनमनुमानार्थ
इति भावः तत्र धूमवत्त्वाग्निमत्त्वयोर्व्याप्तिग्रहणसमयेपि यत्र यत्र धूमस्तत्र तत्राग्निरित्येव गृह्यते वीप्साचानुक्तोपसंहारार्थीतया च तयासंगृ

लक्षणयोरुपाध्योः कतिपयव्यक्तिग्रहणेपि गोत्वादिजातीनामिव ग्रहणोपपत्तेरिति चेन्मैवं संभवेपि तत्संवेदनस्य तत्समय एव
पर्वतनिर्तत्वसंबंधिनो वह्निमत्त्वस्य गृहीतत्वात्पुनरनुमानाप्रवृत्तेः वह्निमत्त्वमात्रमेव धूमवत्त्वव्यापकतया गृहीतं न तु पर्वतगतवह्निम
त्त्वमिति चेत्तत्किमिदानीं बहूनि वह्निमत्त्वानि इत्येवं धूमवत्त्वान्यपि बहून्येवेति तदानंत्यात् संबंधग्रहणानुपपत्तिस्तदवस्थैवेति
घट्टकुट्यां प्रभातमनुसरति अथैकैव धूमवत्ता एकैव वह्निमत्ता न सा पर्वतसंबंधिनि गृहीताऽतः सैवानुमानालंबनमिति चेन्मै
वं विकल्पासहत्वात् तथा हि संबंधसंवेदनसमये यत्र यत्र धूमवत्त्वं तत्र तत्र वह्निमत्त्वमिति वीप्साविषयतया पर्वतादिप्रदेशोपि प्रती
तो न वा आद्ये पर्वतेपि वह्निमत्त्वमधिगतमिति कृतमनुमानेन द्वितीये तु पर्वते धूमवत्त्वस्य प्रतीतावपि वह्निमत्त्वप्रतीतिर्न स्यात्तया

हीतार्थत्वभावे तत्तद्भावे च पर्वतस्यानुमानानुपपत्तिरिति दूषयति मैवं विकल्पासहत्वादित्यादिना व्याप्ते "रगृहीतत्वादित्यन्तम
रगृहीतत्वादिति यत्र धूमस्तत्राग्निरिति व्याप्तिग्रहणसमये यत्रेत्येतदर्थान्तर्गततया अगृहीतव्याप्तिकत्वादित्यर्थः एतेनास्य वह्निविशे
षस्य पूर्वं प्रतीतत्वेपि एतत्पर्वतनिष्ठतया पूर्वमप्रतीतिरिति वदन्वादीन्द्रोपि विद्रावितः अथ केवलव्यतिरेकानुमानादेतद्वह्निम
त्त्वसिद्धिस्तत्किमयं पर्वत एतद्वह्निमानेतद्धूमवत्त्वादिति साधयिषितसिद्धेमिति चेद्दूनात्माश्रयतापर्वतस्यापि पर्वताग्निमत्त्वसंकेशिनि॥

एवमविनाभावप्रतियोग्यनिरूपणाल्लक्षणासिद्धिरुक्त्वा इदानीमविनाभावशब्दार्थविकल्पं दूषयति कश्चायमित्यादिना किमविनेति
विनाशब्दाभिधेयसाधनाभावस्याभावं साधनसद्भावं विवक्षित्वा तत्र साध्यसद्भावो भावशब्देनाभिधीयत इति साधनसद्भाव एव साध्यसद्भाव
रूपान्वयव्याप्तिस्तयाऽविनाभावशब्दार्थो विवक्षितः किंवाविनाभावः साध्यव्यतिरेकेण साधनस्य भावस्तदभावोऽविनाभाव इति व्यतिरेकव्याप्ति
र्विवक्षिता साध्याभावे साधनाभावस्य तत्त्वात् उतोभयमपीति रीतिरित्यर्थः ननु केवलव्यतिरेकिण्यपि साध्यसाधनयोस्तत्त्वात्सम्भवत्यन्वय
व्याप्तिरिति तत्र वक्तव्यं किं पक्ष एवोभयोः सहभावनिश्चयः अन्यत्र वा नाद्यस्तत्र साध्यानिर्णयात् द्वितीये प्राह पक्षादन्यत्रेति केवलान्वयि-
नीति अविद्यमानविपक्षत्वादित्यर्थः इतरयोरिति केवलान्वयिकेवलव्यतिरेकिणोरित्यर्थः एवमविनाभावो व्याप्तिरिति प्रथमं पक्षं दूषयि-

कश्चायमविनाभावः किं साधनसद्भावेन साध्यसद्भावः किं वा साध्याभावेन साधनाभाव उतोभयं नाद्यः केवलव्य
तिरेकिणि तदभावात् पक्षादन्यत्रापि भावे केवलव्यतिरेकित्वव्याकोपात् नापि द्वितीयः केवलान्वयिन्यभावात्।
न तृतीय अन्वयव्यतिरेकिणि तद्भावेपीतरयोस्तदभावात् एतेन स्वाभाविकः संबंधो व्याप्तिरिति द्वितीयः क-
ल्पोपि परास्तस्तत्रापि जातिव्यक्त्यादिविकल्पानां दूषणानां तुल्यत्वात् स्वाभाविकशब्दार्थानिरुक्तेश्च ॥

त्वा द्वितीयेपि तद्देवा-
तिदिशति एतेनेति तस्यैव विवरणं तत्रापीति स्वाभाविकोपि हि संबंधः कयोरिति विवेचनीयमिति भावः उभयकस्तु संबंधो व्याप्तिरिष्टा तत्र लिं
गधर्मस्य लिंगिनेत्यत्र लिंगधर्मस्येति दर्शनाद्व्याप्यैकधर्मो व्यापकनिरूप्यो व्याप्तिर्नेपुनरुभयनिष्ठेत्यब्रवीत् अत्र किं निर्देशमात्रं प्रमाणमन्यद्वा।
नाद्यः न हि घटेन पटस्य संबंध इति निर्देशात्पटैकनिष्ठ एवायं न घटनिष्ठ इति शक्यांगीकारं नाप्यन्यत् प्रत्युत संबंधत्वसिद्धिरेवोभयनिष्ठतांगम
येत् भवतु वा यथा तथा तथाप्युक्तदोषान्न निर्मोक्षस्तत्रापि हि किं धूमव्यक्तिनिष्ठा किं धूमत्वजातिनिष्ठा किमपि व्यक्तिनिरूप्येत्याद्युक्तविकल्पाना
मप्रतिवद्धप्रसरत्वादिति एवं साधारणं दूषणमुक्त्वाऽस्मिन्पक्षेऽसाधारणदूषणमाह स्वाभाविकेति स्वभावशब्दस्य साधारणभावमात्रवाचकत्वा

२
चि॰ प्र॰
टी॰ न॰
५८

धिनोस्वभावेविश्रांतिस्तथाचतदुपरितननतद्धितप्रत्ययेनतज्जन्यत्वादिष्वन्यतमोवक्तव्यः संवंधमात्रविधानेपिविशेषपर्यवसितत्वा
दितिविकल्पयति स्वाभाविकशब्देनेत्यादिना नचजन्यत्वेनप्रयुक्तत्वस्यपौनरुक्त्यं अजन्यजनकयोरप्यनित्यत्व कृतकत्वयोः प्रयुक्तिदर्शनादित्यवगं
तव्यं तदनतिरिक्तत्वमिति स्वार्थएवविहितोयंप्रत्ययइत्यर्थः नाद्यइति विप्रतिपत्तेरूपवद्रसवत्त्वादित्यत्रहेत्वेकार्थसमवायएवव्याप्तिरूपः संवंधः ना
चतत्रलक्षणमस्तितस्याजन्यत्वादित्यर्थः घटपटसंयोगस्यलक्षणवत्तामलक्ष्यतांचाह तस्येति संवंधिस्वभावाश्रितः संवंधोव्याप्तिरितिद्वितीयप
क्षेपिघटपटसंयोगेनिव्याप्तिमाह नापिद्वितीयइति नचाव्यभिचारितसंवंधिस्वभावाश्रितत्वेनसंवंधोविशेषणीय अव्यभिचारस्यैवतथासति

स्वाभाविकशब्देनकिंसंवंधिस्वभावजन्यत्वंविवक्ष्यतेयद्वातत्स्वभावाश्रितत्वमथवातत्स्वभावप्रयुक्तत्वमाहोस्वित्तद्वाप्यत्वं
किंवातदनतिरिक्तत्वं नाद्यः एकार्थसमवायेनरसाद्रूपानुमानेतत्संवंधस्यसमवायस्याजन्यत्वेनाव्याप्तेः व्यभिचारिणोघट
पटयोः संयोगेनिव्याप्तेश्चतस्यतद्रूपत्वेपिव्याप्तिरूपत्वाभावाच्चापिद्वितीयः घटपटयोः संयोगेसंयोगिस्वभावाश्रितेव्यभिचा
रात् नापितृतीयः प्रयुक्तत्वशब्देनजन्यत्वविवक्षायामाद्यपक्षोक्तदूषणप्रसंगात्तद्वाप्तत्वविवक्षायांतुव्याप्तेरद्याप्यनिरुक्तेरात्माश्र
यः अतएवनचतुर्थः किंचसंवंधस्य

मूलं

व्याप्तित्वसंभवेननदितरवैयर्थ्यात् अव्यभिचारस्यनिरसिष्यमाणत्वाच्च ननुतत्प्रयुक्तत्वंनामनत
ज्जन्यत्वंयेनपूर्वोक्तव्याप्त्यतिव्याप्तिदोषौस्यातांकिंतुसंवंधिस्वभावव्याप्तत्वंगुणावत्वप्रयुक्तत्वमिवद्रव्यत्वस्येतितत्राह तद्वाप्तत्वेति इममेवात्माश्र
यंचतुर्थेप्यतिदिशति अतएवेति यदिचसंवंधिभ्यांव्याप्तः संवंधः तदासंवंधिनोर्व्यापकयोरधिकवृत्तितापिसंभाव्यतइतिसंवंधंवि
नापिसंवंधिनोरवस्थानंस्यात्तथाचान्यतरदर्शनादन्यतरानुमानंनस्यात्तत्संवंधंविनापितयोःस्थितिसंभवादित्यसिद्धिर्लक्षणस्येत्यभि
संधिराह किंचेत्यादिना नचसमव्याप्तितयाव्याप्यत्व विवक्षायामदोषः॥ ॥ ९ ॥

राम॰
५८

रूपरसयोरेकार्थसमवायलक्षणव्याप्तौ तद्भावात्समवायस्य नित्यत्वेन द्व्यादिपंचकवृत्तित्वेन च कालतो देशतो वा रूपरसाधिकवृत्तित्वा
त्संबंधिस्वरूपानतिरिक्तत्वमिति पंचमपक्षेप्यतिव्याप्तिमाह भूतलेति न च तस्य व्याप्तित्वं भूतलघटाभावयोर्व्यभिचरितत्वादिति भावः तस्य
च स्वभावानतिरिक्तत्वे परांगीकारमाह तस्य परैरिति न चाभावांतर्भावो निष्प्रतियोगिकत्वादभावत्वसमानाधिकरणत्वादभाव इति वा
दींद्रमतेपि तद्ग्राहकतया सप्रतियोगिकत्वं मंतव्यं अभाव इति बुद्धेश्चात्रासिद्धत्वादिति भावः अनित्याप्युदाहरणांतरमाह समवायेति न

त्वे संबंधिनोस्तद्व्यापकत्वेनाभिमतयोः क्वचित्तदधिकदेशकालावस्थानसंभवेन संबंधं विनाप्यवस्थानोपपत्तौ।
व्यभिचारात्तदेकतरदर्शनेनान्यतरानुमानं न स्यात् नापि पंचमः भूतलघटाभावयोर्विशेषणविशेष्यभावलक्षण
संबंधेतिव्याप्तेस्तस्य परैस्तदतिरिक्तत्वानंगीकारात् समवायेन हेतोः संबंधेन च रसाद्रूपानुमानादावेकार्थसमवायेऽ
व्याप्तेः तस्य संबंधिस्वरूपातिरिक्तस्यापि व्याप्तित्वादतोऽनौपाधिकः संबंधो व्याप्तिरिति तृतीयः कल्पो न युक्तः तत्रा
पि संबंधिनोर्दुर्निरूपत्वात् इतरेतराश्रयप्रसंगाच्च उपाधिर्हि साधनाव्यापकत्वे सति साध्यव्यापकः॥ ५ ॥

योरपि स्वभाव एव संबंधः न च तयोर्व्याप्तिः भूतलादौ घटसंयोगे तत्समवायाभावात्समवायेपि रूपादौ घटाभावादिति भावः अव्याप्तिं
चाह रसादिति तत्र लक्षणाभावं दर्शयति तस्येति एवं स्वाभाविकः संबंधो व्याप्तिरिति द्वितीयः पक्षो निरस्तस्तृतीयं दूषयति अनौपाधि
क इति तत्रापीति अनौपाधिकः संबंधो हि संबंधिनिष्ठः तथा च किं व्यक्तोरित्यादि संबंधिविकल्पदूषणानि समानानीत्यर्थः दूषणांतर
माह इतरेतरेति अत्र ह्यनौपाधिकत्वज्ञानं व्याप्तेरुपाधिज्ञानाधीनमुपाधिज्ञानं च व्याप्तिज्ञानाधीनमितीतरेतराश्रयं विवृणोति उपाधिर्हीति

२ चि॰प्र॰
टी॰न॰
५९

व्याप्तिसिद्धाविति अव्यापकत्वं व्यापकत्वं च व्याप्तिज्ञानाधीनज्ञानं तत्प्रतियोगित्वादित्यर्थः ननूपाधेः साध्यव्यापकत्वं नाम नाग्निमत्त्वादीनामिव व्याप्तिप्रतियोगि किंचिद्रूपं किं नाम साध्येनादृष्टव्यभिचारित्वं तथा च नान्योन्याश्रयेणेति शंकते अथ मतमिति अदृष्टव्यभिचारं साध्यं येनोपाधिना। स उपाधिस्तथा अत्र किमदृष्टव्यभिचारसाध्यत्वं व्यभिचारदर्शनविषयत्वाभावमात्रं किं वा व्यभिचारदर्शनविषयत्वात्यंताभाववत्त्वं नाद्यः वस्तुनः साध्यव्यभिचारिण्यपि तद्दर्शनसंभवेनोपाध्याभासेऽगततया तिव्यापकत्वादित्याह मैवं व्यभिचरितेति द्वितीयं शंकते साध्येति सर्वविध साध्य

एवं च व्याप्तिसिद्धावुपाधिसिद्धिस्तत्सिद्धौ च तद्रहितसंबंधस्य व्याप्तित्वसिद्धिरिति कथं नान्योन्याश्रयत्वं अथ मतं सा।
ध्यव्यापकत्वं नामोपाधेरदृष्टव्यभिचारसाध्यत्वं न तु वस्तुतो व्यापकत्वं तस्यानेनेतरेतराश्रयत्वमिति मैवं व्यभिचरितसाध्य।
स्यापि वस्तुगत्या यावन्नोऽदृष्टव्यभिचारसाध्यत्वापत्तेस्तस्याप्युपाधित्वप्रसंगात् साध्यव्यभिचारदर्शनविषयत्वात्यंताभाव
वत्त्वं विवक्षितमिति चेन्न तस्य दुरवधारणत्वात् न हि देशांतरे कालांतरे पुरुषांतरे वा नयोर्व्यभिचारदर्शनं न भविष्यतीत्येवं नि
शक्यं विज्ञातुमसर्वज्ञेन किंच व्याप्तिग्रहणसमये अग्निमत्त्वादेर्निश्चितत्वेन साध्यत्वाभावात्साध्यव्यापक उपाधिरिति नि।
र्धारयितुमशक्यं व्यापकत्वमिह साध्यशब्देन विवक्षितमिति चेन्न व्याप्यनवगमे व्यापकत्वानिरुक्तेः॥ १४१ ॥

व्यापकत्वं क्वापि न संभवति दुरवधारणत्वादित्याह न तस्येति किंच साध्यव्यापक इत्यत्र किमिदं साध्यत्वं विवक्षितं किं सिसाधयिषितत्वं किं वा व्यापकत्वं नाद्यः उपाधेरग्निमत्त्वं प्रति व्यापकत्वनिश्चयसमये महानसादावग्निमत्त्वादेः सिद्धत्वेन साध्यत्वाभावादित्याह किंचेति द्वितीयं शंकते व्यापकत्वमिति धूमवत्त्वादिं प्रति यदिदं व्यापकत्वमग्निमत्त्वादेस्तदेव तस्य साध्यत्वं विवक्षितमित्यर्थः तत्र लक्षणवाक्ये सदृशोऽर्थः पर्यवसति व्याप्यव्यापको व्यापकव्यापक उपाधिरिति तथा च व्याप्तिज्ञानं उपाधिज्ञानं उपाधिज्ञाने च व्याप्तिज्ञानमिति स एव दुरात्मा परस्पराश्रयः परावृत्त इत्यभिसं

एम॰
५९

यत्त्वत्र शिवादित्यमिश्रेण परिहारोऽभिहितः परस्पराश्रयस्य तत्राप्युक्तं दूषणमतिदिशति एतेनेति साध्यवद्यत्स्थलं तन्निष्ठात्यन्ताभा
वस्तदप्रतियोगित्वं तत्र वर्त्तमानत्वं साध्यव्यापकत्वं तथा साधनवद्यत्तन्निष्ठात्यन्ताभावप्रतियोगित्वं तत्रावर्त्तमानत्वं साधनाव्यापक
त्वमिति योजना अस्यापि साध्यसाधनगर्भत्वात् ननु अयुक्तपूर्वोक्तदोषः शक्यपरिहार इत्याह साध्यसाधनेति एतेन साध्यक्त्वसह
चारिणः साधनैकदेशवृत्तित्वमुपाधित्वमिति लीलावतीकारलक्षणमपि निरस्तं साध्यसाधनशब्दार्थानिरुक्तेरेव ननु यद्यपि व्याप्तिनि
र्णयदशायां साध्यत्वं साधनत्वं च नास्ति तथापि तद्रूपेण संभावितत्वं विवक्षितं तच्च तदानीमप्यस्त्येवेति शंकते तद्रूपेणेति विद्यमानस्य
खलु संभावना प्रमितिर्वा न च व्याप्तिग्रहणदशायां साध्यत्वमप्यस्तीति केनाकारेण संभावनापि स्यात् नापि व्यापकतया परस्पराश्रय

एतेन साध्यवन्निष्ठात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वं साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साध
नाव्यापकत्वमित्याधुनिकानां वक्तव्योपि निराकृतः साध्यसाधनयोरनिरुक्तेरेव तद्रूपेण संभावितत्वमुभ
यत्रापि विवक्षितमिति चेन्मैवं तद्रूपस्यानिरुक्तौ तद्रूपेण संभावितत्वस्यापि दुर्भणत्वात् ॥ ~ ॥

त्वादित्यर्थः अथवा सर्वोपसंहारवद्व्याप्तिग्रहणसमय एव धूमवत्त्वाग्निमत्त्वयोः सर्वत्र सिद्धत्वेन साध्यसाधनभावस्य दुर्निरू
पतया संभावनायाः सुतरामसिद्धेरित्यर्थः किंच साध्यसाधनशब्दाभ्यामविशेषेण सर्वसाध्यसाधनविवक्षा तद्विशेषविवक्षा वा
नाद्यः साधनस्यापि यत्किंचित्प्रति साध्यतया तद्व्यापकत्वे साधनाव्यापकत्वव्याकोपात् तथा साध्यस्यापि यत्किंचित्प्रति साधनत
या तदव्यापकतया साध्यव्यापकत्वव्याकोपात् नापि द्वितीयस्तथा सति धूमवत्त्वाव्यापकोऽग्निमत्त्वव्यापक उपाधिरित्युक्तं स्यात् त
था च नानुगतलक्षणासिद्धिः न च विशेषलक्षणत्वाददोषः सामान्यलक्षणासिद्धौ तदसिद्धेर्न चात्यन्ताभावप्रतियोगिधर्मत्वं सा
मान्यलक्षणं व्यर्थविशेषणत्वात् न च प्रमेयत्वादिव्यवच्छेदार्थमत्र ॥

ताभावविशेषणं तस्याप्यत्यंताभावप्रतियोगित्वादंततः स्वस्मिन्नेवाभावादात्माश्रयप्रसंगात् नचोत्पत्तिज्ञप्तिप्रतिबंधकस्यैव तस्य दूषणता ।
संकोचे प्रमाणाभावात् नियतानुपलब्धेरुभयत्र समानत्वात् नच केवलान्वयिताभंगप्रसंगः इष्टत्वात् केवलान्वयिनि प्रमाणाभावात् न
हि प्रमेयत्वादीनां सकलवस्तुनिष्ठत्वे प्रत्यक्षप्रमाणमस्ति अस्मदादेरसकलवेदित्वात् सर्ववेत्तुश्च तद्विषयप्रमाणे ऽस्मदादीनां प्रमाणा-
भावात् नाप्यनुमानं तत्प्रसिद्धं विशेषणतादिदोषप्रग्रासात् सकलवस्तुनिष्ठत्वं प्रमेयत्वादिनिष्ठमित्यादेश्चाश्रयासिद्धत्वात् सकलवस्तुनि
प्रमेयत्वाधार इत्यादेश्चासिद्धिर्दृष्टांताभावग्रस्तत्वात् किंच धूमानुमाने तत्साधनाव्यापकस्तत्साध्यव्यापकश्च कश्चिदुपाधिः प्रमितो न
वा आद्ये ऽनुमानभंगः द्वितीये प्रतियोग्यप्रमित्या निरुपाधिकसंबंधरूपव्याप्त्यसिद्धिः यावंत एतत्साधनाव्यापकास्तावन्त एतत्साध्यप्र-

भवतु नाम यया काचन व्याप्तिस्तस्या व्याप्तेरनुमितेश्च व्याप्तेरेव दृष्टेत्यात्माश्रयः सत्यामेव व्याप्तावनुमितिभावादसत्या
मभावात् किंच न व्याप्तिग्राहकं प्रमाणं नप्रत्यक्षमशक्यत्वाच्चानुमाप्यनवस्थितेः नागमस्तद्दत्तेभावान्नोपमाऽ
एतत्प्रमेयतः ॥२५॥

त्यय्यव्यापका यावन्तश्चैतत्साध्यव्यापकास्तावंत एतत्साधनं प्रत्यपि व्यापका इति साधिते भवत्युपाधेरुद्धार
इति चेदेतावतापि परिश्रमेण किं प्रतियोगिप्रमिति रागादिना न वेत्यात्मनि परिभावयेत्यलमतिकलकलेन विध्वंसिते च निश्चितोपाधौ शं-
कितोपाधिरिदानीं ध्वस्यत एवेति मंतव्यं क्वचिदप्यनिश्चितस्य संशयायोगात् एवं व्याप्तिलक्षणं दूषयित्वात्मा — श्रयादितर्कबाधादपि
व्याप्तेरनुमितेश्चागत्वासिद्धिमाह भवतु नामेति व्याप्तेरनुमितेश्च व्याप्तिरस्ति न वा यदि न तदा नामंतरेणाप्यनुमितिरुदीयात् अथास्ति तदा
सैव व्याप्तिस्तत्र वर्तते तदात्माश्रयः ज्ञप्तौ चायमथान्यात्र अन्योन्याश्रयचक्रकानवस्थाश्चेति भावः एतदेवाह सत्यामिति नचे
व्याप्तौ प्रमाणमपि किंचन निरूपयितुं शक्यमित्याह किंचेति संभवप्रमाणानि श्लोकाभ्यां निरस्यति नप्रत्यक्षमित्यादिना सर्वव्यक्तिनिष्ठव्याप्तेर-

वह्निना गृहीतुमशक्यत्वान्न प्रत्यक्षेण तदधिगमः नाप्यनुमानमन्योन्याश्रयात् अथान्येनैवानुमानेन गतौ व्याप्तिस्तर्हि तत्राप्यनुमानान्तरमेवं तत्रापीत्यन-
वस्था स्यात् नाप्यागम आगमव्यापारव्यतिरेकेणापि पामरपशुशकुन्तादीनामनुमित्युदयान्नाप्युपमानं तस्य सादृश्यविषयतया संज्ञासंज्ञिसंबंधविषय-
तया चैतादृशानन्तप्रमेयत्वाभावात् नाप्यर्थापत्तिरनुमानानन्यत्वादथ परमतेन पार्थक्यं तथैवानुमानफलस्याग्निमत्त्वस्यापि सिद्धेः शङ्कौ निह्यग्निव्य-
तिरेकेण धूमोऽनुपप—द्यमानस्तं कल्पयितुमित्यनुमाफललोपः स्यात् नाप्यभावः यस्यकस्यचिद्वा सर्वेषां वा योग्यानुपलब्धेर्वा अनुपलब्धिमात्राद्वा

नार्थापत्तिरनन्यत्वादनुमाफललोपनात् नाभावो दुर्निरूपत्वाच्च तर्कस्तर्कबाधनात् २६ ननावदन्वयस्य व्याप्तिग्राहकं सर्वव्यक्तिनि-
ष्ठस्यान्वयस्य व्यतिरेकस्य वा सर्वव्यक्तीनामग्रहे गृहीतुमशक्यत्वान्न ग्रहे वानुमानस्य वैयर्थ्यान्नाप्यनुमानमनवस्थानादन्तरेण व्याप्तिग्र-
हमनुमानानुदयेन तद्व्याप्तिग्राहकानुमानपरंपराया दुर्वारत्वात् नाप्यागमः वेदाप्तवचनाकर्णेन विधुराणामपि व्याप्तिदर्शिदृष्टेर्ना-
प्युपमानं तस्य सादृश्यमात्रविषयतया व्याप्तिज्ञप्तावजागरूकत्वात् नाप्यर्थापत्तिस्तस्यानुमानानतिरेकात् अतिरेकेऽपि तयानुमा-
नावसेयार्थाधिगतेरनुमानस्यानुदयप्रसंगात् तथा हि व्यापकव्यतिरेकेण व्याप्यस्यानुपपत्तिरिहार्थापत्तिरभिमता तया च तयैवा-
नुपपत्त्या लिंगिनोऽधिगतौ कृतमनुमानेन नाप्यभावः एवं हि स प्रमाणायितव्यः यदि वह्निधर्मिव्यतिरेकेण धूमस्य तदा तयोपलं-
भस्य तदभावान्नायं तद्व्यतिरेकेणेति तच्च न तथा हि किं सर्वेषां व्यभिचारानुपलंभः किं वा स्वस्यैवानुपलंभः उत योग्यानुपलंभः
नाद्यः सर्वानुपलंभस्य निश्चेतुमशक्यतया संशयानिवृत्तेः न द्वितीयो व्यभिचारात्॥ १९ निरूपत्वात् नापि तर्कस्तस्य व्याप्तिमूलत्वेऽनव-

स्यालक्षणतर्कबाधनात् अतन्मूलत्वे तर्काभासतया तर्कबाधनात् भावपरो निर्देशः इति श्लोकार्थः संगृह्य विवृणोति ननावदित्यादिना अनवस्था-
मेव विवृणोति अन्तरेणेति वेदाप्तवचनेति विभागो मीमांसकमतेन अजागरूकत्वात् अप्रवृद्धत्वादित्यर्थः अभावस्यात्रासंभवं दर्शयितुं तत्प्रवृत्तिप्र-
कारं दर्शयति एवं हीति तथेति वह्निरहिततयेत्यर्थः तद्व्यतिरेकेणेति वर्तत इति शेषः स्वस्येति प्रतिपत्तुरित्यर्थः स्वानुपलंभपक्षेऽप्यनुपलंभमात्राद्युतयो-
ग्यानुपलंभादित्याह उतेति व्यभिचारादिति स्वानुपलंभमात्रस्यार्थाभावेन नियमाभावादित्यर्थः॥

व्यभिचारमेवाह नहीति योग्यानुपलब्धिपक्षं दूषयति नापीति उक्तंचेति उपाधिविधूननेनप्रतिबंधसिद्धिरीश्वरानुमानेसमर्थयता का-
र्यमात्रस्यकारणमात्रेणापिसंबंधउपाधिविधूननेनेत्युक्त्वा विपक्षबाधात्तव्याप्तिसिद्धिमाशंक्यव्याप्तसिद्धावुक्तायांसहेतुकत्वकादाचित्क-
त्वयोर्व्यभिचारानुपलंभा द्व्याप्तिसिद्धिमाशंकितापरिहरतेतिशेषः अंतिमपक्षंनिराकरोति नापीति यदिव्याप्तिमूलस्तर्कस्तदातद्व्याप्ता-
वपितर्कांतरमेषितव्यमित्यनवस्था इतरथाप्रशिथिलमूलत्वमित्यर्थः तत्रयथातर्कानवस्थानावतरति तथाकुसुमांजलौ बुद्ध्यनेनबा-
धकस्तर्कोभिहितस्तमुद्भावयति अथमतमिति यद्यद्कारणकंतत्तदेकरूपमसदेकरूपंवाआकाशवत्तत्कुसुमवच्चनदिह यदि धूमो

नहिनगरगतेनस्वेनानुपलब्धमित्येतावतारण्यकोपलब्धगवयादेरपलापसंभवः नापितृतीयः सार्वत्रिक
योग्यानुपलब्धेरसंभवात् उक्तंचलीलावतीकारेणसर्वादृष्टेश्चसंदेहात्स्वादृष्टेर्व्यभिचारतः योग्यादृष्टेरसत्वाच्च प्रति
बंधोनसिध्यतीति नापिविपक्षबाधकतर्कात्तर्कस्यव्याप्तिमूलत्वेनानवस्थानादतन्मूलत्वेचमूलशैथिल्येनतत्का
भासत्वात् अथमतंयदिधूमोग्निंव्यभिचरेदकारणः सनित्यःस्यात्तस्यादेववानतुकदाचित्स्यात् नचविनापिका
रणंकार्य्यंशंकितुंशक्यंव्याघातात् नदेवहिकार्यंयत्कारणाधीनस्वात्मलाभमतः कार्य्यंचकारणरहितंचेति
व्याघातः नदेवचाशंकितव्यंयस्मिन्नाशंकमानेक्रियाव्याघातादयोपिनावतरंतीतिमेवम् ॥ ~ ॥९

ग्निंव्यभिचरेदकारणतयानित्यसत्वासत्वयोरन्यतरत्वप्रसक्तिरित्यर्थः उक्तंहि नित्यसत्त्वमसत्त्वंवाहेतोरन्यानपेक्षयानियामकाद्विभा-
वानांकादाचित्कत्वसंभवइति १ नन्वकारणकस्यापिसदातनत्वेनव्यभिचारशंकायांकिमुत्तरमितितत्राह नचविनेति व्याहतिमेवदर्शय-
ति नदेवहीति योव्याघातादपिनबिभेतितंप्रत्याह नदेवचेति यदिहि कारणंविनाकार्य्यंस्यात्तदातदापरप्रत्ययोत्पादनार्थंसामग्रीप्रयोगो
व्याहतः सेयमत्रक्रियाव्याहतिः आदिशब्दात्मूकोहमितिवचनव्याहतिः स्वभावव्याहतिश्चसंगृह्यते उक्तंच मेनैवशंकाचेदनुमास्त्येव नो
चेच्छंकाततस्तरांव्याघातावधिराशंका तर्कःशंकावधिर्मत इति एवमपिपूर्वोक्तदोषोदुष्परिहरइत्याह मैवमिति ॥ ~ ॥

ननु किमिति कार्य्यस्य कारणेन व्याप्तिरसिद्धेति तत्राह सर्वकार्येति  ननु कतिपयव्यक्तिग्रहणेऽपि किमिति व्याप्त्यसिद्धिस्तत्राह
कतिपयेति  तथाहि विमतं लोहलेख्यं पार्थिवत्वादित्यत्र स्तंभादिकतिपयव्यक्तौ व्यभिचारादर्शनेऽपि न व्याप्तिनिश्चयः प्रशिथिलावय-
वत्वोपाधिहतत्वात् ननु तत्र वज्रमणौ व्यभिचारदर्शनादेव व्याप्त्यनिश्चयो न पुनः सर्वव्यक्त्यपरिज्ञानात् न चेह तथा व्यभिचारद-
शनमिति तत्राह  अदृष्टवज्रस्येति येन हि हीरमणिर्न दृष्टस्तेन तयोर्व्याप्त्यनध्यवसायः स सर्वव्यक्त्यदर्शननिमित्तः अध्यवसाये च

अस्यापि तर्कस्य व्याप्तिमूलत्वेन तदसिद्धावसिद्धेः तथाहि यत्कार्य्यं तत्कारणपूर्वकमिति व्याप्तौ सिद्धायां
यदकारणं तन्नित्यं स्यादिति प्रसंगप्रसरः सैवाद्यापि न सिद्धा सर्वकार्य्यकारणव्यक्तिग्रहणस्याशक्यत्वा
त् कतिपयव्यक्तिग्रहणे चादृष्टवज्रस्य पार्थिवत्वलोहलेख्यत्वयोरिव व्याप्तेरनिश्चयात्  नन्वेवंभूतोऽपि
व्यभिचारो यत्र न दृश्यते कतिपयव्यक्तिषु सहभावः प्रदृश्यते न चोपाधिर्निरूप्यते तत्र व्याप्तिर्निश्चीयते तत्रैवंस
त्यन्यत्र व्याप्तिग्रहणमन्यत्र चानुमितिरिति एवं च षंडकसुहृदाहृतमुग्धायाः पुत्रप्रार्थनमिवेति वाचस्पतेरुपा
लंभोऽप्यनवकाशः  व्याप्तेः सर्वत्रैकत्वात्तस्याश्च कतिपयव्यक्तिषु गृहीतत्वात् गृहीतव्याप्तिकलिंगसा ।। ९

भ्रांतिमात्रत्वादित्यर्थः कतिपयव्यक्तिग्रहणेऽपि व्याप्तिग्रहणोपायं नवीनमतावलंबनेन शंकते नन्वेवमिति तत्किं हिंसात्वानर्थसा
धनत्वयोरपि व्याप्तिरस्तु अस्ति चात्र रूपद्वयमिति तत्राह  न चोपाधिरिति  स्यादेतत् कतिपयव्यक्तिषु व्याप्तिग्रहणेऽनुमेयस्थले व्याप्ते
रग्रहादन्यत्र व्याप्तिरन्यत्रानुमानमिति स्यात् तथा च गृहीतापि व्याप्तिरनुमित्यसमर्थेति वाचस्पत्युक्तोपालंभप्रसंग इति तत्राह तत्रैवं सती
ति षंडकः षंडः तत्र यथा षंडः षंडकः पुत्रासमर्थः समर्थश्च तत्सुहृदित्येतावन्मात्रं दृष्टांतः तत्तु योगभाष्यकृदभिप्रायेण ननु तथापि
पि कथमन्यत्र व्याप्तिग्रहणमन्यत्रानुमानमिति तत्राह गृहीतेति ।।

स्यादेवंयदिव्यभिचारोनदृश्यतउपाधिश्चनदृश्यतेइत्ययमर्थःसिद्धान्तिनएवदुःसाध्यइतिपरिहरतिनैवमिति उभयत्रापीति व्यभिचा
रवदुपाधावपिसर्वादर्शनंयस्यकस्यचिद्धेत्वादेस्तुल्यत्वादित्यर्थः उपाधावधिकमप्याह उपाधेरिति एवंव्याप्तिसिद्धान्तकाप्रवृत्तिमु
क्त्वाधूमस्यापिव्यभिचारशंकायामकारणकत्वापत्त्याव्याघातोव्यापादयितुंनशक्यतअन्यस्मादप्युत्पत्तिसंभवेनविरोधासिद्धेरित्याह
किंचेति स्यादेतत् यद्यन्यस्मादपिधूमोत्पत्तिस्तर्हिपरिदृश्यमानधूमानामेकावान्तरजातीयतानस्यात् कार्यैकजात्यस्यकारणैकजाति
नियमादन्यथातदैकजात्यस्याकस्मिकत्वप्रसंगात् अतएवहितृणारणिमणिभ्योत्पद्यमानदहनेष्ववान्तरजातिभेदकल्पनमि

मर्थ्यादेवसंदिग्धसाध्यधर्मिणिव्यापकस्यापिप्रतीतिःसिद्धेतिचेन्नैवंव्यभिचारादर्शनस्योपाध्यनिरूप
णस्यचदुर्निरूपत्वात्सर्वादृष्टेश्चसंदेहादितिन्यायस्योभयत्रापितुल्यत्वात् उपाधेश्चव्याप्तिनिरूपणा
मंतरेणादुर्निरूपत्वस्यदर्शितत्वात् किंचविनापि धूमध्वजंधूमोन्यस्मादपिहेतोर्भविष्यतीति शंका
याः कः प्रतीकारः अथमन्यसेविभिन्नसामग्रीजन्यत्वेधूमस्यैकजातीयताप्रतीतिर्नस्यादिति नैवमिंद्रि
यत्वगादिजन्यविज्ञानस्येवतृणारणिमणिप्रभवस्याऽग्न्युष्मयोरिवचैकजातीयतोपपत्तेः॥ ॥

तितदेतदुद्भावयति अथमन्यसइति नियमएवायमसिद्ध इतिपरिहरति नैवमिति अस्तितावत्सर्वज्ञानेषुज्ञानैकजात्यंन।
चात्रानुगतमनतिप्रसंगिकारणंशक्यंनिरूपयितुमिंद्रियादीनांव्यावृत्तत्वात् आत्ममनःसन्निकर्षस्यचसुखादिसाधारण्या।
ननस्तत्रयथाकारणैकजात्याभावेपिकार्यैकजात्यमेवंतृणाद्युत्पन्नाग्नेरपि यथाच तत्रावान्तरजातिभेदकल्पनाऽयुक्तातथा।
ग्रेवस्यते नहिहाप्यनुगतकारणव्यतिरेकेणव्यावृत्तेभ्यएवकारणेभ्यः स्वभाववशात्सजातीयधूमाः समुत्पद्यन्तामितिभावः॥

ननु नह्यग्निप्रयोज्येषु धूमेष्वितरेभ्योव्यावृत्तः कश्चिद्विशेषोदृश्यतेनेति चेन्न तद्दर्शनस्य प्रतियोगिधूमादृश्यतयाप्युपपत्तेरिति शंकाया
निरंकुशत्वादिति व्याप्तिखंडनमुपसंहरति तस्मादिति इदानीं पक्षधर्मतालक्षणलिंगावयवं खंडयति पक्षधर्मत्वमपीति अनवस्
स्तानिराचष्टे यद्धर्मेति संदिग्धसाध्यधर्मा पक्ष इत्युक्ते विशेषणीभूतसाध्यधर्मस्यापि पक्षतास्यान्न चैतद्युक्तं साध्यस्य पक्षनिष्ठ
त्वाभावप्रसंगात् आत्माश्रयात् हेतोर्वैयधिकरण्यापाताच्च अतस्तद्धर्मित्वमात्रस्य पक्षत्वदर्शनाय धर्मीति विशेषणं अत्र यदि
संदिग्धत्वं साध्यस्य तत्कं प्रतीति विकल्प्य दूषयति किंवादीत्यादिना किंच संदेहः किमुपलक्षणं विशेषणं वा आद्ये कदाचित्संदि-

तस्मान्न व्याप्तिलक्षणं नापि तद्ग्राहकं प्रमाणमस्तीति सिद्धं पक्षधर्मत्वमपि दुर्निरूपं तथाहि कोयं पक्षो यद्धर्म
तापक्षधर्मता संदिग्धसाध्यधर्मा धर्मीति चेन्न किंवादिप्रतिवादिनोः संदेहः किंवा मध्यस्थानां नाद्यः निश्चितो हि
वादं कुरुत इति स्वीकारात् नापि द्वितीयस्तेषामपि दर्शनद्वयतत्त्ववेदिनां संदेहानुपपत्तेः किंचान्तरेणापि संशयं धूम
दर्शनमात्रादग्निमनुमिमानस्य संदेहविशेषितधर्मिणो हेतोरवृत्तेः पक्षधर्मत्वाभावादनुमानानुदयप्रसंगः एते
न ज्ञापनीयधर्मविशिष्टो धर्मी पक्ष इति प्रत्युक्तं स्वार्थानुमाने प्रज्ञापनाभावात् प्रमित्सितधर्मविशिष्टः पक्ष इत्यपि न अ
(प्रमित्सतोप्यनिष्टविषयेनुमानोदयदर्शनात्

ग्धे प्रत्यक्षेण निर्णीतेपि प्रवर्त्तमानानुमानस्य न सिद्धसाधनता स्यात् तथापि
पक्षत्वापातात् द्वितीये त्वनुमित्यनंतरमप्रवृत्तिः स्यात् धर्मिनाशवद्विशेषणनाशेन पक्षस्य नष्टत्वात् स्वार्थानुमानेऽव्याप्तिं चाह ॥
किंचेति एतेनेत्येतद्विवृणोति स्वार्थेति प्रज्ञापनमित्यत्र णिचा यदिदं प्रयोजककर्तृत्वमभिधीयते तेन तत्स्वार्थानुमानेस्ति तत्र पर
प्रतिबोधनाभावादित्यर्थः नहि प्रमित्सितधर्मविशिष्ट इत्येवास्तु तस्य स्वार्थानुमानेपि भावादिति तत्राह प्रमित्सितेति तथाप्यव्याप्तिः
प्रमातुमनिच्छतोपि दुर्गंधादिलिंगककुणपाद्यनुमानगतपक्षाव्याप्तेरित्यर्थः ॥ ॥

सर्वज्ञीयं लक्षणमुद्भाव्य दूषयति साध्येति अत्रापि साध्यपदेन पूर्वोक्तार्थविवक्षायां पूर्वोक्तदूषणानुषंग एवेत्यर्थः अर्थो
न्तरं शंकते अप्रमितत्वमिति एतदव्यापकमित्याह प्रमाणेति यत्र ह्येकस्मिन्नपि प्रमेये बहूनि प्रमाणानि वर्त्तन्त इति मतं तत्र प्रमि
तेप्यनुमानमिष्टमेव यथाहुः आगमेनानुमानेन ध्यानाभ्यासरसेन च त्रिधात्मनि प्रमाणानां संप्लवः स्वार्थं दृश्यत इति तत्रा
व्याप्तिरित्यर्थः ननु तत्रापि तत्तत्कालविशिष्टमेवानुमीयत इत्यप्रमितमेव तदिति तत्राह नचेति यदा हि कालो बहुभिरनुमानैरनु
मीयते न च तत्रैतदस्ति कालविशिष्टस्यैवाभावादित्यव्याप्तिरित्याह कालेति एवं पक्षं दूषयित्वा पक्षधर्मतां दूषयति अस्तु वेति

साध्यधर्मविशिष्टः पक्ष इत्यपि न साध्यपदेन संदिग्धत्वप्रज्ञापनीयत्वप्रमितत्वान्यतमविवक्षायामुक्तदोषा
नुषंगात् अप्रमितत्वं साध्यमिति चेन्न प्रमाणसंप्लववादिनो नैयायिकस्य प्रमितेप्यनुमानप्रवृत्तेरनुमितेप्यनुमान
प्रवृत्तेश्च नच तत्रापि तत्तत्कालविशिष्टतयानधिगतिः कालानुमाने तदभावात् अस्तु वायं कश्चित्पक्षस्तथापि
तद्धर्मता दुरधिगमा न यथा हि पक्षाश्रितत्वं पक्षधर्मत्वं चेत्तथा सति प्रमेयत्वहेतौ तन्न स्यात् प्रमेयत्वस्य प्रमावि
षयत्वलक्षणस्य ज्ञानज्ञेयाननतिरिक्तत्वाभ्युपगमेन तदाश्रितत्वायोगात् प्रमान्योन्याभाववत्त्वं प्रमेयत्वंततस्त
प्रमेयत्वं नाम प्रमाविषयत्वं विषयविषयिभावश्च स्वभावान्नातिरिक्त इति स्वज्ञानज्ञेयाश्रितत्वमुपपन्नमिति चेत् ॥
प्रमा च विषयश्च प्रमेयत्वं नातिरिक्तं तथा चादृष्टादिकं कस्यचित्प्रत्यक्षं प्रमेयत्वादित्यस्य हेतोरपक्षधर्मता स्यात् आत्मव्यति
रिक्तस्यार्थजातस्य प्रमाश्रयत्वानुपपत्तेरर्थस्यापि स्वाश्रयत्वानुपपत्तेरतः पक्षाश्रितत्वं पक्षधर्मत्वमित्यव्यापकमित्याह प्र
मेयत्वेति ननु प्रमेयत्वं नाम प्रमाव्यतिरिक्तत्वं तेन नोक्तदोषः न च प्रमायामव्याप्तिस्तस्या अपि यत्किंचित्प्रमाव्यतिरिक्तत्वादि
ति शंकते प्रमान्योन्येति तत्र किमेक एव प्रमान्योन्याभावः किं वानेक आद्य आह ॥

अन्योन्येति तदापिहि प्रमान्योन्याभावे प्रमेयत्वं नवर्त्तेत स्वस्मिन्स्ववृत्त्यभावादभिमताच स्ववृत्तिराप्रुष्मतः इतरथाऽभावप्रत्यक्ष
तायां विप्रतिपन्नं मीमांसकं प्रति प्रत्यक्षता कथं भवता साधनीया सर्वज्ञं वा कथं समर्थयेत ततोऽव्याप्तिरिति भावः अनेकत्वे दूष
णमाह अनेकत्व इति सर्वग्रहणेति तदाहि प्रमेयत्वादिति कोर्थः सर्वप्रमान्योन्याभाववत्त्वादिति न चैतदसर्वज्ञेन शक्यं ग्रहे-
णमित्यर्थः किंच यदैकां प्रमां पक्षीकृत्य प्रमेयत्वेन नित्यानुमेयस्वप्रकाशवादिनं प्रति प्रत्यक्षत्वं साध्यते तदा तेषां न सर्वे प्र
मान्योन्याभावाः सन्ति स्वान्योन्याभावाभावादित्यव्याप्तिः अन्यतमपक्षं दूषयति नद्वितीय इति तदा किमन्यतमशब्देन निय

तान्योन्याभावस्यैकत्वेन स्यतदवृत्तौ प्रमेयत्वहेतुना कस्यचित्प्रत्यक्षत्वानुमानं न स्यात् तस्यैवान्योन्याभावव-
त्त्वाभावादनेकत्वे चान्योन्याभावानां सर्वान्योन्याभाववत्त्वं प्रमेयशब्दप्रवृत्तिनिमित्तमुतान्यतमत्वं नाद्यः सर्वग्रह
णासंभवान्न द्वितीयोन्यतमशब्देन निर्द्धारितैकविशेषाज्ञानादितरप्रमेयशब्दप्रवृत्त्ययोगात् एकं निमित्तमंतरे-
णावहुष्वेकशब्दप्रवृत्तौ गोत्वादेरपलापप्रसंगात् व्याप्तिवलेन प्रवृत्तायाव्यापकसामान्यविषयायाः प्रतीतेर्विशेषपर्य
वसानाय व्याप्यस्य सामर्थ्यं पक्षधर्मतेति चेत्॥

तः कश्चिदभिधीयते अनियतो वा नियतपक्षेन दितरान्योन्याभावानां प्रमेयश
ब्दार्थत्वाभावात्तद्वतां प्रमेयत्वं न स्यात् न च स एव सर्वत्र प्रवर्त्तनामिति वाच्यं स्वस्मिन्स्वप्रतियोगिनि च वृत्त्यभावादित्यभिसंधिराह अन्यतम
शब्देनेति अथानियमेन कदाचित्कश्चित्प्रवृत्तिनिमित्तं तत्राह एकमिति दूषणांतरं चेदं न चान्योन्याभाववत्त्व मनुगतं जातिरितियु
क्तिमत् उपाधित्वेपि तत्र प्रमेयत्वावृत्तिप्रसंगः स्ववृत्त्यभावादुपाध्यंतरस्वीकारे चाननुगतिरित्यपि द्रष्टव्यं लक्षणांतरं शंकते व्याप्ति
वलेनेति द्विविधं हि हेतोः सामर्थ्यमेकं व्याप्तिवलेन वोधकत्वं यथा हि यद्धूमवत्तदग्निमदिति सामान्येनाग्निमत्त्वप्रतीतिजनकत्वं तत्कस्य हेतो

२
चि॰प्र॰
टी॰न॰
६४

त्वेनानंत्येनचव्याप्तेरशक्यग्रहत्वात् अपरं तु तामेव प्रतीतिं पर्वताग्निमत्त्वलक्षणविशेषेपर्यवसाययितुमनुगुणां निर्विशेषं न सामान्यमिति न्या
यात् तत्रेह पक्षधर्मत्वं विवक्षितमित्यर्थः दूषयति मैवमिति किं पक्षधर्मतया सामान्यविषयिण्येव प्रतीतिः पश्चाद्विशेषविषयिण्यपि क्रियत उत विशे
षविषयिण्येव प्रतीतिः स्यादित्यत इति विकल्प्याद्ये दूषणमाह प्रतीतेरिति शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात् ज्ञानस्य पुनर्जन्माभावाच्चे
ति भावः यदि विशेषविषयं तदुत्तरस्तु स्यादित्यनेन हि प्रमाणांतरमेव तज्ज्ञापकसामान्यप्रतीत्यनुपपत्तेः प्रतीतिव्यापकसामान्यानुपपत्तेर्वार्था
पत्तित्वादित्यनुमितित्वक्षतिरित्याह न द्वितीय इति पक्षधर्मताया विशेषप्रत्यापकत्वे बाधकांतरमाह किंचेति यत्र हि सामान्यतो दृष्टेन सा

मैवं विकल्पासहत्वात् किं प्रथमं सामान्यमात्रालंबना प्रतीतिर्या सामान्यसामर्थ्यात् पश्चाद्विशेषमवगाहत इति ब्रूषे किं वा विशेषवि
षयप्रतीतिरनंतरं जायत इति नाद्यः प्रतीतेर्विरम्य व्यापारापत्तेः न द्वितीयः प्रमाणांतरप्रसंगात् किंच पक्षधर्मता चेद्विशेषप्र
त्यायिका केवलव्यतिरेकी न हि निरवकाशः स्यात् शब्दः क्वचिदाश्रितो गुणत्वादित्यादिसामान्यतो दृष्टानुमानेषु हेतोः प
क्षधर्मताबलादेवाष्टद्रव्यातिरिक्तद्रव्याश्रितत्वस्यापि सिद्धेः बाधकांतराधीनमेव तदितराष्टद्रव्याश्रितत्वनिरसनमित्यु
भयवादिसंप्रतिपन्नतया तदितराश्रितत्वनिरासेऽपि केवलव्यतिरेकिणो निरवकाशत्वात् ॥ ॥ ॥ ॥

मान्यतः साध्यसिद्धौ केवलव्यतिरेकिणा विशेषसमर्पणं यथा तावच्छब्दः क्वचिदाश्रितो गुणत्वादिति किंचिदाश्रितत्वे सिद्धे के
वलव्यतिरेकिणाष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं साध्यते तन्न स्यात् सामान्यतो दृष्टहेतोः पक्षधर्मताबलादेव विशेषस्यापि सिद्धेरित्य
र्थः ननु यद्यप्यष्टद्रव्यव्यतिरिक्तद्रव्याश्रितत्वमपि सामान्यतोनुमानेनैव सिध्यति तथापि नानर्थकत्वं केवलव्यतिरेकिणः आ
काशव्यतिरिक्ताष्टद्रव्याश्रितत्वनिरसनार्थत्वात्तस्येति तत्राह बाधकांतरेति न तत्रापि केवलव्यतिरेकिणः कश्चिदुपयोगः श्रो
त्रं विशेषगुणग्राहकमिंद्रियत्वाच्चक्षुरादिवदिति विशेषगुणत्वे सिद्धे शब्दो न दिक्कालमनोगुणः प्रत्यक्षत्वाद्विशेषगुणत्वाच्च रूपादिवत्

एम॰
६४

वह्निशेषगुणाः प्रत्यक्षत्वे सत्यकारणगुणपूर्वकत्वात् अयावद्द्रव्यभावित्वादाश्रयादन्यत्रोपलब्धेश्च न चात्मगुणाः बाह्येन्द्रियवेद्यत्वा-
दित्यादिबाधकान्तरनिबंधनत्वात् इत्यर्थः पक्षधर्मताखंडनेन महाविद्याजीवनमपि खंडितं वेदितव्यं केवलान्वयिनि व्यापके प्रवर्त्त-
मानो हेतुः पक्षे व्यापकप्रतीत्यपर्य्यवसानबलादन्वयव्यतिरेकि साध्यविशेषं वा यमभिमतं साधयन्ति महाविद्येत्युच्यते तथा च व्यापक-
प्रतीत्यपर्य्यवसानानिरुक्तौ तासामप्यनिरुक्तेः इत्यसारं चेदं वादीन्द्रदावानलेन महाविद्याविपिनमिति नास्माभिस्तद्भस्मीभावाय सं-
रभ्यते न चापक्षधर्मत्वसामर्थ्यात्सर्वज्ञेश्वरसाधकमीश्वरानुमितौ ना च ज्वरभारातुरं वपुः व्याप्तिपक्षधर्मताखंडनस्य प्रकृतोप-

तदेवं न व्याप्तिर्नापि पक्षधर्मता शक्यनिरूपणेति व्याप्तिपक्षधर्मतावल्लिङ्गं तत्परामर्शोऽनुमानमिति लक्ष-
णं न सिद्ध्यतीति सिद्धं शाब्दव्युत्पत्तिशून्यस्य स्मृतिकरणे काप्रमितिरनुमितिस्तत्करणमनुमानमित्यपि न
लक्षणं व्युत्पन्नस्यानुमितौ तत्करणे चाव्याप्तेः तादृशप्रमितित्वं प्रमात्वावान्तरजात्यधिकरणज्ञानम-
॥ नुमितिस्तत्करणमनुमानमिति चेन्न प्रमात्वजातेः पुरस्तादेव निरस्तत्वात्॥

मोगं दर्शयितुमुपसंहरति तदेवमिति तर्कीत्यानुमानलक्षणान्तरं शंकते शाब्देति अनुमितिकरणमनुमानं का पुनरनु-
मितिरित्यत लक्षणमाह शाब्दव्युत्पत्तीति प्रत्यक्षव्यवच्छेदाय स्मृतिकरणे इत्युक्तं शाब्दप्रमितेरपि पदार्थस्मृतिकरणा-
त्वमस्तीति तद्व्यवच्छेदाय शाब्दव्युत्पत्तिशून्यस्येत्युक्तं उभयोरप्यव्याप्तिमाह व्युत्पन्नस्येति शाब्दव्युत्पत्तिमत इत्यर्थः व्युत्पन्नगत-
योरपि संग्रहार्थं विशेषं शंकते तादृशेति पूर्वोक्तप्रमितिवर्त्तिनी प्रमात्वावान्तरजातिरनुमितित्वं तद्योगि ज्ञानमनुमितिरस्ति चेदं व्युत्पन्ना-
नानुमितावपीत्यर्थः अत्र च प्रत्यक्षभ्रमसंशयव्यवच्छेदाय प्रमात्वावान्तरजातिग्रहणं प्रत्यक्षागमादिव्यवच्छेदाय तादृशप्रमितौ इत्युक्तं

लक्षणमनुमितित्वस्यापीति नह्यनुमितित्वं तावज्जातिः अयमग्निमान्पर्वत इति ज्ञाने अयमंशे प्रत्यक्षत्वेन संकरप्रसंगात् नाप्युपाधिः लक्षणा-
विनोपाधीनां निरसनादिति वर्णितानुमानलक्षणखंडनं प्रशस्तपाददिङ्नागशबरस्वामिसंमतलक्षणोक्तिं दर्शयति एतेनेत्यादिना अनुमेयेन
पक्षे सर्वस्मिन्संबद्धं पक्षधर्मतावदित्यर्थः तदन्विते अनुमेयधर्मवति पदार्थान्तरे सर्वस्मिन्नेकदेशे वा प्रसिद्धं सपक्षसदिति यावत् चका-
रस्तु पक्षधर्मत्वेनेदं रूपं समुच्चिनोति तथा तदभावे साध्याभावव- ति नास्त्येव सर्वथा व्यावृत्तं विपक्षाद्व्यावृत्तमित्यर्थः अत्रापि चः पक्षधर्मत्वेन
त्समुच्चिनोति तत्सपक्षे सत्त्वं न केवलव्यतिरेकाभावापातात् एवं पूर्वोपि केवलान्वयिलाभात् एवंविधं यल्लिंगं तदनुमापकमिति काश्यपः क-
णादोब्रवीदित्युत्तरश्लोकस्थेनान्वयः विपरीतमतो यत्स्यादेकेन वा द्वयेन वा विरुद्धासिद्धसंदिग्धमलिंगं काश्यपोब्रवीदिति ह्युत्तरश्लोकः तथा

एतेनानुमेयेन संबद्धं प्रसिद्धं च तदन्विते तदभावे च नास्त्येव तल्लिंगमनुमापकम् २७ अनुमानं त्रिरूपाल्लिंगतोर्थदृ-
क् ज्ञातसंबंधस्यैकदेशदर्शनादेकदेशांतरे बुद्धिरित्येवमादीनि वैशेषिकवैभाषिकजैमिनीयलक्षणान्यपि प्रत्यु-
क्तानि पक्षधर्मत्वसपक्षसत्त्वव्याप्यव्यापकसंबंधानां पुरैव निरस्तत्वात् तदेवं नानुमानलक्षणमपि निर्वोढुं शक्यमिति

त्रिरूपात्पक्षधर्मतादिरूपत्रयवतः समासस्तु बहुव्रीहिः यदर्थदृगर्थदर्शनं तदनुमानमिति वैभाषिकाणां सूत्रकृतो दिङ्नागस्य सूत्रं तथा ज्ञात-
संबंधस्य ज्ञाताविनाभावस्य पुंसः एकदेशदर्शनाद्धूमविशिष्टांशदर्शनादेकदेशांतरे अग्निविशिष्टांशे बुद्धिरनुमानमेकस्यैव खलु पर्वत-
स्यैकदेशदर्शने नैकदेशोनुमीयते तथा चाहुर्वार्तिककृतः सएव चोभयात्मायं गम्यो गमकएव च असिद्धेनैकदेशेन गम्यः सिद्धेन बो-
धक इति यद्यपि प्रमाता ज्ञातसंबंध एकदेश्यथवोच्यते कर्मधारयपक्षे वा संबंधिन्येकदेशता इयं वा ज्ञातसंबंधमुपलब्धं परस्परं तस्यैक-
देशशब्दाभ्यामुच्यते समुदायिनाविति वार्तिककारैर्बहुविधं भाष्यं योजितं तथापि विस्तरभयादेकैव रीतिरत्र प्रदर्शिता एतेनेत्यतिदिष्टांशं विशदय-
ति पक्षेति अत्र हि त्रैरूप्यमुखेनाद्यलक्षणे प्रवृत्ते तृतीयमपि व्याप्तिपुरस्कारेण ज्ञातसंबंध इत्यत्र व्याप्तेर्विवक्षितत्वात् न त्रैरूप्यं व्याप्तिश्चेति द्वयं प्रवृ-

क्षविपक्षयोस्तत्सदसत्त्वयोश्च खंडितप्रायत्वादिति भावः यद्यप्यनुमानमात्रखंडनेन परार्थानुमानमपि खंडितमेव तथाप्यधिकदूषणावि
वक्षया अखंडितवदतिदिशति एतेनेति स्वार्थानुमानोपजीवनं दर्शयितुं परार्थानुमानं दर्शयति तथाहीति परोपदेशापेक्षमनुमानं तदि
त्यर्थः तत्रोपजीवनदर्शनपूर्वकं दूषणमतिदिशन्प्रतिज्ञां खंडयति श्लोकेन पूर्वेति तद्वचनं पक्षवचनं प्रतिज्ञेति विपश्चिता कथं वाच्यं तत्क
थमपीत्यर्थः इदानीमधिकदूषणं दर्शयितुं प्रतिज्ञालक्षणानि विकल्पयति किं पक्षेत्यादिना निगमनव्यवच्छेदाय द्वितीयतृतीययोर्विशेषणाद्

एतेन परार्थानुमानमपि प्रत्युक्तं स्वार्थानुमानमुपजीव्य तत्प्रवृत्तेस्तथाहि प्रतिज्ञाहेतूदाहरणोपनयनिगमनरू
पपंचावयवात्मकं तत्र तावत्पक्षवचनं प्रतिज्ञा इत्यलक्षणं पूर्वोदितेन न्यायेन पक्षस्यैव निरूपणे कथं तद्वचनं वाच्यं
प्रतिज्ञेति विपश्चिता २८ किं पक्षप्रतिपादकवचनमात्रं प्रतिज्ञा प्रतिपिपादयिषया वा तद्वचनमुत हेत्वाकांक्षा
जनकं किं वा साध्यधर्मविशिष्टधर्मिप्रतिपादकं तदेव हेत्वाकांक्षाजनकत्वविशिष्टं निगमनान्यत्वविशिष्टं वा ना
द्यः अयं पक्ष इत्यादेरपि वचनस्य प्रतिज्ञात्वप्रसंगात् पक्षलक्ष—णावचनस्यापि तत्त्वप्रसक्तेश्च अत एव न द्वितीयः प्रतिपा
दनेच्छया पक्षवचनत्वस्य तत्रापि भावात् न तृतीयः कस्मादयं पक्ष इत्यादेरपि तत्त्वप्रसंगात् नापि चतुर्थः निगमनस्यापि तत्त्व
वप्रसंगात् नापि पंचमः कस्मादयं साध्यधर्मवानिति वचनस्यापि तथात्वापातात् अप्रश्नरूपं तथाभूतवचनं विवक्षितमिति

यं अयं पक्ष इत्यादेरपीति इदमपि वचनं पक्षप्रतिपादकमित्यर्थः पक्षस्य यल्लक्षणावचनं तस्मिन्नप्यतिव्याप्तिरित्याह पक्षलक्षणेति अत
एवेत्यस्यैव विवरणं प्रतिपादनेति कस्मादिति तदपि हेत्वाकांक्षाजनकमित्यर्थः निगमनस्यापीति तत्रापि तस्मादयमग्निमानिति सा
ध्यविशिष्टधर्मिप्रतिपादनमस्तीत्यर्थः ननु यद्यपि कस्मादयं साध्यवानिति वचनस्य हेत्वाकांक्षाजनकत्वे सति साध्यविशिष्टध
र्मिप्रतिपादकत्वमस्ति तथापि प्रश्नरूपमिदमप्रश्नरूपमप्यपेक्षितं लक्षणेऽतो नास्त्यतिव्याप्तिरिति शंकते अप्रश्नरूपमिति॥ ९

तथाप्याक्षेपवचनेनेति व्याप्तिरित्याह नाक्षेपेति ननु तस्य कथं हेत्वाकांक्षाजनकत्वमिति तत्राह प्रश्नंमन्वानंप्रतीति नचाभ्रां
तंप्रतीति विशेषणीयं भ्रांतं प्रति प्रयुज्यमानप्रतिज्ञाया मव्याप्तेः लक्षणवचनइति तत्रापि हेत्वाकांक्षास्ति लक्षणवचनमात्रादर्थासि
द्धेरित्यर्थः निगमनान्यत्वविशिष्टमिति पक्षंदूषयति नापिषष्ठइति परस्पराश्रयमेवाह उपनयानंतरमिति द्वितीयमप्यवयवंखं
डयति नापिहेतोरिति लिंगवचनेहेतुरिति लक्षणवचनस्य लिंगमस्तीत्यादिवचनेति व्याप्तिमुक्त्वा द्वितीये दूषणमाह अन्यतर

नाक्षेपवचनस्यापि प्रश्नंमन्वानंप्रतितद्रूपत्वात् लक्षणवचनेपिव्यभिचाराच्च नापिषष्ठः परस्पराश्रयप्रसंगात्
उपनयानंतरंप्रतिज्ञावचनंनिगमनंसहेतुकंप्रतिज्ञावचनमिति वालक्षणंतथाचप्रतिज्ञासिद्धौनिगमनसि
द्धिस्तत्सिद्धौचतदन्यत्वविशेषितप्रतिज्ञासिद्धिरितिकथंनपरस्पराश्रयस्तस्मात्प्रतिज्ञालक्षणानिरुक्तिः नापिहे
तोस्तथाहि किंलिंगवचनंहेतुरुततृतीयापंचम्योरन्यतरविभक्त्यंतसाधनत्वव्यापकंलिंगवचनंवानाद्योस्तिलिंगमयं
धूम इत्यादेरपिवचनस्यहेतुत्वप्रसंगात् नापिद्वितीय अन्यतरशब्देनैकस्यद्वयोर्वाभिधानेन लक्षणस्याव्या
प्तेर्नतृतीयः साधनशब्देन हेतुविवक्षायामात्माश्रयात् तृतीयापंचम्योरन्यतरांतार्थाभिधानेपूर्वोक्तदोषापत्तेः
लिंगविवक्षायांत्वेनह्लिंगमस्तिवास्यलिंगमित्यादेरपिवचनस्यतथात्वापातात् नाप्युदाहरणलक्षणंदृष्टांतानि
रुक्तौतद्वचनमुदाहरणमितिवक्तुमयुक्तत्वात्तथाहि किंलौकिकपरीक्षकाणांयत्रबुद्धिसाम्यंसदृष्टांतः॥ २॥

शब्देनेति साधनत्वव्यापकंलिंगवचनमिति भासर्वज्ञाभिमततृतीयलक्षणेसाधनशब्देनहेतुर्विवक्ष्यतेतृतीयापंचम्योरन्यतरांतार्थत्वंवा
लिंगत्वंवाआद्येदूषणमाह साधनेति द्वितीयेप्राह तृतीयेति तृतीयेप्राह लिंगेति तृतीयमप्यवयवंखंडयति नाप्युदाहरणलक्षणमिति तत्रस
म्यग्दृष्टांताभिधानमुदाहरणमिति भूषणप्रभृतयोवभाषिरेतत्रदृष्टांतानिरुक्तौतद्वचनमपिदुरुक्तमिति दृष्टांतलक्षणंविकल्प्यदूषयति

निश्चितेति निश्चिते साध्यसाधने यस्मिन्स दृष्टांत इत्यर्थः ननु साध्यसाधनशब्देन व्याप्यव्यापकावभिप्रेतौ तथा च भावतदभावावपि व्याप्यव्यापकभूताविति वैधर्म्यदृष्टांतोपि संगृहीत इति शंकते साध्येति शक्यमत्र विवक्षितुं भावविवक्षायां वैधर्म्योदाहरणाव्याप्तिः अभावविवक्षायां साधर्म्योदाहरणाव्याप्तिरुभयविवक्षायामुभयाव्याप्तिरिति तथापि स्फुटमिदमिति दूषणांतरमाह निश्चितत्वेति वाद्यपेक्षया निश्चितसाध्यसाधनत्वे न दृष्टांतः पक्षस्यापि दृष्टांतत्वप्रसंगात् निश्चितो हि वादं कुरुत इति न्यायेन वादिनस्तत्रापि निश्चितसाध्यवत्त्वादित्याह ना

किं वा निश्चितसाध्यसाधनवत्त्वमाद्यः स्वर्गापूर्वदेवतादीनां लौकिकासंमतानामपि दृष्टांतत्वात् नापि द्वितीयो निश्चितसाध्यसाधनाभाववत्त्वो वैधर्म्यदृष्टांतत्वाभावप्रसंगात् साध्यसाधनशब्दाभ्यां तदभावयोरपि संग्रहाददोष इति चेत्तन्निश्चितत्वानि रुक्तेस्तथा हि किं वादिनो निश्चयउत प्रतिवादिनः किं वा सर्वेषां नाद्यः साध्यधर्मिणोपि दृष्टांतत्वप्रसंगात् वादिनस्त त्र निश्चयसद्भावात् न द्वितीयो विकल्पासहत्वात् किं निश्चयमात्रं किं वानुमितिकालविशेषितो निश्चयः आद्ये कालांतरे निश्चितसाध्यसाधनवतोपि कालांतरेऽन्यथाभूतस्य दृष्टांतत्वप्रसंगात् न द्वितीयः कालस्य निश्चितसाध्यसाधनवतोपि दृष्टांतत्वाभावप्रसंगात्काले कालविशेषितनिश्चयस्याभावात् नापि तृतीयः सर्वनिर्णयस्यासर्वज्ञेन निश्चेतुमशक्यत्वात् योयदा निश्चितसाध्यसाधनवान्स तदा दृष्टांत इत्ययुक्तं यदा तदेति कालाभिधानेकालेन तदभावाद्यत्तच्छब्देन चानुगतरूपस्य तद्धेतोवाभिधानेन तयोरेव प्रत्येकमदृष्टांतत्वापातात् ॥ आद्यः साध्यधर्मिणोपीति प्रतिवाद्यपेक्षयानिश्चितसाध्यवत्त्वमिति द्वितीयपक्षे किं यदाकदाचिन्निश्चितसाध्यवत्त्वमुत कालविशेषकथासमपादाविति विकल्प्य प्रथमं दूषयति कालांतर इति तथा सति कथाप्रवृत्तिसमये विप्रतिपन्नसाध्यस्यापि दृष्टांतता स्यात् यदाकदाचित्तत्रापि निश्चयसंभवादित्यर्थः द्वितीये तु कालस्य दृष्टांतत्वं न स्यात् न हि कालः कालविशेषे निश्चितसाध्यः कालस्य कालांतराभावादित्याह न द्वितीय इति सर्वनिश्चयपक्षमसंभवेन दूषयित्वा पक्षांतरं शंकते योयदेति यो यदेत्यादिलक्षणे योयदा तदेत्यंशं दूषयित्वा यः स इत्यंशं दूषयति यत्तच्छब्देनेति अत्र किं यत्तच्छब्देन प्रत्येकं व्यक्तयः साध्यसाधनवंतोभिधीयंते

२ चि॰प्र॰ दी॰न॰ ६७

विलक्षण उक्तरूपवतः कस्यचित् आद्येऽनुगतलक्षणाभावः द्वितीये रूपिता तृतीये रूपयोर्दृष्टांतत्वं नस्यादित्यर्थः दृष्टांतखं
डनस्योदाहरणखंडन शेषतामाह एवमिति चतुर्थमवयवं खंडयति नापीति दृष्टांतोपमानेनेति तथाचायमिति महानसा
द्युपमानेनेत्यर्थः नापिद्वितीय इति द्विविधो ह्युपनयः साधर्म्यवैधर्म्यभेदात्तथा चायं धूमवानिति साधर्म्योपनयः नतथायम
धूमवानिति वैधर्म्योपनयस्तत्र वैधर्म्योपनये दृष्टांतोपमानंनास्तीत्यव्याप्तिरित्यर्थः अथोपमानशब्देन वैधर्म्यमपि विवक्षि

एवं दृष्टांतानिरुक्तौ तत्प्रतिपादकं वचनमुदाहरणमित्यप्युक्तं नाप्युपनयलक्षणं तथाहि किं दृष्टां।
तानंतरं हेतुवचनमुपनयः किंवा दृष्टांते प्रसिद्धाविनाभावस्य साधनस्य दृष्टांतोपमानेन पक्षे व्याप्तिर्व्यापकं
वचनं व्याप्तस्य पक्षधर्मताप्रतिपादकं वा नाद्यः दृष्टांतवचनानंतरं धूमवत्वादित्यपि वचनस्योपनयत्वप्रसंगात् ना।
पि द्वितीयो दृष्टांतवैधर्म्येण न तथा चायमधूमवानित्यादिवचनस्यानुपनयत्वप्रसंगात् उपमानशब्देन च साधर्म्यवैध
र्म्ययोरुभयोर्विवक्षितत्वेन्यूनरवचनस्यानुपनयत्वप्रसंगः दृष्टांताविनाभावलक्षणयोः पुरस्तान्निरस्तत्वाच्च ना
पि तृतीयः व्याप्तो धूमः पक्षेस्तीति वचनस्यापि तथात्वप्रसंगात् व्याप्तिपक्षधर्मतयोश्च पुरैव निरासात् नापि निगम
नलक्षणं तत्किमुपनयानंतरं प्रतिज्ञावचनमुत सहेतुकप्रतिज्ञावचनं नाद्यः उपनयानंतरमग्निमान्पर्वत इत्येता
वद्वचनस्यापि निगमनत्वप्रसंगात् नापि द्वितीयः व्युत्क्रमोदितस्यापि तथात्वापातात् प्रतिज्ञाहेतोश्च पुरैव निरासा

तंनदैकैका व्याप्तिरित्याह उपमानशब्देनेति दूषणांतरमाह दृष्टांतेनेति व्याप्तो धूमइति व्याप्तस्य पक्षधर्मतां तदपि वचनं प्रतिपादयेदित्यर्थः दूष।
णांतरमाह व्याप्तीति पंचमावयवं खंडयति नापीत्यादिना अग्निमान्पर्वत इत्येतावदिति तस्मादित्येतदंशविधुरतयेत्यर्थः व्युत्क्रमेति यदाहेतु
पनयानंतरमग्निमानयं तस्मादिति व्युत्क्रमेणोच्यते तत्रापि प्रसक्तिः न च तदपि निगमनमेव विपर्यस्तवचनतयाऽप्राप्तकालत्वप्रसंगादित्यर्थः

राम॰ ६७

नदेवं दंडकसूत्रस्यावयवानां लक्षणानि खंडितानि इदानीं यत्तेषां पंचत्वं नैराद्रियते सत्त्वपरमो न्यायोपदिष्टं प्रतिपन्नं प्रति पंचावयवं वाक्य मिति वदद्भिः सोप्ययुक्तः प्रमाणाभावात् प्रयोजनस्य च द्वाभ्यामेव शक्यसंपादनत्वादित्याह किंचेत्यादिना व्याप्तिपक्षधर्मत्वयोरनुमानांग योरुदाहृतेरुदाहरणात् उपनयाच्च सिद्धेः पंचावयवता त्रित्वस्यापीदमुपलक्षणं मुधा वृथा निष्प्रयोजना एतदेव विवृणोति पंचेतिन केवलमनुपयोगः निग्रहस्थानं च स्यात् हेतूदाहरणाभ्यामधिकमधिकमिति हि सूत्रं हेतूदाहरणग्रहणस्य चोपलक्षणत्वादुपयुक्तापुन रुक्तत्वे न कार्याभिधानमिति सूत्रार्थः संपद्यते इतरथा निग्रहांतरसंकरप्रसंगात् न हि द्वाभ्यां सिद्धस्यैवान्येभ्योपि साधनेधिकं प्रसज्य

किंच अनुमानांगयोः सिद्धे व्याप्तिपक्षगतत्वयो रुदाहृतेरुपनयात् पंचावयवता मुधा ॥ २९ ॥ पंचावयववाक्यमपि न प्रयोज नवदवश्यमिति पश्यामः साधनानुपयुक्तवचनस्याधिकनिग्रहत्वात् तथा हि वादिप्रतिवादिनोः पक्षप्रतिपक्षसमयबंधस्तोका रसमनंतरं प्रतिवादिनः किमत्र प्रमाणमिति प्रमाण एव जिज्ञासा यावदंगविशिष्टं च प्रमाणं तावदेव वक्तव्यं अंगं च द्वयमेव व्याप्तिः प क्षधर्मता चेति तच्चोभयमुदाहरणोपनयाभ्यामेवाभिहितमिति किमपरमवशिष्यते यदर्थमुपादीयेत ननु पक्षधर्मत्वं सपक्षस

त इत्याह अधिकनिग्रहत्वादिति एतदेवाकांक्षाक्रमेणोपयुक्तांगजातं विवेचयन् विशदयति तथा हीत्यादिना समयबंधो नामात्र पक्षा स्तोवर्जनीयः एतावंति च निग्रहस्थानानि उद्भावनीयानीत्यादिरूपः एतेनेत्यग्रपाठे त्वयदाह लीलावतीकारः अन्यतंत्रबुभुत्सितसाध्यप्र तिपादनोपयोगित्वादित्यादि भंगीसहस्रेणापि साधनानुपयुक्तवचनस्याधिकनिग्रहतायाः दुष्परिहरत्वादिति यच्च न्यायवाचस्पतिनाप्युक्तमनि त्यशब्दं बुभुत्समानायेत्यादि तदप्येतेनैव परिहृतं पक्षप्रतिपक्षपरिग्रहबलेनैव प्रतिज्ञार्थस्य बुभुत्सितत्वलब्धत्वादिति अधिकोपयो गं निगमनस्य दर्शयति पूर्ववादीत्यादिना पक्षे व्याप्यवर्त्तनं पक्षधर्मत्वं संप्रतिपन्नसाध्यस्थले सपक्षस्तत्र सर्वस्मिन्नेकदेशे वा हेतोर्दृ

साध्यात्यंताभाववान्विपक्षः ततः सर्वस्माद्व्यावर्त्तनं विपक्षाद्व्यावृत्तिस्तथाबाधितविषयत्वं विषयशब्देन हेतोर्विषयः साध्यमभिधीयते तस्मिन्ना नांतरेणाबाधिते प्रवर्त्तमानत्वं तथासन्विद्यमानः प्रतिपक्षो यस्य सोसत्प्रतिपक्षस्तद्भावस्तत्वमसत्प्रतिपक्षत्वमित्येतानि पंच रूपाणि हेतौ वक्तव्या नीत्यर्थः किमियं राजाज्ञा नेत्याह अन्यथेति तथाहि पक्षधर्मत्वाभावे निश्चितपक्षवृत्तिरूपासिद्धिप्रसक्तिः सपक्षे सत्वाभावे पक्षविपक्षयो रेववर्त्तमानत्वरूपविरुद्धत्वप्रसक्तिः विपक्षाद्व्यावृत्त्यभावे पक्षत्रयवृत्तित्वलक्षणसाधारणानैकांतिकतास्यात् एवमितरयोरप्यभावे प्रक रणसमकालातीतकालत्वयोः प्रसक्तिरित्यर्थः ननूदाहरणोपनयाभ्यां व्याप्तिपक्षधर्मत्वयोरुपपादनादपि भवत्येवासिद्ध्यादीनां निरासः व्याप्त

विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति पंचरूपाणि हेतोरवश्यं वक्तव्यानि अन्यथाऽसिद्धविरुद्धानैकांतिका नध्यवसितकालात्ययापदिष्टप्रकरणसमानामनिरासे हेतोरसाधकत्वप्रसंगात् तत्र यद्यपि व्याप्तिपक्षधर्मताप्रदर्शनेन रूपत्रयोपपाद नादसिद्धविरुद्धानैकांतिकानि परिहृतानि तथापि बाधितविषयत्वसत्प्रतिपक्षत्वयोरविशिष्टयोर्निरासे कालात्ययापदिष्टप्रकरणसम योर्हेत्वाभासयोः परिहाराय निगमनमपेक्षणीयमेव स च तस्मादयमग्निमानेव न पुनस्तस्मादन्यस्माद्धूनाग्निमानयमिति निगमनेना बाधोन्यन इति चेन्मैवं पूर्वमेव हि सिद्धत्वादसंभवित्वाच्च तथाहि साधनसद्भावे साध्यसद्भावनियमलक्षणान्वयव्याप्तेः साध्याभावे

साधनाभावत्व॥

त्वपक्षधर्मत्वाभ्यामप्रतीतस्यैवासिद्ध्यादिमत्वाद्व्याप्तिनिर्णयेन च विरुद्धत्वादीनां निरासादिति तत्राह तत्र यद्यपीति तत्रोभयविधोदाहरणेनोभयविधव्याप्तेर्दर्शनाद्धि नीयतनीयरूपयोः सिद्धिरुपनयनेन च पक्षधर्मतासिद्धिरिति विभागः अनैकांतिकग्रहणमन ध्यवसितस्याप्युपलक्षणं तस्याप्यव्यभिचारविरहरूपत्वात्सपक्षवृत्तिविपक्षव्यावृत्तिनिर्णये च तस्याप्यभावादिति ननु निगमनवचनादपि कथं तयोर्निरासस्तत्राह स चेति तस्मादग्निमानेवेति हि निगमनरूपं तत्र सिद्धे सत्यारंभो निर्णयार्थ इति न्यायेन तस्मादेवाग्निमान्नान्यस्मादिति

वम·
६८

मानेवेतिनपुनरन्यस्मात्तदनुमानमपीति द्विविधोपिसत्प्रतिपक्षोनिरस्तः द्विविधोहिसत्प्रतिपक्षः स्वात्मनापरात्मनाचेति आद्यो
यथाऽनित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् एवंनित्यः शब्दइत्यत्रापिद्वितीयस्तुनित्यंमनोनिरवयवद्रव्यत्वादाकाशवत् अ
नित्यंमनोमूर्त्तत्वाद्घटवदितोदमेवविरुद्धाव्यभिचारीत्यभिधीयते तथाप्रमानेवेत्यनुमानत्वनिषेधाद्द्वाधोपिविध्वस्तइत्यव
श्यमपेक्षणीयंनिगमनमित्यर्थः एवंसमर्थितंनिगमनोपयोगंदूषयति मेवमिति अन्यतःसिद्धिंविवृणोति तथाहीत्यादिना।
ननुयदिकालात्ययापदिष्टस्यानैकांतिकेंतर्भावस्यात्तदानन्निरसनेनिरासः सएवतुकथमितितत्राह बाधितइति सद्धेतुनि

श्चयाव्यतिरेकव्याप्तेश्चोदाहरणेनैवप्रदर्शितत्वेनकालात्ययापदिष्टस्यानैकांतिकेंतर्भूतस्यक्तत एव
परिहारः बाधितेपक्षेवर्त्तमानोहेतुर्हिकालात्ययापदिष्टः बाधश्चपक्षनिष्ठसाध्याभावनिश्चयएवेतिनिश्चि
तसाध्याभाववद्वृत्तिः कथमनैकांतिकोनस्यात् ननुसाध्याभावनिश्चयोबाधः सचपृथग्दूषणमनैकांतात्
निश्चितेसाध्याभावेतद्वृत्तिवर्त्तमानोनैकांतिकः ततश्चपुरस्स्फूर्त्तिकबाधेनैवोपहतोहेतुःकथमनैकांतिकेनपु

((तरूपहत्येततनहिमृतोमार्यतइतिचे

नरुस्थापयोत्वादितीत्यासाधितमाणियाद्दः(?)

रासायबाधितग्रहणं ततः किमितितत्राह बाधश्चेति पक्षत्रयवृत्तिर्ह्यनैकांति
कःयथानित्यःशब्दःप्रमेयत्वादितितदिहाप्यनुक्तःपदार्थत्वादित्यत्रप्रत्यक्षसिद्धोऽस्मितया विपक्षतामापन्नेघ्रोपक्षेसपक्षेचघटादि
षुवर्त्तमानःकथमनैकांतिकान्तर्भूतस्यात्कथनतत्रांतन्निवर्त्तकोदाहरणोनततिवृत्तिः कथंतमांचतन्निवर्त्तकतया निगमनस्यसा
र्थक्यमितिभावः बाधस्यानैकांतिकाद्बहिर्भावमाहपूर्ववादीनन्विति बाधितेपक्षेवर्त्तमानोहेतुःकालात्ययापदिष्टस्तथाचबाधमुपजीव्य
नहिपक्षत्वनिर्णयानंतरंअनैकांतिकत्वप्रतीतिःतथाचोपजीव्यमेवनिग्रहस्थानंप्रथमोद्भाव्यत्वात् नचरमोद्भाव्यंइतरयानिग्रहस्थानानां

तदेतदतिप्रसंगेन दूषयति हंतैवमिति तत्साध्याभावज्ञापनं नाम विपक्षत्वज्ञापनमेव न थाचवाधोपि दूषणमिति किमुक्तं भवति विप
क्षग्राहकं प्रमाणमपि भवति दूषणमिति तथा च प्रसिद्धानैकान्तिकस्थले विपक्षग्राहकं प्रमाणमेव किमिति निग्रहस्थानं न स्यात् स्थितिर्हि न स्यापि
तेनोपजीव्यत्वमिति भावः ननु यद्यपि बाधे विपक्षत्वज्ञानमप्यस्ति तथापि न तेनाकारेण दूषणत्वं येनातिप्रसक्तिः स्यात् किं त्वनुमितिस्थले
तदभावबोधकतया तदेव ह्यनुमानप्रयोजनं यदनुमित्सार्थसिद्धिस्तथा च तमेवापहरतो नागवैकल्यात्तर्भावेन दूषणत्वमपि तु शिरश्छेदनमि
वस्थानं श्रेणोति तत्राह व्याप्तिपक्षधर्मतेति अयं भावः ननाव ह्याथ सहस्रेणापि स्वाभाविव्याप्तिकाविनाभाववति हेतौ जीवति साध्यम
पहर्तुं शक्यं स्वभावव्याप्त्यपहारे पदार्थत्वादिति हेतोरेवापहारप्रसंगात् तस्मादनेन बाधेनापि निरुपाधिकसंबंधाभावस्यैव बोधनीयस्त

हंतैवं बाधवदेव विपक्षग्राहकप्रमाणमपि पृथक् दूषणं स्यान्नमिते विपक्षेतदुपजी
॥ विनस्तद्धेतेरनैकान्तिकत्वांगीकारात् व्याप्तिपक्षधर्मताप्रहारेणैव च सर्वदूषणजातस्य
दूषणता अन्यथासिद्धसाधनताया अपि पृथग्दूषणत्वप्रसंगात् ॥ ॥

मर्थमभिप्रेत्याहुः बाधेनत्वोपाधिरुन्नीयते अन्यथा चेति न कश्चिद्विशेष इति तथा च व्याप्त्यपहारेण दूषणत्वात्तन्नानैकान्तिकाद्भेदः न
चासिद्धावंतर्भावः व्याप्त्यपरिहारलिंगत्वाभावात्तस्य व्याप्त्यपरिहाररूपोह्यसौ पेयमसिद्धिः उक्तं च लीलावतीकारेण सर्वोपसंहार
प्रवृत्तत्वाद्व्याप्त्यं तरनियमस्यानुमानसहायत्वात्तद्दृशप्रवृत्तेर्विपरीतपरिच्छेदस्य बाधस्य व्यभिचारत्वात्स च व्यभिचारो बहिरंतश्चेति
सव्यभिचारदेहांतर्भूतत्वादिति अथवा प्रतिज्ञादोषमेवाहुः केचित्प्रत्यक्षबाधनमिति वार्त्तिककारमतेन प्रतिज्ञादोषनैवास्यास्तुना
नैकान्तिकतेत्याशंक्य तथाप्यपक्षधर्मतया स्यासिद्धावेवांतर्भावः न पृथग्दूषणतेत्याह व्याप्तीति एवमनंगीकारे चातिप्रसक्तिमाह अन्यथे

तस्यापिपक्षत्वप्रच्यावकत्वस्यास्यादित्याह साहीति अतस्तस्ययथातथाविधस्याप्यास्रयासिद्धिलक्षणासिद्धावेवांतर्भावएवमस्याप्य नैकांतिकांतर्भावः इयांस्तु विशेषस्तस्य पक्षमात्रापहारकत्वादसिद्धांतर्भावः अस्यव्याप्त्यपहारकत्वाद नैकांतिकांतर्भावइति अस भविताद्वेत्येतद्विवृणोति अबाधितेति प्रतियोगिप्रमितावप्रमितौचनेदंसंभवतीत्यर्थः एतदेवतद्वचनेन दूढयति तदुक्तमिति अ सत्प्रतिपक्षत्वस्यापिदुर्निरूपतांदर्शयितुंप्रतियोगिनोदुर्निरूपतामाह सत्प्रतिपक्षेति स्वात्मनासत्प्रतिपक्षःप्रकरणसमइतिविव क्षितस्तत्रहि नित्यत्वानित्यत्वग्राहकमनुमानद्वयंनिरुपाधिकंसोपाधिकंवाआद्येप्राह निरुपाधेरिति कथमितितसंभवतितत्रा।

साहिसिद्धस्यसाध्यत्वाभावेनपक्षत्वप्रच्युत्यादूषणामुपेयतेतथाबाधोपीति अबाधितविषयत्वस्यदुर्निरू। पत्वाच्चपक्षेविषयापहारलक्षणाबाधस्यप्रमितौतदभावस्यवक्तुमशक्यत्वात् अप्रमितौचाप्रमितप्रतियोगितयातद भावस्यासिद्धेः तदुक्तमभियुक्तैः बाधश्चपक्षेविषयापहारोयद्यस्तिनाबाधिततात्रसिद्धा नोचेदसिद्धप्रतियो गिकत्वादेतस्यसिद्धिर्नकथंचनस्यादिति सत्प्रतिपक्षप्रकरणसमावप्यसंभवितावेवनिरुपाधेस्त्वनुमानद्व यस्यैकत्रासंभवित्वात् संभवेवावस्तुनोद्वैरूप्यापत्तेः प्रकरणसमेपिवस्तुनोद्वैरूप्यापत्तिरेवपक्षविपक्षयोर्व्याप्तिग्रा हकप्रमाणसद्भावात् अन्यतरग्राहकप्रमाणाभावेचततएवव्याप्तिभंगात्॥ इह संभवेवेति स्वाभाविकसंबंधव्याप कापहारेहेतोः स्वभावपरित्यागप्रसंगात् तदेवंमतोनित्यमनित्यंचस्याच्चैतत्संभवतिधर्म्यैवभिद्येतेत्यर्थः प्रकरणसमे उभय त्रव्याप्तिरस्तिनवाप्रथमेपूर्वोक्तदूषणमतिदिशति प्रकरणसमेपीति उत्तरस्मिन्दूषणमाह अन्यतरेति एतेनसत्प्रतिपक्षेहिनी। यविकल्पोपिनिरस्तः एतेनहेत्वाभासांतरांतर्भावोपिवेदितव्यः पञ्चप्रकरणसमस्यलक्षणांतैरुच्यतेस्वपरपक्षसिद्धौत्रिरूपोहेतुरेकः प्र करणसमइतितदप्यसिद्धमित्याह॥

किंचेति अर्थभेदमेव दर्शयति नित्यत्वेति नित्यःशब्दःपक्षसपक्षयोरन्यतरत्वादित्यत्र हि शब्दनित्यान्यतरत्वादिति हेत्वर्थः तथाऽनित्यःश
ब्दःपक्षसपक्षयोरन्यतरत्वादित्यत्र शब्दानित्यान्यतरत्वादित्यर्थः तथा च नोभयत्रानुगतःकश्चिदेको हेतुरस्तीत्यसिद्धिर्लक्षणासेत्यर्थः
ननु पक्षत्वसपक्षत्वे कौ च न धर्मौ तदधिकरणे च पक्षसपक्षौ तयोरन्यतरत्वं च हेतुरन्यतरत्वं च तदुभयान्योन्याभावानधिकरणत्वं तथा च कथ
मननुगतिस्तत्राह शब्दसाम्यमात्रेणेति अयंभावः न तावदेवं विधौ भावाभावयोरन्तर्भूतौ शक्यनिरूपौ सकलभाववृत्तित्वेन षट्पदार्थव
हिर्भावेन भावान्तर्भावात् निष्प्रतियोगिकत्वेनानिषेधात्मकत्वाच्चाभावान्तर्भावात् निष्प्रतियोगिकमभावमिच्छतो दत्तचरमुत्तरं अन्यत

किंच नित्यः शब्दोऽनित्यःशब्दो वा पक्षयोरन्यतरत्वात्सपक्षवदित्येवंरूपोऽसाविष्यते तत्र चार्थभेदात्त्वपक्षप्र
तिपक्षयोरेकरूपो हेतुः नित्यत्वप्रतिज्ञायां नित्यस्यानित्यत्वप्रतिज्ञायामनित्यस्य सपक्षशब्देनाभिधानात् शब्द
साम्यमात्रेण च हेतोरेकरूपत्वे गोशब्दवाच्यत्वाद्गवादीनामपि विषाणित्वानुमाप्रसज्येत तदेवं व्याप्तिप
क्षधर्मताभ्यामेव सकलहेत्वाभासनिरासे नावयवान्तरकृत्यमस्तीति पश्यामस्तेन पंचावयववाक्यपा
रार्थ्यानुमानमिति प्रत्युक्तमुपमानलक्षणमपि दुर्घटं तथा हि ॥ ११ रत्वनिरुक्तिश्च खंडितत्वात्तन्न चत्तद्धर्मसिद्धावपि त

सहेतुना अनित्यत्वप्रतिज्ञायामाकाशादावपि तद्भावेनानैकान्त्यात् एवमितरत्रापीति तस्मात्तत्तद्वस्तुविशेषवाचका एवैते शब्दा
इति मन्तव्यं तथा चात्र यद्यनुगतिः स्यात्तर्हि शब्दमात्रेणैव सा चातिप्रसंगिनी पशुत्वेन शशादीनामपि विषाणित्वानुमानापातात् गोत्वेन च वाग
दीनामपीति नैरर्थक्यसमर्थनमुपसंहरति तदेवमिति अत्र च पक्षखण्डनेन च साध्यखण्डनेन चोपाधिखण्डनेन च व्याप्तिखण्डनेन चासि
द्धविरुद्धानैकान्तिकप्रकरणसमाः खंडिताः बाधखण्डनेन च कालातीतः खण्डित इति वेदितव्यं अवयवखण्डनस्यानुमानखंडनोपयोगमाह ते
न पंचेति क्रमप्राप्तमुपमानं खंडयति उपमानलक्षणमपीति तत्र सदृशदर्शनादसन्निकृष्टार्थज्ञानमुपमानमिति मीमांसकानामुपमानलक्षणं

उपेयुषः प्राप्तस्येत्यर्थः प्रत्यक्षदृष्टेति प्रत्यक्षदृष्टो यो गवयस्तत्सादृश्यविशिष्टतयाऽसन्निकृष्टस्य प्रमाणान्तरेणानधिगतस्य नगरगतगोपिण्डस्य
ग्रहणमिति योजना अत्र च गवयगतगोसादृश्यज्ञानस्य प्रतियोगिगोपिण्डज्ञानसापेक्षत्वादुक्तमनुभूतचरगोपिण्डस्येति उपगम्य अन्यस्यावगतगो
गवयस्थलव्यवच्छेदाया सन्निकृष्टपदं नतु नगरस्थ एव यदा गोपिण्डोऽनुभूयते न तदा गवयसादृश्यविशिष्टतयाऽनुभूत एव सः गवयसादृश्यस्य गो
गतस्येन्द्रियसन्निकृष्टतयाऽनुभवितुं शक्यत्वात् नो खल्वस्य स्वयमत्र स्मृतिरेव पदमुदेति न प्रमितिरिति न तत्करणं किंचित्प्रमाणमतिरिक्तमस्तीति तत्रा
ह न चेदमिति यद्यपि सादृश्यमस्ति गोपिण्डे तथापि प्रतियोगिज्ञानाधीनतयाऽप्रतियोग्यनवगमेन पूर्वं नानुभूयते नेन न तत्स्मृतिरित्यर्थः अथानु

नगरानुभूतचरगोपिण्डस्य वनमुपेयुषः साक्षात्कृतगवयमीक्षमाणस्यानेन सदृशी मदीया गौरिति प्रत्यक्षदृष्टगवयसादृ
श्यविशिष्टासन्निकृष्टगोपिण्डग्रहणमुपमानमिति मीमांसकाः न चेदं स्मरणं पुरा गोपिण्डमात्रानुभवेऽपि प्रतियोगिगवया
द्यनवगतत्वेन तत्सादृश्यविशिष्टतयाऽननुभवात् नाप्यनुमानं तद्व्याप्तलिङ्गाभावात् नापि शाब्दमन्तरेणापि शब्दव्य
वहारमुपपत्तेः मैवं भूयोऽवयवसामान्यं सादृश्यं यत्तद्गोगतं विज्ञानमविकल्पेन प्रत्यभिज्ञायते यतः ३० न तावत्तौ
तातिकमते सादृश्यमस्ति पदार्थान्तरं किंतु भूयोऽवयवसामान्ययोग एव॥ मानमेवेदं किं न स्यादित्यत आह नाप्यनुमानमिति न ता
वत्सा गौरनेन सदृशी अस्य तत्सदृशत्वादिति शक्यानुमानं तस्य व्यधिकरणत्वात् नापि गोत्वात् संप्रतिपन्नवदित्यनुमानं गवां तरेण गवयग्रहण
व्यतिरेकेण सादृश्याग्रहणादिति भावः अन्तरेणापीति नह्यरण्यगतदृष्टायामस्ति कश्चिदुपदेष्टेत्यर्थः एवं समर्थितमुपमानं दूषयति मै
वमिति भूयोऽवयवानां यानि सामान्यानि खुरत्वकर्णत्वादीनि तानि गोगवयावयवेषु वर्त्तमानानि गोगवययोः सादृश्यं द्रव्यादिचतुष्टयतत्वा
वादिनो भाट्टस्य तादृशसादृश्यमाश्रयग्रहणेन योग्यतया च पूर्वमेव गवि गृहीतं द्वयोस्तु विशेषः पूर्वमनेन सदृशीति प्रतियोगिवैशिष्ट्यव्यति
रेकेण निर्विकल्पकमनुभूतमिदानीं तु सविकल्पतया प्रत्यभिज्ञायते यतो तो न पृथक्प्रमाणमिति श्लोकयोजना श्लोकं विवृणोति न तावदिम

तौतातिकाः कौमारिलाः प्राभाकरमते हि सादृश्यं द्रव्या॥

२
चिं॰ प्र॰
सी॰ न॰
७१

व्यतिरिक्तमिति तौतातिकग्रहणं पदार्थान्तरमिति सामान्यपदार्थादतिरिक्तमित्यर्थः अत्रैव वार्त्तिकसंमतिमाह तदुक्तमिति गव।
यास्सकाशाज्जात्यन्तरस्य गोपदार्थस्य गवयगतभूयोवयवसामान्ययोगं सादृश्यमतस्तस्य वस्तुत्वमपवाधितुमशक्यं भाट्टमतानुसारि।
भिरिति योजना ततः किमिति तत्राह तच्चेति तदुक्तं तत्त्वकौमुदीकारेण नह्यन्यद्गवि सादृश्यमन्यच्च गवये भूयः सामान्ययोगो जात्यं
तरवर्त्तिजात्यन्तरे सादृश्यमुच्यते सामान्ययोगः सचैकः सचेद्गवये प्रत्यक्षो गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्तीति ननु यद्यपि भाव
रूपत्वान्निर्विकल्पकवेद्यत्वमस्ति तथापि सप्रतियोगिकत्वेन निर्विकल्पकेनापि गृह्यते प्रतियोगिसापेक्षस्य निर्विकल्पके सविकल्पके

तदुक्तं सादृश्यस्य च वस्तुत्वं न शक्यमपवाधितुं भूयोवयवसामान्ययोगो जात्यन्तरस्य तदिति न च बुद्ध्यनारूढेऽपि
प्रतियोगिनि गोत्ववन्निर्विकल्पकेनाकलितं पुनर्गवयस्य प्रतियोगिनो दर्शने परामृश्यते सविकल्पकेन तत्किमपर
मवशिष्यते यत्रोपमानमिष्येत ननु निर्विकल्पकेनापि न सादृश्यमनुभूतं सविकल्पकवत्तस्यापि तदाकलने प्रतियो
गिसापेक्षत्वादिति चेन्न हस्तवितस्त्यादिवत्कर्णखुरादिसामान्यस्य स्वरूपावधारणे प्रतियोगिनिरपेक्ष
त्वात् अन्यथा भेदस्यापि निर्विकल्पकेनाकलनाभिनिवेशो भवतां प्रलीयेत ये तु प्रतिजानते सादृश्यं नाम पदार्थो

वास्त्वभावापरित्यागात् न च प्रतियोगी पूर्वमुपलब्धस्तेन निर्विकल्पकेनाप्यननुभूतमेवेति शंकते नन्विति यथा हस्तवितस्त्यादिर।
स्माद्दयं दीर्घ इति व्यवहारे प्रतियोगिसापेक्षग्रहणेऽपि न स्वरूपमात्रग्रहणे प्रतियोगिनमपेक्षते एवमत्रापीति परिहरति तद्धस्तेति ॥
अतश्च तदंगीकर्त्तव्यमितरथा भेदस्यापि सप्रतियोगिकतया निर्विकल्पकवेद्यत्वाभावप्रसंगात् स्वीकृतं च तन्निर्विकल्पकबोधेऽपि
द्व्यात्मकस्यापि वस्तुनः ग्रहणमिति वदद्भिरित्यभिसंधायाह अन्यथा भेदस्यापीति एवं भाट्टपक्षे दूषणमुक्त्वा प्राभाकरमतमुत्थापयति दूषयि
तुं ये तु प्रतिजानत इत्यादिना द्रव्यगुणकर्मसामान्यविशेषसमवायशक्तिसंख्याऽपूर्वसादृश्यात्मका हि पदार्थास्तैः परिगणितास्तत्र सादृश्य

रा॰ म॰
७१

पदार्थान्तरत्वं परिशेषयतः साधयामास शालिकानाथः प्रमाणपारायणे विषयोऽस्य वित्तिसिद्धो भिन्नो द्रव्यादिभावेभ्य इत्यादिना न
द्रव्यवदिति नहि तेति गुणवृत्तित्वादिति केतकीगंधसदृशः सर्पगंध इत्यादाविन्यर्थः अत एव गुणवृत्तित्वादेव अगुणा हि गुणा इत्यर्थः
नापि कर्मगुणवृत्तित्वात् कर्मवृत्तित्वाच्चेति द्रष्टव्यं तत्रापीति सामान्यादिष्वपीत्यर्थः अस्तु तर्हि शक्त्यन्तर्भावस्तत्राह नापि शक्तिरिति
संख्यावृत्तितामेव दर्शयति इदमेकत्वमिति अपूर्वत्वं तु चोदनालक्षणत्वाभावादिति दूरनिरस्तमिति भावः ननु भवतु पदार्थान्तरत्वं
यापि पूर्वमेव गृहीतत्वात् अन्यमिज्ञानमात्रे किमुक्तमुत्तरमिति तत्राह न च सविकल्पकेति तत्र परस्परविरोधे हि न प्रकारान्तरस्थिति

नहि न द्रव्यं गुणवृत्तित्वात् न तत एव न गुणोऽपि नापि कर्म नापि सामान्यादित्रयं तत्रापि वृत्ते नापि शक्तिः शक्तेर-
प्रत्यक्षत्वात् अन्यत्र प्रत्यक्षत्वाच्च सादृश्यस्य नापि संख्या संख्यावृत्तित्वात् इदमेकत्वमेकत्वान्तरसदृशमिदं च द्वित्वं द्वित्वा-
न्तरसदृशमिति तत्रापि व्यवहारात् न च सविकल्पकैकवेद्यं इदमनेन सदृशमिति प्रतियोगिघटितस्यैव व्यवहार-
नियमदर्शनादिति मैवं विकल्पासहत्वात् न किं स्पर्शवद्गुणवत् आद्ये द्रव्यत्वं द्वितीये एकवृत्तित्वे गुणकर्मविशेषाणा-
मन्यतमत्वं अनेकवृत्तित्वे तु सामान्यसमवाययोरन्यतरत्वापत्तिः एतेन पदार्थान्तरत्वं संख्यायामपि प्रत्याख्येयम् ॥

इति न्यायेन षट्स्वेव सादृश्यमन्तर्भावयन्त्यदार्थान्तरत्वं दूषयति मैवमित्यादिना अत्र तावदाश्रितत्वया प्रतीतेर्न नित्यद्रव्यमिति स्थि
तिविकल्पयति न किं स्पर्शवदित्यादिना द्रव्यत्वमिति गुणादीनां निर्गुणत्वादित्यर्थः स्पर्शरहितत्वेऽपि किमेकवृत्ति किं वानेकवृत्ति
प्रथमे प्राह गुणकर्मेति यद्यपि संयोगादेरनेकवृत्तित्वमस्ति तथाप्येकवृत्ति गुणाद्यन्यतमादावति व्याप्तेर्न व्यभिचार इति भावः ।
द्वितीये दूषणमाह अनेकेति एतच्च नित्यत्वे अनित्यत्वे तु द्वित्वादिगुणविशेषत्वापत्तिरपि द्रष्टव्या ननु अस्पर्शवत्वे सत्येकवृत्तित्वमने
कवृत्तित्वे च न गुणादिपंचकव्याससंख्यायां व्यभिचारादित्यत्राह एतेनेति एवं षट्स्वेवान्तर्भावमुक्त्वा यत्तेनान्तर्भावे कारणमुक्तं तद्दूषयति

चि॰प्र॰
टी॰न॰
७२

नहि द्वितीय इति विप्रतिपन्नं सामान्याद्यनन्तर्भूतं सामान्यादिवृत्तित्वादिति हि विपर्यये पर्यवसायि प्रमाणं न तत्र चासिद्धो हेतुः सामान्यवा
दिनाङ्गीकारादित्यर्थः वृत्तिमनुभवेन साधयति पूर्ववादी ननु गवयत्वमिवेति किं प्रतीतिमात्रं वृत्तिसाधकमबाधितप्रतीतिर्वा नाद्य अति
प्रसङ्गादिति दूषयित्वा द्वितीयं दूषयति प्रतिवादिनं प्रतीति एवं सामान्याद्यनन्तर्भावे हेतुमुक्त्वा द्रव्यादित्रयानन्तर्भावे हेतुं गुणवृत्तित्वम
प्यसिद्धयति किं चेत्यादिना हंसगमनेनेति हंसीव गच्छति चारुहासिनीत्यादौ हंसगमनेन हेतुना हंसगमना हंसी त्वयमीयते यत्रेत्य

यत्तु नः षट्पदार्थानन्तर्भावे सामान्यादिवृत्तित्वं न स्यादिति तत्र ब्रूमः किमिदं प्रसङ्गमात्रमुत विपर्ययपर्यवसायि तया
प्रमाणमेव नाद्यः तर्कमात्रस्यासाधकत्वात् न द्वितीयः सामान्यमेव सादृश्यमिति वादिनं प्रति सामान्यवृत्तित्वस्यासिद्धेः ननु गव
यत्वमिव गोत्वमित्यनुभवादेव सादृश्यस्य सामान्यवृत्तितासिद्धेति चेन्न किमनुभवादेव सिद्धिरुताबाधितात्वाद्यः गगननीलि
माद्रेरपि सिद्धिप्रसङ्गात् न द्वितीयः प्रतिवादिनं प्रत्यबाधासिद्धेः किं च यत्र सौवर्णकर्णाभरणाया सौवर्णकर्णाभरणसदृशीत्यु
पमीयते तत्र द्रव्यं सादृश्यं न च तद्गुणवृत्ति तथा रसः पनसशर्करयोः सादृश्यं न स्य च द्रव्यवृत्तित्वेन गुणावृत्तित्वादि
त्यसिद्धो हेतुः यत्र च हंसगमनेन हंसगमनमुपमीयते तत्र कर्मैव सादृश्यमिति तत्रापि हेतोरसिद्धिः किं च दृश्ये प्रतियोगि

र्थः हंसगमनेन पुरुषेणोत्यस्तो द्रव्यगुणकर्मणामेव न तत्र तत्र सादृश्यव्यवहारहेतुत्वात्तेषां च द्रव्यवृत्तित्वेन गुणावृत्तित्वासिद्धिरिति
खण्डनकार्थः किं चास्तित्वव्यवहारहेतो भाभाकराणामस्तित्वेप्ययं प्रसङ्गः समानः तस्य भवदभिमतसर्वपदार्थवृत्तित्वात् अन्येनरीतभूतस्यै
वतस्य तथा व्यवहारहेतुत्वं तत्सादृश्येपि समानमित्यपि द्रष्टव्यं इदानीमभावप्रतिबन्धावस्तुत्वमेव सादृश्यस्य नास्त्यतोपि पदार्थान्तरत्वं

सम॰
७२

विषयो गवयः इदानीं सादृश्यमुपेक्ष्य तत्त्वमिति करणस्य प्रमाणान्तरत्वं दूषयति भवतु वेति इदं च पूर्वोक्तमत्यभिज्ञानान्तर्भावमंगी
कृत्याधिकमभिधीयते तेन तत्त्वव्याप्तिमभिप्रेत्य ननु नास्त्यत्र लिंगमित्युक्तं तत्राह सा गोरिति गवयसन्निधावुपलब्धगोपिण्डे प्रत्यक्षेणाश
क्यागोत्वस्य गवयसादृश्येन व्याप्तिर्ग्रहीतुमिति भावः तथाप्यनुपलब्धगोपिण्डमत्युपमानोपयोगं शंकते गवयोपलंभेति अप्र
मीयमाणगवान्तरस्य पुरुषस्येति शेषः अर्थापत्तिमेव सविकल्पिकां दर्शयति गवयनिष्ठेति स्यादेतत् यदि गवयनिष्ठगोसादृ

ग्रहणमेवाभावव्यवहारनिदानमिच्छन्किं नेच्छसि अधिगतविषयस्य गोस्वरूपावधारणमेव सादृश्यव्यवहारकारणमि
ति भवतु वा यत्किंचित्सादृश्यं तथापि गोपिण्डस्य तद्विशिष्टतामतीतिरनुमानमेव किं न स्यात्सा गौर्गवयसदृशी गोत्वात् गवये
न सहोपलभ्यमानगवान्तरवदिति प्रयोगोपपत्तेः गवयोपलंभसहकालमप्रमीयमाणगवान्तरस्य गवयसदृशी गौ
रित्यवगतिरूपमितिरिति चेन्नैवमर्थापत्तेरेव तत्रापि प्रामाण्योपपत्ते गवयनिष्ठगोसादृश्यस्य परिदृश्यमानस्य गोग
वयसादृश्यव्यतिरेकेणानुपपत्तेः न च गवयनिष्ठगोसादृश्यमप्रत्यक्षमप्रत्यक्षत्वात्प्रतियोगिनो गोरिति वाच्यं स्मर्यमाणेऽपि
प्रतियोगिनि धर्मिग्रहणादेव सादृश्यस्य भेदवत्प्रत्य— क्षत्वोपपत्तेः सादृश्यज्ञानकरणमुपमानमित्यभ्युपगच्छता च सादृ

श्यं प्रत्यक्षेण गृह्यते न तत्सदन्यथानुपपत्त्याशक्यं गोगतं गवयसादृश्यं ज्ञातुं तत्त्वेन दर्शितं स्यापि प्रतियोगिगोसापेक्षग्रहणतया तद्व्यति
रेकेण ग्रहणमेवाशक्यमिति तत्राह न च गवयनिष्ठमिति मा भूत्प्रतियोगिनस्तदानीं ग्रहणं गृहगृहीतगोः स्मरणसहायमिन्द्रियमेव संप्रयु
क्तसादृश्यप्रत्यक्षकरणे समर्थं यथा प्रत्यभिज्ञायां यथा वा सन्निहितप्रतियोगिके सन्निहितभेद इत्यर्थः यद्वि वा तत्र धर्मिणो गृहीतत्वा
त्तद्गतभेदस्य संप्रयुक्तत्वाद्युज्यते ग्रहणमिति मन्ति तत्रापि समानमिति भावः अथ सादृश्यमेव प्रत्यक्षायोग्यमिति ब्रूयात्तं प्रत्याह

२
वि. प्र.
टी. न.
७३

एवमनुपपन्नदर्शनं समर्थयित्वार्थापत्तिमुपसंहरति तथा चेति अवश्यं चैवमङ्गीकर्तव्यं इतरथाऽतिप्रसंगादित्याह अन्यथेत्या
दिना अतिप्रसक्तिमेव विवृणोति तथाहीति यदा हि परोक्षात्क्रमेलकादेः सकाशादपरोक्षहस्त्यादावनतिदीर्घोऽवक्रवपुर्ग्रीवास
मपृष्ठस्थविस्तृतशरीरस्थूलपादादिवैधर्म्यं ज्ञातं भवति तदा सन्निहितहस्त्यादेः सकाशादसन्निहितकरभादावपि वक्रातिदीर्घो कृशग्री
वाविकटपृष्ठकृशशरीरदीर्घपादादिवैधर्म्यप्रतीतिर्भवति तत्करणमप्यपरं प्रमाणं स्यादित्यर्थः अत्र च शंकिष्यमाणार्थापत्त्युप
योगितयाऽपरोक्ष इत्युक्तं एवं प्रतिवंदीं गृहीत्वा परिहारसाम्यं वक्तुं तत्त्वेन तमुद्भावयति सेति उदयनेन कुसुमाञ्जलावुक्तं चे।
श्री

तथा चार्थापत्त्यैव तत्प्रतीत्युपपत्तेः कृतमुपमानेन अन्यथा वैधर्म्यप्रतीतेरपि प्रमाणान्तरत्वप्रसंगः तथा
हि यत्र परोक्षादपरोक्षे भवति वैधर्म्यावगतिस्तस्मादयमन्यथेति भवति एतस्मादन्यथा सइत्यपि मतिः सापि प्र
माणान्तरं स्यात् सार्थापत्तिरिति चेत्तत्कृतेऽपि समानं यथोदितमुदयनेन साधर्म्यमिव वैधर्म्यमानमेवं प्रसज्यते अर्थापत्ति
रसौ व्यक्तमिति चेत्तत्कृतेन किमिति तदास्तां मीमांसकाभिमतोपमानापाकरणप्रपंचः नैयायिकोदीरितमुपमानमपि दु
र्निरूपं अनवगतसंगतिसंज्ञासमभिव्याहृतवाक्यार्थप्रमितिरूपमितिस्तत्करणमुपमानमिति नैव वर्णयंति ॥ ६ ॥

तदित्याह यथोदितमिति अत्र साधर्म्यवैधर्म्यशब्दाभ्यां तज्ज्ञापकप्रमाणे विवक्षिते एवं मीमांसकाभिमतमुपमानं दूषयित्वा नैयायिका
भिमतमुपमानं फलविवेचनपूर्वकं दर्शयति दूषयितुं अनवगतेति अनवगता संगतिः स्वार्थेन वाच्यवाचकभावो यस्याः गवय इति सं
ज्ञायाः सा तथोक्ता तया समभिव्याहृतं सहोच्चारितं यद्वाक्यं यथा गौस्तथा गवय इति तस्य योऽर्थस्तत्प्रतिपाद्यो गवयशब्दार्थस्तत्प्रमितिः
तस्य तत्त्ववाच्यता प्रमितिरूपमितिः यच्च ताहृशप्रमितिकरणं तत्संज्ञास्मरणसहायं गोसादृश्यलक्षणार्थस्य संज्ञिन्यनुसंधानात्मकं तद्

गम.
७३

अत्र च शाब्दप्रमितिव्यवच्छेदार्थमनवगतेत्यादिविशेषणं प्रत्यक्षानुमितिव्यावृत्त्यै वाक्यार्थग्रहणं इममेवार्थं विवृणोति तथाहीत्यादि
ना श्रुतातिदेशवचस इति आरण्यकस्य काशाद्यथा गौस्तथा गवय इति वाक्यं श्रुतमित्यर्थः अत्र चालोकयत इत्यनेन करणशरीरमुक्तं शेषे।
णा च फलकथनं ननु यथा गौस्तथा गवय इत्यारण्यकवचनादियं प्रमितिरुपपद्यते तो न प्रमाणान्तरमिति तत्राह न चेयमिति नेयं वचनजनि
ता न तथा सति नगरगत समयग्रहो न स्यात् इति प्रसंगादित्यर्थः ननु नायमनिष्टप्रसंगो यो गोसदृशः स गवयशब्दार्थ इति सामान्येन वाक्यार्थप्रत्ययस्य
तथाप्युपपद्यमानत्वादिति शंकते भवत्येवेति न सामान्यप्रतीतिर्व्यवहारोपयोगिनी विशेषनिष्ठत्वात्तस्मातो व्यक्तिविशेषस्य श

तथा हि नागरिकस्य यादृशी गौस्तादृशो गवय इति श्रुतातिदेशवचसः कानने वस्तुतो गोसदृशं गवयमालोकय
तो नूनमयमसौ गवयपदाभिधेयो यः पुराप्तेन गोसदृशो गवय इत्युपदिष्ट इति प्रमितिरुपजायते न चेयमागमजा अपरिदृ
ष्टगवयस्यापि प्रसंगात् भवत्येवाप्तवचनात्सामान्यतस्तन्निश्चय इति चेन्न एवं सामान्यतः प्रतीतावपि व्यक्तिविशेषस्य तत्प
दाभिधेयत्वाप्रतीतेः अन्यथा यो यो धूमवान् स स वह्निमानित्याप्तवचनादधिगताविनाभावस्य पर्वते वह्निप्र-
तीतिरागमजैव स्यात् अस्तु तर्हि प्रत्यक्षेणैव गवयशब्दवाच्यत्वाधिगतिरिति चेन्न एवमश्रुतातिदेशवाक्यस्या-
पि प्रसंगात् ॥ २ ॥

द्वाच्यत्वमेव बुभुत्सितं तत्प्रतीतिश्च न वाक्यजन्या तत्करणान्तरनिबन्धनैवेति परिहरति मै
वमिति ननु यद्यपि तदानीं न्यूह्यते तथापि श्रुतवाक्यसामर्थ्यादेव पश्चादुन्नीयमानत्वादागमजन्यैवेति तत्राह अन्यथेति अथ
वा सामान्यनिश्चायकादेव विशेषनिश्चयसंभवे नोपमानवैयर्थ्याशंकायामिदमुत्तरं स्यादेतत्संप्रयुक्तगवयनिष्ठं गवयशब्दवा
च्यत्वं तत्र न सामान्यादिवत्प्रत्यक्षेण किमिति न गृह्यत इति शंकित्वा परिहरति मैवमश्रुतेति ॥

वाच्य२

अतिदेशवाक्योपदेशसहकृतप्रत्यक्षजन्यत्वं शंकते उपदेशेति विषमउपन्यासः स्तनत्वेष्वयवविशेषो वा रूपविशेषो वा सा-
मान्यविशेषो वा न त्विहं प्रत्यक्षयोग्यमिह तु नं वाचकभावस्य प्रत्यक्षता घटादावदर्शनात् वृद्धव्यवहारलक्षणानुमानैकावसेयत्वात् स्येत्यभिसं-
धाय परिहरति न वाच्यत्वस्येति अस्तु तर्हि घटादिगतवाच्यत्ववदत्राप्यनुमानगम्यत्वमिति तत्राह नाप्यनुमानेनेति अयमभिसंधिः तता-
वन्मात्राणवकसमिधमाहरेति वाक्यश्रवणसमनंतरमेव मध्यमवृद्धं माणवकसमिधाहरणप्रवृत्तिवदेतच्छ्रवणसमनंतरमत्तिका-
चित्प्रवृत्तिर्येन मार्गेण गवादिशब्दानामिवानुमानादस्यापि गवयेसंगति गृह्येत नेत्वकस्पहेतोरप्रवर्तकत्वात्तदहैतावदवशिष्य

उपदेशसंस्कारसध्रीचीनं प्रत्यक्षमेवरत्न न त्वस्येवनद्वगतिहेतुरिति चेत् न वाच्यत्वस्य प्रत्यक्षानवगाह्यत्वात् न हि प्रत्य-
क्षेपि घटे घटशब्दवाच्यता प्रत्यक्षा येन प्रकृतेपि तथास्यात् नाप्यनुमानतस्तदधिगतिः गोसादृश्यस्य गव्यपि संभवेन विप-
क्षवृत्तित्वात् नार्थापत्तिरनुमानाव्यतिरेकादिति चेन्नैवमनुमानतस्तथात्वप्रतीत्युपपत्तेस्तथाहि वाचको गवयसा-
यं तत्र वृत्त्यंतरे सति वृद्धैः प्रयुज्यमानत्वात् यो नैवं नैवं यथा गौरिति गौरिव ३१ यो यत्रासति वृत्त्यंतरे वृद्धैः प्रयुज्यते स तस्य वाचक-
को यथा गोशब्दो गोत्वस्य॥ २

ति विमतः पुरोवर्तिपिण्डो गवयशब्दवाच्यः गोसदृशत्वात् यदेवं न तदेवं यथा करभादि
तिव्यतिरेक्यनुमानादधिगतिरिति तच्च न संभवति गवांतरेपि गवयशब्दावाच्ये गोसदृशत्वहेतोर्वर्तनेन विरुद्धत्वादिति अनुमानाव्यति-
रेकादिति तन्निरसनेन निरासादिति भावः एवं समर्थितं नैयायिकोपमानलक्षणं दूषयति मेवमनुमानतइति अनुमानमेव श्लोकेन
संगृह्णाति वाचक इति तत्र वृत्त्यंतरे ऽसतीति गोसदृशपदार्थे लक्षणागुणवृत्त्योरसंभवे सति तत्र प्रयुज्यमानत्वादित्यर्थः निमित्तांत-
रेण वृत्तिर्वा वृत्त्यंतरमिह च गंगायां घोषः प्रतिवसतीति सिंहो वलवमेत्यादिषु लक्षणागुणवृत्तिभ्यामेवावाच्येष्वपि तीरादिषु प्रयुज्यमान-

ननु विशेषणासिद्धो हेतुः असति हृत्यंतरे इत्यस्योक्तत्वादिति तत्राह न च विशेषणेति अत्र तावल्लक्षणा वृत्तिर्न शंकामप्यधिरोहति तद्धि गोसादृश्यवाचकस्य सतो गवयत्वेन तदविनाभूतेन लक्षणायां प्रयोग इति शंकितव्यं तच्च न संभवति अदृष्टगोपदार्थानामरण्यैकनिवासिनां गोसादृश्यानधिगमे गवयपदप्रयोगप्रसंगादित्यर्थः द्वितीययोजनायां तु सुगमं ननु किमित्यप्रयोगः यावता गवयत्वमपि प्रवृत्तिनिमित्तं तच्चेतरेष्वधिगतमिति शंकते गवयत्वस्यापीति अत्र किमुभयं मिलित्वा निमित्तं

प्रयुज्यते वायमसति वृत्त्यंतरे गवयशब्दः पुरोवर्त्तिनि तस्मात्तस्य वाचक इत्यनुमानादेव संबंधाधिगतिसिद्धेर्न च विशेषणासिद्धो हेतुः शक्यमानगोसादृश्यस्य गवयशब्दप्रवृत्तिनिमित्तत्वानुपपत्तेः अप्रतीतगूनामारण्यकानां गोसादृश्यानधिगतौ गवय इति व्यवहाराभावप्रसंगात् गवयत्वस्यापि निमित्तत्वाददोष इति चेत् मैवमप्रतीतगोपदार्थस्य गवयत्वं निमित्तं प्रतीतगोस्तु तत्सादृश्यं निमित्तमित्युभयत्र शक्तिकल्पनायां गौरवप्रसंगात् गोविशेषितसादृश्यस्य गवयशब्दप्रवृत्तिनिमित्तत्वे गवि तत्सादृश्ये च शक्तिः कल्पनीयेत्यपि गौरवं स्या

किं वा प्रत्येकं नाद्यः पूर्वोक्तदोषानतिवृत्तेः द्वितीये त्वन्यायश्चानेकार्थ इति मीमांसकमुद्राभंगः कल्पनागौरवं च बाधके स्यातामित्याह मैवमित्यादिना गौरवांतरं चाह गोविशेषितेनेति तत्सादृश्यमात्रं गवयशब्दार्थत्वेन शंक्यते ऽपि तु गोसादृश्यं तथा च विशेषणस्यापि निमित्तत्वप्रसक्तिरिति भावः किं चोपमानं पृथक्प्रमाणमिच्छतापि गवयत्वमेव प्रवृत्तिनिमित्तं न गोसादृश्यं इतरथा शब्दत्वप्रसंगात् यथाहोदयनः सादृश्यस्यानिमित्तत्वान्निमित्तस्याप्रतीतितः समयो दुर्ग्रहः पूर्वं शब्देनानुमयापि वेति टीकाकृतापि किंतु गवयत्वं निमित्तीकृत्य पिंडे प्रवर्त्तत इति परमार्थ इति ॥ ॥

तत्र च तवाप्येतावद्युक्तयः शरणमिति तत्त्वां प्रति विशेषणासिद्धिरित्याह अन्यथोपमानस्येत्यादिना एतेन संबंधस्य परिच्छेदं सं
ज्ञायाः संज्ञिना सह प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुरित्युदयनीयः प्रयासोपहसितः तदुक्तं तत्त्वकौमुदीकृता यो हि शब्दो य
त्र वृद्धैः प्रयुज्यते सोऽसति वृत्त्यन्तरे तस्य वाचकः यथा गोशब्दो गोत्वस्य प्रयुज्यते चैवं गवयशब्दो गोसदृश इति तस्यैव वाचक
इति ज्ञानमनुमानमेवेति अव्याप्तिं चाह किंचानवगतेति प्रमाणसंप्लववादिनोऽनुमितेऽनुमानप्रवृत्तिवदुपमितेप्युपमा
न प्रवृत्तिसंभवात्तस्मिंश्चानवगत इति विशेषणाभावादव्याप्तिरित्यर्थः किंचेदमनवगतसंगतिसंज्ञासमभिव्याहृतवाक्यमा

अन्यथोपमानस्य मानान्तरत्वेपि गवयशब्दस्य गोसादृश्यस्य निमित्तताशंकायाः दुष्परिहरत्वात् गवयत्वं नि
मित्तीकृत्य गवयशब्दोऽत्र प्रवृत्त इत्युपमानादपि निर्द्धारणा न सिद्ध्येत् किंचानवगतसंगतित्वविशेषणं व्यर्थमभ्यु
पगतप्रमाणसंप्लववादिनः प्रत्यक्षाधिगतेपि पुनः प्रत्यक्षवदनुमितेप्यनुमानवच्चोपमितेपि पुनरुपमानप्रवृत्त्युपप
त्तेः अपि चेह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यत्राप्रसिद्धमधुकरपदार्थस्य प्रसिद्धेतरपदार्थस्य च प्रसिद्धपदसम
भिव्याहारान्मधुकरशब्दार्थप्रतीतिवद्गवयशब्दार्थप्रतीतिः किं न स्यात् न च सर्वत्र समभिव्याहारादधिगतिरुपमितिस्तु
करणस्य सादृश्यज्ञानस्य तत्राभावा

भिमतं किं सादृश्यबोधकं किं वा वैसादृश्यबोधकमपि किं वात्यन्तौपाधिकधर्ममा
त्रबोधकं नाद्यः वैसादृश्यप्रतीतिकरणकेऽव्याप्तेः अथ द्वितीयस्तत्राह अपि चेह प्रभिन्नेति विवृतोयमर्थः कार्यवादे संभवति मधु
पानकर्त्तरि भृंगे मधुकरपदव्युत्पत्तिवन्नासादृश्यवति गवयपदव्युत्पत्तिः कल्पनालाघवादिना च मधुकरत्ववद्गवयत्वस्य प्रवृत्तिनिमित्त
ताचानीतिव्याप्तिरिति भावः तृतीयं दूषयति न च सर्वत्रेति ननु केनोक्तं सादृश्यज्ञानस्योपमितिरिति यावता संज्ञासंज्ञिसंबंधप्रमितिरुपमिति

चीयते आह हेतुद्वयेन संबंधस्य परिच्छेदमिति टीकाकारोपि साधर्म्यग्रहणं च धर्ममात्रोपलक्षणमिति करभसंज्ञाप्रतीति।
फलमप्युपमानमेवेति नाव्याप्तिरिति तत्राह असत्यपीति सूत्रं दर्शयति तथा चेति प्रसिद्धेन गवा गवयस्य साधर्म्यात्सा।
ध्यस्य प्रतिज्ञापनीयस्य गवयशब्दवाच्यत्वस्य ज्ञापनमुपमानमिति सूत्रार्थः वार्त्तिकं दर्शयति व्याख्यानं चैतदिति आगमो
तिदेशवाक्यं तत्प्रामाणिकत्वेनाभ्युपगतोर्थः सिद्धांतो नाम प्रामाणिकस्थायमस्त्यस्य सूत्रादीनि तु एतदनुसारेणोपलक्षणा
तया व्याख्येयानि तथा च यथा मुद्गस्तथा मुद्गपर्णीत्युपमानस्य सादृश्यं विषयमभिधायैवमन्योप्युपमानस्य विषयो तो।

असत्यपि च सादृश्यज्ञाने संज्ञासंज्ञिसंबंधप्रतिपत्तिरेवोपमितिरित्याधुनिकमतानुप्रवेशे सूत्रवार्त्तिकप्रसि
द्धसिद्धांतविरुद्धाभ्युपगमो वज्रलेपायते तथा च भगवदक्षपादप्रणीतं सूत्रं प्रसिद्धसाधर्म्यात्साध्यसाधनमु
पमानमिति व्याख्यानं चेतदुद्योतकारेण वार्त्तिककृता आगमाहितसंस्कारस्मृत्यपेक्षं सादृश्यज्ञानमुपमानमि
ति अथावधीरितापसिद्धांतप्रसंगभीतेरियं पृथिवीशब्दवाच्या गंधवत्वाद्यत्रैवं तत्रैवमित्यादिकेवलव्यतिरे।
कानुमानमपि संज्ञासंज्ञिसंबंधप्रतिपत्तिफलमुपमानमापद्येतेत्यलमतिविस्तरेण शाब्दप्रमाणमपि दुर्निरूपं तथा
हि शास्त्रं शब्दविज्ञानादसन्निकृष्टेर्थे विज्ञानमिति

केचुमुन्सित व्याद्गतिभाष्यकारेण विषयांतरेप्युपमानाभ्यनुज्ञानात् करभ
मतिदीर्घवक्रग्रीवं प्रलंबोष्ठं कठोरकंटकाशिनं कुत्सितावयवसन्निवेशमपसदं पशूनामिति वाक्यश्रवणसमनंतरं तथाभूते
हिरदारिसमवस्तुविसदृशे करभपदार्थे वैधर्म्यात्करभशब्दवाच्यत्वप्रतीतिमप्युपमानत्वेनैवोवाचाचार्य्यवाचस्पतिरुपमावि।
नोदेद्वितिमत्वा नंप्रति सर्वलक्षणावाकोप्युकेवलव्यतिरेकितया प्रसिद्धेर्व्यनिव्याप्तिरित्याह अवधीरितेत्यादिना क्रममप्राप्तं शब्दप्रमाणं खंडयति

ननु परार्थानुमानेनेति व्यापकमिदं लक्षणं तस्यापि पंचावयवात्मकवाक्यजनिता हि ज्ञानादसन्निकृष्टप्रमाणांतरेणानधिगतेऽर्थे लिंगिनि बुद्धिरूपत्वादितीमामाशंकां परिहरन्भाष्यं व्याचष्टे शब्दविषयं विज्ञानमित्यादिना तत्र शब्दजनितविज्ञानमिति विवक्षितं। अपितु शब्दविषयं विज्ञानं तेन नातिव्याप्तिरिति भावः असन्निकृष्टपदं व्याचष्टे श्रोतुरिति प्रमाणांतरेणानथावाः नथावानधिगनइत्यर्थः अत्रैव वार्त्तिकसंमतिमाह उक्तं हीति अर्थग्रहणं चार्थासंस्पर्शो वार्थापेक्षितस्वभावो वा शब्द इति वदतां बौद्धानां मतनिरासार्थमेवं हि वर्णयंति अंगुल्यग्रे हस्तियूथशतमास्त इति वचसोऽर्थ एव नास्ति नद्यास्तीरे पंचफलानि संतीत्यादिवाक्यानां कदाचिदर्थवत्ता कदाचिन्नेत्यर्थासंस्पर्शो र्थापेक्षितस्वभावो वा शब्दः तस्मान्नार्थे प्रामाण्यं किंतु वक्तुरभिप्रायेतत्रापि न शब्दतया किंतु तत्का।

शब्दविषयं विज्ञानं शब्दविज्ञानं तस्मादसन्निकृष्टेऽर्थे श्रोतुरनधिगते ऽवाधितेच विषये यद्विज्ञानं तच्छाब्दप्रमाणमिति यावत् उक्तं हि वार्त्तिककारैः असन्निकृष्टवाचा चदृष्टमत्र जिह्वासितं ताद्रूप्येण गृहीतत्वं न हि पर्याये नोपि वेति यद्वा शब्दाज्जनितं पदार्थविषयं यद्विज्ञानं तस्मादसन्निकृष्टेऽर्थे बुद्धिः शाब्दमिति तदयुक्तं शब्दलिंगकवक्तृविशेषानुमानेतिव्याप्तेः भवति हि वहिष्टस्याध्ययनध्वनिश्रवणाद्भवनांतर्वर्त्तिपुरुषविशेषानुमानम् ॥ ध्वनयानदनुमापकः यथाह कीर्त्तिः नांतरीयकताऽभावात् शब्दानां वस्तुभिः सह नार्थसिद्धिस्तत स्ते हि वक्त्रभिप्रायसूचकाइति तन्निरासार्थमर्थग्रहणं निरासप्रकारश्चाग्र एव विवक्षायां प्रामाण्यं निराकुर्वता स्वयमेवाचार्येण दर्शयिष्यते एवमन्विताभिधानाभिहितान्वयसाधारण्येन भाष्यं योजितं इदानीमभिहितान्वयानुसारेण योजयति॥ यद्वेति पदात्पदार्थस्मरणात्तस्य शब्दाभासस्य च निवृत्त्यर्थमसन्निकृष्टावाधितेति विशेषणद्वयं प्रत्यक्षानुमानादिव्यावृत्त्यै शब्दविज्ञानादिति न त्वप्रथमं दूषयति तदयुक्तमिति शब्दा एव लिंगाद्वक्तृविशेषेऽनुमानं जायते तदपि हि शब्दज्ञानादसन्निकृष्टार्थे बुद्धिर्भवतीत्यतिव्याप्तिरित्यर्थः। एतदेव विवृणोति भवति हीति तदुक्तं विशेषतोऽदृष्टविशेषानुमानं दर्शयता वार्त्तिककारेण स्वपुत्राद्यनुमानं यज्ञहाभ्यंतरगोचरं वेदस्य

द्वितीययोजनायामप्यतिव्याप्तिमाह द्वितीयेपीति धूमादिशब्दप्रतीतेन धूमादिलिंगादनुमानमग्न्यादिषु जायते तत्रातिव्याप्तिरित्य
र्थः तर्हि तावदेवेति लिंगाद्यजन्यत्वमित्यनेन शब्दव्यतिरिक्तप्रमाणजातं व्यावर्त्यते प्रमितिः शब्देन चाप्रमितिजातं लिंगाद्यजन्यं प्रमाणं
शास्त्रमित्येवास्तु तद्व्यर्थेतरदित्यर्थः इदानीमवयवशो विचार्य्यमाणमपि विशीर्य्यत एवेदं लक्षणमित्यभिसंधायाह कश्चायमिति न
नु शब्दप्रमाणविचारावसरे किमिति शब्दजिज्ञासेति प्रकृतानुपयोगिशंकां वारयति यद्विज्ञानादिति शास्त्रप्रमाणत्वेन च विवक्षितमि

॥ द्वितीयेपि धूमादिपदात्तदर्थविज्ञाने धूमध्वजादौ जायमानानुमानादावतिव्याप्तिः लिंगाद्यजन्यत्वे सतीति विशे
षणाद्दोष इति चेत्तर्हि तावदेवास्तु लक्षणं किमनेन शब्दविज्ञानादित्या——दिना विशेषणेन कण्ठशोषकरेण
कश्चायं शब्दो नाम यद्विज्ञानादसन्निकृष्टेर्थे बुद्धिः न तावत्पदम् पदमभ्यधिकाभावात्स्मारकान्न विशिष्यत इति स्वय
मेव तस्यासन्निकृष्टार्थविज्ञानजनकत्वानभ्युपगमात् नापि वाक्यं तस्यानिरुक्तेः तथाहि किं पदसमुदायमात्रं वा
क्यमुतैकार्थप्रतिपादकत्वावच्छिन्नः पदसमुदाय उताकांक्षासंन्निधियोग्यतावंति पदानि नाद्यः गौरश्वः पुरुषो ह
स्तीत्यादेरपि वाक्यत्वप्रसंगात् नापि द्वितीयः अर्थस्यैकत्वविषयत्वावच्छिन्नत्वानामनिरुक्तेः तत्रैकत्वं नाम किमेकत्व
((संख्यावत्त्वमुताभेदः किं वा स्वरूपमेवाना

ति शेषः किं पदं किं वा वाक्यं शब्दत्वेन विवक्षितं नाद्य इत्याह न तावदिति पदं स्मारकान्न
विशेष्यते कुतः अभ्यधिकाभावात् गृहीतसमयगृहीतादर्थादभ्यधिकार्थबुद्धेः पदेभ्योऽभावादितरथाऽगृहीतसंगतिकस्यापि बोधकत्वप्रसं
गादिति वार्त्तिकार्थः द्वितीयं दूषयति नापीति तत्र वाक्यलक्षणं विकल्पयति किं पदेत्यादिना प्रथमेऽतिव्याप्तिमाह गौरश्व इति अर्थस्यैकत्वे
ति एकार्थप्रतिपादकत्वावच्छिन्नत्वमित्यत्र यदिदमर्थस्यैकत्वं तत्त्वमाह गार्थप्रतिपादकत्वविवरणात्तदेतदाह गार्थविषयप्रतिपत्तिजनकत्वं
तद्गतविषयत्वं यच्चैवंविधधर्मेणावच्छिन्नत्वं तदेतत्त्रितयं दुर्निरूपमित्यर्थः॥ ॥

एकत्वसंख्यावदर्थप्रतिपादकत्वमित्याद्यं पक्षं दूषयति गौरश्वइति तेषामपिपदार्थानां प्रत्येकमेकत्वसंख्यावच्छिन्नत्वादित्यर्थः अव्याप्तिमेवविवृणोति नह्येकत्वेति द्वितीयतृतीययोरपि प्रथमपक्षोक्तमतिव्याप्तिमाह नहिद्वितीयतृतीयाविति एवमेकत्वं खंडयित्वा विषयविषयित्वेप्रपंचमिथ्यात्ववादोक्तखंडनं स्मारयति विषयेति अवच्छिन्नत्वं खंडयति किंचेदमिति विशिष्टत्वंनिर्वक्तिपूर्ववादी विशेषणेनेति किमिदंविशेषणासंबद्धत्वंकिंविशेषणासंबंधविशिष्टत्वंकिंवातत्संबंधाधारत्वं आद्यमाह संबद्धत्वमिति द्वि

॥ गौरश्वःपुरुषइत्यादेरप्येकत्वसंख्याविशिष्टतयातद्वाचकपदसमुदायस्यापिवाक्यत्वप्रसंगात् एकत्वादि संख्याप्रतिपादकवाक्याव्यापनाच्च नह्येकत्वद्वित्वादावेकत्वसंख्यातरमस्तियेनतत्प्रतिपादकपदसमूहोवाक्यं स्यात् नहिद्वितीयतृतीयौगौरश्वःपुरुषइत्यादावभेदस्तत्स्वरूपयोर्भावात् विषयविषयिभावस्यचपूर्वमेवनिरस्तत्वा त् किंचेदमवच्छिन्नत्वं विशिष्टत्वमितिचेन्नदेवंकिं विशेषणेनसंबद्धत्वमितिचेत् संबद्धत्वमित्यत्रापिसंबंधेनविशिष्ट त्वोक्तावात्माश्रयता विशेषणाव्यावृत्तसंबंधाधारत्वोक्तौकोदोषइतिचेत् व्यावृत्तशब्देनविशिष्टत्वोक्तावात्माश्रयता प्रथमः विशेषणविशेष्ययोःप्रत्येकंविशिष्टत्वापत्तिर्द्वितीयःसंबंधस्यचविशिष्टत्वाभावस्तृतीयस्तत्ससंबंधांतर।

तीयंशंकते विशेषणाव्यावृत्तेनेति नत्रदोषत्रयंयथाक्रममाह व्यावृत्तेति विशेषणाव्यावृत्तेत्यत्रव्यावृत्तत्वंविशिष्टत्वमितिवक्तव्यंतथाचात्माश्रयःद्वितीयंचाह विशेषणेति यदिहिविशेषणासंबंधाधारोविशिष्टंतदाविशेषणामपिविशिष्टंस्यात् विशेषणाविशेष्य संबंधस्यद्विष्ठत्वेनविशेषणस्यापितदाश्रयत्वादित्यर्थः तृतीयंदूषणमाह संबंधस्येति संबंधाधारत्वंचयद्यपिविशिष्टत्वाद्विशेषणावि शेष्यसंयोगस्यसंभवतितथापि समवायस्यतन्नसंभवतिस्वाश्रयत्वाभावादन्यत्वेचानवस्थानात् अस्यैवतस्यापिविशिष्टत्वंस्वसमवा

इदानीं विशिष्टस्वरूपमपि दुर्निरूपमित्याह किंचेति न केवलमनुपलंभः व्यवहारविरोधश्चस्यादित्याह दंडिनमिति द्विती-
येपि किं त्रितयमपि यथायथं विशिष्टमुत मिलितमाद्ये प्राह त्रयाणामपीति द्वितीयेपि किं मिलितमिति तदेवाभिधीयते किंवा
तदन्यत् प्रथमे पूर्वोक्तमेव दूषणमतिरिक्तपक्षे त्वनुपलंभपराहतिः इदानीं विशेषणनिरूपणादपि तत्संबंधविशिष्टमित्यनु-
पपन्नमित्याह किंचेदमिति व्यावर्तकत्वमित्यत्र कृतः किं व्यावृत्तिजनकत्वमर्थः किंवा प्रत्यायकत्वमिति विकल्प्याद्यं दूषय-

किंच विशेषणविशेष्यतत्संबंधेभ्यो विशिष्टं भिन्नमभिन्नं वा नाद्योनुपलंभपराहतत्वात् दंडिनमानयेत्यु-
क्तेन्यस्यैवानयनप्रसंगाच्च नापि द्वितीयः त्रयाणामपि प्रत्येकं विशिष्टत्वात् दंडादीनामन्यतमानयने दंडी समानीत
इति व्यवहारप्रसंगात् किंचेदं विशेषणं नाम यद्विशेषितं तत्त्वं न तत्स्यात् व्यावर्तकमिति चेत् किं व्यावृत्तेर्भेदस्य जनक-
मुत तत्प्रतीतेः नाद्यः संभवात् न हि कठोरकुठारधारया तरोरिव देवदत्तस्य दंडकुंडलादिना विधीयते द्वैधीभावः नापि द्विती-
यः नयनादेरपि भेदप्रतीतिजनकस्य विशेषणत्वप्रसंगात् तदपि क्वचित्कस्यचिद्भवत्येव विशेषणमिति चेदं ततर्हि वा-
स्तुमात्रमित्येव विशेषणलक्षणमस्त्वलमनया ग्रंथकथाकंथया अस्तु तर्हि विषयीक्रियमाणतया यदभावृत्तिबुद्धिज-

ति नाद्य इति असंभवमेव विवृणोति न हि कठोरेति यथा हि घोरकठोरधारया तरोस्तस्य द्वैधीभावः नतु तद्विशेषणलक्षणमिति
क्रियते न तथा देवदत्तस्य दंडकुंडलादिना विष्णुमित्राद्भेदः क्रियते तेन तत्पूर्वमभेदप्रसंगादित्यर्थः द्वितीये नयनादावतिव्याप्तिस्तस्यापि
व्यावृत्तिज्ञापकत्वादित्याह नापि द्वितीय इति नयमतिव्याप्तिः तस्यापि चाक्षुषं रूपं रसनाग्राह्यो रस इत्यादिव्यवहारविशेषणतयाल-
क्षणत्वादिति शंकते तदपीति उत्तरेणिगदव्याख्यातः विशेषणलक्षणं तदं शंकते अस्तु तर्हीति येयं व्यावृत्तबुद्धिर्विशेषणे तज्जन्यतेन या वि-
षयीक्रियमाणं स द्व्यावृत्तिबुद्धिजनकं यत्तद्विशेषणं तथा च न चक्षुरादावतिव्याप्तिः न हि घटः पटव्यावृत्त इति बुद्धेश्चक्षुरादिर्विषयी भवतीत्य-

२
वि॰ प्र॰
टी॰ न॰
७८

[illegible]त्वादिति भिन्नाधिकरणत्वादित्यर्थः॥

एम॰
७८

अस्यातिव्याप्तिमाह मैवमिति नीलमुत्पलमित्यादौ नैल्यविशिष्टमुत्पलत्वाद्यपि तद्बुद्धिविषय एव तज्ज्ञानकं च प्रत्यक्षप्रतीतित्वात् तस्यापि विशेषणात्वं स्यादित्यर्थः उपलक्षणेपीति अस्ति हि मयूराधिकरणं श्रीसुंदरदेवमंदिरमित्यत्र मयूरस्यापि तद्बुद्धिविषयतया तज्ज्ञानकत्वमित्यतिव्याप्तिरित्यर्थः अथ नियमेन विषयीक्रियमाणतया तज्ज्ञानकं विशेषणं न तदुपलक्षणस्यास्ति असतोप्युपलक्षणतया तत्तत्रासंभवादिति ब्रूयात्तत्प्रतिदूषणांतरमाह विशेषणेति विशेष्याद्भ्यत्वे सत्युक्तविधं विशेषणमिति हि लक्षणमभिधीयते तेन चैतद्युक्तं परस्पराश्रयापातात् यद्धर्मविशिष्टं गृह्णातीति तदिति वा विशेषणात्वावच्छिन्नमिति वा विशेष्यलक्षणं आद्ये परस्पराश्रयः विशिष्टत्वस्याद्याप्यसिद्धेः द्वितीयेपि

मैवं विशेष्येपि प्रसंगात्तदन्यत्वे सतीति। विशेषणादेर्दोषद्रुतिश्चेन्न उपलक्षणेपि प्रसंगात् विशेषणासिद्धौ तदुपजीविनो विशेष्यस्यासिद्धिस्तत्तस्तोऽन्यत्वेन विशेषणासिद्धिरिति परस्पराश्रयतापत्तेन खलु बुद्ध्यारज्यते येन विशेष्यं न हि शेषणमिति भट्टपादीयमपि लक्षणं परास्तं। परस्पराश्रयतापादर्शितत्वात् यत्तु नरुद्यते नो दीरितं सामानाधिकरण्येन।
प्रतीयमानं विशेषणं व्यधिकरणतया प्रतीयमानमुपलक्षणमिति तदप्यसहिष्णुत्वासहत्वात् किमार्थिकं सामानाधिकरण्यं विवक्षितमुत शाब्दं नाद्यो संभवात् न ह्यस्ति दंडदेवदत्तयोः शौक्ल्यपटयोश्चैकाधिकरण्यं तयोः प्रतिनियताधि

परस्पराश्रयस्य विशेषणस्याद्याप्यसिद्धेरिति भावः उक्तं परस्पराश्रयं लक्षणांतरेप्यतिदिशति एतेनेति ऐकरणात्वात् दंडित्वदेवदत्त॥
ति विशेष्यं येन पदार्थेन खलु बुद्ध्यारज्यते स रंजको विशेषणं न ह्युपलक्षणस्योपरंजकत्वमस्ति तटस्थत्वादिति निष्कर्षोर्थः असापि विशेष्यगर्भत्वात्पूर्ववदन्योन्याश्रयत्वमित्याह परस्परेति विशेषणोपलक्षणयोस्तान्यथेपरिशुद्धावुद्यते नोक्तंभेदमनूद्य निराचष्टे यत्तु नरिति सामानाधिकरण्येनेति जटीतापसइतिवदित्यर्थः विशेषणविशेष्ययोरेकाधिकरणात्वरूपसामानाधिकरण्यमसिद्धमित्याह नाद्यो संभवादिति तदेवविवृणोति न ह्यस्तीति प्रतिनियतेति दंडस्य पुरुषाधिकरणात्वात्पुरुषस्य भूतलाधिकरणात्वादेवं शौक्ल्यस्य पटाधिकरणात्वात्पटस्य चतंत्वधिकरणा

यद्यपि दंडदेवदत्तयोर्नैकाधिकरण्यं तथापि दंडित्वदेवदत्तत्वयोरस्त्येकाधिकरण्यमिति शंकित्वा परिहरति नहीति दंडदेवदत्तयो
र्विशेषणविशेष्यभावः प्रसिद्धः लोके नतु दंडित्वदेवदत्तत्वयोरत स्तयोः सामानाधिकरण्यमनुपयोगीत्यर्थः अथ धर्मद्वारा धर्मिणोरपि
मतिस्तदापि दंडिदेवदत्तयोरेव नतु दंडदेवदत्तयोर्दंडित्वस्य दंडिधर्मत्वात् दंडस्य च दंडित्वाभावादित्याह नहि दंड एव दंडीति एवं विशे
षणविशेष्ययोरार्थसामानाधिकरण्यमिति पक्षं दूषयित्वा शाब्दमिति पक्षं दूषयति नहि तृतीय इति एकस्मिन्नर्थे वृत्तिः पर्यवसानं अ
संभवमेवाह नहीति तथासति दंडो देवदत्तः नैलमुत्पलमिति प्रयोगः स्यान्नचैतदस्तीत्यर्थः द्वितीयेप्याप्तिमाह दंडीदेवदत्त इति वि

त्वयोरैकाधिकरण्यमस्ति दंडिन एव देवदत्तत्वादिति चेन्नहि तयोरेवास्तु विशेषणविशेष्यभावो नतु दंडदेव
दत्तयोर्नहि दंड एव दंडी नहि तृतीयस्त्वकिमेकविभक्तिकानेकपदाभिधेयत्वमुतभिन्नप्रवृत्तिनिमित्तानां शब्दानामेक।
स्मिन्नर्थे वृत्तिर्न प्रथमोऽसंभवादेव नहि विशेषणविशेष्यभावेन प्रसिद्धयोर्दंडदेवदत्तयोर्दंडो देवदत्त इत्येकविभ।
क्तिकानेकपदाभिधेयत्वमस्ति नापि चरमः दंडिदेवदत्त इत्यत्रैवादर्शनात् नहि यथा शुक्लः पट इति शुक्लगुणं पट।
त्वं च निमित्तीकृत्य परस्परं पदे प्रवृत्ते न तथा दंडित्वं दंडं वा निमित्तीकृत्य दंडपदं देवदत्ते प्रवृत्तं येन समानाधिक
रणता स्यात् दंडित्वं निमित्तीकृत्य दंडिशब्दो देवदत्ते प्रवृत्त इति चेत्प्रवर्ततां नाम न तु न हि शेषणं दंडविशिष्ट

शेषणीभूतदंडवाची दंडशब्दो न देवदत्तपदेन समानाधिकरणः यश्च दंडिशब्दः समानाधिकरणः नासौ दंडवा (रूपत्वात्तस्य ।।
चक इत्यर्थः एतदेव पर्यनुयोगपरिहाराभ्यां विशदयति दंडित्वमित्यादिना किंच सामानाधिकरण्येन प्रतीयमानत्वं वैयधिकरण्येन प्रतीयमा
नत्वं चेति योयं विशेषो विशेषणोपलक्षणयोः स नावन्नार्थकृतः एकस्यैवार्थस्योभयथापि प्रतिभासात् तस्मात्प्रतीतिकृत एवेति वक्तव्यं तथा
च सर्वोपि धर्मधर्मिवर्गः प्रतीतिमात्रवैचित्र्यः स्यात् सर्वस्यापि विशेषणोपलक्षणतां न भावात् तथा च बुद्धिवैचित्र्यमेवार्थवैचित्र्यं न तु तदतिरि

त्वि·प्र·
टी·न·
७९

किंचजटीत्यादिना उक्तदूषणांलक्षणांतरेप्यतिदिशति एतेनेति व्यावर्त्तकत्वानिरुक्तेरित्यर्थः अत्रचैयकारउपलक्षणाव्यावर्त्तकः अपिस्त्व
व्याप्तिव्यावर्त्तकः एवमवच्छिन्नत्वंदूषयित्वापदसमुदाय इत्यत्रपदपदार्थंदूषयति अस्तुवेति अनवसरशंकांनिराचष्टे यत्समुदायइ।
ति पाणिनीयंपदलक्षणमुद्भावयति नन्विति तत्रस्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसांङ्योस्सुपितिसूत्रोक्तसप्त
विभक्त्यात्मकैकविंशतिवचनानांप्रत्याहारन्यायेनसुपितिनिर्देशः तिङितितिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्व
हिमहिङितिसूत्रोक्ताष्टादशरूपाणांनिर्देशः एतद्विभक्तिवर्गद्वयांतंशब्दरूपंपदमित्यर्थः तदेतद्दूषयति मैवमिति किमेतन्यदमात्रल।

किंचजटीतापसोजटाभिस्तापसइतिवैकल्पिकप्रतिभासमात्रेणविशेषणोपलक्षणव्यवहारमंगीकुर्वाणस्सर्वस्यवाय।
मानमेयादिव्यवहारोबुद्ध्यारूढेनधर्मधर्म्यादिभावेननवहिःसदसत्त्वमपेक्षतइतिसौगतमतानुप्रवेशमात्मनस्ताकिंकम
न्योनालोचयते एतेनसंबद्धमेवव्यावर्त्तकंविशेषणमसंबद्धमपिव्यावर्त्तकमुपलक्षणमित्यपिपरास्तं अस्तुवाभवदि
च्छयायत्किंचनावच्छेदकमवच्छिन्नत्वंचतथापिकिंतत्पदमितिविवेचनीयंयत्समुदायोवाक्यंननुप्रसिद्धिरिति इमेवसुप्ति
ङंतंपदमितिकिमिहविवेचनीयमितिचेन्मैवमेकैकस्यमिलितस्यवालक्षणत्वेसुबंतेपितिङंतस्यतिङंतेपिसुबंतस्यो
भयोरुभयत्राव्याप्तेरुभयान्यतरदितिचेन्नान्यतरशब्देनैकैकस्यमिलितस्यवाभिधानेपूर्वदोषानुषंगात् उभयान्यान्यदि

क्षणंकिंवानहिशेषलक्षणांतान्त्यः पदमात्रलक्षणस्यपृष्टत्वात्सामान्यलक्षणासिद्धेर्वि ऐतिचेन्नोभयशब्देनोभयत्वसंख्यान।
शेषासिद्धेश्च प्रथमेत्वव्याप्तिरेकैकस्यलक्षणत्वेसुबंतत्वस्यतिङंतेऽभावात्तिङंतत्वस्यचसुबंतेऽभावात्मिलितस्यलक्षणत्वेचोभयत्रा
व्याप्तिरेकैकस्योभयांतत्वाभावादित्यर्थः अनुगतरूपासिद्धेः शंकते उभयान्यान्यदिति दूषयति नेति उभयत्वसंख्याविशिष्टादेतस्माद्यदन्यद्धि
न्नंतदन्यत्वाधिकरणांयदेतदुभयंतत्त्वमिहलक्षणेविवक्षितोर्थः नचेदमुभयस्माधारणमितिप्रत्येकमिलितविकल्पतद्दोषौचसमानावित्यर्थः॥

राम·
७९

उभयान्यान्यशब्दानां च साधारणार्थविवक्षायां सर्वत्रातिव्याप्तिरित्यपि द्रष्टव्यं इदानीं नञ्तत्वानिरुक्तचापिलक्षणं दूषयति अपिचेति किमयं बहुव्रीहिस्तद्गुणसंविज्ञानः किं वा न तद्गुणसंविज्ञान इत्यर्थः आद्येपि किं विशेषणतया विभक्तिसत्त्वं विवक्षितमुपलक्षणतया वा नाद्य अव्यापनादित्याह नाद्यः विभक्तीति स्नात्वा स्नातुमित्यादीनि तावत्पदत्वेन प्रसिद्धानि न चैतेषु विभक्तिसत्त्वमस्ति अव्ययादाप्सुप इति विभक्तिलोपात् कृन्मेजन्तः क्त्वातोसुन्कसुन इति चाव्ययसंज्ञाविधानादिति रथ्या ऽ काव्यभोजीन्यादिष्वपि लुप्तविभक्तिके ऽव्याप्तिरिति भावः उपलक्षणत्वपक्षं दूषयति उपलक्षणत्वे चेति प्रातिपदिकग्रहणाघातो रप्युपलक्षणं ननु तदानी

विशिष्टत्वविवक्षायामन्यशब्देन चान्यत्वाधिकरणत्वविवक्षायामुभयोरपि तत्संभवेन पूर्वोक्तदोषानतिवृत्तेः अपि च सुप्तिङन्तं पदमिति यत्र सुप्तिङौ स्तस्तत्पदं यत्र वा तौ विधित्सितौ तत्पदं नाद्यः विभक्तिसत्त्वस्य विशेषणत्वे ऽव्ययानां लुप्तविभक्तिकानामपदत्वप्रसंगात् उपलक्षणत्वे च प्रातिपदिकस्यापि पदत्वं भाविनापि विनाशेन विनाशी घट इतिवद्भाविनापि विभक्तिसत्त्वेनोपलक्षितत्वोपपत्तेः अत एव न द्वितीयः एतेन विभक्त्यन्ता वर्णाः पदमित्यपि निरस्तम् ननु शाब्दप्रतीत्यजन्यशाब्दप्रतीतिजनकं वर्णात्मकं पदमिति लक्ष

मविद्यमाना विभक्तिः प्रातिपदिकस्य कथमुपलक्षणमिति तत्राह भाविनापीति नाशोपलक्षितसत्तायोगित्वमनित्यत्वमित्यत्र तदानीमविद्यमानेनापि नाशेनोपलक्षणादर्शनात् एवं विनाशी घट इत्यत्रापीति भावः विधित्सितत्वेति पक्षं दूषयति अत एवेति प्रातिपदिकमात्रस्यापि पदत्वप्रसंगादित्यर्थः उक्तदूषणं लक्षणान्तरेप्यतिदिशति एतेनेति विभक्त्यन्तत्वस्य चानिरूपणादित्यर्थः आधुनिकीयापदलक्षणमुद्भावयति नन्विति शाब्दजनितायाः प्रतीतेस्तया ऽजन्यत्वे सति शाब्दप्रतीतिजनकं वर्णात्मकं च यत्तत्पदमित्य

२
चि॰प्र॰
टी॰न॰
८०

स्वयमेव विशेषणत्रयस्य कृत्यमाह अत्र चेत्यादिना पदसमुदायात्मकं वाक्यमतः समुदायिपदविषयप्रत्यक्षप्रतीतिजन्यं तच्छा-
ब्दप्रतीतिजनकं च वाक्यार्थप्रतीतेरपि शाब्दत्वादतस्तद्व्यवच्छेदाय तयाऽजन्यत्वविशेषणमित्यर्थः शाब्दप्रतीत्यजन्येत्यत्र प्रतीतिवि-
शेषणीभूतशब्दशब्देन पदमभिधीयते वाक्यं वेति विकल्प्याद्यमात्माश्रयत्वेन दूषयति नाद्य इति द्वितीयं दूषयति न पश्चिम इति पदस-
मुदायो हि वाक्यमतः पदासिद्धौ वाक्यमप्यसिद्धमित्यर्थः वाक्ये चातिव्याप्तिस्तस्यापि वाक्यजन्यप्रतीत्यजन्यत्वे सत्युक्तविशेषणत्वात् वर्णस-
मुदायरूपे पदसमुदाये च वाक्ये वर्णात्मकत्वमप्यस्त्येवान्यथा पदस्यापि वर्णात्मकताभावप्रसंगादिति न च शाब्दत्वजातीयाजन्यशब्दत्वजा-

अत्र च शाब्दप्रतीतिजन्यशाब्दप्रतीतिजनकं वाक्यं प्रथमविशेषणेन व्यावर्त्यते द्वितीयेन च प्रत्यक्षानुमानादाव-
तिव्याप्तिर्व्युदस्यते वर्णात्मकत्वविशेषणेन चादृष्टेश्वरादिनदिहाधुनिकलक्षणे न कोपि दोष इति चेन्मैवं विकल्पासं-
हत्वात् तत्किं शब्दशब्देन पदं विवक्षितमुत वाक्यं नाद्यः पदस्याद्याप्यसिद्धेर्न पश्चिमः पदासिद्धौ तस्याप्यसिद्धेः नाप्याकां-
क्षासन्निधियोग्यतावन्ति पदानि वाक्यमिति तृतीयः पक्षः आकांक्षायाः पुरुषधर्मस्याचेतनेषु पदेष्वभावात् आकां-
क्षा हि जिज्ञासा उक्तं ह्यन्वितस्याभिधानार्थमुक्तार्थघटनाय वा प्रतियोगिनि जिज्ञासा या साकांक्षेति गीयत इति ॥

तीयजन्यप्रतीतिजनकवर्णसमुदायः पदमिति युक्तं प्रथमविशेषणेन सर्वशब्दत्वजातीयविवक्षायां तदजन्यत्वविशेषणं द्वितीयेन व्याहतं
द्वितीये वाक्येऽतिव्याप्तिस्तस्यापि यत्किंचित्पदाजन्यत्वे सत्युक्तरूपत्वादिति किं पदसमुदायो वाक्यमित्यादिना त्रिधा वाक्यलक्षणं विकल्प्या-
द्यौ द्वौ दूषितौ इदानीं तृतीयं दूषयति नाप्याकांक्षेति किमत्र योग्यतासन्निधिवदाकांक्षाधिकरणत्वं विवक्षितमुत तद्विषयत्वं नान्त्यः विष-
यविषयिभावस्य खंडितत्वादाद्येऽसिद्धिमाह आकांक्षाया इति अन्वितस्येति कृष्णइत्यत्रान्वितस्याभिधानार्थं विश्वजिता यजेतेत्यादावु-
क्तार्थयागस्य घटनाय प्रतियोगिनि जिज्ञासायां पुंसः आकांक्षेति गीयत इत्यर्थः एतच्चोभयं विविच्य दर्शितमभिहितान्वयवादे ॥ ॥

रम॰
८०

योग्यतामपि विकल्प्य दूषयति योग्यतेति किं पदगता पदार्थगता वेत्यर्थः आद्येति व्याप्तिमाह वह्निनेति तयोरपि सह प्रयोक्तुं यो-
ग्यतास्त्येवेन रथ्यानन्कार्य्यं सह प्रयोगो न स्यादित्यर्थः वाक्याभासे गमनमेव दर्शयति नद्यास्तीर इति ननु बाध्यमानस्य तदर्थस्य कथम-
न्वययोग्यतेति तत्राह अन्यथेति अयं भावः अत्र किं प्रमाणान्तरबाधादन्वयो नास्तीत्युच्यते किं वा तद्योग्यतैव नास्तीति आद्ये प्रकृतदो-
षापरिहारः अन्वयाभावेऽपि योग्यतानपायात् नहि यावद्योग्यत्वं कार्य्यदर्शनमस्ति नियमेन कार्य्याणि स्युरिति चेन्न असिद्धेः आप्त-

॥ योग्यतापि किं पदानामेव सह प्रयोगयोग्यत्वमुतान्योन्यान्वययोग्यार्थत्वं नाद्यः वह्निना सिंचेदित्यादाव-
पि सह प्रयोगदर्शनात् नापि द्वितीयः वाक्याभासेऽपि प्रसंगात् नद्यास्तीरे फलानि सन्तीति विप्रलंभकवाक्यस्य पदाना-
मप्यन्योन्यान्वययोग्यार्थकत्वात् अन्यथा प्रामाणिकवाक्येऽपि तेषामनन्वयापत्तेः प्रमाणान्तरविरोधादि-
ह पदार्थानामन्वययोग्यता नास्तीति चेन्न संसर्गाभावेऽपि संसर्गयोग्यस्वभावस्याखण्डितत्वात् अ-
स्तु वा यत्किंचिदविचारितरमणीयं पदं तत्समूहश्च वाक्यं तथापि कुत्र प्रमाणमिति विवेचनीयं ॥ २२ ॥

वाक्ये तेषामेवान्वयदर्शनात् एतेन योग्यताभावपक्षोऽपि प्रत्युक्तः न चाप्तवाक्यस्थपदार्थेभ्यो नाप्तवाक्यस्थपदार्था अन्य एवेति वाच्यं
तथा सति तेषामन्वयायोग्यत्वस्याप्यसिद्धेः क्व दृष्टं तेषामन्वययोग्यतास्तीति संगतिग्रहणाभावाद्बोधकता च अख्यातिवादिनापि
च पदार्थबोधांगीकारात्तस्मादस्त्येवानाप्तवाक्ये व्यभिचार इति एतदेव चोद्यपरिहाराभ्यां विशदयति प्रमाणान्तरेत्यादिना स-
वन्तावच्छब्दविज्ञानादसन्निकृष्टेऽर्थे बुद्धिः शाब्दमिति लक्षणे शब्दविज्ञानादित्यंशो दुर्निरूप इत्युक्तमिदानीं तदपेक्षार्थविज्ञानमि-
त्यत्रार्थशब्दार्थोऽपि विचारासह इत्याह अस्तु वेत्यादिना ॥

मानं भवन् शब्दः किं वक्तृविवक्षायां पदार्थसंसर्गविषयिण्यां लिंगतया भवेत् यथाहुः सौगताः वक्तुरभिप्रायं तु सूचयेयुरिति किं वा वक्तृप्रयोगमू
लभूतज्ञाने लिंगतया यथा वैशेषिकादयः उपलक्षणं चैतत् रागाभिप्राययोरपि किं वा वाक्यार्थे स्वभावत एव यथा मीमांसकाः ननावदा-
द्यौ ताभ्यां शब्दस्य व्यभिचारात् नाप्यंत्यः पदार्थेषु संगत्यसंभवेन तत्संसर्गरूपवाक्यार्थेपि प्रामाण्यायोगादिति संग्रहश्लोकयोजना इममे
व संग्रहं विवृण्वंति ननावदित्यादिना विवक्षाव्यभिचारमुदाहृत्य ज्ञानव्यभिचारमुदाहरति अन्यथाजानतोपीति तदुक्तं भट्टपादैः अन्य-
थासंविदानोपि विवक्षत्यन्यथा यतः तस्मादेकांततो नास्ति पुंवाक्यान्नद्वियां गतिरिति ननु नास्माभिः शब्दमात्रविवक्षाज्ञानयोः प्रमाणमित्युच्य
ते अपि त्वाप्तवाक्यं तस्य च ताभ्यां व्यभिचार इति शंकित्वा परिहरंति अस्तु नहीति आप्तवाक्येप्यर्थव्यभिचारदर्शनेन खलु विवक्षाज्ञा

शब्दो मानं विवक्षायां ज्ञानेर्थे वा भवन्भवेत् नाद्यौ तद्व्यभिचारित्वाच्चांत्यः संगत्ययोगतः ३१ ननावदेवदत्त गामभ्याजेति पदनि
चयस्तद्विवक्षायां तज्ज्ञाने वा लिंगतया मानं व्यभिचारित्वात् भ्रांतस्य पिपासोः पानीयविवक्षायां कुक्कुटं देहीति प्रयोगदर्शना
त् अन्यथाजानतोपि विप्रलंभस्यान्यथा प्रयोगदर्शनात् आप्तवाक्यमेव तयोर्लिंगं नेतरदिति चेत् अस्तु नहि तदर्थस्यैव प्रतिपा
दकत्वं तस्य तेनाव्यभिचारात् किंच वाक्यं वाक्यार्थेनाविशेषितज्ञानविवक्षयोर्मानमुत विशेषितयोः नाद्यः व्यवहाराभा
वप्रसंगात् द्वितीये तु तद्विशेषणीभूतोर्थः केनाधिगत इति वाच्यं न तावदन्यक्षेण नदीतीरे फलसत्तायाः श्रोतुरिंद्रियास

नयोः प्रामाण्यमाश्रीयते तत्रापि चेदाप्तवाक्यत्वेन विशेषणमर्थस्यैव किमिति न हि तादृशं वाक्यं प्रमाणं न स्यादस्ति ऽन्निकृष्टत्वात्॥
द्विते नापि तस्याव्यभिचार इत्यर्थः इतोपि विवक्षाज्ञानयोः प्रामाण्यं न संभवतीत्याह किंचवाक्यमित्यादिना किं ज्ञानविवक्षा मात्रयोर्वाक्यं
प्रमाणमुत तत्तद्वाक्यार्थविशेषितज्ञानविवक्षयोरित्यर्थः आद्यमसंभवेन दूषयति व्यवहारेति नहि ज्ञानमात्रविवक्षामात्रप्रति
पत्त्या गवानयनादौ प्रवृत्तिः संभवतीत्यर्थः द्वितीये तु ते वाक्यार्था ज्ञाता न वा आद्ये किमन्यतस्तेषां ज्ञानं शब्दत एव वा न तावदन्यत इ
त्याह न तावदन्यक्षेणेत्यादिना इंद्रियासन्निकृष्टत्वाद्वाक्यप्रयोगसमय इति शेषः ॥ ःः ॥ ६ ॥

ननु स्मृतिरेवसास्त्वनः संस्कारादेवप्राप्तेनितत्राह नाप्येनदवगतिरिति उपेक्षापक्षेपिनतावत्स्मृतिर्निरस्तत्वात् अनुभवपक्षेतु प्रमाणं नवाश्राद्येप्राह प्रत्यक्षेति द्वितीयेपिसंशयोविपर्ययोवानोभावपीत्याह नापिसंशयइति अस्तुनर्हि शब्दादेवतदधिगमइतिनेत्याह शब्दादेवेति यदाशब्दतोऽर्थंज्ञात्वातं ज्ञात्वातविवक्षां वाज्ञानं वाशब्देनलिंगभूतेनानुमीयतेताभ्यांचार्थानुमानंतथाचार्थज्ञाने विवक्षाज्ञानं विवक्षाज्ञानेचार्थज्ञानमितिपरस्पराश्रयइत्यर्थः किंच प्रथमतस्तवार्थप्रतीतौ नहि विवक्षया पुनस्तदनुमानंचतथेत्याह अनुमानेति अथवा नपरस्पराश्रयमर्थं व्याहृतविवक्षयापुनरर्थानुमानाभावाद्व्यवहारस्यप्राथमिकार्थप्रतीत्यैवोपपत्तेरिति यदिपरोब्रूयात्तंप्रत्याह अनु॰

नानुमानेनतद्व्याप्तलिंगाभावात् नाप्येतदवगतिः स्मृतिः पूर्वमननुभूतत्वात् नाप्युपेक्षा तस्याः प्रत्यक्षानुमानयोरन्तर्भावात् नापिसंशयः कोटिद्वयानवलंबित्वात् नापिविपर्ययः तत्रप्रवृत्तस्य तत्प्राप्त्यभावप्रसंगात् शब्दादेवतु तदधिगमेपरस्पराश्रयता अनुमानेनैवेयर्थ्यंच अनधिगमेतु नहि शिशुज्ञानानुमानायोगः नागृहीतविशेषणाविशेष्येबुद्धिरिति न्यायात् नापितृतीयः अर्थेनशब्दसंगत्यभावात् शब्दार्थयोरेकदेशकालत्वनियमाभावात् वाच्यवाचकलक्षणः संबंधोस्तीतिचेत्॰ ॥ ९

मानेति नर्हिप्राथमिकमर्थमतिलंघ्य विवक्षानुमानमनर्थकं तावन्मात्रादेवव्यवहारसिद्धेरित्यर्थः एवंज्ञायमानार्थव्यावृत्तविवक्षाज्ञानयोः प्रामाण्यमितिपक्षंदूषयित्वाऽज्ञायमान इतिपक्षंदूषयति अनधिगमइति अर्थेप्रमाणं शब्दइतितृतीयंपक्षंदूषयति नापितृतीय इति अर्थेनेति पदार्थेनसंगत्यभावात् पदनिचयस्य नपदार्थसमूहे प्रामाण्यमित्यर्थः ननु माभूदेकदेशादिनियमलक्षणः संबंधः वाच्यवाचकलक्षणस्त्वस्ति संबंध इतिशंकते वाच्येति संबंधव्यतिरेकेणार्थस्य वाच्यत्वं शब्दस्य वाचकत्वं वानसं॰ ॥ ९

भवतितत्रतस्यैवसंबंधोक्तावातन्माश्रयंस्यादितिपरिहरति वाचकत्वमित्यादिना गोशीघ्रुसदःस्वित्यर्थः असंबद्धस्यैववाच्यत्वंवाच
कत्वंवेत्याशंक्यातिप्रसक्तिःस्यादित्याह अंतरेणेति अस्तुवावाचकत्वंतथापिकस्यवाचकःशब्दइतिविकल्प्यदूषयति कस्यचायमित्यादि
नायद्यप्याकृत्यधिकरणेनियोगेनविकल्पेनद्वेवासहसमुच्चितेसंबंधःसमुदायोवाविशिष्टाचैकयापिवेतिवार्तिककारैर्बहवःपक्षाउपन्य

॥वाचकत्वंनामतद्विषयप्रतीतिजनकत्वंवाच्यत्वंतज्जन्यप्रतीतिविषयत्वंतदेवासतिसंबंधेकथंस्यादितिप
र्य्यनुयोगेनस्यादेवतद्भवतीतिब्रुवाणःप्रत्युक्तगोशीघ्रुकथंनापत्रपेत अंतरेणचसंबंधंशब्दस्यार्थविशेषप्रतीतिज
नकत्वेध्वस्यानुमानयोरपिसंबंधसमर्थनवैयर्थ्यापातःकस्यचायंशब्दोवाचकःकिंजातेरुतव्यक्तेःकिंवाजातिविशे
षितायाःव्यक्तेःनाद्यःविशेषविषयव्यवहाराभावप्रसंगात् अथजातावेवावसितसंगतिकानिपदान्यनाकलित
विशेषायास्तस्यावोद्धुमशक्यत्वात्तत्रापर्य्यवसितव्यापाराणिविशेषानपिवोधयंतीतिमतंतदपिनविकल्पासहत्वा
त् तथाहि प्रथमंजातिमात्रमववोध्यापर्य्यवसानादनंतरंविशेषमववोधयंतिकिंवातदभिंविनविशेषमेवजातिं नाद्यः
एकदतुद्ध्योर्विरम्यव्यापाराभावात् ॥

स्तात्तथापितेषामन्यंताभासत्वात्तैरेवनिरस्तत्वाच्चविस्तरभीरुणाचार्य्येणोहनोपन्यस्यनिरस्यंते जातिमात्रेगृहीतसंगतिकस्यव्यक्तावपर्य्य
वसानहत्त्यावोधकत्वमितिप्राभाकरीत्यापूर्ववादिनोक्तंविकल्प्यदूषयति तथाहीति यदिदमपर्य्यवसानाद्व्यक्तिवोधनंतत्किंजातिप्र
तीतेःपश्चात्किंवाजात्यासहैवेत्यर्थः आद्यमसंभवेननिरस्यति नाद्यइति ――――― वुद्धिग्रहणादृष्टांतार्थंद्वितीयेपिकिंव्यक्तावशक्तःशा
क्तोवानाद्यः अशक्तस्यतद्वाचकत्वाभावात् ॥ ॥

द्वितीयेपि व्यक्तिरपि शक्त्वा चेत्यप्रसिद्धं तानापत्तिरित्याह द्वितीयेपीति ननु व्यक्तावशक्तमेव पदं कथं तर्हि तत्र वृत्त्युत्पत्तिर्लक्षणयेति शंकते
अस्तु तर्हीति जातिव्यक्त्योः साधारण्येनासाधारण्येनोभयथापि चाविनाभावोऽसिद्ध इत्याह मैवमित्यादिना ननु जातिमात्रस्य न व्यक्तिमात्रे
णाविनाभावः किंतु तद्विशेषेणेति द्वितीयं पक्षं दूषयति न द्वितीय इति यद्गोत्वविशिष्टायां व्यक्तौ गोत्वस्याविनाभावस्तर्हि तेनैव सावर्तनं तदिति
वाच्यं तथा चात्माश्रयत्वमित्याह आत्माश्रयत्वादिति उपलक्षणं चैतत् जातेः जात्याविनाभावाश्रयात्माश्रयांतरस्यापि किंच गोत्वविशिष्टव्यक्तेर
विनाभावाद्गत्वस्य तेन द्विशेषराजातेरपि लक्ष्यत्वमित्यभिधेयशून्यता शब्दस्य स्यात्तदभावे च लक्षणापि न संभवेदिति नैरर्थक्यमेव शः

द्वितीयेपि विशेषेष्वपि पदानां शक्तिरस्ति न वा अस्ति चेज्जातिरेव शब्दार्थ इत्यभ्युपगमभंगप्रसंगः अस्तु तर्हि जातिरेव वा
च्या व्यक्तिस्तु तदविनाभावाल्लक्ष्येति चेन्मैवं अविनाभावासिद्धेः किं गोत्वजातेर्व्यक्तिमात्रेणाविनाभावः किं वा गोव्यक्त्या
नाद्यः गोत्वजातेर्घटादिव्यक्तिभिरविनाभावाभावात् न द्वितीयः आत्माश्रयत्वात् गोत्वजातिविशिष्टायां गोत्वस्य वर्तनं गोका
रात् विशिष्टस्य लक्ष्यत्वे विशेषणाभूतायाः जातेर्लक्ष्यत्वप्रसंगात् एतेन सास्नावत्त्वविशेषेणाविनाभाव इत्यपि प्रत्युक्तं किंच
सापि शक्तिरनधिगता न कार्याय पर्याप्तेति तदधिगतिरवश्याश्रयणीया न च साधारण्याविशेषाणामानंत्याद्व्यभिचाराच्च ना
नानीति ॥
((स्ति चेद्व्याघातः तत्रासमर्था निबोधयंति च

त्वसामान्यस्य समर्थितं स्यादित्यभिसंधिराह विशिष्टस्येति ननु सास्नावत्त्वविशेषेण गोत्व
जातेरविनाभावः न गोत्वविशिष्टेन तथा च नात्माश्रयतेति तत्राह एतेनेति सोपि हि गोत्वविशिष्ट एवेति पूर्वोक्तदूषणद्वयं स्यादित्यर्थः अनंत
व्यभिचाररूपो वा पूर्वोक्तदोषः किंच यथाकथापि भवत्वविनाभावः तथापि नासु व्यक्तिषु बोधनसामर्थ्यमस्ति न वा अस्ति चेदगृह्यमाणा वा
गृह्यमाणा वा आद्ये प्राह किंच सापीति अनधिगतलक्षणापरिकरं प्रत्यपि बोधकत्वप्रसंगाद्वितीयेपि द्रष्टव्यं द्वितीये प्राह न च सेति ननु नास्त्येव तादृशी

शक्तिरभिधेयनिष्ठत्वाल्लक्षेरिति तत्राह नास्ति चेदिति व्या
घातमेव दर्शयति तत्रेति ॥

किंचसर्वशब्दानांजातिरर्थः उतयत्रसंभवतितत्रेतिमतंनाद्यइत्याह अपिचेति नह्येकव्यक्तिषुकालादिषुजातिरस्तीतितद्वाचकश
ब्दानांनैरर्थक्यप्रसंगइत्यर्थः द्वितीयंशंकते यत्रेति सतद्व्यापकमुभयव्यतिरिक्तस्योपाधेरपिक्वचिच्छब्दार्थत्वाश्रयणादित्याह॥
नपाचकादीति अव्याप्तिद्वयंपरिहरन्शंकते अस्तुतर्हीति त्रितयंजातिर्व्यक्तिरुपाधिश्चेत्यर्थः सतदपिनसंभवतिउपाधेःशब्दार्थतायांजा
तिवदुपहितेषुव्यक्तिष्विवप्रवृत्त्यसंभवादेस्तुल्यत्वादित्याह नजातीति किंचत्रितयमपिकिंमिलितंशब्दार्थः किंवैकैकंनाद्यः प्रत्येकस्थलेतदभा
वात् द्वितीयोसिद्धःएकैकस्थलेतदितरयोरभावादेव अथान्यतमंशब्दार्थः स्यात्तान्यतमस्यत्रितयातिरिक्ततयादुर्वचत्वसाधस्ताक्ति

अपिचजातिरेवशब्दार्थइतिनियमेकालाकाशदिगादिशब्दानामवाचकत्वप्रसंगात्कालाकाशादौकालत्वादिजाते
रभावात् यत्रसंभवतितत्रजातिरितरत्रतुव्यक्तिरितिव्यवस्थेतिचेन्नपाचकादिशब्दानामुपाधिपरत्वस्वीकारात् अस्तुत
र्हि त्रितयंशब्दार्थइतिचेन्नजातिशब्दार्थत्वदोषाणामुपाधिष्वपितुल्यत्वात् नचत्रितयस्यमिलितस्यैकैकस्यवाशब्दार्थत्व
प्रयोजकताव्यभिचारित्वात् अन्यतमत्वस्यचखंडितत्वात् एतेनव्यक्तेरपिशब्दार्थताप्रत्याख्याता आनंत्यव्यभिचारयोस्त
त्रापितुल्यत्वात् विशिष्टस्यापिव्याप्ततत्वाविशेषाद्व्यक्तेरिवतस्यापिशब्दार्थतानिरसनीया अथजातिवैशिष्ट्यंसर्वत्रानुगत
मेवशब्दार्थस्तदापिजातेःशब्दार्थतायामुक्तंदूषणं

या समभिहारेयोरादहतत्वादित्याह अन्यतमत्वस्यचेति नदेवंजातिःशब्दा
र्थइतिप्रथमःपक्षःप्रतिक्षिप्तः द्वितीयंदूषयति एतेनेति लक्षणादियक्षोक्तदोषविशेषमतिदिश्यमानंविशदयति आनंत्येति जातिवि॥
शेषितोव्यक्तिःशब्दार्थःइतितृतीयपक्षेपिव्यक्तिपक्षोक्तदूषणमतिदिशति विशिष्टस्यापीति ननुनजातिविशिष्टाव्यक्तिःशब्दार्थःयेनानं
त्यादिदोषस्यात्किंतुसर्वविशिष्टेष्वनुगतंयज्जातिवैशिष्ट्यंतदेवशब्दार्थइतितदपिनतस्यापिजातिवदेवानुगतत्वाग्रहात्तेषुप्रवृत्त्यभावादेस्त

समभिव्याहृतस्य॥

व्यक्तिवैशिष्ट्यादिजातिमादितिः॥

यत्तु वाच्यवाचकत्वमेव संबंध इत्युक्तात्पूर्वदूषितः पक्षः तत्रैव सिंहावलोकितेन दूषणांतरमाह किंचेति संबंधिद्वयवर्त्येको हि संबंधो नाम न चैतत्तथेतीदं संबंध एव न भवेदित्यर्थः अत्र नैयायिकाः प्राहुः सांकेतिकः शब्दार्थयोः संबंध इति तदपि दूषयति एतेनेति अतिदिश्यमानमेवाह संकेतस्यापीति एवं मीमांसकानां शाब्दप्रमाणलक्षणे दूषणमुपसंहरति तस्मादिति नैयायिकसंमतमपि लक्षणं दूषयति तथेति लक्षणमलक्षणमित्यनुषज्यते अस्यातिव्याप्तिमसिद्धिं च श्लोकेनाह आप्तेति अनैकांतिकतां विवृणोति स्वकपोलेति नन्वो अस्मकार्थे

किंच वाच्यत्वमर्थस्य धर्मो वाचकत्वं च पदस्य तथा च प्रतिवस्तु नियते वाच्यत्वे वाचकत्वे च संबंधवाचोयुक्तिः कुतस्त्या एतेन सांकेतिकः शब्दार्थयोः संबंध इत्यपि परास्तं संकेतस्यापि ज्ञातो व्यक्तौ विशिष्टे वाभिहितन्यायेन दुर्ग्रहत्वात् तस्माच्छाब्दं शब्दाविज्ञानादसन्निकृष्टेऽर्थे बुद्धिरिति लक्षणमलक्षणं तथाप्तवाक्यं शब्दप्रमाणमिति नैयायिकानामपि आप्तोदीरितवाक्येषु मालतीमाधवादिषु व्यभिचारात्तन्नयुक्तमाप्तत्वस्यानिरुक्तितः ३२ स्वकपोलकल्पितमालतीमाधवादिवाक्येषु प्रमाणस्याभावादतिव्याप्तिः नहि पुराणस्येव सन्नाटकनाटकादिप्रबंधविरचनमात्रेणाप्तो भवति भवभूतिः उक्तं चैतद्विवेके न यदाप्तोऽपि कस्मैचिदुपदिशति तत्त्वयाननुभूतार्थविषयं वाक्यं प्रयोक्तव्यं यथाङ्गुल्यग्रे हस्तियूथशतमास्ते इति तत्रार्थव्यभिचारः स्फुट इति कश्चायमाप्तो नाम यथादृष्टार्थवादीति चेत्तर्हि भ्रांतवाक्येऽपि प्रसंगात्प्रमाणादृष्ट इति विशेषणेऽपि प्रमाणादृष्टस्य वचांसि नाप्तवाक्यान्यतो नातिव्याप्तिरिति तत्राह नहि पुरेति नाटकादिकाव्ययोगांता ऽप्रमादादिनान्यथाकथनेऽपि प्रसंगात्।।

नाटकविशेषा भवभूतिरत्रैकः स्वतदेव ग्रंथांतरस्थेन तद्वचनेन संमतयति उक्तं चैतदिति तत्राननुभूतार्थवाक्यस्योदाहरणत्वेनोपमानमप्यंगुल्यग्रादिवाक्यमाप्तोक्तवाक्यमेवेत्यतिव्याप्तिरित्यर्थः आप्तत्वस्यानिरुक्तितइत्येतद्विवृणोति कश्चायमिति भ्रांतवाक्य इति सोऽपि हि यथास्वेन दृष्टं तथैव वक्तीत्यर्थः ननु प्रमाणादृष्टार्थवक्ताप्तो नाम ततो भ्रांतेनातिव्याप्तिरिति तत्राह प्रमाणादृष्टेति।।

ननु न प्रमाणादृष्टस्य वदनमात्रं विवक्षितं येनान्यथावदनमादायातिव्याप्तिः स्यात्किंतु यथादृष्टं तथैव वदनमिति शंकते प्रमाणेनेति
अत्र किं प्रमाणादृष्टस्य तथावदनमात्रं विवक्षितमतिरिक्तावदनमपि वाद्येऽप्याह मैवमेकदेशेति द्वितीयं शंकते यावदिति तर्ह्यव्याप्ति
रित्याह अज्ञानेति नहि तेषां प्रमाणादृष्टत्वं व्याघातादित्यर्थः किमिदं निर्दोषत्वं किं सर्वविषये किंवा क्वचिद्दोषराहित्यमाद्ये व्याप्तिमाह
मैवमाप्तानामिति क्वचिद्रागादिदोषवतोऽन्यत्र यथार्थवदनमप्याप्तवाक्यं न स्यादित्यव्याप्तिरिति भावः द्वितीये त्वतिव्याप्तिर्यत्र क्वा
चिद्दोषरहितस्यान्यथावदनेऽपि प्रसंगात् ननु यत्र यो दोषरहितः स तत्राप्तो नान्यत्रेति शंकितेऽपि परिहरति यत्तच्छब्दयोरिति साधार॥

प्रमाणेन यथादृष्टं तथावादीति चेन्मैवमेकदेशेन तथाभूतवादित्वेऽप्यंशांतरेऽन्यथाभूतवादित्वेऽपि प्रसंगात् यावत्प्रमा
णादृष्टं तावत्तथैववक्ताप्त इति चेन्नाज्ञानसंदिग्धानुवादादिवाक्यप्रयोक्तुरनाप्तत्वप्रसंगात् अथ निर्दोषआप्त इति चेन्मैव
माप्तानामपि क्वचिद्रागादिदोषसंभवात् यत्र विषये यो निर्दोषः स तत्राप्त इति चेन्न यत्तच्छब्दयोर्विशेषविषयत्वेनासाधारण्या
दव्याप्तेः तस्मादाप्तवाक्य मागम इत्यत्र लक्षणे यथार्थवाक्यं शब्दप्रमाणमित्यपि न यथार्थत्वस्य प्रमितिखंडनावसर एव
खंडितत्वात् एतेन समयबलेन सम्यक्परोक्षानुभवसाधनं शब्द इति भूषणस्यापि लक्षणमपास्तं ऊर्ध्वीकृतेन तर्जन्यादशसं
ख्यानुमाने शंखध्मो नौ चानुविधेयपुरुषाभिप्रायानुमापके

णाविषयत्वेन च पूर्वोक्तातिव्याप्तिरित्यपि द्रष्टव्यं यथार्थत्वस्येति प्रमात्वव्यंज
कखंडनसमय इत्यर्थः आसर्वज्ञोक्तत्वलक्षणानुज्ञाव्यवहरणमतिदिशति एतेनेति अनुमानादित्याह इत्यर्थे समयग्रहणं प्रत्यक्षव्यावृत्त्यै परोक्षग्रह
णं संशयादिव्यावृत्त्यै सम्यग्ग्रहणं स्मृतिव्यावृत्त्यर्थमनुभवग्रहणं यत्र हि वणिजां समयबलेनोर्ध्वीकृतात्तर्जन्यंगुलिर्दशसंख्यामनुमापयति त
त्रानुमाने त्वदुक्तलक्षणमतिपतेदित्यर्थः अतिव्याप्त्यंतरमाह शंखध्मो नौ चेति अनुविधेयः प्रभुः तत्रापि हि प्रभोः सेनोद्योगपराक्रम्याद्यभिप्रायं समयबले

एवमधिकं दर्शयित्वा तिदिष्टांशं विशदयति समयेति तदित्थं प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीत्यक्षपादसूत्रपरिगणना॥ क्रमेण प्रमाणचतुष्टयं खंडितं इदानीं भाट्टप्राभाकराभिमतामर्थापत्तिं खंडयति तथेति दुर्भणमित्यनुवर्त्तते तत्र तावदर्थापत्तिल क्षणं दर्शयति दूषणाय अन्यथेति प्रत्यक्षादिष्ववच्छेदार्थमनुपपन्नदर्शनादित्युक्तं अनुपपद्यमानविषयनिर्विकल्पकदर्शना। न यत्सविकल्पकं तत्स्पर्शं स्मरणं वा भवतितदवच्छेदार्थमुपपादकइत्युक्तं तत्र हि द्विधार्थापत्तिः दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति तत्र प्रथ मामुदाहरंति यथा जीवतइति अत्र हि जीवतो देवदत्तस्य बहिरवस्थानं विनानुपपद्यमानगृहाभावदर्शनात्तदुपपादकबहिरव

समयस्सम्यक्त्वयोश्च पूर्वमेव निरासात् तदेवं शब्दलक्षणमपि दुर्भणमिति सिद्धम् तथार्थापत्तिलक्षणमपि अ न्यथानुपपन्नदर्शनात्तदुपपादके बुद्धिरर्थापत्तिः यथा जीवतो देवदत्तस्य गृहाभावमवलोक्य बहिरवस्थानज्ञानं। नन्विदमनुमानमेवास्तु देवदत्तो बहिरस्ति जीवनवत्त्वे सति गृहेऽभावात् संप्रतिपन्नवदिति चेन्नैवं देवदत्तप्रतियो गिकाभावस्य गृहाधिकरणतया देवदत्तधर्मत्वाभावात् गृहनिष्ठाभावप्रतियोगित्वं हेतुर्यद्यतिचेन्नैवम्॥ ९ ॥

स्थानज्ञानमर्थापत्तिरित्यर्थः तत्रैव वैशेषिकादेरनुमानांतर्भाववादिनो मतमाशंक्य मीमांसकः पार्थक्यं समर्थयते नन्वित्यादि ना अस्ति हि मैत्रस्य जीवनवत्त्वे पि गृहेऽभावस्य बहिरवस्थानस्य च परस्परं व्याप्तिरिति भावः मीमांसकः परिहरति नैवमि ति अत्र जीवनवत्त्वे सति गृहे भावादिति कोर्थः किं गृहनिष्ठाभावाधिकरणत्वादिति किं वा गृहनिष्ठाभावप्रतियोगित्वादि ति आद्येऽसिद्धिर्न हि गृहाधिकरणश्चैत्रप्रतियोगिकोऽभावश्चैत्रे वर्त्तते इति संभवति अतोपक्षधर्मत्वादसिद्धो हेतुरित्यर्थः दे
॥ वदत्तग्रहणं चैत्रोपलक्षणं द्वितीयं शंकते गृहनिष्ठेति दूषयति नैवमिति॥

अत्रानुमानप्रवृत्तिं दर्शयितुं भूमिकां परिशोधयति यदाजीवन्निति यः खल्वनुमाता चैत्रः तेनैव चैत्रेण यदा ग्रामाद्बहिरेव जीवन्नस्ति क्वचिद्देवदत्त इत्याप्तवचनादनिर्द्धारितदेशविशेषनिष्ठतया देवदत्तोऽवगतो भवति पुनश्च स एव चैत्रो ग्रामं प्रविश्य गृहमागत्य गृहान्तश्च तस्य जीवतोऽभावमवलोक्य बहिःसत्तामनुमिमीत इति वक्तव्यं इतरथा आप्तवाक्याज्जीवनमात्रानधिगमे जीवनवत्त्वे सतोऽतिविशेषणासिद्धिप्रसंगात् गृहाभावमात्रस्य बहिर्भावेनाविनाभावाभावाच्च प्रत्यक्षस्य च साधारण्येनाप्रवृत्तेरनुमानस्य च लिंगाभावादत्राप्तवाक्येन सामान्येन जीवनमवगत्य पश्चादनुमिमीत इति वक्तव्यमिति योजना भवत्वेवमेतावताऽनुमानाभावे कि-

यदा जीवन्नस्ति क्वचिद्देवदत्त इत्याप्तवाक्यादनिर्द्धारितदेशविशेषनिष्ठतया देवदत्तसत्तावगता ग्रामाद्बहिरवस्थितेनैव चैत्रेण स च तदागत्य गृहान्तस्तदभावमालोक्य बहिःसत्त्वमनुमिमीत इति वाच्यं तच्चानुपपन्नं साधारणदेशमात्रावस्थानविषयस्यागमस्या——र्थापत्त्या यावन्न बहिर्देशसत्ताविषयत्वं परिकल्प्यते तावदागमापबाधितविषयतयानुमानस्यानुत्थानात् कस्मिन्नेतु बहिर्देशविषयत्वेऽनुमानात्प्रागेवार्थापत्तिर्लब्धप्रमेयेति कृतमनुमानेनेति भा((ट्टाः प्रतिपेदिरे नेदमसुंदरम्॥

मायानमितितत्राह नचेति यत्खल्वाप्तवाक्यं सामान्येन स्थितिमवबोधयति तस्य किं गृहाद्बहिर्विषयतायां कुण्ठायामनुमानमिदं प्रवर्त्तते अकुण्ठायां वा न तावदकुण्ठायां तदाप्तागमस्य गृहेऽपि स्थितिबोधकत्वसंभवेन न हि गृहबहिरवस्थानानुमानस्य कालान्तरापरिच्छिन्नत्वादित्यर्थः अथ कुण्ठायां तत्राह कस्मिन्नेत्विति गृहेऽभावावेदकप्रमाणस्य सामान्येन स्थितिबोधकागमस्य च योऽयं विरोधस्तयानुपपत्त्यागमस्य बहिर्भावविषयत्वकल्पना तावदर्थापत्तिर्नाम नन्वप्रवृत्तौ चानुमानं निष्फलमित्यनुमानाप्रवृत्तिरर्थापत्तेश्चापार्थक्यमिति भाट्टानां समर्थनप्रकार इत्यर्थः अत्र सिद्धान्ती दूषयितुमुपक्रमते नत्विदमित्यादिना॥

आगमबाधपरिहारार्थमर्थापत्तिरपेक्षणीयेति हि तेनाभिहितं तत्रार्थापत्तिप्रवृत्तिव्यतिरेकेणैवागमबाधं परिहरन्ननुमानप्रवृत्तिं
दर्शयति श्लोकद्वयेन आगमस्येति सामान्येन प्रवृत्तागमस्य बहिर्विषयत्वकल्पनात्प्रागेव गृहाभावः केनचित्प्रमाणेन प्रमितो न वा य
दि प्रमितस्तर्हि तेनैवागमस्य निरूढत्वादनुमानं निर्विघ्नं प्रवर्त्ततां किमर्थापत्त्या अथ न प्रमितो गृहाभावस्तर्हि कथानुपपत्त्याग
मस्य बहिर्विषयत्वं कल्प्यत इत्यनुमानवदर्थापत्तेरप्यनुदय एवेति श्लोकयोजना श्लोकौ विवृणोति भाट्टानामित्यादिना गुड
जिह्विकया चेदनुमानस्यार्थापत्तिसमानयोगक्षेमत्वमुक्तं वस्तुतस्तु भवदर्थापत्त्युदयात्तार्किकानुमानोदयस्याधिक्यमस्ती

आगमस्य बहिर्देशविषयत्वस्य कल्पनात्प्रागेव देवदत्तस्य गृहेऽभावो मितो न वा ३३ आद्येऽनुमानं तेनैव निष्प्रत्यूहं प्र
वर्त्ततां द्वितीये कल्पकाभावादर्थापत्त्युदयः कुतः ३४ भाट्टानामप्याप्तवाक्यस्य बहिर्देशविषयत्वकल्पनात्प्रागेव दे
वदत्तस्याभावः प्रमितोऽप्रमितो वा प्रमितत्वे तेनैवानुमानोदयात् फलमर्थापत्तिप्रकल्पनाद्व्यर्थमनेन द्वितीये तु कल्पकाभा
वात्कुतोऽर्थापत्तेरुदयः इयांस्तु विशेषः प्रत्यक्षाभाववादिनो मते प्रत्यक्षस्यागमाद्बलीयस्त्वादागममनवगणय्यापि प्रत्यक्षा
धिगतगृहाभावलिंगेन भवति बहिर्देवदत्तसत्त्वानुमानमभावप्रमाणाधिगम्यत्वे पुनरभावस्यागमाद्दुर्बलतया तद्विरोधिगृहाभा
वस्यैव प्रमातुमशक्यतया नार्थापत्तिः प्रसरति सदुपलंभकप्रमाणप्रत्यस्तमय एवाभावप्रमाणप्रवृत्त्यंगीकारात्॥ त्याह इयांस्त्विति

प्रत्यक्षतः खलु गृहाभावस्तार्किकमतेऽधिगम्यते दृश्याभावत्वात् प्रत्यक्षसिद्धं सदनुमानमागमं तृणाय मत्वैव प्रवर्त्तते आदित्यवर्णाद्यागममिव
परमात्मन्यरूपत्वादनुमानं भवता त्वागमाद्दुर्बलमेव गृहाभावग्राहिप्रमाणमित्यर्थापत्तेरुदय एव विचारणीय इत्यर्थः तदुक्तं तत्त्वकौमुद्यां प्रमाणेन
निश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगादिति तस्माद्गृहाभावेन सिद्धेन बहिर्भावोऽनुमीयत इति युक्तमिति च॥
योग्यानुपलब्धेरागमादिदौर्बल्ये हेतुमाह सदुपलंभकेति सतो भावस्योपलंभकानि यानि प्रमाणानि तेषां प्रत्यस्तमयेऽनुदय एवाभावप्रमाणप्रवृत्तेरं

कारादितरथा सघटे भूतले निमीलितलोचनस्याभावनिर्णयप्रसंगादिति भावः॥

२
वि॰प्र॰
टी॰न॰
८६

अत्र तु वार्त्तिकसंमतिमाह यथाहुरिति वस्तुसत्त्वं वस्तुतत्त्वं भावरूपत्वेनेति यावत् तदवबोधार्थमित्यर्थः भंग्यंतरेणाप्यनुमानतामर्थापत्तेर
नुदयं च विकल्पपूर्वकमाह किंचेति कल्पकमिति गृहाभावादीत्यर्थः तेनेति कल्प्येन बहिर्भावेनेत्यर्थः स्यात्मनं कल्पकस्य कल्प्येन या व्याप्तिः सा
नुमित्युत्पादिका यस्तु कल्पकस्य कल्प्यासत्त्वे विरोधः सोर्थापत्तिजनक इति कारणभेदादनयोर्भेदः स एव च विरोधोत्र गमक इति नानु
मितित्वमिति शंकते अनुपपद्यमानस्येति तदेतदनिष्टान्तरापत्त्या दूषयति मैवमिति एवं सत्यनुपलब्धिलक्षणषष्ठप्रमाणमर्था
पत्तिरेव स्यादुच्यते हि तत्राप्यनुपलब्धेरनुपलभ्यमानघटसत्त्वे सति यो विरोधः स एव गमक इति वक्तुमित्यर्थः अनुमानापह्नवश्च

यथाहुः प्रमाणपंचकं यत्र वस्तुरूपे न जायते वस्तुसत्तावबोधार्थं तत्राभावप्रमाणतेति किंच यद्यस्य कल्पकमिष्यते तत्तेना
विनाभूतमिष्यते न वा आद्ये भंग्यंतरेणाभवनाप्यनुमानमेवाभिहितमिति न प्रमाणांतरएवकाशः द्वितीये त्वनियतमेव यत्किंचित्कल्प
येदिति नार्थापत्तिप्रमेयसिद्धिः अनुपपद्यमानस्योपपादकासत्त्वे विरोधो गमक इति नानुमानमिति चेन्मैवमनुपलब्धेरप्यनुपलभ्य
मानसत्त्वे विरोधस्यैवाभावगमकत्वे भावमानापह्नवप्रसंगात् धूमोपि धूमध्वजस्यासत्त्वे विरोधादेव तद्गमक इत्यनुमानविलया
पत्तेश्च यत्र कार्यं कारणाभावं विनाऽविनाभावादेव गमकत्वं रससरूपादौ तत्र भवत्येवानुमानं लब्धावकाशमिति चेन्न तत्रापि रूपासत्त्वे र
सस्य विरोधादेव गमकत्वोपपत्तेः कश्चायं विरोधः किं प्रमाणयोः १ उत प्रमाणत्वेनाभिमतयोः २ अनिर्णीतप्रामाण्याप्रामाण्ययोर्वा ३ सामा
न्यप्रवृत्तप्रमाणेन विशेषप्रवृत्तप्रमाणार्थबाधसंशयो वा ४ तर्कयोरेव वा ५ ॥ रसादित्याह धूमोपीति अनुमानस्यासाधारणं विषयं दर्श

यत्नंनंतरदोषं परिहरति पूर्ववादी यत्रेति कारणाभावे हि कार्यस्य विरोधः न च रसरूपादावकार्यकारणभूते स इत्यभिमानः पूर्ववादिनः ॥
तत्रापि विरोधं संभावयन्नुक्तदूषणं संस्मारयति सिद्धांती नेति एवमनुपपादकोपपाद्ययोर्विरोधोर्थापत्तिरित्यत्र प्रमाणांतरेष्वपि भावादतिव्याप्ति
रुक्ता इदानीं विरोधानिरूपणादसिद्धिरेवेति दर्शयिष्यन्विरोधं विकल्पयति कश्चायमिति सामान्यप्रवृत्तेति सामान्येन प्रवृत्तं यत्प्रमाणं जीवन्देवदत्तः क्व
चिदस्तीति तेन विशेषप्रवृत्तं यत्प्रमाणं गृहाभावग्राहि तदर्थस्य गृहाभावस्य बाधोस्ति न वेति योयं संशयः स चेत्यर्थः ॥ ॥

एम॰
८६

एवं विकल्प्य श्लोकेन संगृह्णाति दूषणानि तदसिद्धिरिति प्रमाणयोर्विरोधस्य वासिद्धः अन्यतरस्याप्रमाणत्वात् इतरथा वस्तुन एव द्वैरूप्या
पत्तेरित्यर्थः द्वितीये दूषणमाह अतिव्याप्तिरिति प्रमाणत्वेनाभिमतिर्नाम किं प्रमाणत्वेन भ्रान्तिः किं वा ज्ञानमात्रमुभयथा यथार्थप्रत्याभासे गमना
दतिव्याप्तिरित्यर्थः तृतीये दूषणमाह सक्तिः सप्रतिसाधन इति सप्रतिसाधनेऽप्यनिर्णीयमानप्रामाण्याप्रामाण्ययोरुभयोर्विरोधेर्थापत्ते
रुदयप्रसक्तिः ततश्चातिव्याप्तिरित्यर्थः चतुर्थमाह असंभव इति नहि यद्यत्र विशेषतः प्रमितं तस्य तत्रैव विपरीतप्रमाणविषयत्वसंशयः सं
भवति स्थाणुत्वनिर्णयेऽपि पुरुषत्वसंग्राहकप्रमाणप्रवृत्तिसंशयापातादित्यर्थः पंचमे दूषणमाह अतर्कताचेति मिथो विरोधेन तर्का

तदसिद्धिरतिव्याप्तिः सक्तिः सप्रतिसाधने असंभवोऽतर्कता च दोषास्तेषां क्रमादमी ३५ ततावदाद्यः उभयोः प्रामाण्ये विरोध
स्य विरोधे वाप्रामाण्यस्यैवासंभवादसिद्धेरन्यथा वस्तुनो द्वैरूप्यापत्तेर्नापि द्वितीयः अभिमतशब्देन भ्रमाभिधाने ज्ञानमात्रविव
क्षायां वा भ्रमज्ञानयोः प्रमाणत्वेन गृहीतयोर्विरोधाद्भिन्नविषयत्वकल्पनायामप्यर्थापत्तित्वप्रसंगात् नापि तृतीयः वायुर्वा
ह्यकरणप्रत्यक्षः अरूपिद्रव्यत्वात् कालादिवत् वायुः प्रत्यक्ष उपलभ्यमानस्पर्शाधिष्ठानत्वात् घटादिवदित्यनिर्णीतप्रामाण्याप्रा
माण्ययोरनुमानयोर्विरोधेऽप्यर्थापत्तेरुदयप्रसंगात् नापि चतुर्थः असंभवात् नहि यद्यत्र विशेषतः प्रमितं तस्य तत्रापि तद्विपरी
तप्रमाणविषयत्वसंशयः न खलु स्थाणुरयमिति निश्चयेऽपि स्थाणुर्वा पुरुषो वेति संशेरते जनाः नापि पंचमः मिथो विरोधेन तत

भासत्वापातादित्यर्थः एवमेते दोषास्तेषां पक्षाणां क्रमादुक्त्वा इति श्लोकयोजना संग्रहं विवृणोति न तर्कयोरेवाभासत्वात्॥
तावदित्यादिना विरोधस्यासिद्धेरित्युपरितनेनान्वयः अनुव्यवसायद्वारा मानसप्रत्यक्षत्वं संभवति तथेश्वरप्रत्यक्षत्वमेव सर्वस्येत्यप्रसि
द्धविशेषणतास्यादिति बाह्यकरणग्रहणं रूपादिव्यावृत्त्यर्थं द्रव्यग्रहणं घटादिव्यवच्छेदार्थमरूपिग्रहणं द्वितीयेऽप्यस्मदादिबाह्य
करणप्रत्यक्षत्वं साध्यं परमाण्वादिव्यभिचारवारणायोपलभ्यमानपदं तदुक्तं न्यायकुसुमांजलौ अनियम्यस्य नायुक्तिर्नानि
यंतोपपादकः नमानयोर्विरोधोऽस्ति प्रसिद्धे वाप्यसौ समइति॥ ॥ ९

प्रकारांतरेणार्थापत्तिंदूषयति किंचोपपादकेति येनहिदेवदत्तवहिर्भावेनविनागृहाभावोनोपपद्यतेसकिंप्रमितोनवाआद्येऽर्थापत्तिवै-
यर्थ्यमित्याह प्रथमइति द्वितीयेप्राह द्वितीयेत्वित्यादिना अन्यथानुपपत्तिदर्शनंहिकल्पकं अन्यथेतिचकोर्थः वहिर्भावव्यतिरेकेणे-
तितथाचवहिर्भावेऽज्ञातेतद्विशेषितेतरदंतरेणानुपपद्यमानत्वमपिनज्ञानमितिकल्पकाभावादनुदयएवार्थापत्तेरित्यर्थः तदुक्तं
श्रीहर्षकविभिः यतोन्यत्वंतत्सिद्धेरग्रेतदसिद्धेरिति एतेनश्रुतार्थापत्तिरपिप्रत्याख्यातावेदितव्या अनुपपद्यमानवाक्यै-
कदेशादर्शनेनवाक्यैकदेशकल्पनंहिसातथाहि पीनोदेवदत्तोदिवानभुंक्तइतिवाक्यैकदेशश्रवणाद्रात्रौभुंक्तइतिवाक्यै-
कदेशकल्पनंनचैषाप्रयुज्यतेपूर्वोक्तन्यायेनानुमानताया दुष्परिहरत्वात् किंच नात्रवाक्यमंतरेणवाक्यस्यानुपपत्तिः न

किंचोपपादकेनयेनविनानुपपद्यमानत्वंतत्प्रमितंनवा प्रथमेगृहीतग्राहिकार्थापत्तिर्नप्रमास्यात् द्वि-
तीयेतुविशेषणासिद्धेस्तद्विशेषितानुपपद्यमानार्थप्रतीतौकल्पकाभावान्नार्थापत्तिरुदयमासादयेत् ॥
इत्यलमतिविस्तरेण अभावाख्यंप्रमाणमपिदुर्निरूपम् ॥ ६ ॥

त्वस्यैवानुपपत्तिः शाब्दीह्याकांक्षाशब्देनैवपूरणीया नहिपचतीतिपदंप्रत्यौदनेननिराकांक्षमपित्वोदनपदादिह पीनोदेवद-
त्तोदिवानभुंक्तइतिवाक्यस्याकांक्षारात्रौभुंक्तइत्यनेनैवपूरणीयेति नतस्यवाक्यस्यसंपूर्णक्रियाकारकतयानिराकांक्षत्वेन दृ-
ष्टांतवैषम्यात् अथपीनोनभुंक्तइत्यभोजनेननान्वेतिभोजनकार्यत्वात्पीनतायाइतिमतेहंततर्हिनैयमाकांक्षाअपितुयोग्यताव-
रहः नत्वसौव्यक्तित्रैकाल्यभोजननिषेधेहिसंभवेत् नह्यभुक्ताहस्रामपिपीनस्तिष्ठति इति नवात्रतथानिषेधःदिवानभुंक्तइतिविशे-
षनिषेधात् यदितुविशिष्टकार्यदर्शनाद्रात्रिभोजनानुमानमनुमन्यामहेतरांतदानंतुरात्रिभोजनवाक्यकल्पनावकाशः तदेतदखि-
लमितिनासूत्रयन्नुपसंहरति इत्यलमतिविस्तरेणेति इदानींभाट्टाभिमताभावप्रमाणंदूषयति अभावाख्यमिति॥ ६ ॥

तदभिमतं लक्षणं तावद्दर्शयति एवं तर्हीति विषयविषयाविनाभूतत्वातिरिक्तोपलब्धिकारणसंपत्तिर्योग्यता तत्संपत्तौ सत्यां यो
यमर्थोपलब्ध्यभावस्तत्करणकं पदार्थाभावज्ञानं तदभावप्रमाणं भाट्टवेदान्तिनो हि ज्ञानमेव मुख्यं प्रमाणं प्राकट्यसंवेदनयोः फ।
लत्व मस्यादौ तौपचारिकः प्रमाणव्यवहारस्तेनाभावज्ञानं प्रमाणमित्यर्थः शाब्दानुमानिकाभावज्ञानव्यवच्छेदाययानुपलब्धिकरण
कमित्युक्तं अयोग्यस्यानुपलब्धिमात्रादभावमात्रव्यवच्छेदार्थं योग्यपदं उदाहरति यथेति नन्वज्ञानकरणजत्वात्प्रत्यक्षमेतदिति त
त्राह नचेदं प्रत्यक्षमिति ननु संयुक्तविशेषणतालक्षणसन्निकर्षात्प्रत्यक्षमेतदिति तार्किकास्तत्कथं पृथक्प्रमाणमिति तत्राह न
ह्यभावेत्यादिना नन्वस्त्येव विशेषणविशेष्यभावसंबंध इति तत्राह नापि विशेषणेति संबद्धयोर्हि दंडदेवदत्तयोः पटशौक्ल्ययोर्वा विशेष

एवं हि वर्णयंति योग्यानुपलब्धिकरणकमर्थाभावज्ञानमभावः यथेह भूतले घटो नास्तीति ज्ञानं नचेदं प्रत्यक्षं इंद्रि
यसंनिकर्षाजन्यत्वात् नह्यभावेनेंद्रियसन्निकर्षः संयोगः समवायो वा संभवति तयोर्भावधर्मत्वात् नापि विशेषणविशेष्य
भावस्तस्यापि मूलसंबंधगर्भतया तन्निवृत्तौ निवृत्तेः अंतरेणापि मूलसंबंधं विशेषणविशेष्यभावांगीकारेपि तस्य प्र
त्यक्षांगतायाः पुरैव निरासात् नचेदमनुमानादावंतर्भवति चक्षुरादिवदनुपलब्धेरज्ञायमानाया एव करणत्वात् ॥ २॥

णविशेष्यभावो दृष्ट इति भावः ननु मूलसंबंधं विनैव निर्घटं भूतलमित्यभावभूतलयोर्विशेषणविशेष्यभावो भवद्भिरेवांगीकृत इति त
त्राह अंतरेणापीति पुरैवेति प्रत्यक्षधर्मिकानुमानमात्रप्रविलयप्रसंगापत्तेर्वक्ष्यमाणत्वादित्यर्थः नचासंबद्धस्यापि प्रत्यक्षत्वे को दोष इति
वाच्यं अतिप्रसंगस्यैव दोषत्वात् नच तत्परिहारिकादृश्यानुपलब्धिर्भविष्यतीति वाच्यं तथा सति तावन्मात्रस्यैव करणत्वे नैंद्रियवैयर्थ्यात्
नचांधस्यापि शुक्लपटेकार्ष्ण्याभावप्रमितिप्रसंगः प्रतियोगिग्राहकेंद्रियेणैवाश्रयग्रहणस्याप्यंगत्वात् नच व्योम्नि स्पर्शाभावो ग्रहणप्रसं
गः प्रमाणांतरनिबंधनत्वात्तद्ग्रहणस्य अनुपलभ्यमानदेवदत्तकुंडलादौ देवदत्ताभावग्रहणेपि नानुपपत्तिरिति अस्तु तर्ह्यनुमा
नमेवास्तां नाभावस्तथा च सोगतैरनुपलब्धिलक्षणलिंगान्तरं स्वीक्रियत इति तत्राह नचेदमिति ज्ञायमानकरणं ह्यनुमानमियं तु न तथे

२
वि·प्र·
टी·न·
८७

प्रकारांतरेणार्थापत्तिं दूषयति किंचोपपादकेति येनहिदेवदत्तबहिर्भावेनविनागृहाभावोनोपपद्यतेसकिंप्रमितोनवाआद्यःर्थापत्तिवै
यर्थ्यमित्याह प्रथमइति द्वितीयेप्राह द्वितीयेत्वित्यादिना अन्यथानुपपत्तिदर्शनंहिकल्पकं अन्यथेतिचकोर्थः बहिर्भावव्यतिरेकेणे
तिनथाचबहिर्भावेःज्ञातेतद्विशेषितेतदंतरेणानुपपद्यमानत्वमपिनज्ञातमितिकल्पकाभावादनुदयएवार्थापत्तेरित्यर्थः तदुक्तं।
श्रीहर्षकविभिः यतोन्यत्वं तत्सिद्धेरग्रेतदसिद्धेरिति एतेनश्रुतार्थापत्तिरपिप्रत्याख्यातावेदितव्या अनुपपद्यमानवाक्यै।
कदेशदर्शनेनवाक्यैकदेशकल्पनं हि सा तथाहि पीनोदेवदत्तोदिवानभुंक्त इतिवाक्यैकदेशश्रवणाद्रात्रौभुंक्ते इति वाक्यै।
कदेशकल्पनंनचैषाप्रयुज्यतेपूर्वोक्तन्यायेनानुमाननयाद्दृष्यपरिहरत्वात् किंच नात्रवाक्यमंतरेणवाक्यस्यानुपपत्तिः न

किंचोपपादकेनयेनविनानुपपद्यमानत्वंतत्प्रमितंनवा प्रथमेगृहीतग्राहिकार्थापत्तिर्नप्रमाणस्यात् द्वि
तीयेतुविशेषणासिद्धेस्तद्विशेषितानुपपद्यमानार्थाप्रतीतौकल्पकाभावान्नार्थापत्तिरुदयमासादयेत्॥
इत्यलमतिविस्तरेण अभावाख्यप्रमाणमपिदुर्निरूपम्॥ ९ ॥

त्वस्यैवानुपपत्तिः शाब्दीह्याकांक्षाशब्देनैवपूरणीया नहिपचतीतिपदंप्रत्यश्नौदनेननिराकांक्षमपित्वोदनपदादिहपीनोदेवद
त्तोदिवानभुंक्त इतिवाक्यस्याकांक्षा रात्रौभुंक्तइत्यनेनैवपूरणीयेति ननस्यवाक्यस्यसंपूर्णक्रियाकारकतयानिराकांक्षत्वेन दृ।
ष्टांतवैषम्यात् अथपीनोनभुंक्तइत्यभोजनेनतात्वेतिभोजनकार्यपीत्वात्पीनतायाइतिमतंहंततर्हिनेयमाकांक्षाअपितुयोग्यताविर
हःनचसोप्यस्तित्रैकाल्यभोजननिषेधेहिसभवेत् नह्यभुक्त्वाकारणमपिपीनस्तिष्ठतिइति नवात्रतयानिषेधःदिवानभुंक्तइतिविशे
षनिषेधात् यदितुविशिष्टकार्यदर्शनाद्रात्रिभोजनानुमानमनुमन्यामहेनरांतदानतुरात्रिभोजनवाक्यकल्पनावकाशः तदेतदखिल
मितिनासूचयन्नुपसंहरति इत्यलमतिविस्तरेणेति इदानीं भाट्टाभिमताभावप्रमाणं दूषयति अभावाख्यमिति॥ ९ ॥

एम·
८७

तदभिमतं लक्षणं तावद्दर्शयति एवं तर्हीति विषयविषयाविनाभूतव्यतिरिक्तोपलब्धिकारणसंपत्तिर्योग्यता तत्संपत्तौ सत्यां यो यमर्थोपलब्ध्यभावस्तत्करणकं पदार्थाभावज्ञानं तदभावप्रमाणं भाट्टवेदान्तिनो हि ज्ञानमेव मुख्यं प्रमाणं प्राकट्यसंवेदनयोश्च फ-लत्वमस्मादौ त्वौपचारिकः प्रमाणव्यवहारस्तेनाभावज्ञानं प्रमाणमित्यर्थः शाब्दानुमानिकाभावज्ञानव्यवच्छेदाययानुपलब्धिकरण-कमित्युक्तं अयोग्यस्यानुपलब्धिमात्रादभावमानव्यवच्छेदार्थं योग्यपदं उदाहरति यथेति नन्वज्ञानकरणजत्वात्प्रत्यक्षमेतदितित-त्राह नचेदं प्रत्यक्षमिति ननु संयुक्तविशेषणतालक्षणसन्निकर्षात्प्रत्यक्षमेतदिति तार्किकास्तत्कथं पृथक्प्रमाणमिति तत्राह न ह्यभावेत्यादिना नन्वस्त्येव विशेषणविशेष्यभावसंबंध इति तत्राह नापि विशेषणेति संबद्धयोर्हि दंडदेवदत्तयोः परशोणत्वयोर्वा विशेष-

एवं हि वर्णयंति योग्यानुपलब्धिकरणकमर्थाभावज्ञानमभावः यथेह भूतले घटो नास्तीति ज्ञानं नचेदं प्रत्यक्षमिंद्रि-यसंनिकर्षाजन्यत्वात् नह्यभावेनेंद्रियसन्निकर्षः संयोगः समवायो वा संभवति तयोर्भावधर्मत्वात् नापि विशेषणविशेष्य-भावस्तस्यापि मूलसंबंधगर्भतयानतिवृत्तेः अन्तरेणापि मूलसंबंधं विशेषणविशेष्यभावांगीकारेऽपि तस्य प्र-त्यक्षांगतायाः पुरैव निरासात् नचेदमनुमानादावंतर्भवति चक्षुरादिवदनुपलब्धेरज्ञायमानाया एव करणत्वात् ॥ ३ ॥

णविशेष्यभावो दृष्ट इति भावः ननु मूलसंबंधं विनैव निर्घटं भूतलमित्यभावभूतलयोर्विशेषणविशेष्यभावो भवद्भिरेवांगीकृत इति त-त्राह अंतरेणापीति पुरैवेति प्रत्यक्षधर्मिकानुमानमात्रप्रविलयप्रसंगापत्तेर्वन्हिशैत्यउक्तत्वादित्यर्थः नचासंबद्धस्यापि प्रत्यक्षत्वे को दोष इति वाच्यं अतिप्रसंगस्यैव दोषत्वात् नच तत्परिहारिका दृश्यानुपलब्धिर्भविष्यतीति वाच्यं तथा सति तावन्मात्रस्यैव करणत्वेनेंद्रियवैयर्थ्यात् नचांधस्यापि शुक्लपटे कालाभावप्रमितिप्रसंगः प्रतियोगिग्राहकेंद्रियेणैवाश्रयग्रहणस्यांगत्वात् नच व्योम्नि स्पर्शाभावो ग्रहणप्रसं-गः प्रमाणांतरनिबंधनत्वात्तद्ग्रहणस्य अन्तस्ववस्यमाणदेवदत्तकुंडलादौ देवदत्ताभावग्रहणेऽपि नानुपपत्तिरिति अस्तु तर्ह्यनुमा-नस्यैवास्यांतर्भावस्तथाच सौगतैरनुपलब्धिलक्षणं लिंगांतरं स्वीकृयत इति तत्राह नचेदमिति ज्ञायमानकरणं ह्यनुमानमियं तु न तथे

२
चि॰प्र॰
टी॰न॰
७८

अथ किमिति ज्ञायमानतयैव करणं न भवेत्तत्राह अन्यथेति अयमर्थः अनुपलब्धेरभावत्वेन प्रत्यक्षत्वनिरासात्तद्धि शेषमानस्य प्रत्यक्षत्वं दूरोत्सारितं नित्यानुमेयत्वाच्च ज्ञानस्य तद्दृश्यप्रतियोगिकत्वमत एव ज्ञानविकल्पानामप्यात्मभावाभावसंवेदनादिति सूत्रमप्यनवकाशं तस्मादनुपलब्धिरेवानुपलब्धिसंवेदनेपि शरणं तथा च तत्र तत्रापि तथैत्यनवस्था स्यादिति एवं समर्थितमभावप्रमाणं दूषयति सिद्धान्ती तदयुक्तमिति अस्य तावदनुमानान्तर्भावं श्लोकेन दर्शयति केवलेपि अत्र तावदनुपलंभमात्रस्याभावबोधने सुषुप्त्यादौ व्यभिचारात्तन्निवारणाय योग्यतालक्षणविशेषणं प्रक्षिप्यते भवद्भिस्तथा च धूमादिवदव्यभिचारेणाभावबोधकत्वात्तज्जन्याभावधीरनुमानं कुतो न स्यात्किंतु

अन्यथानुपलब्धेरप्यनुपलब्ध्यंतरोपलभ्यमानतायामनवस्थानादिति तदयुक्तं केवलानुपलंभस्य व्यभिचारनिवारणी योग्यता चेत्कुतो न स्यादनुमानमभावधीः ॥ २६ ॥ अनुपलंभमात्रस्य सुषुप्त्यादावभावज्ञानाजनकतया न व्यभिचारवारणाय योग्यानुपलब्धिरिति विशेष्यते नेति चेन्न हि योग्यानुपलब्धेर्धूमादिवदव्यभिचारितयाऽभावज्ञानजनकत्वोपपत्तौ कुतः प्रमाणान्तरता नचाज्ञायमानतया करणत्वे। नानुमानाद्धि भेदोऽन्यथानवस्थाप्रसंगादिति वाच्यं स्वतःसिद्धसाक्षिप्रसादादेवोपलब्धिवदनुपलब्धेरपि सिद्धावनवस्थादुःस्थताऽभावात् अन्यथानवस्थायास्त्वयापि दुरुत्तरत्वात् तथाहि अनुपलब्धेः सर्वथानवगतत्वे तत्करणत्वस्य दुरधिगमत्वात्तदधिगतिरवश्याभ्युपगमनीया। सापि चेदनुपलंभान्तरात्स्यात्तदपि तथैवेति कथं नानवस्था एवं तत्र तत्र प्रमाणानुपन्यासेन तदनुपलंभस्य तथात्वं वा सिद्धिः प्रपंचितं चैतत्पुरस्तात्॥

स्यादेवेति योजना एतदेव विवृणोति अनुपलंभेति नन्वव्यभिचारेप्यज्ञातकरणत्वान्नानुमानमित्युक्तमिति तत्राह नचेति स्यादयं दोषो भवन्मते अस्मन्मते तु स्वप्रकाशसाक्षिवेद्यत्वाद् ज्ञानतदभावयोर्ज्ञातकरणत्वेनाप्यनवस्थेत्याह स्वतःसिद्धेति ननु तादृक्साक्षिचैतन्ये सिद्धे स्यादयं परिहारो भागीन तदेवङ्गुलीसीरसदृशं प्रमाणाभावादिति तत्राह अन्यथेति सर्वथाऽज्ञायमानानुपलब्धेः प्रमितिकरणत्वमपि दुर्भणमिति कदाचिदपि ज्ञप्तिरवश्याभ्युपगमनीया तथा च त्वदुक्तरीत्यानवस्थाक्रान्त्या त्वय्येव प्रतिक्रान्ता स्यादिति साक्षिणोवतत्वापि रसाविधानव्येति खंडलकार्थः वक्ष्यते च साक्षिसिद्धो प्रमाणगणश्चतुर्थपरिच्छेदे पुरस्तादिति ईदृश्यनवस्था स्वप्रकाशवादादौ प्रपंचितेत्यर्थः॥

राम॰
७८

स्वंप्रौढवादेनानुमानांनर्भावउक्तइदानींभवतुवानंतर्भावस्तथापिनैतस्यप्रमाणान्तंप्रमाणाघातंसहते इतिप्रामाण्यिकप्रपंचरूची।
न्माद्दृग्वन्याह भवतुवेत्यादिनाउपलब्धिप्रागभावलक्षणानुपलब्धेर्नाभावप्रमितिनियतिस्तदभावेपिघटोपलब्धिप्रसंगसमयेऽभावप्रमि।
तिदर्शनादित्याह नाद्यइति उपलब्धिप्रध्वंसोऽभावप्रमितिकरणमितिपक्षंदूषयति नापिद्वितीयइति कारणनिष्ठः कार्यसंसर्गाभावो।
हिप्रागभावः नचतत्प्रमितिसमयेप्रतियोग्युपलब्धिप्रध्वंसोस्तिउपलब्धेरसंजातत्वात्प्रमितिर्हि प्रतियोग्युपलब्धिरभिप्रेतानचतादृशप्रतियोगि
प्रमितिरस्तिनित्यमविद्यमानार्थत्वादितिभावःएवमत्यंताभावेपि उपलब्ध्यन्योन्याभावपक्षंदूषयति नापीति नहिघटोपलब्धिरेवघटइति घ
टोपलब्धिसमयेपितदन्योन्याभावस्यसत्वात् घटाभावप्रमितिः स्यादित्यर्थः उपलब्ध्यत्यंताभावपक्षेदूषणमाह दृष्टेति दृष्टःसन्नष्टो।

भवतुवाभिन्नैवानुपलब्धिरनुमानात्तथापिनाभावः प्रमितिकरणंविकल्पासहत्वात्तथाहिकिमुपलब्धेःप्रागभावोनु
पलब्धिरुतप्रध्वंसःकिंवान्योन्याभावोत्यंताभावोवानाद्यः दृष्टनष्टेघटेउपलब्धिप्रागभावाभावेप्यभावप्रमिति दृष्टेर्ना
पिद्वितीयःप्रागभावात्यंताभावप्रमित्यनुत्पत्तिप्रसंगात्प्रतियोग्यु पलब्धेरसंजातत्वादेवतत्प्रातियोगिकप्रध्वंसाभावात्
नापितृतीयःसत्यपिघटोपलंभेतदभावप्रतीतिप्रसंगात् नापिचतुर्थः दृष्टनष्टाद्यभावेप्रमित्यनुदयापत्तेः एतेनोपलं
भसंसर्गाभावःकारणमित्यपिनिरस्तं तत्रापिप्रागभावादिविकल्पानामप्रतिवद्धप्रसरत्वात् अन्यतमखंडनस्यपू
र्वमेवकृतत्वात्॥

योघटस्तदभावस्यप्रमितिर्नस्यात् घटोपलब्धेर्जातत्वेनतदत्यंताभावाभावादित्यर्थःआदिशब्दादनुत्पन्नग्रहणं
ननूपलब्धिसंसर्गाभावोनुपलब्धिरभावप्रमितिकरणंतेनतपूर्वोक्तदोषःप्रागभावादिव्यभिचारेपिसंसर्गाभावस्याव्यभिचारादितितत्राह एते
नेति अतिदेशंविशदयति तत्रापीति किंसंसर्गप्रागभावःकिंवातत्प्रध्वंसइतिविकल्पजालस्यतुल्यत्वादित्यर्थःअस्तुतर्हिप्रागभावाद्यन्यतमः
इतितत्राह अन्यतमत्वेति एवमनुपलब्ध्यनवधारणात्तस्याअभावप्रमितिकरणमित्युक्तमिदानींभवतुयाकाचिदनुपलब्धिस्तथापित
स्याः करणत्वंनभवति तल्लक्षणरहितत्वादित्याह नचेत्यादिना व्यापारवद्धिकारणंकारकंतद्धिशेषश्चकरणमतोव्यापाराऽभावेनुपलब्धेः क

नतुकिमितिव्यापाराभावः यावताप्रतियोगिस्मरणमधिकरणग्रहणंवाव्यापारोऽस्तीतितत्राह नचेति ननुयद्यपिभावविषययोरधिकरणग्रह णप्रतियोगिस्मरणयोःस्वविषयजन्यतयासंस्कारजन्यतयाचानुपलब्ध्यजन्यत्वंतथापितद्व्यापारत्वंकिंनस्यादित्यतआह तज्जन्यइति तेनकर णेनजन्यत्वेसतितत्करणजन्यक्रियाजनकोऽयंअसौतद्व्यापारइत्यर्थः ननुनास्माभिरनुपलंभमात्रस्यकरणत्वमभिप्रेयतेयेनतद्व्यापारश्चिं त्येतापितुयोग्यतावतोऽनुपलंभस्यतादृशस्यचातद्भूतभूतलादिरूपत्वेनतज्जन्याधिकरणग्रहणादिव्यापारकत्वादस्त्येवकरणत्वमितिशं कतेकेवलेति योग्यतयाव्यापारवत्तांदर्शयन्तत्स्वरूपमाह तत्तदविनाभूतेति तस्माद्धिषयात्तदविनाभूताद्धिषयसन्निकर्षादेर्हेतोर्न तद्यप्रतियोगिप्र मितिकरणंतस्याकरणस्ययोग्यतातथाचतज्ज्ञानान्यवांतरव्यापाराणांभविष्यतीत्यभिप्रायःतदेतदतिप्रसंगाद्दूषयति तर्हीति अस्तिहिघटप्रसस्थानू

नचानुपलब्धेःकरणत्वमवांतरव्यापाराति रूपणात् नचप्रतियोगिस्मरणमधिकरणग्रहणंवातद्व्यापारस्तयोर्भावविषयोरनु पलभाजन्यत्वात्तज्जन्यस्तज्जन्यजनकोव्यापारइतिहिनहिदः केवलानुपलंभस्यतद्जनकत्वेपियोग्यताविशिष्टस्यास्त्येवतज्जनक तातत्तदविनाभूतेनप्रमाकरणसाकल्यंहियोग्यतेत्यंगीकारादितिचेत् तर्हिभावप्रमितौतामिंद्रियादिसहकृतभावानुपलंभकारण जन्यतयातासुतासुप्रमासुसाधारणकारणत्वप्रवादःप्रत्यस्तमियात् कथमयमनुपलंभःकिंप्रमाभावःकिंवाज्ञानमात्राभावःना द्यः इदंरजतमितिरजतारोपस्थलेरजताभावप्रमित्यजनकेरजतप्रमाभावेतिव्याप्तेःअन्यथारजतारोपस्यैवतस्यातत्वापिहिती

र्वस्मयोऽनुपलंभःअस्तिचप्रतियोगिप्रमापकमिंद्रियादिसाकल्यंनचविषयसत्ताऽपराधीयान्भावप्रमितिंप्रत्यनुगुणत्वादितिसर्वत्रतत्तदिंद्रि यादिसहितानुपलब्धिरेवकरणंतथाचेंद्रियादेःकरणत्वप्रसिद्धिर्विरुद्ध्येतेत्यर्थःएवमनुपलब्धेःकरणत्वंनसंभवतीत्युक्तमिदानीमनुपलब्धिरि त्यत्रनञासमस्यमानोपलंभशब्देनप्रमितिर्वाज्ञानमात्रंवाभिधीयतेउभयथाप्यनुपपत्तिरितिदूषयति कथमयमिति इदंरजतमिति अस्ति हितत्रप्रतियोगिरजतप्रमित्यभावः अस्तिचयोग्यतेंद्रियादेर्विद्यमानत्वादितरथाधिष्ठानस्याप्यग्रहणप्रसंगादथचनरजताभावप्र मित्युदयइत्यतिव्याप्तिरित्यर्थः अथकथमभावप्रमित्यनुदयस्तत्राह अन्यथेति तद्धारोप्याभावप्रमितावपितत्रारोपःसंभवत्यतिप्रसं

द्वितीयेप्यतिव्याप्तिमाह शंखधवलिमेति यद्यपि हि कश्चिद्दुर्बलः शंखइतिचेतसा शंखधवलिमानमनुसंदधाति तदापि पीतपित्तोपहतनयनत
या पीतः शंखइतिभ्राम्यति नत्वधवलिमानुसंधानसमये पीतज्ञानं नासीत् ज्ञानद्वययौगपद्याभावात् ततश्च योग्यतोपेतपीतोपलंभाभावस्तत्
नीमस्ति नास्ति च पीतशंखाभावप्रमित्युत्पत्ति रक्तवस्त्रशोभमदर्शनात् तत्तावकलक्षणं तत्रातिव्याप्तमित्यर्थः इदानीमेतत्प्रसंगाद्भावमात्र
स्यैवानिरूपितत्वं दर्शयितुमुपक्रमते अपि चेत्यादिना अभावइत्यत्र नञस्तदन्यत्वतदभावत्वतद्विरोधित्वार्थाभिप्रायेण विकल्पत्रयोन्यान्तरे
तु षडपि पक्षा वैवक्षिकाः स्वभावप्रत्यासन्नइति नहि भूतलघटाभावयोरन्यः संबंधः प्रत्यासत्तिः संबंधान्तराभावादित्यर्थः नद्वितीयइति भाव

।।शंखधवलिमप्रतिसंधानवतः पीतइतिभ्रमानुदयप्रसंगात् अपि च यत्राभावएव लक्षणानोदुर्निरूपः कुतस्तत्रेदं प्र
माणमिदं प्रमेयमिति विचारावतारः तथाहि कोयमभावः भावादन्यो वा १ भावत्वानधिकरणं वा २ भावविरोधी वा ३ भावेन स्व
भावप्रत्यासन्नो वा ४ नास्तीति प्रत्ययविषयो वा ५ प्रतियोगिसापेक्षनिरूपणो वा ६ असतीति बुद्धेर्विषयो वा ७ निर्विकल्पकबुद्धेर
विषयो वा ८ भावलक्षणारहितो वा ९ नाद्यः भावस्यापि भावान्तरान्यत्वेनातिव्याप्तेः नद्वितीयो ऽनधिकरणपदेनाधिकरणत्वाभावविव
क्षायामात्माश्रयत्वात् नतृतीयः किंचिद्भावविरोधस्य भावेपि सद्भावादतिव्याप्तेः सर्वभावविरोधित्वस्याभावेप्यभावेनासंभवि
त्वात् नखलु घटाभावः सर्वभावविरोधी सति घटाभावे विश्वाभावप्रसंगात् विरोधिशब्देन च तादात्म्यासहिष्णुत्वविवक्षायां भा
वेष्वपि भावात्।।

त्वानधिकरणत्वं नाम किं तदधिकरणत्वाभावः किं वा तदधिकरणत्वान्यत्वं द्वितीये भावेष्वतिव्याप्तिर्नहि भावत्वाधिकर
णत्वमेव भावः प्रथमे प्राह अनधिकरणेति एतेन समवायान्यत्वे सत्यसमवाय्यभावइतिमानमनोहरलक्षणमपि निरस्तम् असमवायित्व
विवेचने एव यथोक्तदूषणप्रचारादिति भावेपीति गोत्वाश्वत्वादावित्यर्थः अभावस्य सर्वभावविरोधित्वाभावमेव विवृणोति नखल्विति किंचे
दं भावविरोधित्वं किं भावघातकत्वं किं वा भावासहस्थायित्वं किं वा भावतादात्म्यराहित्यं त्रिधापि भावेष्वतिव्याप्तिरित्यभिसंधिराह विरोधिशब्देन

समवायेति नहिसमवायस्यसमवायिभ्यांस्वभावव्यतिरेकेणप्रत्यासत्त्यंतरमस्ति अनवस्थादिदोषात् आदिशब्देनचप्रमेयत्वादिगृह्य-
ते इहभूतलइतिएकंहीदंज्ञानंभूतलघटघटितानाभाववग्राहीतितयोरैक्येनअन्ययविषयत्वादतिव्याप्तिरित्यर्थः किंच प्रतीतिविषयत्वंनामप्रतीतिस्व
विषयत्वंतौपरस्परंव्यावृत्ताविति अनुगतलक्षणाभावादव्याप्तिरित्याह अनुगतेति निर्विकल्पकबुद्ध्यविषयत्वमिति पक्षंदूषयति ना
प्यष्टमइति ब्राह्मणत्वादीनामपिन निर्विकल्पकबुद्धिविषयत्वंव्यंजकविशेषप्रतीत्यभावेतेषामप्रतीतेरतोतिव्याप्तिरित्यर्थः एत
देवभट्टवार्तिकेनदृढयति संस्थानेति संस्थानंकंबुग्रीवादिलक्षणंतत्सहकृतमिंद्रियंचघटत्वादेर्ग्राहकमित्यर्थः जन्मतः अवि

नापिचतुर्थःसमवायादावपिभावात् नापिपंचमः इहभूतलेघटोनास्तीतिघटभूतलयोरपिविशिष्टाभावबुद्धिविषय-
त्वात् अनुगताकारनिरूपणाच्च नापिषष्ठःह्रस्वदैर्घ्यादिष्वपिभावात् नसप्तमःघटस्याभावोस्तीत्यभावस्याप्यस्तिप्रत्य
यविषयत्वेनासंभवित्वात् नाप्यष्टमःब्राह्मणत्वादिष्वपिभावात् संस्थानेनघटत्वादिब्राह्मणत्वादि जन्मतःक्वचिदाचारतश्चा
पिसम्यग्राजानुपालितात् तैलाद्धृतंविलीनंचगंधेनचरसेनचइत्यादिन्यायेनतेषामपिसविकल्पकमात्रविषयत्वात् नचनव
मः राहित्यशब्देनाप्यभावाभिधानादात्माश्रयत्वापत्तेः किंचकिंचिद्भावलक्षणरहितत्वेचभावेष्वपिप्रसंगः सर्वभा-
वलक्षणरहितत्वशब्देनच सर्वभावलक्षणत्वानधिकरणत्वविवक्षायामेकैकस्यापिभावस्यतत्त्वादतिव्याप्तिः॥

तुनब्रह्मचर्योब्राह्मणःस्यादित्यादिविशेषणात् क्वचिद्युधिष्ठिरप्रभृतिसम्यग्राजानुपालितादाचारात् विलीनंघृतंगंधेनचरसेनचतैलाद्भेदेनज्ञा
पतइतिशेषः भावलक्षणरहितोवेतिपक्षंदूषयति नचनवमइति अन्यत्वाभिधानेचभावेपिभावादतिव्याप्तिरित्यपि द्रष्टव्यं भावलक्षणश-
ब्देनसर्वभावलक्षणमभिधीयते किंचिल्लक्षणंवाद्वितीयेप्राह किंच किंचिद्भावेति प्रथमेपि भावानांयानिसर्वाणिलक्षणानितदनधिक
रणत्वंविवक्षितं भावलक्षणानांयेसर्वेभावास्तदधिकरणत्वंवा आद्येप्राह सर्वभावेति सर्वभावलक्षणत्वमितिचबहुव्रीहिः सर्वभावलक्ष
णवत्त्वमितियावत् एकैकभावस्यसर्वभावलक्षणवत्त्वाभावादतिव्याप्तिरभावलक्षणस्येत्यर्थः॥

द्वितीये दूषणमाह सर्वेति भावलक्षणानां ये सर्वे भावास्तदधिकरणमित्यभिधाने च तत्तल्लक्षणाभावेष्वव्याप्तिर्न हि तत्तद्भावानां स
र्वभावाधिकरणत्वं स्वाधिकरणत्वाभावादित्यर्थः अथ चेदेकैकभावलक्षणाभावा अपि बहवो न तत्तल्लक्षणाभावं तदधिकरणत्वात्तद्भाव
नामप्यस्त्येव सर्वभावाधिकरणत्वमिति मन्ते तथापि न सर्वभावाधिकरणत्वं स्वाधिकरणत्वाभावादेव अथ तत्तद्भावविशेषाधिकरणत्वं
लक्षणं न हि तेषामेव विशेषाणां स्वाधिकरणत्वाभावे नैकैकविशेषाधिकरणत्वविवक्षायामितरेषु लक्षणाननुगतिः एवमितरविशेषविव
क्षायामपीत्यव्याप्तिरित्याह अभ्युपगम इति किंच भावलक्षणानामेव दुर्निरूपत्वात्तदधीननिरूपणाभावोपि दुर्निरूप इति हृदि निधाय भाव

सर्वभावलक्षणाभावाधिकरणत्वाभिधाने च तेष्वेव लक्षणाभावेष्वव्याप्तिः तेषां स्वाधिकरणत्वाभावात् तेषु भावान्तराभ्युप
गमे चाननुगमप्रसंगः किंचेदं भावत्वं यदनधिकरणत्वमभावः किमस्तीति प्रत्ययविषयत्वं १ नास्तीति प्रत्ययाविषयत्वं वा २ प्र
तियोग्यनपेक्षनिरूपणत्वं वा ३ निर्विकल्पबुद्धिबोध्यत्वं वा ४ षट्लक्षणलक्षितत्वं वा ५ षट्लक्षणान्यतमलक्षणलक्षितत्वं
वा ६ नाद्यः घटस्याभावोस्तीत्यस्तिप्रत्ययविषयत्वेनाभावेऽतिव्याप्तेः न द्वितीयः भूतले घटो नास्तीति प्रत्ययविषयस्यापि घटादे
र्भावत्वात् न तृतीयः प्रतियोग्यपेक्षनिरूपणे ह्रस्वदीर्घत्वादावव्याप्तेर्न चतुर्थः निर्विकल्पबुद्धेः प्रागुक्तमपि घटादेर्भावात् नदत्यंतनाभावा
((नधिकरणत्वे चात्यंताभाववत्तातिव्याप्तिः"

लक्षणमपि खंडयति किंचेदमिति यदनधिकरणत्वमिति यल्लक्षणानधिकरणत्वमित्यर्थः
अस्यैवानंतरं प्रक्रांतत्वात् षट्लक्षणेति द्रव्यादीनां षण्णां यानि लक्षणानि तैर्लक्षितत्वं चेत्यर्थः नास्तीति प्रत्ययाविषयत्वमिति द्वितीयपक्षे
व्याप्तिमाह भूतले घट इति ननु निर्विकल्पकबुद्धिविषयत्वं नाम तद्विषयत्वात्यंताभावानधिकरणत्वं विवक्षितं तेन न प्रागुक्तप्रयुक्ताव्याप्तिरिति
तत्राह नदत्यंतेति यो यमत्यंताभावो लक्षणत्वेनाभिहितस्तस्मिन्नेव स्वानधिकरणेतिव्याप्तिरित्यर्थः उत्तरग्रंथोनंतरमेव व्यक्तोपपादः न पंचम इति

षसां यानि लक्षणानि तैरेकैकलक्षितत्वमित्यग्रिमस्य

अस्तु तर्हि षष्ठः तथा च शिवादित्यमिश्रेणोक्तमिति तत्राह नषष्ठ इति एवं भावलक्षणानिरूपणादपि तन्मुखेनाभावनिरूपणं न संभवति प्र
कारान्तरेणानिरूपणं पुरस्तादेव निरस्तं एवमभावमात्रलक्षणं खंडयित्वा न हि शेषलक्षणमपि खंडयति कश्चायमिति प्रध्वंसे निव्याप्तिपरिहारा
य विनाशिग्रहणं घटादिनिवर्तनायाभावग्रहणम् अत्र किं विनाशशब्देन विनष्टो घट इत्यादिप्रतीत्युत्पत्तिमदभाववत्त्वमभिधीयते किं वाऽभा
ववत्त्वं चरमे प्रध्वंसादावति व्याप्तिस्तस्याप्यभावप्रतियोगित्वादाद्यस्त्वसंभवीत्याह विनाशिशब्देनेति प्रागभावस्य निवृत्तिरित्यन्वयः अ
त्र किं प्रत्यक्षात् घटव्यतिरेकेणाभावनिवृत्तिः स्वीक्रियते उपपत्तिबलाद्वा नाद्य इत्याह अनुपलंभादिति तदुक्तं नात्पर्यटीकायामाचा

तत्राप्युत्पन्नाभावांतराभ्युपगमे लक्षणस्याननुगमः न पंचमः षष्ठलक्षणलक्षितत्वस्य प्रत्येकं द्रव्यादिष्वभावेनाव्याप्तेः न षष्ठोऽन्यत
मत्वस्य प्रागेव निरस्तत्वात् कश्चायं प्रागभावः विनाश्यभाव इति चेन्न विनाशिशब्देनोत्पत्तिमदभाववत्त्वाभिधाने लक्षणस्यासंभवि
त्वात् न हि प्रागभावस्य घटव्यतिरेकेणोत्पत्तिमानन्योऽभावो निवृत्तिरन्यस्यानुपलंभात् अपोह्यमाने चाभावे भाव एवावशिष्य
त इत्यभ्युपगमाच्च नन्वनिवृत्ते प्रागभावे घटजन्मन एवासंभवादन्यैव निवृत्तिरभ्युपेया न च वार्त्तिकवचनविरोधः निवृत्त्याप्रा
गभावेऽपोह्यमानेन तत्प्रतियोगी घटादिरवशिष्यत एवेत्ययोगव्यवच्छेदपरत्वात्॥ १ यंवाचस्पतिना नो खल्वभावाभावो नाम कश्चि
दन्यो भावात्तापि भावाभावोऽन्योऽभावादिति भट्टास्तत्राह अपोह्यमान इति द्वितीयपक्षमुद्भावयति नन्विति किं निवृत्ते प्रागभावे घट उत्पद्यते
उतानिवृत्ते न तावदनिवृत्ते विरोधिनि सति विरोध्यनुदयात् तस्मान्निवृत्ते सतीति वक्तव्यं तथा च घटोत्पत्तेः प्राचीनाकाचन प्रागभावनिवृत्ति
रभावरूपिणी स्वीकरणीया अतः कथमसंभवो लक्षणस्येत्यर्थः अयोगेति यद्यपि ह्यपोह्यमानेऽभावे भाव एवेति यथाश्रुतोऽन्वयः स्यात्त
दाविरोधः न चैवमन्वयोऽपि तु भावोऽवशिष्यत एवेति तथा च भावोदयमात्रप्रतिपादनपरत्वान्न निवृत्तिनिराकरणपरतेत्यर्थः॥ १॥

नन्वभावावशेषस्य चेद्धि विधित्वं तर्हि निवृत्त्यवशेषादपि भावावशेषः सिध्यतीति तद्रूपत्वाद्भावस्यातः पृथगभिधानवैयर्थ्यमिति तत्रा-
ह अन्यथेति नाभावापह्नवमात्रे भावशेषः यदि हि भावाकारेणावशेषो नामाभावापह्नवमात्रं स्यात्तदा भावावशेषस्यैव स्यात् न पुनः
प्रागभावध्वंसावस्थातोऽतिरिक्तः कश्चित्प्रकारः यतः प्रागभावसमयेऽपि प्रध्वंसापह्नवरूपघटस्य विद्यमानत्वात्प्रध्वंससमये च प्रागभा-
वापह्नवरूपघटस्य विद्यमानत्वादभावापह्नवरूपो घटः सर्वदाऽस्तीति नोदकाहरणासमर्थघटसिद्धिरित्यर्थः अथवाऽभावापह्नव-
मात्रत्वे भावस्य प्रागभावध्वंसावस्थायामपि घटः स्यात् एकैकनिवृत्तेरेकैकावस्थायामपि विद्यमानत्वादित्यर्थः एतेन प्रागभा-
वस्यैव निवृत्तिर्घट इत्यपि निरस्तं तदेतत्सिद्धांती दूषयति नैवमिति नतावद्धि विरोधिनिवृत्तावेव विरोध्युदय इति व्याप्तिर्निवृत्तेरपि

अन्यथाऽभावापह्नवमात्रेणाभावशेषे प्रागभावसमये प्रध्वंसस्यासंभवात् प्रध्वंससमये च प्रागभावस्याभावाद्भा-
वावशेषः प्रसज्येत इति चेन्नैवं त्वदुक्तेन न्यायेनानिवृत्ते प्रागभावे तन्निवृत्तेरपि जन्मासंभवात् तत्र तत्र निवृत्त्यन्तराभ्युप-
गमे चानवस्थापातात्तस्मादुभयत्रानुपपत्तिसाम्येऽपि घटस्यैव स्वप्रागभावनिवृत्तिरित्यंगीकरणीयं कल्पनालाघवात् तथा चासं-
भवित्वदोषस्तदवस्थ एव अस्तु वा प्रागभावस्य घटादन्यैव निवृत्तिस्तथापि प्रध्वंसेऽतिव्याप्तिस्तस्यापि विनाशित्वात् न च ध्वस्तस्यो-
न्मज्जनापत्तिः प्रध्वंसवदेव तत्प्रध्वंसमालायामपि प्रध्वस्तभावविरोधित्वात् ॥ प्रागभावानिवृत्तावुत्पत्त्यसंभवेन निवृत्त्यनवस्थाप्रसं-
गात् तस्मादनिवृत्तेरेव च प्रागभावे विरोध्युदय इति वक्तव्यं तथा च तद्वदेव घटोऽप्युत्पत्तुं शक्नोतीति नेयमनुपपत्तिः का च न प्रत्युत घटरूपैव निवृत्तिः
कल्पनालाघवादाश्रयणीया तथा चासंभवित्वमित्याह त्वदुक्तेनेत्यादिना असंभवमुपेत्यातिव्याप्तिमाह अस्तु वेति ननु नास्ति प्रध्वंसस्य प्रध्वंसः ये-
नातिव्याप्तिः स्यात् प्रध्वंसस्यापि प्रध्वंसे घटप्रागभावध्वंसरहितकालस्य घटकालत्वेन घटोन्मज्जनप्रसंग इति तत्राह न च ध्वस्तस्येति यथा हि प्र-
थमध्वंसो घटविरोधी एवं तत्प्रध्वंसमालापि घटविरोधिन्येव तत्कस्य हेतोरुत्तरोत्तरध्वंसानामपि ध्वंससमानविरोधित्वात्पूर्वपूर्वप्रतियोगिव्या-
वृत्तत्वध्वंसविरोधित्वात् इतरथा घटसंसर्गनिषेधे घटस्य निषेधो न स्यादिति घटनित्यतानित्यतयोः प्रसंगात्ततो नोन्मज्जनापत्तिरिति भावः ॥

अतश्चैवमेवांगीकर्त्तव्यमितरथाघटध्वंसेघटप्रागभावोन्मज्जनप्रसंगाद्धटध्वंसस्यप्रागभावध्वंसध्वंसत्वात् घटानवच्छिन्नकालस्यघटप्रागभा
वव्याप्तत्वाच्चेत्याह नवापीति नचप्रागभावोन्मज्जनमस्त्वेवेतिवाच्यंतथासतिघटोत्पत्तेरवश्यंभावेनोत्कलकुटत्वृत्तांतापातादितिभावः उक्तंचलीला
वतीकारेणप्रागभावनिवृत्तिनिवृत्तौतदुन्मज्जनापत्तिरितिचेन्नध्वंसस्यापितद्विरोधित्वादिति यदत्रतेनैवोक्तंएवंसतिध्वंसोपिनश्येनहृत
त्वात्प्रागभावोपिजायेत विनाशित्वादितिप्रागभावप्रध्वंसयोरुत्पत्तिविनाशावाशंकनासंभवद्विरुद्धधर्मसंसर्गप्रतिभिज्ञानप्रतिक्षि
प्तत्वादितितदनुवदति यत्तुनरितिअस्तिहिघटोत्पत्तेःप्राक्पूर्वंचनासीनघटोनभविष्यतिघटइतिनास्तिचघटइतिवासमवायंप्रागभावः
समवायंप्रध्वंसइत्येववाऽबाधितभावप्रत्यभिज्ञानं इदंचज्वालाप्रत्यभिज्ञानवद्मानमित्यत उक्तमसंभवद्विरुद्धधर्मसंसर्गेतिनसंभवी।

नवापिकथमन्यथाप्रागभावोन्मज्जनप्रसंगपरिहारःयत्तुनरुक्तंलीलावतीकारेणासंभवद्विरुद्धधर्मसंसर्गप्रत्यभिज्ञानबाधित
त्वात्कल्पनालाघवाच्चनप्रागभावप्रध्वंसयोरुत्पत्तिविनाशाविति तदसत्कपालचूर्णरजःप्रभृतीनांसंभवद्विरुद्धधर्मसंसर्गाणांभि
न्नतयैवप्रत्यक्षत्वात्तदुक्तप्रत्यभिज्ञायाअसिद्धेःप्रत्यक्षसिद्धेचभेदेकल्पनालाघवन्यायस्यानवसरदुःस्थत्वात्तथाचपौराणिकमुदा
हरणंमहीघटत्वंघटतःकपालिकाकपालिकाचूर्णरजस्ततोणुरिति उत्पत्तिमानभावोध्वंसइत्यस्यलक्षणंपिंडादेर्घटप्रागभाव
विरुद्धधर्मसंसर्गीयद्विषयेतत्प्रत्यभिज्ञानंतथोक्तं एकाभावेनैवव्यवहारोपपत्तावनंताभाव। एवेनास्मदभिमतस्योत्पत्तिमत्वात्तदतिरिक्तस्यवा
कल्पनायांगौरवंचेत्याह कल्पनेतिदूषयति तदसदिति अत्रतावदुत्तरोत्तरकपालादिरेवपूर्वपूर्वघटादेःप्रध्वंसःपूर्वपूर्वपिण्डादिरेवोत्तरघटादेःप्रागभा
वइतिवक्ष्यतितथाचतेषांकपालप्रभृतीनांपरस्परविरुद्धानामेवोपलभ्यमानत्वात्ज्वालाप्रत्यभिज्ञानवदाभासोयमित्यर्थःकल्पनागौरवंपरिहरति।
प्रत्यक्षेति कपालादीनांघटादिध्वंसरूपाणांनानात्वेविष्णुपुराणसंमतिमप्याह महीघटत्वमिति महीघटत्वंप्रतिपद्यतेएवंयावदणुश्चसत्वजनैःस्वक
र्मस्तिमितात्मदृष्टिभिरालक्ष्यतेब्रूहि किमत्रवस्तिवित्तुनराद्वैः अयमर्थःएवमागमापायितयास्वकर्मस्तिमितात्मदृष्टिभिर्जनैर्विकारज्ञानं
मालक्ष्यतेअतः किमत्रविकारजातेवस्तुब्रूहिनकिमपीत्यर्थःप्रध्वंसलक्षणमपिदूषयति उत्पत्तिमानिति यत्तहस्यतीत्युक्तंतदाह पिण्डादेरि

एवंप्राक्प्रध्वंसाभावौ दूषयित्वान्योन्याभावं दूषयति तादात्म्येति भेदखंडनप्रस्तावोक्तं स्मारयन्नधिकविवक्षया घटपटयोरिति ननु घटे पटत्वमे
वनिषिध्यतां तथाचनाप्रसिद्धप्रतियोगितेति तत्राह प्रमितेघटइति लक्षणांतरं शंकते प्रतियोगीति अत्यंताभावव्यावृत्त्यर्थं प्रथमं विशेषणं नित्य
त्वंचेदुत्पत्तिविनाशरहितत्वं एतच्च प्रागभावप्रध्वंसयोर्व्यभिचारवारणार्थं नित्यभावव्यावृत्त्यर्थमभावपदं यत्तदधिकविवक्षयेत्युक्तं तद्दर्शयि
ष्यन्विकल्पयति प्रतियोगिशब्देनेति धर्मिणोपीति अन्यत्वंचेत्प्रतियोगित्वं तथा सत्यन्योन्याभावादित्यर्थो ह्यन्यनेन तस्य प्राधान्येन प्रक्रान्तत्वात् तथा
च प्रतियोग्यनिष्ठइतिकोर्थः अन्योन्याभावव्यतिरिक्तेनवर्त्तनइति तथा चाभावस्य धर्मिण्यप्रवृत्तिप्रसंगेन नित्यमसंभव्येव लक्षणमित्यर्थः नत्व

तादात्म्यप्रतियोगिकोभावोन्योन्याभावः इत्यपि न घटपटयोस्तादात्म्यस्यैवाप्रमितत्वेन प्रमितनिषेधनियमवादिनस्तन्निषेधस्या
शक्यत्वात् प्रमिते घटे प्रमितपटत्वप्रतिषेधे च भूतले घटनिषेधवत्संसर्गाभावापत्तेः प्रतियोग्यनिष्ठो नित्योऽभावोन्योन्याभाव इत्यपि न
विकल्पानुपपत्तेः प्रतियोगिशब्देन किमन्यदुच्यते किं वा निरूपको विरोधी वा नाद्यः धर्मिणोपि स्वस्मादन्यत्वेनासंभवित्वात् धर्मिव्यति
रिक्तेनवर्त्तनइति विवक्षितमिति चेन्नात्यंताभावेति व्याप्तेर्यत्र यत्र वर्त्तते तेन तस्यैव धर्मितया ततोन्यत्र तु स्यावृत्तेः न द्वितीयः धर्मिणोपि
निरूपकतया तत्रावृत्त्यसंभवात् धर्मिव्यतिरिक्तनिरूपकावृत्तित्वं विवक्षितमिति चेन्न धर्मिणोपि धर्म्यंतरादन्यत्वात् ॥

न्यत्वमेव तत्प्रतियो
गित्वं किंतु धर्मिणोऽन्यत्वं तथा च धर्मिव्यतिरिक्तेनवर्त्तनइति लक्षणार्थ इति शंकते धर्मिव्यतिरिक्तइति तत्र यद्यपि नित्यत्वविशेषणात्प्रागभावादौ
न गच्छति तथाप्यत्यंताभावे गच्छत्येव तस्यापि धर्मिव्यतिरिक्तवृत्तिव्याघातनाच्चास्ति अस्ति च नित्यत्वमित्यभिप्रेत्य दूषयति अत्यंतेति निरूपकत्वं प्रति
योगित्वमिति पक्षेप्यसंभव एव धर्मिणोपि निरूपकतया तत्रावृत्तेरसंभवादित्याह न द्वितीय इति न निरूपकत्वमात्रं प्रतियोगित्वं किं तर्हि धर्मि
व्यतिरिक्तत्वे सति तथा च नासंभव इति शंकते धर्मिव्यतिरिक्तेति किं धर्मान्यत्वं धर्मिव्यतिरिक्तत्वं वा धर्मित्वानधिकरणत्वं वा आद्ये माह
धर्मिणोपीति तथा चासंभवस्तदवस्थ इत्यर्थः

खं॰प्र॰ २
टी॰न॰
९३

द्वितीयमाशंक्यासंभवेन दूषयति धर्मित्वेति असंभवमेव विवृणोति निर्धर्मकस्येति विरोधिप्रतियोगीतिपक्षं दूषयति नापितृतीय इति पू
र्वमेवेति किं सर्वाभावेन यत्किंचिदभावेन वेति विकल्प्य पूर्वमेव दूषितत्वादित्यर्थः स्वं प्रतियोग्यनिरूपणात् प्रतियोग्यनिष्ठत्वं दुर्निरूपणमित्यु
क्तं इदानीं तदुपेक्ष्य प्रकारांतरेण प्रतियोग्यनिष्ठताद्युर्घटतां व्युत्पादयति अस्तु वेत्यादिना एकत्वे बहुत्वे च यथाक्रमं दूषणं संगृह्णाति श्लोकेन स
र्वस्येति यद्येको जगत्यन्योन्याभावस्तदा सर्व एव तस्य धर्मी सर्व एव प्रतियोगी घटप्रतियोगिकपटधर्मिकान्योन्याभावस्यैव घटेपि वर्तमानत्वात्तथा

धर्मित्वानधिकरणे न वर्तत इति चेन्नासंभवित्वात् निर्धर्मकस्य वस्तुनोऽसंभवेन प्रतियोगिनोपि धर्मित्वात् नापि
तृतीयः विरोधस्य दुर्घटतायाः पूर्वमेवाभिहितत्वात् अस्तु वायः कश्चिद्विचारिनरमणीयः प्रतियोगि तथापीदं भवान्पृष्टो व्या
चष्टां किमेको जगत्यन्योन्याभावः किं वा बहवः सर्वस्य प्रतियोगित्वाद्दुर्लभा तदनिष्ठता द्विधाप्यात्माश्रयत्वाच्च न स्वशब्दो वि
शेषणम् ३७ अन्योन्याभावस्य सर्वत्रैकत्वे सर्व एव धर्मी सर्व एव प्रतियोगीति कथं तदनिष्ठतासंभवेत् बहुत्वेपि
यत्किंचिदपेक्ष्य धर्मिणोपि प्रतियोगित्वात्तदनिष्ठत्वासंभवस्तदवस्थः स्वप्रतियोग्यनिष्ठ इति च विशेषणे स्वशब्दाभिधे
यस्यान्योन्याभावस्याद्याप्यसिद्धेः कथं नात्माश्रयः एतेन प्रतियोगिनिष्ठोऽभावोऽन्योन्याभाव इत्यपि निरस्तं प्रतियोग्यनिरू

च धर्मिनिष्ठत्वमेव प्रतियोगिनिष्ठत्वमिति प्रतियोग्यनिष्ठताद्दुर्लभास्यात् अथ बहवोऽन्योन्याभावास्तथापि प्रतियोगिमात्रानिष्ठत्वं वा स्वप्र
तियोग्यनिष्ठत्वं वा न द्वाभिप्रेयते आद्यस्त्वसंभवी धर्मिणोपि यत्किंचित्प्रतिप्रतियोगित्वेन तदनिष्ठताव्याघातात् द्वितीये चात्माश्रयत्वप्रसंगात् स्व
शब्देन विशेषणमिति द्विधाप्येकत्वे बहुत्वे च दुर्लभा तदनिष्ठतेति श्लोकयोजना विवृणोति अन्योन्येति अनवस्था चान्योन्याभावानेकत्वे स्या
त्स्वरूपत्वे चानेकत्वासिद्धेः एतेन सर्वत्र तदन्यत्वविशेषणं प्रतिक्षिप्तं मंतव्यं अत्यंताभावलक्षणेप्युक्तं दूषणमतिदिशति एतेनेति

राम॰
९३

अतिदिश्यमानं विशदयति प्रतिपादितेति प्रतियोगिग्रहणायत्किंचिन्निष्ठान्योन्याभावव्याप्तत्यर्थं नचैतेनापि तद्यावर्त्यं नैतस्यापि यत्किंचित्प्र
तियोगिनिवार्यत्वाभावप्रतियोगिनिवार्यवर्तमानत्वात् तोऽयर्थविशेषणानातिव्याप्तिश्चत्तत्रैवेति भावः अतिव्याप्त्यन्तरं चाह प्रागभावेति तदधिक
रणस्यापि यत्किंचित्प्रतियोगित्वादिति भावः स्वसमभावलक्षणादुर्निरूपणामित्युक्तं इदानीं तस्याभावे किंचित्प्रमाणमपि नास्तीत्याह किंचेति
ननु भूतले घटो नास्तीत्यबाधितबुद्धिबोध्योऽभावः कथमपह्नोतुं शक्यत इति तत्राह यादृशइति अभ्युपेयते भवद्भिरितिशेषः स्यादेतत्स्यघटो
पि भूतले किमिति घटो नास्तीति बुद्धिर्नेति भूतलस्वरूपस्य तदापि भावात् अथ केवलभूतले किमिदं केवलत्वं घटराहित्यमिति चेत्तत्रायं।

प्रतिपादितन्यायेन सर्वस्य प्रतियोगित्वेनान्योन्याभावस्यापि प्रतियोगिनिष्ठतया विशेषणत्वेनैवेत्यर्थात् प्रागभावप्रध्वंसयोरपि
तत्संभवादतिव्याप्तेश्च किंचाभाव एव दुर्निरूपः कुतस्तत्र तत्प्रमाणलक्षणाभेदाङ्गेद्विचिंतावतारः तथाहि यादृशे भूतलादौ धर्मिणि।
घटाभावोऽभ्युपेयते तादृशस्यैवाभावव्यवहारनिदानत्वमस्तु किमतिरिक्ताभावकल्पनया अस्ति तावद्भावाभावोदासीनमाश्रयस्वरूप
म् अन्यथा कीदृशेऽभावः संबध्येत नतावद्भाववति भावाभावयोरविरोधापत्तेर्नाप्यभाववत्यान्याश्रयत्वादनवस्थाप्रसंगा
च्च ननु किमिदं प्रतिकूलतर्कमात्रमुत विपर्ययपर्यवसायि नयोदासीनाश्रयस्वरूपोपस्थापकं नाद्योऽनुग्राह्यप्रमाणविरहिणा
स्तर्कस्य साधनबाधनानंगत्वात् न द्वितीयः संबध्यते चाभावइति विप ।। निंदामि च पिबामि चेति न्यायं नूनं तयनिराहित्यस्यैवाभावत्वादि
ति तत्राह अस्ति तावदिति इदंयादृशइत्यस्य विवरणं सच न घटरहितेनापि घटवति किंतु यत्र घटाभावसंबंधः स्वभावतोऽन्यतो वा भवद्भि
रभिमन्यते तस्मिन्नित्यर्थः एतादृशरूपं विपर्ययबाधकैरंगीकारयति अन्यथेति अथ सोऽभावोऽन्यस्तेन तादात्म्याश्रितेति तत्राह अनवस्थे
ति अत्र लीलावतीपतिरेताभिरेव युक्तिभिः पूर्वपक्षमारचय्य राधां तयाव भूवनैवं विचारासहत्वात् किमेतत्परिपंथितर्कमात्रमित्यादि
ना तदुद्भावयति दूषयितुं नन्वित्यादिना विपर्ययपर्यवसायितां दूषयति नद्वितीय इति अत्रहि यदि भूतलेऽदासीन्यं तस्मादभावो न संबध्येते
ति तर्कः संबध्यते चाभावस्तस्मादस्योदासीन्यमिति च विपर्ययः नचाभावमनिच्छतः संबध्यते चायमिति वक्तुं शक्यमभावस्यैवाप्रमितत्वेनाप्रसिद्धवि

प्रतिक्षेपकतामेव दर्शयन् जात्युत्तरतां तर्कस्य विघटयति किंभाववतीति न तावद्भाववति भूतले भावो वर्त्तते आत्माश्रयात् अनवस्थानाच्च नाप्य
भाववति विरोधात् तस्माद्भावाभावोदासीनमेव भूतलं भावाश्रय इति वक्तव्यं तथा च तदेव भावव्यवहारालंबनमस्तु कृतं तदतिरिक्तभावकल्पनयेति
सुवचत्वात् जात्युत्तरमिदमित्यर्थः एवमनूदितं दूषयति सिद्धांती मैवमित्यादिना यस्य प्राभाकरस्य प्रमाणसिद्धमेव साधनं दूषणांगं न प्रतीति-
सिद्धमिति मतं तं प्रत्येषा विभीषिका स्यान्नास्मान् प्रतीत्यर्थः अस्यैव प्रपंच उत्तरो ग्रंथः यत्तु भावप्रतिक्षेपकत्वाज्जात्युत्तरमिति तत्र व्याघातकत्वा-

र्थ्यपर्य्यवसानस्याभावमनिच्छतोऽसिद्धेः स घटं भूतलमिति भावव्यवहारस्यापि प्रतिक्षेपकतया स्वव्याघातकत्वेन जात्युत्त-
रतापत्तेः तथा हि किं भाववति भावः किं वा तद्भाववतीति विकल्पदूषणयोस्तत्रापि तुल्यत्वादिति चेन्नैवमस्याः प्राभाकरविभी-
षिकाया लोकप्रसिद्धभावाभावव्यवहारिणां मायावादिनं प्रत्यनुत्थानात् तथा ह्यवधीरितसत्त्वासत्त्वानां हेत्वादीनां लोकप्रसिद्धं
स्वरूपमात्रमुपादाय सर्वोऽयं मायावादिनः प्रमाणप्रमेयव्यवहारः कस्तत्र परवादिप्रसिद्धं विपर्य्ययपर्य्यवसानमाश्रित्य प्रत्यवति-
ष्ठमानस्योपलंभसंभवः एतेन भावव्यवहारप्रतिवंदिग्रहः परास्तः तत्रापि दुर्घटतायाः स्वीकृतत्वात् तदेवमवधीरि-
तभावाभावभूतलादेरुपलंभादेवाभावव्यवहारसंभवे तदतिरिक्ताऽभावाभ्युपगमो निष्प्रमाणकस्तवन्तु कथं निष्प्रमाणकता वस्तु-
चाक्षुषभावातिरिक्तग्राहकमिंद्रियत्वाद्घ्राणवत् निर्घटं भूतलमिति विज्ञानमेतद्धि ज्ञानालंबनभावमात्रातिरिक्तालंबनमेतद्भावमा-
त्रालंबननिर्विकल्पकेतरज्ञानत्वात् घटं भूतलमिति ज्ञानवदिति प्रमाणे जाग्रतीति चेत्॥ ९१ भावात्मत्वतानुगुणमेवेत्याह एतेनेति

एवं त्रिचतुरकक्षाविश्रांतलोकप्रसिद्धिमादाय विपर्य्ययपर्य्यवसानसंभवेन दृढतरैस्तर्कैस्तात्त्विकाभावप्रतिक्षेपं प्रपंचितमुपसंहरति तदे-
वमिति मानमनोहरकारीयमनुमानमभावसिद्धावुदाहरति ननु कथमित्यादिना अत्रातिरिक्तत्वमनधिकरणत्वं तथा सति चाक्षुषभावत्वानधि-
करणत्वं चाक्षुषत्वानधिकरणत्वाद्वा भावत्वानधिकरणत्वाद्वा आद्ये ग्राहकत्वं व्याहतमिति भावत्वानधिकरणमभावस्तच्चाक्षुषत्वं चेत्यभा-
वसिद्धिः दृष्टांते चाक्षुषत्वानधिकरणं गंधमादाय साध्यसिद्धिः अप्रसिद्धविशेषणतानिहृत्यै चाक्षुषग्रहणं अनुमानांतरं चाह निर्घटमिति अ-

लंबनभावत्वानधिकरणत्वमेतज्ज्ञानालंबनत्वानधिकरणत्वात्संभवति एतद्धि ज्ञानस्य तादृशालंबनत्वव्याघातात्तस्मात्तद्भावमात्रत्वानधि-
करणमेवैतद्धिज्ञानालंबनमभावः सिद्धः दृष्टांते त्वेतद्धिज्ञानालंबनत्वानधिकरणत्वमादाय साध्यसिद्धिः अत्र चाप्रसिद्धविशेषणतानि-
रुक्त्यर्थमेतज्ज्ञानपदं निर्घटंभूतलमिति ज्ञानस्यालंबनभूतो यो भूतलात्मको भावस्तन्निष्ठगुणसामान्यादिष्वतन्मात्रालंबनं यन्निर्वि-
कल्पकं तद्व्यतिरिक्तत्वे सति ज्ञानत्वादिति हेत्वर्थः एतद्धिज्ञानालंबनीभूतभूतलादिनिर्विकल्पकव्यभिचारनिरासार्थं निर्विकल्पकेत-
रेत्युक्तं घटादिव्यवच्छेदाय ज्ञानपदं एतच्च साध्यं विकल्प्य दूषयति मैवमित्यादिना तथा चक्षुश्चाक्षुषभावग्राहकत्वे सत्यतिरिक्तग्राहक-
त्वानधिकरणं वाह्येंद्रियत्वात् घ्राणवत् निर्घटंभूतलमिति ज्ञानमेतद्भावालंबनत्वे सत्यतिरिक्तालंबनत्वानधिकरणमेतद्भावालंबनत्वे स-

मैवं भावातिरिक्तग्राहकं भावातिरिक्तालंबनमिति च तात्त्विकपदार्थनिरस्य प्रसाधनमुत व्यावहारिकस्याहोस्वित्साधा-
रणस्याद्ये दृष्टांतस्य साध्यविकलतादितरयोश्च सिद्धसाधनता तदेवं प्रमाणलक्षणानां दुर्निरूपत्वादविचारितरमणी।
यस्य वायं प्रमाणव्यवहार इति सिद्धं करणस्वरूपानिरूपणाच्च प्रमितिकरणं प्रमाणमित्यपि न तथाहि॥ ६॥

त्यतिरिक्तालंबनान्यत्वात् एतद्भावमात्रविषयनिर्विकल्पकवदिति सत्प्रतिसाधनत्वमपि द्रष्टव्यं एवं प्रमाणखंडनप्रसंगेन दण्डकसूत्रोक्ता
बहवः पदार्थाः खण्डितास्तथाहि भावाभावखण्डने प्रधानमहत्त्वनिवर्हणन्यायेन प्रमेयजातं खंडितं संशयदृष्टांतावयवनिर्णया अपि प्रागे-
व खंडिताः प्रमाणखंडनेन प्रामाणिकत्वेनाभ्युपगतत्वलक्षणसिद्धांतोपि खंडितः उपरिष्टाच्च क्वचित्खंडयिष्यते तेन च प्रमाणखंडनप्र-
घट्टकस्याद्वैतागमाविरोधोपयोगं दर्शयति तदेवमिति अतएव न वास्तवाद्वैतपरागमस्य तद्विरोध इति सिद्धमिति शेषः मुक्तेषु मानैर्निजलक्षण-
चैर्युक्तेषु मानैः खरतर्कसार्थैः मुक्तेषु मानैः प्रतिवादिषु खैर्युक्तेषु मानैः श्रुतिरन्यवैरैः १ प्रमाकरणं प्रमाणमिति प्रमाणसामान्य— लक्षणं तच्च प्र-
माणखंडनेन पूर्वं खंडितमिदानीं करणखंडनादपि तद्गर्भलक्षणं खंडितमेवेति मन्वानः करणलक्षणं खंडयति करणेति चः समुच्चये न केवलं

तत्रप्रमाणतोऽर्थप्रतिपत्ताविति भाष्यं व्याचक्षाणेनोद्योतकराचार्येणोपलब्धिहेतुः प्रमाणमिति प्रमाणसामान्यलक्षणमुक्तम् प्रमातृप्रमेय-
योरतिव्याप्तावाशङ्कितायां तद्भेदनाय तदर्थं निर्वर्तितानि लक्षणान्युक्तानि तान्युद्भावयति कारकान्तरेत्यादिना कर्तुः खलु घटनिपतनव्या-
पाराविष्टकुठाररूपकरणनिष्पाद्यतः कारकान्तरेऽस्ति चरितार्थत्वं एवं कर्मणोऽपि करणव्यापारस्य कर्मविषयतया कर्माभावे करणाभा-
वात् अधिकरणमपि कर्त्रादिरूपक्षीणं नहीति रधिष्ठानं छिनत्ति न हि स्थाणुरक्षकरणेऽपि तेन कर्तृकर्माधिकरणव्यवच्छेदार्थं कारकान्-
तरेऽचरितार्थमिति विशेषणं अत्र च संप्रदानापादानयोर्व्यवच्छेदाय सार्वत्रिकदृष्टिविशेषणं द्रष्टव्यम् नेह सार्वत्रिके दानपतनयोरेव संप्रदा-
नापादानापेक्षणादिति वा तयोरपि कारकान्तरे चरितार्थत्वम् न हि प्रतिगृहीत्रभावे दानरूपयोगः नापि वृक्षाद्यभावे पतनादेः शाखापर्णादिसि-

किं कारकान्तरेऽचरितार्थं कारकं करणं १ उतायोगव्यवच्छेदेन फलसाधनं २ कर्तृव्यापारगोचरो वा ३ व्यापारवत्त्वे।
सति फलाव्यभिचारि वा ४ चरमव्यापारं वा ५ अनन्तरफलं वा ६ यदभावात्कर्तृकर्मणी क्रियां न जनयतस्तद्वा ७ नाद्यः कुठारादौ
कारकान्तरे चरितार्थस्य हस्तादेरकरणत्वप्रसङ्गात् न च तदकरणमेव करेण कुठारेण देवदत्तश्छिनत्तीति करकुठारयोः करण-
त्वप्रसिद्धेरनुपपत्त्वात् अन्यथा कर्मकर्तृकरणसंप्रदानापादानाधिकरणेष्वनन्तर्भावाद्धस्तादेः सप्तमकारकत्वापत्तेः कार-
कान्तरेत्यत्रान्तरशब्देन करणं वा कर्तृकर्मणी वा विवक्ष्येते न तावत्करणं ।( दृष्टिरिति व्यापारव्यवच्छेदार्थं कारकग्रहणं अयोगेति नहि।

जातु साधकतमे करणे सति फलानिष्पत्तिस्तेन च कर्त्रादिव्यावृत्तिः सत्स्वपि तेषु फलानिष्पत्तिसंभवात् व्यापारस्य कर्तृकर्मणोश्च निरासाय व्यापारवत्त्वे
सतीत्यादिविशेषणद्वयं कर्त्रादिव्यावृत्त्यर्थं च चरमेति विशेषणम् यदभावादिति कर्तृकर्मणोः क्रियानिर्वर्तकत्वाभावप्रयोजकाभावप्रतियोगित्वेत्यर्थः॥
आद्येऽव्याप्तिमाह कुठारादाविति नन्वकरणमेव करादिस्तेन न तद्गमनं न दोषायेति तत्राह न च तदिति इतोऽपि हस्तादेः करणत्वं वक्तव्यमित्याह अ-
न्यथेति एवं समुदाये दूषणमुक्त्वाऽवयवविवेचनेनापि दूषयति कारकान्तरेत्यत्रेति अन्तरशब्दो विशेषवचनोऽन्यवचनो वा आद्ये वैय-
र्थ्यं न हि कारकमात्रे चरितार्थं किंचिदस्ति यद्व्यवच्छेद्यं नेद्वितीये किं कस्मादन्यत्किं कर्त्रादेरन्यत्करणं विवक्ष्यते किं वा करणादतिरिक्तकर्तृक-

करणस्यैवेति एवंतदर्थः संपद्यते करणकारकेऽचरितार्थं कारकं करणं तथा चात्माश्रयमित्यर्थः कर्तृकर्मणोरचरितार्थं कारकंकर णमिति द्वितीयपक्षे दूषणमाह तयोरेवेति अथ तयोः कर्तृकर्मणोः क्वचरितार्थत्वमित्यत्राह तयोरिति न च कर्तरि चरितार्थत्वमपि कर्तृव्यापा रविषयतया कर्मवदस्यापि तत्र चरितार्थत्वात् न त्वाधिकव्यापारत्वाद्चरितार्थता। तदनिरूपणात् अयोगव्यवच्छेदेनेत्यादि द्वितीयलक्षणं दू षयति नापि द्वितीय इति सामग्र्याः फलेनायोगव्यवच्छेदं दर्शयति तस्यामिति न च साधिकरणमेव निर्व्यापारत्वात् करणादिसाकल्यरूप त्वाच्च अव्याप्तिं चाह अपूर्वादीति सतिभवत्येवेति ह्ययोगव्यवच्छेदः न चायमपूर्वव्यवधानेन विलंबितफलसाधनस्य यागस्यास्तीत्यर्थः कर्तृव्या

करणस्यैवाद्याप्यसिद्धेरात्माश्रयत्वात् नेतरेतयोरेवातिव्याप्तेर्नहि कर्माकर्तरि चरितार्थः नापि कर्मणि कर्मत। योः करणे चरितार्थत्वांगीकारात् नापि द्वितीयः सामग्र्यामतिव्याप्तेः तस्यां सत्यां नियमेन फलस्य भावात् अपूर्वादिव्यवहि तफलस्य यागादेरकरणत्वापत्तेश्च न तृतीयः कर्तुरात्मनः प्रयत्नाख्यव्यापारकर्मणि शरीरे तद्व्यापारे करणलक्ष णस्य सद्भावात् साक्षादिति विशेषणे च आत्मनो मनश्चालनव्यापारे मनसः करणत्वप्रसंगः न च तत्र मनःक रणं तद्व्यापारे कर्मतयैवावस्थानात् हस्तादिव्यापारव्यवधानेन कर्तृव्यापारगोचरे कुठारादावव्याप्तेश्च॥

पारगोचर इति तृतीयंपक्षं दूषयति न तृतीय इति यः खल्वात्मनः शरीरचलनाय प्रयत्नः तस्य तावच्चलनक्रिया क्रियाविशिष्टं वा शरीरं विष यः न च तस्मिंश्चलने तयोः करणत्वं प्रथमे स्वस्यैव स्वं प्रति करणत्वाघातात् द्वितीयेपि भविष्यतः पूर्वकालीनक्रियायां करणत्वापातादित्यतिव्या प्तिरित्यर्थः ननु न कर्तृव्यापारमात्रगोचरत्वं विवक्षितमपि त्वव्यवहितो यः कर्तृव्यापारस्तद्गोचरत्वं न च प्रयत्नस्तादृशस्तस्यात्ममनःसन्निकर्षव्या पारव्यवहिततया तथात्वाभावादित्यत्राह साक्षादिति चेति यदि च साक्षाद्विषयत्वं तदा कुठारादावव्याप्तिरपि स्यात् नहि कुठारस्य साक्षादा त्मव्यापारविषयत्वमस्तीत्याह हस्तादीति न च हस्तस्यापि कर्तर्यन्तर्भावः हस्तेनेत्यप्रयोगापातादिति भावः साक्षाद्व्यापार्यमनः प्रभृतिक्रियायामपि कर

२
चि॰प्र॰
टी॰न॰
९६

व्यापारवत्वे सतीत्यादिचतुर्थपक्षं दूषयति नचतुर्थइति कर्त्तृत्वलक्षणं वर्णयति तस्यापीति ननुस्वानन्तरक्षणफलकत्वं फलाव्यभिचा
रित्वं न चैतत्कर्त्तुः सार्वत्रिकमस्तीति शंकते अव्यवहितेति नह्यव्याप्तिरित्याह नहस्तादेरिति चरमव्यापारमनंतरफलमितिपक्षयोरयुक्त
दूषणमतिदिशति एतेनेति कर्त्तुरपिकरणत्वापातात् विशेषणत्वे हस्ताद्यव्यापनादित्युक्तदोषसाम्यादित्यर्थः परभावादित्यादिसप्तमपक्षेति।
व्याप्तिमाह अदृष्टेति कर्तृकर्मणोरतिव्याप्तिश्च तयोरपि स्वाभावे क्रियाजनकत्वाभावात् सोपयोगं करणखंडनमुपसंहरति तदेवमिति न
नु कथं करणनिरुक्तिर्जरन्नैयायिकैर्निर्वाहेऽपि नूतनरीत्या परिष्कृतत्वादिति शंकते अथेति इदं चानीश्वरप्रमाणस्येव लक्षणं कर्मकारकव्या

नचतुर्थः कर्त्तुरपिकरणत्वप्रसंगात् तस्यापि करणादिव्यापारवतः फलाव्यभिचारित्वात् अव्यवहितफलादर्शनात्तत्त।
स्यफलाव्यभिचारितेति चेन्न हस्तादेर्यागादेश्चाव्यवहितफलस्याकरणत्वापातात् एतेन पंचमषष्ठविकल्पावप्यपास्तौ चतुर्थप
क्षोक्तदोषानुषंगादेवनापि सप्तमः ईश्वरेच्छादेरपिकरणत्वप्रसंगात् तद्भावस्य च क्रियानियतेः तदेवं करणनिरुक्तेः प्रमाकर
णं प्रमाणमित्यलक्षणम् अथाधुनिकनीत्या कर्तृत्वानधिकरणत्वे सति प्रमासार्वत्रिकं कारकं प्रमाकरणं नच कर्तृत्वानिरु
क्तिः प्रयत्नात्यंताभावानधिकरणत्वस्य तत्त्वात् नापि सार्वत्रिकत्वानिरुक्तिः प्रमाकारकाप्रमाकारकावृत्ति प्रमाकारकनिष्ठात्यंता
भावाप्रतियोगित्वस्यैव सार्वत्रिकत्वपदेनाभिलापात्॥

वृत्त्यर्थं सार्वत्रिकग्रहणं नहि सर्वा प्रमा कर्मजन्या अनुमित्यादिष्वभावात् सा
र्वत्रिककर्तृव्यावृत्त्यर्थं कर्तृत्वानधिकरणेत्युक्तं तदेवावयवश उपपादयति दूषणावेशाय नचकर्तृत्वेत्यादिना सुषुप्तिप्रलयादावव्याप्ति
निवृत्त्यर्थमत्यंताभावानधिकरणत्वग्रहणं कारकस्य प्रमायां सार्वत्रिकत्वं निर्वक्ति प्रमाकारकेति प्रमाकारकेष्ववर्तमानत्वे सत्यप्रमाका
रकवृत्तित्वं यत्तदनधिकरणत्वे सति प्रमाकारकनिष्ठात्यंताभावप्रत्यप्रतियोगित्वमित्यर्थः प्रमाकारकनिष्ठात्यंताभावाप्रतियोगित्वमप्रमेयत्वादेर
प्यस्तीति तन्निरासाय प्रमाकारकेत्यादि तस्य सर्ववृत्तित्वे न प्रमाकारके इन्द्रियादिवृत्तित्वे सत्यप्रमाकारकदोषादिवृत्तित्वात् न तद्व्याप्तिः

चिन्तामणिदीधितिः॥
राम॰
९६

तावन्मात्रोक्तौ च प्रमाकारकैकदेशहतिषु तत्कारणाचित्कहतिषु चाप्रमाकारकमात्रहतिषु चातिव्याप्तिस्यात्तदर्थं प्रमाकारकनिष्ठात्यंता-
भावाप्रतियोगित्वग्रहणं अथ किमिदं कारकत्वं यद्विशेषस्येदं सार्वत्रिकत्वं निरुच्यते इति तत्राह नचेति कारकव्यापारे कारणलक्ष-
णवति कारकत्वपरिहारार्थव्यापारवदित्युक्तं अथ व्यापार एव कः इति तत्राह नचव्यापारेति तेन कारकेणाजन्यत्वे सति तत्कारका-
जन्यक्रियां प्रति जनकश्चयः स व्यापार इत्यर्थः तज्जन्यजनकत्वं कारकाणामस्तीति तन्निवृत्त्यर्थं तज्जन्य इत्युक्तं क्रियायामेवातिव्याप्तिप-
रिहाराय तज्जन्यजनक इत्युक्तं एवमुपपाद्य दूषयति मैवमिति उदीरितखंडनाया लंघनाजंघालत्वात् अजवलादित्यर्थः उदीरितखं

नच कारकत्वातिरिक्तिर्व्यापारवत्कारणं कारकमिति निर्वचनात् नच व्यापारातिरिक्तिस्तज्जन्यस्तज्जन्यजनको व्या-
पार इति हि तन्निरुक्तेरिति मतं मैवं सर्वस्योदीरितखंडनालंघनाजंघालत्वात् तथाहि तावत्प्रयत्नात्यंताभावानधि-
करणत्वं विकल्पासहत्वात् प्रयत्नात्यंताभावः किमेकोनेको वा एकत्वे तत्रैवातिव्याप्तिः तस्य तदनधिकरणत्वेपि कर्तृत्वा-
भावात् नापि भावत्वे सतीति विशेषणाद्दोषः भावत्वस्य प्रागेव निरस्तत्वात् अत्यंताभावानामनेकत्वेपि सर्वप्रयत्ना-
त्यंताभावानधिकरणत्वं लक्षणमुत यत्किंचित्प्रयत्नात्यंताभावानधिकरणत्वं न प्रथमः लक्षणस्यासंभवित्वा-
त् स्वप्रयत्नात्यंताभावानधिकरणत्वेपि चैत्रेन नानरप्रयत्नात्यंताभावाधिकरणत्वात् नचरमः प्राचीनदोषानुषंगात्॥

इदमेव यथायथं दर्शयति तथाहीत्यादिना तत्रैवातिव्याप्तिः प्रयत्नात्यंताभावस्यैकत्वेन स्वाधिकरणत्वाभावादित्यर्थः ननु बहव एवात्यं-
ताभावास्तत्रश्च तस्याप्यत्यंताभावो न एकत्वाच्चातिव्याप्तिरिति तत्राह अत्यंताभावानामिति असंभवित्वमेव दर्शयति स्वप्रयत्नेति नह्येकस्यै-
व सर्वपुरुषप्रयत्नाः संभवंति सर्वस्य सर्वशक्तित्वप्रसंगादित्यर्थः प्राचीनेति यत्किंचित्प्रयत्नात्यंताभावानधिकरणत्वमेकैकप्रयत्नात्यंताभावे-
ष्वेवास्ति स्वस्वाधिकरणत्वाभावात् नो तिव्याप्तिस्तदवस्थेत्यर्थः किंच त्वद्दर्शनपराहतं चेदं कर्तृलक्षणमित्याह॥ ६ ॥

किंचेति यदिदं संयोगादीनामव्याप्यवृत्तित्वं भवद्भिराद्रियते तन्नांशवृत्तित्वं निरंशत्वादात्मादीनां सांशेप्यप्रत्यक्षतापत्तेस्तस्मात्तत्रैव वृत्तिस्तै
वावृत्तिरिति स्वात्यंताभावसमानाधिकरणत्वमेवाव्याप्यवृत्तित्वमिति मंतव्यं तथा चात्मैव प्रयत्नात्यंताभावाधिकरणमिति तदनधिक
रणत्वलक्षणं कर्तृत्वमसंभव्येवेति खंडलकार्थः प्रसंगात्कर्तृत्वलक्षणांतरमपि दूषयति नचेति तत्प्रयोक्तृत्वं कारकप्रयोक्तृत्वमि
त्यर्थः कुठारादिकारकप्रयोक्तरिह स्तादावतिव्याप्तिवारणाय कारकाप्रयोज्यत्वविशेषणं असंभवमेव विवृणोति नहिकरणादीति ॥
द्वितीयेपितार्किकमतेऽस्मदादिकर्तृष्वव्याप्तिरित्याह सेश्वरेति नेश्वरव्याप्तिरिति शेषः अथानीश्वरवादिनः प्रति किं दूषणमिति तत्राह

किंचैकदेशवृत्तीनां संयोगविभागशब्दात्मविशेषगुणानामव्याप्यवृत्तित्वं नाम स्वात्यंताभावसमानाधिकरणत्वमित्युपग।
न्तॄनां कथमात्मनः प्रयत्नात्यंताभावानधिकरणत्वसंभवेत् प्रयत्नात्यंताभावस्यापि तत्रैव वृत्तेः नच स्वतंत्रः कर्तेत्यपि युक्तं।
स्वातंत्र्यानिरुक्तेस्तथाहि किं कारकांतरनिरपेक्षतया फलजनकत्वं स्वातंत्र्यं किं वा कारकाप्रयोज्यत्वे सति तत्प्रयोक्तृत्वं ना।
द्योसंभवात् नहि करणादिनिरपेक्षस्य कर्तुः फलसाधकता दृष्टचरी न द्वितीयः सेश्वरवादे सर्वचेतनानामीश्वरप्रयोज्य
त्वात् अनीश्वरवादेपि राजादिप्रेरितभृत्यादेरकर्तृत्वापत्तेः नच तत्र शरीरादेरेव प्रेर्यत्वं नात्मन इति वाच्यं चेतनविशिष्टस्य
शरीरस्य प्रेर्यतया चेतनस्यापि प्रेर्यत्वात् प्रेरकत्वं च तदनुकूलप्रयत्नाधारत्वं तच्चेश्वरे जीवविषयमस्त्येव॥ अनीश्वरेति तत्रापि

भृत्यादिषु कर्तृत्वव्याप्तिरित्यर्थः ननु तत्र कर्तुरात्मनो न प्रेर्यत्वमुभयत्र किं तर्हि शरीरस्यैवातो नाव्याप्तिरिति तत्राह नच तत्रेति ननु तावदी
श्वरादिः शरीरमात्रं प्रेरयति तस्यासमर्थत्वात्तत्र तच्चेतनविशिष्टं शरीरं प्रेरयतीति वक्तव्यं तथा च विशेषणीभूतचैतनस्यापि प्रेर्यत्वम
स्त्येवेत्यर्थः जीवस्य निष्क्रियत्वेनेश्वरस्य तत्प्रेरकत्वं कथं स्यादिति तत्राह प्रेरकत्वं चेति भृत्यशरीरप्रेरणानुकूलभृत्यप्रयत्नजननानुकूलप्र
यत्नवत्त्वं राज्ञो भृत्यप्रेरकत्वं यथा लोके तथा जीवप्रयत्नजननानुकूलं चेदं प्रयत्नवत्त्वमीश्वरेप्यस्तीति जीवप्रेरकत्वमीश्वरस्य संभवतीति भावः
अस्ति च साक्षादेव प्रेरकत्वमित्याह तदनुकूलेति ईश्वरनरेश्वरादेरपि तत्तज्जीवानुगुणप्रयत्नाधारत्वादस्ति तद्रूपं प्रेरकत्वमित्यर्थः एतेन निष्क्रि

थमीश्वरप्रेर्यत्वमितिप्रत्युक्तं ननु नहीश्वरव्यतिरिक्तकारकाप्रयोज्यत्वं स्वातंत्र्यं विवक्षितं तथा च नाव्याप्तिरिति तत्राह नचेश्वा-
रेति ईश्वरप्रयोज्यत्वसंग्रहार्थं हीदं विशेषणं न च तदनीश्वरवादिनां मीमांसकानामस्ति यदर्थं विशेषणमित्याह अनीश्वरेति॥
भवतु तं प्रति दूषणं मां प्रति किं दूषणमिति तत्राह भृत्यादेरस्त्विति यच्च प्रमासार्वत्रिकत्वनिर्वचनं कृतं तदपि दूषयति प्र-

नचेश्वरव्यतिरिक्तकारकाप्रयोज्यत्वमनीश्वरवादे विशेषणावैयर्थ्यात् भृत्यादेस्तु पूर्वोक्त ।
न्यायेनाकर्तृत्वप्रसंगाच्च प्रमात्वानिरुक्तेरेव तद्विशेषितसार्वत्रिकत्वानिरुक्तिस्तज्जन्यस्त
ज्जन्यजनको व्यापार इत्यपि न तच्छब्देन सर्वस्य कारणस्याभिधाने लक्षणस्यासंभवित्वात्
नह्येको व्यापारः सर्वकारणजन्यः सर्वकारणजन्यजनको वा कारणविशेषाभिधाने तु लक्षणस्यान

मात्वानिरुक्तेरिति व्यापारलक्षणमपि दूषयति तज्जन्य इति अत्र किं तच्छब्देन कारककारणमात्रमभिधीयते नद्विशेषो
वा नाद्यः असंभवादित्याह तच्छब्देति असंभवं विवृणोति नह्येक इति द्वितीये प्राह कारणविशेषेति तच्छब्देन कारणविशे-
षाभिधाने करणान्तरव्यापाराणां तज्जन्यत्वाभावात् तज्जन्यजनकत्वाभावाच्चाव्याप्तिः स्यादिति भावः एवं सामान्यतो ॥ ५ ॥

विशेषतश्च प्रमाणानां दुर्निरूपताप्रतिपादनस्याविरोधोपयोगमाह तदेवमिति अत्र चेश्वरो द्रव्योपादानवृत्तिद्रव्यत्वावां।
नरजातिमानः आवरणविशेषगुणवत्त्वानंतत्वादिवदिति तार्किकंप्रति तथा विप्रतिपन्नं कार्यद्रव्यमात्मोपादानकं उपादानवा।
त्त्वादात्मघटसंगवत् नच विमतमात्मानुपादानकं द्रव्यत्वादात्मवदिति सत्प्रतिपक्षता अनुपादानकत्वस्यैव तत्रोपाधि।
त्वात् नच समवायिगतविशेषगुणस्य कार्ये समानजातीयारंभनियमोपि चित्रपटारंभकनीलपीततंतुषु तदभावादि।

तदेवं प्रत्यक्षादिप्रमाणानां दुर्निरूपत्वाज्जगत्कारणब्रह्मात्मतत्त्वप्रतिपत्तिपराणां वेदांतवचसां नतद्विरोधगंधो
पीतिसिद्धं ननु तथापि न ब्रह्मणो जगत्कारणत्वं परमाणूनामेव जगत्समवायिकारणत्वात् ॥ ॥९॥

त्यादितर्कानदनुगृहीतागमाच्च ब्रह्मणो जगत्कारणत्वमवगंतव्यं जगत्कारणं ब्रह्मात्मतत्त्वमित्युक्तमसहमानाः परमाणुका।
रणवादिनो वैशेषिकनैयायिकादयः प्रत्यवतिष्ठंते ननु तथापीति नत्किं परमाणूनामेव जगत्कारणत्वं तथाच गतमीश्वर।
स्य निमित्तकारणत्वेनेत्यपराह्णंतस्तत्राह समवायिकारणत्वादिति उपादानत्वमेव हि भवता ब्रह्मणः सिसाधयिषितं इतर
स्यास्माभिरप्यंगीकारात् नचतच्छक्यसाधनं परमाणूनामेव तत्त्वादित्यर्थः॥

ननु लोकसिद्धं वा परमाणुकारणत्वमादाय ब्रह्मकारणत्वं निराक्रियते वादिसिद्धं वा नाद्यस्तत्र विप्रतिपत्त्यभावप्रसंगात् न द्वितीयस्तत्र कस्यचि
दपि प्रमाणस्यासंभावितत्वात् वादिनामपि प्रामाणिकतया संभाविते हि भ्रान्तिर्भवति इतरथातिप्रसंगादित्याक्षिपति नन्विति नसंतीति पृथ्वीत्वादेर्नित्यवृत्ति
त्वमूर्त्तनित्यवृत्तित्वादेरसंभवित्वात् प्रामाण्याभावादिति नन्वित्यवृत्तित्वज्ञानस्य भ्रान्तत्वादित्यर्थः किमणुगतपरिमाणतारतम्यमत्र पक्षः किं वा म
हत्त्वस्य यदि द्रमाकाशाद्यपेक्षयापकर्षतारतम्यं तद्वा नाद्य इत्याह अणिविति त्वदभिमतानामिति परमाणूनां द्व्यणुकानां चेत्यर्थः न केवलं प
रं प्रतिसिद्धं तन्मत्यामाश्रयासिद्धिर्न द्व्यणुषु तारतम्यं परिमाणस्यास्ति नापि द्व्यणुकपरमाणुपरिमाणयोः नित्यत्वमात्रं हि पारिमाण्डल्यस्य परमाणु

ननु परमाणव एव न संति प्रमाणविधुरत्वात् न तावदणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात् महत्परिमाणतारतम्य
वदित्यनुमानं मानं अणुपरिमाणशब्देनाणुनिष्ठपरिमाणविवक्षायां त्वदभिमतानामेवासिद्धौ तत्परिमाणस्य तत्तारतम्यस्य वाप्रसिद्ध
त्वादाश्रयासिद्धेः तेषु परिमाणतारतम्यानंगीकाराच्च महत्त्वापकर्षतारतम्यस्य च क्वचिद्विश्रान्तिसाधने त्रसरेणुष्वेव तद्विश्रान्तिसि
द्धेः सिद्धसाधनत्वात् जालांतरगते भानौ यो सूक्ष्मो दृश्यते रजः परं तत्परमाणूनां परिमाणं प्रचक्षते इति ब्रह्माण्डपुराणे दर्शनादिति चेन्मै
वं त्रसरेणुः सावयवः चाक्षुषद्रव्यत्वात् महत्त्वे सति क्रियावत्त्वाद्वा घटवदिति सावयवत्वानुमाने महत्त्वापकर्षस्य तत्र विश्रान्त्यनुपपत्तेः ॥

परिमाणस्य द्व्यणुकपरिमाणाद्विशेषइत्यभिप्रेत्याह नेष्विति द्वितीयं शंकते महत्त्वेति ननु कथं त्रसरेणुभिर्यान्तरतायनस्ततोऽप्यपकृष्टमह
त्त्वस्य क्वचित्संभावनायां विरोधाभावादिति चेन्न पुराणवचनविरोधादित्याह जालेति· जालं· वातायनं· भानुः किरणं· तत्र हि परमाणूनां परं परिमा
णं प्रचक्षत इति दर्शनाच्च ततोऽपकृष्टमेतदसीति भावः· अत्र तार्किकः सिद्धसाधनतां परिहरन् महत्त्वापकर्षतारतम्यमेव पूर्वानुमाने पक्षतया परिगृह्ण
प तिमैवमिति रूपादावनैकान्त्यपरिहाराय द्रव्यग्रहणम् आत्मादावनैकान्तिकतानिवृत्त्यै चाक्षुषग्रहणं परमाणौ विभुद्रव्ये च द्वितीये हेतुगतविशे
षणाभ्यां व्यवच्छिद्यं ते एवं त्रसरेणुसावयवत्वानुमानेन तदवयवानां ततोऽप्यणुतराणां संभवान्न त्रसरेणुषु तद्विश्रान्तिः यद्यपीदं द्व्यणुकेचरितार्थं तथा
॥ ७ ॥ पि महदारंभकत्वेन तेषामपि सावयवत्वानुमानात्तदवयवभूतपरमाणुसिद्धिरिति भावः॥

इदानीं साक्षात्परमाणुसाधकं सर्वदेवीयमनुमानमाह पृथिवीत्वमिति जातित्वे सतीत्युक्ते संयोगत्वकर्मत्वादावनैकान्तस्तन्निवृत्त्यर्थं घटवृत्तीत्युक्तं तथापि घटत्वेनैकान्तिकस्तदर्थं पटग्रहणं पटत्वेनैकान्तिकतानिवृत्त्यर्थं घटग्रहणं महाविद्यानुमानमप्याह अयं घट इति एतद्घटातिरिक्तत्वे सति यदनित्यमूर्तत्वानधिकरणं यन्मूर्तं ततोऽन्यः मूर्तान्य इत्युक्ते पटान्यत्वेनार्थान्तरतानुदर्थं मूर्तातिरिक्तमूर्तान्य इत्युक्तं तथा च व्याहतिर्मूर्तत्वानधिकरणत्वमूर्तत्वयोर्व्याघातात् ततश्च तन्तोऽन्यत्वसाधने अप्रसिद्धविशेषणता अतिरिक्तपदेनानधिकरणत्वस्य विवक्षितत्वात् इतरथार्थान्तरतायाद्युपरिहरत्वात्तदर्थमनित्यमूर्तातिरिक्तेत्युक्तं तथाप्यप्रसिद्धविशेषणता परमाणुसिद्धिव्यतिरेकेणानित्यमूर्तत्वानधिकरणमूर्तस्यासिद्धेः तत्परिहारायैतदतिरिक्तपदं अनित्यमूर्तत्वानधिकरणमूर्तस्याप्रसिद्धत्वेऽप्येतदतिरिक्तत्वे सत्यनित्यमूर्तत्वानधिकरणस्यैतस्य घटस्य प्रसिद्धत्वात्तदन्यत्वस्य च पटादौ प्रसिद्धेः तेन नाप्रसिद्धवि-

पृथिवीत्वं नित्यवृत्ति घटवृत्तिजातित्वे सति पटवृत्तिजातित्वात्सत्तावत् अयं घट एतदतिरिक्तानित्यमूर्तातिरिक्तमूर्तान्यः प्रमेयत्वात्पटवदिति प्रयोगसंभवाच्च न च निरवयवयोः संयोगाभावादसमवायिकारणाभावे कथं कार्यद्रव्यारंभकत्वमिति

शेषणतासाध्यवैकल्ये पक्षे तेनैतदतिरिक्तानित्यमूर्तत्वानधिकरणत्वमेतदतिरिक्तत्वानधिकरणत्वाद्वा नित्यमू- (१वाच्यं·॥५) र्तत्वानधिकरणत्वाद्वा आद्ये तादृशमूर्तादन्यत्वमस्य व्याहतं तादृशमूर्तस्य तत्त्वेन तस्यैव तस्मादन्यत्वाभावात् द्वितीयेऽप्यनित्यमूर्तत्वानधिकरणमूर्तत्वं मूर्तत्वानधिकरणत्वान्न संभवतीति व्याघातादेव ततो नित्यत्वानधिकरणं मूर्तं परमाणुमादायैतदन्यत्वमस्य सिद्धमिति परमाणुसिद्धिः नित्यमूर्तः परमाणुरिति तत्त्वस्तादित्यर्थः स्यादेतन्निरवयवास्तावत्परमाणवोऽस्युपगम्यन्ते तथा ह्यंत्यावयविनमारभ्यानुभूयमानोयमवयवावयविविभागोयन्तः परावर्तेत सहि परमाणुरिति अन्यथा सुमेरुसर्षपयोरनंतावयवतया समानपरिमाणात्वप्रसंगात् न च निरवयवयोः संयोगोस्ति अव्याप्यवृत्तित्वान्न सा निरवयवे च यदि वर्तेत किं तत्र व्याप्नुयात् यदि च न व्याप्नुयात् क वर्तेत विमतम संयोगि निरवयवत्वात् रूपादिवदिति प्रयोगाच्च तस्मादंगीकृतेष्वपि परमाणुषु तेषां परस्परसंयोगाभावात्तदसमवायिकारणकद्व्यणु

मवायिकारणत्वाभावात्तन्नहि प्रमाणविरोधो वेदान्तानां तथा चैकैकैरेव परमाणुभिरसंयुक्तैर्द्व्यणुकाद्यारंभः तथा सति तद्गत्य
नकार्य्यस्य विनाशहेत्वभावान्नित्यता स्यात् असमवायिकारणनाशात्समवायिनाशाद्वा खलु द्रव्यनाशः तत्र संयोगलक्षणासमवाय्य
नंगीकारेण नाचनित्यत्वात् द्व्यणुकादेर्नाशो न स्यात् नित्यत्वे चान्त्यावयविपर्य्यन्तेनित्यतापत्त्या घटविनाशो नोपलभ्येतेति त
त्राह नचेति निरवयवपरमाणवनंगीकारे ऽंगीकारे वा संयोगित्वमप्रत्याख्येयमित्याह परमाणिवति एवं बाधकं परिहृत्यान
न्संयोगित्वप्रमाणमाह द्रव्यत्वेनेति एतेन पूर्वानुमानस्याद्रव्यत्वमुपाधिरित्युक्तं ननु सावयवत्वप्रयुक्तं घटादौ संयोगित्व
मिति व्याप्यत्वासिद्धो हेतुरिति तत्राह नचेति सावयवत्वमेवविवेचयन्नर्थतः पक्षेतरत्वं दर्शयति कार्य्येति आकाशादिर्गुणा

परमाणवसिद्धो तत्स्वीकारेण संयोगित्वस्य साधयितुमशक्यत्वात् सिद्धौ च धर्मिग्राहकप्रमाणबाधात् द्रव्य
त्वेन घटादिवत्संयोगित्वानुमानाच्च नच सावयवत्वमुपाधिरर्थतः पक्षेतरत्वात् कार्य्यद्रव्यत्वं वा समवेतत्वे सति द्र
व्यत्वं वा सावयवत्वं तथा च द्रव्यत्वेनैव साध्यव्याप्तौ सिद्धायां कार्य्यपदस्य समवेतपदस्य च जन्यत्वेन सक
र्तृकत्वानुमाने शरीरिजन्यत्वोपाधौ शरीरिपदस्येव साधनाव्यापकत्वमात्रप्रयोजनस्योपादाने कथं न पक्षेत
रता साध्यव्याप्तौ सत्यां साधनाव्याप्यर्थं यत्र विशेषणमुपादीयते स पक्षेतर इति तल्लक्षणात् नच द्वितीयसंयोगासंभ

दिश्योभयत्र विशेषणद्वयव्यावर्त्यं तदयमर्थः यथाह्यंकुरादि सकर्तृकं कार्य्यत्वाद्घटादिवदित्यत्र ((वाप्यर्थमात्रानुपपत्तिदोषः॥
शरीरिजन्यत्वस्योपाधित्वोद्भावने जन्यत्वमात्रस्य घटादौ साध्यव्याप्तौ सिद्धायां शरीरिग्रहणं पक्षीकृतांकुरादौ साधनव्याप्तिपरिहारार्थ
मिति पक्षेतरत्वं एवं द्रव्यमात्रस्यैव संयोगित्वव्याप्तौ सिद्धायां कार्य्यत्वं समवेतत्वं वा विशेषणं पक्षीकृतपरमाणुषु साधनव्याप्तिपरिहा
रार्थमतः पक्षेतरत्वमिति ननु पक्षमात्रव्यावर्त्तकः पक्षेतरो नाम न पुनरित्थंभूत इति तत्राह साध्यव्याप्ताविति ननु निरंशस्य संयोगे स
त्येकपरमाणुना संयुक्ते परमाणौ परमाण्वन्तरसंयोगो न स्यात् संयुक्तप्रदेशातिरिक्तप्रदेशान्तराभावात्तावन्मात्रएव च द्वितीयसंयोगे तदा

अत्र तदारब्धकार्यशब्देन द्व्यणुकं वा त्र्यणुकं वा विवक्ष्यते किं वा चतुरणुकमिति प्रथमे त्विष्टापत्तिरित्याह द्व्यणुक इति द्वितीये प्राह
त्र्यणुक इति कारणबहुत्वाद्वा कारणमहत्त्वाद्वा प्रचयविशेषाद्वा महत्त्वमुत्पद्यते तत्र कारणमहत्त्वप्रचययोरभावे पि कारणबहुत्वा-
त् त्र्यणुके महत्त्वमुत्पद्यते नहि द्व्यणुकाभ्यां त्र्यणुकोत्पत्तिर्येन तदारब्धं महत्त्वं न स्यादपि तु बहुभिर्द्व्यणुकैरिति भावः यच्च द्वितीय-
संयोगाभाव उक्तः सोपि द्व्यणुकेषु नास्तीत्याह द्व्यणुकानामिति ननु खलु संयोगाद्युपपत्तिः परमाणूनां तथापि न तदारब्धं किंचित्।
नहि परमाणुसंघातव्यतिरेकेणावयवी नाम कश्चिदस्तीत्युक्तिर्युक्तः तस्मात्संतु नाम परमाणवः तथाप्यारंभकत्वनानुपपत्तिरि-
ति तत्राह नचावयवीति अवयविसद्भावे विज्ञानवादिनं प्रत्युक्तमानमनोहरीयमनुमानमाह एकेति एकमिति स्थूलमिति नी-

द्व्यणुके प्रथिमाभावसाधने दोषाभावात् तस्याणुत्वात् त्र्यणुके तु कारणबहुत्वादेव महत्त्वोपपत्तिः द्व्यणुकानां सा-
वयवत्वेन संयोगोपपत्तिश्च न चावयविन एवाभावात्तदारंभानुपपत्तिः एकस्थूलनीलावभासो बाह्यप्रमाप्रमात्वादु-
पदर्शनवदित्यवयविसिद्धेः न चार्थान्तरताविकल्पासहत्वात् तथा हि किं परमाणुसमूहालंबनत्वमभिप्रेतमुताव-
यवसंहतिगोचरत्वं नाद्यः परमाणूनामतीन्द्रियाणामस्मदादिप्रत्यक्षगोचरतायोगात् नापि द्वितीयः अवयवा-
नामनेकत्वादेक इति प्रत्ययगोचरत्वासंभवात् समुदायस्यैकत्वाददोष इति चेन्न तस्यावस्तुत्वात् वस्तुत्वे

लमिति च योयमवभासो बाह्ये विज्ञानाद्बहिर्भूते प्रमेत्यर्थः सौगतनये विज्ञानस्य (चेत्तस्यैवावयविता तत्संज्ञामात्रे विवादः स्यात्॥
स्वग्राहकतया ऽर्थान्तरतानिवृत्तये बाह्यग्रहणं ननु भवतु बाह्यप्रमात्वं तथाप्यवयविसिद्धिः कुतः यतो बहिरपि परमाणूनेव वा तन्त्वाद्यवयवा-
न्वालंबतामियं बुद्धिरिति तत्राह नचार्थान्तरतेत्यादिना परमाणूनामिति प्रत्यक्षः खल्वयं प्रत्ययः स्थूलाद्याकारः न च परमाणूनां प्रत्यक्षयो-
ग्यत्वं सूक्ष्मत्वाच्च न स्थूलप्रत्ययविषयत्वमिति नैरर्थान्तरतेत्यर्थः अवयवसमूहालंबनत्वं दूषयति नापि द्वितीय इति ननु नावयवमात्रं विष-
यः किंतु तत्समुदायः स चैक इति शंकते समुदायस्येति अवस्तुत्वादिति यस्य ह्यवयव्येवानिष्टः स कथं समुदायिव्यतिरिक्तं वस्तुभूतं समुदायमं-

एवमर्थान्तरतायां परिहृतायां विज्ञानवादी दृष्टान्तस्य साध्यवैकल्यं शंकते यत्प्रकाशत इति प्रकाशमानत्वं ज्ञानस्वभावत्वेन रूपादिज्ञाने सुव्या
प्तं न रूपादिरपि प्रकाशमानो विज्ञानस्वभाव एवेति ज्ञानस्वभावत्वाव गतेः स्वज्ञानस्यापि बाह्यविषयत्वमसिद्धमित्यर्थः अत्र हि प्रकाशते रूपमिति
प्रतीतेः तं रूपमुभयाभिमतमनभिमतं वेति विकल्प्य दूषयति नेति ज्ञानातिरिक्तरूपाद्यभ्युपगमे ऽपराद्धान्त इत्यर्थः आभाससमानयोग
क्षेमतां वाह यत्प्रकाशत इति अस्तित्वसाम्येकस्मिन् विज्ञाने तन्मात्रत्व प्रकाशमानत्वयोर्व्याप्तिरित्यर्थः ननु तथापि तर्कविरुद्धत्वाच्छंकि।
तोपाधित्वमनुमानस्य तथा हि वृक्षस्कन्धेषु विच्छिन्नशाखासु कंपमानासु तदंशे वयवी कंपते अपरासु कंपमानासु तदंशेन कंपते न चैतदेकस्मि।

यत्प्रकाशते तज्ज्ञानं यथा ज्ञानं प्रकाशते चेति विवादाध्यासितमित्यनुमानात्सर्वस्य विज्ञानमात्रत्वसिद्धौ साध्यविक
लो दृष्टान्त इति चेत् नोभयवादि संप्रतिपन्नस्य धर्मिणोऽभ्युपगमेऽपसिद्धान्तापत्तेः अनभ्युपगमे चाश्रयासिद्धिः यत्प्रकाशते तदुभ
यवादिसिद्धैकविज्ञानमात्रं प्रकाशते च विवादाध्यासितमिति ज्ञानाद्वैतप्रसंजकतया ऽभाससमानयोगक्षेमत्वाच्च न च कंपा
कंपावृतत्वानावृतत्वरक्तत्वारक्तत्वलक्षणाविरुद्धधर्मसंसर्गात् तदाश्रयस्यैकत्वानुपपत्तिः अवयवानां कंपे तदावर
णे तद्रक्तत्वे चावयविनोऽतद्रूपत्वे नैकस्य विरुद्धधर्मसंसर्गासिद्धेः न चावयवावयविनोः स्थलाचलयोर्युतसिद्धिः
प्रसंगः विकल्पासहत्वात् किं भेदो युतसिद्धिः १ किं वा पृथगाश्रयाश्रितत्वं २ पृथक् क्रियावत्वं वा ३ परस्परसंयोगविभागव

त्त्वं वावयविनि घटते न हि संभवति तदेव कंपते न कंपते चेति तथा घटादिष्वप्यर्द्धमात्रिय तेनार्द्धं तथा यदा दावप्यर्द्धं रक्तमरक्त
मर्द्धं दृश्यते न चैतदेकस्मिन् संभवति विरोधात् तस्मान्नास्त्येवावयवीति तत्राह न च कंपेति अवयवेभ्यो विभिन्नस्तावदवयवी
न च तस्मिन् विरुद्धधर्मसंसर्गो भागनिष्ठत्वात् कंपादीनां विरुद्धधर्माणामवयवी तु यथानुभवं कंपत एव वा आवृत एव वा विपरी
त एव वा न पुनरुभयाधिकरणमित्यर्थः स्यादेतत् यद्यप्यवयवचलनादावप्यवयवी न चलनादिमान् न हि घटचलनेऽप्यचलित
पटवद्युतसिद्धतावयवावयविनोः प्राप्नोति तथा च न समवाय इति तत्राह न चावयवेति विरुद्धधर्मवत्वेऽपि न युतसिद्धिरिति विकल्प्यपूर्वक

अत एवेत्यतिरिक्तं सिद्धसाधनत्वं विवृणोति अवयविन इति पृथक्क्रियावत्त्वं युतसिद्धत्वमिति तृतीयपक्षेऽपि सिद्धसाधनतामाह पृथक्क्रिया
वत्त्वेति अवयवेऽन्यत्कर्म अवयविन्यप्यन्यदेवेत्यत्र वैशेषिकसूत्रमपि प्रमाणयति एकद्रव्यमिति एकमेव द्रव्यं समवायिकारणं यस्य कर्मणस्तदेक
द्रव्यं न पुनः संयोगादिवदनेकवृत्तीत्युक्तं परस्परसंयोगविभागवत्त्वं युतसिद्धिरिति चतुर्थपक्षं दूषयति न चतुर्थ इति तत्र हि चलाचलत्वेन संयोग
विभागवत्त्वमापादनीयं न चैतच्छक्यमापादनं व्याप्तेरभावेन प्रशिथिलमूलत्वादिति भावः यत्वाहतत्वानाहतत्वविरुद्धधर्मसंसर्गो नास्ति अवयवा
वरणेऽप्यवयविनोऽनाहतत्वानुभवादित्युक्तं अवयवानां केयेपीत्यत्र तत्र बाधकं शंकते अवयवेति केयं कार्त्स्न्येन प्रतीतिः किमवयवि
स्वरूपस्यानवशेषेण प्रतीतिः किं वा हस्तवितस्त्यादिमत्तया प्रतीतिराद्यामिष्टापत्त्या दूषयति सत्यमिति एकः खल्ववयवी न पुनरवय

न प्रथमः अवयवावयविनोर्भेदाभ्युपगमेन सिद्धसाधनत्वात् अत एव न द्वितीयः अवयविनोऽवयवाश्रयत्वेऽप्यवयवानां
स्वारंभकावयवाश्रितत्वात् न तृतीयः पृथक्क्रियावत्त्वस्योभयोरिष्टत्वात् एकद्रव्यं कर्मेति सूत्राच्च न चतुर्थः चलाचलयोरपि घटहिमाचल
योः परस्परसंयोगविभागानधिकरणत्वात् अवयवावरणेऽवयविनोऽनावरणे पूर्ववत्कार्त्स्न्यप्रतीतिः स्यादिति चेत् सत्यं कार्त्स्न्येन प्र
तीयत एव तस्यैकत्वात् तथात्वे हि हस्तत्वादि किमिति न प्रतीयत इति चेत् तदुचितावयवसन्निकर्षस्य तत्प्रतीतिहेतोरभावात् र
क्तत्वं तु महारजनादेरेव द्रव्यान्तरस्य नाप्यवयवानामिति दूरनिरस्तो विरुद्धधर्मसंसर्गः तथापि तत्संयोगाद्रक्तिमप्रतीतिः सर्वत्र किं न

ववदनेकः स चेत्प्रतीयते प्रतीत एव कार्त्स्न्येनेति नायमनिष्टप्रसंग इत्यर्थः द्वितीयं शंकते तथात्व इति सहकारिवैकल्यादिति परिहरति तदु
चितेति अवयवस्तुन्यादिका एव येऽवयवास्तेषामिन्द्रियेणायः सन्निकर्षः सोऽयेन तस्यैकहस्तादेः प्रतीतावुचितो हेतुस्तस्याभावादित्यर्थः यत्तु रक्त
त्वारक्तत्वलक्षणविरुद्धधर्मसंसर्ग उक्तस्तं परिहरति रक्तत्वं त्विति यद्धि पाकादिवशादुद्भूतरं पटेन संयुक्तं कुसुंभादिद्रव्यान्तरं तद्धर्म एव रक्तत्वा
दिः न पटधर्मः नापि तन्तुधर्मः परं तत्संयोगात्पटस्य रक्तताप्रतीतिरित्यरक्तैकस्वभावत्वात्पटस्य दूरनिरस्तो विरुद्धधर्मसंसर्ग इत्यर्थः स्यादेतत् भवतु
हरिद्रादिसंयोगात्पटे रक्तप्रतीतिस्तथापि किमिति न सर्वात्मना पटे रक्तिमप्रतीतिः एकः खल्ववयवी तेन संयुक्त इति तस्माद्रक्तप्रतीतिविषयत्वं तद्र

परिहरतिनेति यद्यप्येक एवावयवी तथापि द्रव्यान्तरसंयोगस्तस्मिन्न सर्वस्मिन्वर्त्तते ऽपि त्वव्याप्यवृत्तिर्यावति च स वर्त्तते न भवत्येव रक्तप्रती
तिरियमप्यस्तीत्यर्थः एवं विरुद्धधर्मसंसर्गपरिहृतेऽपि वृत्तिविकल्पानुपपत्त्या शंकितोपाधितां शंकते नन्वित्यादिना ननु किमिति शृंगेणास्त
नकार्य्यप्रसक्तिः न च शृंगस्य स्तनत्वमस्तीति तत्राह अवयविन इति अन्वयोजनकतया संबंधित्वं अत्रैव दूषणान्तरमाह युगपदिति।
क्रमेणानेकत्र वर्त्तमानदेवदत्तादिव्यवच्छेदाय युगपदग्रहणं यदि हि प्रत्यवयवं परिसमाप्य वर्त्तेत तदा प्रतिद्रव्यं परिसमाप्य वृत्तिरूपादिवद
नेकत्वमपि स्यादित्यर्थः ननु किमित्यारंभकव्यतिरेकेणाहत्यर्थमप्यवयवा न स्युः कोशावयवेषु वर्त्तमानासेः कोशावयवव्यतिरिक्तावयवत्वदर्श

संयोगस्याव्याप्यवृत्तित्वात् नन्ववयवेषु वर्त्तमानोऽवयवी किं वा कार्त्स्न्येन वर्त्तते उतैकदेशेन नाद्यः शृंगेणापि स्तनकार्य्यकरण
प्रसंगात् अवयविनः कार्त्स्न्येनान्वयात् युगपदनेकत्र वृत्तावनेकवृत्तिरूपादिवदनेकत्वप्रसंगाच्च नापि द्वितीयः आरंभकावयवव्य
तिरिक्तैकदेशाभावात् भावे वानन्तावयवतया मेरुसर्षपयोस्तुल्यपरिमाणतापत्तेः अवयवावयविनोर्दूरविप्रकर्षप्रसंगाच्चेति।
चेत् मैवं विकल्पस्यानवसरदुःस्थत्वात् न ह्येकस्मिन्नेवावयविनि समस्तोऽसमस्तो वेति विकल्पः कल्प्यते बहूनां हि समस्तता
समस्तता वा संभवेत् किं चायं वृत्तिविकल्पः स्वसिद्धं व्याप्तिमवलंब्योत्तिष्ठतु न परसिद्धं नाद्यः सौगतैः सर्वस्य क्षणिकत्वे
नाश्रयाश्रयिभावानभ्युपगमात् वेदान्तिभिरपि कार्य्यस्य कारणे कल्पितत्वमभ्युपगच्छद्भिस्तैरनभ्युपगमात् नापि द्वितीयः तेनाप्य

नादित्ति तत्राह भावे चेति तदा हि तेष्ववयवेषु न हत्यर्थमवयवान्तराणि कल्प्येरन् एवं तेषु तेष्वपीत्यनन्तावयवाः स्युरपरस्यान्तिमावयवे
सूक्ष्मदोषापातात् तथा च सुमेरुसर्षपयोरनन्तावयवत्वसमानमिति परिमाणसाम्यमपि स्याद्विश्रान्ततारतम्यपरिमाणाधिकरणेषु
परिमाणवैषम्यस्यावयववैषम्यनिमित्तताव्याप्तेरित्यर्थः अत्रैव दूषणान्तरमाह अवयवेति प्रथमावयवावयविनोर्मध्येऽनन्तावयव
व्यवधानादित्यर्थः एवं वृत्तिविकल्पदोषं परिहरति मैवमिति एकस्मिन्ननुपपत्तिमेवव्यतिरेकनियमेन दर्शयति बहूनामिति किं च
यद्यत्र वर्त्तते तेन कार्त्स्न्येनैकदेशेन वेति किं सौगतसमयेन नियतिः किं वा वेदान्तदर्शने आहो मद्दर्शने नैष प्रसज्यते न सर्वथापीत्याह किं चाय

२
चि·प्र·
टी·न·
१०२

ननु संयोगनवेदान्तिदर्शनयोर्न्यत्वनंगीकारादेवयुक्तस्तत्प्रयुक्तनियमेप्यनादरः कर्तुंभवतात्तुवृत्तिसंगीकुर्वताकाचिन्नियतिरंगीकर
णीयैवेतितत्राह यद्वर्ततइति संबंधेएवनियतिर्नकार्त्स्न्यैदावित्यर्थः ननुकिमितिनप्रसंगः यावताऽवयविनएवकार्यकरत्वादायतत्येवे
तितत्राह ननद्वयवेति यथाह्यवयविनोन्वयव्यतिरेकौ तथा ननद्वयवोपेततथापीत्यर्थः किंचयद्येकदेशेनवर्ततेतयदिवाकार्त्स्न्येन।
यदिवावयवेभ्योऽतिरिच्येततनहीदमिदंस्यादितियदिदं प्रसंजनंतत्राश्रयभूतः कश्चिदवयवीस्वीकृतोनवाउभयथाप्यनुपपत्तिरित्य

यद्वर्ततेनतत्संयोगेनसमवायेनवावर्ततेइतिपरोंगीकरोतिननुकार्त्स्न्यैकदेशाभ्यां अस्तुवाकार्त्स्न्येनवृत्तिस्तथा।
पिनशृंगेणास्तनकार्यकरणप्रसंगः तत्तद्वयवविशिष्टस्यैवावयविनस्तत्तत्कार्यप्रसवसमर्थत्वात् सर्वस्यायंप्रसं
गहेतुराश्रयासिद्धोऽवयविनोऽनंगीकारादंगीकारेवाधर्मिग्राहकप्रमाणबाधः परसिद्धेनपरस्यानिष्टापादनमितिचेन्
नपरस्यापिप्रमाणतः सिद्धावसिद्धौ चपूर्वोक्तदोषद्वयानतिवृत्तेः अस्त्येवेतरस्यापिकल्पनाकल्पितोधर्मीति
चेन् नकल्पनायाः सर्वत्राव्याहतप्रसरतयाऽश्रयासिद्ध्यादिदोषप्रमोषप्रसंगात् तदेवंपरमाणूनामेवद्व्यणु।
कादिक्रमेणानिष्पत्तिरिति निखिलजगत्कारणतोपपत्तौ नब्रह्मणस्तत्कारणत्वकल्पनावकाशइति ॥ ५ ॥

ह सर्वस्यायमिति प्रसंगहेतुंप्रसंजकोहेतुरित्यर्थः अनंगीकारेप्याश्रयासिद्धिपरिहारंशंकते परेति परस्यापिकिंप्रमाण।
तः सिद्धत्वयाधर्मीक्रियते उतप्रतीतिमात्रसिद्धः आद्ये धर्मिग्राहकप्रमाणबाधः नहिपरप्रमाणमप्रमाणंभवति वस्तुनोनन्य।
थाभावात् द्वितीयेत्वाश्रयासिद्धिरितिपरिहरति नपरस्यापीति ननुकिमित्याश्रयासिद्धिर्धर्मिग्राहकप्रमाणबाधोवायावताका।
ल्पितः कश्चिदवयवीममाप्यस्त्येवेति शंकित्वाअतिप्रसक्त्यापरिहरति नकल्पनायाइति उपपादितोयमर्थोमिथ्यात्ववादे ॥ ५

राम·
१०२

पूर्वपक्षमुपसंहरति तदेवमिति तत्रतावत्परमाणुसाधकतया शंकितानुमानेषु दूषणानि श्लोकेन संगृह्णाति अर्थान्तरत्वादीति अणुपरिमाणतार-
तम्यमित्यनुमाने त्र्यणुकैरर्थान्तरता यत्तु पृथिवीत्वस्य नित्यवृत्तित्वानुमानं तत्राह परस्येति यत्तु महद्विशेषानुमानमुक्तं तत्र आभाससमानयोगक्षेमतां सत्प्र-
तिपक्षतां चाह अंत्यस्येति संग्रहं विवृणोति यत्तावदित्यादिना कक्षायं तरतमभावः तत्तावत्संख्या परिमाणेऽसंभवात् नापि जातिः महत्त्वाणु-
त्वाभ्यां परापरभावाभावात् अभावत्वं त्वेतादृशानां पुरैव निवारितं न तस्याप्यसिद्धिरपि दूरतरा यत्तु त्र्यणुकानामपि सावयवत्वानुमान
द्वारार्थान्तरत्वं परिहृतं तत्राह नचेति अत्र किं चाक्षुषत्वमात्रं विवक्षितं किं वा योगिचाक्षुषत्वं आद्ये भवतामनैकांतिकतास्यादित्याह आद्य-
स्येति परमाणुष्वित्युपलक्षणम् कालादीनामपि द्वितीयं दूषयति नचेति अत्र नावच्छाद्यानां कालाकाशदिशामप्यस्मादिचाक्षुषत्वात्।

अत्रोच्यते अर्थान्तरत्वादाद्यस्य परस्योपाधिमत्त्वतः अंत्यस्याभासतुल्यत्वात्प्रतिसाधनरोधनात् ३८ यत्तावत्महत्त्वापकर्षतरत-
मभावस्य क्वचिद्विश्रान्तिसाधनं तदर्थान्तरं त्रसरेणुष्वेव तस्य विश्रान्तेः न च चाक्षुषद्रव्यत्वात् महत्त्वे सति क्रियावत्त्वाद्वा तेषामपि सावय-
वत्वानुमानात्तत्र विश्रान्त्यनुपपत्तिः आद्यस्य योगिचक्षुर्गोचरेषु परमाणुष्वनैकांतिकत्वात् न चास्मदादीति विशेषणोपादानाद्दो-
षः परमाणूनामिदानीमेव साधनीयतया तद्व्यावृत्त्यर्थं विशेषणस्य वैयर्थ्यात् द्वितीयेऽपि महत्त्वे सतीति विशेषणस्य परमाण्वसि-
द्धौ वैयर्थ्यात् यत्तु पृथिवीत्वस्य नित्यवृत्तित्वानुमानं तत्र पृथिवीत्वातिरिक्ताधेयत्वमुपाधिः सत्तायामपि नित्यवृत्तित्वानंगीकारात्साध्य-

व्यावृत्त्यर्थं न स्यात्तस्माद्योगिनामेव प्रत्यक्षपरमाणुव्यावृत्त्यर्थमिदं विशेषणं तथाच वैयर्थ्यं योग्यतानंगीकारात् "विकलश्च दृष्टान्तः॥
दपि भाष्यान्यतिवैयर्थ्यमित्यर्थः द्वितीयं सावयवत्वसाधकं दूषयति द्वितीयेति निरवयवपरमाणुषु क्रियावत्त्वानैकांतिकतापरिहारार्थं
महत्त्वे सतीति विशेषणं तथाच वैयर्थ्यमित्यर्थः भवतु वा सावयवत्वं तथापि कथमर्थान्तरताऽभावः नहि द्व्यणुकादौ महत्त्वापकर्षविश्रामसंभ-
वः तत्र महत्त्वस्यैवाभावात् परस्योपाधिमत्त्वमित्येतद्विवृणोति यत्त्विति सत्तायां नित्यवृत्तित्वेऽपि पृथिवीत्वरहितवृत्तित्वमुपाधिं न च पक्षेत-
रता आकाशादेर्विपक्षस्य व्यावर्त्यस्य सत्त्वात् इदं निमित्ते साध्यवैकल्यं चाह सत्तायामिति आकाशादिप्रपंचस्य नित्यत्वाभावात्सत्तायाः कल्पितत्वा

त्व

अंत्यस्येत्येनहि दूषणेति अयंघटइत्यादिना अत्रहेतुदनिरिक्तानित्यसावयवातिरिक्तः सावयवोयमेववाघटोऽनित्यत्वान॰
धिकरणसावयवोवाकश्चिन्मध्यमेऽन्यत्वमेवतत् घटस्यव्याहतमितितनोऽनित्यत्वानधिकरणस्यसावयवस्यकस्यचिदप्यनुपस्थि
ह्यिप्रसंगइत्यर्थः नचानित्यद्रव्यस्येवसावयवत्वंस्यादनित्यसावयवत्वानधिकरणसावय वान्यत्वानुमानेव्याघातादेवतोदेनोति
वाच्यं मूर्तस्याप्यनित्यताव्याप्तादनुमानेपिव्याघातसाम्यात्परिच्छिन्नपरिमाणमात्रमेवमूर्तत्वमित्युक्तेद्रव्यत्वेसति द्रव्यसमवे॰
तत्वमेवसावयवत्वंनपुनरनित्यत्वगंधइत्यपिवक्तुंशक्यमितिभावः १ तथायंघटएतदृत्वे सतिएतदतिरिक्तानित्यमूर्तत्वान॰
धिकरणमूर्तान्योनभवतिमेयत्वात्पटवदितिप्रकरणसमता २ तथात्वहेतुःस्वस्वेतरवृत्तित्वानधिकरणसमस्तहेतुदोषाधिकरण॰
निष्ठधर्मवान्मेयत्वात् ३ तथानित्यत्वंस्वस्वेतरवृत्तित्वानधिकरणमूर्तनिष्ठत्वरहितनिष्ठधर्माधिकरणमेयत्वात् ४ तथानिरवयवत्वंस्व

अयंघटएतदतिरिक्तानित्यमूर्तातिरिक्तमूर्तान्य इत्यनुमानमाभाससमानंअयंघटएतदतिरिक्तानित्य
सावयवातिरिक्तसावयवान्योमेयत्वादित्यपिप्रयोगस्यसुवचत्वात् पृथिवीत्वमनित्यमात्रवृत्ति॥
पृथिवीमात्रवृत्तित्वात् घटत्ववदितिप्रतिप्रयोगसंभवाच्च॥ ९ स्वेतरवृत्तित्वानधिकरणमूर्तनिष्ठत्वरहितनिष्ठधर्माधि

करणंमेयत्वात् ५ इत्यादिमहाविद्याभिरेवार्थतः सत्प्रतिपक्षताकेनवार्यतेतथापियस्यकस्यचिदुपाधितामुद्भाव्यतत्साध्येसमत्वादिवि
प्रतिपत्तावप्येतद्वैपरीत्यासमर्थनीयंतथाहेत्वादिकमपिपक्षीकृत्यवैपरीत्यमनुमानव्यपरमाणवनंगीकारेप्येवमनुमानसंभवइत्य
तेतथारीत्यंतरेरपिनचैतेषांतर्कविद्याविरोधादिदोषः शक्यशंकः विमतान्यनुमानानिस्वस्वेतरवृत्तित्वानधिकरणसकलदूषणरहितनि
ष्ठधर्माधिकरणानिमेयत्वात्तदित्यपिशक्यप्रयोगत्वात् नचमयाप्येवंवैपरीत्यमनुमातुंशक्यमितिवचनीयम् ततोप्येवंवक्तुंशक्यत्वात् एवं
हिमहाविद्याकोविदाःप्राहुः अस्मादृपरमेपितुदोषइति ननुतथापिमहाविद्याप्रामाण्यंसिद्धमेवेतिचेत् अप्रामाण्यमपिसिद्धमेवततइत्यं स्वपर
पक्षाणामेषांपारिप्लवावहाआरादेवपरित्यामहाविद्याभिसारिका १ संप्रतिसाधनतांविहरणोतिपृथिवीत्वमिति एतच्चोभयोरप्यनुमानयोः स

ज्या

नच पृथिवीनिष्ठेति सकलपृथिवीनिष्ठाया जातयः पृथिवीनिष्ठात्यन्ताभावाप्रतियोगिजातयः तदन्यत्वमुपाधिरिति नच वचनीयमि-
त्यर्थः कुत इत्यत आह व्यतिरेकेति यत्र हि पृथिवीनिष्ठात्यन्ताभावाप्रतियोगिजातित्वं तत्र नित्यवृत्तित्वमिति व्यतिरेकव्याप्तिः कुत्र गृह्यते न तावत्सत्ताद्रव्य-
त्वयोरद्वैतवादिनस्तयोरपि नित्यवृत्तित्वासंप्रतिपत्तेः अतः साध्याव्यापकत्वादनुपाधिरित्यर्थः यत्तु निरवयवस्यापि परमाणोः संयोगसमर्थनं कृ-
तं तद्दूषयति नचेति ननु परमाणुसंयोगाक्षेपस्य जगत्कारणत्वाभावे क उपयोग इति तत्राह येनेति अवयवसंयोगः खल्ववयव्युत्पत्तावसमवायि-
कारणं स हि लघुप्रत्यासत्तेः नहि परमाणूनां तदभावे कारणान्तराभावाद्द्व्यणुकाद्यारंभ इत्यर्थः परमाणुव्यक्तिमात्रपक्षीकरणमाशंक्य

वे २

नच पृथिवीनिष्ठात्यन्ताभावाप्रतियोगिजात्यन्यत्वमुपाधिः व्यतिरेकव्याप्त्यसिद्धेः साध्याव्यापकत्वात् सत्ताद्रव्यत्वयोरपि नित्यवृ-
त्तित्वासंप्रतिपत्तेः नच निरवयवेषु संयोगसंभवः येनासमवायिकारणसंपत्त्या द्व्यणुकारंभः संभाव्येत परमाणुपक्षीकारासंभवेपि सं-
योगित्वं सावयवमात्रवृत्ति संयोगिमात्रवृत्तित्वात् घटत्ववदिति संप्रयोगोपपत्तेः नच द्रव्यत्वेन संयोगित्वानुमानमुभयवादि-
सिद्धस्य धर्मिणोऽभावात् नच संयोगित्वं निरवयववृत्ति संयोगिनिष्ठात्यन्ताभावाप्रतियोगित्वान्मेयत्ववदिति सप्रतिसाध-
नता संयोगिव्यापिनि सावयवत्वधर्मे परस्यानैकान्त्यात् नच द्वितीयसंयोगानुपपत्तिर्दोषः ॥ २१ ॥ पूर्ववादिना यद्दूषणमुक्तं तत्त-
दनंगीकारपरास्तमिति वदन् संयोग्यंतरस्यानुमानमारचयति परमाणाविति नच द्रव्यत्वेनानैकांतिकतानस्यापि पक्षतुल्यत्वात् प्रा-
तिभयोगमाशंक्य दूषयति नच द्रव्यत्वेनेति ननु किमित्युभयासिद्धेर्धर्म्यभावः त्वदीयस्य संयोगित्वमेव पक्षीकृत्य शक्यप्रयोगत्वादिति तत्राह
नच संयोगित्वमिति संयोगिनिष्ठ घटत्वादिव्यावर्तनाय अत्यन्ताभावपदं यस्य हि सावयवमेव संयोगीति मतं तन्मते सावयवत्वानैकांतिकमित्यर्थः
किंच संयोगित्वं गुणादिवृत्तिसंयोगिनिष्ठात्यन्ताभावाप्रतियोगित्वान्मेयत्वादिवदिति शक्यानुमानत्वादाभाससमानयोगक्षेमत्वं यच्च द्वि-
तीयसंयोगाभावो न दोषाय प्रथिमानुपपत्तेरदूषणत्वादित्युक्तं तत्राह नचेति ॥

माभूत्स्थिमानुपपत्तिर्दोषः द्वितीयसंयोगानुपपत्तिरेवदोषः अपसिद्धान्तापत्तेरित्याह पार्थिवाप्येति यदाहि पार्थिवपरमाणो
राप्यपरमाणोः संयोगो जायते तदैतं तं रव पार्थिवस्यान्येन पार्थिवेन आप्यस्याप्यन्येनाप्येन संयोगो जायते तदा पार्थिवाभ्यां पार्थि-
व द्व्यणुकं आप्याभ्यां चाप्यद्व्यणुकमिति द्वयं युगपदारभ्येत इति भवतां समयः ततश्च पार्थिवाप्यपरमाण्वोः प्रथमसंयोगः संयु-
क्तयोरेव पुनः सजातीयाणुभ्यां संयोगनिष्पत्तिरिति तदनुपपत्तिर्दोषायैवेत्यर्थः अथैवमपि प्रक्रियामाभूत्किं नः छिन्नमिति त-
त्राह कारणेति अयमर्थः संयोगजसंयोगप्रकरणे ह्येकस्माद्द्वाभ्यां बहुभ्यश्चैकस्य संयोगस्योत्पत्तिमुक्त्वा पुनरेकस्मात्संयोगाद्द्व-

पार्थिवाप्यपरमाण्वोः संयुक्तयोः सजातीयाणुभ्यां संयोगान्न द्व्यणुकोत्पत्तौ द्वितीयसंयोगस्याव-
श्याभ्युपेयत्वात् कारणाकारणसंयोगेन कार्याकार्यसंयोगस्येष्टत्वाच्च न चावयवी कश्चित्संभवति यः
परमाणुभिरारभ्येत न चैकस्थूलनीलावभासो बाह्यप्रमेयत्वानुमानात्सिद्धिः यादृगवयवानामवयव्या-
रंभकताभ्युपेयते नैषामेवैकस्थूलनीलावभासगोचरत्वोपपत्तेरर्थान्तरत्वात्॥ ३ ॥ ३॥

योः संयोगोत्पत्तावित्थमुदाहृतं भवद्भिराप्यकृतायदा पार्थिवाप्ययोरित्यारभ्योक्तप्रकारेण द्व्यणुकयोरुत्पत्तिमुक्त्वा ततो यस्मिन्नेव-
काले द्व्यणुकयोः कारणगुणक्रमेण रूपाद्युत्पत्तिस्तस्मिन्नेव काले इतरेतरकारणाकारणगतात्संयोगादितरेतरकार्याकार्यगतो
संयोगो युगपदुत्पद्यते इत्युक्तं तेन तदुपपत्तिरपि नेतरेणोक्ता किं कारणाकारणसंयोगिना हि कार्यमवश्यं संयुज्यते इति हि न्यायइति।
तस्मात्त्वयोदिता द्वितीयसंयोगानुपपत्तिरनिष्टापत्तिरेवेति यच्चावयविसाधनं पूर्ववादिनोक्तं तदपि दूषयितुं क्रमते नचावयवीत्यादिना
यच्चमानमनोहरीयमनुमानं तत्र बाह्यविषयत्वेप्यवयवैरर्थान्तरतामाह न चैकस्थूलनीलेत्यादिना॥ ॥

नन्ववयवानामनेकत्वादेकबुद्धिविषयत्वानुपपत्तिरिति तत्राह नचानेकेषामिति यथा हि बहूनामपि वर्णानां बहूनामपि पदानामनेकपदार्थादिबुद्धिजनकत्वोपाधावेकं पदमेकं वाक्यमिति बुद्धिविषयत्वं न पुनस्तादृशः कश्चिद्वर्णाद्यतिरिक्तोऽर्थः तथैव ह्येककार्यक्रियोपाधौ बहूनामेव तन्तूनामेकबुद्धिविषयत्वं किमिति न संभवतीत्यर्थः नच परमाणूनामप्रत्यक्षत्वात्प्रत्यक्षबुद्ध्यविषयत्वमिति वाच्यं तादृशपरमाणूनामेवासिद्धेः। विरुद्धधर्मसंसर्गलक्षणतर्कविरोधमपि समर्थयते कंपेति पूर्वोक्तपूर्वपक्षाशयं निराचष्टे नचावयवानामिति नन्वयुतसिद्धत्वमेव विकल्पपूर्वं दूषितं तत्राह नचयुतेति नात्र भेदादिर्युतसिद्धिरापादितापि घटपटयोर्द्रव्ययोर्यादृशी युतसिद्धिः समवायायोग्यत्वात्मिका सैवात्र चलाचलत्वादिनापादनीयेति चलाचलयोरपि द्रव्यगुणयोस्तद्योग्यता नास्तीति द्रव्ययोरित्युक्तं इत्थमेव च युतसिद्धिर

नचानेकेषामेकप्रत्ययविषयत्वानुपपत्तिः एकप्रावरणाद्यर्थक्रियाहेतुत्वोपाधौ बहूनामपि तन्तूनामेकप्रत्ययत्वोपपत्तेः दृश्यते हि बहूनामपि वर्णानामेकार्थप्रतिपत्तिहेतुत्वोपाधावेकं पदमिति बुद्धिगोचरता कंपाकंपावरणानावरणारक्तारक्तत्वलक्षणविरुद्धधर्मसंसर्गादवयविन एकत्वानुपपत्तेश्च नचावयवानां तथात्वेऽप्यवयविनोः तथात्वं तथात्वे सति युतसिद्धिप्रसंगात् नचयुतसिद्धेरनिरुक्तिः घटपटयोरिव द्रव्ययोः समवायायोग्यत्वस्य युतसिद्धिपदेनाभिलापात् नच युतसिद्धत्वे भागाभागिव्यवहारगोचरत्वानुपपत्तिः पदवाक्यादिवदुपपत्तेः॥ अपेयाभवतापि इतरथा नित्यानि

त्यसाधारणायुतसिद्धेरभावात् पृथग्गत्याश्रयाश्रयित्वस्य परमाण्वादिष्वभावात् पृथग्गतिमत्त्वस्य च गुणादावभावादननुगतिः स्यात्। नचानुगतनिमित्तासंभवे साधारणशब्दता युक्ता नचैवंविधयुतसिद्धिर्गुणादावपि शक्यप्रसंजना कंपादेस्तत्रापि समानत्वादिति वचनीयं इष्टत्वात् नचाप्रसिद्धस्य समवायस्य निषेधानुपपत्तिः शुक्तिरजततादात्म्यवदज्ञातसिद्धस्यापि निषेधोपपत्तेः एवं च यद्दह किरणावलीकारः न साधुयुतसिद्धिमजानन्नेव शब्दसिद्धिमात्रेणापरोऽध्वनयतीति तदप्यन्येव परावर्तितं ननु यदि युतसिद्धिस्तर्हि घटपटवदेव भागभागिव्यवहारो न स्यादिति तत्राह नच युतसिद्धत्व इति नहि पदादीनां वर्णादीनां वा युतसिद्धिरस्ति अथाप्यस्ति भागभाग्यादिव्यव

ननु किमिति महत्त्वं न स्यात्परमाणुपरिमाणैरेवारंभसंभवादिति तत्राह परमाणिवति विप्रतिपन्नमनारंभकं नित्यपरिमाणत्वा
त्परममहत्त्ववदित्यर्थः निरवयवेष्विति प्रशिथिलावयवसंयोगो हि प्रचयः न च स निरवयवेषु संभवतीत्यर्थः न च परमाणुग
तेति अत्र किं नित्यगतसंख्यात्वादनारंभकत्वमनेकत्वसंख्यात्वाद्वा नाद्यः परमाणुद्वित्वस्याप्यनारंभकत्वप्रसंगात् नापि द्वितीयः
द्व्यणुकगतबहुत्वस्याप्यनारंभकत्वप्रसंगादिति भावः एतेनाचाक्षुषत्वं प्रत्युक्तं महत्त्वादेवोपपत्तेः यत्तु स्वयमेवाशंक्य निराकरिष्य

परमाणुपरिमाणस्य नित्यपरिमाणतयाऽनारंभकत्वात् प्रचयस्य निरवयवेष्वनाशंकनीयत्वादिति चेत् न कारणब-
हुत्वादेव त्र्यणुकादौ महत्त्वोपपत्तेः न च परमाणुगतानेकत्वसंख्याऽनारंभिका तन्न द्वित्वस्यापि द्व्यणुकपरिमाणानारंभकत्व
प्रसंगात् नन्ववयविनां परमाणूपादानकत्वे कपालशर्करादीनामनारब्धत्वात्परमाणूनां चाऽदृश्यत्वादवयवि
नाशे न किंचिद्दृश्येतेति चेन्न द्व्यणुकारब्धत्वेऽपि प्रसंगस्य तुल्यत्वात् त्र्यणुकचतुरणुकादिक्रमेणारंभान्नायं प्रसंग इति



तीत्युक्तं न त्वत्रेति नन्विति इयमनुपपत्तिर्द्व्यणुकारंभेऽपि समाना यस्माद्द्व्यणुकारब्धत्र्यणुकध्वंसे द्व्यणुकशेषतया न किंचिद्दृ-
श्येतेन तथाऽवयविनोऽपि द्व्यणुकारब्धत्वेन किंचिद्दृश्येतेति नेयं द्व्यणुकसाधकेत्यर्थः ननु नास्माभिर्द्व्यणुकैरेवाव्यवधानेन पटाद्यारंभोऽभ्यु-
पगम्यते येनायमनंतरो दोषः स्यात् किंतु त्र्यणुकादिक्रमेण तथा चोत्तरोत्तरनाशेऽपि पूर्वपूर्वस्य प्रत्यक्षत्वं घटते त्र्यणुकविनाशे त्वन्यसाद

स्यादेवं यद्येवमेवेति भवतां नियमः नन्वेतदस्ति चतुर्भिर्द्व्यणुकैश्चतुरणुकारंभवद् द्व्यणुकसहस्रेणाप्येककार्यारंभोनुमन्यत एव भ-
वतां तथा च तत्रैवोक्तानुपपत्तिः समानेत्याह नचतुर्भिरिति नच चतुरणुकमपि त्र्यणुकचतुष्टयारब्धमणुशब्दार्थाभावाद् द्व्यणुकारब्धे
द्व्यणुष्वणुशब्दप्रयोगः द्व्यणुकत्र्यणुकयोस्तथा तद्दर्शनात् परमाण्वव्यतिरिक्तयोः ननु किमिति मानाभावः यावता किरणाव-
लीकारोक्तमस्त्यनुमानमिति शंकते ननु त्र्यणुकमिति आकाशादौ व्यभिचारवारणाय कार्यत्वादि युक्तं द्व्यणुकादिनित्यद्रव्यगुणेः स्वाभिमा-
त द्व्यणुकेन च व्यभिचारवारणाय महत्त्वे सतीत्युक्तं सिद्धसाधनतानिवृत्त्यै प्रतिज्ञायां कार्यपदं तथारंभकेति तत्वारब्धपूर्वपूर्वारंभकद्रव्येषु

नचतुर्भिर्द्व्यणुकैश्चतुरणुकवत् द्व्यणुकसहस्रारब्धकार्यनाशेपि प्रसंगस्य तुल्यत्वात् तस्माद् द्व्यणुकसद्भावेन किंचि-
न्मानमस्ति ननु त्र्यणुकं कार्यद्रव्योपादानकं महत्त्वे सति कार्यत्वात् घटवत् तथारंभकद्रव्यसंख्यापकर्षतारतम्यं क्व-
चिद्विश्रांतं तरतमभावत्वात् परिमाणतरतमभाववत् नचैकत्वसंख्यायामेव विश्रांतेः सिद्धसाधनता तथासत्येकद्रव्य-
स्यैव द्रव्यारंभकत्वप्रसंगात् नचैकद्रव्यारब्धं द्रव्यं कार्यद्रव्यस्यानाशप्रसंगात् कारणविभागस्य कारणविनाश-
स्य च तन्नाशहेतोरभावात् ततो द्व्यणुकसिद्धौ न परमाणूपादानकत्वं त्र्यणुकस्येति चेत्॥

१ यदिदं संख्यापकर्षस्य तार-
तम्यं तत् क्वचिद्विश्रांतं नचाश्रयासिद्धिर्यतोस्ति तावद् घटानुप्रविष्टपरमाणुसंख्यापेक्षया तदवयवकपालमनुप्रविष्टपरमाणुसंख्यापकर्ष
इतरथा घटकपालयोर्गुरुत्वादिसाम्यापातात् नचापकर्षो निरवधिः एकत्वादपकृष्टसंख्याभावात् नचैकत्वमेव तदवधिरित्यर्थान्तरता तस्या-
रंभकद्रव्यसंख्यात्वाभावात् नह्येकद्रव्यमारंभकं तथासति संयोगलक्षणासमवायिकारणाभावात् विनाशहेत्वभावान्नित्यतापाताच्च तस्मा-
त्परमाणुगतद्वित्वविश्रान्तिभूमिः तथाच परमाणुद्वयारब्धं कार्यं तद् द्व्यणुकमिति भावः ॥

द्वि॰प्र॰
टी॰न॰
११९

तदेतद्दूषयति नप्रथमेति घटादौ कार्योपादानकत्वेन द्व्यणुकहेतुर्न प्रयोजकः किंतु महदुपादानकत्वमाकाशादौ व्यतिरेकसिद्धेर्न प
क्षेतरत्वेतिभावः वस्तुतो नायमुपाधिर्महत्त्वस्यैव पक्षीनद्दूषणां तु सम्प्रतिसाधनं वक्ष्यते अपि च घटत्वमत्रोपाधिर्न च साध्याव्या
पकता त्र्यणुकघटान्यतरत्वे सति कार्यद्रव्योपादानकत्वे घटत्वस्योपाधित्वात् साधनावच्छिन्नसाध्यव्यापकोपाधिवत् तथा च
साध्यव्यावृत्तिसिद्धिः तदन्यतरत्वाव्यावृत्तेरशक्यत्वात् सर्वानुमानभंगप्रसंगश्चानिर्वचनीयवादिनोनवचनीयः श्रीवल्लभस्त्वनुमा

नप्रथमप्रयोगे महदुपादानकत्वस्योपाधित्वात् ननु परिमाणावान्तरसामान्यस्य महत्त्वाद्यवान्तरसामा
न्यव्यतिरिक्तस्य कार्याकार्यवृत्तित्वं महत्त्वे दृष्टमतोऽणुत्वस्यापि कार्याकार्यवृत्तित्वसिद्धौ कार्याणुपरिमाणा
धिकरणद्व्यणुकसिद्धिरिति चेन्न ह्रस्वत्वदीर्घत्वयोरनैकान्त्यात् तयोः कार्यैकवृत्तितयाऽकार्यवृत्तित्वानं
गीकारात् न च तद्व्यतिरिक्तत्वे सतीति विशेषणात्तत्रानैकान्तिकता तथापि प्रतिसाधनसद्भावात् तथा ह्यणुत्वं का
र्याकार्यवृत्तिर्न भवति महत्त्वव्यतिरिक्तत्वे सति परिमाणावान्तरजातित्वाद्ध्रस्वत्वादिवत् ॥ ७ ॥

राम॰
११९

दूकतर्काभावात्साध्यव्याप्तिः पूर्वस्य नास्ति प्रत्युत बाधकापत्तिश्चेति मत्वा नोबाधकमुक्तवान् तमनुवदति ननु परिमाणेति परममहत्त्वा
दिषु व्यभिचारनिरासायोक्तं महत्त्वाद्यवान्तरेति प्रयोगशरीरं तु अणुत्वसामान्यं कार्याकार्यवृत्तिपरिमाणत्वसाक्षाद्व्याप्यजातित्वान्म
हत्त्ववदिति भावः न च साध्यविकलता महत्त्वस्याकाशादिषु घटादिषु च वर्तमानत्वात् तथा च यत्कार्यमणुत्वाधिकरणं परिमाणं तद
धिकरणं द्व्यणुकं यच्च नित्यपरमाणुपरिमाणं तदधिकरणं परमाणुरित्यर्थः अनैकान्तिकतामेव दर्शयति तयोरिति अस्तु तर्हि ह्र
स्वत्वदीर्घत्वव्यतिरिक्तत्वे सति वृत्ति विशेषणं तत्राह न चेति ॥

ननु यदि महत्त्वं प्रतिसाधने पक्षीक्रियते तत्तावन्न वेदान्तिनः सिद्धं परमाणुद्व्यणुकयोरसिद्धेस्तत्परिमाणानन्तसामान्य-
योरसिद्धतरत्वादिति तत्राह भवन्मतमिति अथवा महत्त्वव्यतिरिक्तत्वे सतीति विशेषणं व्यर्थं आकाशादीनामपि कार्य्यत्वाद्
त्मनश्च परिमाणानधिकरणतया महत्त्वस्यापि कार्य्यैकवृत्तित्वेनोक्तसाध्यवत्त्वादिति तत्राह भवन्मतमिति यच्च प्रथमानुमा
ने महत्त्वे सति कार्यत्वादित्युक्तं तत्र विशेष्यासिद्धिमाह त्रसरेणाविति आरंभकद्रव्यसंख्येत्यादि द्वितीयानुमानेपि दूषणमाह द्विती
येतीति द्वित्वद्वारारंभकसंख्यापकर्षविश्रान्तिभूमिः तच्च त्र्यणुकगगनमपि संभवति ततः परारंभकस्याद्याप्यसिद्धिरित्यर्थान्तरमित्यर्थः प्र

भवन्मतमाश्रित्य प्रयोगसंभवात् त्रसरेणुनित्यत्ववादिनं भाट्टं प्रति हेतोर्विशेष्यासिद्धेश्च द्वितीयप्रयोगे च
सिद्धसाधनतात्र त्रसरेणुयुगलादौ संख्यापकर्षतारतम्यविश्रान्त्युपपत्तेः न चैवं परमाणुभिरारब्धे त्र्यणुकादौ महत्त्वोपपत्ते
र्न द्व्यणुकादिप्रक्रमप्रक्रियासिद्धिः किंच परिमाणस्यासिद्धत्वेन तदारंभविचारणानाद्यापि सिद्धलक्षणादेऽभावाल्लक्षणमान
योः ५० परिमाणमेव न निरूपणपथमवतरति कुतस्तदारंभचिंता तल्लक्षणप्रमाणयोरनिरूपणात् तथा हि किं मानव्य
वहारकारणं परिमाणं १ उत द्वित्वासमवायिकारणकत्वे निर्गुणत्वावान्तरजातीयं २ आहोस्विदसमवायिकारणत्वानधिकर
णनित्याकाशवृत्तिवृत्तिगुणत्वावान्तरजातिमत् ३ परिमाणत्वजातिमद्वा ४ नाद्यः दृष्टेः स्वरादेरपि मानव्यवहारकारणस्य परिमाणत्वप्रसंगात्॥

पंचितं द्व्यणुकदूषणमुपसंहरति तदेवमिति यस्य च महत्त्वस्योत्पत्त्यनुपपत्त्या द्व्यणुककल्पनं तदेवासिद्धं परिमाणमात्रस्य दुर्निरूपत्वेन
द्विशेषमहत्त्वस्य दुर्निरूपत्वादित्याह किंचेत्यादिना अभावादिति छेदः श्लोकं विवृणोति परिमाणेति द्वित्वमसमवायिकारणं यस्य द्व्यणु
कपरिमाणस्य तन्न द्वित्वासमवायिकारणकं तद्वत् निर्गुणत्वावान्तरजातिस्तद्वदित्यर्थः रूपादिव्यवच्छेदाय प्रथमं विशेषणम् द्रव्यादिव्य
वच्छेदाय द्वितीयम् असमवायिकारणेति असमवायिकारणत्वानधिकरणं नित्यश्च यश्चाकाशस्तद्वृत्तिर्गुणः तद्वृत्तिर्यो गुणत्वावान्तरजातीयं चेत्यर्थः॥

अत्रापि रूपत्वादिकमादाय रूपादिध्वनिव्याप्तिनिरासार्थमाकाशवृत्तीत्युक्तं तथापि द्वित्वादिध्वनिव्याप्तिस्तदर्थं नित्य-
ग्रहणम् तेन संयोगविभागशब्दा अपि व्यवच्छिन्नाः तथाप्येकत्वपृथक्त्वयोरतिव्याप्तिस्तदर्थमसमवायिकारणत्वानधिकरणे ।
त्युक्तं न हि परममहत्त्वस्य किंचिदप्यसमवायिकारणत्वमस्ति एकत्वादेश्च द्वित्वादेरसमवायिकारणत्वाधिकरणत्वान्निरासः
ननु यद्यपि सर्वोत्पत्तिमन्निमित्तकारणादृष्टेश्वरादेरस्ति मानव्यवहारकारणत्वं तथापि न विषयतया तादृशकारणत्वं चात्र विव
क्षितमिति शंकते विषयेति गुणत्वे सतीति मानव्यवहारकारणमित्युदयनस्तदपि गुणत्वखंडनेन निरसनीयम् यद्यपि परिमाण
त्वजातेः परिमाणविशेषणतया व्यवहारविषयत्वमस्ति तथापि जातिमत्त्वे सतीति विवक्षितं न च जातौ जातिरस्तीति नातिव्याप्ति

विषयतयेति विशेषणाद्दोष इति चेन्न परिमाणत्वजातेरपि तथात्वापत्तेः जातिमत्त्वे सतीति चेन्न द्रव्येपि ।
प्रसंगात् परिमाणत्वजातिमत्त्वे सतीति चेत् न तावन्मात्रस्यैव लक्षणत्वोपपत्तौ व्यर्थविशेष्यत्वापातात् नापि द्वि ।
तीयः द्वित्वस्य तदसमवायिकारणत्वस्य चानन्तरमेव निरस्तत्वात् किंच विशिष्टजातिमत्त्वज्ञानतया तद्व्यवहारका ।
रणं वक्तव्यम् तच्च किंचिदुपसंग्राहकपुरस्कारेणैव सर्वलक्ष्यव्यक्तिनिष्ठतयाधिगंतव्यं अन्यथाव्यक्त्यंतरे तथाप्रथाऽभा
वेन तद्व्यवहाराभावप्रसंगात् ॥

रित्याशंक्य न हि तदाधारद्रव्येऽतिव्याप्तिरित्याह न द्रव्येपीति न जातिमत्त्वमात्रं विवक्षितं किंतु परि
माणत्वजातिमत्त्वं तेन न द्रव्यादिष्वतिव्याप्तिरिति शंकते परिमाणत्वेति परिमाणत्वजातियोगित्वेन तावदेवास्त्वित्यर्थः ओमिति च नवा
च्यं अन्यपक्षत्वेन दूष्यमाणत्वादिति भावः शिवादित्यमनोहरयोरभिमतलक्षणं दूषयति नापीति यानि च जातिपुरस्कारेण प्रवृत्तानि ल
क्षणानि तेषां साधारणदूषणमाह किंचेति व्यवहारोपि लक्षणप्रयोजनं स च ज्ञानादिनरथानिप्रसंगात् असत्वप्रसंगाच्च केवलव्यतिरे
किलक्षणस्य तथा चैवंविधजातिमत्त्वमपि लक्षणांज्ञानमेव व्यावर्तकमित्यर्थः ततः किमिति तत्राह तच्चेति एतादृशमेवंविधजा
तिमत्त्वं तत्त्वनीदृशामिति यदिदं ज्ञानं तद्यद्व्यक्तिपुरस्कारेण तदा तद्रूपस्यान्यत्राभावे तत्र तत्र तद्व्यवहारो न स्यात् तथा च सर्वव्यक्तिनिष्ठमे

प्रथाप्रतीतिः ततो वा किमित्यत आह तथात्वेति विलक्षणा जातिविशिष्टं यत्लक्षणं तत्परीक्षणप्रयासेन कृतमलमित्यर्थः असमवायिका
रणेत्यादितृतीयलक्षणं दूषयति नाद्येति अशक्यत्वादिति पूर्वोक्तलक्षणानां दूषितत्वादिति भावः ननु मानव्यवहारः किमिति न
प्रमाणमिति तत्राह नहीति अव्याप्तेरिति ह्रस्वत्वादीनामेकैकस्यैकैकस्मिन्नभावात् परमाणौ परममहत्त्वे वाऽभावादव्याप्ति-
रिति प्रथमपक्षे दूषणम् द्वितीये दूषणमाह अणुत्वेति परिमाणमात्रासिद्धौ न तद्विशेषो सिद्ध्यतीति भावः सकलपरिमाणाननुगतिश्चेत्।

तथा च तेनैवानुगतव्यवहारोपपत्तौ कृतं विलक्षणलक्षणपरीक्षाप्रयासेन नापि तृतीयः उक्तदोषानुषंगात् नापि तुरीयः जाति
व्यंजकस्य निर्वक्तुमशक्यत्वात् शक्यत्वे वा पूर्वोक्तदोषानुषक्तेः यत एवं न लक्षणनिरुक्तिर्नापि प्रमाणम् न हि मानव्यवहार एव तत्र प्रमा
णं तस्या निरुक्तेः तथा हि कोऽयं मानव्यवहारः किं ह्रस्वत्वादिव्यवहारः १ किं वाणुमहदादिव्यवहारः २ असर्वगतत्वव्यवहारो वा
३ परिमितत्वव्यवहारो वा ४ सर्वथा नोपपद्यते अव्याप्तेः अणुत्वमहत्त्वाद्यसिद्धौ तद्विशेषितव्यवहारासिद्धेरसर्वगतत्वव्यवहारस्याविभु
त्वेनापि संभवात् परिमितत्वव्यवहारस्य दशपलपरिमितमित्यादौ गुरुत्वेनापि दर्शनात् यादृगाश्रयेऽणुमहदादिपरिमाण
समवायः परेणांगीक्रियते तादृगाश्रयविशेषादेव तद्व्यवहारोपपत्तौ न तदतिरिक्तपरिमाणकल्पनायां कल्पनागौरवात्।
च अस्तु तर्ह्यनुमानं मानमतो हरकारोक्तं विवादाध्यासितं द्विष्ठगुणा न समवायिकारणानित्यविशेषगुणव्यतिरिक्ता द्विष्ठ
गुणाश्रयः द्रव्यत्वाज्जलाणुवत्॥

स्रणस्य द्रष्टव्या तृतीये दूषणमाह असर्वेति विभुत्वाभावमादायापि घटत इत्यर्थः अत्रापि व्यापकप
रिमाणेऽव्याप्तिर्द्रष्टव्या चतुर्थं दूषयति परिमितेति कल्पनागौरवं च सर्वपक्षसाधारणदूषणमाह यादृगेति एवं प्रत्यक्षं निराकृत्यानुमानमुद्भा
व्य निराकरोति अस्तु तर्हीति अद्विष्ठगुणाश्रय इत्युक्ते एकत्वैकपृथक्त्वाश्रयत्वेनार्थान्तरता तदर्थं द्विष्ठगुणा न समवायिकारणेत्युक्तं तथापि श
ब्देन ज्ञानादिगुणैश्चार्थान्तरता तदर्थमनित्यविशेषगुणव्यतिरिक्तेत्युक्तं द्विष्ठगुणानसमवायिकारणानित्यविशेषगुणव्यतिरिक्तगुणाश्रय इत्युक्ते

श्रयत्वेनसिद्धसाधनता अनउक्तमद्दिष्टेतिद्विष्टगुणानसमवायिकारणानित्यगुणाव्यतिरिक्ताद्विष्टगुणाश्रयइत्युक्तेकार्य्यद्रव्येषु व्यभिचारस्तेषामनित्यगुणामात्राश्रयत्वेनानित्यव्यतिरिक्तगुणाश्रयत्वाभावादतउक्तंविशेषगुणेतिईश्वरेव्यभिचारवारणायानि त्यग्रहणम् अत्रचविवादाध्यासितपदेनविवक्षितंदर्शयति अत्रचेतितथाचानित्यविशेषगुणानामेवतथाभूतानांसत्वेनोभयेषामपि पक्षत्वाद्दिक्कालयोर्विशेषगुणशून्यतयानित्यविशेषगुणपदस्यवैयर्थ्यप्रसंगेनपक्षतासंभवात्जीवाकाशयोरेवपक्षत्वंदिक्कालयोस्तुपक्ष॥ तुल्यतयावस्थानमितिभावः अनुमानांतरमपितदीयमाह तथेति अत्राप्यद्दिष्टगुणाश्रयइत्युक्तेएकत्वादिनार्थांतरतानदर्थमनसमवायि॥

अत्रचजीवाकाशौपक्षीक्रियेतेतथेश्वरोनित्यविशेषगुणाव्यतिरिक्तानसमवायिकारणाद्विष्टगुणाश्रयश्रा॥ त्मत्वाज्जीववदितिचेन्न आद्यस्योपाधिमत्वेनसाध्याभावान्निदर्शनेद्वितीयस्योभयत्रापिप्रतिसाधनरोधनात् ५१ प्रथमानुमानेमूर्तत्वस्योपाधित्वात् नचपार्थिवपरमाणौसाध्याव्याप्तिः तत्रापिद्विष्टगुणानसमवायिकारणानि त्यविशेषगुणाव्यतिरिक्ताद्विष्टगुणानांपरत्वापरत्ववेगादीनांसद्भावात् नचेश्वरेमूर्तत्वस्योपाधेःसाधनाव्याप्तिःत स्यवेदांतिभिर्निर्गुणत्वांगीकारात् द्वितीयप्रयोगेपिदृष्टांतस्यसाध्यवैकल्यात् ॥ ५१ ॥

कारणेत्युक्तम् तथापिज्ञानादिनार्थांतरतानदर्थंनित्यविशेषगुणाव्यतिरिक्तेत्युक्तंद्वित्वादिभिरर्थांतरतापरिहा रायाद्विष्टग्रहणंसामान्यादि भिरर्थांतरतापरिहारायगुणग्रहणंअनयोर्दूषणंसंगृह्णातिआद्यस्येतिद्वितीयस्यनिदर्शनेसाध्याभावादित्यन्वयःश्लोकंविवृणोति प्रथमेति यदत्रतेनैवोक्तंनचस्यशिवत्वमूर्त्तत्वेउपाधीएव तपार्थिवपरमाणुव्यभिचारादितिनदूषयति नचेतिसाध्याव्याप्तिःसाध्येनोपाधेर्व्याप्त्य भावःसाध्याधिकवृत्तित्वेनियावत्साध्याव्याप्तिरितिसाध्यसमव्याप्त्यभावोविवक्षितःनन्वीश्वरेनित्यज्ञानादेरुक्तरूपत्वेनसाध्य वत्वमस्तिनचास्तिमूर्त्तत्वमुपाधिरतःसाध्याव्यापकइतितत्राह नचेश्वरेइति तत्रसाध्यमपिनास्तीत्यर्थःकिंचात्रद्विष्टविशेषगुणा पदयोरपार्थकताअनसमवायिकारणपदेनानित्यव्यतिरिक्तपदेनवाःनभीष्टव्याप्तिसिद्धेःअर्थांतरताचश्वरज्ञाननित्यतामादायापिवि

ईश्वरात्मा मूर्तत्वस्य समव्यापकस्योपाधित्वाच्च साध्यवैकल्यादिति निर्गुणत्ववादित्वाद्वेदान्तिनइत्यर्थः नित्यविशेषगुणोन्ययमप्यंशोसांप्र-
त्यसिद्ध इत्याह गुणानामिति उभयत्रापीत्यादि किं विन्नणोति साधनमिति जीवाकाशोद्दिष्टगुणानसमवायिकारणानित्यविशेषगुणाव्यति-
रिक्ता हि दृष्टसाधारणगुणाश्रयत्वानधिकरणं तथेश्वरोप्युक्तविशेषणाविशिष्टसाधारणगुणाश्रयत्वानधिकरणमुभयत्रामूर्तत्वादि-
ति हेतुरवगंतव्यः तत्राव्यतिरेकइति एवं तत्र पक्षे व्यतिरेको वक्तव्यः विप्रतिपन्नमेवंविधगुणाश्रयः द्रव्यत्वात्पृथिवीवदिति तत्र मूर्तत्वमु-
पाधिरतः साध्यव्याप्तिर्नास्तीत्यर्थः किंच श्रोत्रमात्रग्राह्यधर्मवत्वेन शक्यमाकाशे प्रकरणसमत्वं संपादयितुमात्मनि च मनोमात्रग्राह्यधर्मव

गुणानांनित्यत्वासिद्धावप्रसिद्धविशेषणत्वाच्च संप्रतिसाधनं चेदं प्रयोग इत्यं विवादाध्यासितमुक्तविशेषणाविशे-
षितसाधारणगुणाश्रयो न भवत्यमूर्तत्वाद्रूपादिवदिति प्रयोगोपपत्तेः नचात्रद्रव्यत्वमुपाधिः तत्राव्यतिरेके पृथिव्यादिषु-
मूर्तत्वस्यैवोपाधित्वात् तदेवं परिमाणस्यासिद्धेर्नेतदारंभविचारणाप्यवकाशं लभते न च कारणगुणपूर्वकता
नियमो रूपादीनां परिपक्के लोहित्यस्याकारणगुणपूर्वस्यापि दर्शनात् ननु नित्यः श्यामो घटोऽन्यएव च लोहि-
तस्ततोन्यत्वतः तथाहि श्यामत्वमाश्रयविनाशादेव नश्यति कार्यगतरूपत्वात् नष्टपटरूपवत् ॥ २ ६ २ ॥

त्वेनशब्दोवात्मानादिकं वा दृष्टांतः परिमाणखंडनस्य परिमाणकारणत्वनिराकरणोपयोगमाह तदेवमिति यच्चकारण-
गुणप्रक्रमेण कार्यगुणारंभ इति वैशेषिकैः परिभाष्यते तदप्ययुक्तं पाकजप्रक्रियायामेवनियमस्याशक्यसमर्थत्वादित्या-
ह नचकारणेति यो हि—परिपक्वोघटस्तस्य पाकसमये रूपांतरं तावदुत्पद्यते न च तस्यकारणगुणपूर्वकत्वं पूर्वघटस्या
नष्टत्वात् स्थितएव तस्मिन्रूपांतरस्याग्निसंयोगात्परमुत्पत्तेरित्यर्थः ननु स्थितएव घट इत्यसिद्धं नष्टत्वाच्छ्यामघटस्येति शंकते नन्विति
ननु सएवायं घट इति प्रत्यभिज्ञानान्न घटैक्यावगमे कथं तस्य निवृत्तिरित्यतआह तथाहीत्यादिना नष्टघटरूपेणार्थांतरतापरिहारायैव ग्रहणं पर-
माणुगतरूपेऽनैकांतिकतापरिहाराय कार्यग्रहणं कार्यगतसत्तादिव्यावृत्त्यै रूपग्रहणम् ॥ २ २ २ ॥

२
चि॰प्र॰
टी॰न॰
१२२

एवमामघटध्वंसंप्रसाध्य कार्य्यगुणानां कारणगुणपूर्वकत्वनियमार्थं लोहितघटस्योत्पत्तावप्यनुमानमाह तथालोहित्य॥
मिति लोहिततन्त्वारब्धः पटो लोहितपटः पटग्रहणं चोपलक्षणार्थम् एवं किरणावलीकारोदीरितानुमानविरोधाद्द्रव्यभेदाधि
गतो प्रत्यभिज्ञा ज्वालाप्रत्यभिज्ञावद्भ्रान्तेत्यर्थः नन्वत्र मुशलप्रहारादिरसमवायिकारणसंयोगनाशहेतुः पाकावस्थायां नास्तीत
त्कथं विनाशः अनुमानद्वयं तु शंकितोपाधिव्याधिव्याहतं भविष्यतीति तत्राह नच विनाश इति स्पर्शवान्वेगवांश्च यो निलस्तस्य
संचलनेन तयोः प्रज्वलत् ज्वलनस्तस्य यो ज्वालाकलापस्तस्येति विग्रहः अयमभिसंधिः घटादिपार्थिवावयविनाम्नेजःसंयोगे स॥
त्यप्याघाताभिघाताद्दनात् वा परंपरया तदारंभकेषु परमाणुषु कर्माण्युत्पद्यन्ते तेभ्यो विभागः विभागेभ्योद्रव्यारंभकसंयोगनाशस्त

तथालोहित्यमाश्रयोत्पत्त्यनंतरमेवोत्पद्यते कार्य्यगतरूपत्वात्कार्य्यलोहितपटरूपवदित्यनुमानतस्तद्भेदसिद्धेः
नच विनाशे हेतोरभावः स्पर्शवद्वेगवदनिलसंचलनवलेन प्रज्वलज्ज्वलनस्य ज्वालाकलापस्यैव घटावयवसंघा
तविघटनहेतुत्वात् अन्यथानलावयवानामन्तरनुप्रवेशासंभवेन पिठरजठरसंचारिसलिलोच्छलनतंडुलवि॥
क्लेदनयोरसंभवप्रसंगात् मृदुकठिनतालक्षणाविरुद्धधर्मसंसर्गोपलब्धेश्च तद्भेदावगतौ कथं न कारणगुणपूर्वक

तश्च द्व्यणुकमारभ्यान्त्यावयविपर्य्यन्तं द्रव्याणां विनाशः तस्मिन् विनष्टे परमाणुष्वग्निसंयोगाद्दे ( एतारूपादीनामिति चेत्॥
क्ष्यापेक्षाद्रूपरसगंधस्पर्शानां विनाशः पुनरन्यस्मादग्निसंयोगादौष्ण्यापेक्षात्पाकजरूपादयो जायन्ते तदनन्तरं च भोगिनामदृष्टापे॥
क्षादात्माणुसंयोगादणुषु कर्मोत्पत्तौ तेषां परस्परसंयोगाद्द्व्यणुकादिप्रक्रमेण कार्य्यद्रव्यमुत्पद्यते तत्र च कारणगुणप्रक्रमेण रू॥
पाद्युत्पत्तिरिति पीलुपाकवादिप्रक्रिया तथा च स्पर्शवद्वेगवदग्निसंयोगो द्रव्यासमवायिकारणसंयोगनाशहेतुरिति तन्न विनष्ट एव॥
कार्य्यद्रव्ये रूपादिमात्रस्यैव निवृत्तिरपरस्य चोत्पत्तिः किं च स्यादिति तत्राह अन्यथेति अथवा नाहशज्वालासंपर्केवहिस्थावयवानां तप्तुनर्घ
टान्तरवयवानां तत्कथमांतरावयवसंयोगनाश इति तत्राह अन्यथेति उच्छलनं ऊर्द्ध्वचलनं विरुद्धधर्मसंसर्गादपि द्रव्यान्तरमेवावसीय

॥तत्त्वचिन्तामणिप्रकाशः॥

राम॰
१२२

नदेतद्दूषयति मैवमिति सएवायमिति प्रत्यभिज्ञानान्नावयवामपक्वावस्थयोरैक्यमवगम्यते तेन नस्तद्विरुद्धतया कालात्ययापदि-
ष्टमनुमानजातमित्यैक्यमेवयुक्तं तदाधेयानिपाततः यदिहि पाकसमयेतुल्यादीनां विनाशोत्पादौ स्यातां तदा तदनंतरकाले तदुपरि-
स्थितस्यात्वल्यादीनां निपातः स्यात्मुद्गरादिप्रहारेतथादर्शनात् इतश्चैक्यमेवयुक्तं संख्याप्रमाणयोरैक्यात्यावंतोपत्परिमाणाश्च घटाश्र्या-
मपाकेनिक्षिप्तास्तावंतस्तत्परिमाणाएव च घटाः पक्वाअपिदृश्यंते अपूर्वोत्पत्तौहि कतिभिश्चित्परमाणुभिरधिकावा अधिकपरिमा-
णावा किमितिनारभ्यंते यत्तुपाकानुपपत्तिर्बाधिकोक्तातत्राह अन्यथेति द्रव्यविनाशव्यतिरेकेणापिसच्छिद्रत्वादवयविद्रव्याणांज्वलना-

मैवमतत्त्वेन प्रत्यभिज्ञानात्तदाधेयानिपाततः संख्याप्रमाणयोरैक्यादन्यथापाकसंभवात् ५२ सएवायं
घटइतिप्रत्यभिज्ञाप्रत्यक्षविरोधात् उपरिस्थितशरावादीनामपातात् तद्देशत्वतत्संख्यतातत्परिमाणतोपल-
ब्धेश्च अंतःपाकस्यापिसच्छिद्रत्वादवयविनांस्फटिकांतरिंद्रियरश्मिप्रवेशवदुपपत्तेः अन्यथासलिलस्यंदनव
हिःशैत्योपलंभयोरभावप्रसंगात् मृदुकठिनत्वलक्षणविरुद्धधर्मसंसर्गस्याप्यंतरेणावयविनाशंछायातपविनि
हितपटवदुपपत्तेः नचवेगवद्द्रव्याभिघातमात्रादवयविनाशःप्रवलपवनाभिमुखनिहितघटादेरपिविनाशापत्तेः

वयवानामांतरेप्यनुप्रवेशसंभवेन पाकोपपत्तेरितिसंग्रहश्लोकार्थः तमिमं विवृणोति सएवेत्यादिना यथाहिसलिलेविनष्टेषुबु
दुदेषुबुदुदांतराणांचोत्पत्तौनतद्देशत्वादिनियमस्तथेहापिस्यात् पूर्वस्यविनाशात्तत्त्वेवमसौत्याह तद्देशत्वेति अथकिमितिसच्छि-
द्रत्वावयविनामिति तत्राह अन्यथेति यथाहिसलिलस्यन्दनादिमात्रात्ततद्घटनाशस्त्वयांगीक्रियतेतथादहनानुप्रवेशेपिसच्छिद्रेषुपा-
कोपपत्तेर्नद्रव्यनाशइतिभावः विरुद्धधर्मसंसर्गंपरिहरतिमृदुकठिनेति यद्यपिच्छायातपविनिहितपटस्यापि पाकोवैशेषिकैरंगी-
क्रियतेतथापिनविरुद्धसंस्पर्शवत्त्वेनावयविनोभेदोभिमतःअवयविनएकत्वेनप्रत्यभिज्ञानादितिभावःयत्तुद्रव्यविनाशहेतुरुक्तःसो-
घ्यन्यथासिद्धत्वादसिद्धइत्याह नचेति ॥

अथ तैजसत्व एवायं स्वाभावः यत्पूर्वव्यूहविनाशेन व्यूहान्तरोत्पादनं तथा हि दहनः ईदृशो हि तैजसो वेगातिशयः स्पर्शातिशयो वेत्यादि तदस्तु मुशलाभिघातेन तदभावप्रसंगात् तैजसद्रव्येन रूपि चानेकान्तम् नहि चास्तु घंचाद्दवानेजो घटादिषा च यतोन्यनु मन्यते तत्स्यादत्र प्रबलं विनाशप्रत्यापकमस्ति तत्र विनाशो नान्यत्रेत्ययमेव पंथाः नतु तैजसत्वमिति युक्तमुत्पश्यामः किंच घटाद्यु त्पत्तौ कुलालादयश्च तन विशेषाश्चक्रचीवरादयश्च हेतवो लोकप्रसिद्धास्तदभावे कथमामपाके कलशाद्युत्पत्तिः नियतहेतुव्यतिरेके पाचनद्रुमना वा कस्यचित्कार्यानादित्याह नियतेति यदि चैवमबाधितप्रत्यभिज्ञापरिप्रापिते पि वस्तुन्येऽनुमानाभासदुर्मदेन कश्चिद्।

नियतहेतुभावकुलालादिव्यतिरेकेणाघटजन्मासिद्धेश्च अन्यथाशब्देसुखादयो प्याश्रयविनाशविनाश्याः कार्यत्वे सति विशेषगुणत्वात् घटरूपादिवदित्यपि स्यात् प्रत्यभिज्ञाविरोधस्तु प्रकृते पि समानः नचैवं पिठरकुहरसंचारितं डु लानामनलसंपर्केप्यनाशप्रसंगः परिमाणभेदस्य प्रत्यक्षसिद्धत्वाद्विरोधिप्रत्यभिज्ञाभावाच्च नचस एवायमिति प्र त्यभिज्ञाविरोधः प्रदीपे पि तुल्यः न्यूनाधिकपरिमाणभेदस्य तत्र प्रत्यक्षेणोपलंभात् तैलवर्त्यग्निसंयोगानां च प्रतिक्ष णं भेदेन सामग्रीभेदाच्च कार्यभेदोपपत्तेः तत्र प्रत्यभिज्ञायाः सादृश्यविषयतयान्यथासिद्धेः नचैकत्र प्रत्यभिज्ञायाश्च न्यथासिद्धौ सर्वत्र तथाभावः बाधाबाधाभ्यां तद्व्यवस्थोपपत्तेरन्यथातिप्रसंगात्॥ १ नाश्वासोस्यात्तमतिप्रसंगां

कुशेन वशयति अन्यथेति आश्रयविनाश आश्रयोत्पत्तेरप्युपलक्षणार्थः तथा चाभाससमानयोगक्षेमं प्रथमानुमानमिति भावः अथ तत्र प्रत्यभिज्ञाविरोधमेव पुरोनिदध्यात्तत्राह प्रत्यभिज्ञेति समनेत्वति प्रसक्तिं परिहरति नचैवमिति प्रत्यभिज्ञाप्रामाण्येप्यतिप्रसक्तिं वा रयति नचेति तत्र संप्रतिपन्ने द्रव्यान्यत्वं सामग्रीभेदश्च अन्तस्तत्र युक्ता सादृश्यविषयतयान्यथासिद्धिः इह तु न तथा बाधकमस्ति प्रत्य भिज्ञात्वे न च बाधकानुमानमति प्रसंगापराधीनाभ्यां व्यस्तमित्यर्थः एवमपि न्यायपद्वीपरिमापितमप्यश्रद्धानः किरणावलीकारोनु

व्येष्वपि संयोगाः नियमेनद्रव्यारंभकसंयोग प्रतिद्वंद्वि विभागजनकक्रियाहेतवः अग्निसंयोगत्वान्मूलाग्निसंयोगवदितितद्
सत्तज्जकाकाशाद्यग्नि संयोगे नैकांत्यात् पार्थिवाग्निसंयोगत्वादिति विशेषणेपि विपक्षेबाधकाभावात् शंकितोप्रयोजकता प्रत्यभि
ज्ञाविरोधश्च निर्वहते अन्यदपि तदीयमनुमानद्वयमाचार्येणप्रत्यभिज्ञाविरोधानिप्रसंगाभ्यां निरस्तमेवेत्यलं उपसंहरति त
स्मादिति किंचकारणत्वमेव यदाहुर्निरूपणं तदाकारणविशेषतयापरमाण्वाद्यनुमानमसंभवि तच्चआत्पुनरत्ताब्रह्मणः कारणा
त्वानंगीकारात् विषदादिविवर्ताधिष्ठानमात्रत्वात् नहि शुक्त्यादिरजतं प्रतिकारणमिति प्रसिद्धिरस्ति अधिष्ठानत्वमप्यनिर्वाच्यप्रति।
योगिकत्वादनिर्वाच्यमेवयदाद्यत्वपि निरूप्यमाणं कारणत्वमेवं विधाधिष्ठानत्वमेवयतो दृशाधिष्ठानत्व विवक्षया च सकारणं कारणाधि

तस्मात्कारणगुणप्रक्रमोन विदुषांपरितोषायेतिसिद्धम् कारणत्वानिरुक्तेश्च तथाहि किमिदंकारणत्वं किंपूर्वका
लभावित्वं १ किंवानियतप्राक्कालसत्त्वं २ सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वंवा ३ अन्वयव्यतिरेकवज्जातीयत्वंवा
४ सामग्र्येकदेशत्वंवा ५ व्यापारवत्त्वंवा ६ यदनभ्युपगमेनित्यसत्त्वासत्त्वयोरन्यतरप्रसक्तिस्तद्वा ७ नाद्यः रासभस्यापि धूमादि
कारणत्वप्रसंगात् नद्वितीयः कालस्याहेतुतापत्तेर्नाधितोन्योन्यसंश्रयात्तस्मान्मृत्तेश्चयुक्तत्वान्नियतत्वानिरुक्तितः ५३॥

याधिपः कारणत्वेन चाकाशादिर्विविध्यादिश्रुतिसूत्रभाष्यादौ ब्रह्मणि कारणशब्दप्रयोगइतिहृदि निधाय कारणत्वं खंडयति कारणत्वेति कार
णत्वानिरुक्तेश्च नकारणगुणप्रक्रमो विदुषांपरितोषायेत्यन्वयः अंकुराजननत्वसूणकार्याभाववत्त्वमतत्कारणसाध्यस्तीत्युक्तं सहकारीति जाती
यपदंव्यक्तिसंग्रहार्थम् यदनभ्युपगमइतिनित्यसत्त्वासत्त्वयोरन्यतरप्रसक्तिनिवारकंचेत्यर्थः यस्यमृदादेः कारणत्वेनाभिमतस्यानभ्युपगमेनिर्हे
तुकतयाभावत्वे सतिखादिवत्घटादेःसत्त्वमभावत्वे सति शशविषाणादिवदसत्त्वंच प्रपद्यतेतन्मृदादिकारणमिति भावः रासभस्यापीति अका
रणस्यापि गर्दभादेर्धूमादिपूर्वभावित्वमस्तीति तस्यापि धूमादिकारणत्वप्रसंगादतिव्याप्तिरित्यर्थः नियतप्राक्कालसत्त्वमितिद्वितीयपक्षेपिदूषणानि

केनसंग्रहानिकालस्येति नहि कालस्यका॥

त्वभावित्वमस्तिकालस्यैकत्वेनकालांतराभावात् अथौपाधिकः कालभेदोस्तितथाचोपाधिपौर्वापर्य्याभ्यामुपहितकालपौर्वापर्य्यमितितत्राह नाधितइति नाप्युपाधितः पौर्वापर्य्यंकृतः अन्योन्यसंश्रयादुपाध्यंतरेपिपौर्वापर्य्यं किमुपाध्यंतरात् किंवापूर्वापरकालसंबंधात् नाद्यः अनवस्थानात् नैरेवचार्थेषुपूर्वापरादिव्यवहारसिद्धेः कालवैपर्थ्याच्च द्वितीयेऽन्योन्याश्रयः कालपौर्वापर्य्यादुपाधिपौर्वापर्य्यंउपाधिपौर्वापर्य्याच्चकालपौर्वापर्य्यमित्यर्थः यदिचकिंचिदुपाधिविशिष्टकालेनोपाध्यंतरवि।

कालाव्याप्तेः कालस्यकालांतराभावात् नचौपाधिकंकालस्यपौर्वापर्य्यमितरेतराश्रयत्वप्रसंगात्कालपौर्वापर्य्ये उपाधिपौर्वापर्य्यंतत्पौर्वापर्य्येकालस्यतथात्वमिति उपाध्यंतराधीनमुपाधेःपौर्वापर्य्यंनतुकालाधीनमितिचेत्तन्नयुगपदनेकोपाध्यवस्थानप्रसंगात्नचैवमस्त्वितिवाच्यंप्रमाणाभावात्व्यवहारस्यमायामयत्वेनोपपत्तेःकल्पकाभावाच्च अन्यथानुपाधेरेवातीतादिव्यवहारोपपत्तौकालापलापप्रसंगात् उपाधिभेदेपि किंचिदुपाधिविशिष्टस्यकालस्यान्योपाधिविशिष्टकालेनवृत्तिर्येनकालस्यपूर्वकालेभावित्वंस्यात्स्वनिवृत्तिविरोधात् नहिकुंडलिनिदेवदत्तेसएवदंडविशिष्टोवर्त्तते।
कार्येयंनियतिःकिंतस्मिन्सत्येवभावः १ अनन्यथासिद्धत्वंवा २ तत्तत्कार्य्यानुगुणतयाप्राक्कालसत्त्वंवा ३ तस्मिन्सतिभावएववा ४ नाद्यः॥

शिष्टकालसंबंधादस्तिकालपौर्वापर्य्यमितिमतिः तदाविशेष्यांशआत्माश्रयत्वंस्यात्तच्चायुक्तं लो। कतथाऽदर्शनादित्याह स्वात्मेति तत्वनियतत्वानिरूपणाच्चनतद्धिशिष्टलक्षणमित्याह नियतत्वेति श्लोकंविवृणोति कालाव्याप्तेरित्यादिनास्वात्मवृत्तेरित्येतद्विवृणोति उपाधिभेदेपीति स्वात्मवृत्तिविरोधमेवोपपादयति नहिकुंडलिनीति अन्यदूषणंविवृणोति।
कार्येति प्राक्कालसत्त्वमाकाशादेरप्यस्तीतिकार्यानुगुणतयेत्युक्तं नचप्रथमचतुर्थयोःपौनरुक्त्यमधूमाग्योरन्ययोगव्यवच्छेदेप्ययो

रासभस्येति यद्यपि धूमजातीयस्य रासभे सत्त्वेव भाव इति नास्ति तथापि तदानीमुत्पन्नधूमविशेषस्यैवं भावो स्तीत्यतिव्याप्तिरित्य-
र्थः एतदेव विशदयति स्वसत्तायामिति अनन्यथासिद्धत्वमिति पक्षेपीदमेव दूषणमाह नद्वितीय इति नन्वनन्यथासिद्ध इ-
तिकोर्थ अन्यथासिद्धो न भवतीति तथा च कारणत्वं नियतत्वं वा विनासिद्धो निष्पन्नो ज्ञातो वा न भवतीत्युक्तं भवति न चैवं रा-
सभ आकाशो वा एकस्य स्वकारणप्रयुक्तसन्निधित्वादपरस्य च विभुतयाऽवर्जनीयसन्निधित्वं ततो नातिव्याप्तिरिति शंका-
ते स्वकारणसत्त्वेनेति नन्विं स्वकारणप्रयुक्तसन्निधिविभुत्वेएव वान्यथासिद्धिः किंवाष्या मनुमीयमाना काचित् नोभयथापि

रासभस्यापि धूमविशेषं प्रतिनियतत्वापत्तेः स्वसत्तायां सत्यामेव जायमानधूमविशेषं प्रतितस्यापि नियत-
त्वात् नद्वितीयः रासभाकाशादेरपि तथात्वापत्तेः स्वकारणसत्त्वेन नित्यविभुतया च तेषां सन्निधिर्नत्वनन्यथासिद्ध-
इति चेत् नन्विं स्वकारणसन्निधिप्रयुक्तसन्निधीनि वीजधरणीधामसलिलानीत्यकारणान्येवांकुरोत्पत्तौ किंवा
शब्दसुखाद्युत्पत्तौ नित्यविभुस्वभावा वियदात्मादयः नापि तृतीयः प्राक्कालसत्त्वातिरिक्तानुगुणत्वस्याप्यनिरू-
पणात् न चतुर्थः वीजादेरकारणत्वप्रसंगात् नहि तस्मिन्सति भावएवांकुरादेः सहकारिमध्यमध्यासीनेन त-
(स्मिन्सति भवत्येवेति चेत् ॥

वीजादीनामंकुराद्युत्पत्तावाकाशादीनां च शब्दाद्युत्पत्तावुक्तरूपत्वभावेपि अनन्यथासिद्धत्वा-
दिति दूषयति नन्विमित्यादिना धाम तेजः तत्कार्येत्यादितृतीयपक्षं दूषयति नापीति अनिरूपणादिति यथा कालस्य सर्वकारणेपि संभवति
तथा निरुक्तेरशक्तेस्तन्निरूप्यमानुगुण्यमपि दुर्निरूपणमतो सिद्धिरित्यर्थः प्राक्कालसत्त्वमात्रस्य रासभाकाशादावप्यविशिष्टत्वादित्यपि द्रष्टव्यम्।
सति तस्मिन्भवत्येवेति चतुर्थपक्षेऽव्याप्तिमाह वीजादेरिति नन्वयद्यपि वीजमात्रस्यैवंविधनियमो नास्ति तथापि सहकारिसमेतस्यास्ति कदाचिदपि
च तदन्वयो यत्र तत्र प्रतिनियतमुच्यत इति शंकते सहकारीति ॥ ७ ॥ ७ ॥

तत्र किं सहकारिमध्यनिवेश एवैवंविधनियमोऽतिरिक्तो वानान्त्योऽनिरुक्तेराद्येऽतिव्याप्तेः गर्दभादेरपि क्षित्यादिसहकारिमध्यनिवे-
श एवैवंविधनियममात्रेणांकुरं प्रतिनियतत्वापातादिति दूषयति नैवमिति एवं नियतत्वखंडनेन द्वितीयं कारणलक्षणं दूषयित्वा तृ-
तीयं दूषयति सहकारीति तत्रापि दूषणानि संगृह्णाति हेत्विति कारणपौष्कल्यरूपाया सामग्री सापि तावद्वीजादिवत्कारणमेव अ-
थ च तत्र लक्षणं न संभवति तस्यास्तत्र सहकारिवैकल्यस्यैवासंभवात् किंच सहकरोतीति सहकारी कारणविशेषः तथा केनेत्यपे-

॥नैवं रासभस्यापि कदाचित्सहकारिमध्यमध्यासीनतासंभवात् सहकारिवैकल्यप्रयुक्तकार्य्याभाववत्त्वं कारणत्वमिति
तृतीयोपि न हेतुसाकल्यरूपायां सामग्र्यां तदसंभवात् कारणत्वानिरुक्तौ च सहकार्य्यनिरूपणात् ५४ सामग्र्या अकारणत्वप्रसंगा-
त्तस्याः सहकारिवैकल्यप्रयुक्तकार्य्याभाववत्त्वाभावात् सहकारिसकलताया एव सामग्रीत्वात् किंच सहकरोतीति सहकारी कार-
णांतरं तथा च कारणत्वस्यैवाद्याप्यनिरुक्तेरात्माश्रयः नापि चतुर्थः ज्ञानेतरहेतुतापत्तेः रासभेऽतिप्रसक्तितः गगनादिष्वव्याप्तेरन्व-
याद्ययोगतः ५५ ज्ञानेरकारणत्वप्रसंगात् ज्ञानेर्जातिमत्त्वाभावात् द्रव्यत्वादिना रासभादेरप्यन्वयव्यतिरेकवह्न्यादि-
जातीयत्वेन धूमादिकारणत्वप्रसंगात् द्रव्यत्वावांतरजातीयत्वं विवक्षितमिति चेत्तत्कालाकाशदिशामकारणत्वप्रसंगात्।
तेषां द्रव्यत्वावांतरजातिविधुरत्वात् कौचेमावन्वयव्यतिरेकौ किं कालतउत देशतउतोभाभ्यां आद्ये काले तदभावादव्याप्तिः द्विती-
ये तु देशे तदभावः न तृतीयोपि उभयोरप्युभयाभावात्॥

क्षायां च कारणेनेति वचनीयं तथा चात्माश्रयत्वमित्यर्थः विवृणोति सामग्र्या इ-
ति अन्वयव्यतिरेकवज्जातीयत्वमिति चतुर्थपक्षे दूषणानि संगृह्णाति ज्ञानेरित्यादिना नहि ज्ञानेर्जातिरस्ति येन तज्जातीयतया कारणता तस्याः
स्यादित्यव्याप्तिः किंच सत्त्वादिकमादाय गर्दभादेरपि बीजादिजातीयतयांकुरादिकारणापातादतिव्याप्तिः अथ द्रव्यत्वावांतरजात्या साजात्यं विव-
क्षितं तेन तदाकाशादावभावादव्याप्तिः व्यतिरेकाभावाच्चेत्यपि द्रष्टव्यं तथान्वयव्यतिरेकयोरपि कालतो देशतो वा दुर्निरूपणादयुक्तमिदं लक्षणमित्य-

ननु न देशतः कालतो वान्वयव्यतिरेकावभिमतौ किं तर्हि तस्मिन्सति भावोऽसत्यभाव एवेति यो नियमो तावितिशंकते सतीति
तृणादिषु नियमाभावं विवृणोति तेषामिति नहि दहनस्तृणाभावेन जायते मणेरपि जायमानत्वात् नापि मणेरभावेभावः अर
णेरपि जायमानत्वात् अथच तेषामन्वयव्यतिरेकौ स्तः कारणत्वप्रसिद्धेरतोऽव्याप्तिरित्यर्थः अत्र कुसुमांजलिकारेण तृणा
दिप्रभवाग्निष्वप्यवान्तरवैजात्यमभ्युपगम्य कारणवैचित्र्ये कार्य्यवैचित्र्यसमर्थितं तथाच तत्तद्विशेषं प्रति तृणादीनामुक्तानि

> सति भावोऽसत्यभाव एव ताविति चेन्न तदभावेपि तृणारणिमणीनां दहनहेतुत्वांगीकारात् तेषामेकैकाभावेपि द
> हनदर्शनात् तत्रापि तज्जन्यदहनानामवान्तरजातिभेदान्न व्यभिचार इति चेन्न जातिभेदे प्रमाणाभावात् न तावत्प्रत्यक्षप्र
> माणं इन्द्रियसन्निकर्षमात्रेणासुनिपुणेनाप्यनुपलभ्यमानत्वात् ननु तृणारणिमणिप्रभवत्वज्ञानसंस्कृतेन्द्रियसं
> न्निकर्षाधिगम्योयं जातिभेदः विशिष्टमातृपितृप्रभवत्वज्ञानसंस्कारसचिवलोचनगोचर इव ब्राह्मणत्वमिति
> चेन्न तेषां व्यभिचारादेव जनकत्वासिद्धेः जातिभेदाल्लिङ्गात् न व्यक्तिविशेषं प्रति तन्तस्य व्यभिचार इति चेन्न सिद्धे
> जातिभेदे जनकत्वसिद्धिस्तत्सिद्धौ च जातिभेदसिद्धिरितीतरेतराश्रयत्वप्रसंगात् ननु कार्य्यविशेषेण तृणादिकारणविशे
> षप्रभवाणां वह्नीनां वैजात्यानुमानमस्तु ॥

षमोस्तीति शंकते तत्रापीति प्रत्यक्षतो वैजात्यमनुपलब्धिपराहतमित्याह सुनिपु
णेनेति ननु यद्यपीन्द्रियसन्निकर्षमात्रान्न ज्ञायते तथाप्यभिव्यंजकांतरसचिवप्रत्यक्षेण शक्यं ज्ञातुमिति दृष्टांतदर्शनपूर्वकं शंकते
नन्विति तत्र वक्तव्यं किं तृणादिप्रभवत्वमग्निमात्रदर्शनादवगम्यते किं वा जातिभेदाऽऽलिंगिताग्निदर्शनाद्धेतोः सिद्धिः अग्निमात्रं प्रति तेषां
परस्परव्यभिचारादित्याह तत्तेषामिति द्वितीयं शंकते जातिभेदेति तर्ह्यन्योन्याश्रयः प्रथमतोऽग्निषु जातिभेदज्ञाने तद्दर्शनात्तृणादिप्र
भवत्वज्ञानं तज्ज्ञानाच्च जातिभेदज्ञानमिति परिहरति न सिद्धइति ननु न प्रत्यक्षेण जातिभेदाधिगतिः किन्तु लिंगेनेति शंकते नन्विति

चि॰प्र
टी॰न
१२६

कार्य्यविशेषमेवसमर्थयते तथाहीति कारीषोगोमयेन्धनोद्भवः प्रदीपप्रभामंडलंकारीषादिकारणाद्विभिन्नजातीयकारणाज
न्यंतद्विभिन्नजातीयकार्य्यत्वाद्घटवदित्यनुमानाज्जातिभेदसिद्धिरित्यर्थः नन्वतींद्रियजातिभेदएवानुमीयतेतेनतप्रत्यक्षप
राहतिस्तत्राह नचेतियदिहि प्रत्यक्षाश्रयापिजातिरप्रत्यक्षा घटत्वादेः प्रत्यक्षत्वेकुतआश्वासःव्यंजकस्यचपूर्वमेवोन्मूलित
त्वादितिभावःविपक्षेबाधकविधुरत्वाच्चकिंतोपाधिताचकार्य्यभेदस्यप्रकारांतरेणाप्युपपत्तेरित्याह प्रासादेति नकेवलमुपपत्ति
र्दृश्यतेचतत्रतत्रएकजातीयात्सहकारिभेदयुताद्विलक्षणद्रव्यस्यविलक्षणगुणस्यचोत्पत्तिस्तत्रप्थानेकानिकतेत्याह एकजातीये

तथाहिप्रदीपएवप्रासादोदरव्यापकंप्रभामंडलमारभतेनतथाज्वालाजटिलोपिवन्हिर्नतरांचकारीषइतिकुसु
मांजलिकारइतिचेन्नएकजातीयत्वग्राहिप्रत्यक्षप्रतिहतस्यानुमानस्यानुत्थानात् नचप्रत्यक्षायोग्यंवैजात्यप्र
त्यक्षव्यक्तिवृत्तिसामान्यस्याप्रत्यक्षत्वायोगात् प्रासादोदरव्यापिप्रभामंडलादिकार्य्यभेदस्यतत्तत्सहकारि
भेदादन्यथोपपत्तेश्चएकजातीयेपिमृदादौतत्तत्सहकारिसाहित्येनतत्तद्विजातीयघटशरावादिकार्योप
लब्धेःएकजातीयादपिघटाद्भिन्नजातीयानांरूपादीनामुत्पत्तेरभ्युपगमाच्च॥ २१ त्यादिना सामग्र्येकदेशत्वमिति

पक्षंदूषयति नापिपंचमइति तत्रसामग्रीदूषणानिसंगृह्णाति अतिव्याप्तेरित्यादिना किंवस्तूनांसाकल्यंसामग्री किंवाकारणानामाद्ये
अंकुराद्यजनकानामपिशिलाशकलादीनामपिसाकल्यस्यांकुरादिसामग्रीत्वप्रसंगादतिव्याप्तिःद्वितीयेकारणज्ञानात्सामग्रीज्ञानंसा
मग्रीज्ञानाच्चकारणज्ञानमित्यन्योन्याश्रयादित्यर्थः किंचतत्साकल्यंकारणेभ्योभिन्नमभिन्नंवाभिन्नत्वेनित्यंचेत्सदाकार्य्यजन्मप्रसंगः
अनित्यत्वेपितत्तेभ्यः समस्तेभ्योवातस्योत्पत्तिसंभवः आद्येकार्य्यसामस्त्ययोः सदाजन्मप्रसंगःद्वितीयेसाकल्यात्साकल्यो
त्पत्तिरित्यात्माश्रयात् अभिन्नत्वेतुप्रत्येककारणेभ्योपिकार्य्योत्पत्तिप्रसंगात् तावन्मात्रत्वात्साकल्यस्यतथाचसदाकार्य्यजन्मप्रसंगः

राम॰
१२६

॥ किंचोत्पन्नायाः सामग्र्याः उत्पादकानि यानि कारणानि तैरेव कार्य्योत्पत्तिसिद्धेः वृथा तेषां साकल्यकल्पनेति श्लो॥ कार्थं विवृणोति किंवस्तूनामित्यादिना व्यस्तानामेवेति यदि व्यस्तान्येव कारणानि साकल्यमुत्पादयन्ति तदा वीजादेरनित्यत्वे पीश्वरादेर्नित्यतया सदा साकल्योत्पादात् कार्य्यस्यापि सदातनता स्यादित्यर्थः ननु न व्यस्ता अपितु सर्वे संभूय साकल्यं जनयन्तीति न हि साकल्यात् साकल्यमुत्पद्यत इति वचनीयं तथा चाभेदे भेदे चात्माश्रयानवस्थे स्यातामित्याह समस्तानां

नापि पंचमः सामग्र्या दुर्निरूपत्वेन तदेकदेशस्यापि दुर्निरूपत्वात् तथाहि अतिव्याप्तेः स्ववृत्तित्वाद्भेदे भेदे।प्यसंभवात् कार्य्यस्य हेतुभिः सिद्धेर्वृथा साकल्यकल्पना ५६ किंवस्तूनां साकल्यं सामग्री किंवा कारणानां नाद्योऽकारणसाकल्येपि प्रसंगात् द्वितीये कारणत्वस्याद्याप्यनिरुक्तेरात्माश्रयः कारणसाकल्यं च कारणानां स्वरूपमतिरिक्तं वा आद्ये व्यस्तेभ्योपि कार्य्यमुत्पद्येत द्वितीये नित्यत्वे साकल्यस्य सदा कार्य्योत्पादः अनित्यत्वेपि व्यस्तानामेव साकल्यकारणत्वे साकल्यस्यापि सदातनत्वेन कार्य्यस्यापि सदोत्पादः समस्तानां हेतुत्वे चात्माश्रयः अनवस्था वा साकल्यजनकेष्वप्येवं च प्रधानकार्य्योत्पत्तेः किमजागलस्तनायमानेन साकल्येन एतेन कारणानामन्योन्यवैशिष्ट्यं सामग्रीति प्रत्यादिष्टं न च कारणसन्निधिः सामग्री तदनिर्वचनात् न तावदेककालत्वं सन्निधिः काले तदभावात्

मिति समुदितानामित्यपि द्रष्टव्यं उत्तरार्द्धं व्याचष्टे साकल्येति सामग्रीलक्षणान्तरे प्युक्तदूषणमतिदिशति एतेनेति तत्रापि वैशिष्ट्यं भिन्नमभिन्नं वेत्यादिदोषाणां समानत्वादित्यर्थः ननु कारणानां योयं सन्निधिः सैव सामग्रीत्याह नचेति तयोरिति यदि हि कारणानां संयोगः सामग्री तदा संयोगस्येतरकारणैः संयोगाभावात्सामग्र्यन्तःपातित्वाभावेनाकारणत्वं स्यादेवं समवायेपीत्य

ननुकारणानामस्तिकश्चिच्चरमोव्यापारोयदनंतरंकार्य्यमुत्पद्यतेसासामग्रीतितत्राह नापीति इमंपक्षंप्रकारांतरेणापिदूषय
ति अपिचेत्यादिनापक्षांतरेचरमोव्यापारः कारणानांसोपिकिंसव्यापारतयाजनकोनिर्व्यापारतयावेतिविकल्प्यदूषयति व्यापारस्येति
सामग्र्याःलक्षणांतरंशंकतेयदनंतरमिति कार्य्यकारणेहिसत्येवभवतीतिनियमः नत्वसत्येवेतितनोनातिव्याप्तिरितिभावः तदेतद

नाप्येकदेशत्वंदेशेनतदभावात् नोभयंउक्तदोषानुषंगात् नापिसंयोगसमवायौतयोरेवाकारणत्वप्रसंगात्ना
प्येककार्य्यकारणत्वंसन्निधिः कार्य्यकारणभावस्यैवाप्रसिद्धेरात्माश्रयात् नापिकारणानांचरमोव्यापारःसा
मग्रीव्यस्तानांसमस्तानांवातज्जनकत्वेपूर्वोक्तदोषानुषंगात् अपिचव्यापारेजनयितव्येकारकाणिव्यापारवंति
निर्व्यापाराणिवा आद्येनवस्थाद्वितीयेकार्य्यमेवप्रधानंतथाकुर्वंतुक्तमंतरा व्यापारेणव्यापारस्यचसव्यापारस्य
जनकत्वेऽनवस्थानिर्व्यापारत्वेचकारकाणामेवतथात्वमस्तुकिंव्यापारेणयदनंतरंकार्य्यंभवत्येवसासासमग्रीतिचे
न्नविभागानंतरंपूर्वसंयोगनाशस्यावश्योत्पत्तेर्विभागस्यापितथासामग्रीत्वप्रसंगात् एवंकर्मणोविभागेऽन्यतंतु
संयोगस्यचपटेतत्वप्रसंगाच्चनापिचरमः व्यापाराव्यापनाद्यात्माश्रयत्वादनिरुक्तिनः॥ २ ७॥

तिव्याप्त्यादूषयति नविभागानंतरमित्यादिना॥ नत्वप्रसंगादितिसामग्रीत्वप्रसंगादित्यर्थः व्यापारवत्त्वमितिषष्ठेपक्षेदूषणानि
संगच्छंति व्यापारेत्यादिनाव्यापारस्यव्यापारवत्त्वाभावादकारणत्वप्रसंगेनाव्याप्तिः किंचजनकत्वमंतरेणव्यापारस्यदुर्निरूपत्वादा।
त्माश्रयत्वंस्यात् किंचास्यव्यापारवत्त्वानिरुक्तिनश्चासिद्धिर्लक्षणस्य तथाहिव्यापारसमवायित्वंव्यापारजनकत्वंवा व्यापारवत्त्वमिति

उभयत्रसमवायेऽहेतुत्वेचपूर्वदोषानुषंगातः अव्याप्तिरात्माश्रयत्वंचपूर्वदोषः तथाहियागादेरपूर्वसमवायित्वाभावादव्यापा-
रकत्वप्रसंगादव्याप्तिः जनकत्वपक्षेचकारणत्वस्याद्याप्यसिद्धेरात्माश्रयइतिश्लोकार्थः विवृणोति चरमेत्यादिना अथकिमितिया-
गादेः स्वर्गाद्युकारणत्वंतत्राह ध्वस्तस्येति यदनभ्युपगमेनित्यसत्त्वासत्त्वयोरन्यतरप्रसक्तिस्तत्त्वमिति सप्तमेपक्षेदूषणानिसं-
गृह्णाति असिद्धेरित्यादिना यदिहि हेतुभावस्यनित्यसत्त्वासत्त्वाभ्यांव्याप्तिरवधार्यतेतनतस्तद्ध्वंसजकत्वंस्यात्तत्वेनदृष्टोन्या

समवायेऽस्यहेतुत्वेपूर्वदोषानुषंगातः ५७ चरमव्यापारस्यव्यापारांतरविधुरस्याकारणत्वप्रसंगात् तज्जन्यस्त-
ज्जन्यजनकोव्यापारइतिजनकत्वमंतर्भाव्यव्यापारनिरुक्तेरात्माश्रयत्वाच्च व्यापारवत्त्वंचव्यापारसमवायित्वमुत
तज्जनकत्वंनाद्यः यागादेः स्वर्गाद्यकरणत्वप्रसंगात् ध्वस्तस्ययागादेरपूर्वादिव्यापारासमवायित्वात् नेतरः आ-
त्माश्रयत्वात् नापिसप्तमः असिद्धेः प्रतिबंधस्यनृशृंगादावभावतः सत्वेसतीवायुक्तंहष्टांतादेरसिद्धितः ५८ निर्हेतु-
कस्यनित्यसत्त्वासत्त्वाभ्यांप्रतिबंधासिद्धेर्नित्यसत्त्वासत्त्वयोरन्यतरप्रसंगस्यदुर्वचत्वात् अहेतुकत्वेपिप्रागभावस्य
नित्यसत्त्वासत्त्वाभावात्शशविषाणस्यनित्यसत्त्वाभावाच्च ननुभावत्वेसत्यहेतुकत्वस्यसदातनत्वेव्याप्तिराकाशा-
दौसिद्धेतिचेत् नास्याव्याप्तेः स्वभाववादिनंप्रत्यसिद्धेः भूतचतुष्टयतत्त्ववादिनातेनात्माकाशादीनामनभ्युपग-

ह असिद्धेः प्रतिबंधस्येति। तस्यैवोपपादनंनृशृंगादावभावतइति आदिशब्देनप्रागभावोगृह्यतेतथाहिनिर्हेतुत्वंतुशशविषाणे-
स्यथचनित्यसत्त्वंनास्तितथाप्रागभावेनिर्हेतौनास्तिनित्यसत्त्वंविनाशित्वादतोनास्तिव्याप्तिरित्यर्थः ननुसत्त्वेसतिनिर्हेतुकत्वमा-
काशादौनित्यसत्त्वेनव्याप्तमितितत्राह सत्वेसतीति वायुक्तमितितनअहेतुर्दृष्टांतादेरितिस्वभाववादिनंप्रत्याकाशादेरसिद्धेर्व्या-
प्त्यसिद्धिरितिभावः एतमेवश्लोकंव्याचष्टेनिर्हेतुकस्येत्यादिना प्रतिबंधासिद्धेरेवविवरणंअहेतुकत्वेइत्यादिनाउत्तरार्द्धंसशंकाम।

कुसु०

५८

२
वि॰प्र॰
टी॰न॰
१२८

दृष्टान्तादेरित्यादिशब्दसंगृहीतं दूषणमाह विपर्य्ययेति यदि निर्हेतुकं न हि भावत्वे सति सदासत्त्वाधिकरणं स्यादिति तर्कः तस्यैवं वि
पर्य्ययः यद्भावत्वे सति सदासत्त्वानधिकरणं तत्सहेतुकमिति नचैवं निर्हेतुकवादिनः संप्रतिपन्नस्य तत्त्वमस्तीत्यर्थः वेदान्तिनं प्रति।
व्यतिरेकव्याप्तिं दर्शयन्कारणत्वं समर्थयति नन्विति ममापि तावन्नान्वयिकमस्ति हेतुत्वं प्रामाणिकमनन्तर्गर्भसाध्यमप्रसिद्धमित्य
र्थः प्रसंगात्कारकलक्षणमपि दूषयति कारणनिरुक्ताविति कार्य्यकारणात्मकोद्वयं हेतुवर्गस्तत्र कारणस्य दुर्निरूपत्वात्तद्वर्गग्राह

विपर्य्ययपर्य्यवसानात्तत्प्रसंगस्य नहि यद्भावत्वे सति सदासत्त्वानधिकरणं तत्सहेतुकमित्युपसंहारस्थलमस्ति।
लोकायतिकं वौद्धं प्रति कार्य्यं कारणाभावस्यैवाद्याप्यसिद्धेः ननु विमतं सहेतुकं प्रागभाववत्त्वाद्यन्निर्हेतुकं न तत्प्रागभाव
वद्यथा वदिति वेदान्तिनं प्रति प्रयोगः तन्निवेन्न हेतुशब्दार्थानिरुक्तौ सहेतुकत्वस्याप्यसिद्धेरप्रसिद्धविशेषणत्वात् कारणनि
रुक्तौ तव्द्यापारवत्कारणं कारकमिति कारकलक्षणमप्यपास्तम् तदेवं कारणलक्षणं दुर्भणं तथा कार्य्यलक्षणमपि तत्किं
कारणाधीनस्वात्मलाभं १ प्रागभावोपलक्षितसत्तायोगि वा २ प्रागभावप्रतियोगि वा ३ प्रागभाववद्वा ४ प्रागसत्त्वे सत्युत्तर
कालसंबंधि वा सर्वेषामनिरूपणात्प्रथममवतरति अनिरुक्तेरनिव्याप्तेरव्याप्तेस्तरसंभवात् अतिप्रसंगतोऽव्याप्तेर्मतुव
र्थानिरूपणात् ५४।

कप्रमाणे विरोधः हेतुमतीत्यनेन कार्य्यमिदानीं कार्य्यवर्गस्य दुर्निरूपतया तद्विषयप्रमाणे विरोधो नास्ती
ति दर्शयितुं कार्य्यत्वं खण्डयति तथा कार्य्यमिति स्वात्मलाभः सत्तायोगित्वं अभावप्रतियोगित्वमभाववत्त्वं उत्तरकालसत्त्वं चेत्येतत्सर्वं नित्यस्या
प्यस्तीति तद्व्यवच्छेदार्थं पंचस्वपि पक्षेषु प्रत्यग्विशेषणानि श्लोकेन दूषणानि संगृह्णाति अनिरुक्तेरित्यादिना प्रथमपक्षे कारणानिरुक्तौ तद
धीनात्मलाभत्वमप्यनिरुक्तमित्यसिद्धिः द्वितीये त्वात्माश्रयकार्य्यत्वप्रसंगः घटादिप्रागभावोपलक्षितसत्तायोगित्वादेकत्वात्सत्ताया इत्य
क्ते२

रामः
१२८

अथ स्वप्रागभावोपलक्षितसत्तायोगित्वं विवक्षितं तत्राह अव्याप्तेरिति स्वशब्दार्थानुगमादव्याप्तिरित्यर्थः पूर्वोक्तातिव्याप्ति।
तादवस्थ्यं च तृतीये दोषमाह तदसंभवादिति तत्र हि प्रागभावप्रतियोगित्वं किं प्रागभावेनैकदेशानवस्थायित्वं किं वैककाला
नवस्थायित्वं आद्ये ऽसंभवः प्रागभावकार्ययोरेकस्मिन्कारणोत्पत्तेः द्वितीये प्राह अतिप्रसंगतइति अस्ति हि कालस्या
पि प्रागभावेनैककालानवस्थानं कालेऽत्यन्ताभावादित्यर्थः तथा प्रागभावेऽन्यत्र यत्किंचित्प्रागभावः प्रागभावत्वेन विवक्षि

न तावदाद्यः कारणस्यानिरुक्तौ तदधीनस्वात्मलाभस्याप्यनिरुक्तेः न द्वितीयः आत्मादीनामपि कार्यत्वप्रसं-
गात् घटादेः सत्ताया एव प्रागभावेनोपलक्षितत्वात् स्वाश्रयत्वाभावात् स्वप्रागभावोपलक्षितसत्तायोगित्वमिति लक्षणवि
वक्षायामननुगम एव सत्ताविरहिणः प्रध्वंसस्याकार्यत्वप्रसंगाच्च न तृतीयः प्रतियोगिशब्देनैकदेशानवस्थानाभिधाने लक्ष
णस्यासंभवित्वात् कार्यतत्प्रागभावयोः कारणोत्पत्तेः एककालानवस्थाने तु कालस्यापि कार्यत्वप्रसंगात् कालस्य कालान्त
राभावेन प्रागभावेनैकस्मिन् कालेऽनवस्थानात् घटादेरपि कार्यस्य यत्किंचित्प्रागभावेन सहावस्थानादसंभवदोष
स्तदवस्थः स्वप्रागभावेन सहानवस्थाने चात्मादेरपि कार्यत्वप्रसंगः तेषां प्रागभावाभावेन तेन सहानवस्थानात् न च
तुर्थः मतुवर्थस्याधिकरणार्थतायामात्मादेरपि कार्यत्वप्रसंगात् तेषामपि सुखादिकार्यप्रागभावाधिकरणत्वात् प्रति
(योगिपरत्वे पूर्वदोषानुषंगात्॥

तः स्वप्रागभावो वा आद्ये प्राह अव्याप्तेरिति घटादेरपि यत्किंचित्प्रागभावेन सहावस्थानात्
स्वव्याप्तिरित्यर्थः द्वितीये त्वात्मादावतिप्रसंगं वक्ष्यति स्वशब्दार्थानुगमादव्याप्तेः चतुर्थे प्राह मतुवर्थेति किं प्रागभावाधिकरणत्वं प्रागभाव
वत्त्वं किं वा तत्प्रतियोगित्वं आद्ये सुखादिप्रागभावाधिकरणात्मादावतिव्याप्तिः द्वितीये तु तृतीयपक्षोक्तदोष इति भावः पंचमपक्षे ऽव्याप्तिमनुषंज
यिष्यति विशदग्रंथेन संग्रहं विवृणोति न तावदित्यादिना यत्तु इष्यतीत्युक्तं तदाह स्वप्रागभावेनेति॥

यद्यप्यनुषंजयिष्यतीत्युक्तं तत्राह उत्तरकालस्येति तस्मिन्नेवपक्षेऽतिप्रसंगान्तरमाह नप्रागभावस्येति वैयर्थ्येति प्रागभावव
त्वमित्युक्ते क्वाति व्याप्तिर्योत्तरकालसंबंधपदेन व्यावर्त्यते इत्यर्थः एतेनैतस्यैव विवरणं कारणानिरुक्ताविति नहि किंचिदपेक्ष्या
नियतत्वमपि विवक्षितमतिप्रसंगादिति भावः तत्रकाले प्रमाणं दूषयति श्लोकेन प्रत्यक्षेति न तावत्प्रत्यक्षप्रमाणं रूपादिरहित
द्रव्यत्वेन वाह्यत्वेन च बहिरंतःकरणागोचरत्वात् नाप्यनुमानं परत्वादेस्तल्लिंगत्वाभावात् ननु तज्जन्यत्वात्परत्वादेः किमिति न।
तल्लिंगत्वं तत्राह स्वरूपतइति किं कालस्वरूपमात्रं परत्वादिनिमित्तं किं वा न हि विशेषः नाद्यः कालस्याविलक्षणत्वेन विलक्षण

न पंचमः उत्तरकालस्याकार्यत्वप्रसंगात् तस्योत्तरकालसंबंधित्वाभावात् अथ नोत्तरकालः कार्यं नित्यत्वात्तस्ये
ति चेत् न प्रागभावस्यापि कार्यत्वप्रसंगात् तस्य प्रागसद्रूपत्वात् किंचित्तदपेक्षोत्तरकालसंबंधित्वाच्च प्रागसत्वशब्देन।
प्रागभावत्वनाविवक्षितेति चेत् न मतुवर्यो निरूपणात् कालसंबंधपदस्य वैयर्थ्यप्रसंगाच्च एतेन नियतोत्तरक्षणावर्ति
कार्यमित्यपि परास्तम् कारणानिरुक्तौ तदपेक्षया नियतोत्तरक्षणावर्तित्वस्यानिरूपणात् कालानिरूपणाच्च न पूर्वो
त्तरक्षणाभावः कारणकार्यभावः तथा हि प्रत्यक्षागोचरत्वेन परत्वादेरलिंगतः स्वरूपतोऽनिमित्तत्वादुपाधौ निष्फल
त्वतः ६० दिवाकरपरिस्पंदपिंडसंगतिसंभवात् व्यापिनश्चेतनादेव कथं कालः प्रसिध्यति॥ ६१॥ ॥

परत्वादेस्ततोऽनुपपत्तेः न द्वितीयः स्वतो विशेषाभावादर्थोपाधिकस्तत्राह उपाधौ निष्फलत्वत इति तैरेवोपाधिभिः परत्वादि
व्यवहारसिद्धेर्विफला कालकल्पनेत्यर्थः ननु दिवाकरपरिस्पन्दभेदास्तावदुपाधयः न च तेषां पिण्डैः साक्षात्संबंधः परिस्पन्द
क्रियाया दिवाकरवर्तित्वात् न चासंबद्धानां पिण्डेषु व्यवहारजनकत्वमतिप्रसंगात् अतस्तत्संबंधकतया कालकल्पनेति
तत्राह दिवाकरे नियतः खलु विभुरात्मा परमेश्वरस्तत एव दिवाकरपरिस्पन्दानां पिण्डानां च संगतिसंभवान्न तत्सिद्ध्यर्थमपि कालः क

यथाक्रमं विवृणोति ननु तावदित्यादिना परत्वादेरलिंगत्वमित्यस्याशंकामाह परापरेति तत्र परापरादिबुद्धेः किं कालगुणतया ।
स्वसमवायित्वेन तत्कल्पयति किंवा तदसमवायिकारणतया किंवा निमित्तकतया नाद्यः कालस्य विभुतया पंचमात्रगुणतया च ।
तद्गुणकत्वाभावात् नापि द्वितीयः द्रव्यस्यासमवायिकारणत्वाभावात् गुणकर्मणोर्विहितत्वात् नापि तृतीयः अपेक्षाबुद्धेरेव ।
निमित्तत्वोपपत्तेः भवतु वा यथा तथापि किं कालमात्रं निमित्तं तद्विशेषो वा नाद्य इत्याह न तेषामिति द्वितीये पि किं स्वतो विशेष उ ।

ननु तावत्काले प्रत्यक्षं प्रमाणं द्रव्यग्राहकयोश्चक्षुःस्पर्शनयोस्तस्मिन् रूपविरहिणि स्पर्शविधुरे चाप्रवृत्तेः मन
सश्च बाह्येन्द्रियनिरपेक्षस्य बहिरप्रवृत्तेरननुभवात् नाप्यनुमानं तस्य निबद्धलिंगाभावात् परापरयौगपद्यायौ
गपद्यचिरक्षिप्रप्रत्ययाः प्रत्येकं लिंगमिति चेत् न तेषां निरुपाधिककालनिबन्धनत्वे प्रत्ययवैलक्षण्यानुपप
त्तिप्रसंगात् तपनपरिस्पन्दभेदलक्षणोपाधिकत्वे तु तत्कालाधीनत्वे उपाधिभिरेव तत्सिद्धेः कृतं कालकल्प
नया ननु तरणिपरिस्पन्दभेदानां युवस्थविरादिपिण्डैः स्वतः संबंधासंभवेन दिवसमासादिविशिष्टप्रत्ययज
नकत्वायोगात् पिण्डचण्डरोचिःपरिस्पंदयोः परंपरासंबंधसंपादकः कालः स्वीकर्त्तव्यः ॥ ६ ॥

पाधिको वा नाद्य अपयाद्यां तान् द्वितीयमाह तपनेति भेदो विशेषः अत्र श्रीवल्लभोदीरितकालसमर्थनारीतिमुद्भावयति तत्त्विवर्त्ते ।
कतयोत्तरश्लोकमवतारयितुं नन्विति तरणिः सूर्यः अनुभूयते तावदन्वयव्यतिरेकाभ्यां तरणिपरिस्पंदविशेषाणां युवस्थविरश
रीरादिपिण्डेषु मासादिविचित्रबुद्धिजननद्वारेण तदुपहितेषु परत्वापरत्वादिबुद्धिजनकत्वं न च तैरसंबद्धानां तत्रबुद्धिजनकत्वं न च
साक्षात्संबंधो रविपरिस्पंदानां पिण्डैरस्यतः तत्संबंधकतया कश्चिददृष्टद्रव्यविलक्षणो द्रव्यविशेषः स्वीकर्त्तव्यः तस्य च काल इति संज्ञेति ॥

ननु स्वीकृतेपि तस्मिन्किं तपनपरिस्पंदाः पिण्डेषु समवयन्ति तस्मात्कस्यचित्तोप्यसत्कल्प इति तत्राह स च संबंध इति यद्यपि न सा-
क्षात्संबंधस्तथापि पिण्डसंयुक्तकालसंयोगवति तपने समवेतानां परिस्पन्दानां संयुक्तसंयोगसमवायोस्ति संबन्धः अतः स्वसंयुक्तवति
धर्मांशांश्च संयुक्तवत्त्वं तत्परे संक्रामकः कश्चित्कालनामास्वीक्रियत इत्यर्थः ननु तथापि कथं तस्य तत्त्वमत्वं यावता पृथिव्यादिभिरेवायम
र्थः शक्यसंपादन इति तत्राह न च तत्र पृथिव्यादीनि तेषु तावन्नित्यवर्गस्य परमाणुतया अतिदूरत्वमिति तपनपिण्डयोर्न संबंधकत्वं अनित्य
वर्गस्याप्यनवस्थिततया सकलवस्तुसंसर्गोपि न नियमेन संबंधकत्वमित्यर्थः ननु सवितृकिरणैरेव सवितृपिण्डसंबद्धैरयं संबंधः संपा
द्यतामिति तत्राह न च दिनकरेति निरवातवस्तुषु किरणसंबन्धाभावेपि मासादिव्यवहारप्रतीतेस्तत्रापि रविपरिस्पन्दसंबंधसंपादनक्षमः॥

स च संबंधः संयुक्तसंयोगिसमवाय्यात्मा न च तत्र पृथिव्यादिचतुष्टयं हेतुः तस्य तपनपिण्डाभ्यां नियमेन संसर्गाभावात् न च दिन
करकिरणास्तथा तदभावे गृहनिरवातनिध्यादिषु मासाद्यवच्छेदप्रतीतेः न चाकाशात्मानौ तथा विशेषगुणवत्त्वात् पृथिव्यादिवत् ना-
व्यापकत्वमुपाधिः सकलस्य व्यापकस्य संबंधोपनायकत्वे व्यापकान्तरस्य तद्धेतुतया व्यतिरेकव्याप्तेः साध्याव्यापकत्वेनानुपाधित्वा-
त् ततः परिशेषात्पिण्डसंयुक्तः कालस्तपनेनापि संयुज्यमानस्तत्समवेतपरिस्पन्दानां परम्परया पिण्डसंबंधहेतुः सिद्ध इति लीलावती

कश्चित्कल्प्य इत्यर्थः ननु तर्ह्याकाश आत्मा वा संबंधसंपादकौ भवतस्तयोः सर्वसंसर्गतया सर्वोपपत्तिस्तत्राह न चाकाशेति तयोरिति संबन्धो
पनायकौ काले व्यभिचारवारणाय विशेषेत्युक्तं ननु पृथिव्यादिष्वेवंविधसंबंधानापादकत्वं न विशेषगुणवत्त्वप्रयुक्तं किं तर्ह्यव्यापकत्वप्र
युक्तं तत्तथा च तौ किमिति न संबन्धकत्वमनयोरिति तत्राह न चाव्यापकत्वमिति अयमर्थः त्वयापि तावदाकाशात्मनोरन्यतरस्यै
व हेतुत्वं मन्तव्यं लाघवादनुगतिलाभाच्च न चाव्यापकस्याप्येकस्य संबंधकत्वे यत्राव्यापकत्वं नास्ति तत्रासंबंधकत्वमपि नास्तीति
व्यतिरेकव्याप्तिरशक्यसमर्थनेति नायमुपाधिरिति तदित्थं प्रसक्तप्रतिषेधमन्यत्राप्रसंगं चोक्त्वा शिष्यमाणे संप्रत्ययं दर्शयित्वा परिशेष
मुपसंहरति तत इत्यादिना न च दिगेव सास्त्विति वचनीयं कालविप्रतिपत्तुर्दिश्यपि समानत्वात् सिद्धत्वेपि तत्कृतपरत्वापरत्वव्यवहारसंदे

एतन्निरासपरतया द्वितीयं श्लोकं योजयति नैवमित्यादिना पूर्ववाद्यनुशयमुन्मूलयति नच विशेषगुणोऽस्ति नतावद्विशेष-
गुणवत्त्वादनुपनायकत्वयोर्व्यभिचारे किंचिद्बाधकमस्ति नस्यात्साधर्म्यसमेयम् अथैवमपि न प्रतिबन्धः सेन हि विशेषगुणराहित्य-
स्यानुपनायकत्वस्य चास्ति साहचर्यं मनसीति तावत्कालस्याप्यनुपनायकतापात इति व्याहतिभारं वहत्वयं वावदूकवादि-
गर्दभ इत्यभिसंधिराह विशेषगुणवैधुर्येणेति ननु न विशेषगुणविधुरत्वमनुपनायकत्वे प्रयोजकं किं त्वव्यापकत्वं कालस्य
तु न हि परीत इति तत्राह अव्यापकत्वेति अत्रापि हि पूर्ववद्व्यापकत्वनित्यनिवृत्तावनुपनायकत्वस्याकाशादौ व्यभिचारेणासाध्या-

नैवमुभयवादिसंप्रतिपन्नात्मनैव वस्तूनामुपाधिसंबंधसिद्धेरतिरिक्तद्रव्यकल्पनायां कल्पनागौरवप्रसंगात्
नच विशेषगुणवत्त्वादात्मनः पृथिव्यादिवदुपाधिसंबंधानुपनायकत्वं विशेषगुणवैधुर्येण मनोवदेव भवद-
भिमतकालेऽप्युपाध्यनुपनायकत्वप्रसंगस्य दुर्वारत्वात् अव्यापकत्वोपाधेस्तथैव निवारितत्वात् ननूपाधिसंबंधोप-
नायकत्वेनैव कालसिद्धेस्तत्स्वीकारेण न हि पर्यायप्रसंजने धर्मिग्राहकप्रमाणबाधस्तदसिद्धावाश्रयासिद्धिरिति चेत्

व्यापकत्वादित्यर्थः ननु यदीदमभिधीयते विशेषगुणवतामेवेदमनुपनायकत्वं न हि विशेषगुणरहितत्वादेव कालस्यापि मनोवदनुप-
नायकत्वं स्यादिति प्रसंजनं प्रसाधनं वा कालमधिकृत्य तदयुक्तं कालसिद्धावसिद्धौ च तदनुपपत्तेरिति शंकित्वा परिहरति न प्रति-
वादीति एतेनेदमपास्तं यदाह स एव यदि गगनमात्मा वान्यधर्मेणान्यदवच्छिंद्यात्काश्मीरवर्तिना कुंकुमरागेण कर्णाटकुचकव-
निकरकमलमवच्छिंद्यात् नच कालेऽप्येष प्रसंगः तस्यासिद्धावाश्रयासिद्धेः सिद्धौ वा परापरनियतधर्मोपसंक्रामकत्वस्वभावेनैव सि-
द्धेरिति देहात्मवादिवत्प्रतीतिमात्रसिद्धस्याश्रयतोपपत्तौ दोषद्वयानास्कंदनादिति किंच कालमंगीकृत्यापि स्वभावस्य शरणं तदीश्वर-

किंचोभयसंप्रतिपन्नंकिंचिदपसीकारेणकालपसीकारव्यतिरेकेगौरवविशेषगुणशून्यस्योक्तधर्मानुपनायकत्वस्यशक्यानुमानत्वात्तदुद्भा-
वनरोयंदोषइत्याहविशेषगुणेतिसत्तादौव्यभिचारनिवारणायमात्रग्रहणंअसिद्धिपरिहारायविशेषपदंननुयाविमोपरत्वापरत्वगुणवत्तुभू-
येनेसनयोस्तावदसमवायिकारणेनकेनचिद्भवितव्यंभावकार्यत्वात्तच्चगुणःकर्मवास्यात् तत्राद्यस्यगतत्वेनप्रत्यासत्त्यभावात्तरविपरिस्प-
न्दस्याव्यवस्थितत्वाच्चनरूपादिः।नाद्येकत्वादिद्वित्वादिवैषम्यात् नचकारणानिष्ठपरत्वादि अपेक्षाबुद्धिजन्यत्वात्तस्मात्कालविशेषपि-
ण्डयोः संयोगादसमवायिकारणात् समवायिकारणेषुपिण्डेष्विमावुत्पद्येतेहि विशेषपिण्डसंयोगाच्चदिक्कृतौ यथाहुर्भाष्यकृतःपरेणका-
लप्रदेशेनसंयोगात्परत्वमुत्पद्यते अपरेणकालप्रदेशेनसंयोगादपरत्वस्योत्पत्तिरितितस्मादेतयोरसमवायिकारणभूतसंयोगाश्रयतया

प्रतिवादिप्रसिद्धतामात्रेगौरवाश्रयतोपपत्तेरसकृदुपपादितत्वात् विशेषगुणविधुरत्वंतरणिस्पन्दसंसर्गोपनायकत्वंनिन
भवतिविशेषगुणशून्यमात्रवृत्तित्वात्मनस्त्ववदितिकालत्वादिनंप्रतिप्रकारान्तरेणापिनियुक्तिसंभवाच्चनचपरत्वापरत्वगुण
समवायिकारणसंयोगाश्रयतयाकालसिद्धिःपरत्वापरत्वयोरेवासिद्धेःनचपरापरत्वव्यवहारानुपपत्त्यातत्सिद्धिःप्रचुराप्रचुरतर-
णिपरिस्पन्दान्तरितजन्मत्वेनैवतत्सिद्धेःअन्यथापरत्ववन्मध्यमत्वस्यापिगुणान्तरस्यस्वीकारःस्यादितिभूषणाभाषितदूषणप्रसं-

॥ = ॥

कालसिद्धिरितितत्राहनचपरत्वापरत्वेइतिननुकथंपरत्वापरत्वयोरसिद्धिर्यावतायद्विशिष्टेद्रव्येपरमपरमितिबुद्धीजायेतेतेनपरत्वेइतिलक्षणप्रमाण-
योर्भावात् तत्राहनचपरेतिपस्यहियदपेक्षयाभूयोभिस्तरणिपरिस्पंदैरन्तरितंजन्मतत्तदपेक्षयापरंयस्यचयदपेक्षयास्तोकतरणिपरिस्पन्दान्त-
रितंजन्मतत्तदपेक्षयापरमितिव्यवह्रियतेइत्युपाधिनोप्युपपन्नत्वात्तातिरिक्तगुणकल्पिकेत्यमित्यर्थःअतएवचपूर्वोत्पन्नत्वंपरत्वंपश्चादुत्पन्न-
त्वमपरत्वमितिभासर्वज्ञमतेलीलावतीकारेणयद्दूषणमुक्तंपूर्वपश्चाद्भावस्यपरापरातिरिक्तस्यनिर्वक्तुमशक्यत्वादितितदपिपरिहृतंपूर्वापरयोरु-
पयोधनात्तरणिपरिस्पन्दप्राचुर्याल्पत्वमात्रेणैवसमर्थनादितिअतश्चैवमेवाश्रयणीयंइतरथामध्यमोयमितिव्यवहारान्मध्यमत्वमपिकश्चिद्गुणः
॥ स्यात् नहितन्नोक्तरीतिमन्तरेणशरणमित्याह अन्यथेति॰ ॥ ॰॰ ॥

लीलावतीकारस्तु संयोगात्यत्वभूयस्त्वे विकल्प्य दूषयां बभूव तन्नीतिमत्राप्युद्भावयन् दूषयति नचनरणीति अवश्यं नावद्ध्रुवानमवधिं
कृत्वास्य विरे विप्रकृष्टत्वबुद्धिरुत्पद्यते अस्य विरमवधिं कृत्वापूनिचसन्निकृष्टत्वबुद्धिरुत्पद्यते इत्यपेक्षाबुद्धितः परत्वादिसंभवमभ्युपगच्छता प-
रत्वापरत्वजनकबुद्ध्योः परस्परं विशेषो वक्तव्यः स च विषयगतप्रचुराप्रचुरतरणिपरिस्पन्दान्तरितजन्मव्यतिरेकेणादुनिरूपस्ततो याह
शं प्राचुर्य्याप्राचुर्य्येन वाभिमतं तादृशमेव ममापीत्यन्यस्थः न तु न विषयविशेषकृतो बुद्ध्योर्विशेषः किं तु स्वरूपसामर्थ्यनिबंधनः यथाह श्रीव
त्सभः अपेक्षाबुद्धेर्विषयवैचित्र्यमंतरेणापि विचित्रकार्य्यजननशीलत्वेन विलक्षणफलजनकत्वाविरोधादिति तदेतदुद्भावयति अपेक्षे-

त्यादिना नच तरणिपरिस्पन्दानां प्राचुर्य्यमल्पत्वं च न संख्याभेदो नापि परिमाणविशेषो निर्गुणे कर्मण्यसंभवादिति वाच्यं भवन्म
ते परत्वापरत्वहेतुभूताया अपेक्षाबुद्धेर्यद्विषयनिबंधनं वैचित्र्यं तस्यैवास्माभिः प्रचुराल्पतरशब्देनाभिलापात् अपेक्षाबुद्धे-
स्वभावभेदादेव वैचित्र्यव्यवहारहेतुत्वं न विषयभेदापेक्षयेति चेत्तमेवं परापरबुद्ध्योरप्यन्तरेणैव विषयवैचित्र्यं स्वभावभेदा
देव तथाविधव्यवहारहेतुत्वप्रसंगात् तथा नीलपीतादिबुद्धीनामपीति तथा गगनानां त्वयेव दन्तः स्वहस्तः स्यात् देवं न कालसंज्ञा

ति एवंविधं स्वभाववैचित्र्यं परापरबुद्ध्योरेव कल्प्यतां लाघवादावश्यकत्वाच्च तथा नदतिरिक्तबुद्धिकल्पनापीत्याह नैवमिति अतिप्रसंगदर्शनपूर्वक
मपराद्धान्तप्रसंगं चाह तथा नीले नित्या गगनाः बौद्धाः भवेमं वा यथा न तथा परत्वापरत्वे तथापि तदसमवायिकारणसंयोगाश्रयपरमेश्वर एव प्राप्तप-
पादितरीत्या घटते इति तथा कालकल्पनानचातिप्रसंगः कालवदेव पदार्थविशेष एव तत्तद्वर्त्तकत्वात् किंच परंपरात्मकस्तावत्संबंधो भव
त्रये तस्मात् रविपरिस्पन्दपि गडस्याभाव्यतो ह्रासौ स्वीकृतेपि काले नन्तत्संयोगमात्रात् परत्वादिगुणोत्पत्तिरविशेषात् उपहितकालसंयोगा
धीनत्वेप्युपाधिकालयोरुपाधिपिण्डयोर्वा न साक्षात्संबंधः न च संयुक्तसंयोगसमवायात्मकः कश्चित्संबंधो भवत्येभावाभावान्तरगतेन तया शक्य

च्छायाभावयोः स्वभावादेव संबंधव्यवहारजनकत्वमेवं तरणिपरिस्पन्दानामेव स्वभावविशेषवशात् पिण्डेषु परत्वापरत्वव्यवहा
रजनकत्वमस्तु कृतमन्तरालेऽजागलस्तनायितकालकल्पनयेति एतेन परत्वापरत्वासमवायिसंयोगाश्रयो विभुः कालः परापर
यौगपद्यायौगपद्यादिप्रत्ययलिङ्गः कालः नित्यं परत्वापरत्वासमवायिकारणीभूतसंयोगाश्रयो द्रव्यनिष्ठात्यन्ताभावप्रतियोगिजा
तिमत्त्वरहितः परत्वजनकसंयोगवान् कालः इत्यादौ निष्कृष्टमप्रशस्तपादशिवादित्यमिश्रादिकल्पितकाललक्षणान्यपि प्रतिक्षि
प्तानि मन्तव्यानि परत्वादिजनकसंयोगस्यान्यथोपपादनेन विशेषणासिद्धेरिति अनुमानानि तु समनन्तरमेव दिक्खण्डने पुरा निरस्यन्ते
इदानीं दिशो निराकुर्वंस्तत्र प्रमाणं निश्श्लोकेन दूषयति इन्द्रियेत्यादिना न तावदध्यक्षं तत्र मानं पूर्ववदस्या अर्थीन्द्रियायोग्यत्वात् नाप्य

इन्द्रियानधिगमत्वान्नाध्यक्षं नानुमा दिशि वर्गौरर्थान्तरत्वेन साध्यासिद्धिर्निदर्शने ६२ एतेन दिगपि व्याख्याता न तस्याश्चा-
प्यनध्यक्षत्वादलिङ्गत्वाच्च ननु पूर्वापरदक्षिणोत्तरादिदिक्प्रत्ययाः सन्ति तत्कथं लिङ्गाभाव इति चेत् न तेषां निरुपाधिदि
गालम्बनत्वे सर्वत्र सर्वप्रत्ययप्रसङ्गात्॥ ॥

ऽनुमानादिभिस्तु सिद्धिस्तेषां सर्वगतत्ववर्णसाधनेनाप्यर्थान्तरतापातात्
केषुचिद्दूषणं तेषु साध्यविकलतायास्तत्त्ववक्ष्यमाणदूषणानामप्युपलक्षणम् आदिग्रहणेनान्यथानुपपत्तिराप्तवचनं गृह्यते सावतारं
श्लोकं विवृणोति एतेनेत्यादिना ननु सन्ति पूर्वापरादिप्रत्ययाः प्रत्यात्मवेदनीयाः न च तेषां मूर्तद्रव्यनिबन्धनत्वं तेषामसार्वत्रिकत्वाद
नुगतविचित्रव्यवहारानुपपादकत्वात् पूर्वादिप्रतीत्यनुपपत्तेश्च न च विभुद्रव्यान्तरनिबन्धनाः तेषामविचित्रतया विचित्रव्यवहारा
नुपपत्तेः ततस्तेभ्योऽतिरिक्तं किंचिदेषामालम्बनं दिगभिधानं कल्प्यमिति शंकते ननु पूर्वेति तत्र किं निरुपाधिका दिगेषामालम्बनं
किं वा तत्तदुपाध्युपहिता अन्त्ये औपाधिकपक्षेऽप्येकानेका वा आद्ये पूर्वादिदिशां व्यवस्था न स्यात् अविचित्रविषयत्वादित्याह न तेषामिति॥

अथ पूर्वादिप्रत्ययविषयाऽसंकराय विभिन्ना दिशः कल्प्येरंस्तत्राह दिशामिति यत्तु लीलावतीकारेणोक्तं अनेकत्वेपि न क्रियोपनायकः कालः संयोगोपनायका दिक् न च नवैवेति विरोधः आत्मनामानन्त्येप्यात्मत्ववदविरोधादिति तत्र कालसंग्रहोपाधिः पुरस्तादेव निरस्तो दिक्संग्रहोपाधिमपि पुरा निराकरोति अत्राप्युपगम्याप्युपाधिमेवं संग्रहेति प्रसक्तिमाह नचात्मत्वेति यदि हि पूर्वादिप्रत्ययवैलक्षण्येन दिग्भेदकल्पनं तर्हि नारनरत्वादिरूपेणा शब्दलिंगानामपि भिन्नतयाणानमपि किं विभिन्नं न सौ क्रियते शंकते हि तत्राप्युपाधिपुरोधानेन तत्वव्याकोपपरिहार इत्याह शब्दलिंगानामपीति गुडजिह्विकयामेव विस्पष्टयं नंडिभकमत्याह नच तथैवेति भाष्यमशस्तपादीयं तथा काललिंगाविशेषादेकत्वं सिद्धं दिग्लिंगाविशेषादंजसैकत्वेपीति च तत्र तत्र भाष्यमुदाहरणीयम एव

दिशां दशत्वप्रसंगेन नैव दूष्याणीति व्याघातात्तु न चात्मत्वेन संग्रहवद्दिशामपि दिक्त्वेन संग्रहाद्दोषः शब्दलिंगानामपि भिन्नतया नन्कारणाकाशस्याप्यानन्त्यप्रसंगात् आकाशत्वेन संग्रहस्य तत्रापि तुल्यत्वात् न च तथैवास्तु को दोष इति वाच्यं । आकाशकालदिशामेकैकत्वादपरजात्यभावे पारिभाषिक्यस्तास्ताः संज्ञा आकाशं कालो दिगिति भाष्यविरोधात् सुरशिखरिशिखरपरिभ्रमत्मार्तंडमंडलप्रथमसंयोगाद्युपाध्युपधानेनैव पूर्वादिप्रत्ययानामन्यथासिद्धत्वात् ॥ मनौपाधिकपक्षं दूषयित्वौपाधिकपक्षमाशंक्य तत्राप्युपाधेर्निष्फलत्वं तद्दूष्येत इति दिशाति सुरशिखरीति सुरशिखरी मेरुपर्वतः तथा हि दिग्लिंगाविशेषात् दिश एकत्वेपि दिशः परमर्षिभिः श्रुतिस्मृतिलोकसंव्यवहारार्थं मेरुप्रदक्षिणमावर्तमानस्य भगवतः सवितुर्ये संयोगास्तेषां संयोगानां लोकपालपरिगृहीतदिक्प्रदेशानामन्वर्थाः प्राच्यादिभेदेन दशविध संज्ञाः कृता इति भाष्यात् संति दशोपाधयः प्रागंचनमवागंचनं प्रत्यगंचनमुदगंचनमिति मेर्वपेक्षया संति चत्वार उपाधयः तथा तदंतरालाश्चत्वारः तथा नक्षत्रलोकाद्यपेक्षयाभिमुखत्वं पृथिव्यादेः पृथिव्याद्यपेक्षयाभिमुखत्वं नक्षत्रलोकादेरिति द्वावुपाधी तदेतैर्दशभिर्दिशो दशत्वं न स्वभावत इति यद्यभिमतं तर्हि तैरेवोपाधिभिः पूर्वापरादि

किंचोपाधिकत्वेप्येतेषांप्रत्ययानां किं दिङ्मात्रं विषयाः उपाधिमात्रं वा उपहितदिग्वानाद्यो विचित्रत्वात् नोत्तरः दिग्वैयर्थ्यात् तृ
तीये दूषणमाह उपहितेति परस्पराश्रयं विघ्नयतीति पूर्वापरेति अयमर्थः तत्र किं पूर्वापरादिबुद्धय एव दिक्षु लिंगमन्यद्वा द्वितीये ।
येवस्य निमित्तमेनुज्ञायमानतया नासां लिंगत्वं नचापि नस्मादिबुद्धिभिरेव चक्षुरादेरिवाभिर्दिशामनुमानं तथासति दिग्विषयत्वाभावप्रसं।
गात् तथाच दिग्विषयाभिरेताभिस्त्वगताभिर्दिशामनुमाने विषयविशिष्टबुद्धिलक्षणालिंगज्ञानात् दिगनुमितिः दिक्ज्ञाने च विषयविशिष्ट
बुद्धिलक्षणालिंगज्ञानं नहि तद्विषयज्ञानव्यतिरेकेणातद्विशिष्टबुद्धिः शक्यज्ञानेतीतरेतराश्रयत्वमिति दिक्ज्ञानाच्च दिक्ज्ञानमि
त्यात्मरपि कोनुकान्तरं यत्तु वक्ष्यतीत्युक्तं तदाह लिंगान्तरेति यत्नूपाधिमादायान्यथासिद्धिरुक्तानां परिहरन्ति पूर्ववादी उपाधीनामि।

उपहितदिगालंबनत्वे च परस्पराश्रयत्वात् पूर्वादिप्रत्ययबलादुपाध्युपहितदिक्सिद्धिः तत्सिद्धौ च तदालंबन
पूर्वापरादिप्रत्ययसिद्धिरिति लिंगान्तरेणानत्सिद्धौ पूर्वापरादिप्रत्ययवैयर्थ्यात् उपाधीनामादित्यादिगतत्वा
त् पूर्वापरप्रत्ययालंबनवस्तुभिः स्वरूपतः प्रत्यासत्तिमूर्त्तानां संबंधापादकवस्त्वन्तरस्यस्वीकारे दिक्सिद्धिरिति चे

स्य
त्तितथाहि पूर्वादिबुद्धयस्तावत्त दिङ्मात्रविषयाः किं त्विदं पूर्वमिदमपरमिति घटादिवस्तुविषयाः तत्रापि न तत्स्वरूपमात्रविषयाः।
घटस्वरूपव्यतिरेकेप्यपरादिष्वपि विद्यमानत्वात घटस्वरूपस्यैव च पूर्वादिविचित्रव्यवहारानुपपत्तेश्च तस्मात्पदार्थान्तरविशिष्ट
घटादिस्वरूपनिबंधनाः विशेषणानि च मेरुप्रदेशैः सहस्ररश्मिप्रथमसंयोगादयः न च ते घटादिषु समवयंत्यादित्यमेरुनि
ष्ठत्वात् न तत्तेषां घटादिरूपसंक्रामकः कश्चिद्द्रव्यः स च नमूर्त्तवर्गः तस्योभयत्रानुसंतानत्वादाकाशात्मानौ लतिप्रसंगितौ
विशेषगुणवत्तौ च तस्मात्स्वापकं सूर्यसुमेरुराजप्रदेशसंयोगभेदानां स्वसंयुक्तसमवेतानां स्वसंयुक्तवस्त्वन्तरे संक्रामकं तस्य च
दिगितिसंज्ञा कालस्य क्रियासंक्रामकत्वात्ताचेतरेभ्यो भिद्यते एवंविधसंयोगसंक्रामकत्वात्तनयदेवं ततदेवं यथा पृथिव्यादीति तत्सिद्धि

दूषयति नत्वदभिमतेति शंकामत्रापि कालोन्मूलनवदाकाशमात्मानं वारयान्यथासिद्धादिशोप्युन्मूलनं कर्त्तुं विशेषगुणावृत्त्वं च नत्रैवहेतुं न
समाधानं अथापि भवतु नाम भवतः अह्नानुसारेण विशेषगुणरहितमेव व्यापकं किंचित् तथापि त्वत्कल्पितकालतएव न सिद्धेर्नतद्विलक्षणाक
ल्पनेत्यर्थः ननु कालकृतपरापरत्वादिलक्षणो परत्वापरत्वेनावदनुभूयेते अस्ति हि नित्येष्वपि परमाणुषु दिक्कृतपरत्वापरत्वव्यवहारः॥
अनित्येष्वपि कालतस्त्वनित्येष्वेव तथा कालतोऽपरेपि दिक्कृतपरत्वं कालतः परेचदिक्कृतमपरत्वमनन्तत्वदसमवायिकारणसंयोगस्य विलक्षण
स्याश्रयतया दिक्सिद्धिरितिशंकित्वा परिहरति नच कालकृतेतिनायं व्यवहारः परत्वापरत्वकल्पकः किंतर्हि यदर्थस्य यदपेक्षया प्रमातुः संयुक्तसंयोग
बाहुल्यं तत्ततः परं यस्य तु यदपेक्षया प्रमातुः संयुक्तसंयोगाल्पत्वं तत्ततोऽपरमितिताभ्यामेवान्यथासिद्धत्वादित्याह दिक्कल्पनामिति हस्तदंडादीति
व्यवहर्त्तुर्देवदत्तस्य संयुक्तपृथिव्यादिनापि हस्तदंडादिसंयोगाद्दशहस्तेन दंडेन दशदंडो निवर्त्तनमित्यादिशास्त्रोक्तपरिमाणज्ञापकालेषां

नत्वदभिमतकालेनैव तदुपपत्तेः नच कालकृतपरत्वापरत्ववैलक्षण्यादस्य दिक्कृतत्वं दिक्कल्पनामंतरे
णैव व्यवहर्त्तुः स्वेन संयुक्तपृथिव्यादिभिर्हस्तदंडादिसंयोगानामल्पीयस्त्वभूयस्त्वाभ्यामेव विशिष्टपराप
रव्यवहारोपपत्तेः॥

संयुक्तपिण्डापेक्षया अल्पीयस्त्वभूयस्त्वाभ्यामित्यर्थः यत्तु किरणावलीकारेणैव माशंक्योक्तं ननु द
पेक्षया प्रमातर्य्यपि परापरप्रत्ययप्रसंगात् संयोगबाहुल्यादेरविशेषात् भवति हि यावन्त्यध्वनि मत्तो वाराणसी तावन्ति वाराणस्या अहमपि
न तु सा किंचिदपेक्ष्य मत्तः परापरे ति वदहमपि तस्याः परोपरो वेति तदसत् परत्वापरत्वोत्पत्तावप्यस्य प्रसंगस्य तुल्यत्वात् न तथाहि संयो
गाल्पत्वबहुत्वे पिंडवत्प्रमातर्य्यपि समाने इति किमिति तयोः प्रमातर्यनुत्पत्तिः पिंड एव वा किमित्युत्पत्तिः अथ ब्रूयात्कारणशक्तिनिय
मादेव नियमोपपत्तिः भेर्याकाशसंयोगस्योभयाश्रयत्वाविशेषेपि नभसैव शब्दो न भेर्यामिति वदितिसंयुक्तसंयोगाल्पत्वबहुत्वाविशेषे
पि प्रमेय एव परत्वापरत्वे न प्रमातरीति सर्वमुपपन्नमिति तदप्यसत् यद्धि संयुक्तसंयोगाल्पत्वबहुत्वविशेषावच्छिन्नसंयोगाधिकरणत्वेन
प्रतिसंधीयते तत्र परापरत्वव्यवहारः न प्रमातरि तस्य तथा प्रतिसंधीयमानत्वाभावात् यदा तु सोपि तदधिकरणत्वेनानुसंधीयते तदा भवत्येव तत्रा

दिक्व्यवहारः सामान्यसिद्धिः॥

२
वि·प्र·
टी·न·
१३५

यत्तु लीलावतीकारेणोक्तं किं पुनः संयोगस्य भूयस्त्वमल्पत्वं चेत्यादिना तद्दूषणं निषेधति न चाल्पीयस्त्वेति भवतापि ह्यपेक्षाबुद्धिवैषम्यात्तज्जन्ययोरनयोर्वैष-
म्यमभ्युपेयं नेबुद्धिवैषम्यं च संयुक्तसंयोगबहुत्वाल्पत्वलक्षणविषयवैषम्यात् अत्रापि विप्रतिपत्तावुक्तमुत्तरं कालखंडनेन तस्मान्न हि कल्पस्त-
न्निराकरणं च जात्युत्तरमित्यर्थः एवं चिरंतनप्रमाणं दूषितमिदानीमाधुनिकोन्नीतं दिक्कालसाधकानुमानजातमनूद्य निराकरोति यच्चेति अ-
णुत्वे सिद्धसाधनतावारणाय महत्परिमाणसामान्यमित्युक्तं विशेषगुणशून्यं यद्द्रव्यं तदधिकरणायानेकव्यक्तिर्महत्परिमाणानि तद्वृत्तीत्य-
र्थः द्रव्याधिकरणानेकव्यक्तिवृत्तीत्युक्ते गगनात्मघटादिवृत्त्यनेकमहत्परिमाणनिष्ठतासाधनेनार्थान्तरतास्यात् तदर्थं विशेषगुणशून्येत्युक्तं अनेकव्य-

न चाल्पीयस्त्वभूयस्त्वयोः संख्यारूपगुणत्वे परिमाणविशेषत्वे च संयोगाख्यगुणाधिकरणत्वासंभवादनुपपत्तिः भवद्भि-
मतपरत्वापरत्वजनकसन्निकृष्टविप्रकृष्टलक्षणापेक्षाबुद्धिविषयसंयोगाल्पीयस्त्वभूयस्त्वयोरपि तुल्यत्वात् यच्च दिक्कालयोः प्र-
साधनाय प्रमाणमुक्तं लीलावतीकारेण महत्परिमाणसामान्यं विशेषगुणशून्यद्रव्याधिकरणानेकव्यक्तिवृत्ति परिमाणतारतम्यवि-
श्रांतिविषयनिष्ठजातित्वादणुत्ववत् अस्ति हि विशेषगुणशून्यानेकमनोगतानेकाणुपरिमाणनिष्ठताणुत्वजातेः तथा
विवादाध्यासितानि मूर्त्तद्रव्याणि युगपद्विशेषगुणशून्यानेकद्रव्यसंसर्गीणि द्रव्यत्वादात्मवदिति तदयुक्तं अन्तरेणापि

क्तिग्रहणेन च नैधिकरणविशेषगुणशून्यद्रव्यानेकत्वसिद्धौ कालदिशोः (१) दिक्कालौ व्यापकपंचाशद्वर्णद्रव्यप्रसाधनेनार्थान्तरत्वात्॥
सिद्धिः परिमाणवृत्तित्वेन सिद्धसाधनतानिवृत्त्यै द्रव्याधिकरणपदं घटत्वादिनिवृत्त्यै विश्रांत्यादि विशेषणं ज्ञानत्वादिनिवृत्त्यै परिमाणेति दृष्टांते सा-
ध्यप्रसिद्धिं दर्शयति अस्ति हीति विवादाध्यासितेति शरीरेन्द्रियव्यतिरिक्तमूर्त्तद्रव्याणीत्यर्थः द्रव्यसंसर्गीणीत्युक्ते गगनसंसर्गितयार्थान्तर-
नातदर्थमनेकद्रव्येत्युक्तं तथापि घटादिसंसर्गितयार्थान्तरता तदर्थं विशेषगुणशून्येत्युक्तं तथापि क्रमयुक्तसंसर्गितयार्थान्तरता तदर्थं यु-
गपदित्युक्तं तेषां क्रमेणावमुच्यमानानां युगपद्विशेषगुणशून्यताभावात् युगपत्संसर्गीणि वा साध्यं तदालोकान्तरं प्रति स्वमानैर्मनोभिः
क्रमेण संबध्यमानपृथिव्यादिना सिद्धसाधनतानिवृत्त्यर्थं युगपदिति परं बाधपरिहारार्थं विशेषपदं मनोभिः संसर्गेणाचात्मसु साध्यसिद्धिः

एम·
१३४

एतद्दूषणापरतयावशेषैरर्थान्तरत्वेनेत्येतदवतारयति तदयुक्तमित्यादिना अधिगतमिदमपौरुषेयवादे यद्वर्णानां नित्यत्वं
विभुत्वं च न च तेषां विशेषगुणाः सन्ति नादानामन्यधर्मत्वादन्यस्य चाभावादतस्तद्वृत्तिता साधनेनापि विश्रान्तेरर्थान्तरता प्रथमे हेतौ
येपि तत्संसर्गसाधनेनार्थान्तरतेत्यर्थः उभयोरपि दृष्टान्ते साध्यवैकल्यमाह वेदान्तिनं प्रतीति तदेव विवृणोति मनस इति मूर्तत्वस्ये
ति विप्रतिपन्नं विशेषगुणवन्मूर्तत्वात् घटवदित्यनुमानेन मनसो विशेषगुणासिद्धिरित्यर्थः अत्रोपाधिमाशंक्य निरस्यति न चेति
विशेषगुणवत्त्वमन्त्यावयवविभुद्रव्यारंभकत्वन्नास्ति तत्त्वव्याघातादतः साध्याव्यापकत्वादनुपाधिरित्यर्थः उपाध्यन्तरं निरस्यति
न च द्रव्यारंभकेति द्रव्यारंभकेषु वर्तमानाया द्रव्यत्वावान्तरजातिस्तद्वत्त्वं न च मनोगगनमनस्त्वजातिर्द्रव्यारंभकवृत्तिजातिरतो न सा

वेदान्तिनं प्रति दृष्टान्तस्य साध्यविकलत्वाच्च मनसो विशेषगुणशून्यत्वे हि तन्नताणुत्वस्य विशेषगुणविभुद्रव्या-
धिकरणानेकव्यक्तिवृत्तित्वं आत्मनश्च युगपद्विशेषगुणशून्यद्रव्यसंसर्गित्वं च भवेत्तच्च वेदान्तिनं प्रत्यसिद्धं मनसोपि
विशेषगुणवत्त्वात् न च तत्र मानाभावः मूर्तत्वस्यैव तत्त्वात् न त्वविशेषगुणवत्त्वे द्रव्यारंभकत्वमुपाधिः घटादिष्वन्त्यावय
विषु व्यभिचारात् न च द्रव्यारंभकवृत्ति द्रव्यत्वावान्तरजातिमत्त्वमुपाधिरात्माकाशयोर्व्यभिचारात् न च बाह्येन्द्रि
यग्राह्यविशेषगुणवत्त्वं भवदभिमतात्मनि व्यभिचारात् न वाभूतात्मतोरन्यतरत्वमुपाधिः वेदान्तिनं प्रति तमसि

धनव्याप्तिः नाप्यन्त्यावयवविभुसाध्याव्याप्तिः पृथिवीत्वस्योक्तरूपस्य तत्रापि भावादिति भावः तथापि सा- ((साध्याव्याप्तेः॥
ध्याव्याप्तिः आकाशे विशेषगुणवत्त्वेपि द्रव्यत्वावान्तरजातेरभावात् आत्मनि तु विशेषगुणवति तत्सत्त्वेपि द्रव्यारंभकवृत्तित्वाभा
वादित्याह आत्मेति उपाध्यन्तरं दूषयति न चेति अस्ति च तत् गगनेपीति भावः तथापि भवन्मते विशेषगुणवत्त्वेन स्वीकृतात्मनि
साध्याव्याप्तिः तद्गुणानां मानसप्रत्यक्षत्वादित्याह भवदिति अस्तु तर्हि भूतात्मनोरन्यतरत्वं तथा चाकाशात्मनोरपि तदस्त्येवेति तत्राह
न वाभूतेति उपपादितं स्वत्वेन तत्तमोवादे यद्विशेषगुणवत्तां मनसोस्तीति अतः साध्यवत्त्वेपि तस्मिन्न भूतात्मनोरन्यतरत्वमिति साध्या

अत्रश्रुतिमपिप्रमाणयन्विशेषगुणानपितदीयान्निष्टंकतेकामइतिननुकामादिमनएवेत्यत्रनगुणगुणिभावेनयुक्तोघटइति
वत्सामानाधिकरण्यंविवक्षितंकिंतर्ह्यात्मगुणानामेवसतांनिमित्तकारणत्वात्तथायुक्तमितितत्राहनचकामादीनामितितन्नावन्निमित्तका
रणकार्ययोःकुलालोघटइतिसामानाधिकरण्यंदृष्टचरंअथापितच्छमादिनाकस्येतयदिमुख्यबाधकंस्यात्तत्वेतदस्तीत्यर्थःएवंश्रोव
हृन्मात्रनुमानंनिरस्यमानमनोहरीयमनुमानंदूषयतिएतेनेनेतिअत्रघटादिःपक्षःमृदादिद्रव्येणार्थान्तरतानिरासायविशेषगुण।

कामःसंकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिरित्येतत्सर्वंमनएवेतिमनसोविशेषगुणावत्त्वश्रुतेश्चनचकामादीनां।
निमित्तकारणत्वान्मनसस्तथात्वव्यपदेशःमुख्यबाधकाभावात्निमित्तनैमित्तिकत्वमात्रेणसामानाधिकरण्यश्रवणानुप।
पत्तेश्चनहिभवतिकुलालोघटइतिसामानाधिकरण्यंएतेनमानमनोहरप्रयोगोऽप्यपास्तःविवादाध्यासितंकार्यंविशेषगुण
रहितद्रव्याभ्यांजन्यतेकार्यत्वादन्तःकरणद्वयसंयोगवदितितत्रापिदृष्टान्तस्यसाध्यविकलत्वात्विवादाध्यासितंविशेष
गुणरहितद्रव्यैर्जन्यतइतिबहुवचनप्रक्षेपेणापिप्रयोगसंभवादितिरिक्तद्रव्यसाधकतयाभासमानयोगक्षेमत्वाच्चनचदृष्टा
न्तासिद्धिरनेकान्तःकरणाधिकरणापेक्षाबुद्धिजन्यबहुत्वस्यैवदृष्टान्ततोपपत्तेःविवादाध्यासितंविशेषगुणरहितद्रव्याभ्यां
नजन्यतेऽन्तःकरणकार्यत्वादाकाशवदितिसत्प्रतिपक्षत्वाच्च॥

९१ शून्यग्रहणांश्चदृष्टेश्वरेच्छादिभिरर्थान्तरताव्यासेध्यैवद्र
व्यग्रहणंएतेनेत्येतद्धिदूषणानितत्रापीतिकिंचानयैवरीत्याविशेषगुणरहितंदशममपिशक्यसाधनमित्याभासमानयोगक्षेममित्या
हविवादेतिननुविशेषगुणरहितद्रव्यैर्जन्यतइत्यत्रनास्तिदृष्टान्तःनहिबहुभिरन्तःकरणैरेकःसंयोगोजन्यतइतिवैषम्यमुक्तंतेनैवेतितत्रा।
हनचदृष्टान्तेतिअनेकान्तःकरणाधिकरणमपेक्षाबुद्धिजन्यंचयद्बहुत्वंतस्यदृष्टान्ततोपपत्तेरित्यर्थःनचनिमित्तकारणेतिविशेषणेनिस्त
रस्तदनुमानेसाध्यवैकल्यापादानात्सत्प्रतिपक्षतांचाहविवादाध्यासितमिति ॥ ॥

अत्रापितेनोक्तमकार्य्यत्वस्योपाधेरिति दूषयति नचाकार्य्यत्वमिति परत्वापरत्वखंडनेनचपरमाणुपरत्वजनकसंयोगाश्रयोदिगित्या
दीनितन्मुखेनशिवादित्यभिमतानि दिग्लक्षणानिखंडितान्येवएवंकालखंडनप्रस्तावेनदिक्खंडिताकालखंडनस्यतुकारणखंड
नोपयोगमाह तदेवमिति अथकिमिति पृथिव्यादीनिनखंडितानिन खंडितत्वात्तथाहिगंधवतीपृथिवीत्यादीनिगुण द्वारयानि
लक्षणानितानिनिर्गुणत्वाद्द्रव्यमिति वदव्याप्त्याखंडितप्रायाणिपृथिवीत्वादिजातिखंडनेनतत्प्रमाणदूषणेनचगंधसमानाधिकर
णाद्द्रव्यत्वावान्तरजातिमतीपृथिवी स्नेहसमानाधिकरणाद्द्रव्यत्वावान्तरजातिमदुदकमित्यादीनिजातिपुरस्कारेणशिवादित्य
मिश्रप्रभृतिभिरुक्तलक्षितान्यपिनिरस्तानि शब्दस्यचविभुत्वनित्यत्वसाधनात् तदधिकरणतयाकाशानिरुक्तिः सुखादीनांचसा

नचाकार्य्यत्वमुपाधिः वेदांतवादिभिराकाशस्यापिकार्य्यतांगीकारात् तदेवंकालानिरूपणाच्चतत्कृतःपूर्वापरीभावःकार्य्यका
रणभावः भेदाभेदविकल्पानुपपत्तेश्चतथाह्यत्यंतभिन्नयोरश्वमहिषयोरिवनोपादानोपादेयभावःतथात्यंताभेदेपिपूर्वसिद्धसो
पादानत्वादसिद्धस्यचोपादेयत्वात् एकत्रयुगपत्सिद्धत्वासिद्धत्वविरोधादेवतदनुपपत्तेः अस्तुतर्हिभिन्नाभिन्नयोःका
र्य्यकारणभावअत्यंताभेदेभेदेचतदनुपपत्तेर्दर्शितत्वात् सामानाधिकरण्यानुपपत्तेश्चनहिभवतिघटःपटइतिसामानाधिक

क्षिवेद्यत्वस्यवक्ष्यमाणत्वात्सुखादिग्राहकमिंद्रियंमनइतिमनोलक्षणमसिद्धिः ज्ञानरूपत्वसमर्थनात्सुखादीना — मंतःकरणगुणत्वादात्म
ज्ञानाद्याधारआत्मेत्यात्मलक्षणानिरुक्तिरितिखंडितान्येवनवापिद्रव्याणि इदानींकार्य्यकारणभावंप्रकारान्तरेणदूषयतिभेदाभेदेति
भिन्नयोरपिकलशकुलालयोःकार्य्यकारणभावोस्तीत्यतउक्तंनोपादानेति नचात्यंतभिन्नयोरपिसमवायवशादुपादानोपादेयभावइतिवा
च्यंसमवायभावयोरत्यंतभेदेकिमितिमृद्घटयोरेवतमापादयतिनाश्वमहिषयोरित्यत्रनिरुत्तरत्वात् स्वभाववशादितिचेत् प्रमाणा
मवेक्षणीयमन्यथानुपपत्तिरितिचेदन्यथैवोपपत्तेः अत्यंताभेदपक्षेपिविरुद्धधर्माध्यासादसंभवमाह तथेति उभयानुपपत्तिंसमा
धित्सुर्भेदाभेदवादीशंकते अस्तुतर्हीति इतश्चभेदाभेदःकार्य्यकारणानामित्याहसामानाधिकरण्येतितत्वत्यंतभेदेपिकिमितिसामानाधिकरण्यानु

नच भेदेऽप्याधाराधेयभावादुपपद्यत इति वचनीयं कुण्डं दधीत्यपि प्रसंगात् अभेददर्शनमाह नापि घटो घट इतीति एवं भेदे भेदेऽप्यनुप
पद्यमानसामानाधिकरण्यस्य कार्यकारणगुणगुणिजातिव्यक्तिस्थलेषु सद्भावं दर्शयंस्तदुपपादकभेदाभेदमानयति दृश्यते चे
ति उपलक्षणं चैतद्धि शिष्टस्वरूपांशांशिस्थलयोरपि अत्र किं कार्यकारणभावमात्रं भेदाभेदगमकमुपादानोपादेयभावो वा नाद्यः
सलिलादेः कलशस्य तत्प्रसंगात् तथात्वेवाप्यर्थविशेषणत्वात् न द्वितीयः अत्यंतभेदेऽपि तत्संभवादिति दूषयति सिद्धांतीभेदेऽपीति
श्लोकेन अत्यंतभेदेऽप्ययुतसिद्धत्वमादायोपादानोपादेयभावसंभवात् उपादानत्वस्य च दुर्निरूपत्वात्तत्र हेतुः समवायाद्यसंगतेरिति आ

नापि घटो घट इति दृश्यते च मृद्घटः शुक्लः पटो गौः शावलेय इति समानाधिकरण्यं ततो भेदाभेदसिद्धिरिति
चेन्न भेदेऽप्ययुतसिद्धत्वादुपादानत्वसंभवात् तस्यापि दुर्निरूपत्वात्समवायाद्यसंगतेः ६३ अंतरेणापि भेदाभेदौ
जन्यजनकयोरयुतसिद्धतयैवोपादानोपादेयतोपपत्ते भेदाभेदवादिनाप्ययुतसिद्धताया अस्तित्वनियामकत्वेना
वश्याभ्युपेयत्वात् न हि यत्रैव कार्यकारणभावस्तत्रैव भेदाभेदाविति शक्यं कल्पयितुं अनवस्थाभ्युपे-
येवायुतसिद्धिरिति तत्तत्र एवार्थापत्तेरन्यथासिद्धिः ॥ ६ ॥

दिशब्देन वक्ष्यमाणविकल्पदूषणानि संगृह्यंते समवायित्वे सति कारणत्वमित्यादि प्रकारं हि तत् न च तत्संभवति समवायाद्यसं
गतेरिति श्लोकार्थः विवृणोति अन्तरेणापीत्यादिना अयुतसिद्धत्वेऽपि जातिव्यक्त्यादेर्नोपादानोपादेयभाव इत्यत उक्तं जन्यजनक
योरिति नन्वयुतसिद्धिरेवास्माकमसिद्धा समवायानंगीकारात्तत्स्वरूपेणादुर्निरूपत्वाच्चेति तत्राह भेदाभेदेति दुर्निरूपत्वादिति तावदात्मा
नं विस्मृत्याभिहितं किं वा भवन्मते सुनिरूपं समवायस्तु यद्यपि नांगीक्रियते तथापि भेदाभेदनियामकतया युतसिद्धिरावश्यकीया इतरथा

क्रमेणोत्पन्नयोरिति विशेषणमावश्यकं ॥

ननुकार्य्यकारणभावस्यैवनियामकोस्तु किमयुतसिद्ध्येतितत्राह नहियत्रैवेति नित्ययोरप्यात्मात्मत्वयोर्भेदाभेदांगीकारादितिभावः ननु
युतसिद्धत्वसिद्ध्यर्थमेवभेदाभेदोस्तुतत्राहनचेतिभाट्टैरितिजातिव्यक्तिकार्य्यकारणगुणगुणिविशिष्टस्वरूपांशांशिरूपपंचवस्तुस्थले
युहितैर्भेदाभेदांगीक्रियतेनसर्वत्रनचैतेषामन्यतमत्वमाकाशात्मनोरथचायुतसिद्धिरस्तिनित्यत्वेनसर्वगतत्वेनचपृथगाश्रया
श्रितत्वपृथग्गतिमत्त्वलक्षणाद्द्विविधयुतसिद्धेरभावादित्यर्थः तस्यापिदुर्निरूपत्वादित्येतद्धिहृगाणोति उपादानेतिनिमित्तकार
णासमवायिनोर्व्यवच्छेदार्थंसमवायित्वेसतीत्युक्तमाधारत्वंजात्यपेक्षयाप्यस्तितच्चनामत्युपादानत्वमित्यतउक्तंकार्य्याधारत्वं
मितिजन्येनेत्यस्यापीदमेवप्रयोजनंजन्येनघटेनायुतसिद्धत्वंघटादेरप्यस्तितच्चनतदुपादानमित्यतउक्तंजनकत्वमितिकुला

नचान्तरेणाभेदाभेदावयुतसिद्धिरेवनसिद्ध्यतीतिवाच्यम् अत्यंतभिन्नयोरप्यात्माकाशयोर्भाट्टैरपीष्टत्वात् उपादा
नोपादेयभावानिरूपणाच्च तत्किंसमवायित्वेसतिकारणत्वं १ उत कार्य्याधारत्वं २ जन्येनायुतसिद्धत्वेसतिजनकत्वंवा ३ द्र
व्यत्वविशेषितंवा ४ आहोस्वित्कार्य्याकारेणपरिणतत्वं ५ अथवाकार्य्यविभ्रमाधिष्ठानत्वं ६ नाद्यःसमवायस्या
नंगीकरणान्निराकृतत्वाच्च नद्वितीयः कुंडबदरयोराधाराधेयभावेपितद्दर्शनात् स्वजन्याधारत्वंतदितिचेत् न
स्वजन्यघटाद्याधारेकुलालादावतिव्याप्तेराधारानिरुक्तेश्चनतावदिहेतिप्रत्ययविषयत्वंतत्रेतिप्रत्ययाव्याप्तेः॥ जादिनिष्ठस्यैज

न्यग्रहणमज्ञानेच्छादीनामपिपरस्परमिदमस्तीतितद्व्यवच्छेदायविशेषणांक्षिपतिद्रव्यत्वेति सांख्यमतावलंबनेनपंचमःकार्य्य
लक्षणोविभ्रमःतदधिष्ठानत्वंचेतिवेदांतिमतावलंबनेनषष्ठःपक्षःसमवायस्येतियःखलुकार्य्यकारणयोर्भेदाभेदवादीभाट्टस्ते
नसमवायोनांगीक्रियतेऽतस्तद्विशेषितलक्षणंतवासिद्धमित्यर्थः नैयायिकंप्रत्याह निराकृतत्वादितिकार्य्याधारत्वमुपादानत्वमि
त्यतिव्यापकंबदरकार्य्यंप्रत्याधारेपिकुंडेतदुपादानत्वादर्शनादित्याहकुंडबदरयोरितिननुनकार्य्याधारत्वमात्रंलक्षणंकिंतुस्वकार्य्य
प्रत्याधारत्वंनबदराणांकुंडकार्य्यत्वमित्यभिप्रेत्याशंकतेस्वजन्येतितथाप्यतिव्याप्तिःधृतोदकुंभस्यकुंभकारस्यस्वजन्यकुंभाधारत्वेपि

नन्विह गवि गोत्वमिह पटे शौक्ल्यमिह मृदि घट इत्यादौ समवायाश्रय एवाधारस्तद्धि तेषु तु गौणः आधारशब्दप्रयोग इति तत्राह नापि सम
वायित्वमिति न च तत्र गौणता वैपरीत्यस्यापि संभवादिति भावः अस्तु तर्हि संयोगित्वं तथा च कुण्डे बदरमित्यादि संगृहीतमिति तत्राह नापि सं
योगित्वमिति न केवलमव्याप्तिरतिव्याप्तिश्चेत्याह संयोगिनोरिति यदि हि संयोगित्वमात्रमाधारार्थः तदा तदुभयोरपि समानमिति घटे भूतलवद्
रे कुण्डमित्यपि स्यात् न चैवमस्तीत्यर्थः आवश्यकीयमाधारत्वं दूषयति नापि पतनेति न हि निर्गुणानां निष्क्रियाणां च गुणादीनां पतनमस्ति येन

नापि समवायित्वं शशे विषाणाभावः कुण्डे बदरमित्यादावव्याप्तेः नापि संयोगित्वं गुणादौ तदसंभवात् संयोगिनोरुभयोरन्यो
न्याधारत्वप्रसंगाच्च नापि पतनप्रतिबंधकत्वं गुणादावव्याप्तेः अत एव नाधेयापेक्षया महत्परिमाणवत्त्वमपि करतलनिहितमह
त्तरतूलपिण्डादावसंभवाच्च नापि तृतीयः ज्ञानेच्छादीनां परस्परोपादानत्वप्रसंगात् अस्ति हि तत्र जनकस्य ज्ञानजन्येने
च्छादिना युतसिद्धत्वं आत्मैकाश्रयतया पृथगाश्रयित्वलक्षणायुतसिद्ध्यभावात् नापि चतुर्थः व्यर्थविशेष्यत्वापत्तेः न
हि द्रव्यमुपादानमित्यभिहिते ऽस्ति कश्चिदतिप्रसंगः येन जन्येनायुतसिद्धत्वमिति पदान्तरमुपादीयेत नापि पंचमः निरवयवेष्वा
त्माकाशादिष्वव्याप्तेः न ह्यात्माकाशं वा ज्ञानेच्छादिरूपेण शब्दरूपेण वा परिणमते ॥

१ तदाधारता द्रव्यस्य स्यात् गु
णादेश्च गुणत्वाद्याधारतात्वस्यादिति भावः अत एवेति गुणादावसंभवादेव यदि हि गुणस्य गुणत्वादेर्वा परिमाणवत्त्वं स्यात् तर्ह्ये
व तदपेक्षया तदाधारद्रव्यादेर्महत्परिमाणवत्त्वं स्यात् न त्वेतदस्तीत्यर्थः अव्याप्त्यन्तरं चाह करतलेति एवं कार्याधारत्वमिति
पक्षं दूषयित्वा जन्येनायुतसिद्धत्वे सति जनकत्वमिति पक्षं दूषयति नापि तृतीय इति ज्ञानेच्छादीनां लक्षणं वर्तयति अस्ति हीति द्रव्यत्वविशेषि
त्वेति पक्षं दूषयति नापि चतुर्थ इति कार्याकारेण परिणतत्वमिति पक्षं दूषयति नापि पंचम इति ॥

अथ किमित्यात्माज्ञानादिरूपेण आकाशश्च शब्दरूपेण न परिणमत इति तत्राह कार्त्स्न्यैकदेशेति अयमर्थः किमाकाशः सर्वात्मना प-
रिणमत एकदेशेन वा नाद्यः आकाशविनाशेनानित्यतापातात् न विनाशस्तस्यैव शब्दत्वादिति चेन्न किं कारणव्यापारवैयर्थ्यं समर्थयितु-
मध्यवसितोऽसि अभिव्यक्तौ सार्थक्यमिति चेत् सत्यमस्तीयं किंवदन्ती कापिलानां तत्र त्वदभिव्यक्तावपि किमुत्पादकतया कारणाचक्र-
सार्थक्यमभिव्यंजकतया वा आद्ये घट्टकुटीप्रभातायितं द्वितीये त्वनवस्थेति न किंचिदेतत् न चोत्पत्तिप्रतिबंदी अनंगीकारात् एकदेशपरिणा-
मे तु किमवयव एकदेशः किं वान्यत् किंचित् नाद्यः निरवयवत्वात् न द्वितीयः अप्रसिद्धत्वात् भवतु वा यथा तथा तथापि किमेकदेश आकाशाद्
भिन्नोऽभिन्नो वा नाद्यः पूर्वदोषात् न द्वितीयः आकाशस्यापरिणामात् भिन्नाभिन्नं तदिति चेत्स्यं यदि विरोधो न स्यात् विरुद्धं तु तत्।

कार्त्स्न्यैकदेशविकल्पासहत्वात् तन्त्वादीनामपि पटाद्याकारेण गुणकर्माद्याकारेण वा परिणामादर्शनात् न
हि द्रव्यं गुणः कर्म वा भवति तदाश्रयत्वात् नापि षष्ठः प्रपंचसत्यत्ववादिभिरनंगीकारात् तदेवमुपादानोपा-
देयभावानिरूपणात्तदन्यथानुपपत्त्या भेदाभेदसिद्धिः ॥ ९ ॥

अथ विरुद्धौ कौ च न धर्मौ भेदाभेदाभिधानौ रूपरसादिषु मध्ये कयोः कश्चिद्भेदाभेदनाम्नाभिधीयते तथापि पर्यनुयुक्तयोः पक्षयोः कः
परिगृहीतः स्यात् तत्रोभयमिति चेत् तत्किमनिर्वचनीयं हन्त शब्दाकारेणाकाशो विवर्तत इति निरवद्यं निर्वदकिमिति परिणामभावपादुर्भ-
गया भास्करगोत्राभिसारिकया एतेन परिणामपक्षं मत्वा चक्षीत तदेवं कार्त्स्न्यैकदेशविकल्पासहत्वादाकाशादीनां न परिणामः अ-
यच कारणप्रसिद्धिरस्ति शब्दादिप्रतीत्यव्याप्तिरित्यर्थः न केवलं निरवयवेषु परिणामानुपपत्तिः सावयवेष्वपीत्याह तन्त्वादीनाम
पीति तत्रापि हि कार्त्स्न्यपक्षे तन्तुविनाशान्निरूपादानरूपः पटः स्यात् स्यादेकदेशपक्षेऽपि भेदाभेदविकल्पकल्पान्तवानन्निर्मूलनो-
न्मूलनमिति भावः आश्रयाश्रितप्रतीतिविरोधश्चेत्याह न हि द्रव्यमिति द्रव्यं यत्तन्त्वादि तद्गुणः कर्म वा न हि भवतीत्यन्वयः घटादिका-

स्वरूपमिति आश्रितत्वप्रतीतेस्तत्राप्यविशेषात् कार्य्यविभ्रमाधिष्ठानत्वमिति षष्ठं पक्षं दूषयति नापीति यः खलु कार्य्यकारणभाव निर्व
क्तानर्हः स एवानिर्वचनीयवादीति भावः इत्यनुपपत्तौ भेदाभेदसाधनाय कीर्तिते एकोपादानोपादेयभावानुपपत्तिः अपरा तु सामाना-
धिकरण्यानुपपत्तिः तत्र प्रथमं दूषणं प्रसारितमुपसंहृत्य द्वितीयं दूषयति नापीति तत्र भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मि-
न्नर्थे प्रवृत्तिरूपशाब्दसामानाधिकरण्यस्यैकाधिकरणत्वलक्षणार्थिकसामानाधिकरण्यस्य वात्यन्तभेदेऽप्युपपत्तिः श्लोकद्वयेन दर्श-
यति युक्तेः शब्दनिमित्तानामित्यादिना शुक्लपटत्वादीनामेकपटाधिकरणत्वादेव शाब्दसामानाधिकरण्योपपत्तेः शाब्दसामानाधिक-

नापि सामानाधिकरण्यानुपपत्तिः विकल्पासहत्वात् तथा हि किं शाब्दस्य सामानाधिकरण्यस्यानुपपत्तिरुतार्थिकस्य नो-
भयथापि युक्तेः शब्दनिमित्तानामेकाधिकरणत्वतः शाब्दं न तावद् घटने भेदाभेदप्रसाधकम् ॥ ६२ ॥ धर्माणामेकनिष्ठत्वमात्रेणैवोप-
पत्तितः अभेदानुभवाद्यर्थं नैवास्य साधकम् ॥ ६३ ॥ शुक्लः पट इत्यादौ शाब्दसामानाधिकरण्यस्य प्रवृत्तिनिमित्तयोरेकाधि-
करणसंबंधादेवोपपत्तेः धर्मधर्मिभेदाभेदयोरौदासीन्यात् आर्थिकस्यापि धर्मयोरेकाधिकरणतालक्षणस्यातएव
वोपपत्तेः धर्मधर्मिणोरभेदानुभवस्यासंप्रतिपत्तेश्चासाधकत्वात् गुणोऽयं कर्मेदं व्यंजातिर्व्यक्तिरिति समानाधिक-

रण्यं गुणगुण्यादिभेदाभेदप्रसाधकमिति प्रथमश्लोकयोजना तथाऽऽर्थमपि सामानाधिकरण्यमस्य (करण्यानुभवाभावात् ॥ ६ ॥
न साधकं कुतः धर्माणामेकनिष्ठत्वमात्रेणैवोपपत्तितः तथा हि धर्मधर्मिणोस्तावत्सामानाधिकरण्यमेव नास्ति अभेदानुभव इति सामा-
नाधिकरण्यानुभवोऽत्र विवक्षितो न ह्यस्यानुभवो रूपं पट इति वा चालनं पट इति वा तथा धर्मयोरेकाधिकरण्यमेव सामानाधिकरण्यं ना-
म तथा च धर्मधर्मिणोर्भेदेऽपि तत्संबंधादेव तदधिकरणत्वोपपत्तेरिति द्वितीयश्लोकयोजना तत्राद्यं विवृणोति शुक्ल इत्यादिना धर्मधर्मीति ध-
र्मधर्मिणोर्यौ भेदाभेदौ तयोरौदासीन्यादित्यर्थः द्वितीयं विभजते आर्थिकेति अतएवेति धर्मधर्मिसंबंधादेवेत्यर्थः अभेदानुभवाभावादित्यंशं
विवृणोति धर्मेति अत्राप्यभेदानुभवः सामानाधिकरण्यानुभवः असाधकत्वात् भेदाभेदानुभवस्येति शेषः अनुभवाभावमेव विवृणोति गु-

इदानीं भेदाभेद इत्यस्यैव तावदर्थ्याहतः कश्चिदर्थो दुर्भणः कुत्रप्रमाणाविन्तेत्यभिसंधिराह भिन्नेत्यादिना अत्र किं भिन्न इत्यनेन भ
स्वरूपभेदो विवक्षितेऽभिन्न इत्यनेन तदभावः किम्वाभिन्न इत्यनेनान्योन्याभाववत्त्वमभिप्रेयते अभिन्न इति च तदभावः अथवा भि
न्न इति स्वरूपभेदवत्त्वं अभिन्न इति चेतरेतराभावराहित्यमभिधीयते इति नाद्य इत्याह भिन्नशब्देन स्वरूपभेदस्येति तदाहि स्वरू
पत्वमस्वरूपत्वं च भेदाभेदशब्दार्थः स्यात् तच्च विरुद्धं अविरुद्धत्वेपि धर्मिणो पि स्वापेक्षया तथात्वापातात् पटस्यापटश्चेत्यव्यवस्थिति
रेव पदार्थानां स्थिता स्यादिति भावः किंच यदि शौक्ल्य पटयोः स्वरूपभेदो नास्ति तदा शुक्ल इति पदेन यावानर्थोऽभिहितः तावानेव पट इत्य

भिन्नाभिन्नमित्यत्र भिन्नशब्देन स्वरूपभेदस्याभिन्नशब्देन तदभावस्याभिधाने च भावाभावयोर्युगपदेकत्र प
रस्परविरोधेनासंभवात् अभेदे च शुक्लः पट इत्यादिषु द्वितीयवुद्धिव्यपदेशयोः पौनरुक्त्यापतेः न च भेदस्यापि भावात्सा
र्थकता अभेदस्यापि भावे वैयर्थ्यस्यापि संप्रतिपन्नांश इव दुष्परिहरत्वात् हेत्वभावे फलाभावादौत्सर्गिका
हेतुभावे फलभावस्य तदपवादन्यायावलीढत्वात् ॥ ॥

पीतिपटवुद्धेस्तच्छब्दस्य च पौनरुक्त्यं स्यात् वुद्धेश्च पौनरुक्त्यं वैयर्थ्यमेव शब्दस्य च पौनरुक्त्ये सहप्रयोगानुपपत्तिः न च व्याख्यायां मूढप्रबोधनार्थ
मयं सहप्रयोगः नियमेन तुल्यत्वान्यत्रापि प्रयोगात् यदि च शुक्लपदस्य पटएवार्थः तदा शुक्लो घट इत्यत्र घटस्यापि तत्वेन पटघटाद्वैतापातात् सर्वं स
र्वत्रेति जितमस्माभिः ननु भेदोपि धर्मधर्मिणोरस्तीति कथं नैरर्थक्यमिति तत्राह न चेति संप्रतिपन्नांश इवेति पटः पट इत्यत्रेवेत्यर्थः ननू
भयहेतुसद्भावे कोयमाग्रहो वैयर्थ्यं स्यादिति तत्र नैरर्थक्यमेवेति विनिगमनायां हेतुमाह हेत्वभाव इति औत्सर्गिकं खल्विदं यद्धेत्वभावे
फलाभाव इति इतरथा तयोः प्रागभावयोरनादिनोरनिवर्त्यतया नित्यमनुत्पत्तिरेव कार्यस्य स्यात् तस्मात्तदुभयवाधको हेतुभावे फल

पवादः तदिहापि गुणगुणिनां भेदपक्षे गुणज्ञानहेतुसद्भावेऽपि गुणिज्ञानहेत्वभावात्तज्ज्ञानलक्षणफलाभावस्यौत्सर्गिका।
स्याभेदपक्षे गुणज्ञानहेतुरूपगुणिज्ञानहेतुभावाद्गुणिज्ञानलक्षणकार्यभावोऽपवादो बलीयानिति नैरर्थक्यमेवयुक्तमि।
त्यर्थः द्वितीयपक्षे पूर्वमेव दूषणमाह अन्योन्येति समानो ह्यन्योन्याभावतदभावयोरप्येकोपाधौ विरोधः अविरोधे गवाश्वत्व।
योरश्वगोत्वयोश्च घटपटत्वयोः पटघटत्वयोश्चान्येनादृशस्थलेष्वपि भेदाभेदापातान्न जगति विरोधस्योच्छित्तेन च तया प्रमाणभा।
वादनुच्छेद इति वाच्यम् अत्रापि तदसंप्रतिपत्तेः किंच मद्वचनमेवात्र किमिति प्रमाणं न स्यात् अथ विरुद्धार्थत्वादिदमप्रमाणं नाप्र।

अन्योन्याभावतदभावयोर्भिन्नाभिन्नशब्दाभ्यामभिधाने विरोधपौनरुक्त्ये पूर्वोक्त एव पुनरुपावर्तिते ननु भे
दशब्देन स्वरूपभेदस्याभेदशब्देनेतरेतराभावराहित्यस्य वाभिधानाद्विरोध इति चेन्नैवं इतरेतराभावस्यैवोच्छेद
प्रसंगात् स्वरूपभेदे विद्यमानेऽपि तदविरोधितया यदि क्वचिदितरेतरभावः स्यात् न हीतरेतरभावस्यैव निरंकुशप्र
सरत्वेनेतरेतराभावविरहस्य जगति स्यादित्यद्वैतवाद एव भेदाभेदवादिना समर्थितः स्यात् ॥ ॥

णप्रतीतेर्विरोधस्यैवाभावात् एतेन विरुद्धमिति निरस्तं संप्रत्ययोऽप्यप्रमाणपथमवचरतीत्यादि तदपि प्रत्युक्तं मानामेवं ध्येतिव
दभिन्नाभिन्नमित्यपि व्याहतार्थत्वादिति तथान्योन्याभावतद्राहित्ये पूर्ववत् पौनरुक्त्यं चेत्यर्थः तृतीयं शंकते नन्विति तत्र तावत्स्वरूपभेद
स्येतरेतरभावस्य च विरोधोऽस्ति न वा यद्यस्ति तदा स्वरूपभेदसतीतरेतरभावेन न भवितव्यम् गत्यंतराभावादित्यसंभव्येवायं पक्षः अथ ना
स्ति विरोधस्तदा क्वचिदपीतरेतराभावो न स्यात् स्वरूपभेदस्यातत्प्रयोजकत्वे प्रयोजकान्तराणि रूपणादित्यभिप्रेत्य परिहरति मैवमिति एतदे

वादार्थोपसंहारपूर्वकं परिच्छेदार्थमुपसंहरति तदेवमित्यादिना भेदपक्षे अभेदपक्षे भेदाभेदपक्षे च कार्य्यकारणभावस्य दु
र्निरूपत्वात्स्वरूपतश्च कार्य्यकारणभावस्य दुर्निरूपत्वात्सकलोयं कार्य्यकारणरूपद्व्यणुकपरमाण्वात्मकतया भावाभावभेदैश्च प्र
माणप्रमेयभेदैर्न च द्रव्यगुणादिभेदैश्च नैयायिकवैशेषिकप्रभृतितार्किकैः परिकल्पितो द्वैतप्रपंचः शुक्तिरूप्यादिवदनिर्व
नीयाविद्याविलसितः अविद्येति च अविद्याधिष्ठानचैतन्यमप्युपलक्ष्यते तद्विलसितस्तद्विवर्त इति हेतोर्यस्मादेवं अतस्तद् इतियो
च

तदेवं भेदाभेदादिपक्षेषु कार्य्यकारणभावस्य दुर्निरूपत्वात्स्वरूपतोपि विचारागोचरत्वात् अना
द्यविद्यातद्विलसितः सकलोप्ययं प्रपंच इति तद्वाहि प्रत्यक्षादिप्रमाणविरोधाभावाद्वेदान्तवाक्यं
निरपवादमेवाद्वितीये ब्रह्मण्यपरोक्षज्ञानं जनयतीति निरवद्यम् इति श्रीमत्परमहंसपरिव्रा-
जकाचार्य्यज्ञानोत्तमपूज्यपादशिष्यश्रीचित्सुखमुनिविरचितायां तत्त्वप्रदीपिकायां लक्ष
णभंगो नाम द्वितीयः परिच्छेदः समाप्तः ॥

जनाश्च परोक्षेति चोत्तरवादेवी जावापः। भेदो द्रव्यादिषट्कं क्षणनिधनमतं षट् प्रमाणान्यभावो भावः पश्चान्यराणुर्ह्यवयवि
सहितश्चान्ययोगो वियोगः द्वित्वादिर्जातिमानं द्व्यणुकपरिमिता पाकजप्रक्रियाथो हेतुत्वं कालकाष्ठे जनिमदपि भिदाभेदवा-
दो निरस्तः १ इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीप्रत्यक्प्रकाशपूज्यपादशिष्यस्य प्रत्यक्स्वरूपभगवतः कृतौ तत्त्वप्रदीपि
काटीकायां नयनप्रसादिन्यां द्वितीयः परिच्छेदः समाप्तः॥



इति नयनप्रसादिनीटीकासहितायाः तत्त्वप्रदीपिकायां द्वितीयपरिच्छेदः समाप्तः॥

ॐ श्रीगणेशाय नमः किं त्रैलोक्यसरोवरस्य नचिरादुन्निद्रमेकाम्बुजं किं वा योगिमनःसरोरुहवनप्रोद्बोधको भानुमान् किं वा संसृति
संतप्तजनतामोदे सुधादीधितिर्दैवीसौ विविधं विभावितवपुः श्रीसुन्दरः पातु वः १ इति स्मनिर्वैरकथं निरूपितं समस्तवेदान्तवा-
चोभिरद्वयम् अथ स्वतःसिद्धविमुक्तये नये रूपाय विज्ञानशरीरचिन्तनम् २ अनेन च हेतुमल्लक्षणाः परिच्छेदयोः संबन्धोपि
दर्शितः अविरुद्धतया साध्ये वर्धने हि साधनान्वेषणावकाश इति अपरोक्षज्ञानं जनयन्तीत्युक्तममृष्यमाणा वैशेषिकादयो मीमांसका
श्चके चिन्मंडनमिश्रप्रभृतयः प्रत्यवतिष्ठन्ते ननु कथमिति न केवलशब्दत्वहान्याप्रत्यक्षत्वापत्तिर्बाधिका अनुपलब्धिपराहति

श्रीकृष्णाय नमः ननु कथमपरोक्षज्ञानजनकता शब्दस्य तथात्वे परोक्षप्रमितिकरणतया प्रत्यक्षान्तर्भावप्र
संगात् धर्माधर्मप्रतिपादकवाक्येष्वदर्शनाच्च न च दशमस्त्वमसीति वाक्यमुदाहरणं तत्रापि केवलशब्दस्यापरो
क्षज्ञानाजनकत्वादिन्द्रियसन्निकर्षस्यापि दशमशरीरगोचरस्य तत्र भावात् न च सत्यपीन्द्रियसन्निकर्षे तस्यादर्शनात्प
श्चाच्छब्दजनितमेव तस्येति निश्चेतुं शक्यं रत्नतत्त्वाधिगमेपि तथात्वप्रसंगात् तथा हि सत्यपीन्द्रियसन्नि-
कर्षे अनधिगतरत्नतत्त्वपरीक्षाशास्त्रः पुष्परागादिभेदं न प्रत्यक्षतः प्रतिपद्यते अधिगतशास्त्रार्थस्तु तत्त्वं-
प्रतिपद्यते न चैतावता शास्त्रं तत्र प्रत्यक्षप्रमितिजनकमभ्युपेयते यत्तु नरिह केश्चिदुच्यते·॥

श्चेत्याह धर्माधर्मेति ननु यद्यपि ज्योतिष्टोमादिवाक्येष्वदृष्टं तथापि विषयविशेषप्रयुक्तया तत्र तथात्वं किं न स्यात् यथा दशमस्त्व
मसीत्यत्र स च भ्रान्तिविभ्रान्तचेताः परित्यक्तमात्मानं दशमतया वाक्यादेव साक्षात्करोति कश्चिदित्यत्राह न च दशम इति यथा हि·
रत्नतत्त्वादावुपदेशसहितं प्रत्यक्षमेव साक्षात्कारहेतुर्न केवलः शब्दस्तथेहापीत्यर्थः प्राप्ताप्राप्तविवेकेन शब्दस्यैव करणतामाशं-
कारत्नतत्त्वप्रतिबंद्या परिहरति न चेत्यादिना तत्रापि प्राप्ताप्राप्तविवेकसाम्यमाह तथा हीति अनधिगतं रत्नतत्त्वपरीक्षाशास्त्रं येन पुंसा स तथोक्तः

न्यायरत्नदीपावलीकृतामनुमानमुपन्यस्यति विमतमिति ज्योतिष्टोमादिवाक्येवाधासिद्धोः परिहारायविमतमित्युक्तम् तत्त्वमस्या-
दिशब्दजनितज्ञानमित्यर्थः प्रत्यक्षेणार्थान्तरतानिवृत्त्यैशाब्दग्रहणम् अयंघटइतीति अस्तिह्ययंघटइतिशब्दस्यपुरोवर्त्यपरो-
क्षघटविषयत्वं अथचनसाक्षात्कारत्वजातिर्ज्ञानवृत्तित्वात्तस्याइत्यर्थः नन्वपरोक्षविषयत्वादितिहेतोरयमर्थः यज्ज्ञानव्यवधा-
नमन्तरेणातद्विषयत्वमिति नच शब्दस्यतथात्वमस्तितद्विषयज्ञानजननद्वाराहिशब्दादीनामर्थविषयत्वं नच ज्ञानस्यज्ञानजन-
नद्वारा अर्थविषयत्वंतत्कुतोनैकान्तिकतेतिशंकते प्रतिपन्नीतितथाप्यनैकान्तिकमित्याह अयमिति अग्निमत्त्वांशःपरोक्षःपर्वतां-

विमतंशाब्दज्ञानमपरोक्षमपरोक्षविषयत्वात्सुखज्ञानवदितितत्रकिमिदमपरोक्षत्वंशाब्दज्ञानस्यकिंसाक्षात्कार-
त्वजातिमत्त्वमपरोक्षव्यवहारहेतुत्वंवानाद्यः अयंघटइतिशब्देनैकान्तात् प्रतिपत्तिव्यवधानमन्तरेणातद्विषयत्वमप-
रोक्षविषयत्वमितिचेन्न अयंपर्वतोऽग्निमानितिपरोक्षापरोक्षविषयानुमानिकज्ञानेव्यभिचारात् अपरोक्षमात्रविषय-
त्वंविवक्षितमितिचेत् नसुखेच्छायांव्यभिचारात् तज्जनकज्ञानस्यतद्विषयत्वादिच्छायास्तद्विषयत्वमुपचर्यतइति
चेत्तर्ह्येवम् तथाप्यविद्यायांव्यभिचारात् स्वतोऽपरोक्षआत्मैवाविद्यायाआश्रयोविषयश्चेतिभवद्भिरभ्युपगमात् नापि
द्वितीयः अविद्यायामेवव्यभिचारात् तस्याअपरोक्षात्मविषयत्वेपि तद्विपरीतव्यवहारहेतुतयातद्व्यवहारहेतुत्वाभावा-

शोऽपरोक्षः नह्यानुमानिकज्ञानेसाक्षात्त्वजातिरितिभावः ननुपरोक्षाविषयत्वेसत्यपरोक्षविषयत्वंहेतुः नचानुमानिकज्ञानमेव-
मतोनातिव्याप्तिरितिशंकते अपरोक्षमात्रेति तथापिसुखेच्छायांव्यभिचारः तस्याअपरोक्षसुखविषयत्वेपिसाक्षात्त्वानधिकर-
णत्वादित्याह नसुखेच्छायामिति इच्छायाः सविषयत्वमौपचारिकंमुख्यंचविवक्षितमितिशंकतेतज्जनकेतिननुकथमपरोक्षवि-
षयत्वमविद्यायायेनानैकान्तिकतेतितत्राह स्वतइतिभवद्भिरित्येकजीववादिभिरित्यर्थः अपरोक्षव्यवहारहेतुत्वमपरोक्षत्वमितिद्वितीयेपक्षे-
प्यविद्यायांव्यभिचारस्तत्रहेतुसद्भावेपिसाध्याभावादित्याह नापिद्वितीय इत्यादिना ॥ ॥

३
वि·प्र·
टी·न·
२

नन्वपरोक्षविषयत्वादिति हेतोरयमर्थः यदपरोक्षव्यवहारहेतुत्वादिति तथा च नाविद्यायां विपरीतव्यवहारजनकायामनैकान्त्यमिति शंकते अपरोक्षेति परिहरति न साध्येति सत्प्रतिपक्षं चेदमनुमानमित्याह प्रतिप्रयोगेति ज्योतिष्टोमादिवाक्येष्वसिद्धसाधनतापरिहाराय विवादेति विशेषणं वा धसाध्यवैकल्ययोः परिहारायापरोक्षेति विशेषणम् साक्षादिति अत्र किंबाधकवशाच्छब्दस्यापरोक्षज्ञानजनकत्वं नेष्यतेऽदर्शनाद्धानाद्यः तदसिद्धेः न तावत्प्रत्यक्षान्तर्भावो बाधकः। न हि साक्षात्कारिज्ञानहेतुतामात्रेण प्रत्यक्षत्वं संभवति शब्दव्यतिरिक्तत्वे सतीति तादृशस्य तत्प्रयोजकत्वात्॥

अपरोक्षव्यवहारहेतुत्वमेव हेतुरिति चेन्न साध्याविशिष्टत्वप्रसंगात् प्रतिप्रयोगसंभवाच्च विवादाध्यासितः शब्दः अपरोक्षज्ञानजनको न भवति शब्दत्वात् ज्योतिष्टोमादिवाक्यवदिति अत्रोच्यते साक्षात्कारणहेतोरप्यप्रत्यक्षत्वसंभवात् दशमस्त्वमसीत्यादौ शब्दादेव तदुद्भवात् १ यत्तावदुक्तमपरोक्षप्रमितिकरणत्वे प्रत्यक्षान्तर्भावः स्यादिति तत्र ब्रूमः अभ्युपगम्यते हि परेणापि योगिमनसो बाह्यविषयापरोक्षप्रमितिकरणता तथापि न बाह्यप्रत्यक्षान्तर्भावस्तस्याभ्युपेयते एवं शब्दस्यापरोक्षप्रमितिजनकत्वेपि प्रत्यक्षान्तर्भावो मा भूत् अथ तत्र बाह्यप्रत्यक्षान्तर्भावे चक्षुरादीनामन्यतमत्वं योगिमनोन्यत्वे सति बाह्यप्रत्यक्षप्रमितिकरणत्वं वा प्रयोजकं हं नेहापि न हि सतोपरोक्षब्रह्मात्मविषयशब्दान्यत्वे सत्यपरोक्षप्रमितिकरणत्वं प्रत्यक्षान्तर्भावे प्रयोजकमस्तु सिद्धे शब्दस्यापरोक्षप्रमितिकरणत्वे तद्व्यावृत्त्यर्थं विशेषणं युक्तं तदेव तु कथमिति चेत् दशमस्त्वमसीत्या

ननु दृष्टे शब्दस्य तद्धेतुत्वे प्रयोजकसंकोचो युक्तस्तदेव कथमिति तत्राह दशमइति ननु तत्रापीन्द्रि ((दिवाक्येषु दर्शनादिति ब्रूमः॥ यमेव करणमित्युक्तं तत्राह शब्दादेवेति श्लोकं विवृणोति यत्तावदित्यादिना अत्र प्रत्यक्षविशेषप्रयोजके प्रतिबन्दीं गृह्णाति अभ्युपगम्यते हीति विशेषणं दर्शयन्नाभासतां प्रतिबन्द्याः शंकते अथ तत्रेति अनीश्वरप्रत्यक्षेषु चेदं प्रयोजकगवेषणमिति द्रष्टव्यम् नायं विशेषः प्रकृतेप्येवं शब्दसंकोचत्वादिति परिहरति हंतेति उत्तरार्द्धस्य शंकामाह सिद्धइति एतत्परिहारहेतुत्वेन तृतीयपादमवतारयति दशमइति॥६॥

राम·
२

चतुर्थपादस्य शंकां दर्शयति ननु तत्रापीति तत्र किं शब्दः करणं इन्द्रियं तु सहकारीत्यभिधीयते किं वा गुडजिह्विकयेन्द्रियस्यै
व करणत्वं शब्दः सहकारीत्यभिधित्सितं आद्यप्रकृते व्यस्यैवेन्द्रियं सहायमित्याह अत्रापीति तथा च शब्दस्य करणत्वं तव्या
हतमिति भावः द्वितीयं शंकते ननु तत्रेति तदेतद्विनिगमनेन दूषयति न शब्द एवेति विनिगमनायां शब्द एव कारणमि
ति निर्णयहेत्वर्थः हेतुं दर्शयति क्वचिदिति लोचनविरहिणः स लोचनस्यापि गाढांधकारनिरुद्धतया अव्यापृतलोचनस्य श
ब्दादेवापरोक्षज्ञानदर्शनमेव नियामकमित्यर्थः उपलक्षणं चैतत् स्पर्शनव्यापाराभावस्यापि भवत्वेवं दशमस्त्वमसीत्यादौ प्रकृ

ननु तत्रापींद्रियसहितस्यैव तद्धेतुत्वं न केवलस्येत्युक्तमिति चेत् अत्रापि तर्हि मनःसहायस्यैव शब्दस्यापरोक्षप्रमि
ति हेतुतास्तु ननु तत्रेन्द्रियस्यैव करणत्वं शब्दस्य तु सहकारितामात्रमिति चेन्न शब्द एव करणमिन्द्रियं सहकारीति
वैपरीत्यमेव कुतो न स्यात् अन्वयव्यतिरेकयोरुभयत्राविशिष्टत्वात् तथापि विनिगमनायां को हेतुरिति चेत् क्वचिद्दृष्ट-
त्वमेतमसि क्वचिच्च लोचनविरहिणोपि वाक्याद्दशमोऽसीत्यपरोक्षप्रमितिदर्शनमेवेति वदामः भवत्वेवं तथापि-
ब्रह्मसाक्षात्कारे करणं मन एव मनसैवेदमाप्तव्यमित्यादिश्रुतेः यन्मनसा न मनुते अप्राप्य मनसा सहेत्यादिश्रुतेश्चा
नधिकृतमनोविषयत्वादिति चेन्नैवम् नह्येत्यादिश्रुतेः क्वापि मनसः तदयोगतः ॥ ॥

नैतु नयुक्तं श्रुतिविरोधादिति शंकते भवत्वेवमिति आदिशब्देन हृदा मनीषया मनसाभिक्लृप्तः दृश्यते त्वग्र्यया बुद्ध्येत्यादिश्रुतयो गृह्यन्ते ननु
यन्मनसा न मनुत इत्यादिषु मनसापुरुषो यद्ब्रह्म न मनुते तथा वाचो मनसा सहाप्राप्य यतो निवर्तन्त इति मनोगम्यत्वमपि निषिद्धं तत्कथं मन
एव करणमिति तत्राह यन्मनसेति अनधिकृतं मनः असंस्कृतमनः सिद्धान्ती परिहरति नैवमिति तद्ब्रह्म विजिज्ञासस्व विद्यादिश्रुतेस्तावदुपदेशमा
त्रादपरोक्षज्ञानजन्मावसीयते न चैताः श्रुतयो मनः प्रतिसहायतामुपदेशस्य दर्शयंतीति न तु करणतामिति युक्तं मनसः क्वचिदपि साक्षात्कारहेतु

चि·प्र· टी·न·
३

यत्तु शब्दत्वादित्यनुमानमुक्तं तत्राह शब्दत्वेति उक्तश्रुतिविरुद्धतया कालात्ययापदिष्टत्वात् तत्त्वमसीत्यादौ व्यभिचाराच्च शब्दत्वादित्यनुमितेरनुत्थितेरित्यर्थः श्लोकं विवृणोति तद्धास्येति अस्याचार्यस्योपदेशेन तदुपदिश्यमानं ब्रह्म विजिज्ञौ विशेषेण विज्ञानवान् शिष्य इत्यर्थः तमसः शोकादिकारणाज्ञानस्य पारं अन्तं निरवद्यं ब्रह्म दर्शयति अदर्शयदित्यर्थः मनननिदिध्यासनविधानत्वेन श्रवणं न साक्षात्कारहेतुरित्याह अन्यथेति इतोपि न श्रवणरूपोपदेशमात्रात्साक्षात्कारोत्पत्तिरित्याह श्रुतश्चेति न

शब्दत्वानुमितेर्वाधाद्व्यभिचारादनुत्थितेः २ तद्धास्य विजिज्ञौ तमसः पारं दर्शयतीति चोपदेशमात्राद्वापरोक्षप्रमित्युपपत्तिप्रतिपादनात् नन्वेतानि वचनान्यागमाचार्योपदेशयोर्न साक्षात्कारहेतुतां प्रतिपादयन्ति साक्षात्कारहेतोर्मनसः सहायतां प्रतिपादनपरत्वेनाप्युपपत्तेः अन्यथा श्रवणोत्तरकालयोर्मनननिदिध्यासनयोर्विधानानर्थक्यात् श्रवणेनैव साक्षात्कारोत्पत्तेः श्रुतवेदान्तानामपि पूर्ववत्संसारानुवृत्तिदर्शनाच्चेति चेत् मैवमसंभावनाविपरीतभावनाख्यस्य चित्तविक्षेपलक्षणस्य च प्रतिबन्धस्य निरासद्वारेण मनननिदिध्यासनयोः फलोपकार्यङ्गतयापि श्रवणं प्रति विधानोपपत्तेः पूर्ववत्संसारित्वोपलब्धेश्च प्रतिबद्धविज्ञानपुरुषविषयत्वात् मनसैवेदमाप्तव्यमित्यादिश्रुतेश्चित्तैकाग्र्यस्याङ्गताप्रतिपादनपरत्वात् ॥ ६ ॥

ल

अत्र तावच्छ्रवणं प्रति फलोपकार्यङ्गतयोपयोगं मनननिदिध्यासनयोर्दर्शयति सिद्धान्ती मैवमित्यादिना यद्यपि चित्तगतमललक्षणप्रतिबंधो यज्ञादिभिः शुद्ध्याधायकैर्निवारितः तथापि दृष्टस्य विक्षेपलक्षणप्रतिबंधस्य ताभ्यां निरासः अनुयाजादिवच्च फलोपकार्यङ्गतयोत्तरकालत्वमपि न विरुध्यत इति भावः अनुपपत्त्यन्तरं परिहरति पूर्ववदिति न हि प्रतिबन्धे सति कार्यानुत्पादकत्वं कारणानां विहन्ति उक्तं च सूत्रकृता ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनादितीति भावः ॥ ६ ॥

राम·
३

पातुश्रुतिर्मनसः साक्षात्कारकरणत्वे प्रमाणमुक्तानामन्यथयति मनसैवेति यत्तु तदृष्ट्यादिश्रुतीनामुपदेशस्य मनः सहायता प्रतिपादकतया
प्युपपत्तेरितितत्राह मनसश्चेति अदृष्टचरत्वेति श्रुत्यादिष्विति शेषः बाधकान्तरं चाह तथात्वइति इदानींत्वापिमनसस्तद्योगतइत्येतद्धि दृ
गोनिसुखादीनामितिएतेनसाक्षात्कारहेतुतयाकॢप्तस्यमनसः संभवे शब्दस्य तत्कल्पनानुपपत्तेरिति वाचस्पतिमिश्रैरुदीरितमपोदितंमन्तव्यम्
ननुकथं साक्षात्कारहेतुत्वासंप्रतिपत्तिर्यावना भावनापरिपाकसहकृतमनसोऽदृष्टं गरुडादिसाक्षात्कारहेतुत्वमितितत्राह भावनेति किंनहि

मनसश्चनित्यशुद्धबुद्धमुक्तस्वभावब्रह्मात्मसाक्षात्कारहेतुत्वस्यादृष्टचरतया तत्रशब्दस्यसहकारित्वकल्पनानुपपत्तेः तथात्वेश्चव ।
णादीनामेववैयर्थ्यप्रसंगात् सुखादीनां साक्षिवेद्यत्वादात्मनश्चस्वयंप्रकाशत्वात्मनसः क्वचिदपिसाक्षात्कारहेतुत्वासंप्रतिप
त्तेः भावनासहायस्यतुमनसो गरुडादिसाक्षात्कारप्रमित्यनुत्पादकत्वात् तदपरोक्षस्य च विधुरपरिभावितकामिनीसाक्षात्कार
वद्विभ्रमत्वात् अप्रमारूपसाक्षात्कारस्यापिसाक्षिरूपतया मानसत्वाभावात् इह च भिद्यते हृदयग्रंथिश्छिद्यंते सर्वसंशयाः
तमसः पारं दर्शयति भूयश्चान्ते विश्वमायानिवृत्तिः तरति शोकमात्मविद्योऽस्माकं अविद्यायाः परं पारं तारयसि मामेव
ये प्रपद्यंते मायामेतां तरंति ते तरत्यविद्यां विततामित्यादिश्रुतिस्मृतिषु ब्रह्मविद्याया एवाविद्यानिवर्तकत्वश्रवणात् पा
रिशेष्यात्तत्कारणं वेदान्तवाक्यमिति निश्चीयते ॥

तदित्यत आह तदपरोक्षेति पूर्वं साक्षात्कारहेतुत्वमंगीकृत्य प्रमितिहेतुत्वं नास्ति
इत्युक्तं इदानीं तदपि नमनोजन्यमित्याह अप्रमेति एतेनाप्रमारूपसाक्षात्कारहेतोर्मनसः क्वचित्प्रमाहेतुत्वेनापि भवितव्यं नयनादि
वदिति पर्यनुयोगोऽपि परास्तः प्रकृतेतस्थले च प्रमारूपसाक्षात्कार एवाविद्यानिवृत्तिस्समः श्रुतिभिरवगम्यते तत्र च मनसः करण
त्वनिषेधात्करणान्तरानिरूपणाच्च वेदान्तवाक्यमेव करणमित्याह इहचेत्यादिना अथवात्रापिसाक्षिरूप एव साक्षात्कारोऽविद्या
निवर्तकः अन्तःकरणत्वेन शब्दकल्पनमपिमनोवदेवायुक्तमितितत्राह इहचेति मामेवतरत्यविद्यामितिस्मृतीशोककारणविद्या

३ चि॰प्र॰ टी॰न॰ ५

वेदादेव परमेश्वरज्ञानमित्यत्र साक्षादेव श्रुतिरस्तीत्याह श्रूयते चेति तं बृहन्तं अपरिच्छिन्नं परमेश्वरं अवेदवित् अवेदज्ञः पुरुषो न मनुते। अपि तु वेदज्ञ एव जानातीत्यर्थः अत्र च वेदशब्देन तदेकदेशो वेदान्तो विवक्षितः अथवा सप्रपंचनिष्प्रपंचप्रतिपादकतया सर्व एव विवक्षिताः। उपनिषत्स्वेव वेद्यत इत्यौपनिषदः वेदान्तजनिते विज्ञाने वेदान्तविज्ञाने ननु तत्र साक्षात्कारः कथं लभ्यते तेनापि विज्ञानमित्युपसर्गबलात् तस्य विशेषेण ज्ञानमिति निश्चयमात्रपर्यवसितत्वादिति तत्राह अत्रेति चकारस्तूपपत्तेरुपसर्गसामर्थ्यं समुच्चिनोति तां चोपपत्तिं वक्ष्यति उत्तरार्द्धं विवृणोति यत्तु नरिति दूषणान्तरं चानुमानस्य श्लोकेनाह प्रतिप्रयोगेति अपरोक्षत्वमित्यादिप्रतिप्रयोगसंभ

श्रूयते च नावेदविन्मनुते तं बृहन्तं तं त्वौपनिषदं पुरुषं पृच्छामि वेदान्तविज्ञानसुनिश्चितार्था इति अत्र हि वेदान्तवाक्यजन्यज्ञानस्य विज्ञानमिति विशेषणेन विशेषविषयत्वप्रतिपादनात् निश्चयहेतुत्वे सिद्धेऽपि सुशब्दविशेषणेनापरोक्षनिश्चयहेतुत्वप्रतिपादनाद्वाऽयमर्थो निश्चीयते यत्तु नः शब्दत्वादित्यनुमानं तच्छ्रुतिविरुद्धतया कालात्ययापदिष्टं दृशमस्त्वमसीत्यादिवाक्ये नैकान्तं च प्रतिप्रयोगयोगाच्च विपक्षे बाधसंभवात् तस्याभाससमानत्वाच्छब्दादेर्वापरोक्षधीः ३ प्रतिप्रयोगश्च अपरोक्षत्वं तत्त्वमसीत्यादिवाक्यजन्यज्ञानवृत्ति अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात् ज्ञानत्ववत् न च परोक्षत्वं तद्वृत्ति परोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वादिति सप्रतिसाधनतासिद्ध

साधनत्वात्॥

वात् ननु परोक्षत्वस्याग्निहोत्रादिवाक्यजन्यज्ञानवृत्तित्वमप्येवं शक्यानुमानमित्याभाससमानतेति तत्राह तस्याभाससमानत्वादिति तत्र हेतुः विपक्षे बाधसंभवादिति श्लोकं विवृणोति प्रतिप्रयोगश्चेति ज्ञानवृत्तीत्युक्ते प्रत्यक्षवृत्तितया अर्थान्तरतानदर्थं वाक्यजन्यज्ञानवृत्तीत्युक्तं तथापि विवक्षितासिद्धिः वाक्यान्तरसाधारण्यस्योपपत्तेरित्यत उक्तं तत्त्वमस्यादीति असिद्धिनिवृत्त्यर्थं हेतावपरोक्षग्रहणं सविकल्पकत्वादिना वेदान्तवाक्यजन्यज्ञाननिष्ठे व्यभिचारनिरासार्थमत्यन्ताभावग्रहणम् द्वितीयेऽपि शब्दादृत्यनुमितित्वादिनिवृत्त्यर्थमत्यन्ताभावग्र

राम॰ ५

सिद्धसाधनतामेव विवृणोति इष्यत इति अथ सूत्राङ्कवदभिमतज्ञानवृत्तित्वमनुमेयमिति तत्राह तद्धास्येति तस्याभाससमानत्वा
दित्यस्याशंकांपठति नचापरोक्षत्वमिति विपक्षेबाधकमेव विकल्पयति किंवाकेत्यादिना यदिह्यपरोक्षज्ञानजनकत्वमभवेत्तर्हि
प्रमाणंस्यादितिनावत्तबाधकं अनुमानेव्यभिचारादित्याह अनुमानेति विपक्षेबाधसंभवादित्येतद्विवृणोति इहत्विति श्रूयतांना

इष्यते हि तस्यासंभावनाविपरीतभावनाप्रतिबद्धान्तःकरणोपहृते परोक्षज्ञानजनकत्वम् तद्धास्य विजिज्ञा
सितिश्रुतिविरुद्धतयाकालान्तरयापदिष्टत्वाच्च नचापरोक्षत्वमग्निहोत्रादिवाक्यजन्यज्ञानवृत्तिः अपरोक्षज्ञानति
ष्ठान्यत्ताभावात्प्रतियोगित्वात् ज्ञानत्ववदित्याभाससमानयोगक्षेमता विपक्षेबाधकतर्काभावेनतस्याप्रयोजकत्वा
त् किंवाक्याप्रामाण्यानुपपत्तिर्बाधिका उतानुष्ठानानुपपत्तिः स्वर्गादिफलासिद्धिर्वा नाद्यः अनुमानादिवत्प्रामाण्यो
पपत्तेः नद्वितीयः परोक्षनिश्चयादप्यनुष्ठानसिद्धेः नतृतीयः अनुष्ठानादेव फलसिद्धेः इह त्वात्मविज्ञानस्य मो
क्षसाधनत्वश्रुत्यन्यथानुपपत्तिरेव बाधिका तथाहि ब्रह्मविदाप्नोति परं ब्रह्मवेद ब्रह्मैव भवति तरति शोकमा
त्मविदिति वेदान्तवाक्यजनितात्मविज्ञानान्मोक्षः श्रूयते स च सविलासाज्ञाननिवृत्तिलक्षणः संसारस्य दुर्नि
रूपत्वेनाविद्यारूपत्वात् तस्य चाहं कर्त्ता भोक्तेत्याद्यपरोक्षविभ्रमलक्षणास्यपरोक्षज्ञानान्निवृत्त्यनुपपत्तेः॥ ९ ॥

मतः किमितितत्राह सचेति यथाचाज्ञाननिवृत्तिर्मोक्षः तथाचतुर्थपरिच्छेदे वक्ष्यते ननु संसारनिवृत्तिर्मोक्षः किमिदमुच्यते
अविद्यानिवृत्तिरितितत्राह संसारस्येति तथापिवाक्यजन्यज्ञानस्यापरोक्षत्वं विना किमनुपपन्नं तत्राह तस्य चेति दिङ्मोहादौ तथा
दर्शनादितिभावः एतेनयोपपत्तिर्वक्ष्यतीत्युक्तासापिप्रदर्शिता॥ ॥

३ वि·प्र· टी·न· ५

नन्वपरोक्षज्ञानमपि मनसैवोत्पद्यतामिति तत्राह ब्रह्मणीति प्रत्यक्षेत्यपरोक्षज्ञानं विवक्षितं वादार्थमुपसंहरंश्चतुर्थपादं व्याचष्टे तस्मा
दिति ज्ञानात्कैवल्यमित्युक्तमसहमानः कर्ममीमांसकः आक्षिपति ननु कथमिति ननु कथमात्मज्ञानस्य कर्मशेषत्वं तत्र बोधकप्रमाणाभावात्
न ह्यात्मज्ञानेन कर्म कुर्यादिति काचिच्छ्रुतिरस्ति विनियोक्त्री नापि लिङ्गमसमर्थत्वात् नापि वाक्यं पदद्वयसमभिव्याहाराभावात् नापि प्रक
रणं साकांक्षविधिसन्निध्यभावात् नापि स्थानं कर्मसन्निधावपठ्यमानत्वात् नापि समाख्या संज्ञासाम्याभावात् ततः कथं कर्मशेषत्वमिति तत्रा
ह देहव्यतिरिक्तेति यद्यपि श्रुत्यादीनि न संति तथापि सामर्थ्यलक्षणमस्ति लिंगं विनियोजकं भस्मीभूयमानदेहस्य पारलौकिकफलोपभो
गासंभवादिति भावः ननु मोक्षाख्यफलमात्मज्ञानस्य श्रूयते ततः श्रुताधिकारस्य कथमन्यशेषत्वमिति तत्राह फलश्रुतेरिति यथा हि यस्य

अश्मशाणि च सकलकरणागोचरे प्रमाणान्तरेणाप्रत्यक्षज्ञानानुत्पत्तेर्वाक्याच्चापरोक्षज्ञानानुत्पत्तेर्वा निर्मोक्षः स्यादिति वि
पक्षबाधकतर्कसंभवात्राभासमानतानुमानस्य तस्माच्छाब्दादेवापरोक्षज्ञानात् कैवल्यमिति सकलमनाविलं ननु कथं ज्ञा
नात्कैवल्यं तस्य स्वर्गादिफलकर्मशेषतया स्वतन्त्रफलसाधनत्वाभावात् देहव्यतिरिक्तात्मतत्त्वविज्ञानव्यतिरेकेण पारलौकि
ककर्मणि प्रवृत्त्ययोगात् फलश्रुतेश्चापापश्लोकश्रवणवदर्थवादत्वात् तथा चाहुः आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चो

पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति यस्य खादिरः स्रुवो भवति छंदसामेव ''इति न कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य तस्यैते॥
रसेनावद्यतीत्यादौ पर्णमयीत्वाद्याश्रित्य श्रूयमाणापापश्लोकाद्यश्रवणमर्थवादः तत्कस्य हेतोः परार्थत्वात् नह्यत्र साक्षात्फलश्रवणमस्ति
कामशिरस्कत्वाभावात् कीर्तनमात्रं ह्येतत् तथा च तत्रित्यत्र वह्निपरिणतव्यम् न च स्वशेषिफलेनैव निराकांक्षपरिणामयितायाः फलान्त॥
रापेक्षास्ति पदार्थविपरिणामत्वं न च वाक्यं क्रतुसंबंधे बोधनपरमपि भवति तस्मादर्थवाद एवैतत्प्रतिबद्धफलश्रवणं तथेहापि स्वशे॥
षिकर्मफलेनैव निराकांक्षस्यात्मज्ञानस्य न ब्रह्मैव भवतीत्यादिवर्तमानोपदेशाविपरिणामापेक्षेत्यर्थः तथाह परमर्षिः द्रव्यगुणसंस्कार
कर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादिति अत्र वार्त्तिककारसंमतिमप्याह तथा चाहुरिति अत्रचोदितत्वे हेतुः कर्मेति॥ ६॥

राम· ५

फलान्तरश्रवणस्य गतिमाह विज्ञानेति न स्वर्गादेरिति स्वर्गादेः सकाशात्फलान्तरमपि नास्तीत्यर्थः स्यादेतत् द्विविधं ह्यात्मज्ञा
नमेकं स्थूलदेहमात्रव्यतिरिक्ततयाऽपरं सूक्ष्मदेहतत्कारणाविद्यातिरिक्ततया तत्र प्रथमं कर्माङ्गं भवति इतरत्तु न तथा अनुपयो
गात् प्रत्युताधिकारविरोधश्च एवं नाहं भोक्तेत्यभिमन्यमानः कथं भोक्ता स्यात् नाहं कर्तेत्यभिमन्यमानो वा कथं कर्ता स्यादिति शंकते देह
व्यतिरिक्तेति अशनायाद्यतीत्यादिवाक्येन ब्राह्मण्यादिजातिराहित्यं गृह्यते तेन न चाधिकारान्वयः प्रतिषिध्यते तत्रानुपयोगं परिहरति आत्मावे
क्षणेति दृष्टोपयोगाभावेऽप्यदृष्टोपयोगोऽस्ति शास्त्रैकगम्यत्वादस्येत्यर्थः अधिकारविरोधं परिहरति नचाधिकारेति यथाहि तथाविधाभिमाने।

विज्ञाने चास्य पारार्थ्येऽपि नाम फलश्रुतिः सार्थवादी भवेदेव न स्वर्गादेः फलान्तरमिति देहव्यतिरिक्तात्मज्ञानस्य कर्मप्र
वृत्त्युपयोगित्वेऽप्यशनायाद्यतीतब्रह्मविज्ञानस्य न तत्कर्मत्वमनुपयोगादधिकारविरोधाच्चेति चेन्नैवं आत्मावेक्षणाद्धि
प्रोक्षणादिवददृष्टद्वारेणोपपत्तेः नचाधिकारविरोधः तथाभूतब्रह्मविदामपि यमनियमादौ प्रवृत्तिवत्कर्मप्रवृत्त्यविरो-
धात् जनकोद्दालकप्रभृतीनां तथाभूतानामपि कर्मणि प्रवृत्तिदर्शनाच्चेति चेत् अत्रोच्यते अभावाच्छ्रुतिलिङ्गादेरुपयोग-
निरूपणात् अधिकारविरोधाच्च कर्माङ्गतात्मतत्त्वधीः ४ न तावदैन्द्र्या गार्हपत्यमुपतिष्ठत इतिवदात्मविज्ञानस्य कर्माङ्गत्वे श्रुतिर् ॥

यमादौ प्रवृत्तिर्विहितत्वात्तथा कर्मण्यपि विहितत्वादेव प्रवर्त्तितव्यं शास्त्रेण च तथाविधाभिमाने विद्यमानेऽपि प्रवृत्तिरुपदिश्येत को विरोधः प्र
त्युत प्रत्यवायस्य च तदकरणेऽस्मादिति भावः अस्ति चात्र लिङ्गं यदात्मज्ञाने विद्यमानेऽपि कर्मप्रवृत्तिर्न विरुध्यते इत्याह जनकेति सिद्धान्ती समाधत्ते
अत्रेति आद्यपादं विवृणोति न तावदित्यादिना यथाहि ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यैन्द्र्याः न कदाचन स्तरीरसीन्द्र इत्यृचो गार्हपत्योपस्थाने तृतीय
याविनियोगः किंचित्प्रति शेषत्वं तृतीययावगम्यते तच्च किंचिदिति अपेक्षायां गार्हपत्यमिति द्वितीयया किं
चित्प्रति शेषित्वं गार्हपत्यस्य प्रतीयते ऐन्द्रीपदेन च शेषविशेषः समर्प्यते अतएव वचनवाक्यगम्यत्वशंकापि न तथेहात्मज्ञानस्य कर्मशेषत्वबोधिका

ननुयदेवविद्ययाकरोतिश्रद्धयाऽऽस्तिक्यबुद्ध्याउपनिषदारहस्यविज्ञानेनचकरोतीतिविद्यायाःकर्मण्यस्तिविनियोगइतितत्राह
नचेतिअत्रतावत्सर्वविद्यानांसर्वकर्मसुविनियोगोनयथाश्रुतिप्रतिपिपादयिषितःअशक्यत्वात्तस्माद्योग्यविषयेसंकुचंतीश्रुतिःप्रकरणाम
नुरुध्योद्गीथविद्याविषयतयाचतिष्ठतेतेननात्मविद्यामास्कन्दतीत्यर्थः एतदेवाक्षेपसमाधानाभ्यांदर्शयति श्रद्धादिवदित्यादिनायथा
स्वविशेषितश्रद्धामात्रस्यसर्वकर्मांगत्वमेवंविद्यामात्रस्यापिकर्ममात्रशेषताकिन्नस्यादित्यर्थः तदंगत्वेतिसाविद्याअंगंयस्योपासनानु
ष्ठानस्यतत्तदंगत्वात्तस्यतदंगता अत्रापिहितश्रद्धामात्रमुपयोगिनहिकारीरीश्रद्धाज्योतिष्टोमोपयोगिनीतस्माद्योग्यतावशेनविनियोक्त

नचयदेवविद्ययाकरोतिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीतिश्रुतिःतस्याःप्रकृतोद्गीथविद्याविषय।
त्वात् श्रद्धादिवत्सार्वत्रिकंकिन्नस्यादितिचेत् तथाप्युपासनानुष्ठानस्यैवतदंगतास्तुउपासनाप्रकरणोपा।
दानात् नापिबर्हिर्देवसदनंदामीतिवत्तत्सामर्थ्यलक्षणंलिंगमस्तितचोद्दालकादीनांकर्मणासहात्मविज्ञा
नसद्भावेलिंगंकिंप्रजयाकरिष्यामःकिमर्थावयमध्येष्यामहइतिचवैपरीत्यस्यापिदर्शनात्॥१९॥

व्यंतथाचपूर्वोक्तप्रक।
रणापीडनेकारणाभावाद्विद्यात्वाविशेषेणात्मविद्याग्रहेपितत्प्रकृतोपासनायामेवंशेषत्वंतत्रापिसत्यकामःसत्यसंकल्पइत्यादिविद्या
नान्दहराद्युपासनानुष्ठानशेषत्वंनिर्गुणविद्यायाःपिपरोक्षाभावनोपयोगिनीअपरोक्षात्तुनकिंचित्प्रतिततःपरमनुष्ठानाभावादितिविवेक्तव्यं
उक्तश्चायमर्थोव्याकरणाधिकरणेभट्टपादैःसर्वत्रैवहिविज्ञानंसंस्कारत्वेनगम्यतेपरांगंचात्मविज्ञानादन्यत्रेत्यवधारणोतिनापीतित
थाहिबर्हिर्देवसदनंदेवानांसदनभूतंबर्हिर्दर्भमुष्टिविशेषंदामिलवंइयामीति बर्हिर्लवनप्रकाशनसमर्थमंत्रस्यसामर्थ्यलक्षणलिंगेनब
र्हिर्लवनेविनियोगःनतथेहकिंचिच्छ्रुतिसामर्थ्यमस्तीत्यर्थः श्रुतिसामर्थ्यलक्षणलिंगाभावेपिलिंगान्तरमस्तीत्याशंक्यविपरीतलिंगस्यापिभा

स्यादेतत् आत्मज्ञानावदव्यभिचरितक्रतुसंबन्धः नत्संबन्धिवेदमात्मज्ञानं नहि हमाभूत्तल्लिंगश्रुतीवाक्यमेवास्ति कर्मणि विनियोजः
कं यथा हि पर्णमयीत्वायाः सिद्धरूपतया फलजननाय क्रियासंबन्धसाकांक्षायाजुह्वाजुहोतीति नियतप्रकृति द्रव्यसाकांक्षाव्य
भिचरितक्रतुसंबंधजुहूद्वारावाक्येन कर्मसु विनियोगः तद्वदिति तत्राह नचयस्येति व्यभिचारमेवाह तस्येति नचु देहव्यतिरिक्ता
त्मज्ञानं वैदिककर्माव्यभिचारीति वाच्यं कारीर्यादावभावेन तस्यापि व्यभिचारसाम्यादिति भावः प्रकरणाद्धि नियोगं निरावष्टे नचा
त्मज्ञानमिति सन्निधिपठितैर्याकांक्षाभावनायाः पूर्णेनदृत्युत्सर्गः यथा दर्शपूर्णमासप्रकरणपठितसमिदादिभिः कल्पनागौरवेण फ
नचयस्य पर्णमयीजुहूर्भवतीति वद्वाक्याद्धि नियोगः पर्णमयीत्वादिवदात्मनोऽव्यभिचरितक्रतुसंबंधाभावान्नस्यलौकि
कवैदिककर्मसाधारण्यात् नचात्मज्ञानं कर्मप्रकरणे श्रुतं येन प्रयाजादिवत्कर्माङ्गतामश्नुवीत् नापि स्थानं कर्मसन्निधावपठ्य
मानत्वात् नापि समाख्यासंज्ञासाम्याभावात् नचात्मज्ञानस्य कर्मण्युपकारप्रकारो निरूप्येत देहव्यतिरिक्तात्मज्ञा
नस्योपयोगेऽप्यज्ञानाद्यतीतात्मविज्ञानस्य तत्रानुपकारित्वात् नचाज्यावेक्षणादिवद्दृष्टद्वारेणोपयोगः स्वप्रकर
णपठितसंसारनिवृत्तिलक्षणादृष्टफलनिराकांक्षस्याऽदृष्टफलकल्पनानुपपत्तेः नचक्रियाकारकफलशून्यमद्वैतमात्मा
नं विजानतः कर्मणि प्रवृत्तिरुपपद्यते नचयमनियमादिप्रवृत्तिवद्विरोधः यमनियमादावप्यपरोक्षात्मविज्ञानवतो विधितः प्रवृ
त्तावत्सन्निधाविन्यादिन्यायेनेति कर्त्तव्यतासाकांक्षप्रधानभावनाभिलाषपोषणं नचपूषाद्यनुमंत्रणवदात्मज्ञानस्य स्वप्रकरणास
मवायः कर्मप्रकरणसमवायो वायेनासंनिहितमपि तत्रोपयुज्येत नच स्वप्रकरणपठितैरंगजातैर्निराकांक्षस्य कर्मणः क्वचिदप्य
पेक्षास्तीति भावः स्यान्नसमाख्ययोस्तु संभव एव नास्तीत्युपेक्षा कृता उपयोगानिरूपणादित्येतद्विवृणोति नचात्मज्ञानस्येति यस्त्वदृष्ट
द्वारेणोपयोग उक्तस्तत्राह नचाज्यावेक्षणेति उत्तरार्द्धं विवृणोति नचक्रियाकारकेत्यादिना अन्यत्रात्मापरोक्षस्यापि स्वभाववशाद्यमादीनामनु

ज्ञानिनो विधेयव्यापाराभावे स्मृतीराह तस्येति स्यादेतत् भवतु निवृत्तिरूपाणां विधिव्यतिरेकेणाप्यनुवृत्तिः भिक्षाटनादौ प्रवृत्तिरूपे का वार्त्ता न
हि तदौदासीन्यात्मकमिति तत्राह भिक्षेति यथाप्राप्तनियतदेशकालसुधाधीनतया अनियतवृत्तिर्भिक्षाहरणादिः नैवं कर्म तस्य प्राचीनप्रवणो वैश्वदेवेन
यजेत सायं प्रातरग्निहोत्रं जुहोतीत्यादिनियतदेशकालतया विधानादित्यर्थः एतेन भ्रान्त्या चेल्लौकिकं कर्म वैदिकं च तथा सुवदेतिभास्करदू-
षणेऽपि चिकित्सितः भ्रान्त्या विशेषेऽप्यवान्तरविशेषस्पर्शित्वादिति एवं तावद्विद्यायाः कर्मशेषत्वनिरासेन कैवल्यफलता प्रसाधिता इदानीं
भवतु विद्यायाः कैवल्यसाधनता तथापि कर्मसमुच्चितायाः एव न केवलाया इति समुच्चयवादिनो मतं निराकुर्वन् ज्ञानिनः कर्मण्यप्रवृत्त्यनुप-
पत्तिमुक्तां तत्राप्यतिदिशति एतेनेति अतिदिश्यमानं विशदयति विरोधादेवेति द्वेधा हि समुच्चयः संभवति समप्राधान्येन वा पञ्जागवत् गुणप्राधान्ये

तस्य कार्यं न विद्यते ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्वविदिति स्मरणात् भिक्षाटनादाव-
पि व्युत्थानदशायां यदृच्छयैव प्रवृत्तेः न चैवं कर्मणि प्रवृत्तिर्नियतदेशकालतया तस्य विधानात् एतेन ज्ञानकर्मणोः समुच्चयोऽपि निराकृ-
तो वेदितव्यः विरोधादेव उक्तं हि यद्विधस्य तु रोधेन स्वभावमनुवर्तते तेन तस्य गुणीभूतं स्याच्च प्रधानाद्गुणोदयत इति अपि च उ-
त्पत्त्याप्तिविकृतिसंस्कृतयः कर्मणः फलं विद्यायाः पुनरविद्यास्तमयस्तत्कथमनयोः साहित्यम्॥ न वा प्रयाजदर्शपूर्णमासवत् तत्रा-
पि ज्ञानं गुणः कर्म प्रधानमिति वा विपरीतं वा तत्त्वबस्य मानप्रकारेण ज्ञानकर्मणोः साध्यसाधनभावावगमात् न समसमुच्चयो गुणप्र-
धानपक्षेऽपि परंपरया ज्ञानं प्रति कर्मणां गुणभावोऽस्त्युपगत एव यत्तु कर्म प्रधानं ज्ञानं गुण इति तन्न स्वरूपविरोधादिति भावः अत्रैव सुरेश्व-
राचार्यसम्मतिमाह उक्तं हीति न प्रधानादिति प्रधानमतीतिप्रधानात् प्रधानविद्याजकः सन् तस्य गुणो न भवति यत इत्यर्थः यत्कर्मप्रवृत्तिवि-
धानकं ज्ञानं तन्न कर्म प्रति गुणो भवतीति भावः विभिन्नविरुद्धफलत्वाच्च न गुणगुणिभाव इत्याह अपि चेति न ह्यविद्यास्तमयात्मकस्य
नित्यप्रत्यग्भूता विकार्यनामधेयातिगायनिर्दोषात्ममात्रस्य मोक्षस्य ज्ञानेनाप्यत्वं संभवति वनेनेव पिण्डस्य नाप्याप्यत्वं दोहनेनेव पय-
सः नापि विकार्यत्वं अभिषवेनेव सोमस्य नापि संस्कार्यत्वं प्रोक्षणेनेव व्रीहीणां एवं तावदेव च कर्मफलं अतः कर्मफलविलक्षणमेव ज्ञानफ-

इदानीमुत्पन्नस्य ज्ञानस्याविद्यानिवर्त्तने कर्मापेक्षैव नास्ति ततो ज्ञानं प्रधानं कर्म गुण इति प्रयाजदर्शपूर्णमासवत्समुच्चय इति पक्षो
पि न संभवतीति लौकिकन्यायेन दर्शयति नहि श्रुक्तिकेति कलधौतं रजतं निर्वाणो मोक्षः एतदिति ज्ञानकर्मणोरेकफलता
ना स्तीति तमेव तं विदित्वेत्यपि योज्यम् अतिमृत्युमेति मृत्युं जन्ममरणात्मकसंसारमत्येतीत्यर्थः अयनं मार्गः तेन च गंतव्य

नहि श्रुक्तिकाशकलं सकलमाकलयतः कलधौत विभ्रमनिवृत्तिः स्नानाऽऽचमनादिकर्मापेक्षया विलंबते तद्वं ।
लौकिकेन न्यायेन ब्रह्मात्मसाक्षात्कार एव तद्विद्यानिवृत्तिहेतुरित्यास्थेयम् श्रुतिस्मृतिषु कर्मणो निर्वाणकारणता
निराकरणाच्चैतद्वसेयम् श्रूयते हि तमेव विदित्वातिमृत्युमेति नान्यः पंथा विद्यतेऽयनाय न कर्मणा न प्रजया न धनेन ।
नास्त्यकृतः कृतेन एतावदरे खल्वमृतत्वमित्यादि स्मर्यते च ज्ञानादेव तु कैवल्यं प्राप्यते येन मुच्यते कर्मणा बध्यते जंतुर्वि
द्यया च विमुच्यते तस्मात्कर्म न कुर्वंति यतयः पारदर्शिन इति नन्वेतानि वचनानि केवलानामेव कर्मणां कैवल्यसा ।
धनत्वनिराकरणपराणि समुच्चितानां तूपपद्यते तत्साधनभावः तथाचांधं तमः प्रविशन्ति येऽविद्यामुपासते ततो
भूय एव ते तमो य उ विद्यायां रता इत्येकैकनिंदापुरः सरं विद्यां चाविद्यां च यस्तद्वेदोभयं सह अविद्यया मृत्युं तीर्त्वा
विद्ययामृतमश्नुते इति ज्ञानकर्मणोः समुच्चितयोर्मोक्षसाधनत्वप्रतिपादनात् ॥

मुपलक्ष्यते क्षेमप्राप्तये ज्ञानव्यतिरेकेणान्यो मार्गो नास्तीत्यर्थः अकृतो नित्यो लोकः कृतेन कर्मणा नास्ति न लभ्यत इत्यर्थः अमृत
त्वममृतत्वसाधनमेतावत्तु यन्मयोक्तमात्मज्ञानं नातः परमस्तीत्यर्थः पारदर्शिनः संसारावसानरूपात्मतत्त्ववेदिन इत्यर्थः अत्र
च समुच्चयवादी प्रदर्शितवचनानामन्यथासिद्धिमाह नन्वित्यादिना नन्वविशेषेण प्रवृत्तिनिषेधस्य केवलधर्मपरतया संकोचः ।
किं निबंधन इति समुच्चयश्रुतिबलादित्याह ॥ तथाचेति ॥ ९

नन्वत्र मृत्युतरणेऽविद्याया उपयोगः अमृतप्राप्तौ च विद्यायाः तत्कथमनयोरेकफलतया समुच्चयोऽत्र प्रतीयत इति तत्राह
तथाहीति नहि ब्रह्मप्राप्तिमात्रमपवर्गः तस्य पूर्वमपि विद्यमानत्वेन साधनोत्थानवैयर्थ्यात् नाप्यविद्यानिवृत्तिमात्रम् अभा
वरूपस्यापुरुषार्थत्वात् तस्मादविद्यानिवृत्त्युपलक्षितब्रह्मप्राप्तिरपवर्गः तत्र चोभयमपि साधनमित्यर्थः अस्त्वेवं तथापि क
र्मणः किमायातं समुच्चये अविद्यया मृत्युतरणं प्रतीयत इति तत्राह तत्र विद्येतरत्वेति अन्यत्वं तत्रोऽर्थः कारणवाची वा कार्ये
लक्षणया प्रवर्त्तत इत्यर्थः तथापि कथं कर्मणः संसारनिवर्त्तकत्वं यावता मृत्युतरणमेव तेन प्रतीयते तत्राह मृत्युपदेति क

तथा हि संसारनिवृत्तिर्ब्रह्मप्राप्तिश्च मुक्तिः तत्र विद्येतरत्वेनाविद्यामूलत्वेन वा अविद्याशब्दवाच्यानां कर्मणां
मृत्युपदवेदनीयकर्मक्षयद्वारेण संसारनिवृत्तावुपयोगः ब्रह्मणस्त्वात्मरूपतया नित्यप्राप्तमविद्यामात्रतिरोहितं
कण्ठगतचामीकरवत् न तत्राविद्यानिवृत्तेरधिकं कार्यमस्तीति अविद्यानिवृत्तौ विद्याया उपयोगस्तदिदमुक्तं वि
द्ययामृतमश्नुत इति यत्तु नः परेषां व्याख्यानं देवताज्ञानमिह विद्याशब्देन विवक्षितम् तस्य कर्मणा समुच्च
योऽनेन वाक्येन कथ्यत इति तदयुक्तम् प्रक्रमानानुगुण्यात् ईशावास्ये परमात्मनः प्रक्रान्तत्वात्॥ ६॥

र्मभिस्तु कर्मक्षयस्तद्द्वारा च मोक्षोपयोगः ज्ञानेन तु साक्षादविद्यानिवृत्तिरिति ज्ञानोपयोगमाह ब्रह्मत्विति अमृतमश्नुत इति प्रतिब
न्धकाविद्यानिवृत्तिर्विवक्ष्यत इत्यर्थः अत्र सिद्धान्त्यन्ययोजनामुद्भावयति पूर्ववादी यत्तु नरिति प्रक्रममेव दर्शयंस्तदननुगुणतां दर्श
यति ईशावास्य इति अत्र हीशः इतीदं परमेश्वरः तेन परमेश्वरेणेशा वास्यमाच्छादनीयं व्याप्यम् वस निवास इत्यस्माद्धातोर्ण्यन्तात् वास्य
मिति रूपम् कारणं हि कार्यं तस्मिन् वर्त्तयति इदं सर्वमिति परमात्मैवोपक्रान्तस्तद्विरुद्धं च मध्ये देवताविज्ञानाश्रयणमित्यर्थः॥

तेनेतीति यस्तेजसा योगी ब्रह्मवित्पुण्यकृच्च भवति स तेनैव तेन मार्गेण निगच्छतीति ब्रह्मवित्पुण्यकृत्त्वयोरेकपुरुषसंबंधकी-
र्तनात् ज्ञानकर्मणोः समुच्चयोऽवसीयत इत्यर्थः सत्यं तपो ब्रह्मचर्याणां च सम्यग्ज्ञानेन समुच्चयोऽपि क्वचिन्निगद्यत इत्याह॥
सत्येनेति पराशरदक्षस्मृतिपर्यालोचनयाप्येवमेवावसीयत इत्याह स्मृतिरपीति एवं निन्दावचनानां केवलकर्मविषयता-
यामुपपादितं हेतुमुपसंहरति तेनेति स्यादेतत् ज्ञानमेव साक्षान्मोक्षसाधनं कर्माणि तु पापक्षयणप्रतिबन्धापाकरणाद्

तथा च श्रुतिः तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च। सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यमिति।
स्पष्टमेव समुच्चयं प्रतिपादयति स्मृतिरपि तपो विद्या च विप्रस्य निःश्रेयसकरं परं तपसा कल्मषं हन्ति विद्ययामृतमश्नुते न
त्याग्निहेतुज्ञानं च कर्म चोक्तं महामुने यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम् एवं तपश्च विद्या च संयुक्तं भेषजं महदित्यादिका
तेन च वाचनिकसमुच्चयानुसारेण कर्मनिन्दापराणां वाक्यानां केवलकर्मविषयतैवेति निश्चीयते न च मोक्षस्य साक्षा-
ज्ज्ञानं साधनं कर्माणि तु पापापाकरणद्वारेण ज्ञानसाधनानीति वचनानां व्यवस्था कर्मणैव हि संसिद्धिमास्थि-
ता जनकादय इत्यादेस्तु लाङ्गलेन वयं जीवाम इतिवत्पारंपर्येणापि तत्साधनपरत्वोपपत्तेरिति युक्तम् साक्षा-
न्मोक्षसाधनत्वेन प्राप्तस्य कर्मणः साधनसाधनत्वग्रहणे प्राप्तान्वयबाधप्रसंगात्॥ ॥

रेण ज्ञानसाधनानि धर्मेण पापमपनुदतीति श्रुतेः तद्द्वारा च मोक्षसाधनमतः साक्षादभावपराणि निन्दावचनानि समुच्चयवचनानि
तु साधनतया पारंपर्येण समुच्चयपराणीत्यस्तु व्यवस्थेति तत्राह न च मोक्षस्येति ननु कर्मणैव हि संसिद्धिमित्यादीनि कर्मणामपि सा-
क्षान्मोक्षसाधनतां दर्शयन्तीति तत्राह कर्मणैवेति यथा हि साक्षात्जीवनसाधनौदनादिसाधने लाङ्गलादौ लाङ्गलेन वयं जीवाम इ-
ति जीवनसाधनत्वव्यपदेशात् इत्यर्थः न च युक्तमित्युक्तं तत्र हेतुमाह साक्षादिति वचनतस्तावत्साक्षात्साधनत्वं प्राप्तं तस्य बाधोऽयुक्तः रा-
गतः प्राप्तं हि बाध्यते न शास्त्रतः प्राप्तं तुल्यं हि सांप्रदायिकम् इतरथा षोडशिग्रहणादावपि विकल्पानवकाशप्रसंगात् निषेधस्य निषेध्य-
सापेक्षतया दुर्बलत्वाच्चेति भावः॥

३ वि॰ प्र॰ टी॰ न॰ ९

ननु नान्यः पन्था विद्यतेऽयनायेत्यादिवचनान्यपि ज्ञानव्यतिरिक्तं मोक्षसाधनं वारयन्ति तथा च कर्मणामपि मोक्षसाधनत्वे तेषु प्राप्तान्वयबाधः स
मानएवेति तत्राह नान्यः पन्था इति यदिदं ज्ञानव्यतिरिक्तसमस्तनिवारकवचनस्य तदेकदेशे केवलकर्मविषये व्यवस्थापनं नायं बाध
अपि तु संकोचः श्रुतार्थस्य सर्वथा परित्यागाभावादित्यर्थः अत्र यदानन्दबोधाचार्यैरुक्तं तदनूद्य दूषयति नच वाच्यमित्यादिना अन्व
यबाधे हेतुमाह तमेतमित्यादिना अत्र हि वेदानुवचनोपलक्षितब्रह्मचर्याश्रमकर्मणां यज्ञदानोपलक्षितगार्हस्थ्याश्रमकर्मणां तपउपलक्षित
वानप्रस्थाश्रमकर्मणां च विविदिषन्तीति वेदनेच्छायां वेदने वा विनियोगः प्रतीयते तत्रापि वेदनइति तत्त्वम् इच्छाया विषयसौंदर्यज्ञा

नान्यः पंथा इत्यादेस्तु निषेधस्य केवलकर्मविषयतयान्तरेणापि प्राप्तान्वयबाधसंकोचेनाप्युपपत्तेः नच वाच्यमन्वयबाध एव
वात्र युक्तः तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन धर्मात्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते योगिनः कर्म
कुर्वन्ति संगं त्यक्त्वात्मशुद्धये कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तत इत्यादिश्रुतिस्मृतिवाक्यैः कर्मणां मोक्षसाधनसा
धनत्वेन विनियोगादिति ज्ञानस्यैव कैवल्यसाधनत्वे ततो भूय एव ते तमो य उ विद्यायां रता इति केवलविद्यानिंदानुपपत्तेः न
च समुच्चयपक्षे नान्यः पन्था विद्यते न कर्मणा नास्त्यकृतः कृतेनेति कर्मनिषेधानुपपत्तिस्तद्वचनानां यद्वा गवत्साक्षात्समप्र
धानतया साधनतानिषेधपरत्वात् अभ्युपगम्यते हि व्यवधानेन कर्मणां मोक्षसाधनत्वं व्यवधानत्वं च करणोपकारेण
नाधीनत्वात्तथा धर्माज्ज्ञानमिति चात्मनोऽन्तःकरणस्य शुद्धये कर्म कुर्वन्तीति च कर्मभिः कषाये पक्व इति च ज्ञानं प्र (तदुत्पादकत्वम्॥

गा

तिचित्तशुद्ध्यादिद्वारेणाविनियोगाच्छास्त्रेणैव व्यवस्थाया दर्शितत्वात्प्राप्तान्वयबाध एव युक्त इति भावः नच वाच्यमित्युक्तं तत्र हेतुमाह ज्ञान
स्यैवेति यदि हि केवलविद्यैव विधित्सिता न तत्र तन्निंदा नोपपद्येतेत्यर्थः पूर्वकर्मनिषेधवचनानां केवलकर्मविषयतया गतिरुक्ता संप्रति ग
त्यंतरमप्याह नच समुच्चयेति ननु यदि न समुच्चयस्तर्ह्यभ्युपगतहानिरिति तत्राह अभ्युपगम्यत इति तत्त्वस्माभिरपि साधनसाधनतया
व्यवधानमेवांगीक्रियते न तु किमधिकमाचरितमायुष्मतेति तत्राह व्यवधानत्वं चेति प्रयाजादिवदेषामंगत्वं न तु मोक्षणादिवदित्य

राम॰ ९

ननुयद्यपिसमप्रधाननयामोक्षसाधनत्वंनास्ति तथापिकरणोपकारकत्वेकरणेनिकर्तव्यतयोरेकविषयतयाकर्मसाध्यत्वंमो
क्षस्यस्यात्नचनइष्टमुक्तम्यत्कृतकंतदनित्यमितिन्यायानुगृहीततयानद्यथेहकर्मचितोलोकइत्यादिश्रुत्यवगतानित्यत्वापातेनापु
नरावृत्तिश्रुत्याघातादितितत्राह नत्वेवमपीतिहेतुमाहबन्धेति ततः किमितितत्राहबंधप्रध्वंसस्येति।ननुकरणोपकारकत्वकल्पनम्।
प्ययुक्तंतमेतमितिश्रुतौसाधकतमार्थतयातृतीयथाकरणत्वप्रतिपादनादित्यानन्दबोधाचार्योक्तमुद्भाव्यदूषयतिवेदानुवचनेनेतिकरणसंब
न्धानुपपन्नावितिउपसर्जनंहीष्यायासत्वाच्चेच्छान्वयोलिङ्गाद्यर्थवह्यत्यार्थःयेनप्रत्ययार्थप्राधान्यंस्यात्प्रकृतिप्रत्ययौप्रत्ययार्थंसहब्रूतःस

नत्वेवमपिकर्मसाध्यत्वेमोक्षस्यानित्यत्वदोषः तद्यथेहेत्यादिश्रुतेः यत्कृतकंतदनित्यमितिन्यायाच्चेतियुक्तम्।
बंधप्रध्वंसेकर्मणामुपयोगात् बन्धप्रध्वंसस्यकृतकत्वेपिनित्यत्वात् अन्यथाज्ञानस्यापिप्रसंगात् वेदानुवचनेनब्राह्मणावि
विदिषन्तीत्यत्रसत्वाच्चेच्छायाःकरणसंबन्धानुपपन्नावश्वेनजिगमिषतीत्यादाविवोभयत्रादिसंप्रतिपन्नेष्यमाणवेद
नोत्पत्तावेवकर्मणांकरणत्वावगमात्नकर्मणांकरणोपकारकत्वंकरणेमुख्यार्थायास्तृतीयाश्रुतेः करणोप
कारकत्वेभंगप्रसंगादिति नवाच्यम् यज्ञेनविविदिषन्तीत्यत्रापूर्वत्वाद्विधिपरवाक्ये॥ १ नोऽन्यत्रेतिचन्यायः तदुप

सर्जनमेषानचोपसर्जनेनान्वयोयुक्तःनोपसर्जनंपदंपदान्तरेणसंबध्यतेइतिन्यायात्तस्मात्प्रधानवेदनेनैवसंबध्यतइत्यर्थः अभ
श्वेनेतियथाह्यश्वेनजिगमिषतीत्यत्राश्वस्यगमनंप्रत्येवसाधनतानतुगमनेच्छांप्रतीत्यर्थःअथकरणोपकारकत्वेपिसाधनत्वात्तृ
तीयाकिन्नस्यादित्यत्राह करणइति नचवाच्यमित्युक्तंतत्रहेतुंदर्शयन्करणोपकारकपरतयावाक्यंयोजयतियज्ञेनेति नन्वा
त्रविविदिषन्तीतिवर्त्तमानोपदेशाद्विधायकमेवेदंनभवतितत्राह अपूर्वत्वादिति यथाह्याग्निंनगृह्णातिमेत्रावरुणंगृह्णा
तीत्यादौवचनात्यपूर्वत्वादितिन्यायेनविधिपरतयाविधिविभक्तित्वेनपरिणामःकृतःयथाचसमिधोयजतीत्यादावपूर्वत्वादेवलिङ्परि

वि॰प्र॰ टी॰न॰ १०

विध्यवच्छिन्नेतिप्रधानेनहि गुणानामन्वयः भावनाचप्रधानमिति तयैवेतरेषामन्वयः पश्चाच्चारुणाधिकरणन्यायेनत
मेवान्वयन्ति वीर्हुयोग्यतावशेनपरस्परंपार्ष्णिकोन्वय इत्यर्थः अस्तुप्रकृतेकिमायातमितितत्राह तस्याश्चेति विविदिषन्तीत्य
त्राख्यातविशेषलिङ्शाब्दभावनाभिधीयतेआख्यातविशेषेणाचपुरुषप्रयत्नरूपार्थभावनाप्यभिधीयतेसाचकिंभावये
त् केनभावयेत् केवेति ह्यत्येतिभाव्य करणे तिकर्तव्यतालक्षणांशत्रयवतीप्रतीयते एतदाकांक्षात्रयपूरकतयैवचेतरेषा
मन्वयः तत्रत्वरात्रिसत्रन्यायेनार्थवादिकमोक्षोभाव्यत्वेनान्वेतीत्यर्थः ननुकथंमोक्षस्यभाव्यत्वं यावतासमानपदोपात्त
तयाश्रौतस्यधात्वर्थस्यभिन्नपदोपात्ततयावाक्यप्रमाणात् प्राकरणिकाद्यमोक्षाद्बलीयस्त्वेनतस्यैवभाव्यत्वमितितत्राह धात्वर्थस्य

विध्यवच्छिन्नभावनारूपवाक्यार्थानुप्रवेशेनैवपदार्थानांपरस्परसंबंधात् तस्याश्चभावना।
यामोक्षभाव्यावच्छिन्नत्वात् धात्वर्थस्यचवस्तुतःसमीहिततयाभाव्यत्वानुपपत्तेः नतस्मान्यार्थप्र।
वृत्तभावनाभाव्यत्वलक्षणाकरणाभावएवधात्वर्थस्य॥

चेतिअयमर्थःचेतनसमीहास्पदंहिफलंतत्साधनविधायिनाचाने
नवाक्येनभवितव्यम् उपदेशत्वात् तथाभवतुनामसमानपदोपात्तोधात्वर्थःतथापिदुःखात्मकत्वेनासमीहास्पदत्वान्नतस्यभाव्यत्वं अपिच
नफलस्यवाक्यार्थत्वंदृष्टसाधनरूपभावनाहिलिङादिनाभिधीयतेतथाचेष्टमपिभाव्यमभिहितमेवतेनपदान्तरेणानुपरंतस्यैवविशेषस
मर्पणं अतएवज्योतिष्टोमेनेत्यादौतृतीयायोगेऽपि तस्यात्समानपदोपात्ताद्धात्वर्थात्समानप्रत्ययोपात्तमोक्षएवबलीयान् यथाहुःसमान
प्रत्ययश्रुत्याबलीयस्याहिबाध्यतइतितस्मान्मोक्षस्यैवभाव्यत्वंनधात्वर्थस्येति कथंतर्हिधात्वर्थस्यान्वयइत्याशंक्यकरणतयेत्याह
ततश्चेति अन्यार्थस्वर्गमोक्षोद्देशेनप्रवृत्तायाभावनायाप्राक्तनान्तरालेभाव्यत्वलक्षणोयःकरणाभावःसएवधात्वर्थस्यभवति अत्रच
फलव्यवच्छेदार्थमन्यार्थपदं कुठारादेरपिद्वैधीभावाद्युद्देशेनप्रवृत्तपुरुषप्रयत्नभाव्यत्वमेवहिकरणत्वंतदत्रापिसमानमित्यर्थः॥

यम॰ १०

तथापि यज्ञादेरितिकर्तव्यत्वे किमायातमित्यत आह तथा चेति लब्धं श्रौतं समानपदश्रुतिसिद्धं धात्वर्थलक्षणं करणं यया भा-
वनया सा तथोक्ता अत्रोपपत्तिर्भिन्नपदोपात्तस्य समानपदोपात्ताद्दुर्बलत्वादिति भावः अन्वयप्रकारमेवाभिनयति ततश्चेति अत्र श्रा-
न्तो दान्त इत्यादिवाक्यपरिप्राप्तशमादीतिकर्तव्यतानिराकांक्षत्वान्न द्वारेणाप्यनुप्रवेशो नयुक्तः तथा च तृतीयानुसारेणाकारणाकरणा-
तयैवैषामन्वय इत्यानन्दबोधाचार्यास्तन्निषेधति नचेति भावनया हि साक्षादन्वयः श्रेयान् तथा च प्रकरणेन शमादिवदेव यज्ञादीनामपी-
तिकर्तव्यतयैवान्वय इत्यभिमानः पूर्वपक्षिण एवमुपपादितं समुच्चयं दूषयति सिद्धान्ती तदिदमिति यज्ञादेस्तृतीययैव तावद्विधेयभा-

तथा च लब्धश्रौतधात्वर्थकरणायां भावनायां यज्ञादीनां करणत्वेनानुप्रवेशानुपपत्तेस्तदपेक्षितकरणोपकारद्वारेणाते-
षां संबंधः ततश्च यज्ञादिभिरुपकृत्येति वाक्यार्थः संपद्यते नच शमादीतिकर्तव्यतानिराकांक्षत्वात् भावनायां यज्ञादीनां विधे-
यधात्वर्थकरणत्वेनैवान्वय इति वाच्यम् उभयोरपि प्रयाजानुयाजादिवद् गृह्यमाणविशेषतयेतिकर्तव्यत्वेनैवा-
न्वयोपपत्तेः तदेवं बाधकाभावात्साधकसद्भावाच्च कर्मसमुच्चितमेव ज्ञानं मोक्षसाधनमिति तदिदमसुन्दरम् यज्ञा-
देः करणत्वेन श्रुत्यैव प्रतिपादनात् शेषत्वाधिगतावेव प्रक्रमस्याप्युपक्षयात् ५ विविदिषन्ति यज्ञेन दानेनेति तृतीयाश्रुत्या वि-
धेयविज्ञानकरणत्वेन यज्ञादेः प्रतिपादनात् तेषां फलोपकार्यंगत्वकल्पने श्रुतिबाधप्रसंगात् ॥ वनां प्रति करणत्वं प्रती-

पन्ने तद्यदि साक्षान्न संभवति तर्हि परंपरयापि करणत्वमेव श्रेयः श्रुतिलाभात् इतरथा प्रकरणलाभे न श्रुतिबाधः स्यात् नचैतद्युक्तं श्रु-
त्यपेक्षया ह्यन्तरितत्वात्स्य न च प्रकरणस्य श्रुतिविरोधशंकाप्यस्तीत्याह शेषत्वेति सामान्यसंबन्धबोधकं हि प्रकरणं विशेषस्तु श्रु-
त्यादिभिरेव प्रार्थनीयः क्वचित्तु श्रुतिलिंगवाक्यानामप्रवृत्तौ प्रकरणेन विशेषविनियोगः यथाहुः असंयुक्तं प्रकरणादिति श्रुत्यादिना-
ऽसंयुक्तं प्रकरणाद्धि नियुज्यत इत्यर्थः तस्मात्सामान्यसंबंधबोधिनः प्रकरणस्य न करणतया विशेषसंबंधबोधकश्रुत्या विरोधः ॥
अत एव नागृह्यमाणविशेषता यज्ञादेस्तृतीयाश्रुत्या करणत्वप्रतिपादनात् शमादेश्च तदभावादिति भावः श्लोके विहरणानि विवि-

उत्तरार्द्धमाचष्टे नच प्रकरणेति प्रयाजानुयाजादिवदित्यगृह्यमाणविशेषतायां दृष्टान्तः शमादिवदितिचेत्तिकर्तव्यतायामस्तुत्यादीनामेवेति प्र-
करणेनैव शेषगतकर्मत्वकरणत्वादिलक्षणविशेषसिद्धेर्न हि शेषबोधकस्तुत्यादिवैयर्थ्यप्रसंगादिति भावः स्यादेतत् यदि विधेयधात्वर्थकरण-
तया यज्ञादयो विधीयन्ते न हि भावनां प्रति धात्वर्थः तं प्रति यज्ञास्य इति वैरूप्याद्वाक्यभेद इति चेन्न विशिष्टविधानत्वेन दोषाभावादित्य-
भिप्रेत्याह तस्माद्व्रीहिभिरिति यथा हि व्रीहिभिरित्यत्र यागलक्षणकरणशरीरनिर्वर्तकतया भावनान्वयस्तथेहापीत्यर्थः इदन्तु चि-
न्त्यम् कथमुदाहरणसांगत्यमिति न हि व्रीहिभिर्यजेतेत्यत्र यागो विधीयते येन विशिष्टविधानं स्यात् किन्त्वधिकारवाक्यसिद्धयागा-
नुवादेन व्रीहय एव विधीयन्ते तस्मात्करणकरणतामात्र एव दृष्टोदाहरणम् । उदाहरणन्तु सोमेन यजेतेत्यादि तथा चैकभावनावरोधात्त्वाक्यभेद-
प्रसंगः अत एव च यज्ञाद्यनेकगुणा अपि शक्यन्ते विधातुं प्राप्ते हि कर्मण्यनेकगुणविधानानुपपत्तिः यथाहुः प्राप्ते कर्मणि नानेको विधातुं शक्यते

नच प्रकरणप्रमाणेन प्रयाजानुयाजादिवदगृह्यमाणविशेषतयेतिकर्तव्यतात्वमेव यज्ञादीनां शमादिवदि-
ति वाच्यम् प्रकरणस्य सामान्यतः शेषत्वबोधनेनैव चरितार्थत्वान्न हि शेषं प्रति स्तुत्यादीनामेव प्रमाणत्वात् तस्माद्व्री-
हिभिर्यजेतेत्यादाविव करणशरीरनिर्वर्तकतया च यज्ञादीनां करणत्वं यज्ञेनेति तृतीयाश्रुत्या निश्चीयते ॥

गुणाः अप्राप्ते तु वि-
धीयन्ते व्रीहयोऽप्येकयत्नत इति तस्मात्सोमेन यजेतेतिवत् यज्ञेन विविदिषन्तीति विशिष्टविधानम् अपरे तु यज्ञांकुर्वीतेति हि विज्ञानानुवादेन ।
यज्ञादिगुणो विधीयत इति वदन्ति तन्मते वाक्यभेदो दुष्परिहारः एतच्च ज्ञानविधिमंगीकृत्योक्तम् वस्तुतस्तु ज्ञाने नास्त्येव विधिः पुरुषेच्छा-
नधीनत्वात् यथा च ज्ञानविधानं न घटते तथा कार्यवादे एव विपंचितं तस्मात् परोक्षज्ञानं परमसुखसाक्षात्कारतया फलमनूद्य चित्तशु-
द्धिद्वारा तत्साधनत्वेन यज्ञादयो विधीयन्ते न च वाक्यभेदो दोषापगत्यन्तराभावात् न च भावनाया वाक्यार्थता नत्र संगत्यग्रहात् सिद्धार्थनिष्ठवा-
क्यानां कार्यवाद एव समर्थितात् प्रवर्तकवाक्यानामपीष्टसाधनत्वमात्र एव विश्रान्तत्वात् प्रवृत्तेस्त्वर्थसिद्धत्वात् यथा चेष्टसाधनमेव लि-
ङर्थस्तथा दर्शितं कार्यवादे शब्दभावनानुदृते तत्साधिताप्रमाणाभावात् न हि शब्दस्य संगतिग्रहणं तत्संस्कारोद्बोधं चान्तरेण शब्दभावना-

किंच तन्नयस्ये यज्ञादिभिरुपक्रान्त्य वेदनेन मोक्षं भावयेदिति योजनीयम् तथा चाश्रुतमध्याहरणीयम् उपक्रान्त्येत्यश्रुतत्वात् मन्यसे तु न किंचिदध्याहार्यं तृतीययाकरणतायाः श्रुतत्वादित्याह यज्ञेनेति ननु यद्यपि तृतीयया करणत्वं यज्ञादीनां ज्ञानं प्रति श्रूयते तथापि तन्न संभवति प्रमाणाधीनस्य ज्ञानस्य यज्ञाद्यजन्यत्वात् नहि प्रत्यक्षादिमध्ये यज्ञादयः किंचित्प्रमाणमतो यथाश्रुत्यर्थासंभवादध्याहृत्यापि योजनं श्रेय इति तत्राह न च यज्ञादीनामिति यद्यपि साक्षाज्ज्ञानं प्रति न साधनं श्रवणादीनामेव तत्त्वात् तथापि यज्ञादेः परंप

प्रज्ञादिभिरुपक्रान्त्येति व्याख्याने साध्याहारयोजनाप्रसंगात् न च यज्ञादीनां श्रवणादिवत्साक्षाद्विज्ञानसाधनत्वाभावात् करणत्वानुपपत्तिः परम्परासाधनेष्वपि लोके वेदे च करणत्वाभ्युपगमात् अभ्युपगम्यते हि ज्वालाव्यवधानेनैव काष्ठानां पाके करणत्वम् अपूर्वव्यवधानेनैव स्वर्गे यागस्य तथेहापि परिपंथिदुरितशोधनव्यवधानेन यज्ञादेर्विज्ञानकरणतायां न कश्चिद्विरोधः तदेवं तृतीयाश्रुत्या यज्ञादेर्विज्ञानकरणत्वाधिगतौ सर्वास्वपि समुच्चयवचनानि परम्परासमुच्चयप्रतिपादनपराणीत्यभ्युपेयम् न च केवलविद्यानिन्दानुपपत्तिः निन्दाया देवताज्ञानविषयत्वेऽपि संभवात् प्रक्रमस्यापि वाध्यत्वाद्बलीयस्त्वात्तृतीयया ई निन्दाया देवताविज्ञानविषयत्वेनाप्युपपत्तेः न च परमात्मोपक्रमविरोधः यज्ञेनेति तृतीयाश्रुतेः प्रक्रमाद्बलीयस्त्वेन तद्बाधेऽप्यविरोधात्॥ ११ ययासंभवति तदप्यभ्यर्हितमेव इतरथाश्रुतिवाधप्रसंगात् न च निर्देशायुक्तिः लोकवेदयोर्दृष्टचरत्वादिति भावः परिपंथीति परिपंथिभूतं यद्दुरितं तन्निशोधनेन यद्व्यवधानं तेनेति योजना एवं श्रुत्यैव साधनसाधनतायाः दर्शितत्वात्साधारणसमुच्चयवचनान्येतद्गुणस्येन परंपरया समुच्चये व्यवस्थापनीयानीत्याह तदेवमिति दुर्बलं हि वाक्यं श्रुतेरिति भावः यत्केवलविद्यायाः साधनत्वेन ततो भूय इति तन्निन्दानोपपद्यते विधित्सितस्य निन्दायोगादिति तच्च श्लोकेन परिहरतीति निन्दायादिति यत्तीशावास्ये परमात्मोपक्रमविरोधात्तद्देवताविज्ञानस्य निन्दा वा समुच्चयो वोपपद्यत इति तत्राह प्रक्रमस्येति विहृणोति निन्देति॥

स्यमुपासनाविषयत्वेनपरिहारोभिहितः इदानींमस्तुपरमात्मविद्यैवोपक्रमानुसारेणान्तथापिनविरोधः उपायोपेयभावेनक्र
मसमुच्चयपरतयाप्युपपन्नेत्याह क्रमेति नकेवलमुपपद्यतइत्येतावन्मात्रमपित्वेवमेवोपपद्यतेइतरथाक्रमश्रुतेरानर्थक्यप्रसं
गादित्याह अविद्ययेति ननुपरम्परापक्षेसहवेदनिफलंप्रतिसाहित्यमनुपपन्नमितितत्राह सहेति उपायत्वज्ञानस्यैवसहभावोनतुफल
प्रतीतिभावः नन्वस्मिन्पक्षेकथंनिन्दोपपत्तिः नहिप्रक्रमानुसारेणपरमात्मविद्याकर्मणोःपरंपरयासमुच्चयस्वीकारेसाक्षात्साधनभूतकेवल

क्रमसमुच्चयविषयत्वेनाप्युपपन्नेश्च अविद्ययामृत्युंतीर्त्वाविद्ययामृतमश्नुतइतिपौर्वापर्याभिधानात् सहवेदेति
चवेदनस्यैवसहभावश्रवणात् प्रक्रमानुरोधेनात्मविद्याविषयत्वेप्यपरिपक्वात्मज्ञानविषयतयाप्युपपन्नत्वात्एतदु
क्तंभवतिविद्यापरिपाकात्प्रागेवयेयथास्वंस्वंविहितंनित्यादिकर्मत्यजंतितेषामुपात्तदुरितक्षयाभावाद्विहिताकरण
निमित्तप्रत्यवायस्याहरहरुपचीयमानत्वेनाशुद्धांतःकरणतयापरिपक्वात्मविद्यानुदयात् नकेवलंस्वंशुभकर्मपरित्या
गाच्चनाभ्युदयइत्यामुत्रिकएवाधःपातःस्यादिति तत्रैषाक्षरयोजना विद्यांपरिपक्वात्मज्ञानलक्षणाम् अविद्यांचक
र्मलक्षणांयः सहोपायोपेयभावेनवेदसोधिकृतःपुरुषोऽविद्ययाकर्मलक्षणयाविद्योत्पत्तिप्रतिबन्धकमृत्यु
परवेदनीयंपापंतीर्त्वाविद्ययापरिपक्वसाक्षात्कारलक्षणयाऽमृतंनिर्वाणमश्नुतइति॥ ११ विद्यानिन्दोपपद्यतइ

तितत्राह प्रक्रमेति उपपन्नत्वान्निन्दायाइति शेषः अयमर्थः नास्मिन्पक्षेऽविद्यानिवर्त्तनसमर्थकेवलात्मविद्याविषयानि
न्दाकिंतर्ह्यपरिपक्वात्मविद्याविषयातथाचयावत्परिपक्वब्रह्मविद्योदयमाश्रमादिविहितकर्माण्यनुष्ठेयानीतिफलिष्यतीति उ
कार्थेनतोभूयइतिवाक्यंयोजयति एतदुक्तमिति अन्तःकरणशुद्धेःप्रागेवादृढापातज्ञानोदयमात्रएवकृतार्थंमन्यास्संतोये
यथाविहितानिचित्तशोधकानिकर्माणित्यजन्ति उभयभ्रष्टाःसमुपचितदुरितनिचयाश्चात्यंतमधःपतंतीत्यर्थःएवंनिन्दावाक्यं
योजयित्वाविद्यांचाविद्यांचेत्येतदपिक्रमसमुच्चयपरतयायोजयतितत्रैवेति॥ ॥

फलितं संकलय्य दर्शयति इदमिति अथवा स्वाश्रमविहितं कर्मानुष्ठेयम् विद्या तु केवला मोक्षसाधनमिति विरोध इति।
तत्राह इदमिति चित्तशुद्धिपर्यन्तं यज्ञाद्याश्रमकर्माण्यनुष्ठेयानि शुद्धे तु चित्ते सर्वकर्मसंन्यासलक्षणं पारिव्राज्यमास्थितेन।
साधनचतुष्टयसम्पन्नेन श्रवणाद्यावर्तनीयम् ननु श्रवणमनननिदिध्यासनशमदमाद्यनेकविधेतिकर्तव्यतोपेतपरिनिष्पन्नश्र-
वणस्यासति प्रतिबन्धे वर्तमानशरीरस्य वा परोक्षज्ञानं जायते उत्पन्नं तु परोक्षज्ञानमन्यानपेक्षमेव विद्यां निर्वर्तयतीति भावः एते-
न शिखायज्ञोपवीतत्यागोपलक्षितपारमहंस्यसंन्यासोपि समर्थितः कर्माङ्गभूतानां शिखादीनां शेषिकर्मपरित्यागे सुतरां परित्या-
गात् श्रुतिस्मृतिशते न च ज्ञानाङ्गत्वेन तत्त्यागस्य विधानात् विचीर्णं चात्र परिमितमतिभिस्तैस्तैराचार्यैरिति नास्माभिः पराक्रम्यते।

इदमत्राकूतम् आविद्यापरिपाकाद्यथास्वं कर्मानुष्ठेयम् विद्या तु परिपक्वा कर्मनिरपेक्षैव मोक्षं साधयिष्यतीति।
समुच्चयवादिनोपि न तावत्काम्यकर्मणां समुच्चयस्तस्य मुमुक्षुणा परित्यागात् नापि नित्यनैमित्तिकैस्तत्तदाश्रम
विहितानां तेषां मुत्कर्षापकर्षवत्त्वात् कर्मभूयस्त्वात्फलभूयस्त्वन्यायेन केवल्यफले तावदभ्युपेयापि नि स्वर्गव
दपवर्गस्यापि सातिशयत्वेनानित्यत्वादिदोषप्रसंगात् तस्माज्ज्ञानमेव कैवल्यसाधनमित्यभ्युपेयम्॥ किंचेदं समुच्चयवादीष्ट-
ष्टव्यः किं काम्यकर्मभिः समुच्चयो नित्यनैमित्तिकैर्वा नाद्य इत्याह समुच्चयेति इहामुत्रार्थभोगविरक्तो हि मुमुक्षुरिति भावः द्वि-
तीयं दूषयति नापीति न हि सर्वेष्वाश्रमेषु समानानि कर्माणि न हि गृहिणो यावन्ति तावन्तीतरेषाम् उक्तं हि कृत्स्नभावात्तु गृ-
हिणोपसंहार इति तस्मात्तदुत्कर्षापकर्षाभ्यां साध्यमोक्षेपि तौ स्याताम् इतरथाधिकानुष्ठानस्य व्यर्थत्वेन निर्विकारतया
नुष्ठानस्याप्रामाण्यप्रसंगात् अत एव ब्रह्माग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादिफलस्वर्गेपि वैषम्यं कल्प्यते यथाहुरर्थवादाधिकरणे
वार्तिककृतः कर्मणामस्य महतां फलानां च स्वर्गोत्तरविभागस्यानसाम्याद्विभागोपि चोदित इति तस्मादुच्चावचतयाऽनित्यत्वादिदोषो मोक्ष-
स्य स्यात् नित्यनिरतिशयानन्दात्मकश्च मोक्षः श्रुत्यादिषु प्रसिद्ध इति भावः॥ ६ ॥

३
चि·प्र·
टी·न·
१३

याचापरा समुच्चये श्रुतिः प्रमाणानामपि पारस्पर्यपरतया योजयति सत्येनेति ननु सत्येन सम्यग्ज्ञानेन ब्रह्मचर्येण वा आ
त्मा लभ्यत इत्यात्मलाभे समशिष्टानां सत्यादीनां मध्ये कस्यचित्पारंपर्येण कस्यचित्साक्षादिति कल्पने वैरूप्यं स्यादिति तत्राह ॥
विविदिषेति अनन्यथासिद्धश्रुतिबलादेव वैरूप्यमपि न दोषायेत्यर्थः श्रुत्यन्तरेऽप्यन्यथासिद्धिमाह तेनेति नेयं श्रुतिः परब्र-
ह्मविषया तेनैति गच्छति इति मार्गे समुच्चयश्रवणात् परब्रह्मणश्च गत्यानर्थक्यादसंभवाच्च अविद्यामात्रव्यवहितत्वात् अवि
द्याचेद्देव ब्रह्मतत्त्वविद्यया प्रविलीना तच्च विगलितनिखिलस्थूलसूक्ष्मोपाधिजालस्य व्योमवत्सर्वगतस्य चैतन्यैकरसस्य गमन
मुपपद्यते सूत्रकारोऽपि परं जैमिनिर्मुख्यत्वादिति पूर्वपक्षय्य कार्यं ब्रह्म गन्तव्यं बादरिराचार्यो मेने कुतः अस्य हि ब्रह्मणो गति-

सत्येन लभ्यस्तपसेत्यत्रापि सत्यादीनां ज्ञानसाधनत्वम् ज्ञानस्यैव मोक्षसाधनत्वमित्यभ्युपेयम् विविदिषावाक्ये
यज्ञादीनां विज्ञानसाधनत्वस्यावधृतत्वात् तेनेति ब्रह्मवित्पुण्यकृदिति ब्रह्मवित्पुण्यकृतो मार्गे समुच्चयः मार्गश्च
कार्यब्रह्मगोचरः कार्यं बादरिरस्य गत्युपपत्तेरित्यत्र राद्धान्तितत्वात् एवं चोदाहृताः स्मृतयोऽपि कर्मसमुच्चयपरत
याऽश्रुत्यनुसारेण योजनीयाः तस्माज्ज्ञानमेव मोक्षसाधनमिति सिद्धम्॥ इति श्रीचित्सुखाचार्यविरचिततत्त्वप्रदीपिका
याः तृतीयः परिच्छेदः॥ ❖॥

रुपपद्यते प्रदेशावच्छिन्नतयोपासनात् तत्फलस्यापि तादृशत्वादवधृतोपाधित्वाच्च
तिसिद्धान्तयांबभूव तथा गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोध इति निर्गुणविद्यासु गत्युपसंहारं वारयति तस्मान्न परब्रह्म-
विषयेयमित्यर्थः एवं श्रुतीरन्यथयित्वा स्मृतिरप्यतिदिशति एवं चेति तदेवं तृतीयाश्रुत्येति ग्रन्थे साधारण्येनोपसंहारः
इह तु विशेषतः स्मृतीनामित्यजामितावादार्थमुपसंहरति तस्मादिति शब्दः साक्षात्कारहेतुर्विद्या मुक्तिफलप्रदा विद्यैव तत्तुका-
र्येति तृतीये त्रितयं गतम् ॥ इति श्रीमत्परमहंसपरिव्राजकाचार्यप्रत्यक्प्रकाशपूज्यपादशिष्यस्य प्रत्यक्स्वरूपभगवतः कृ
तौ तत्त्वप्रदीपिकाटीकायां नयनप्रसादिन्यां तृतीयः परिच्छेदः॥

राम·
१३

अथनयनप्रसादिनीटीकासहितायाःतत्त्वप्रदीपिकायाःचतुर्थपरिच्छेदप्रारम्भः॥

ॐ श्रीगणेशाय नमः तृतीये त्रिविधोपायः परिच्छेदे परीक्षितः तुरीयं तु तुरीयेऽस्मिन्मुक्तितत्त्वं परीक्ष्यते १ साधनविचारानंतरं फलविचाराद्धेतुहेतुमद्भावलक्षणः संबंधः परिच्छेदयोरतिस्फुटस्तावच्छून्यवादकस्य शाक्यस्य मोक्षं निराचष्टे न तावदित्यादिना विषयाकारैर्नीलपीताद्याकारैरुपप्लुतो दूषितो यो विज्ञानसंतानस्तस्योपरमो विनाशो मोक्षः उक्तं हि प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तापिन इति एवं न संभवतीत्यर्थः हेतुमाह तज्ज्ञानेति न हि स्वरूपे कविज्ञानसंततिव्यतिरिक्तः कश्चिदात्माभवद्भिरुपगम्यते येन संतत्युच्छेदेनात्मस्वरूपोच्छेद एव न चैवं वि— धे प्रेक्षावत्प्रवृत्तिः संभवति अफलत्वात्फलिनोऽभावे हि कस्य तत्फलं

ॐ कः पुनरयं मोक्षः न तावद्विषयाकारोपप्लुतविज्ञानसंतानोपरमः तज्ज्ञानसंतानस्यात्मरूपतया तदुच्छेदस्यापुरुषार्थत्वात् न हि सर्वेषां प्रियतमस्यात्मनः समुच्छेदाय वांछा कस्यचिदुपजायते बंधविमोकपर्यायस्य मुक्तिशब्दस्यानर्थत्वाच्च न हि बद्धनाशो मोक्षपदवाच्यः किंतु सत एव तस्य बंधविश्लेषः नापि विधूतविषयाकारोपप्लवविशुद्धविज्ञानसंतानोदयः विकल्पासहत्वात् तथा हि किमयं संततिनां पुरुषार्थः किं वा संतानस्य नाद्यः तेषां स्वरसपरिनिर्वाणात् नोत्तरस्तथाविधसंतानोदयेऽपि मुमुक्षोरुपप्लुतसंतानरूपस्योपरमात् ॥ २१

स्यादिति भावः किंच मुक्तिशब्दार्थपराहतश्चायं मोक्षः न हि बद्धस्य नाशो मोक्षः मुञ्च मोक्षणे इति मुचेर्विश्लेषकर्मणो मुक्तिशब्दव्युत्पत्तेस्तस्मात्सतः सकाशाद्बंधस्य विश्लेषो मोक्षशब्दार्थः न पुनः स्वरूपनाशः न चैवं भवन्मोक्ष इत्याह बंधेति एवं माध्यमिकमुक्तिं दूषयित्वा योगाचारमुक्तिं दूषयति नापीति चतुर्विधभावनापरिपाकावसाने यो विषयाकारैरुपप्लवरहितानामनस्य एव विशुद्धानां विज्ञानानां संतानोदयस्तद्रूपो मोक्ष इत्यपि नेत्यर्थः परिनिर्वाणं नाशः स्वरसभंगुरविज्ञानलक्षणसंततिनां चिरध्वस्ततया पश्चाज्जातविसंतानानां तदुदयस्तेषां न पुरुषार्थः फलिनोऽभावे फलाभावादित्यर्थः मुमुक्षोरुपप्लुतसंतानस्येति समानाधिकरण्याय स्योऽत्रापि पूर्वोक्तदोषानतिवृत्तिः उपप्लुत

किंच यस्य बंधस्तस्य मोक्ष इत्येतदपि न तन्मते स्यात् उपप्लुतानुपप्लुतसंतानयोर्भेदात् तथा च कः प्रवर्त्तेत इत्याह बंधेति॥ अथो
भयसंतानान्वयी कश्चिदस्ति तथा च सामानाधिकरण्यं बंधमोक्षयोरिति तत्राह उभयेति संतानिनस्तावत्क्षणिकत्वादेवाऽन
नुवृत्तिः संतानस्य संतानाभावादेकसंतानापाताच्च संतानानन्नुवृत्तिरित्यर्थः किंच तत्पक्षे उपप्लुतविज्ञानसंतानोपरमे विशु
द्धविज्ञानसंतानोदये च कारणमपि दुर्निरूपमित्याह कारणेति ननु अस्ति चतुर्विधभावनाप्रकर्षपर्यन्तजनितसाक्षात्कार उ
पाय इति तत्राह भावनेति ननु किमिति तत्राह तस्येति न ह्यन्यत्रानुभवोऽन्यत्र संस्कारोऽन्यत्र च तत्फलस्मृतिरिति संभवति न

बंधमोक्षयोर्वैयधिकरण्यापाताच्च उभयान्वयिनः संतानिनः संतानस्यैवैकस्याभावात् कारणाभा
वाच्च भावनाप्रकर्षो हि तस्य कारणमिष्यते तस्य स्थिरैकाधिकरणाभावे विशेषानाधायकत्वात्
संतानस्यावस्तुत्वात् संतानिनां च प्रतिक्षणमपूर्ववदुपजायमानत्वेनानासादितभावनाप्रकर्षेण
याविशुद्धविज्ञानजननासामर्थ्यात् नाप्यात्यंतिकी दुःखनिवृत्तिः॥ ९ ॥

हि जातु यज्ञदत्तोऽनुभवति विष्णुमित्रश्च तत्संस्कारवान् देवदत्तश्च तस्य स्मर्तेति दृष्टचरं। तदिह ज्ञानपायिनः कस्यचिदभावे।
क्व संस्कारः क्व वा तत्प्रकर्षः क्व च तत्फलं मुक्तिः स्थिरत्वेऽपि भिन्नाधिकरणत्वेन संभवति किमु वक्तव्यमेकस्याप्यभाव इत्यर्थः
। ननु संतानिषु संतानरूपवानुगतो विशेषश्चाधीयतां उक्तं हि यस्मिन्नेव हि संताने आहिता कर्मवासना फलं तत्रैव बध्ना
ति कार्पासे रक्तता यथेति तत्राह संतानस्येति। अत्र तार्किकाः प्राहुः योगपरिभावनाप्रभवः परमेश्वरसाक्षात्कारात्तत्त्वानामात्मविशे
षगुणानामात्यंतिकी निवृत्तिरपवर्ग इति तन्न दूषयति नापीति ॥ १ ॥

दुःखशब्देनचैकविंशतिप्रकारमपिदुःखंविवक्ष्यते इंद्रियषट्‌कं विषयषट्‌कं बुद्धिषट्‌कं शरीरंसुखंदुःखंचेत्येकविंशतिप्रकारंहि
दुःखं तत्रकिमतीतंवर्त्तमानेनिवर्त्यते अनागतंवादुःखंयथाहपतंजलिः।हेयंदुःखमनागतमितित्रिधापिनसंभवतीत्या
ह अतीतस्येत्यादिना। अशक्यत्वादिति विद्यमानस्यहिप्रध्वंसइत्यर्थः।पक्षत्रयप्रयुक्तदोषपरिहारायतात्पर्यपरिशुद्धावु
दयनोदीरितामात्यंतिकत्वनिरुक्तिमुद्भावयति निवृत्तेरितिचेन्नतांतरेणतथाविधोत्पत्तिसंभवे नासंभवनिवृत्त्यर्थंतस्मिन्ना
त्मनीतिविशेषणंनिवृत्तस्यानुत्पादः संसारदशायामप्यस्तीतितज्जातीयस्येत्युक्तं तथाप्युपायानुष्ठानंव्यर्थमित्याह

अतीतस्यतस्यस्वतएवात्यंतनिवृत्तत्वेनासाध्यत्वात् वर्त्तमानस्यविरोधिगुणप्रादुर्भावनिवर्त्यत्वाद-
नागतस्यनिवर्त्तयितुमशक्यत्वात् निवृत्तेरात्यंतिकत्वशब्देननिवृत्तजातीयस्यदुःखस्यतस्मिन्नात्मनिपु
नरनुत्पादोविवक्षितइतिचेन्न अनुत्पादस्यापिप्रागभावतयानुत्पाद्यत्वात् ननुदुःखात्यंताभावोमोक्षः न
चतस्यनित्यत्वादसाध्यत्वं तत्संबंधस्यस्वात्मनिसाध्यत्वादशेषक्लेशहेतुनाशस्यदुःखात्यंताभावात्मनोः
संबंधरूपत्वात् नह्युत्यंतोदुःखात्यंताभावस्यतदीयत्वेनव्यवहारात् तदीयतयाव्यवहारहेतुत्वेनचविषयविष
यिभावादिवदस्यापिसंबंधव्यवहारगोचरत्वात्॥१॥ अनुत्पादस्यापीति अत्रलीलावतीकारमतमुद्भावयति ननुदुः
खात्यंताभाव इत्यादिना नन्वत्यंताभावपक्षेतु तदानर्थक्यमुपायानुष्ठानस्यनित्यत्वेनासाध्यत्वादितितत्राह नचतस्ये-
ति। ननुभावाभावयोर्नमुख्यः संबंधः संभवीसंयोगसमवाययोरभावात्‌· अथविशेषणविशेष्यभावस्तथापितस्यस्वभावा
नतिरिक्ततयानसाध्यत्वमिति तत्राह अशेषेति यतोऽविद्यास्मितारागद्वेषाभिनिवेशाद्दुःखहेतवःपंचक्लेशास्तेषामशेषाणां
निवृत्तिरेवदुःखात्यंताभावस्यात्मनासंबंधः सचसाध्यइत्यर्थः॥

नन्वयं संयोगाद्यनंतर्भूतः कथं संबंधः स्यादप्रसिद्धत्वादिति तत्राह नइत्यन्ताविति। न हि संबंधबुद्धिजनकत्वमंतरेण सकलसंबंधि-
ष्वनपायि संबंधत्वं नाम किंचिच्छक्यं निरूपयितुमिह यथा ज्ञानार्थयोस्तदीयबुद्धिजनकतया विषयविषयिभावसंबंधः तद्वद्दुःखात्यं-
ताभावस्यात्मीयत्वव्यवहारहेतुरसावपि संबंध इत्यर्थः। तस्य चेति। अशेषक्लेशहेतुनाशस्येत्यर्थः। ननु कस्य दुःखस्यायमत्यंताभा-
वो मोक्षत्वेनाभीप्सितेन न तावदतीतवर्तमानयोरेतस्मिन्नुत्पन्नत्वेन तदत्यंताभावस्य तस्मिन्नसंभवात्। नापि भविष्यतोऽन्यदीयभविष्य-
द्दुःखात्यंताभावस्य संसारदशायामप्येतस्मिन्विद्यमानत्वेऽप्येतन्मुक्तेरभावात्। एतदीयभविष्यद्दुःखात्यंताभावोऽस्य मुक्तिरिति चे-

तस्य च कृतकत्वेपि ध्वंसत्वादेवाविनाशित्वात् न चात्यंताभावस्य प्रतियोगी दुर्निरूपः मुमुक्षुसमवेततया संभा-
वनोपनीतस्य दुःखस्य प्रतियोगित्वात् असति योगाभ्यासे दुरितप्रवाहस्यानागतसमयवर्तिदुःखोत्पादकत्वात्
सर्वत्र चात्यंताभावनिरूपणे सामान्यतोऽवगतस्य विशेषतः समारोपविज्ञानविषयस्यैव प्रतियोगित्वात् विशे-
षतस्तु प्रतियोगिसद्भावनिश्चयापेक्षायामत्यंताभावनिरूपणव्याघातात् अशेषविषयाणां तदीयमन्यदीयं वा ना-
स्तीति पर्यनुयोगस्य सुवचत्वात्॥

त्। तर्ह्येतदीयभविष्यद्दुःखात्यंताभावप्रतियोगिभूतं प्रमितं न वा आद्ये तदत्यंताभावोऽस्मिन्न संभवत्येव प्रतियोगिसद्भावस्यात्र प्रमित-
त्वात्। द्वितीये त्वप्रमितप्रतियोगित्वेनात्यंताभावरूपमोक्षस्याप्यप्रामाणिकत्वमिति तत्राह न चात्यंतेति। प्रामाणिकत्वाभावेपि सं-
भावनोपनीतस्य संभवति प्रतियोगित्वमित्यर्थः। संभावनामेवोपपादयति असतीति। नन्वप्रामाणिकत्वे कथं न निरूप्याभावस्य
प्रामाणिकत्वमिति तत्राह सर्वत्र चेति अत्यंताभावव्यतिरिक्तस्थल एवायं नियमः यत्प्रतियोगिनो विशेषतोपि प्रामाणिकतयाऽभा-
वप्रामाणिकता इत्यर्थः। एतदेव विपक्षे बाधकेन द्रढयति विशेषतस्त्विति यत्र हि शशविषाणं नास्तीत्यादावत्यंताभावप्रमितिस्तत्रा-

दीयविषाणस्य संसर्गो निषिध्यते किं वा एतदीयस्य नाद्यः अन्यदीयविषाणस्य शशमस्तकेऽपि निधातुं शक्यतया तत्संस-
र्गात्यंताभावस्यासंभवात् शशमस्तकोत्पन्नविषाणनिषेधप्रसंगाच्च द्वितीये तत्प्रमित्यप्रमित्योरुक्तदूषणापात इत्यर्थः॥
स्यादेतत्। अशेषदुःखनिवृत्तिं निरवशेषसुखनिवृत्तिरपि भवद्भिरंगीक्रियते मुक्तौ सुखस्यापि दुःखानुरक्ततया दुःखात्मभावा-
भ्युपगमात् तथा च समव्ययफलत्वात् न कोऽपि पुरुषार्थ इत्यप्रवृत्तिरेवात्र प्रेक्षावतां। यथाहुः व्यसनानि दुरंतानि समव्ययफला-
नि च अशक्यानि च वस्तूनि नारभेत विचक्षण इति तत्राह नचास्येति। अत्र तावत्संसारदशायां सुखस्याल्पत्वाद्दुःखस्य च बहुल-
त्वात् समव्ययफलत्वे नापुरुषार्थत्वं योगप्रभावात् कायव्यूहनिर्माणेन जीवन्मुक्तिदशायां सकलसुखोपभोगां-
गीकारात् क्षीयंते चास्य कर्माणि तस्मिन् दृष्टे परावरे ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति श्रुतिस्मृतिशतेभ्यः सर्वक-
र्मणां ज्ञानेन विलयावगमात् सुखोपभोगो न युक्त इति न वाच्यं तद्वचनानामचिरविनश्वरतामात्रप्रतिपादन-
परत्वात् अन्यथा सर्वकर्मणां विनाशाद्धि देहपातः सद्य एव शरीरपाते जीवन्मुक्त्यभावप्रसंगात् प्रारब्धकार्येतरकर्म-
णां ज्ञानादेव प्रक्षयो विवक्षित इति चेत्॥ त्वात्तन्निवृत्तिः सुखादप्यधिकः पुरुषार्थ इति ननु समव्ययफलता तथाऽत्यं-
तसुखस्यापि विद्यमानत्वाज्ज्ञाभवाद्दुःखमेव कुतो अपशंकाकुतस्तरां च समव्ययफलतेत्याह योगप्रभावादिति जीवन्मुक्तिसहि-
तायाः परममुक्तेः पुरुषार्थत्वादिति भावः। ननु ज्ञानेन सुखोपभोगो न घटते कर्मनिमित्तत्वात्सुखोपभोगस्य कर्मणां च ज्ञानेन
प्रदाहादिति तत्राह क्षीयंत इति। परावर इति परमविद्यातीतं अवरं कारणत्वं तदुभयात्मक इत्यर्थः कुतो न वाच्यमित्यत आह तद्व-
चनानामिति। क्षीयंत इति कोऽर्थः न चिरात्क्षीयंत इति न पुनस्तत्क्षणमेव भस्मसात्करणं च विनश्वरत्वस्योपलक्षणमित्यर्थः सद्यः शरी-
रपातं वेदांती परिहरति प्रारब्धेति। तथा च प्रारब्धभोगैः कर्मभिः शरीरस्थितिर्घटत इत्यर्थः॥ ६॥

नैतद्युक्तं। अप्रारब्धफलकर्मणामपि भोगव्यतिरेकेणाज्ञानमात्रादनिवृत्तेरिति परिहरति पूर्ववादी मैवमिति। ननु किं न अनन्तप्राय-
श्चित्ताम्नातं तु तथैव तत्र उक्तं अकृतप्रायश्चित्तानामिति भोगो वा प्रायश्चित्तं वा निवृत्तिहेतुरित्यर्थः। विमतानि कर्माणि भोगैकविना-
श्यानि अकृतप्रायश्चित्तत्वे सति कर्मत्वात् आरब्धफलकर्मवदित्यनुमानविरोधादिति भावः। स्मृतिविरोधमपि दर्शयति ना-
भुक्तमिति। ननु भोगेन क्षयवादिनोऽनिर्मोक्ष एव॥ अनन्तभवपरंपरोपार्जनकर्मणामानन्त्येन भोगावसानाभावात्। न त्वभुक्त-
मविषयमस्ति प्रायश्चित्तं न तस्मान्मोक्षसिद्धानां निवृत्तापि ज्ञानमेव कर्मक्षयहेतुरेष्टव्यमिति तत्राह न चानन्त्यात्कर्मणामिति अत्र

मैवमकृतप्रायश्चित्तानां कर्मणां देहारंभककर्मवद्भोगैकनाश्यत्वनियमात् नाभुक्तं क्षीयते कर्मेति स्मृतेः न चा-
नन्त्यात्कर्मणां भोगेन प्रक्षयानुपपत्तिः योगप्रभावादनन्ततदुपभोगसाधनकायव्यूहनिर्माणेन तदुपपत्तेः न चा-
नियतकालविपाकतया कर्मणां युगपदुपभोगविरोधः उपभोगानुकूलसहकारिसाकल्यादेव समानविपाक-
समयतोपपत्तेरतः आत्यन्तिकदुःखनिवृत्तावपि मुक्तौ न समन्वयफलता॥ ॥ ९ ॥

ग्रह१

किमेकस्यानेकविग्रहग्रहणानुपपत्तिर्बाधिका अनियतविपाकत्वं वा नाद्यः। सौभर्यादिवद्योगप्रभावादुपपत्तेरित्याह योगेतिनोन रः
अनियतविपाकत्वं हि कर्मणां सहकारिसंपत्त्यनियतप्रयुक्तं सा च सहकारिसंपत्तिरस्य योगप्रभावात्संपत्स्यते। अगस्त्यादेरिव पयो-
निधिपानादाविति भवत्येव युगपदुपभोग इत्याह न चानियतेति उक्तं हि पतञ्जलिना योगप्रभावादनेनागस्त्य इव समुद्रं पास्यतीति।
उपपादितमसमन्वयफलत्वमुपसंहरति अनद्वेति। ननु दुःखाभावस्य न पुरुषार्थत्वं अननुभूयमानत्वात् अनुभवे च नाशेषविशेषगुणोच्छे-
दः ज्ञानस्यानुच्छिन्नत्वादिति तत्र नाम्यर्थपरिशुद्धावुदयनोक्तं परिहारमाह न चाननुभूयमानेति॥ ॥ ९

अत्र किं दुःखनिवृत्तेरनुभूयमानत्वमात्रं पुरुषार्थत्वोपयोगि किं वा यावद्दुःखनिवृत्तेः सत्त्वं तावन्तं कालमनुभूयमानत्वमिति विकल्प्याद्य आपादकासिद्धिमाह चरमे जन्मनीति। योगप्रभावादिति। भूतभविष्यद्वर्त्तमानवेदनादित्यर्थः। ननु कथं वर्त्तमानायाः सकलदुःखनिवृत्तेरनुभवसंभवः येन हि चरमज्ञानेन दुःखनिवृत्तिरनुभूयते तदपि तावद्दे कं दुःखं न च तत्समये तस्य निवृत्तिरस्ति नापि तन्निवृत्तिसमये तदनुभवान्तरमस्ति चरमत्वभंगादिति तत्राह वर्त्तमानाया अपीति तस्यैवोपपादनं तथा हीति।

तत्तावदनुभूयमानतया दुःखनिवृत्तेरपुरुषार्थत्वम् विकल्पासहत्वात् किमनुभूयमानतामात्रं पुरुषार्थत्वोपयोगि यावत्दुःखनिवृत्तिसत्त्वं वा नाद्यः चरमे जन्मनि योगप्रभावादनागताया अपि दुःखनिवृत्तेरनुभूयमानत्वसंभवात् वर्त्तमानाया अप्यचिरमनुभवोपपत्तेः तथा हि योगिनश्चरमज्ञानेन सकलविषयेण दुःखतदभावो युगपत्साक्षात्क्रियते तेनैव विरोधिगुणप्रादुर्भावेन निवृत्ते दुःखे विनश्यदवस्थज्ञानेन वर्त्तमानापि दुःखनिवृत्तिरनुभूयते नापि द्वितीयः प्रसूनकंटकादिदुःखनिवृत्तेरपुरुषार्थत्वप्रसंगात् यावत्सत्त्वमननुभूयमानत्वात् तथात्वे विषयान्तरावेदनप्रसंगात् न च दुःखाभावस्य सुखशेषतया पुरुषार्थत्वं सुखस्यापि दुःखाभावशेषतया पुरुषार्थत्वमिति वैपरीत्यस्यापि वक्तुं सुकरत्वात्॥ ३ ॥

विनश्यदवस्थेत्यत्र हृदयं नित्यद्रव्येष्वाश्रयविनाशाभावेन विरोधिगुणप्रादुर्भावेन पूर्वगुणनाश इत्युक्तं विरोधिगुणप्रादुर्भावेनेति प्रसक्तेति। यद्यपि कंटकादिदुःखनिवृत्तिस्तदानीमनुभूयते तथापि न यावत्सत्त्वमनुभवः। विषयान्तरसंचाराद्य भावप्रसंगादतः प्रशिथिलमूलतेति भावः। ननु दुःखाभावस्य पुरुषार्थत्वमेव नास्ति। यत्तु तत्र प्रार्थनास्मात्तस्य सुखशेषतयेत्यत्राह न चेति। हेतुमाह सुखस्यापीति॥

ननु काम्यमानत्वात्सुखस्यैव पुरुषार्थत्वमिति तत्राह कामनाया इति आत्मेति इदानीमुपलभ्यमानविशेषगुणाकतया वाधपरिहारार्थं कदाचिदित्युक्तं पर्यायेण विशेषगुणध्वंसस्य संसारदशायामिदंत्वेनार्थान्तरत्वनिवृत्त्यर्थमशेषग्रहणं युगपदिति चात्र विवक्षितं। संख्यापरिमाणादीनां मोक्षदशायामपि विद्यमानत्वेन वाधपरिहारार्थं विशेषग्रहणम् पीलुपाकपक्षे घटादिषु विशेषगुणैः सहैव ध्वंसमानेषु व्यभिचारनिवृत्त्यै नित्यत्वे सतीत्युक्तं ईश्वराणुपरमाण्वादिषु व्यभिचारनिवृत्त्यर्थमनित्यविशेषगुणाश्रयत्वादित्युक्तं नित्यगुणादिष्वनैकान्तिकत्वपरिहाराय विशेषगुणाग्रहणं। दृष्टान्तेच शब्दव्यक्तिभेदापेक्षया ऽ।

कामनायाश्चोभयत्रापि समानोद्यतयोभयोरपि पुरुषार्थत्वोपपत्तेः प्रयोगश्च आत्मा कदाचित् ध्वस्ता-
शेषविशेषगुणः। नित्यत्वे सत्यनित्यविशेषगुणाश्रयत्वात् महाप्रलयावस्थायामाकाशवदिति
लीलावतीकारः। वक्रमतानुसारिणः पुनरेवं मोक्षलक्षणमाचक्षते एतज्जीवनिष्ठदुःखसमानका-
लीनदुःखध्वंसातिरिक्तैतन्निष्ठदुःखध्वंसोऽस्य मुक्तिरिति॰॥ ६ ॥

शेषपदसार्थक्यं तदेवं दुःखात्यन्ताभावात्मनोः संबंधरूपोऽशेषक्लेशहेतुनाशो मोक्ष इति श्रीवल्लभमतं दर्शयित्वा पुनिकरीतिं दर्शयति वक्रेति एतज्जीवनिष्ठं यद्दुःखं तेन समानकालीनो योदुःखध्वंसः ततोतिरिक्तः तत्त्वानधिकरणं यस्य तन्निष्ठो दुःखध्वंसः स एतज्जीवस्य मुक्तिरिति योजना एतन्निष्ठदुःखध्वंस एतत्संसारदशायामप्यस्तीत्यति व्याप्तिपरिहाराया तिरिक्तेत्यंतं विशेषणं। जीवान्तरसंसारसमयदुःखध्वंसेनातिव्याप्तिपरिहारायैतन्निष्ठदुःखध्वंस इत्युक्तं।
असंभवपरिहारायैतज्जीवनिष्ठेत्युक्तं घटादिध्वंसव्यवच्छेदार्थं दुःखध्वंसेत्युक्तं॰॥ ०-० ॥

प्रयोगश्चेति अयंदेवदत्त एतद्देवदत्तनिष्ठदुःखसमानकालीनदुःखध्वंसातिरिक्तदुःखध्वंसवान्दुःखित्वात्चैत्रवदित्यनु
मातव्यमित्यर्थः लक्षणांतरमाह एतन्निष्ठेति एतद्देवदत्तनिष्ठो यो दुःखप्रागभावस्तेनासमानकालीनो य एतन्निष्ठदुःखध्वं
सः स एतन्मुक्तिरित्यर्थः अत्रापि सांसारिकैतद्दुःखध्वंसनिव्याप्तिपरिहाराय एतन्निष्ठदुःखप्रागभावासमानकालीनेत्युक्तं सं
सारदशायां ह्युत्पद्यमानदुःखप्रागभावसमानकालीनो हि दुःखध्वंसः अत्रापि प्रयोगं दर्शयति एवंविधेति अयं देवदत्त एतन्नि-

प्रयोगश्च देवदत्तोयमेवंविधदुःखध्वंसवान्दुःखित्वाच्चैत्रवत् । एतन्निष्ठदुःखप्रागभावासमानकालीनैतन्निष्ठदुः-
खध्वंसो मोक्ष इत्यपरे एवंविधसाध्येपि दुःखित्वादिति प्रयोगः पूर्ववदेव । अन्ये तु ज्ञानाजनकसंस्कारजनकजन्य
साक्षात्कारविषयो दुःखध्वंसो मोक्ष इति मन्यंते तत्र साक्षात्कारविषयो दुःखध्वंस इत्येतावति लक्षणे सांसारिक
दुःखध्वंसे अतिव्याप्तिर्माभूदिति ज्ञानाजनकेत्यादिना विशेषणेन साक्षात्कारो विशेष्यते । तत्र जन्यपदेनेश्वरसाक्षा
त्कारो व्यावर्त्यते तस्यापि संस्कारजनकतया ज्ञानाजनकसंस्कारजनकत्वात् अस्ति च ज्ञानाजनकसंस्कारजनकत्वं ।
चरमसाक्षात्कारस्य दुःखध्वंसविषयस्य तदनंतरं मुक्तौ ज्ञानांतरानुदयात् ॥

११ मू॰ दुःखप्रागभावासमानकालीनदुःख
ध्वंसवान्दुःखित्वात् पुरुषांतरवदिति प्रयोग इत्यर्थः ज्ञानाजनकेति ज्ञानाजनको यः संस्कारस्तज्जनको जन्यश्च यः साक्षात्कारस्ते
न विषयीकृतो यो दुःखध्वंसः स मोक्ष इति योजना स्वयमेव विशेषणानां कृत्यमाह तत्रेत्यादिना अनुभावनासंस्कारस्यायं स्वभावः
यत्स्मृतिजनकत्वं तत्कथं ज्ञानाजनकसंस्कारजनकत्वमतोऽसिद्धिर्लक्षणस्येति तत्राह अस्ति चेति प्रयोगस्त्वयं देवदत्त एतद्देवदत्त
निष्ठज्ञानाजनकसंस्कारजनकजन्यसाक्षात्कारविषयदुःखध्वंसवान्दुःखित्वात् संप्रतिपन्नवदिति ॥ ॥

नदेवंदुःखनिवृत्तिरेवमुक्तिरित्यनुमानेनोपपादितंसंप्रतिश्रुतिमपितत्रप्रमाणयतिदुःखेतिवाचेत्यवधारणे अशरीरंवसंतंप्रिया
प्रियेनस्पृशतएवेतिदुःखवत्सुखस्यापिप्रतिषेधात् दुःखनिवृत्तिमात्रमेवमुक्तिःनपुनःसुखसंपत्तिरपीत्यवसीयत इत्यर्थः स्यादेतत्
संनिमुक्तौसुखप्रतिपादिकाअपिश्रुतयसंताः किंमतप्रगीताइतितत्राह योवैभूमेतियोनामादिभ्यःप्राणांतेभ्यःपरत्वेनप्रति
पादितःसत्याख्योभूमातत्सुखंभूमशब्दस्यपुंल्लिंगत्वेपिविधेयसुखापेक्षयानदितिनिर्देशः वैइत्यवधारणे।एवंछांदोग्यश्रु
तिमुक्त्वावाजसनेयकश्रुतिमप्याह एषइतियः सुषुप्त्याद्यवपरिछिन्नआनंदः प्रतिभासतेएषोस्यात्मनःपरमउत्कृष्टआ

दुःखनिवृत्तिरेवमुक्तिरित्यत्रचाशरीरंवावसंतंनप्रियाप्रियेस्पृशतइत्यादयोवेदांताःप्रमाणंप्रियशब्दाभिधे
यस्यसुखस्यापिनिराकरणात् योवैभूमातत्सुखमेषोस्यपरमानंदइत्येवमाद्यास्तुश्रुतयोदुःखाभावविषयत्।
योपचरितार्थाविषयाजन्यसुखस्यादृष्टचरत्वात् नचसुप्तोत्थितस्यसुखमहमस्वाप्समितिसुखपरामर्शदर्श।
नाद्दृष्टचरत्वमसिद्धमितिवाच्यंपित्ताद्युपहतेंद्रियस्यदुःखमहमस्वाप्समितिपरामर्शात् दुःखस्यापिनित्यता
प्रसक्तेर्नचपरमप्रेमास्पदत्वादात्मनःसुखरूपतानुमेयादुःखाभावेव्यभिचारात्॥ ॥

नंदइत्यर्थः ननुकिमितिमुख्यार्थःपरित्यज्यतेअसंभवदर्थत्वादित्याहविषयेतिनन्वदृष्टचरत्वमसिद्धंसुप्तोत्थितेनपराम
श्यमानत्वादितितत्राह नचसुप्तेति ननुमाभूदर्थापत्तिरनुमानंतुभविष्यति तथाहि आत्मासुखंपरमप्रेमास्पदत्वात्संप्रतिपन्नसु
खवत्व्यतिरेकेणदुःखवदितिवातत्राहनचपरमप्रेमेतिअस्तिहिदुःखाभावस्यापिपरमप्रेमास्पदत्वंनचतत्रसुखशेषतयेतिवाच्यंवैप
रीत्यस्यसुवचत्वात् नचसुखरूपत्वमित्यनैकांतमित्यर्थः॥ ॥

तर्कवाधितत्वंचाह आत्मन इति ननु स्वरूपभूतमपि सुखं संसारदशायां न प्रकाशते मुक्तौ तु प्रकाशतेऽतोस्ति विशेष इ-
ति तत्राह स्वयंप्रकाशेति प्रतिज्ञाविरोधलक्षणं निग्रहस्थानमप्याह सुखमिति पूर्वपक्षमुपसंहरति तस्मादिति सिद्धान्त-
मुपक्रमते अत्रेति दुःखात्यंताभावस्य स्वरूपतो नित्यत्वेपि तत्संबंध आत्मनि साध्यः संबंधश्च दुःखहेतूनामशेषक्ले-
शानां नाशस्तस्मिन्सति तदीयत्वव्यवहारादिति हिश्रोवक्ष्यभेनोक्तं तत्र दुःखहेतुनाशो दुःखात्यंताभावस्यात्मीयतया व्यवहा-
रेण प्रयोजकोव्यभिचारादित्याह प्रतियोगीति प्रतियोगिनो दुःखादेर्हेतुभूतक्लेशनाशो न दुःखात्यंताभावस्य तदीयत्वे प्र-

आत्मनः सुखरूपत्वे च मुक्तिसंसारयोरविशेषप्रसंगात्। स्वयंप्रकाशस्य निरतिशयसुखरूपतया सदा-
भासंभवात् सुखं मे स्यादिति च प्रेमा लोके न सुखमहं स्यामिति तथा चात्मनः सुखरूपत्वे प्रेमास्प-
दत्वमेव तस्मादिति प्रतिज्ञाहेत्वोर्विरोधस्तत्रक्तु नस्तनः सुखरूपतानुमानं तस्मात् दुःखनिवृत्तिरे-
वमुक्तिरिति। अत्रोच्यते। प्रतियोगिहेतुनाशो न तदत्यंताभावस्य तदीयत्वे प्रयोजकः। लीनशब्दनिदा-
नेपि व्याप्तिनस्यानवस्थितेः। रूपाभावव्यवहृतेस्तदभावेपि चात्मनि ॥१॥

योजक इति योजनाहेतुं श्लोकेनाह लीनेति प्रलयावस्थायां ह्याकाशेऽधिकरणे शब्दहेतवोऽसमवायिकारणास-
मवायिकारणनिमित्तकारणानि च कानिचिल्लीनानि अथापि शब्दात्यंताभावस्य नाकाशसंबंधो न हि पूर्वोत्पन्न-
शब्दध्वंसानुत्पद्यमानशब्दप्रागभावावन्तरेणान्ते च शब्दात्यंताभावोस्ति न च शब्दोपादानाकाशस्य निमित्तभूतेश्व-
रादेश्च विद्यमानत्वात् प्रलये कथं शब्दकारणाभाव इति वचनीयं दुःखप्यात्मादीनां सत्त्वे न हेतुनाशरूपसंबंधाभाव-
स्यात्रापि वक्तुमशक्यत्वात् न देवमन्वयोनालीन्युक्तं व्यतिरेकोपि नास्तीत्याह रूपेति ॥

रूपहेत्वभावस्यात्यन्तविद्यमानत्वेपि रूपात्यंताभावव्यवहाराच्चेति श्लोकयोजना। विवृणोति प्रलयेति ॥ उत्तरार्द्धं विवृणोति प्रति-
योगीति क्लेशहेतुध्वंसाभावेपि परमेश्वरं दुःखात्यंताभावव्यवहाराच्च नचतदत्यंताभावविवक्षा जीवेष्वभावात् नचसंसर्गाभाव-
मात्रविवक्षा प्रागगने व्यभिचारोदीरणादिति किंचभावविशेषस्यैवसंबंधत्वप्रसिद्धेः प्रतियोगिहेतुध्वंसस्य संबंधत्वमेवनास्तिनच
विषयविषयीभावादिदृष्टांतस्यास्याप्युक्तरूपत्वे विप्रतिपत्तेरित्याह नचाभावत्वेपीति। यत्तु ध्वंसस्यकृतकत्वेपि नित्यत्वसमर्थनं।

प्रलयदशायामशेषशब्दनिदाननाशेपि आकाशे नशब्दात्यंताभावः पुनः सर्गेतत्रैवशब्दोत्पत्तेः प्रतियोगिहे-
तुनाशाभावेप्यात्यन्तिरूपात्यंताभावव्यवहारात् नचाभावत्वेपि विषयविषयिभावादिवत् ध्वंसस्य संबंधरूपता
विषयविषयिभावादेरप्यभावत्वेसंबंधरूपत्वेचासंप्रतिपत्तेः नचविनाशस्याप्यविनाशिता कृतकत्वात् नचध्व-
स्ताध्वस्तिप्रसंगः पुरस्तादेवपरास्तत्वात् नचसमारोपितप्रतियोगिकत्वेदुःखात्यंताभावस्यपारमार्थिकता स्व-
प्नसमारोपितद्विरदध्वंसवदस्यापिपारमार्थिकत्वानुपपत्तेः नचशशविषाणनिषेधप्रतिबंदीग्रहः
तस्याप्यविचारितरमणीयत्वात् ॥

तद्दूषयति नचविनाशस्येति। पुरस्तादेवेति उत्तरोत्तरध्वंसमालायामन्यस्मिन्नपि ध्वस्तपदार्थे विरोधित्वादिति प्रागभावखंडनेकृत-
समाधानत्वादित्यर्थः। यत्तु दुःखात्यंताभावस्यसंभावनोपनीततया विशेषतः समारोपसिद्धदुःखप्रतियोगिकत्वमुक्तं तद्दूषयति नचसमा-
रोपितेति। ननुसमारोपितद्विरदध्वंसस्यात्यंताभावत्वादप्रामाणिकत्वं अत्यंताभावस्यत्वयं विशेषः यत्प्रतियोग्यप्रामाणिकतयापि
प्रामाणिकत्वं। इतरथाशशविषाणनिषेधासंभवादितितत्राह नचशशेति ॥ ॥

समव्ययफलतामपिसमर्थयते नचकार्येति। यद्यपिजीवन्मुक्तिदशायामेतच्छंकापरिहारंतथापिविदेहकैवल्यावस्थायां दुःपरिहरमेतदित्याह विदेहेति। एतेनैतदप्यपास्तं। यदाहमानमनोहरः॥ योगर्द्धिसमासादितचिरकालोपभोग्यसुखविशेषपरत्वेप्युपपत्तेरिति। तादृशसुखस्यमुक्तावभावात्। नचजीवन्मुक्तिदशायामपिसर्वकर्मणांफलोपभोगसंभवः। येनाधिकसुखोपभोगः स्यादित्याह नचसर्वेति। येनकर्मणाफलंप्रारब्धंतत्कर्मप्रारब्धंकर्मयद्धिभोगैकविनाश्यानिकर्माणितदाज्ञानान्निवृत्तिर्नश्रूयेत। श्रूयतेचातोनसर्वकर्मफलोपभोगस्तदेत्यर्थः। यत्तुज्ञानान्निवृत्तिर्नघटतइत्यप्युक्तंतत्परिहरतिनचा

नचकायव्यूहनिर्माणेनजीवन्मुक्तिदशायामशेषसुखोपभोगांगीकारात् समव्ययफलत्वदोषपरिहारः
विदेहकैवल्येदुःखाननुभववत्सुखानुभवस्याप्यभावात् नचसर्वकर्मफलोपभोगसंभवः प्रारब्धकर्मे
तरकर्मणांज्ञानान्निवृत्तिश्रवणात् नचाकृतप्रायश्चित्तानांकर्मणांभोगैकनाश्यत्वनियमः क्षीराक्तैरा
म्रपत्रैस्तुज्वरंसद्योनिवारयेदित्यादिना अकृतप्रायश्चित्तानामपिज्वरादिहेतुकर्मणांनिवृत्तिस्म
रणात् नचाकृतप्रायश्चित्तत्वं॥ ॥

कृतेति नन्वहेतोरनैकांतिकतामाह क्षीरेति अत्रहियःक्षीराभ्यक्ताम्रपत्रैर्होमः। नासौप्रायश्चित्तंनापिभोगः अथापिनिवर्त्यतेज्वरहेतुकर्मततोनार्थंतेमइत्यर्थः। नचतत्रज्वरस्यैवकार्यस्यनाशःकर्मणस्तुप्रतिबंधमात्रमेवेतिवाच्यं तत्कार्यस्यात्यंतानुत्पत्तौकर्मसद्भावेप्रमाणाभावात्। अभ्युपगम्यचेदमुक्तं वस्तुतस्तुकृतप्रायश्चित्तत्वमपिशक्यसंपादमित्यसिद्धिमाह नचाकृतप्रायश्चित्तत्वमिति। ननुपापप्रक्षयोद्देशेनाविहितस्यकथंप्रायश्चित्तत्वावधारणंतत्राह। एवंहासेति॥ ॥

ननु वाक्यशेषे श्रूयमाणमपापश्लोकश्रवणं वदर्थवाद इति तत्राह रात्रीति यथा हि प्रतितिष्ठंति ह वै य एता रात्रीरुपयंती
त्यत्र विश्वजिन्न्यायेन स्वर्गकल्पनायां गौरवप्रसंगात्फलपदविपरीणामेन प्रतिष्ठाकामो रात्रिसत्रं कुर्यादिति कल्प्यते तद्वदि
त्यर्थः। ज्ञानफलत्वेति। ज्ञानं प्रति फलत्वेन कल्पनमित्यर्थः। साक्षादेव च पापक्षयोद्देशेन ध्यानविधायिका स्मृतिरप्यस्तीत्या
ह। उपपातकेष्विति। रजनीपादः रजन्याश्चतुर्थभागः। नन्वस्तु दुरितेन नियमः सुकृतेन तु भोगैकविनाश्यत्वनियमोऽस्त्वे।

एवं ह्यस्य सर्वे पाप्मानः प्रदूयंते एवमेवंविदि पापं कर्म न श्लिष्यत इत्यादिवाक्यशेषे श्रूयमाणपापक्षयस्य।
रात्रिसत्रन्यायेन ज्ञानफलत्वकल्पनया सगुणासु विद्यासु दुरितक्षयकामो ब्रह्मोपासनं कुर्यादिति प्रायश्चित्तवि
धित्वोपपत्तेः उपपातकेषु सर्वेषु पातकेषु महत्सु च प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेदिति स्मरणा
च्च सत्येनापि शपेद्यस्तु देवाग्निगुरुसंनिधौ तस्यैव स्वतो राजा धर्मस्यार्द्धं निकृन्ततीत्यादिस्मरणात् सुकृत
स्यापि भोगैकनाश्यत्वनियमानुपपत्तेः नाभुक्तं क्षीयत इत्यादेरौत्सर्गिकत्वादपवादं परिहृत्यैव चोत्सर्गस्थितेः नि
र्गुणब्रह्मविद्यायाश्च सर्वकर्महेतुभूताविद्यानिरासिकायाः दृष्टद्वारेणैव तत्कार्यपुण्यापुण्यनिवर्तकत्वोपपत्तेः॥
श्र

वेति तत्राह सत्येनापीति। ननु तर्हि भोगैकविनाश्यत्वप्रतिपादकवचनस्य का गतिरिति तत्राह नाभुक्तमिति। ननु तथापि।
निर्गुणज्ञानस्य कथं कर्मनिवर्तकत्वं न हि तदुद्देशेन ध्यानं विधातुमुचितमिति तत्राह निर्गुणेति नायं शास्त्रैकगम्योऽर्थः व
स्तुवृत्तेनैव तत्सिद्धेः। न हि रज्जुतत्त्वज्ञानस्य भयकंपादिनिवर्तकत्वं शास्त्रमंतरेणानवगम्यत इति भावः॥ ,, ९ ,, ॥

तदेवं ज्ञाननिवर्त्यत्वात्तज्जीवन्मुक्तिदशायां सर्वकर्मफलोपभोग इत्युक्तं। इदानीमशक्यत्वादपि न सर्वकर्मफलोपभोगसंभ-
व इत्याह नच कायेति। देहदेशादिवत्कालोऽपि सहकारी सहस्रसंवत्सरादिपरिमितभोग्यस्य तत्र तत्र फलत्वेन श्रवणात् स-
च न योगीच्छामनुवर्तते। युगपदेव तस्योपसंहारे तादृशफलप्रतिपादकशास्त्रार्थपरित्यागादप्रामाण्यप्रसंगस्तस्येत्यर्थः॥ किं-
चाव्यापिका चेयं कल्पना यत्कायव्यूहनिर्माणेन सर्वकर्मफलान्युपभुक्तवतो मोक्ष इति अणिमाद्यैश्वर्याणां कायव्यूहनिर्मा-
णाप्रवीणानामपि योगशास्त्रकृतवचनबलात्तदितिहासपुराणादिगतलिंगावगमाच्च मुक्तिविज्ञानात्। तत्प्रसंगे च तेषाममुक्तिरे-
व स्यात्। नच वह्नेरिकस्वभावाः केचन जीवा इति वचनीयं। तथा सति तत्त्वशंकया सर्वेषामप्रवृत्त्यापातात्। नच शमदमविषयवैतृ-

नच कायव्यूहनिर्माणेन युगपत्सर्वकर्मफलोपभोगसंभवः तत्तत्कल्पमन्वन्तरादिनियतकालोपभो-
ग्यानां युगपदुपभोगे तत्प्रतिपादकशास्त्रस्याप्रामाण्यप्रसंगात् नच प्राणिमाद्यैश्वर्याणामेव मुक्तिः
येन कायव्यूहनिर्माणेन युगपदशेषकर्मफलोपभोगः स्यात् नन्वेवं भगवता पतंजलिना नियमाभावाभि-
धानात् यदा निर्द्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्यान्यताप्रत्ययमात्राकारं दग्धक्लेशबीजं भवति ॥ ॥

ण्याद्युपलंभाच्छंकोच्छेदेन विस्रब्धप्रवृत्तिरिति वचनीयं शमदमादेरपि निर्निमित्तमनुष्ठेयत्वे तन्निमित्तानुष्ठानदशाया-
मेवैषा शंका निरंकुशा स्यात् तदेतदखिलं हृदयालिख्याह नच प्राणेत्यादिना यदानिर्द्धूतेति। सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति विभूति-
पादावसानसूत्रं व्याचक्षाणः परमर्षिराह यदेत्यादि रजस्तमोलक्षणेन मलेन निर्द्धूते यस्मिन् बुद्ध्याकारपरिणते सत्त्वगुणे तत्सत्त्वं त-
थोक्तं। अत एव पुरुषबुद्ध्योरन्यतैकाकारप्रत्ययमात्रेणापरिणतं तथा क्लेशानविद्यादीन् प्रतिदग्धो बीजभावो यस्य तत्पुनर-
कृतार्थचित्तवत्प्रसुप्ततनुविच्छिन्नोदारक्लेशः कृतभोगविवेकख्याति लक्षणपुरुषार्थद्वयत्वात्तत्तथोक्तं। एवं यदा भवति चि-
त्तसत्त्वं तदा पुरुषशुद्धिसारूप्यमिवापन्नं भवति पुरुषशुद्धिसदृशशुद्धिमुपगच्छति॥ ॥

यथा हि पुरुषश्चिन्मात्रतया स्वच्छः तथा सत्त्वमपि तन्मात्राकारत्वाद्भवति निर्मलतया सरूपं। अथ कैवल्यं भवति। कस्य।
ईश्वरस्य पूर्वोक्तसंयमविशेषैर्ज्ञानक्रियाशक्तिमतः अनीश्वरस्य वा चक्षुरन्तःकरणयोः संबंधसंयमाद्विवेकजज्ञानमित्यनं-
तरोक्तसंयमाद्विवेकजज्ञानवतः इतरस्य वा उत्पन्नविवेकख्यातेरिति तदिहाप्राप्तैश्वर्यस्यापि इतरवदेव मुक्तिं शास्तीत्य-
र्थः। यत्तु युगपदुपभोगे सहकारिता हि त्यात्समानविपाकतेति तत्राह नचयुगपदिति। यत्तु यावत्सत्त्वमननुभूयमानत्वेपि

तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नं भवति एतस्यामवस्थायां कैवल्यं भवतीश्वरस्यानीश्वरस्य वेति जनक
जडभरतविदुरधर्मव्याधपिंगलादीनामप्राप्तैश्वर्याणामपि मुक्तिस्मरणाच्च न च युगपद्भोगे सहकारिता कल्प भविष्यत्
तत्कल्पमन्वेतरादीनां सहकारिणामिदानीमाहर्तुमशक्यत्वात् नच प्रसक्तकंटकादिदुःखनिवृत्तिवन्मुक्तो दुःखनिवृत्तेर्वर्त्त
मानतया साक्षात्कारसंभवः अप्राप्तैश्वर्यस्यापि मुक्तिप्रतिपादनेन तत्संभवस्योपपादितत्वात् नच दुःखाभावः स्वतंत्रतया पु
रुषार्थः सुखाभिव्यक्तिशेषत्वात् नच विपरिवृत्तिप्रसंगः विकल्पासहत्वात् किंसुखं दुःखाभावस्तोन्यादकसुखाभिव्यंजकं
नोभयथापि आत्मनि समस्तदुःखाभावमनुभवतोप्यकस्मादुपनतविपंचीस्वरश्रवणादौ सुखोत्पत्तेः॥ ६ ॥

कंटकादिदुःखनिवृत्तिवदशेषदुःखनिवृत्तेरप्यनुभवमात्रात्पुरुषार्थत्वं संभवति योगर्द्धिसामर्थ्याच्च सकलदुःखाभावानुभवसंभ-
वइति तदप्युक्तन्यायेन परिहरति नचप्रसक्तेति नन्वत्राप्युक्तं वैपरीत्यं किं न स्यादिति तत्राह नच विपरिवृत्तीति। यदिदं दुःखाभाव-
शेषत्वं सुखस्य तत्किं तदुत्पादकतया तदभिव्यंजकतया वेति विकल्प्योभयथापि व्यभिचारमाह आत्मनीति विपंचीवीणा तन्हि वि-
द्यमान एव दुःखाभावो वीणाप्रणवादितिनादेरुत्पाद्यते अनुभूयमान एव वा भिव्यज्यत इत्यर्थः॥ ——— ॥

४
वि·प्र·
टी·न·
९

ननुदुःखाभावस्यसुखप्रतिपत्तिशेषताप्ययुक्तादुःखानुभवसमयेपिसुखानुभवदर्शनादित्यतआह नचसंतापवतइति। मूर्छा दौसुखानुभवप्रसंगवारणायोक्तं अनुभूयमानइति। स्यादेतत्। यदिदंदुःखाभावेनाभिव्यंग्यतयाभिमतंसुखंतत्किंवैषयि कंउतस्वाभाविकंनाद्यः कंटकादिदुःखनिवृत्तिसमयेचंदनवनितादिसेवाभावेनतत्सुखस्यतदानीमभावात्। नद्वितीयः। तत्रप्रमाणाभावादितिशंकतेनन्विति। यत्तुलीलावतीकारानुमानंतद्दूषयति प्रयोगइति निर्गुणात्मवादिनोवेदांतिनो

नचसंतापवतः शीतह्रदेनिमग्नार्द्रकायस्यसत्येवदुःखेसुखोपलंभात्नदुःखाभावस्यसुखप्रतिपत्तिशेषत्वे तिवाच्यंसुखस्यदुःखाभावैकाभिव्यंग्यत्वनियमानभ्युपगमात् अनुभूयमानोदुःखाभावःसुखमभिव्यनक्त्येवेति। नियमात् ननुवैषयिकसुखस्यकंटकादिनिवृत्तावननुभवात् आत्मनश्चसुखरूपत्वासंप्रतिपत्तेर्नदुःखाभाव स्यसुखाभिव्यक्तिशेषत्वमितिचेन्न आत्मनःसुखरूपत्वस्यानंतरमेवनिवेदयिष्यमाणत्वात् प्रयोगश्चासमीचीनो वेदांतिनःप्रतिहेतोरसिद्धत्वात् दृष्टांतस्यचसाध्यसाधनविकलत्वात् आकाशस्यापिप्रलयेलयाभ्युपगमात्। अस्तुतर्हिदुःखसंततिरत्यंतमुच्छिद्यतेसंततित्वात् प्रदीपसंततिवदितिकिरणावलीकारप्रयोगइ तिचेत् नपार्थिवपरमाणुरूपादिसंतानेनतन्मतेव्यभिचारात् ननुसर्वमुक्तौसापिसंततिःउच्छिद्यते धर्माधर्माख्यनिमित्तस्यसुखदुःखोपभोगलक्षणप्रयोजनस्यचाभावादितिचेत्॥ ९ ॥ ९

हेतुरसिद्धइत्यर्थः।साधनवैकल्यंसुबोधं।आश्रयहीनश्चदृष्टांतः॥अत्यंतमुच्छिद्यतइतिदुःखप्रागभावासमानकालीनध्वंसप्रति योगिनीत्यर्थःप्रलयावस्थायांदुःखसंततेरुच्छेदस्वीकारात्सिद्धसाधनतानिवृत्त्यर्थमत्यंतग्रहणं।पार्थिवेति।तन्नहिसंततित्वमस्तिन। चात्यंतोच्छित्तिःसर्गांतरेपुनस्तेषुरूपाद्युत्पत्तेरित्यर्थः।अत्रतदीयमेवपरिहारंसमुद्भावयतिनन्विति।यदाहिसर्वेषांमुक्तिरितिपक्षः। तदाक्रमेणसर्वेषुमुक्तेषुसन्तुनिमित्तप्रयोजनयोरभावात्साप्यत्यंतमुच्छिद्यतइत्यर्थः॥

रम·
९

स्यादेवं यद्येवमेव सर्वता किं कारणं संमतिः सैव तु नास्तीत्याह मैवं सर्वेति। ननु तर्हि कस्यापि मुक्त्यर्थं प्रवृत्तिर्न स्यात्सर्वेषामात्म
निवर्त्यैकस्वभावत्वशंकयेति तत्रैवाविद्याभीयं परिहारमाह नचैवमिति। सिद्धसाधनतामेव विशदयति नहीति ज्ञानाज
नकसंस्कारत्यादिपसंहृत्ययति तृतीयमपीति चरमदुःखध्वंसः किमनागतः साक्षात्क्रियते किंवा वर्त्तमानः नाद्यः योगप्र

मैवं सर्वमुक्त्यनंगीकारवादिनं प्रतिएवं पर्यनुयोगायोगात् कंदलीकारलीलावतीकारप्रभृतिभिः कैश्चिद्वैशेषि
कविशेषैः सर्वमुक्तेरनंगीकारात् केषांचिदात्मनां संसारैकस्वभावतांगीकारात् नचैवं सति सर्वेषां तथात्वाशंक
या मोक्षसाधनानुष्ठानप्रसंगः शमदमोपरमतितिक्षादिना मुमुक्षुचिन्हेन तु सिद्धेन तथात्वशंकानिवृत्तेः व
क्तानुमानं पुनः सिद्धसाधनत्वादुपेक्षणीयं न हि मुक्तस्य दुःखनिवृत्तौ कश्चिद्विप्रतिपद्यते तृतीयमपि मोक्षलक्षणम
संभवित्वदोषेण निरसनीयं योगप्रभावनियमनिराकरणात् अनागतदुःखध्वंसस्य साक्षात्कर्तुमशक्यत्वात् चर
मदुःखध्वंसदशायां विज्ञानस्यापि विशेषगुणस्योच्छेदस्यांगीकारात् प्रियस्पर्शनिषेधश्रुतिस्तु वैषयिकसुखनिषेध
परा अन्यथा एषोऽस्य परमानंदः यो वै भूमा तत्सुखमिति सुखस्वरूपताप्रतिपादकश्रुतिविरोधात् नचासामुपचरितार्थत्वं

भावे नियमनिरासेनानागतसाक्षात्कारनियमनिराकरणादित्याह योगेतिद्वितीये प्राह चरमेति। ततः साक्षात्कारविषयोदुः
खध्वंस इत्यंशोऽसंभवीत्यर्थः। यातु दुःखनिवृत्तिमात्रमेव मोक्ष इत्युक्तं तत्र श्रुतिरूपाहतानामन्यथयति प्रियस्पर्शेति। मुक्तिदशायामा
नंदप्रतिपादकश्रुतिराशेर्मुख्यार्थप्रच्यवनेनोपचरितार्थत्वकल्पना दूरं प्रियस्पर्शनिषेधस्य वैषयिकप्रियस्पर्शतपासंकोचमात्र

नित्यज्ञानेति। यथा हि जीवज्ञानेच्छाप्रयत्नानामनित्यत्वेप्यैश्वरज्ञानादेर्नित्यत्वं इंद्रियादेर्हेतुजानस्य च न ज्ञानादिमात्रं प्रति
व्याप्तिः किं तु न हि शेषं प्रतीति भवद्भिः कल्प्यते तेन त्वकस्य हेतोः। योग्यत्वे सत्यनुपलब्धेरभावात्। अनन्यथासिद्धश्रुतिसमर्पि
तत्वाच्च तथात्रापि स्वरूपभूतसुखस्य नित्यत्वेप्यविद्यावृतनतया संसारदशायामुपलब्धुमयोग्यत्वाच्छ्रुतिबलाच्चानुपल
ब्ध्युपपत्तिः। यावत्रानि-
यसंभव इति खंडलकार्थः। अपि चोपलभ्यत एव संसारदशायामपि नित्यसुखमित्याह विषयाद्यभावेपीति। यात्वत्रानि-

नच नित्यसुखस्यानुपलब्धिर्बाधिका नित्यज्ञानवदुपपत्तेः सुखस्य विषयेंद्रियादिजन्यत्वव्याप्तेश्च ज्ञाने
च्छादेर्जन्यत्वव्याप्तिवदेव निरसनीयत्वात् श्रुत्यवष्टंभेन नित्यत्वांगीकारस्योभयत्रापि तुल्यत्वाद्धि विषयाद्यभा
वेपि सुप्तोत्थितस्य सुखमहमस्वाप्समिति सुखपरामर्शदर्शनाच्च न च दुःखपरामर्शस्यापि सत्त्वान्नित्यदुः
खरूपत्वमपि तुल्यमिति वाच्यं नित्यदुःखरूपतायामात्मनः परमप्रेमास्पदत्वव्याकोपात् न च दुःखाभाव
व्यभिचारादिदमसाधनमिति वाच्यं तस्य सुखशेषतया परमप्रेमास्पदत्वाभावात् परमप्रे
मास्पदत्वानुपपत्तिरप्यात्मनः सुखरूपत्वे प्रमाणं॥



प्रसक्तिरुक्तां तां परिहरति नचेति। परप्रेमास्पदत्वमेव दुःखरूपतायां न घटत इत्यर्थः। अन्नपदुक्तं दुःखाभावेपि परप्रेमोद
र्शनाच्च सुखरूपतासाधकं परप्रेमास्पदत्वमिति तत्राह नच दुःखेति। निरुपाधिकत्वं हि प्रेम्णः परत्वं नाम तथा च सुखशेषदुःखा
भावे कथं परत्वमित्यर्थः। एवं परामर्शान्यथानुपपत्त्या सुखरूपत्वमुक्तं संप्रति परप्रेमास्पदत्वानुपपत्तिरप्यत्र प्रमाणमित्याह पर

इदानीं परप्रेमास्पदत्वस्यैव कल्पकं साधयति आत्मन इत्यादिना शरीरेति। शरीरस्य य उपघातः हिंसा तज्जन्यं यद्दुःखं तन्नइया-
दैवयं प्रार्थनेत्यर्थः। ननु दुःखस्वभावादेव भयजन्मेति तत्राह नहि दुःखमिति। परप्रेमास्पदत्वे श्रुतिमप्याह तदेतदिति। तदेतदा-
त्मतत्त्वं पुत्रादपि प्रियतममित्यादिबृहदारण्यकश्रुतेरर्थः। भवतु नहि दुःखाभावत्वादिति तत्राह नच दुःखेति। अस्तु नहि दुःखा-
भावाश्रयतयेति नेत्याह दुःखेति। तत्साधनतयेति दुःखाभावसाधनतयेत्यर्थः अत एव निरुपाधिकत्वादित्यर्थः। सुखस्यापी-

आत्मनः प्रेमास्पदत्वार्थं न कस्यचिद्विवादः मा न भूवं भूयासमित्यात्मन्याशिषो लौकिकपरीक्षकसंमतत्वात्। न चेयमाशीः श-
रीरोपघातजन्मनो दुःखाद्भियं तो न पुनरात्मानमानंदं मन्यमानस्येति युक्तं शरीरोपघातजन्मनो भयस्याप्यात्मनः प्रेमास्पदत्व-
मंतरानुपपत्तेः नहि दुःखं दुःखतया भयहेतुरन्यगतस्यापि तथाभावप्रसंगात् तदेतत्प्रेयः पुत्रादिति प्रेमास्पदत्वश्रुतेश्च
न च दुःखाभावतयात्मनः प्रेमास्पदत्वं भावरूपत्वात् नापि तदाश्रयतया दुःखदशायामप्यात्मनि प्रेमोपलंभात् नापि तत्सा-
धनतया साधने प्रेम्णो निरुपाधिकत्वासंभवात् अत एव न सुखसाधनतयापि सुखस्याप्यात्मार्थतया प्रेमास्प-
दत्वात् अतः सकललौकिकवैदिकसुखगोचरप्रेम्णो निरतिशयो स्वात्मनि प्रेमा निरतिशयसुखगोचरप्रेमसमाना-
एवात्मन्येव कल्प्यत इत्यर्थापत्त्यात्मनो निरतिशयसुखस्वभावत्वसिद्धिः प्रयोगश्च कुंभः कुंभेतराविनाशसुखान्यान्यः प्र-
साध्यतां कुंभत्वेन यदित्थं तत्तथा कुम्भांतरं यथा २ कुंभोयमेतदितरानात्मासुखान्यान्यः कुंभत्वात्संप्रतिपन्नकुंभवत्॥

ति। तथापि कथं निरतिशयत्वमित्यत आह अत इति अप्रकाशमानस्य पुरुषार्थत्वं न संभवतीत्यत उक्तं समान इति आ-
त्मस्वरूपसुखसद्भावे अनुमानमप्याह। कुंभ इति। अत्र कुंभविशेषः पक्षः श्लोकं विवृणोति कुंभोयमिति। अयं कुंभ एतत्कुंभेत-
रत्वे सत्यनात्मत्वासुखत्वानधिकरणादन्यः कुंभत्वात्कुंभांतरवदित्यर्थः॥

अत्रवासुखत्वानधिकरणादन्यइत्युक्तेसुखादन्यत्वेनार्थांतरतातदर्थमनात्मासुखान्यान्यइत्युक्तंतथाचाप्रसिद्धविशेषणता
अनात्मत्वासुखत्वानधिकरणस्यैकस्यासंप्रतिपत्तेर्नह्यात्मरूपंकिंचित्संप्रतिपन्नमस्तिसुखंप्रतिवादिनः तस्मादप्रसिद्धविशे
षणतापरिहारार्थमेतदितरेत्युक्तं। एतत्कुंभेतरत्वेनकुंभांतरेसाध्यप्रसिद्धिः। अस्यहिकुंभस्यानात्मत्वासुखत्वानधिकरणत्वेप्ये
तदितरत्वेसतितदधिकरणत्वंनास्त्येवएतस्यैवैतदितरत्वाभावात्। पक्षेत्वेतदितरत्वेसत्यनात्मत्वासुखत्वानधिकरणत्वमेतदि
तरत्वानधिकरणत्वाद्वाअनात्मत्वासुखत्वानधिकरणत्वाद्वाप्रथमेव्याहतिः। नह्येतस्मादस्यान्यत्वंसंभवतिद्वितीयेत्वेतदितिसि

नचकुंभोयमेतदितरानात्मादुःखान्यान्यःकुंभत्वात्संप्रतिपन्नकुंभवदित्याभाससमानयोगक्षेमता
तस्यागमार्थापत्तिबाधितविषयतयानुत्थानात् किंचसुखप्रेम्णोःसंबंधश्चात्मनिष्ठःसुखनिष्ठ
त्वासंप्रतिपन्नत्वस्यत्वादिवत् नचसुखनिष्ठोत्कर्षापकर्षादिधर्मैरनैकांतता ॥
तेषांवेदांतिभिः सुखनिष्ठतानंगीकारात् ॥

क्तमनात्मत्वासुखत्वानधिकरणंकिंचिदादायतदन्यत्वसिद्धिरित्यात्मरूपसुखसिद्धिःतत्त्वाभाससमानयोगक्षेमोयमा
त्मस्वरूपभूतदुःखस्यापिकस्यचिदेवंशक्यसाधनत्वादितितत्राहनचेति।आगमश्चानंदरूपताप्रतिपादकस्तदेतत्प्रेयइति ॥
अर्थापत्तिश्चपरप्रेमास्पदत्वानुपपत्तिःस्वापोत्थितपरामर्शान्यथानुपपत्तिर्वा सुखरूपतायामनुमानांतरमप्याह किंचेति इदं
हिसुखरूपतांप्रेमरूपतांचात्मनःसाधयति। तत्रापिप्रेमरूपतोभयवादिविप्रतिसिद्धेतिसुखरूपतासिद्धिः॥ ९ ९ ९ ॥

ननु तेये शतमिति श्रुतौ मानुषानंदमारभ्योत्तरोत्तरोत्कर्षः श्रूयते प्रतीयते च प्रत्यात्मानुभवेन सुखस्य तारतम्यमिति।
तत्राह तत्प्रतीतेरिति। शुभकर्मोपस्थापितविषयविशेषसंपर्कात्सत्त्वप्रधानायेंतःकरणपरिणामास्ते हि संसारदशायां
स्वाभाविकानंदाभिव्यंजकाः तदवच्छेदाद्विषयतारतम्याच्चेदमानंदे तारतम्यमध्यस्तमित्यर्थः। ननु नानात्मनिष्ठत्वमात्रमत्र
साध्यं येन प्रेमलक्षणानात्मनमादाय यार्थांतरता किंत्वनात्मनिष्ठत्वमेवेति तथा च तद्धारसुखस्याप्यनात्मत्वं सिध्यतीति तत्राह।

तत्प्रतीतेरौपाधिकत्वाभ्युपगमात् न चेदृशसंबंधोऽनात्मनिष्ठः प्रेमनिष्ठत्वात्सत्तादिवदिति सत्प्र-
तिसाधनता प्रेमनिष्ठतयैव सिद्धसाधनत्वादनात्मनिष्ठत्वमेवेति तु साधने दृष्टांतस्य साध्यविकलता।
सत्तादेरात्मानात्मनिष्ठत्वस्य परैरंगीकारात् न च नित्यसुखरूपत्वे मुक्तिसंसारयोरविशेषप्रसंगः तस्या
विद्यातिमिरतिरोधानातिरोधानाभ्यां विशेषोपपत्तेः न चात्मनः सुखरूपत्वे सुखं मे स्यादिति प्रेमा
नुपपत्तिः संबंधव्यपदेशस्यान्यनिष्ठताव्यावृत्तिपरत्वात् अन्यासंबंधिसुखसाक्षात्कारेऽस्त्यपि
संबंधाभावापराधेनापुरुषार्थत्वानुपलब्धेः संबंधस्य केवलव्यतिरेकाभावात्॥ ९॥

अनात्मेति। पूर्वपक्षस्यानुशयं परिहरति। न चेति न च स्वप्रकाशस्य तिरोधानमेव न संभवतीति वाच्यं मतद्वयेपि व्याप्यसिद्धेः यत्तु
प्रेमास्पदत्वमेव सुखरूपत्वे न स्यात् सुखैकस्याप्रार्थनीयत्वादिच्छाया आत्मरूपस्योभयानभिमतत्वादित्युक्तं तत्परिहरति न चा-
त्मन इति। नन्वन्यनिष्ठताव्यावृत्तिवत्स्वनिष्ठत्वमपि पुरुषार्थोपयोगि तथा व्यपदेशस्यापि मुख्यत्वमिति तत्राह अन्यासंबंधीति॥

४
वि॰प्र॰
टी॰न॰
१२

योगिनः परसुखसाक्षात्कारेपिपुरुषार्थतानास्तीत्यन्यासंबंधीत्युक्तं। नचसुखस्यसंबंधित्वेविद्यमानेप्यन्यासंबंधित्वाभावापराधेनापुरुषार्थत्वादर्शनात्तदप्यप्रयोजकं। सुखात्मनोरभेदवादेसंबंधस्यासंमतत्वादुभयसंमतान्यासंबंधित्वस्यैवप्रयोजकत्वेलाघवात्ममस्वरूपमितिवन्ममसुखमितिव्यवहारस्यान्यासंबंधित्वेनैवोपपत्तेः। किंसुखसंबंधमात्रंपुरुषार्थः किंवास्वस्यसुखसंबंधः नाद्यइत्याह सुखसंबंधेति। द्वितीयेप्राह संबंधेति। वादार्थमुपसंहरति तस्मादिति। इदानींसांख्यसंमतमोक्षंनिराचष्टे एतेनेति। महदादिविकृत्यंतनाकारपरिणामिनीत्रिगुणात्मिकाजडाप्रकृतिःप्रधानापरपर्यायासाहि

सुखसंबंधमात्रस्यपुरुषार्थत्वेपरकीयसुखसंबंधस्यापितथात्वप्रसंगात् संबंधेनसंबंधांतरमभ्युपेयंतथा-
चानवस्था तस्मादात्यंतिकीदुःखनिवृत्तिरेवमुक्तिरित्ययुक्तं एतेनप्रकृतिपुरुषविवेकदर्शनात्पुरुषस्यस्वरूपाव
स्थानंमुक्तिरित्यपिपरास्तंआत्मनोऽसुखरूपत्वाद्बंधस्याप्यगतत्वतः उपचारस्यवायोगात्संबंधस्यानिरूपणा
त् ३ सुखसाक्षात्कारस्यैवपुरुषार्थत्वोपपादनादात्मनश्चसुखत्वानभ्युपगमात् नपुरुषस्यस्वरूपमात्रावस्थानंपुरु

प्रकृतिरेवनपुनर्महदादिसप्तकवत्प्रकृतिविकृत्यात्मिकानापिपृथिव्यादिषोडशवत्विकृत्येकरूपिणी। पुरुषस्तुसंगोऽनाधेयातिशयःपरमोदासीनश्चिच्छक्तिः। तयोर्विवेकाग्रहणात्संसारः। विवेकदर्शनात्त्वविवेकख्यातिनिवृत्तावुदासीनरूपावस्थानंमोक्षइतियत्सांख्यैः समाख्यायतेतदप्येतेनदुःखनिवृत्तिमात्रलक्षणमोक्षप्रतिक्षेपेणप्रतिक्षिप्तंमंतव्यंतत्राप्या नंदाभवात्तैःसमानत्वादित्यर्थः। एतस्यचान्यान्यपिदूषणानिश्लोकेनसंगृह्णातिआत्मनइति। आद्यपादंविवृणोतिसुखेति॥

एम॰
१२

द्वितीयपादं विवृणोति अपिचेत्यादिना अनाधेयातिशयोदासीनैकरसः स्वच्छः पुरुषः नचतस्य सुखदुःखोपभोगलक्ष-
णः संसारस्तत्प्रयोजकपुण्यापुण्यावेशो वा संभवति भोक्तृत्वे कर्तृत्वस्यापि तन्मार्गस्याशक्यवारणत्वात् कर्तृत्वे च परि-
णामितया तद्धाप्तजाड्यस्याप्यवर्जनीयतया चिच्छक्तिव्याघाते तज्जगतएव घोरांधकारकूपे निपातः स्यात्। तस्माद्येयं बु-
द्धिः सत्त्वरजस्तमोमयी तत्रैव बंध इति वक्तव्यं तथा च बंधमोक्षयोर्वैयधिकरण्यमित्यर्थः स्यादेतत् मोक्षोपि वधवद्बुद्धिग-
तएव तत्स्वपूर्वः कश्चिदतिशयो मोक्षाख्यः पुरुषे आधीयते। विद्यमानो वा कश्चिदाकारो निवर्त्यते असंगत्वात् कथं तर्हि चे-

अपिच यस्य बंधस्तस्यैव मुक्तिः नच पुरुषस्य बंधः बन्धस्य बुद्धिगतत्वांगी-
कारात्। नचोपचाराद्बुद्धिगतावेव बंधमोक्षौ पुरुषे व्यपदिश्येते॥
निमित्ताभावादुपचारानुपपत्तेः॥

तत्रैव बंधमोक्षप्रसिद्धेर्बुद्धिगतयोरपि तयोरुपचारात् स्फटिकमणाविवारुणिम्नः प्रसूनवर्त्तिनः। योद्धृगतस्येव विजयस्य
राजनि उक्तंहि रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेणेति तथा पतंज-
लिनापि। एवं बंधमोक्षौ बुद्धिकृतौ बुद्धावेव वर्त्तमानौ पुरुषे व्यपदिश्येते स हि तत्फलस्य भोक्तेति तत्राह नचोपचारादिति।
एतेन तृतीयः पादो विवृतः असाधारणसंबंधं निमित्तीकृत्य ह्युपचारः प्रवर्तते यथाक्रौर्यशौर्यादिगुणगणशालिनि बलव-
र्मणि सिंहशब्दः नचात्यंतविलक्षणयोश्चेतनयोरस्ति तादृशगुणयोग इत्याह निमित्तेति एतेन तुरीयचरणो विवृतः॥ ६॥

धनदानादिनाह्युपकुर्वतां वसुधापतिप्रभृतीनां स्वामित्वं दृष्टं सुहृदादिनोपकुर्वतां च भृत्यादीनां स्वत्वं नचेह तद्दृश्यमित्याह नच स्वस्वामी
त्यादिना ननु चिच्छक्तेः पुरुषस्य द्रष्टृयोग्यतास्ति जडबुद्धेर्दृश्ययोग्यता अनयोर्योग्यतालक्षण एवानयोः संबंधोस्त्वलमितरेः सु
क्तं चैतन्न दृतरथोभयोर्वैयर्थ्यप्रसंगादिति तत्राह नच द्रष्टृदृश्ययोरिति एवं योग्यता मुक्तावप्यस्तीत्यनिर्मोक्ष एव स्यादित्यर्थः अ
थ संसारावस्थायामेव योग्यता न मुक्ताविति ब्रूयात्तत्राह तस्या इति स्वरूपातिरेकिणी न योग्यता नामास्तीति भावः यदि मुक्तो सत्या
मयोग्यैव प्रकृतिस्तर्ह्येकत्वात्तस्या न किंचिदपि तत्र योग्यत्वेनैकमुक्तौ सर्वमुक्तिः स्यात् अथैकापि प्रकृतिर्मुक्तं प्रत्येवायोग्यानेतरं

नच स्वस्वामिभावो निमित्तं सर्वथोदासीनस्य स्वामिभावे दृष्टांताप्रसिद्धेः। नच बुद्धेः स्वत्वमपि अनाधेयातिशय
पुरुषे ऽनुपकारकत्वात्। नच द्रष्टृदृश्ययोर्योग्यतालक्षणः संबंधः मुक्तावपि प्रसंगात्। तस्यास्तदाप्यनपायात्। नच पुरु
षभेदेन प्रकृतिगतयोग्यताया अपायात्तयोः अनाधेयातिशयतया पुरुषं प्रतिप्रकृतिविशेषाभावेन तद्व्यवस्थानुपपत्तेः
तस्मादनतिशयानंदस्वभावस्यात्मनोऽविद्यातिरोधानमेव बंधः विद्यानिमित्तस्तदस्तमयो मोक्ष इति सिद्धम्। ननु कस्या
विद्या किं ब्रह्मणो जीवानां वा नाद्यः सर्वज्ञस्य तदनुपपत्तेः नहि तौ यत्तेषां परमार्थतः परस्माद्भेदेऽद्वैतव्याघाता
त्। अभेदे च पूर्वदोषानुषंगात्॥ ९ प्रतिपद्योक्तं कृतार्थं प्रतिनष्टमप्यनष्टं तदन्यसाधारणत्वादिति तत्राह नच पुरुषेति तत्र

वक्तव्यं किं मिमावपायानयोर्मुक्तामुक्तत्वलक्षणा पुरुषविशेषप्रयुक्तौ किं वा प्रकृतिरेवैवं जानाना तिरोदधाति कंचिन्नन्यात्मानमिति
तत्र नाद्य इत्याह अनाधेयेति उत्तरस्तु जडत्वात्प्रकृतेरपास्त सर्वपराभिमतं मोक्षं निरस्य स्वसिद्धांतसिद्धं मोक्षमुपसंहरत्याजेनदर्शय
तितस्मादिति अविद्ययातिरोधानं बंधो विद्यया चाविद्यानिवृत्तिर्मोक्ष इत्युक्तं तदेतदुपपादनीयं तत्राविद्यातिरोधानेन निरूपयिष्यन्
विद्याश्रयविषयावाक्षिप्य समादधातुमुत्तरवादेन ननु कस्येत्यादिना सर्वज्ञस्येति यः खल्वविद्याश्रयोऽसावज्ञो भ्रांतो वा दृष्टः सर्वज्ञस्य च

ननुयद्यपिवस्तुतोऽभिन्नाब्रह्मणोजीवाः तथाप्यविद्याविकल्पितभेदाद्धेतेस्तेषामनन्तत्वेऽपिनब्रह्मणाऽनन्तत्वमितितत्राह अवि-
द्येतिजीवविभागेसिद्धेतदाश्रिताऽविद्यासिद्धिःसिद्धायांचतस्यांजीवविभागसिद्धिरितीतरेतराश्रयत्वमित्यर्थः मंडनमिश्रोक्ति-
मनुवदति अनुपपत्तिरिति ननुतस्यामुक्तानांब्रह्मणोवाऽनुपपत्तिरस्तीतिनास्माभिःपरिकल्प्यतेकिंतर्हितन्निष्ठतयातदनु-
भवात्कल्पकाभावादितिशंकते नन्विति ननुकल्पकाभावोजीवेष्वपिसमानःसत्यंकल्पनायामयंदोषः अनुभूयतेतुजीवेऽ-
त्याशयवानाह जीवानामिति ननुयद्यप्यहमज्ञइत्यत्राविद्याकल्पिताऽऽश्रयत्वंनकेनाप्युल्लिख्यतेतथाप्यज्ञइतिप्रतीतिः

अविद्याकल्पितभेदत्वेचेतरेतराश्रयापातात् अविद्याधीनोजीवविभागोजीवाश्रयाचाविद्येति। अनुप-
पत्तिरविद्यायानदूषणमितिचेत्। अनुपपत्त्यभावेमुक्तानांब्रह्मणश्चसाकिंनस्यात्। ननुनसामुक्तानां
ब्रह्मणश्चभातितिनापिकल्प्याकल्पकाभावात्। मुक्तसर्वज्ञयोरविद्याश्रयत्वव्याघातात्त्व। जीवानांतुनसा
कल्प्या अहमज्ञइत्यनुभवसिद्धत्वादितिचेत् नअविद्याकल्पितोऽहमज्ञइत्यनुभवाभावात्। नन्वहमिति
प्रतीतिःकल्पितनामअविद्याश्रयस्यबोधयति। अहंकृतेःकल्पनामयत्वात् सुषुप्ततुरीयादौचासत्यपि
चिदात्मनितदभावात् अहंब्रह्मास्मीतिसामानाधिकरण्यस्ययोऽयंस्थाणुःसोऽपुमानितिवद्बाधपरत्वात्॥

लादज्ञानाश्रयस्याविद्याकल्पितत्वंनास्तीतिशंकतेनन्वहमित्यादिना अहंकृतेरिति अहमितिकृतिःकरणमहमाकारे-
णपरिणामोयस्मिन्यस्याहंकारस्येवेत्यर्थः अयावदात्मभावित्वाच्चकल्पितइत्याह सुषुप्तेतितुरीयंमोक्षावस्थानन्वहं
ब्रह्मास्मीतिवाक्येनब्रह्मसामानाधिकरण्यमहंकारस्योच्यतेतेनचकल्पितस्यवस्तुभूतेनैक्यंसंभवतीतिकथंकल्पितत्वम-
हंकारस्येतितत्राह अहमिति अन्यतरबाधायामपिभ्रान्तिस्थलेषुसामानाधिकरण्यंदृश्यतइत्यर्थः॥ ॥ ६ ॥

५
चि॰प्र॰
टी॰न॰
२५

ननु तनावदिदं वाक्यं बाधमात्रपरं एकोपदेशपरत्वात् एकसाक्षात्कारेणाद्यविद्यानिवृत्तिरिति सत्यं शोधितत्वंपदार्थस्य ब्रह्मैक्योपदेशपरं नत्वहंकारस्य। कथं तर्ह्यहंशब्दस्य तत्र प्रवृत्तिरत आह अहंशब्दस्येति स्यादेवं यद्यहंकारविशिष्टाश्रितमज्ञानमिति ते मतं स्यात् नत्वेवं सुषुप्तिप्रलययोरप्यस्तिदृश्यमानमज्ञानमिति हि ते मतं न च तदाहंकारोस्ति विकारस्य तत्र प्रविलयात्तदभावे कथं कल्पिताश्रयत्वमज्ञानस्येति दूषयति पूर्ववादी नप्रविलीनेति मंडनवाचस्पतिमिश्राभिमतपरिहा

अहंशब्दस्य तत्र लक्षणया शोधितत्वंपदार्थविषयत्वाभ्युपगमाद्यतः कल्पिताश्रयमज्ञानं प्रतीतितस्तदेव सिद्धमिति चेन्न। नप्रविलीनाहंकारेप्यात्मनि सुषुप्त्यादावज्ञानस्य सद्भावाभ्युपगमादन्यथा सुषुप्तिप्रलययोर्मुक्तिप्रसंगात्। तस्मादविद्याधीनो जीवविभागस्तदधीनावाविद्येति दुर्वारापरस्पराश्रयता। न च बीजांकुरसंतानयोरिव जीवाविद्ययोरनादित्वेन तत्परिहारः। दृष्टान्तवैषम्यात्। तत्र हि बीजांकुरव्यक्तीनामन्योन्यकार्यकारणभावात् तत्संतानयोः परस्पराधीनत्वव्यपदेशः इह तु जीवाविद्याव्यक्त्योरेकत्वात् कार्यकारणभावाभावाच्च कथं तथा व्यपदेशः स्यात्॥ नन्वात्मनिर्गुणावत्तद्द्रव्यत्वयोरिवानादित्वेपि प्रयोज्यप्रयोजकभावो जीवाविद्योः किं न स्यादिति चेन्न॥ ॥

राम॰
१५

रं दूषयति नचेति वैषम्यमेवाह तत्र हीति नहि साक्षात्संतानयोरन्योन्यस्मादुत्पत्तिरनादित्वात् ततो व्यक्तिद्वारा व्यक्तीनामप्यनेकतयान्योन्यमुत्पत्तिः। नहि यतो बीजाद्योऽंकुरो जायते तदेव बीजं तस्मादंकुरात्॥ अपि त्वंकुरांतरात्॥ न चेह तथा नहि प्रतिदिनमन्येन्ये जीवाः नाप्यविद्यास्तस्मादस्त्येव वैषम्यमित्यर्थः यद्यप्यनादित्वादेकत्वाच्च नान्योन्यमुत्पत्तिर्जीवाविद्ययोर्नाप्यन्योन्यज्ञप्तिः एकस्य स्वप्रकाशत्वात् अपरस्य साक्षिवेद्यत्वात् तथाप्यन्योन्यनियम्यत्वं घटत इति दृष्टान्तमवष्टभ्य शंकते नन्वात्म

तर्हि यथा गुणावत्त्वद्रव्यत्वयोरेकस्मात्माधिकरणं तथात्राप्येकमधिकरणं वक्तव्यं तत्किं चिन्मात्रं किं वा अविद्याविशिष्ट
मिति विकल्प्य दूषयति तर्हीत्यादिना दूषणं तत्रैवाह ब्रह्मवदिति इष्टसिद्धिकारमतमुद्भावयति अथेति गुर्वादिविभाग
भावमेव प्रपंचयति तथाहीत्यादिना यद्यप्युत्पन्नविद्यतया गुरोर्मायानास्ति तथापि शिष्यस्याविद्यास्ति अनुत्पन्नविद्य

नन्वविद्यावत्त्वजीवत्वयोश्चिन्मात्रं किमधिकरणमुताविद्याविशिष्टं आद्ये ब्रह्मण्येवाविद्येति प्राचीनदोषा
नुषंगः द्वितीये पुनरविद्यावत्येवाविद्येत्यात्माश्रयः ब्रह्मवज्जीवस्यानादित्वेच न ब्रह्मप्रतिबिंबता॥ अथ ब्रह्मै
वस्वाविद्यया संसरति स्वविद्यया च विमुच्यत इत्युच्येत। तदा तस्यैकत्वात्तद्विद्वदविद्वद्गुरुशिष्यबंधमोक्षादिव्यव
स्थाः स्युस्तथाहि यदि नोत्पन्ना विद्या कस्तदा गुरुरात्मा न रणभावाद्युत्पन्ना कस्तदा शिष्यः सर्वभेदप्रविलया
त् मायाविनिर्मितो गुरुः शिष्योस्तएवेति चेन्नोत्पन्नविद्यस्य मायानुपपत्तेः शिष्याविद्याविनिर्मितो गुरुरिति
चेत्। नस्वविद्यानिमितस्य जडत्वेन विद्यावत्त्वानुपपत्तेः। इष्यत एवाविद्यानिर्मितस्य गुरुत्वं स्वप्नइति चे
त्। तर्हि शिष्याविद्याविनिर्मितस्य गुरुत्वेन स्वतस्यापि शिष्यस्य स्वीयस्वीयशिष्यं प्रति गुरुत्वेन तन्नदविद्या।
विनिर्मितत्वात्तत्कोपि परमार्थः परमात्मतया निरूपितः स्यात्। यच्चाहुः स्वात्मानमेव कस्यितभेदं गुरुः शास्तीति॥

त्वात्तदविद्याविजृंभित एव तद्गुरुर्न चकल्पितस्योपदेष्टृत्वानुपपत्तिः स्वाप्नवदुपपत्तेरिति निःशंकते शिष्याविद्येति एवं शिष्यावि।
द्याविनिर्मितो गुरुरिति पक्षं दूषयित्वा गुर्वविद्याविनिर्मितः शिष्य इति पक्षं दूषयति यच्चाहुरिति॥ ९

४
वि॰प्र॰
टी॰न॰
१५

तस्याप्यविद्यावस्थायामित्थं कल्पनेति वक्तव्यं सा चोत्पन्नविद्यया ध्वस्तेति शिष्यकस्यैव नास्ति कथमनुशिष्यात्। भवतु
तथाप्यधिगतपरमार्थत्वाच्छिष्यादितत्त्वं जानन्न पृथक्त्वमुपदिशेदित्याह तच्चायुक्तमित्यादिना एवं गुरुशिष्यव्यवस्थानुपप-
त्तिमुक्त्वा बद्धमुक्तव्यवस्थानुपपत्तिमप्याह किं चेत्यादिना तत्पूर्वं विद्यैव नोत्पन्ना तेनोपपन्नः संसारः शुकादीनां तु विद्योत्पत्तिश्रा-

तच्चायुक्तं तस्य स्वात्मनो मुक्तिं निश्चिन्वतः स्वव्यतिरेकेण तेषामभावं च पश्यतस्तदुपदेशार्थप्रवृत्त्ययोगात्
प्रवृत्तौ च मत्तुल्यैवासि मुक्तस्त्वं मा यत्नं कुरु मुक्तय इत्येवोपदेशप्रसंगात् किं चानादौ संसारे कस्यचिन्मु-
क्तिरासीन्न वा आद्ये नेदानीं संसारोपालंभः स्यादात्मान्तराभावाद् द्वितीयेऽपि कथं भविष्यतीति प्रत्या-
शा न च विद्याभावात्पूर्वममुक्तिः शुकवामदेवप्रभृतीनामविद्यमाना विद्याऽन्यस्य भविष्यतीति
प्रत्याशाऽसंभवात्। गुरुसंप्रदायाभावाच्च तस्मादेकात्मवादे बंधमोक्षव्यवस्थानुप-
पत्तेः पारमार्थिक एवात्मभेदः समाश्रयणीयः। प्रयोगश्च। आत्मा
आत्मप्रतियोगिकान्योन्याभाववान्॥ [illegible] ॥

त्वमर्थवादमात्रमिति तत्राह नच विद्येति किंच पूर्वं कस्यचिदपि चेद्विद्या नोत्पन्ना न हि गुरुसंप्रदायाभावादद्यापि विद्या नोत्पद्ये-
तेति निर्णयस्यैव संभवादनिर्मोक्षप्रसंग इत्याह गुरुसंप्रदायेति तदेवमविद्याश्रयानिरूपणादविद्याधीनो जीवब्रह्मणोर्जीवानां
च भेद इत्यसंबद्धं। अतः पारमार्थिक एवात्मभेद इत्याह तस्मादिति घटान्योन्याभावत्वेन सिद्धसाधनतापरिहाराय आत्मप्रतियोगिके

रम॰
१५

भेदमात्रसत्यत्वेप्यनुमानमाह आत्मनिष्ठेति अतिरिक्तत्वमनधिकरणत्वं सिद्धसाधनतापरिहारार्थं मिथ्याभेदातिरि
क्तेत्युक्तं. अप्रसिद्धविशेषणतानिरासार्थमात्मनिष्ठपदं।नन्वेको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मेति सर्वभू
तानामन्तरात्मत्वमप्यस्य कीर्त्यते स च स्वेत्र रूप एवेति कथमस्येश्वरविषयतेत्याशंक्यान्तर्यामितया तस्यापि तत्संभवतो

आत्मनिष्ठमिथ्याभेदातिरिक्तभेदवान् लक्ष्यत्वाद्घटवत्। नचैको देवः सर्वभूतेषु गूढ इत्याद्यागम-
विरोधः तस्येश्वरैकत्वप्रतिपादनपरत्वात् नच तत्र सर्वभूतान्तरात्मत्वविरोधस्तस्यैव नियामक-
तया सर्वभूतान्तरवस्थानात्।तथा च श्रुतिः य आत्मनि तिष्ठन्नात्मनोन्तरो यमात्मा न वेद यस्यात्मा श-
रीरं य आत्मानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इति एक एव तु भूतात्मा भूते भूते व्यवस्थितः एकधा-
चैव बहुधा दृश्यते जलचन्द्रवदिति स्मृतेरपीश्वरपरत्वात्तस्य कायव्यूहनिर्माणेन बहुधाभावस्या-
प्युपपत्तेः। तत्त्वमसीत्याद्यैक्योपदेशस्य चोपासनापरत्वात्॥ ६॥

त्याह नच तत्रेति नन्वेक एव तु भूतात्मेति प्रतिभूतभेदेन प्रतिभासमानजीवात्मनामेवैक्यप्रतिपादकास्मृतिरस्तीति तत्राह।
एक एवेति नन्वीश्वरस्यैकत्वात्कथं तत्र बहुधा दृश्यत इति निर्देशोपपत्तिस्तत्राह तस्येति ननु तत्त्वमसीति प्रकृतिविलक्षणेश्वरात्म
तां श्वेतकेतूपलक्षितजीवस्य प्रतिपादयतीति तत्कथं जीवभेदस्तत्राह तत्त्वमसीति भिन्नेपि परमेश्वरे अभेददृष्टिः कर्तव्या योषतीव

पूर्वेति यथाहि तस्मात्पूषाप्रपिष्टभागोऽदंतको हीति वाक्येऽपूर्वत्वात्पूष्णो द्वेशं न पिष्टभागविधिकल्पितः एवमत्रापीत्यर्थः आदिशब्दे
नोपरिधारणादि गृह्यते। श्रुत्यंतरविरोधं परिहरति नेहेति पद्यध्येते श्रुतीकृतसमाधानेन तथाप्यभ्युच्चयत्वेनात्रोपन्यस्येते॥ न केव
लं श्रुत्यविरोधः श्रुतिसिद्धश्चान्यभेद इत्याह द्वा सुपर्णेति अत्र हि द्वाविति जीवेश्वरौ द्वित्वेन निर्दिष्टौ तथा तयोरन्यदित्यस्य त्वन्यद इति
च भोक्तृभोक्तृतया परस्परमन्यत्वेन च निर्दिष्टौ तथा अजामेकामित्यत्रापि तेजोबन्नलक्षणाम विद्यामेको जहाति अन्य अजुषमाणः

न चोपासनाविध्यश्रवणादतत्परत्वं शंकनीयं। अपूर्वत्वेन पूषाप्रपिष्टभागइत्यादाविव विधेः कल्प
मानत्वात्। नेह नानास्ति किंचनेत्यादेश्चेश्वरभेदाभावपरत्वात् मृत्योः स मृत्युमित्यस्य भेददर्शननिं
दायाश्च भेदोपासनाविधिपरत्वात् द्वा सुपर्णा अजामेकामित्यादिना च जीवेश्वरयोर्जीवानां च परस्पर
भेदस्य सत्त्वादेव प्रतिपादनात् न च तत्र लोकसिद्धभेदानुवाद इति वाच्यं। ईश्वरस्यालौकिकत्वादेव त
द्भेदस्य लोकतोऽधिगमासंभवात्। जीवभेदस्य च लोकसिद्धत्वे प्रत्यक्षादिव्यतिरेकेणालोकशब्दा
र्थानिरूपणात्। प्रत्यक्षादिसिद्धत्वेन जीवभेदस्य प्रामाणिकत्वसिद्धेः॥ १ ५ १॥

प्रीयमाणोऽनुशेते इत्यजशब्दोपात्तजीवभेदः प्रतीयते बद्धाबद्धत्वलक्षणधर्मभेदश्चेत्यर्थः यद्यपि जीवस्य लौकिकतया तद्भेदः शक्यानुवा
दः तथापि परमेश्वरस्यालौकिकत्वान्न तद्भेदः संभवदनुवाद इति तत्प्रतिपादनपरमिदं वाक्यमित्याह ईश्वरेति ननु किं जीवभेदप्रतिपादक
त्वमुपेक्षितमस्य तथा च प्रामाणिकभेदत्वाद्वैतसिद्धिरिति तत्राह जीवेति अस्यानुवादकत्वेऽपि यत्सिद्धमिदमनुवदति तदेव तत्र प्रमा

एवमनुमानागमाभ्यामात्मभेदं साधयित्वार्थापत्तिमप्याह सुखदुःखेति ननु यथैकस्मिन्देहे पादशिरःप्रदेशनिष्ठतया
सुखदुःखव्यवस्थायामपि न भेदः तत्कस्य हेतोः औपाधिकभेदमादाय तथा सर्वदेहेष्वप्येक एवात्मा तत्तद्देहोपाधिभेदात्तु शी
नादिव्यवस्थेति किं न स्यात्तत्राह नच पादइति नहि यथा सकलावयवेष्वेकस्य तत्तदनुसंधानं तथा सकलक्षेत्रेष्वप्येकोऽनुसं
दधीत न चैतद्दृश्यत इत्यर्थः ननु व्यधिकरणमिदमभिधीयते यत्सुखादिव्यवस्थयात्मभेद इति अत आह करणधर्मा हि सुखादयः।

सुखदुःखव्यवस्थानुपपत्तिरपि जीवभेदं साधयति अन्यथैकस्मिन् कस्मिंश्चित्सुखिनि सुखिन एव सर्वे स्युर्दुःखिनि
वा दुःखिन इति व्यवस्था न स्यात्। नच यथा देहमेवेदना शिरस्यमे सुखमिति वदुपाधिनिबंधना व्यवस्था तद्वदेव शरी
रभेदेऽपि भोगानुसंधानप्रसंगात्. नच सुखादीनां साक्ष्यत्वेन साक्षिधर्मत्वाभावात् तद्वैद्व्यवस्थापकत्वासिद्धिः
प्रमातृव्यतिरिक्तसाक्षिणो दुर्निरूपत्वात् तथाहि तस्य द्रष्टृत्वे प्रमातृत्वं न भावाद्द्रष्टृत्वे सुखादिसाधकत्वासि
द्धेर्ब्रह्मरूपत्वे च संसारदशायामनाविर्भावात् साक्षिप्रत्यसंनामव्यवहारांगं न सिध्येत्॥ ❖ ॥

साक्ष्यत्वात् नच साक्ष्याणां साक्षिधर्मत्वं न तथा सति स्वधर्मग्राहकत्वे स्वग्राहकतयात्मवृत्तिविरोधप्रसंगादिति तत्राह नच सुखादीना
मिति साक्षी द्रष्टा नवेति विकल्प्याद्यं दूषयति द्रष्टृत्व इति न हि प्रमातृव्यतिरिक्तः कश्चिद्दृष्टिसंप्रतिपन्नो द्रष्टेति भावः ननु द्विविधं द्रष्टृत्वं ज्ञाना
कारेण परिणामित्वं अलुप्तचिद्रूपत्वं चेति तत्र पूर्वं मनस्येवं अयःपिंडस्येव संक्रांतात्मचैतन्यस्य द्रष्टृत्वं उत्तरं तु सुखवन्निर्विकल्पे तत्र सुखाद्द्रष्टा
साक्षी तेन न प्रमातानापि सुखादिसाधकइति नहि मुक्तिदशायामेव नादृशमभिव्यज्यत इति व्यवहारनिर्वाहकत्वमाह तिरिस्याह

न च प्रमातृनिरिक्तं साक्षिणि किंचित्प्रमाणमस्तीत्याह प्रमाणेति प्रत्यक्षपक्षे हि न तावद्बाह्यमबाह्यत्वात् आंतरत्वेऽपि नि त्यमनित्यं वा। अनित्यत्वे मानसमेव तदिति तद्द्वयः प्रमातैव नित्यं च प्रत्यक्षं न जीवस्येति भावः अस्तु तर्ह्यनुमानं साक्षिप्रत्य क्षे प्रमाणमिति शंकते इच्छादय इति प्रत्यक्षवेद्या इत्युक्ते मानसप्रत्यक्षमादायार्थांतरता तदर्थमनित्यज्ञानातिरि क्तेत्युक्तं। तथा चानीश्वरवादिनं प्रत्यप्रसिद्धविशेषणता तदर्थमेतद्ग्राहकेत्युक्तं अनेनैतद्ग्राहकानित्यप्रत्यक्षमादाय।

प्रमाणाभावाच्च न तावत्प्रत्यक्षमत्र प्रमाणं मानसप्रत्यक्षवेद्यत्वे प्रमात्रंतर्भावप्रसंगात्। इच्छादय एतद्ग्राहकानि त्यज्ञानातिरिक्तप्रत्यक्षवेद्याः अर्थापरोक्षत्वात् रूपादिवदित्यनुमानं प्रमाणमिति चेत् न ईश्वरप्रत्यक्षवेद्यतया सिद्धसा धनत्वात् अनीश्वरवादिनां चेच्छादय एतद्ग्राहकानित्यानुमानातिरिक्तानुमानवेद्याः वेद्यत्वादिति साधनादाभा समानयोगक्षेमत्वात्। अनित्यप्रत्यक्षवेद्यत्वे बाधकाभावाच्च। सुखादिविशिष्टस्यात्मनः स्वाश्रितज्ञानवेद्यत्वे कर्मकर्तृत्वविरोधप्रसंगो बाधक इति चेन्नैवं स्वरूपमात्रेण ग्राहकस्य विशिष्टस्वरूपेण कर्मत्वेऽप्यविरोधात्॥

च साध्यप्रसिद्धिः पक्षे चैतद्ग्राहकानित्यज्ञानत्वानधिकरणत्वमेतद्ग्राहकत्वानधिकरणत्वात्र संभवतीति तद्द्वयत्वेन व्याघातात् त स्माद् नित्यज्ञानत्वानधिकरणं किंचिन्नित्यप्रत्यक्षमादाय तद्ग्राह्यत्वमिच्छादीनां सिध्यतीति नित्यसाक्षिप्रत्यक्षसिद्धिरित्यर्थः अत्र तार्किकः प्राह ईश्वरेति अनीश्वरवादीत्याभाससमानयोगक्षेमतामाह अनीश्वरेति शक्यते हि नित्यमपि किंचिदनुमान मेवं साधयितुमित्यर्थः विपक्षे बाधकाभावाच्च शंकिताप्रयोजकतामाह अनित्येति॥ ॥

न केवलमस्मन्मतएवेयंगतिः अन्तःस्वरूपेणग्राहकत्वं सुखादिविशिष्टाकारेणग्राह्यत्वमित्यनुपहितोपहितभेदाश्रय-
णांभवतोप्येवंविधभेदाश्रयणमेवकिंचित्करणमित्याह अन्यथेति आत्मैकाध्यस्तबुद्धिर्हिप्रमाता नाकर्तेति बोध्यत इत्यर्थः
उदाहरणांतरमाह अविद्येति निर्विकल्पचैतन्यस्यसर्वसाक्षित्वादिविकल्पाभावादविद्याविशिष्टस्यसाक्षित्वमित्यर्थः श्रु-
तिरप्यात्मनोग्राह्यग्राहकतांदर्शयतीत्याह ब्रह्मेति ननुतत्रतत्रश्रुत्यादयएवतथात्वेप्रमाणमिति नविरोधः नह्यत्रापिसू-
मानमितिपरिहरति प्रमाणेति एवंप्रत्यक्षानुमानेसाक्षिणिदूषयित्वाअर्थापत्तिंदूषयति।एतेनेति।अन्यथापीतिमानसत्वे।

अन्यथात्वन्मतेपिकर्तृत्वकरणत्वयोरेकत्रसमावेशोनस्यात् अभ्युपगम्यतेहिकेवलायाबुद्धेः करणत्वमात्मविशिष्टरूपे-
णचकर्तृत्वं अविद्याविशिष्टस्यसाक्षित्वंकेवलाविद्यायाश्चसाक्ष्यत्वमितिचस्वीकारात् ब्रह्मवाइदमग्रआसीत् तदात्मानमे-
वावेदहंब्रह्मास्मीतिचात्मनएववेद्यवेदकभावश्रवणात् प्रमाणवत्वेनविरुद्धस्याप्यभ्युपगमे प्रकृतेप्यहंसुखीत्यनु-
भवसद्भावात् नासौदंडवारितः एतेनसुखादिप्रतिपत्त्यन्यथानुपपत्तिरपिसाक्षिसिद्धौप्रमाणमितिपरास्तम् अन्यथाप्युप-

पत्वेपिविरोधाभावस्योक्तत्वादित्यर्थः ननुचक्षुरादिपरस्परव्यभिचारिकरणजन्यानियानिज्ञानानितेष्वुजानामिजानामीत्यनु-
गतः कश्चिदनुसंधातात्मावत्रमीयते सचस्फुरन्नेवानुसंधातुमर्हति इतरथाजानामीतिव्यवहारानिष्पत्तेः नचतस्यज्ञानांतर-
तःस्फुरणं अनवस्थाभयात् तस्माद्यः स्वप्रकाशः सकलस्यानुभूत्यनुसंधाता साक्षी सोर्थापत्तिसिद्धः अथवायदिदंव्याप्तमज्ञानेष्वनु-
संधानरूपमद्राक्षमित्यादितत्स्फुरणमंतरेणनघटतेऽनुव्यवसायश्चनोत्पन्नस्तत्संवेद्यविप्रतिपन्नेश्चतस्तत्रहतिसाधकसाक्ष्यर्थाप-

अत्र स्फुरणानुसंधात्रा हि भवितव्यं तच्च संविदाश्रयत्वेनापि संभवति न चानवस्था तस्य स्वप्रकाशत्वादिति प्राभाकरः परिह-
रति ज्ञानानामिति तार्किकपक्षे तु पूर्वोक्तरीत्या चेन्नि विरोधपरिहारेण मानसप्रत्यक्षमादाय परिहर्तव्यं आगमं साक्षिणि नि-
षेधयति नापि साक्षीति चेतनाचेतन इत्यर्थः तदस्येश्वरमादायाप्युपपत्तेरिति भावः किंच साक्ष्यस्य साक्षिधर्मत्वं न घटत इति ।

ननु व्यभिचारिकरणाजन्यज्ञानानां चेतन्यस्वरूपमनुगतमनुसंधातारमंतरेण प्रतिसंधानानुपपत्तिः सा-
क्षिणि प्रमाणं । ज्ञानानां स्वयंप्रकाशत्वात् तदाश्रयतया सिद्धस्य स्थिरस्यात्मनः पूर्वोत्तरकालीनज्ञानानु-
संधानोपपत्तेः । एतेन प्रमातृप्रमाणप्रमेयप्रतीत्यन्यथानुपपत्तिरपि परास्ता त्रिपुटीप्रत्यक्षवादे घटमहं
जानामीति त्रितयप्रतिभासोपपत्तेः नापि साक्षी चेता केवलो निर्गुणश्चेत्यागमः प्रमाणं तस्या ह्यादीसनद्वीश्वरस्य
सर्वपरोक्षदर्शिनः प्रतिपादनात् ॥ तदेवं न साक्षिणः सिद्धिः सिद्धावपि न साक्ष्याणां धर्मत्वसंगतिः ॥ आनंदो वि-
षयानुभवो नित्यत्वं चेति संति धर्मा इति साक्ष्याणामपि तद्धर्मत्वस्वीकारात् किंचाकाशो विशेषगुणवद्व्यापक-
द्रव्यान्यः द्रव्यत्वाद्घटवदित्यनुमानादपि आत्मनां सुखादिविशेषगुणवत्त्वसिद्धिः ॥ ० ॥



वक्तुमेव न शक्यत इति पंचपादीविरोधादित्याह सिद्धावपीति साक्षीरूपस्यात्मनो विशेषगुणाधर्मवत्त्वेप्यनुमानमाह किंचेति द्र-
व्यान्य इत्युक्ते घटाद्यन्यत्वेनार्थान्तरतानिरासार्थं व्यापकद्रव्यान्य इत्युक्तं तथापि कालदिगन्यत्वेनार्थान्तरतानिरासार्थं विशेषगुणवदित्यु-
क्तं यस्माच्च विशेषगुणवतो द्रव्यादाकाशोऽन्यः स आत्मा आकाशस्य पक्षत्वेन तदन्यत्वासंभवात् घटत्वाकाशान्यत्वेन साध्यसिद्धिः ॥

फलितमाह तथाचेति सिद्धांती समाधातुमुपक्रमते अत्रेति तत्राविद्याया जडनिष्ठत्वं तावन्न संभवति अविद्यया जडस्य
तज्ज्ञं भराणे तथाकारणस्य कार्याच्छिन्नत्वायोगा दत्र नीति प्रसंगाच्च नहि सा स्वप्रकाशा तस्या आश्रयोपि चेज्जडः केनैषा प्र-
काश्येत तस्मात्तन्निष्ठत्वं वक्तव्यं यत्प्रकाशादेषापि प्रकाशत इति चैतन्यनिष्ठत्वमायाति तत्रापि न जीवाश्रया पूर्वोक्तदो-
षात् यथा वक्ष्यते अनंगीकारपराहतादिति नच ब्रह्मपक्षेपि दोषसाम्यं तदसिद्धेरित्यभिप्रेत्य ब्रह्माश्रितत्वपक्षोक्तदूषणा

तथाच न ह्यवस्थातत्तेषां नानात्वसिद्धिः। अत्रोच्यते। यत्तावदुक्तं। सर्वज्ञत्वाद्ब्रह्मणो नाविद्येति तदयु
क्तं यतः स्वरूपतः प्रमाणतो वा सर्वज्ञत्वं द्विधा स्थितं। तच्चोभयं विनाविद्यासंबंधं नैव सिध्यति
॥५॥ स्वरूपप्रज्ञया चेत्सर्वज्ञत्वं ब्रह्मणोभ्युपगम्यते तदा असंगस्य ब्रह्मणो नाविद्यामंतरेणाशे
षार्थसंगतिरिति सर्वज्ञत्वोपपत्त्यर्थमेव साभ्युपगमनीया॥ प्रमाणतः सर्वज्ञत्वेपि प्रमातृत्वस्य
प्रमाणप्रमेयसंबंधस्य चाविचारितरमणीयानाद्यविद्यासंबंधमंतरेणासिद्धेः सर्वज्ञत्वमवि
द्यावत्तामाक्षिपति। तत्तु प्रतिक्षिपतीति कुतो विप्रतिषेधः॥

तिपरिहरति यत्तावदित्यादिना स्वरूपत इति द्वैधा हि सर्वज्ञत्वं संभवति स्वभावभूतप्रज्ञया वा यथा तावकेश्वरस्य प्रमाण-
जनितप्रज्ञया वा यथा वा तावकयोगिनामुभययाप्यविद्यासंबंधमंतरेण नोपपद्यत इति श्लोकार्थः विवृणोति स्वरूपेत्या-
दिना यया दृग्दृश्ययोराध्यासिकसंबंधो नान्यस्तथोपपादितं प्रथमपरिच्छेदे मिथ्यात्ववादे प्रमातृत्वस्येति॥ ६॥

४
वि॰प्र॰
टी॰न॰
१९

प्रमाणजनितज्ञानाकारपरिणामी प्रमातानाम नत्वनिर्विकल्पकचिन्मात्रात्मनः परिणामसंभवः नापि केवलजडवृत्तेर
न्ध्यस्तायाः प्रकाशाभासपरिणामस्तस्मादविद्यात्मनोरितराध्यासविवक्षितः प्रमाता स चेन्द्रियाद्यधिष्ठाता इतरथा ते
षां करणत्वमस्य कर्तृत्वं च नोपपद्यत इति न च तेष्वहं ममाभिमानहीनस्य तदधिष्ठातृत्वमस्ति परकरणेष्वदर्शनात्
न चासंगस्याविद्याध्यासमन्तरेणाहङ्काराभिमानसंभवः प्रमाणप्रमेययोः संबंधस्य चाध्यासिकत्वमधस्तादेवोपपा

ननु प्रकाशरूपस्य कथमप्रकाशरूपाविद्याश्रयत्वं परस्परविरोधिनोस्तमःप्रकाशयोरिवाधारा
धेयभावानुपपत्तेरिति चेन्नैवं। विकल्पासहत्वात् किमप्रकाशशब्देन प्रकाशाभावः उत प्रका
शादन्यत् न हि रूढं वा विवक्षितं नाद्यः अविद्याया भावाभावविलक्षणत्वेनाभावत्वानभ्युपग
मात् द्वितीये तु दृष्टान्ताभावः॥ किं खलु चित्प्रकाशादन्यत्तदाश्रयेण भवतीति मां प्रत्युदा
ह्रियेत सर्वस्य जडस्य चित्प्रकाशाश्रयत्वाभ्युपगमात्॥ ९॥

एम॰
१९

दितं तत्प्रमाणजनितत्वमपि सर्वज्ञत्वमविद्यावत्त्वकल्पकमेवेत्यर्थः एवमविद्याश्रयत्वं सर्वज्ञत्वमनुरुणद्धि ननु विरु
द्धौ नयुक्तं स्वरूपविरोधमाशंक्य परिहरति ननु प्रकाशेत्यादिना विद्यायाः प्रकाशत्वमभिप्रेत्य नञः कोऽर्थोऽभिप्रेत इ
ति विकल्प्य प्रथमे असिद्धिमाह नाद्य इति द्वितीये व्याप्त्यसिद्धिमाह द्वितीय इति नाविद्या चैतन्याश्रया चेतनान्यत्वादिति
हि तदा साधनीयं न चैवं क्वचिदपि व्याप्तिर्मां प्रति संप्रतिपन्नास्ति प्रत्युत विरुद्धाश्चाविद्यातिरिक्तस्य चिदेकाश्रयत्वेन व्याप्तेरित्य

॥ ... ॥

त्विदेकाश्रयत्वसमत्वात्तस्य सम विरोधपक्षो दूरापास्त इत्याह तदेकेति ननु यदि नाविद्याया विज्ञानेन विरोधस्तर्हि तेन
न विनिवर्त्स्यतेत्यनिर्मोक्षो ब्रह्माश्रयवादिनामिति तत्राह नचाविरुद्धेति यद्यपि स्वरूपचैतन्यं न निवर्तकमविद्यायास्तद
श्रयत्वात्तत्प्रकाशकत्वात् नित्यनिवृत्तिप्रसंगाच्च तथापि वाक्यजनितब्रह्माकारचित्तवृत्तिफलकारूढचैतन्यं तच्छाया
पन्ना वा चित्तवृत्तिरविद्यानिवर्तिका दृष्टा हो बोधो बोधेद्धा तु हि विद्याविद्यानिवृत्तिहेतुरिति हि दृष्टा इति भावः विज्ञानस्येति

तदेकाश्रयस्य तेन सह विरोधासंभवान्न तन्नीयोपि नचाविरुद्धत्वादनिवृत्तिः वेदान्तवाक्यजनितेन
ब्रह्मैकाकारेण विज्ञानेन तदवच्छिन्नेन वा चित्प्रकाशेन तन्निवृत्त्युपपत्तेः नच विज्ञानस्य निवर्तकत्वे तद
भावादनिवृत्तिः भावे वा तन्निवर्तकान्तरस्याभ्युपगन्तव्यत्वादनवस्थेति वाच्यं कारणनिवृत्त्यैव तन्निवृत्ते
रप्यत्र सिद्धत्वात् नच कार्येण कारणस्यानिवृत्तिः संस्कारेण तज्जनकस्य ज्ञानस्य स्मरणेन तज्जनकसंस्का
रस्यान्यशब्देनोपात्तशब्दस्य च परीक्षकैर्नाशाभ्युपगमात् लौकिकैश्चारणिप्रभवेनाशुशुक्षणिनाऽरण्योः
कदलीफलोद्गमेन वा कदलीकाण्डादेः प्रत्यक्षदर्शनाच्च ॥ ९ ॥

तःकरणपरिणामस्येत्यर्थः ननु विद्याकार्येणान्तःकरणपरिणामेन कथं कारणाविद्यानिवृत्तिरविरोधात् नहि जातु घ
टेन मृन्निवर्तमाना दृष्टचरीति तत्र लौकिकपरीक्षकाणां बहुशः संमतत्वादित्याह नचकार्येणेत्यादिना ननु निमित्त
निवर्तकत्वेप्यसमवायिनिवर्तकत्वं न दृष्टमिति तत्राह अन्यशब्देनेति अथोपादाननिवर्तकत्वं न दृष्टचरमिति तत्राह प्रत्य

४
सि·प्र·
टी·न·
२०

एवमविद्याश्रयं निरूप्य तद्विषयं निरूपयति ननु भवत्वेवमित्यादिना। ज्ञायमाने विषयेऽविद्या न संभवतीत्युक्तं पूर्व-
पक्षिणा तदसिद्धमित्याह मां न जानामीति यथा च ज्ञानाज्ञानयोर्भिन्नविषयताऽसंभवः तथोपपादितं भावरूपाज्ञान-
वादे किंच विद्याविद्ययोस्तावत्समानविषयत्वं वक्तव्यमितरथातिप्रसंगात् न च जगद्विषयिणी विद्या संभवतीति वि-

ननु भवत्वेवं ब्रह्माश्रयाऽविद्या न स्यादस्य को विषयः किं स्वयमेव ब्रह्म उत नेह तदुभयं वा सर्वथाप्य-
नुपपन्नं सर्वज्ञस्य तत्तद्विषयज्ञाने सति तत्र तत्राज्ञानासंभवादिति चेन् मैवं मां न जानामि त्वदुक्तमर्थं न जा-
नामीति चावभासमानेऽपि विषये तस्याः स्वानुभवसिद्धत्वात् जडस्याविद्यानिर्मितत्वेन तद्विषयविद्यानुपप-
त्तौ तन्निवर्त्याविद्यायास्तत्रासंभवाच्च जीवाश्रयाविद्यापक्षोऽङ्गाविनास्तु दोषास्तदनंगीकारादेव परास्ताः यत्तु ब्र-
ह्मैवाविद्याश्रयत्वे विद्वदविद्वद्गुरुशिष्यबन्धमोक्षव्यवस्था न स्यादिति तदसत् यावदविद्यं सर्वव्यव-
स्थानां स्वप्नवदुपपत्तेः निवृत्तायां तस्यां न काचिदपि व्यवस्था न चाविद्यानिर्मितस्य गुरोः
कल्पितत्वेन विद्यावत्त्वानुपपत्तिः स्वप्नद्रष्टृविद्यावत्तयैव कल्पनोपपत्तेः॥ ६॥

राम·
२०

षयं चैतन्यमेवाविद्याया अपि विषय इत्याह जडस्येति एवं ब्रह्माश्रयत्वपक्षोक्तदूषणानि परिहृत्य जीवाश्रयत्वपक्षो-
क्तदोषाननंगीकारेणापरिहरति जीवेति दूषणान्तरमनूद्य दूषयति यत्त्वित्यादिना तत्र किमनिवृत्तायामविद्यायां व्यवस्था-
ऽभावः निवृत्तायां वाऽऽद्ये प्राह। यावदिति द्वितीये प्राह निवृत्तायामिति॥

ननु भवतु स्वमते विद्यावतो गुरोः कल्पितत्वं नापि कल्पितस्यार्थक्रियानुपपत्तिस्तथापि परमार्थः कोपि न निरूपितः स्या-
न तत्र च्छिष्याणामपि स्वस्वशिष्यगुरुतया कल्पितत्वादित्युक्तदोषोपरिहार्य इति तत्राह नचगुरोरिति शिष्याविद्याक-
ल्पितो गुरुरिति वदतामस्माकं शिष्यशब्देन किमवच्छिन्नचैतन्यमभिप्रेतमित्यवबुध्यते भवान् अनवच्छिन्नं वा आद्ये

नचगुरोः शिष्याविद्याकल्पितत्वे शिष्याणामपि स्वीयस्वीयशिष्याविद्याकल्पितत्वान्न कोपि परमार्थः
स्यादिति वाच्यं विकल्पासहत्वात् गुरुशिष्यादिशब्दैः किं केनचित्परिच्छेदेन कवलीकृतं चैतन्य-
मभिधीयते किं वा निरस्तसमस्तभेदं नाद्यः परिच्छिन्नस्य परिकल्पितत्वादेवाविद्याश्रयत्वानुपपत्ते
द्वितीये तु सिद्धसाधनं यस्मादस्माभिरप्येतदेवाभिधीयते। विध्वस्तसमस्तविकल्पं चिन्मात्रमेव ब्रह्म।
स्वाविद्यापरिकल्पितानन्तविकल्पान्पश्यत् संसरतीति तन्नाहृशमेव चाकारमभिप्रेत्य गुरुरिति शि-
ष्य इति चाभिलप्यते। नतु परिच्छिन्नं कंचनाकारं॥ न चैतत्परिच्छिन्नानामविद्या कथं नहि मदविद्या-
निर्मितत्वं मदविद्यानिर्मितत्वमिति वादिप्रतिवादिनोरन्येषां च कोलाहल इति चेन्न॥ ७६७॥

ऽनधिगतपराभिसंधिरायुष्मान् नह्यस्माभिरविद्याकल्पितस्य चिदवच्छेदस्याविद्याश्रयत्वमभ्युपेयते कस्तर्हि शिष्य-
शब्दार्थः अज्ञानमात्रमनवच्छिन्नं चैतन्यमित्यवगच्छतु भवान् द्वितीये त्विष्टप्रसक्तिस्तदेतदभिप्रेत्याह विकल्पासह-
त्वादित्यादिना अनुभवविरोधं शंकते नचैतत्परिच्छिन्नानामिति॥

४
वि॰प्र॰
टी॰न॰
२१

यथाहिस्वप्नदृश्यपुरुषाणामज्ञानितया शिष्यगुर्वादिभेदेन प्रतीयमानानामपि नाज्ञानित्वं किंतु यस्तान्सर्वानवच्छेद
त्कल्पयत्यस्यैवेति तन्निष्ठैवाविद्या न तन्निवर्तकविद्या च एवमिहापि सकलकल्पनासाक्षिभूतचैतन्यस्याविद्यैवं तथा।
विधकल्पनोपपत्तेर्नायं व्यवहारोऽवच्छेदेनविद्याकल्पक इति परिहरन्ति मैवं विनैवेति एतेन स्वात्मानमेव कल्पितभेदं
गुरुः शास्तीत्येतदपि समर्थितं। गुरुशब्देनावच्छिन्नानभिलापादित्याह एतेनेति यत्तु न पृथग्गुपदिशेत् उपदिशन्वाम
न्मुक्तत्वेव मुक्तस्त्वमित्युपदिशेदित्युक्तं तत्राह अविद्यानिमित्तेनेति शास्त्रप्रामाण्यादेवेति अत्र वामदेवादिमुक्तिप्रतीतेस्तावन्न

मैवं। विनैव तत्तत्परिच्छेदेष्वविद्यां स्वप्ने इव परस्मिन्नेव ब्रह्मणि गुरुरिति शिष्य इति चायमिति चाहमिति चैक-
स्मिन्नेव नानाप्रतिभासः स्वप्नदृशीव चिदात्मनीत्युक्तत्वादित्यलमतिकर्दमेन। एतेन स्वात्मानमेव कल्पितभे-
दं गुरुः शास्तीत्यत्राभिहितोपालम्भः परास्तः परमार्थेन उत्पन्नविद्यामुक्तः अकश्चिच्छास्तीत्यनङ्गीकारात्
। अविद्यानिमित्तेन च गुरौ स्वाप्नइव कस्मादित्थं कुरुते कस्मान्नेति पर्यनुयोगायोगात् यत्पुनरनादौ संसारे नकश्चिद
पि मुक्तः अभविष्यन्ति मुक्तिरिति प्रत्याशा न संभवति। विद्योत्पत्तिरप्यनुपपन्ना गुरुसंप्रदायाभावादिति तदपि
प्रत्युक्तं। शास्त्रप्रामाण्यादेव भविष्यति मुक्तिरिति प्रत्याशोपपत्तेः॥ ॥ ॥

विरोधः स्वप्न इव मुक्तामुक्तकल्पनायाः संभवात् न च तच्छास्त्रप्रतिपादितं तथा स्वप्नवैलक्षण्यमपि मैतव्यं तच्छास्त्राणा
मतत्परत्वात् न च देवताधिकरणन्यायः अद्वितीयासंगचैतन्यब्रह्मविद्यासंबंधप्रतिपादकश्रुतितदङ्गयुक्तिजातविरोधेन
न्यायानवतारात् अखिलकल्पनानिवृत्तिस्तु चैतन्ये शास्त्रप्रामाण्यादेव भविष्यतीति न च तद्दृष्यतत्परं मुक्तौ नाम्यर्थलिंगावग
मात् भवदङ्गीकाराच्च यथा च सर्वमुक्तिवादिना हैतिनामितः पूर्वमसंजातापि मुक्तिः सर्वजीवानां शास्त्रप्रामाण्यादेव भवि

एम॰
२१

अथानुमानान्तराध्यवसायस्तदत्रापितुत्वंशाक्यनेहियोयत्साधनमनुतिष्ठतीति व्याप्तिर्गृहीतुं विभ्रमत्वादिनिवावि
शेषत इतिभावः यत्त्वात्मभेदे प्रमाणमुक्तं आत्मा आत्मप्रतियोगिकान्योन्याभाववान्नितत्रपारमार्थिकत्वं साध्यते।
व्यावहारिकंवोभयथापि दूषणमाह प्रथमप्रयोग इत्यादिना द्वितीयानुमाने दूषणमाह द्वितीयेति तत्र तावदात्मनां प
रस्परभेदो न सिध्यति आत्मनिभेदमात्रसाधनात् तस्यच दृश्यप्रतियोगिकतयाप्युपपन्नेस्तदव्यवस्थितिं वदतोभेद।

नचगुरुसंप्रदायाभावः विहृत्तपापरिकल्पितगुरोस्तदुपपत्तेरुक्तत्वात् प्रथमप्रयोगे च पारमार्थिका
न्योन्याभावत्वसाधने साध्यविकलो दृष्टान्तः अद्वैतवादिभिः घटस्यापि वास्तवान्योन्याभाववानभ्युपगमात् व्या
वहारिकसाधने च सिद्धसाधनत्वात्। द्वितीयप्रयोगे च कालात्ययापदिष्टता एको देवः सर्वभूतेषु गूढ इति
श्रुत्याबाधात्। नचैषाश्रुतिरीश्वरपराः प्रसक्तनिषेधप्रसंगात्। नहीश्वरस्य प्रतिभूतं भेदो लोकतो वेदतः परी
क्षकसंमत्या वा प्रसक्तः नचतस्यापि नियंतृतया सर्वभूतानरवस्थानं य आत्मनि तिष्ठन्निति श्रुतेरिति वाच्य
म् आत्मेश्वरभेदाभावस्य तत्रतत्रश्रुतिषु बहुशः प्रतिपादनात् ॥ ९ ॥ ६ ॥ ९ ॥

खंडनोक्तदोषा आवर्त्तनीयाः भवतु चात्मभेदपरता तथापि कालात्ययापदेश इत्यर्थः। सन्नतिपक्षत्वं चासमि व्याप्तत्वा
देऽस्याभिरूपदर्शितं ईश्वरेऽप्रसंगमेवाह नहीश्वरस्येति किंच सर्वभूतानां तरात्मत्वव्यपदेशादपि प्रत्यगात्मनएवाप्येक
त्वव्यपदेशः न तटस्थेश्वरस्य यात्वन्तर्यामितया न तटस्थेश्वरपक्षेप्यन्यथासिद्धिरुक्तानामनूद्य निराचष्टे नचतस्यापीति

राम

४
वे.प्र.
सि.न.
२२

नकेवलंश्रुत्यंतरे अंतर्यामिब्राह्मणस्यैवात्मभेदो निराकृत इत्याह अंतर्यामीति ननु तर्हि यस्यात्मनि तिष्ठन्नित्यात्मेश्वरयो
राधाराधेयभावस्य का गतिरित्यत्राह यथात्मनीति यथा हि घटाकाशो महाकाशो वर्तत इति व्यपदिश्यते न तु स्वरूपतया तत्।
त्रानुगतत्वादत एव च महाकाशाधीनो घटाकाश इति व्यवहारः न ह्यत्राप्यौपाधिकजीवात्मनः स्वरूपत्वात्परमात्मा तत्रा
तिष्ठन्निति तन्नियमयतीति च परमेश्वराधीनताप्रतिपादनार्थोयं व्यपदेश इत्यर्थः किंच त्वत्पक्षेपि न श्रुत्यर्थः संभवति नि

अंतर्यामिब्राह्मणे च नान्योऽतोस्ति द्रष्टा नान्योतोस्ति श्रोतेत्यात्मभेदनिराकरणात् यस्यात्मनि तिष्ठन्निति चौपाधि-
कस्यात्मनो घटाकाशस्य महाकाशाधीनत्ववत्स्वानुगतात्माधीनतामात्रप्रतिपादनपरत्वात् अन्यथा नित्यद्रव्या
णां स्वानंत्र्यतया परस्पराधाराधेयभावानुपपत्तेरनंगीकाराच्च श्रुतेरानर्थक्यप्रसंगात् न च तत्त्वमसीत्यादावुपास
नापरं तथात्वे प्रमाणाभावात् तथा हि किं प्रमाणांतरविरोधादुपासनापरमुत स्वार्थेनान्यथावगमोपायाभा-
वात् नाद्यः जीवब्रह्मणोः प्रमाणांतरागोचरतयात द्भेदस्यापि प्रमाणांतरागोचरत्वात्॥ ॥ ॥

त्यद्रव्ययोः परापरात्मनोः परस्पराधाराधेयभावानुपपत्तेः व्यापित्वाच्च न कुंडबदरन्यायः तस्मादनिच्छतापि नैरर्थक्यपरि-
हारायोक्तपरिहारार्थः स्वीकर्तव्य इत्याह अन्यथेति श्रुत्यंतरस्योक्तान्यथासिद्धिं परिहरति न च तत्त्वमसीति पदि जीवब्रह्मणोर्भेदः
प्रमाणांतरगोचरस्तर्ह्येकत्वग्राहिप्रमाणैरैक्योपदेशो विरुद्ध्येत न तु तदस्तीत्याह जीवब्रह्मणोरिति ननु परमेश्वरविरुद्धध-
र्मवत्तया नात्र कर्ता भोक्ता दुःख्यहमिति भेदप्रतीतिरस्ति नैस्तहि रुद्धायमागम इति तत्राह विवेति॥
त

एम.
२२

अथवायदि जीवब्रह्मभेदः प्रमाणांतरागोचरः कथं तर्हि तत्प्रतिभास इति तत्राह विंबेति नवास्त्वभेदस्साधिके यमित्यर्थः
तात्पर्यावगमोपायाभावादिति द्वितीयपक्षेऽसिद्धिं दर्शयत्नुपक्रमोपसंहाराभ्यासापूर्वता फलार्थवादोपपत्ति लक्षणा
षड्विध तात्पर्यलिंगानि दर्शयति नापि द्वितीय इत्यादिना अथय इति अथयेऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका
भवंतीत्यत्र ये अतः उक्तात् ऐक्यज्ञानात् व्यतिरेकेणान्यथा मतो भिन्नः परमेश्वरः अहं च तस्माद्भिन्नः संसारीति भेदेन
परमेश्वरं विदुः तेऽन्यराजानः संतस्तदधीनतया स्वाराज्याभावात् क्षय्यलोकाः भवंति अपुनरावृत्ति लक्षणमुक्तिं न प्रति

विंबप्रतिविंबयोरिव भेदावभासोपपत्तेश्च नापि द्वितीयः तत्त्वमसीति नवकृत्वोऽभ्यासादनेन जीवेनेति चार्थवादोपपा
नादथ ये अन्यथातो विदुरिति भेददर्शननिंदनादथ संपत्स्यत इति फलश्रवणादैक्यमेवाद्वितीयमेतदात्म्यमिति
चोपक्रमोपसंहारयोरैकरूप्यादपूर्वत्वान्मृदादिदृष्टांतैश्चोपपादनात् अन्यत्राप्यहं ब्रह्मास्मि स एष इह प्र
विष्टो योऽन्यां देवतामुपास्ते स इदं सर्वं भवतीत्यादिश्रवणादैक्यत्वे तात्पर्यावगमात् तद्वास्य विजिज्ञाविति
तरति शोकमात्मवित् तमसः पारं दर्शयति भिद्यते हृदयग्रंथिर्ब्रह्मवेद ब्रह्मैव भवतीति विद्यायाश्च अविद्यानिवृत्ति
ब्रह्मात्मभावफलकत्वश्रवणात् उपासना विज्ञानस्याप्रमाणत्वादविद्यानिवर्तकत्वायोगात्

पश्यंते मृत्युरूपं संसारं च प्रतिपद्यंत इति भेदनिंदाश्रवणादित्यर्थः एवं छांदोग्यश्रुतौ लिंगादि दर्शयित्वा बृहदारण्यकेऽपि दर्श
यति अन्यत्रापीति अतोऽप्युपासनापरत्वमस्य नास्तीत्याह तद्वास्येत्यादिना ननूपासनापि विद्यैव अतः सापि किमित्यवि
द्यानिवर्तिका न भवेत् तत्राह उपासनेति नह्युपासनाविधिर्विषयतात्विकत्वमप्यपेक्षते योषिदग्न्यादावदर्शनात् क्रि
येव चैवोपासना विधेयत्वान्न प्रमितिः नहि प्रमितिः पुरुषाधीनात्मलाभा वस्त्वधीनत्वात्तस्मादुपासनाना विद्यानिवर्तिके

४
चि.अ.
टी.न.
२३

इतोप्युपासनापरत्वमयुक्तमित्याह परमार्थेन इति किमभिन्नस्यैवसतोजीवस्यब्रह्मणैकत्वमुपासनयोत्पाद्यतेभि न्नस्यवानाद्यः अभेदस्यपूर्वमेवसिद्धत्वात् भेदस्यचतत्रभ्रांतिमात्रतया विद्यैकनिवर्त्यत्वात् द्वितीयेतुस्थितस्यजीवेब्र ह्मैक्यंनस्यैवानोभयथाप्येकत्रविरुद्धत्वादपरत्रस्वरूपनाशेनापुरुषार्थत्वादित्यर्थः इतोप्युपासनापरत्वंनघटते यतो

परमार्थेनाभिन्नस्यात्मनोब्रह्मात्मत्वासंभवात्स्थितस्यनष्टस्यवान्यस्यान्यात्मत्वायोगात् उपासनपरत्व स्यवक्तुमयुक्तत्वात् वेदभवति विद्वान्नबिभेति। पश्यन्प्रतिपदेकोमोहः कः शोकएकत्वमनुपश्यतइत्या दिनाविद्यातत्फलयोः समकालीनत्वप्रतिपादनात् विधेयज्ञानापूर्वजन्यत्वेचतदयोगात् नेहनानास्तीत्य त्रचतत्प्रत्ययाश्रवणेननानात्वस्यनिषेधात् अप्रसक्तप्रतिषेधप्रसंगस्यचपूर्वमेवदर्शितत्वात् नाना- भूतस्यकार्यस्यप्रतिषेधेचकारणादन्यत्रकार्यस्याभावेनवाक्यस्यतन्मिथ्यात्वेपर्यवसानात्। उपासना- विधिपरत्वस्यनिषेधाद्वेदभेददर्शननिंदायास्तत्परत्वायोगात्॥

विद्योदयसमसमयमेवमोक्षः श्रूयतेश्रुतिषु उपासनापरत्वेह्यपूर्वव्यवधानात्तदनुपपत्तेरित्याह वेदभवतीत्यादिनाने ह नानास्तिकिंचनेत्यस्यापिसमस्तद्वैतनिषेधपरत्वमुपपादयति नेहेति व्याख्यानस्यायंमिथ्यात्ववादेग्रंथः भवतुब्रह्मणिनानाभू तवस्तुनिषेधस्तथापिकथंमिथ्यात्वसिद्धिर्यावतान्यत्रापिसत्वंसंभाव्येतेहनिषिद्धघटवदितितत्राहकारणादन्यत्रेतियत्तुभे ददर्शननिंदाऽभेदोपासनाविधिपरानतत्वपरेत्युक्तंतत्राह उपासनेति॥ ॥

एम.
२३

यास्त्वात्मभेदे श्रुतयः पूर्वपक्षिणोदाहृतास्तासां कस्चिन्नभेदविषयतयान्यथासिद्धिमाह द्वासुपर्णेत्यादेश्चेति ननु लोको-
पि प्रत्यक्षाद्यन्यतमो निर्दोषेति विशेष इति तन्सिद्धत्वेपि प्रामाणिकत्वमेवापनतिरित्युक्तं तदसत् देहात्मभावादौ व्यभिचा-
रादित्याह लोकसिद्धत्वेपीति पातुसुखादिव्यवस्थान्यथानुपपत्तिरुक्तानापरिहरतीति व्यवस्थेति दुर्निरूपतामेव दर्शय-
ति व्यवस्थाशब्देनेति अत्र किं भिन्नधर्माणां युगपदेकत्रावस्थानानुपपत्तिरधिकरणभेदसाधिका उत भिन्नाधिकरणधर्मा-
णामुक्तविधानुपपत्तिरुत विरुद्धधर्माणामुक्तविधानुपपत्तिरिति अत्राद्यं दूषयित्वा द्वितीयं दूषयति भिन्नाधिकरणेति।

द्वासुपर्णेत्यादेश्च लोकसिद्धभेदानुवादकत्वात्। लोकसिद्धत्वेपि भेदस्य देहात्मभाववत्सविभ्रमादेशिकत्वा-
दिवत्त्वप्रामाणिकत्वाप्रसङ्गात्। व्यवस्थानुपपत्तेश्च दुर्निरूपतया भेदासाधकत्वात्। व्यवस्थाशब्देन धर्मभेद-
मात्राभिधाने दाहपाकादेरिव धर्मिभेदासाधकत्वात् भिन्नाधिकरणधर्मभेदाभिधाने चान्योन्याश्रयत्वा-
त्। परस्परविरुद्धधर्मोक्तौ च विरोधस्य विचारासहत्वात् सहानवस्थानस्यासिद्धेः एकस्मिन्नप्यात्मनि पा-
देमे वेदना शिरसि मे सुखमिति युगपत्सुखदुःखयोरनुभवात् अणुपरिमाणस्य मनसो युगपत्प्रदेशद्वयेन स-

तृतीये प्राह परस्परेति कोयं विरोधः सुखादीनां किं सहानवस्थानं किं वा वध्यघातकभावः उत भावाभावरूपत्वं आद्ये
प्राह सहानवस्थेति ननु कथमणुपरिमाणस्य मनसः शिरः पादप्रदेशाभ्यां युगपत्संबंधः येन तत्तत्प्रदेशवर्तिसुखदुः-
खयोर्युगपदुत्पत्तिः स्यादतो समानाधिकरणक्रमेणोत्पन्नसुखदुःखयोर्भ्रान्तिरेव यौगपद्यप्रतीतिरिति तत्राह अणुपरि-
माणस्येति त्वगिन्द्रियं हि निखिलशरीरव्यापकत्वात् युगपच्छीतोष्णाभ्यां सन्निकृष्यते तच्चैकेन मनसाधिष्ठीयते तेन तस्योभ-
यविषयज्ञानोत्पत्तौ युगपत्सुखदुःखयोरुत्पादेन विरुध्यते त्वग्द्वारा च युगपत्सन्निकर्षाधिष्ठानादुभयविषयमेकज्ञानं

ननु भवतु युगपज्ज्ञानं तथापि नैकत्र द्वयोरवस्थानं नहि यावदात्मसुखदुःखयोरन्यतरानुपलंभात् किंतर्हि येन शरीरप्रदे-
शेन कंटकादिसंयोगः समजनि तदवच्छिन्नात्मप्रदेशेन मनःसंयोगात्तत्रैव दुःखादय उत्पद्यंते तत्र च सुखदुःखयोर्भिन्नप्रदे-
शावस्थितत्वादस्त्येव सहानवस्थानमिति तत्राह नत्वात्मप्रदेशेति अथवाऽसमवायिकारणमनःसंयोगक्रमात्सुखदुःखयोः क्र-
मोत्पादः किं न स्यादिति तत्राह नत्वात्मप्रदेशेति अणिवति योऽसौ दिव्यापितया नोपलभ्येतेत्यर्थः दूषणांतरं चाह सकलेति म-
नःसंयुक्तप्रदेशस्याणुपरिमाणतया तत्र सुखस्य निखिलशरीरव्यापितानोपलभ्येतेत्यर्थः अलं वा विवादेन विनश्यदविन-

कर्षाभावेपि त्वगिंद्रियेण व्यापकेन युगपत्संनिकर्षात्तत्तत्प्रदेशावच्छिन्नात्ममनःसंनिकर्षस्य च सुखदुः-
खनिदानत्वांगीकारे सुखदुःखयोरणुमात्रतयोपलंभप्रसंगात् सकलदेहव्यापितया च तयोरनुत्पादप्रसंगात्॥
विनश्यदविनश्यतोश्च सुखदुःखयोः सहावस्थानस्य स्वयमेवांगीकारात् वध्यघातकभावस्य च नाज्ञानैकको-
त्यं हंति नाप्यन्याधारमिति न्याये न सहावस्थानाक्षेपकत्वात् व्यवस्थायाश्च कल्पितभेदाश्रयत्वेनाप्युपप-

श्यतोर्भवत्वेवं सहावस्थानमंगीक्रियत इत्याह विनश्यदिति द्वितीयपक्षं प्रतिक्षिपति वध्यघातकेति नन्वस्त्वेवं युक्ति-
परिनिष्पन्नः पंथाः अनुभवस्तु कागतिः नह्येकस्मिन्सुखिनि सर्वे सुखिनो दुःखिनि वा दुःखिन उपलभ्यंत इति तत्राह व्य-
वस्थायाश्चेति अंगीकृत्य सहानवस्थानमयं काल्पनिकभेदमादाय परिहारः एतेन भावाभावपक्षोपि प्रतिक्षिप्तः एकस्मि-
न्नप्यात्मनि सुखादेस्तदभावस्य च भवद्भिरेवांगीकारेणाव्यवस्थापकत्वात् न च भावाभावत्वमपि शंकामधिरोहति उभयोरपि गु-

यत्तु पादाद्यवयवेष्विव निखिलशरीरेष्वेकस्यैवानुसंधानं स्यादितितत्राह अननुसंधानस्येति तत्त्वतोऽनन्तत्वमेवं तत्रोपाधिः तत्तु शरीरभेद इतरथा वर्तमानानेकशरीराधिष्ठातृयोगव्याघ्रस्य नेष्वननुसंधानप्रसंगादितितत्राह वर्तमानेति मीमांसकानां तावदयं दोष उक्तः प्रसंग इत्यर्थः तार्किकान्प्रत्यप्याह योगीति ॥ ननु यद्यपि च स्फुरद्विच्छिन्नस्य शब्दाद्यनुसंधानं नास्ति तथाप्यस्यैवैकस्य तदुपलक्षितोऽनुसंधानादितरथा यत्परं वाहं रूपमद्राक्षं स एव शृणोमीति प्रतिसंधानाभावप्रसंगादितित

अननुसंधानस्य च शरीरभेदादेवातीत शरीरेष्विव संभवात् वर्तमानशरीरेष्वपि निदर्शनाभावादेव योगि नमनंगीकुर्वद्भिः अनुसंधानस्य प्रसंजयितुमशक्यत्वात् योगिसद्भावाभ्युपगमेपि तयनावच्छिन्नस्यात्मनः।
शब्दाद्यननुसंधानवदेकशरीरविशिष्टस्य शरीरांतरेऽननुसंधानोपपत्तेः॥ उपलक्षितस्य परमात्मनः॥
सर्वज्ञस्य सर्वत्रानुसंधानेपि दोषाभावात्॥ अनुसंधानेपि तस्याभोक्तृत्वादेव योगिवदीश्वरवच्च तस्य तत्तच्छ रीरदुःखपरिहाराय प्रवृत्तेरप्रसंगात् सुखादीनां च साक्ष्याणां साक्षिधर्मत्वाभावेन तद्भेदासाधकत्वात्॥ः

त्राह उपलक्षितस्येति परमात्मानुसंदधात्येवेत्यर्थः ननु कथं दोषाभावः यावता चरणतललग्नकंटकोद्धरणाय पाणि तल व्यापारवच्चैत्रगात्रवेदनापरिहाराय मैत्रगात्रव्यापारप्रसंगस्य दोषत्वादितितत्राह अनुसंधानेपीति यथा हि भवतां स र्वज्ञस्येश्वरस्य योगिनो वा सर्वत्रानुसंधानेप्यप्रवृत्तिस्तत्कस्य हेतोः अभोक्तृत्वात् एवमस्मन्मतेपीत्यर्थः यच्च साक्ष्यतया सु खादेः साक्षिधर्मत्वाभावाद्व्यधिकरणतयाऽव्यवस्थापकत्वपूर्वपक्षिणाशंकां दूषितं तदपि समर्थयते सुखादीनां चेति॥ ॥

यत्तु साक्षिणोपि द्रष्टृत्वे प्रमातृत्वेऽन्तर्भावः इतरथा व्यवहारानंगत्वमित्युक्तं तत्र द्रष्टृत्वेपि प्रमातृत्वेऽन्तर्भावं परिहरति साक्षिण इति प्रमाणेत्यर्थः प्रमिणोति स प्रमाता नातो नैवं मसावित्यर्थः ननु तर्हि जाग्रदादौ ज्ञानादिसाधकत्वं तस्य न स्यात् अनुपरत प्रमाणव्यापारत्वात् तदानीं मत्तो व्यवहारानंगत्वं तदवस्थमिति तत्राह तस्य चेति अन्तर्भावात्स्वरूपतयेत्यर्थः साक्षिणो नार्किकं प्रत्यनुमानमाह चैत्रेति तदध्यक्षेण चैत्रप्रत्यक्षेणेत्यर्थः इदं च विशेषणं पूर्वोक्तेश्वरप्रत्यक्षेणार्थान्तरतापरि

साक्षिणश्च प्रमाकरणासंनिधानेपि सुषुप्तावज्ञानसाधकस्य प्रमातृत्वेऽन्तर्भावानुपपत्तेः तस्य च जीवान्तर्भावात्साक्षिप्रत्यक्षस्य लौकिकव्यवहारांगत्वोपपत्तेः । न च साक्षिणि प्रमाणाभावः यतः चैत्ररागः ॥
स्वविषयानित्यज्ञानातिरेकिणा तदध्यक्षेण संवेद्यः प्रत्यक्षत्वात्पटादिवत् ५ विवादाध्यासिताः ।
चैत्रेच्छादयस्तज्ज्ञाहकानित्यज्ञानातिरिक्तेतत्प्रत्यक्षग्राह्याः एतत्प्रत्यक्षत्वादेतत्प्रत्यक्षघटादिवत् । न
चाभासत्त्व मानयोगक्षेमत्वं । अनुमानस्यानित्यत्वप्रसाधने तत्स्वरूणव्याघातात् ॥

हारार्थं न हीश्वरप्रत्यक्षं चैत्रप्रत्यक्षमिति भवतामंगीकारः श्लोकं विवृणोति विवादेति अत्राप्यनित्यज्ञानातिरिक्तेति । अनित्यज्ञानत्वानधिकरणमित्यर्थः ईश्वरप्रत्यक्षवेद्यतयार्थान्तरतानिवृत्त्यर्थमेतत्प्रत्यक्षपदं । मानसप्रत्यक्षवेद्यतया सिद्धसाधनतानिवृत्त्यर्थमेतज्ज्ञाहकेति पदं तथा चेच्छादिग्राहकानित्यापरोक्षसाक्षिसिद्धिः परोक्षादिवेनत्प्रत्यक्षावि षयेषु व्यभिचारनिवृत्त्ये हेतावेतत्पदं अतीन्द्रियेषु व्यभिचाराय प्रत्यक्षपदं यत्तु नित्यानुमानस्यापि साधकतयाभाससमानयो

जन्यत्वगर्भमनुमानलक्षणमित्यत्र तार्किकसंमतिमाह व्याप्यादित्यादिना नच नित्यप्रत्यक्षाभ्युपगमेपि प्रत्यक्षलक्षणाव्याप्तिः
साक्षात्कारिज्ञानत्वस्य तल्लक्षणत्वादीश्वरप्रत्यक्षस्य तार्किकैरंगीकारात् मोक्षदशायां भाट्टैरविनाशिनोऽपरोक्षसुखज्ञानस्यां
गीकारात् गुरुमतेपि साक्षात्कारिज्ञानत्वस्यैव तल्लक्षणत्वाद्यथाह भाट्टः साक्षात्प्रतीतिः प्रत्यक्षमिति स्वानुमानस्य च विपक्षेबा
धकतर्कमाह मानसप्रत्यक्षेति तत्र तदुक्तं साधनं दूषयति नच स्वरूपेणेति नायमविरोधनियामकः एतस्मिन्विद्यमानेपि कर्तृ
त्वकर्मत्वयोरेकत्र देवदत्तादौ विरोधदर्शनादित्यर्थः यत्तु कर्तृकरणत्वयोरपि बुद्धौ विरोधस्तत्रापि समान इत्युक्तं तदसत् लौ

व्याप्याद्व्यापके बुद्धिरनुमानं। साधनधर्मदर्शनात् साध्यधर्मविशिष्टे बुद्धिरनुमानं लिंगदर्शनात्संजायमानं लैंगिकम
नुमानं त्रिरूपाल्लिंगतोर्थदृगित्यादिलक्षणैरनित्यस्यैव ज्ञानस्यानुमानत्वेन लक्ष्यमाणत्वात् विपक्षे बाधकाभावाच्च
मानसप्रत्यक्षवेद्यत्वे इच्छादेः कर्मकर्तृभावस्यैव बाधकत्वात् नच स्वरूपमात्रेणग्राहकस्य विशिष्टरूपेणग्रा
ह्यत्वेप्यविरोधः। केवलस्य देवदत्तस्य गंतृत्वं कुंडलविशिष्टस्य तु गंतव्यत्वमिति तत्रापि विरोधाभावप्रसंगात्
दृश्यते च कर्तुरप्यन्यत्र करणता योधैः राजा युध्यते वाणेन परसैन्यं कलपतीत्यादिषु नचाविद्याविशिष्टः साक्षीये
न कर्तृकोटिनिविष्टायाश्च अविद्यायाः कर्तृत्वं स्यात् चिद्रूपस्यैवात्मनः साक्ष्यसंबंधे साक्षित्वेन व्यवहारात्॥ ९॥

केनयोर्बहुलमविरोधदर्शनादित्याह दृश्यत इति अन्यत्र लोक इत्यर्थः अत्र हि भट्टा युधकर्तारः अथ च करणतया निर्दिश्यं
त इत्यर्थः। यात्वविद्यायां कर्तृत्वकर्मत्वप्रतिबंदी गृहीता तां परिहरति नचाविद्येति नाविद्याविशिष्टस्य साक्षित्वं नाप्युपलक्षितस्य
किंतु तदुपाधिकस्य अथ कोयं विशेषणोपलक्षणोपाधीनां भेदः शृणु कार्यान्वयित्वेन तु भेदकं यत्तद्विशेषणं नैस्यमिवोपलक्ष
णमनन्वयित्वेन तु भेदकानामुपाधिनोपलक्षणानां प्रसिद्धानयोरपि यावत्कार्यमवस्थायिभेदहेतोरुपाधिता कादाचित्कतया भेदधीहेतु

४
चि.प्र.
टी.न.
२६

यद्वैतदिति इयं हि सा साक्षाद्वैताभावनिबंधनमदर्शनं स्वरूपतश्च दर्शनं वर्ततीत्युक्तिः स्वाभाविकमेव सकलावभासकचैत
न्यं तस्य तत्तद्विषयानुषंगवशाच्च तत्तद्विषयानुभवत्वविकल्प्यतिदर्शयतीत्यर्थः यात्तु तदात्मानमेवावेदिति ब्रह्मणि कर्तृ
कर्मत्वप्रतिवदीगृहीतानां परिहरति ब्रह्मवाइति ननु तथापि कर्मकर्तृत्वाभावे किमायातं यावतैकस्यैव वेद्यत्ववेदितृत्वां
गीकारादिति तत्राह तथा चेति नन्वेवं घटकुटीप्रभातायितं अन्तःकरणविशिष्टस्य प्रमातृत्वं स्वरूपेण च कर्मत्वमिति व

यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यतीत्यादिश्रुतेः ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेदित्यादिना नात्मनः क
र्मकर्तृभावो विवक्षितः किं तर्हि वेदान्तवाक्यजनितब्रह्मैकाकारान्तःकरणवृत्तिरूपया विद्यया स्वतःसिद्धस्यैवात्मनो
ऽब्रह्मत्वभ्रमकारणाविद्यानिवृत्तिः॥ तथा चान्तःकरणविशिष्टस्यैव प्रमातृत्वं विशुद्धस्य ब्रह्मणो वृत्तिव्याप्यत्वमिति
कुतस्तत्रैकस्य कर्मकर्तृभावः। न च नित्यबोधमन्तरेण पूर्वापरबुद्धीनामनुसंधानसिद्धिः॥ आह केन यास्सिद्धे निराकृतत्वा
त् न च साक्षी चेता केवलो निर्गुणश्चेति वाक्यमीश्वरपरत्वादात्मनः साक्षित्वे न प्रमाणमिति युक्तं॥

इत्येकस्यैव कर्मक
र्तृत्वमौपाधिकश्च विरोधपरिहारत्वंगीकारादिति न तदुभयस्याप्यसिद्धेः न तावदन्तःकरणविशिष्टतयास्य कर्तृत्वं॥
आरोपात् अन्तःकरणगतं हि कर्तृत्वं धर्म्यध्यासद्वारा चैतन्ये परमारोप्यते न हि दंडदेवदत्तयोरिव विशेषणविशेष्यभावः तस्मा
दारोपितत्वान्न कर्तृत्वं नापि कर्मत्वं तज्जन्यातिशयताभावात् अस्तु वा कर्मवृत्तिव्याप्यतामात्रेण तथापि कर्तृत्वाभावादेव वैष
म्यमिति अनुसंधानान्यथानुपपत्तिमपि साक्षिणि प्रमाणं समर्थयते न च नित्येति निराकृतत्वात् स्वप्रकाशवादइतिशेषः आगममपि

राम.
२६

किमिति नयुक्तं तत्राह मायाविशिष्टेति नहि निर्विकारचैतन्यस्य मायानिवेशमंतरेण वियदाद्याकारविवर्त्तः संभवतीति भावः तदेवं न साक्षात्सुखादेः साक्षिधर्मत्वमित्युक्तं यत्तु पंचपादीवचनमुदाहृतं तन्नयरिहरति नचानंदादीनामिति यच्चाकाशं पक्षीकृत्य विशेषगुणाव्यापकद्रव्यान्यत्वसाधनेनात्मनो भेदसाधनं तन्नयरिहरति विशेषगुणेति यस्य हि वेदांतिनोवियदधिकरणन्यायेनाकाशोप्युत्पद्यते प्रलीयते चेति मतं तन्मनेकल्पांतरीयाद्विशेषगुणाव्यापकद्रव्यादाकाशादन्यत्वमा

मायाविशिष्टरूपेणास्मिन्केवलोनिर्गुणाइति विशेषणानुपपत्तेः तस्मात्सर्वप्रत्यग्भूतं विशुद्धं ब्रह्मात्रजीवाभेदेन साक्षीति प्रतिपाद्यते। नचानंदादीनां साक्षाणां साक्षिधर्मत्वं। आनंदानुभवयोरात्मरूपत्वात्। नचनित्यत्वं धर्मः विनाशराहित्येनोपलक्षितस्वरूपस्य तथाव्यपदेशात् विशेषगुणाव्यापकान्यत्वसाधनंच प्रतिकल्पं जायमानाकाशंभेदैरेव सिद्धसाधनं अर्थान्तरंत्वीश्वरवादिनामीश्वरेण अनित्यपदप्रक्षेपे। चपूर्वोक्त एव दोषः तथाचसुखादीनामात्मगुणत्वाभावात्तत्तदवस्थानस्तद्भेदसिद्धिः तदेवंस्वाविद्ययात्रह्मैवसंसरति स्वविद्ययाचमुच्यतइति एकाविद्यापक्षेन कश्चिद्दोषस्तथा नानाविद्यापक्षेपि॥ ॥

दायाप्यर्थांतरमित्यर्थः। ईश्वरादन्यत्वमादायाप्यर्थांतरतामाह अर्थांतरंचेति नन्वनित्यविशेषगुणाव्यापकद्रव्यादन्यत्वं सिसाधयिषितं नचेश्वरस्तथेति तत्राह अनित्येति पूर्वोक्तेति आकाशेनार्थांतरेनेत्यर्थः साक्ष्याणां साक्षिधर्मत्वाभावप्रतिपादनमुपहरंति तथाचेति समर्थितमेकजीववादमुपसंहरंति तदेवमिति अत्रचाविद्याशब्देन तदधीनो जीवोलक्ष्यते एकजीवपक्षे दु

ष्टं नानाविद्यापक्षेऽपि नानाजीववादे इष्टापत्तेः॥

(margin, above line 1: ना)

एवंहि किमेकाविद्या किं नाविद्येत्युनरयंग्रथ सामंजस्यं एवं ब्रह्मस्वभावाविद्यासंबंधाद्यऽनुरोधेन विशदमतीनप्रत्येक।
जीवपक्षः समर्थितः येतुमंदमतयो नि विडहैतवासनाकलंकदूनजडनमशेमुख्योवदूमुक्तादिव्यवस्थास्थमनिवद्दास्या
नानाजीवपक्षमेवरोचयंतेतान्प्रति नानाजीवपक्षमप्याक्षेपसमाधानाभ्यामभिदर्शयति नन्वित्यादिनाकल्पकस
ज्ञावात्कल्पनागौरवंनदोषायेति शंकते ननुव्यवस्थेति किमियंपारमार्थिकीव्यवस्थायाऽनेकाऽविद्यांविनानोपप

ननुनानाजीवानांकिमेकाविद्याकल्पिकाउतप्रतिजीवंभिन्नानाद्यःएकमुक्तौसर्वमुक्तिप्रसंगना
द्वयस्थ्येननानाजीवकल्पनायामपिव्यवस्थानुपपत्तेः नद्वितीयः कल्पनागौरवात् ननुव्यवस्थानु।
पपत्तौकल्पिकायांनकल्पनागौरवंदोषः प्रमाणवंत्यदृष्टानिकल्प्यानिसुबहून्यपीतिन्यायादिति
चेत् मैवंव्यवस्थायाः पारमार्थिकत्वेसत्यविद्याकार्यत्वानुपपत्तेस्तत्कल्पनावैयर्थ्यात् अपारमार्थि
कत्वेपुनरेकयैवतस्याःसिद्धेरविद्याभेदकल्पनाव्यर्था अन्यथैकस्याप्यनंतभेदभानायानंताविद्याः
कल्प्याःस्युः संनुकोदोषइतिचेत्।नहिंताभिरेवसर्वकल्पनासिद्धेरात्मांतरस्यनताःकल्प्याः॥



(margin, vertical: [illegible])

द्यनेकिंवाकाल्पनिकी पारमार्थिकीव्यवस्थायांनानाविद्यामभ्यर्थयमानः श्लाघनीयप्रज्ञोमानापितमान् द्वितीयेत्वे
काविद्ययापितत्सिद्धिः अथकल्पगौरवाद्दीनामनेकत्वात्कल्पिकाविद्यायाअपिनानात्वंनहेकस्याप्यनेकघटपटादिप्र
तीत्यर्थमनंताविद्याः कल्प्येरन् तथाप्येकजीवगताऽविद्याभिरेवतत्सिद्धेरनेकजीवकल्पनावैयर्थ्यादित्याह मैवंव्यवस्था

कल

अद्वैतवादिन इति येते अज्ञाः प्रतीयंतेतेन तद्भेदस्याप्यविद्यात्वात्कल्पनाकल्पिकाविद्यानामेकैवेत्यगतानामेवक
ल्पनास्थितिरित्यर्थः किंचनाविद्यावत्तयाव्यवहारमात्राद्विद्याभेदक्लृप्तिः नापिदृश्यभेदादविद्याभेदः स्वप्नेव्यभिचारादि
त्याह किंचेति किंचानेकजीवकल्पनायामपिगुरुशिष्यव्यवस्थानुपपत्तिः समानेत्याह अपिचेति किंचानेकजीववा

नचतेषामप्यज्ञतयाभानात्ताः कल्प्या इतिवाच्यं॥ अद्वैतवादिनस्तद्भेदभानस्यप्रामाणिकत्वाभावा।
दप्रमाणिकस्यचैकाविद्याभिरेवसिद्धेर्नान्यस्या विद्याः कल्पनीयाः। किंचयथांतरेणैवार्थांतरमविद्यांत
रंचस्वप्नचराचरंजगत्तदविद्ययैवतेभान्ति तथाजाग्रत्यपिकिंनभायात् अपिचोत्पन्नविद्यस्यात्मांतरमोहस्त
त्कार्याणिभान्तिनवाआद्येनिवृत्ताविद्यस्यापिभेदभानेनभूमलक्षणाब्रह्मप्राप्तिः द्वितीयेतुशिष्याद्यभानात्
गुरोरुपदेशादिक्रियानभवेत् किंचैकस्यमोहोमोहांतराणांतत्कार्याणांचभानहेतुरुतकल्पकः।
नाद्यः मोहस्यप्रकाशरूपत्वाभावात् नद्वितीयः त्वन्मोहकल्पितस्यसंप्रतिपन्नत्वन्मोहकल्पितवत्॥
अन्यमोहत्वतत्कार्यत्वानुपपत्तेः। नचान्यमोहकल्प्यत्वं। क्लृप्तत्वात्॥ ९॥

दिनापित्वयात्वद्व्यतिरिक्तजीवतदज्ञानादिप्रतिभासस्तेषां पारमार्थिकोनेष्यतेतथाचत्वदविद्यानिर्मितत्वंवक्तव्यंतद्दृश्य-
त्वात् तत्राप्यप्रकाशकत्वात्कल्पकत्वमेवत्वदविद्यायावक्तव्यंतथाचान्यमोहादित्वहानिः त्वन्मोहादित्वसिद्धिश्चेत्याह किंचैक
स्येत्यादिनातत्त्वन्यमोहेनापिकल्प्यत्वादन्यमोहजन्यत्वमप्यस्तितत्राह नचान्येति क्लृप्तत्वात्त्वन्मोहेनेतिशेषः इतरथानवस्था

किंच तन्मोहकल्पितस्य मोहान्तरस्य स्वातंत्र्येणान्यकल्पकत्वमपि नास्तीत्याह नच तत्कल्पितस्येति दूषणान्तरमाह मो-
हान्तरेत्यादिना विमतमोहतत्कार्याणि देवदत्तीयानि दृश्यत्वात्संप्रतिपन्नवदित्यर्थः अथान्यदृश्यत्वाद्वैपरीत्यमपि शंक्यमा-
नुमानं न हेतुदृष्टान्तयोरसिद्धेरित्याह अन्यमोहेत्यादिना स्वपक्षे दृष्टान्तसिद्धिमाह स्वमोहेति ननु मायाविप्रदर्शितप्रासादादि-

नच तत्कल्पितस्यान्यमोहस्यान्यमोहकल्पकत्वं कल्पितत्वात्स्रजनादिवन्मोहान्तरतत्कार्याणां चाप्र-
दृश्यत्वे संप्रतिपन्नवत् तन्मोहत्वं तत्कार्यत्वं च स्यात् अन्यमोहतत्कार्याणां चान्यदृश्यत्वस्यासंप्रतिप-
न्नत्वात् स्वमोहतत्कार्याणां च स्वदृश्यत्वस्योभयवादिसिद्धत्वात् । नचेन्द्रजालादेर्बहुमोहकल्पितस्य बहु-
द्रष्टृकस्यैकस्य प्रसिद्धत्वाद्दृष्टान्तसिद्धिः तत्तन्मोहकल्पितस्य तत्तत् द्रष्टृस्य च भिन्नत्वात् तदेवमयादृ-
ष्टं मया दृष्टमिति संवादस्यचैकरूपभ्रमोत्पादात् तन्निमित्तहर्षशोकादिकार्याणामेकरूपत्वाच्चो-
पपत्तेरेकदृष्टोत्पत्तिकस्यचित् सुप्त्यादावन्येषां विसंवादादेकमोहकल्पितत्वस्य सिद्धेरेकस्यै-
व प्रपंचस्य बहुमोहकल्पितत्वे चैकस्य धियानन्नाशे सर्वमुक्तिरनाशे चैकस्याप्यमुक्तिः ॥ ९

नगरणादेर्मोहविकल्पितस्यापि बहुदृश्यत्ववदत्राप्यन्यमोहादेरन्यदृश्यत्वं किं न स्यात्तत्राह नचेन्द्रजालेति तत्रापि प्रति-
पुरुषं भिन्नमेव दृश्यमित्यर्थः तर्हि संवादः किंनिबंधनस्तत्राह तदेवेति अथैकेनैव बलेन प्रत्यभिज्ञा बाध्यत इति अन्यत्र मोहा-
कल्पितस्यासाधारण्यदर्शनादित्याह एकदृष्टेति एकमोहकल्पितस्य दृष्टान्तस्य सिद्धिर्वाऽनेन समर्थ्यते दूषणान्तरमाह एक-

स्यादेतद्यस्य मोहो न नष्टस्तं प्रति प्रपंचोपि न नष्टस्तद्वदितरं प्रति चानष्टः स्यादित्यस्तु न च विरोधस्तो मगंधोपि कल्पितस्याचिंत्यस्वभा
वत्वादिति तत्राह नचैकमेवेति ननु बहुदृष्टिदृष्टिचंद्रादावप्येवं भाव इति नेत्याह दृष्टिचंद्रेति अनेकजीववादपक्षमुपसंहर
ति तस्मादिति समाधानमुपक्रमते अत्रेति ननु तर्हि कल्पनागौरवमुक्तं तत्राह सतिचेति तर्हि कस्याप्यनेकाविद्याक

नचैकमेव पुरुषभेदेन नष्टमनष्टंचेति युक्तं विरोधात् अविरोधे वा तमेव प्रति युगपदेकमेव नष्टमन।
ष्टं च स्यात् दृष्टिचंद्रादेश्च युगपन्नष्टानष्टत्वस्यासंप्रतिपन्नत्वात् ज्ञानपुरुषभेदेन तस्यापि भेदात् तस्मान्नाविद्या
भेदो नापि तद्भेदाज्जीवभेदसिद्धिरिति स्थितं। अत्रोच्यते। यस्तावदेकैवाविद्येति पक्षे दोषः सोनभ्युपग।
मादेव परास्तः। ब्रह्मण्येवैकस्यानंतानंदनाद्यनंताविद्यावच्छेदेनानंतजीवनिर्भासस्य दत्वाभ्युपगमात्
सतिचकल्पके कल्पनागौरवस्यादोषत्वात् एकस्यापि च जीवस्यानेकाविद्यासद्भावाभ्युपगमात्। इष्टसिद्धि
कारैरपि यावंति ज्ञानानि तावन्त्यज्ञानानीत्यनेकाविद्यास्वीकारात्। नन्वपारमार्थिकत्वे भेदभानस्यैकावि
द्ययैव तत्सिद्धेः अविद्यांतरकल्पनाव्यर्था न व्यर्था विरुद्धविरुद्धरूपशिष्यवंधमोक्षादिव्यवस्थासिद्धेरेवमप्यो।
जनत्वात् एकाविद्यापक्षेपि स्वप्नवद्व्यवस्था सिध्यत्येवेति चेन्न तत्किं स्वप्नकल्पितैकैवाविद्या जाग्रद्व्यवहारक

ल्पयेदन् तत्कार्यप्रमाणानां विभिन्नत्वादितिद्वितीयमित्याह एकस्यापीति एकजीववादिभिरप्ययमर्थोंऽगीक्रियत इत्याह इष्ट
सिद्धीति पूर्वपक्ष्याशयमनूद्य दूषयति नन्वित्यादिना नन्वियमपि व्यवस्थैकाविद्यया शक्यसंपादेत्याशंका स्वप्नजाग्रत्त्वनिवेद्य

ननु निवर्त्ततां नाम स्वाप्न व्यवहार निवर्त्तक प्रबोधेन जाग्रद्व्यवहारोपि किं न भिद्यन्त मितितत्राह इति विनैवेति य
द्यपि जागरावस्थायां न हि रोधिबाधकोदये पि तस्य न निवृत्तिः तथापि तत्त्वज्ञानादज्ञान निवृत्तावस्तिहस्तांतानर।

आद्ये प्रबोधे स्वप्नकल्पिकाविद्या निवृत्तौ जाग्रद्व्यवहारोपि सर्वो निवर्त्तेतेति विनैव प्र।
त्नविद्यां मुक्तिः स्यात्। अनिवृत्तौ वाऽविद्यायास्तत्त्वज्ञानान्निवृत्तौ दृष्टांताभावाद्दृत्तज्ञानादज्ञान। त
निवृत्तिर्न सिध्येत् ननु तत्त्वावभासविरोधिनोरग्रहण मिथ्याज्ञानयोः शुक्त्यादितत्त्वज्ञाना
न्निवृत्तेर्दृष्टत्वाद्दृष्टान्तत्त्वावभासविरोधिनोऽज्ञानस्यापि तत्त्वज्ञानान्निवृत्ति
रवगंतुं शक्यत इति चेत् किमिदमनुमानमाहोस्विदर्थापत्तिरथवा दृ
ष्टांतदर्शनात् संभावनामात्रं। आद्ये तेनैवाज्ञानेनानेकां
॥ ततः प्रबोधेपि तस्या निवृत्त्यनभ्युपगमात्॥

मितिशंकतेन नु तत्त्वेति नैवेति स्वप्नाज्ञानेनेत्यर्थः। तस्यैव विवरणं प्रबोधेपीति विमतं तत्त्वज्ञाननिवर्त्त्यं तत्त्वा
॥ वभासविरोधित्वात् संप्रतिपन्नवदितिह्यनुमानं तच्चेदमनैकांतिकं जाग्रत्प्रपंचइत्यर्थः

अर्थापत्तिप्रसंगं दूषयति नहि द्वितीय इति तत्त्वावभासविरोधित्वं हि न तत्त्वज्ञाननिवर्त्यत्वकल्पकं एतज्ज्ञाननिवर्त्यत्वेप्युप
पन्नं जागरप्रपंचवदित्यर्थः स्वप्नाविद्यावदिति स्वप्नजागरकल्पकाविद्यावदिति विवक्षितं संभावनाप्रसंगं दूषय
ति नतृतीय इति वैपरीत्येपि दृष्टान्तोस्तीत्यर्थः नवयं युक्तिबलात्कल्पयामः येनैते दोषाः प्रादुः ष्युः किंतु नरानिश्रौ

नहि द्वितीयः ज्ञाननिवर्त्यत्वमंतरेणैव तत्त्वावभासविरोधित्वस्य स्वप्नाविद्यावदुपपत्तेः न तृतीयः स्वप्नाविद्यावद्वैप
रीत्यस्यापि संभवात्। अथ श्रुतिप्रामाण्यात् ज्ञानादज्ञाननिवृत्त्यध्यवसायः नहि भूयश्चान्ते विश्वमायेत्यादि श्रुतिप्रामा
ण्यादनेकान्यज्ञानानि तन्निवृत्तयश्च क्रमेणेति स्वीक्रियतां। द्वितीये तु न वाप्यनेकाविद्याकल्पनादोषस्तदवस्थः का
र्यभेददर्शनस्य तत्तत्कल्पकस्याभावाददोष इति चेत्। न तावत्कं भेददर्शनं पारमार्थिकमुत न। आद्ये विरोधान्न
कल्पनासिद्धिः द्वितीये त्वेकस्यैव तत्सिद्धेर्व्यर्थाऽनेकाविद्याकल्पनेति त्वदुक्ता दोषास्तादवस्थ्यमेवोपहन्युः॥ कल्पित
त्वाविशेषेपि किंचिद्व्यावहारिकं यद्देहाद्यात्मभावादिनिवर्त्तकात्मसाक्षात्कारपर्यन्तमनुवर्तते न किंचित्प्रा
तिभासिकं यत्प्रमातृत्वादिव्यवहारे सत्येव निवर्त्तत इत्यवान्तरभेदसिद्धये अविद्याभेदः कल्पनीय इति चेन्न॥

क्रमात्मविदित्यादिश्रुतिबलात्तत्त्वज्ञानमज्ञाननिवर्त्तकमित्यवगच्छाम इति शंकते अथेति परिहरति नहीति अत्र हि वि
श्वशब्दान्मायाया बहुत्वं पुनः शब्दपर्यायभूयः शब्दात् क्रमान्निवृत्तिश्च प्रतीयत इत्यर्थः तदेवं स्वप्नकल्पकाविद्याव्यतिरि
क्ताविद्याकल्प्यत्वं जागरस्येति द्वितीयः पक्षः परिशेषितः संप्रति तस्मिन् स्वसाम्यमाह द्वितीये त्विति उत्तरोचाद्यपरिहारो

ननु स्वप्नजागरयोः कल्पितत्वाविशेषेऽप्यवांतरवैलक्षण्याद्विलक्षणाविद्यापरिकल्पितत्वमिति शंकयित्वापि साम्यं श्लोकेनाह ॥ अविद्येति नहींति च श्लोकस्योपकारः सतिकल्पकद्वयेन द्विवरणपूर्वकमुत्तरार्द्धं विवृणोति ममापीति कृतसमाधानमप्यासे

तर्हि अविद्याकल्पनेऽनेका जाग्रत्स्वप्नविभेदिनी। यथा नथैव कल्प्यंतामनंताः सतिकल्पके ईम
मापि मुक्तामुक्तादिरूपेण व्यावहारिकानंतजीवानां शुकवामदेवपराशरप्रभृतीनां प्रतिभासनात्त
दुपपत्तये तन्नहेतुभूतानेकाविद्याभ्युपगमेपि न दोषः। नचाद्वैतवादिनो मानतस्तेषामभानात्।
भ्रांतिसिद्धानां चैकयैवाविद्यया सिद्धेर्नानंताविद्याकल्पनागुरुकेति वाच्यं विकल्पासहत्वात्। नत्विं
तत्त्वावेदकमानस्यागम्यत्वमुत व्यावहारिकस्य न प्रथमः जाग्रत्स्वप्नव्यवहारभेदस्यापि तथा
त्वेन तत्त्वाप्यविद्याभेदस्यासिद्धेः नचरमः जीवभेदानामनुमानादिव्यावहारिकमानसि
द्धत्वस्योक्तत्वात्। एतेन स्वप्ननिदर्शनेनैकाविद्ययैवालमिति प्रत्यवस्थानं परास्तं ॥ ∴ ॥



ध्यमनुद्यभंग्यंतरेण समादधाति नचाद्वैतेत्यादिना जाग्रत्स्वप्नेति एतत्त्वावेदकमानागम्यं तदेकाविद्याकल्पितमिति
नापि ते व्याप्तिः जाग्रत्स्वप्नयोर्व्यभिचारादित्यर्थः आवहारिकप्रमाणागम्यत्वमसिद्धमित्याह नचरम इति एतेनेति व्यावहारि

दूषणांतरमप्यनुद्यसाम्येन परिहरति यावदधिकारमिति आधिकारिकाणामधिकारनिर्वर्तकानां सह स्वासुसह
स्त्रर्षिव्यासवशिष्ठप्रभृतीनां यावदधिकारमेवावस्थितिः अधिकारे तु परिसमाप्ते इहैव कैवल्यं प्राप्नुवंति तेषां
जीवन्मुक्तिसाधनद्वारा ब्रह्मविद्यायाः पाक्षिकफलत्वनिरासः फलमधिकारणां भोगो नेति इतरे प्रारब्धफले पुण्यपापे भो
गेन क्षपयित्वा संपद्यते विदेहकैवल्यं प्राप्नोतीत्यर्थः यदि च प्रतिबुद्धत्वस्य द्वैतभानमेव न स्यात् तदाविद्यालेशस्वीका

पक्षोऽन्यत्त्वविद्यस्याविद्यांतरतत्कार्ययोर्भानाभानयोर्दोषउद्भावितः सपरस्यापि तुल्यः तत्त्वमते वि
दुषो द्वैतभाने भूमस्वरूपब्रह्मप्राप्त्यभावप्रसंगात्। अभाने च यावदधिकारमवस्थितिराधिका
रिकाणां भोगो नतदितरेषां क्षपयित्वाथ संपद्यत इति सूत्रविरोधात् अविद्यालेशस्वीकारवै
यर्थ्यप्रसंगाच्च। नचाविद्यांतराणां तत्कार्याणां च तदविद्यात्वं तत्कल्पितत्वं चांतरेणोवनस्य भा-
नानुपपत्तिः त्वदभ्युपगताविद्यांतरतत्कार्ययोरपि पर्यनुयोगसाम्यात् स्वप्नाविद्यातत्का
र्याणां जाग्रदविद्यात्वं तत्कार्यत्वं चांतरेणाभानाभ्युपगमात्॥ ९॥

रोऽपि दृष्टैकजीववादिनामित्याह अविद्येति पूर्वपक्षाशयं दूषयति नचाविद्यांतराणामिति एवं वदतोऽव्यवस्थैव स्यात्
त्वन्मोहादीनामप्यन्यमोहादित्वस्यैवशक्यसाधनत्वादित्यर्थः पर्यनुयोगसाम्यमेव दर्शयति स्वप्नेतिशक्यते हि वक्तुं जागरे
॥ पि स्वप्नत्वं दृश्यत्वात् स्वप्नवदिति अथापि यथा तयोरसंकरस्तद्वत्रापीत्यर्थः॥

यच्चान्यदृश्यत्वेबाधकमुक्तंतदप्यनूद्यदूषयति यच्चेति अतिदेशमेवविशदयति एकपुरुषेति ननुतथापितयोरेकदृश्यत्वादेकपुरु
षसंबंधित्वमस्त्येवतद्वद्धि स्वाविद्यातत्कार्याणामपिस्यादितितत्राह अस्माभिरपीति एकसंबंधित्वमस्माकमपिसिद्धमित्यर्थः यत्ति

यत्त्वाविद्यातत्कार्याणामन्यदृश्यत्वेसंप्रतिपन्नवत्तदविद्यात्वंतत्कार्यत्वंचस्यादितितदपिजाग्रत्स्वप्नकल्पि
काविद्याभेदेनैवव्याख्यातं एकपुरुषसंबंधित्वेपिपरस्परंभेदात्। अस्माभिरप्यविद्यानामेवब्रह्मसंबंधि
त्वाभ्युपगमाच्च। इंद्रजालादिनिदर्शनंचपूर्वोक्तन्यायेनपरास्तं। परकल्पितस्यपरंप्रत्यपरोक्षत्वाभावे।
।पिपरोक्षतावभाससंभवस्योक्तत्वात्। एतेनसवितृसुषिनिदर्शनमपिपरास्तं॥ तत्रापितद्वचनान्यपरोक्षत्वो
पपत्तेः तथापिगुरुशिष्ययोः परस्परमपरोक्षत्वाभावेकथमुपदेशः क्रियतइतिचेत् मैवंभूतभौतिकप्रपं
चस्यकृत्स्नस्येश्वरमायाविनिर्मितत्वेपिसर्वापरोक्षत्वोपपत्तेः। यतोवाइमानिभूतानीति अहंकृत्स्नस्य।
जगतः प्रभवः जन्माद्यस्ययतइति श्रुतिस्मृतिसूत्रभाष्यादिभिरस्यार्थस्यप्रतिपादितत्वात्॥ ६ ॥



न्द्रजालादावप्यसाधारण्यमुक्तंतत्परिहरति इंद्रेति पूर्वोक्तन्यायमेवाह परेतियश्चेंद्रजालादेरसाधारण्येदृष्टांतउक्तस्त
मपिदूषयति एतेनेति कल्पितस्यैवप्रपंचस्यानेकसाधारणत्वगमकश्रुत्याद्याह यतइत्यादिना ॥ ६ ६ ६ ६ ॥

नन्वेतेभ्यः कथं साधारण्यं प्रतीयत इति तत्राह जीवाविद्येति यदि हि कल्पितस्य साधारण्यं न स्यात्तदा तत्तदसाधारणाभिर्जी
वीभिरविद्याभिः परिकल्पितं स्यात् तथा च सकलनियंतृसाधारणपरमेश्वरकर्तृकत्वं न भवेत् तथा च तत्त्वमिति पादकस्तु
त्यादिविरोधः यच्च सूत्रकारभाष्यकाराभ्यां जीवकर्तृकत्वनिरासप्रयासः कृतः सोपि दृश्येत्यर्थः दूषणांतरं चाह जीवाविद्ये
ति यत्तु बहु मोह कल्पितत्वेस्त्येकमुक्तौ सर्वमुक्तिदोष उक्तस्तमनंगीकारेण परिहरति एकस्येति ब्रह्माश्रितसकलसाधारणे

अन्यथा शुक्तिरजतादिवज्जीवाविद्यामात्रनिर्मितत्वे जगतो जीवादिकर्तृकत्वनिरासप्रयासवैयर्थ्यात् जी
वाविद्याकल्पितत्वे चेश्वरस्य जीवानामीश्वरो नियंतेत्यादिश्रुतिस्मृतीनामप्रामाण्यप्रसंगात् एकस्य प्रपं
चस्य बहुमोहकल्पितत्वानंगीकारादेव तत्रोक्तदोषाणां दूरपरास्तत्वात्। स्वीयस्वीयविद्यया च स्वस्वाविद्यानि
र्मितकर्तृत्वभोक्तृत्वादेर्बंधस्य सकारणस्य निरासेन नित्यशुद्धबुद्धमुक्तस्वभावस्य ब्रह्मप्राप्तिलक्षणामुक्तेर
प्युपपत्तेः नतु स्वस्वाविद्येति कथं जीवनिष्ठत्वेनाविद्या व्यपदिश्यते ब्रह्माश्रयत्वादविद्याना मिति चे
त्सत्यं ब्रह्मसंबंधित्वेपि तासामवच्छिन्नजीवरूपपक्षपातितया प्रतिभानात् ॥ १ ॥

कमायाविजृंभितः प्रपंच इत्यभिमानः। ननु प्रपंचस्य जीवाविद्याः विजृंभितत्वे जीवगततत्त्वज्ञानादनिवृत्तेरनिर्मोक्षापात इति त
त्राह स्वीयस्वीयेति असाधारणप्रपंचनिवृत्त्यैव मोक्षः न तु साधारणनिवृत्त्या विद्यमानोपि मुक्तं प्रति न भाति प्रविलीननिखिलक
रणत्वादंधं प्रतीव रूपादिरित्यर्थः स्वस्वाविद्येति निर्देशमाक्षिप्य समादधाति ननु स्वस्वेत्यादिना अहमज्ञ इति हि प्रतीतिः ननु ब्र

ननु चिन्मात्रसंबंध्यविद्यायाः कथं जीवपक्षपातित्वं न ब्रह्मपक्षपातित्वमिति शंकां वक्तुसंबंधाविशेषादिति तत्राह ॥
इत्थं हीति द्वेधा हि संप्रदायः अविद्या प्रतिबिंबितचैतन्यं जीव इति वा ऽविद्यावच्छिन्नमिति वा तत्राद्यपक्षउदाहरणा।
मुक्तं अवच्छेदउदाहरणमाह इथ्यते चेति इदानींतु जीवातिरिक्तेश्वरमीश्वराधीनतां च जीवानां तदेकतां च सूत्र

इत्थं हि लोके मुखमात्रसंबंधिनो पि दर्पणस्य प्रतिबिंबपक्षपातित्वं। इश्यते च घटस्याकाशमात्रसं
बंधिनोप्यवच्छिन्नाकाशपक्षपातित्वं तस्मान्न किंचिदवद्यमिति। अपि च सूत्रभाष्यादिवाक्यानां श्रु।
तिस्मृतिगिरामपि मुख्यार्थत्वोपपत्त्यर्थं व्यवस्थैवाभ्युपगन्तव्या ॥ ७ ॥ एवं च सति नेतरोनुपपत्ते
स्तु न शारीरः कर्मकर्तृव्यपदेशाच्च। परात्तु तच्छ्रुतेः। कृतप्रयत्नापेक्षस्तु विहितप्रतिषि
द्धावैयर्थ्यादिभ्यः। यावदधिकारमवस्थितिः। पराभिध्यानात्तु तिरोहितं ततो ह्यस्य
बंधविपर्ययौ प्रकाशादिवत्नैवं परः। असंततेश्चाव्यतिकरः इत्येवमादीनि सूत्रा
णि तद्व्याख्यानपराणि भाष्याणि च सामंजस्येनोपपन्नान्यानि भवंति ॥ ८ ॥



भाष्यश्रुतिभिः क्रमेण साधयति अपि चेति श्लोकं विवृणोति एवं च सतीति इतरः शारीरः कर्मकर्तृव्यपदेशादि
ति एतन्मितः प्रेत्याभिसंभवितास्मीति प्राप्तृप्राप्यतया जीवपरमेश्वरयोः कर्तृकर्मभावनिर्देशान्न कर्मभूतो मनो
मयत्वादिगुणकः शांडिल्यविद्याप्रतिपाद्यः शारीर इत्यर्थः ॥ ७ ॥ ८ ॥

बद्धाबद्धव्यवस्थायामपि श्रौतलिंगमाह तद्योयइति देवानांमध्येयोयोबीप्सयाचाधिकारसंपत्तौसर्वेषामपिमुक्तिः न
तुतार्किकाणामिवबद्धैकस्वभावाः केचिदितिदर्शितं तद्ब्रह्मप्रत्यबुध्यतप्रतिबुद्धवान् सएवतद्भवत् ननुस्वर्गादिष्विव
भेदेनभोगमात्रंस्यात् वं मनुष्यादिष्वपि एकशतमितिमघवानिंद्रः प्रजापतौप्रजापतिसकाशे एकोत्तरशतंवर्षाणि।

तद्योयोदेवानांप्रत्यबुध्यतसएवतदभवत्तथाऋषीणांतथामनुष्याणां तद्धैतत्पश्यन् ऋषिर्वामदेवः
प्रतिपेदेऽहंमनुरभवंसूर्यश्चेतस्मैमृदितकषायायतमसः पारंदर्शयतिभगवान्सनत्कुमारः अभयंवैजनक
प्राप्तोसि एतावदरेखल्वमृतत्वमितिहोक्त्वायाज्ञवल्क्यः प्रवव्राज तद्धास्यविजिज्ञावे कशतंहवैवर्षाणि
मघवान्प्रजापतौब्रह्मचर्यमुवास भृगुर्वैवारुणिः वरुणंपितरमुपससार सब्रह्मविद्यांसर्वविद्याप्र॥
तिष्ठामथर्वायज्येष्ठपुत्रायप्राहेत्येवमादिश्रुतिस्मृतीतिहासपुराणवाक्यानिचमुख्यार्थप्रामाण्यमस्तु।
वीरन्तस्मादेकमपिब्रह्माणेकोपाधिभिरवच्छिन्नंलब्धनानाजीवभावंतत्रबहुमिवयत्रविद्ययाविद्यो।
पाधिनिवृत्तिस्तत्रतत्रमुक्तमिवभवतीतिनानाजीववादेपिबंधमुक्तिव्यवस्थोपपद्यतइतिकेचिदाचार्याः प्रतिपे

ब्रह्मविद्यार्थंब्रह्मचर्यमुवासउषितवानसब्रह्मविद्यामितिसब्रह्माज्येष्ठपुत्रायाथर्वायअथर्वशब्दोयमकारान्तः।सर्वा।
विद्याप्रतिष्ठांब्रह्मविद्यांप्राह स्मृतीतिहासादिवहिरेवद्रष्टव्यं अनेकजीववादमुपसंहरति तस्मादिति उपाधयोऽविद्या इव
हृदयेनबंधमोक्षयोरेकानेकपक्षद्वयेपिदुर्निरूपत्वंप्रदर्श्यतेउक्तंहिसंप्रदायविद्भिः ननिरोधो नचोत्पत्तिर्नबद्धोनचसाधकः नमु

केचित्त्वाचार्यमंडनमिश्रवाचस्पतिमिश्रमतावलंबिनः सत्यज्ञानानंतानंदैकरसब्रह्मात्मनोऽविद्ययातिरोधानं बंधः वि
द्यया तन्निवृत्तिश्च मोक्ष इत्युक्तं तत्र ब्रह्माश्रयविद्याश्रयत्व विषयत्वोपपादनेन जीवापेक्षाविद्यातिरोधानरूपबंधवि
धानिरूपितानिरोधानेन हि तन्न पूर्वपक्षो विवक्ष्यते संप्रत्यविद्यानिवृत्तिलक्षणमोक्षतत्त्वं निरूपयन्नाक्षेपसमा-
धानाभ्यां कापुनरित्यादिना तत्र किं सद्रूपिण्यविद्यानिवृत्तिरसद्रूपिणी वा सदसद्रूपिणी वाऽनिर्वचनीया वा पंचमप्रका-
रा वा आत्ममात्रं वा सत्त्वपक्षेऽपि किमात्मातिरिक्तानतिरिक्ता ——— वा प्रथममेवाह आत्मेति द्वितीये प्राह अव्यतिरि

कापुनरविद्यानिवृत्तिः न तावत्सती। आत्मव्यतिरिक्तत्वेन तस्याः सद्द्वैतनापत्तेः अव्यतिरिक्ते चात्ममात्र-
त्वे सदा निवृत्तेः संसारानुपलब्धिप्रसंगात्। तन्मात्रत्वे चात्मनस्तस्या ज्ञानजन्यतया पूर्वमभावात् अज्ञान
स्यस्वातंत्र्यप्रसंगात् नाप्यसती तुच्छत्वे शशविषाणादिवत्‌ज्ञानाधीनत्वासंभवात्॥ ७ ६ ७ ॥

क्तेचेति तत्रापि वक्तव्यं किमविद्यानिवृत्तेरात्ममात्रत्वं आत्मनो वा निवृत्तिमात्रत्वं आद्ये प्राह आत्ममात्रत्व इति आत्म
नः सदातनत्वादित्यर्थः द्वितीयं दूषयति तन्मात्रेति अविद्यानिवृत्तेस्तात्कालिकतया तन्मात्रात्मनोऽपि तात्कालिकत्वेन पूर्वम
भावादज्ञानस्य सांख्यप्रकृतिवत्स्वातंत्र्यं स्यादाश्रयाभावात् आत्मनित्यत्वादयश्चबहवः कुप्येरन्निति भावः असत्त्वप-
क्षं दूषयति नापीति तत्रापि किं निरूपाख्यमसत्त्वेनाभिप्रेयते यथा शशविषाणादि किंवा सोपाख्यं यथा घटाभावादि
आद्ये प्राह तुच्छत्व इति तद्धुन्यतिस्तस्यसंभवतीत्यर्थः द्वितीये प्राह अभावत्वेति॰॥ ॥

तत्रापि किं निर्वाच्यमिति पक्षः यथा तार्किकप्रभृतीनां मुक्तानिर्वाच्यमिति यथा भवन्नये शुक्तिरजतादि उभयत्रापि क्रमेणादू
षणमाह तस्य निर्वाच्यत्व इत्यादिना तत्कारणीति अविद्याकल्पितेत्यनिर्वाच्यं नाम तथा च कार्यानिर्वाच्य स्थितौ तद्रूपाद्
नेनापि स्यात् नव्यमित्यर्थः नच भावाभावविलक्षणाविद्याया निवृत्तिरभाववदन्यपि युक्तिसहमित्याह भावस्येतिभाव
निवृत्तेरेवाभावत्वमभावनिवृत्तेस्तु भावत्वं प्रसिद्धं तदुभयविलक्षणा विद्यानिवृत्तिः कथमभावः स्यात् एतच्च भावत्वे
पितुल्यमेतेन सदसद्रूपपक्षोपि प्रतिक्षिप्तः अविद्यायाः सदसद्रूपत्वे हि तन्निवृत्तेः सदसद्रूपता स्यात् अनिर्वचनीय

अभावत्वे च तस्य निर्वाच्यत्वेद्वैतापातात्॥ अनिर्वाच्यत्वे च तत्कारणाविद्यावस्थानादनिर्मोक्षप्रसंगात् भाव
स्याभावो निवृत्तिरभावस्य च भावः भावाभावविलक्षणस्याज्ञानस्य कथमभावो निवृत्तिः स्यात् नाप्यनिर्वचनी
याविद्यातत्कार्ययोरन्यतरत्वापातात् नचाविद्यातत्कार्ययोरन्यतरत्वे निवृत्तिमत्त्वमुपाधिरनिर्वचनीय
त्वे न निवृत्तिमत्त्वस्यापि साधनात्॥ नच निवृत्तेर्निवृत्तिमत्त्वेऽनवस्था निवृत्तिमत्प्रध्वंसपक्षे प्रध्वंसमालाव

पक्षं दूषयति नापीति ननु तानिर्वचनीयत्वस्याविद्यातत्कार्यत्वेन प्रतिबंधः निवृत्तिमत्त्वस्य तत्प्रयोजकत्वात् नच
निवृत्तेर्निवृत्तिमत्त्वमस्ति अनवस्थानादपुनरावृत्तित्वव्याकोपाच्च अतो निवृत्तिमत्त्वं व्यावर्त्तमानमविद्यातत्कार्यान्य
तरत्वमप्यतो व्यावर्त्तयतीत्यानंदबोधाचार्योक्तं दूषयति नचाविद्येति साधनव्यापकत्वादनुपाधिरित्यर्थः तत्र च बाध
कं परिहरति नच निवृत्तेरिति यथा हि प्रध्वंसध्वंसवादिनामनवस्थानदोषस्तथैवमित्यर्थः॥ ॥

अपुनरावृत्तित्वविरोधं परिहरति प्रध्वंसध्वंसेति यथा ह्युत्तरोत्तरध्वंसानामपि प्रथमपदार्थविरोधितया तथाऽनु-
न्मज्जनं तथाऽविद्यानिवृत्तिमात्रापाद्यापि प्राचीनाविद्या विरोधित्वादेव तदनुन्मज्जनादपुनरावृत्त्यविरोध इत्यर्थः पं-
चमपक्षं दूषयति नापीति अथ सदसद्विलक्षणत्वेपि किमित्यनिर्वाच्यता तत्राह सदसदिति तत्र यद्दूषणं न्यायरत्नाव-
लीकारैस्तदुद्भावयति दूषयितुं ननु नेदमित्यादिना नन्वियमपि ज्ञाननिवर्त्यैव तत्राह नचेति स्यादेतत् एवंविधाप्यविद्या

प्रध्वंसप्रध्वंसस्येव प्रतियोगिनो बंधस्यानुन्मज्जनादेवापुनरावृत्तिश्रुतेरप्यव्याकोपात् तस्मादनिर्वचनीयत्वेऽ-
विद्यातत्कार्ययोरन्यतरत्वप्रसज्यत एव नापि पंचमप्रकारः सदसद्विलक्षणतया तस्या अप्यनिर्वचनीयत्वप्रसं-
गात् सदसद्विलक्षणत्वमनिर्वचनीयमिति लक्षणांगीकारात् ननु नेदं लक्षणं किंतु ज्ञाननिवर्त्यमनिर्वच-
नीयं न चाज्ञाननिवृत्तिर्ज्ञाननिवर्त्या ज्ञानजन्यत्वात् ज्ञानानिवर्त्यापि च साबाधगोचराऽतो न प्रपं-
चमिथ्यात्वसाधनस्य व्यभिचारं नेह नानास्ति किंचनेति प्रतिपन्नोपाधौ निषेधात्मबाधोऽज्ञा-
॥ ॥ ननिवृत्तेरपि तुल्य इति चेत् मैवमज्ञाननिवृत्तेर्ब्रह्मज्ञानरूपतया तज्जन्यत्वाभावात्।

निवृत्तिर्दृश्या तावदभ्युपेयते आत्मव्यतिरिक्तत्वात् तथा च यदि नेयं ज्ञाननिवर्त्या न हि दृश्यत्वहेतुरत्रैवानैकान्तिक इति तत्रा-
ह ज्ञानानिवर्त्यापीति ज्ञाननिवर्त्यत्वमन्यत् ज्ञानबाध्यत्वं चान्यदित्यभिमानः अथ कथं बाध्यत्वमस्या इति तत्राह नेह ना-
नेति तदेतद्दूषयति मैवमिति नहि विरोध्युदयमंतरेण विरोधिनिवृत्तिर्नाम प्रत्याहश्यते युज्यते चेत्यर्थः ॥ ७ ६ ७ ॥

अत्राचार्यसंमतिमप्याह ज्ञानोर्थ इति मंडनमिश्रसंमतिमप्याह विद्यैवेति तदस्तमयः अविद्यास्तमयः किंच किंजा
त्युपाधावियं व्याप्तिः यज्ज्ञानजातीयजन्यं तत्तज्ज्ञानीयेन ननिवर्त्यत इति किं वा व्यक्तौ आद्ये व्यभिचारमाह ज्ञानजन्ये
ति द्वितीयमुद्भावयति नेतु नत्रेति अत्रापि व्यभिचारमाह मैवमीश्वरेति जगत्संहारेपि सदाशिवदीश्वरज्ञानं निमित्तमेवेति

ज्ञानोर्थसन्तत्प्राप्तिर्वा ज्ञानहानिरितीष्टसिद्धिकारैरभिधानात् विद्यैवेवाद्वयाशंनात्तदस्तमय उच्यत इति प्र
ष्टसिद्धिकारैरप्युक्तत्वात् ज्ञानजन्यसंस्कारे ज्ञाननिवर्त्ये व्यभिचारात् ननु तत्र ज्ञानांतरेण ज्ञानांतरजन्यसंस्का
रो निवर्त्यते न तु तेनैवेति वैषम्यमिति चेत्। मैवमीश्वरज्ञानजन्यस्य जगतस्तत्ज्ञानेनैव निवर्त्यत्वांगीकारात्। उ
त्पाद्य घटं नाशयिष्यामि इत्यभिसंधानस्थले कुलालज्ञानजन्यघटस्य तेनैव ज्ञानेन निवर्त्यत्वदर्शनाच्च॥
अज्ञाननिवृत्तेश्च ज्ञानानिवर्त्यत्वे प्रपंचमिथ्यात्वसाधनस्य तत्र व्यभिचारात् ज्ञानानिवर्त्यत्वेपि बाध्य
त्वात् न व्यभिचार इति चेत्॥ न ज्ञाननिवर्त्यत्वमंतरेण बाध्यत्वस्यानिरूपणात्। सविलासाज्ञाननिवृ
निर्बाध इत्यंगीकरणात् नाप्यात्मैवाज्ञाननिवृत्तिरात्मनः सदातनत्वेनाज्ञाननिवृत्तेरपि तथात्वे संसाराभावप्रसं

भावः अथाप्यनीश्वरज्ञानस्यैवेयं नियतिरिति ब्रूयात् तर्हि तत्रापि व्यभिचारमाह उत्पाद्य घटमिति एकं हीदं ज्ञानं यदुत्पा
द्य नाशयिष्यामीति भावः यच्च ज्ञाननिवर्त्यत्वज्ञानबाध्ययोर्भेदमादाय दृश्यत्वहेतोरनैकांतिकतावारणं तदप्यसत् ज्ञाननिव
र्त्यत्वातिरिक्तस्य ज्ञानबाध्यत्वस्यानिरूपणादित्याह अज्ञानेत्यादिना अपसिद्धांतश्चेत्याह सविलासेति पक्षमुपसंदूषयति ना

४
चिं॰प्र॰
टी॰न
३५

आत्मनित्यत्वव्याहतिमाशङ्क्याह आत्मन इति ज्ञानस्य विशेषणत्व इति ज्ञानस्यात्मेत्यत्र वृत्तिरूपं तावज्ज्ञानं वक्तव्यं स्वरूपज्ञानं प्रतिकर्मत्वाभावात् न च तद्यदि विशेषणं नित्यं च तदा जन्यस्य कथं नित्यत्वमित्यात्मा तावत्संतानरूपेणावेनित्यत्वं तथापि तत्कारणान्तःकरणादेरवस्थानात्संसारस्तो विशेषः स्यादित्यर्थः अथैतद्दोषभयादनित्यमेवाङ्गीक्रियते तदा पुनरावृत्तिरव्याकोप इत्याह अनित्यत्वे चेति ननु ज्ञानोपलक्षितात्मरूपमविद्यानिवृत्तिस्तेन विशेषणपक्षप्रयुक्तदोषद्वयनिवृत्तिरिति तत्राह॥

आत्मनस्तत्त्वज्ञानसाध्यत्वप्रसंगाच्चाज्ञानआत्मा अज्ञाननिवृत्तिर्न स्वरूपेणोवेति चेत्। तज्ज्ञानस्य विशेषणत्वे नित्यत्वे च मोक्षदशायामपि अन्तःकरणादेरवस्थानप्रसंगात्। अनित्यत्वे चाज्ञाननिवृत्तिरूपाया मुक्तेरप्यनित्यत्वापातात्। न च ज्ञानोपलक्षित एवात्माऽज्ञाननिवृत्तिरुपलक्षितत्वस्य नित्यत्वानित्यत्वयोः प्राचीनदोषानुषंगात् तस्मान्नाज्ञाननिवृत्तिरुपपन्नेति॥ अत्रोच्यते। निवृत्तिरात्मा मोहस्य ज्ञानत्वेनोपलक्षितः उपलक्षणनाशेऽपि स्यान्मुक्तिः पाचकादिवत् ॥ यथा लोके सकारणस्य कलधौतविभ्रमस्य ज्ञानाच्छुक्तिरेव निवृत्तिः न च तत्रापि नेदं रजतमित्यन्योन्याभावज्ञानेन निवर्त
(१)क्तमिति युक्तं॥

न च ज्ञानेति अत्राप्युपलक्षितत्वधर्ममादाय दूषणद्वयं सुवचमित्यर्थः पूर्वपक्षमुपसंहरति तस्मादिति॥ आत्मैवाज्ञानहानिरिति पक्षं परिगृह्य तदुपपादयति उपलक्षणेति यथा हि लोके पचनलवनादिक्रियानिवृत्तावपि देवदत्तः पाचको लावक इति प्रतीयते व्यवह्रियते तथात्राप्युपलक्षणज्ञाननाशेऽपि मुक्तिः स्यादिति श्लोकार्थं विवृणोति यथा लोक इति कलधौतं रजतं तच्च शुक्तिज्ञानं रजतविभ्रमनिवर्तकं ज्ञानं शुक्तिरेव तन्निवृत्तिः स्यादपि तु नेदं रजतमित्यन्योन्याभावज्ञानेन तथा च ज्ञानान्योन्याभावस्य वा

राम॰
३५

कुतो न युक्तमित्यत आह अपरिज्ञात इति धर्मितया प्रतियोगितया वा अधिष्ठानस्य पूर्वभावित्वात्तेनैव तदारोपनि-
वृत्तेः संसर्गमात्रारोपस्य चाधस्तादेव निरस्तत्वादन्योन्याभावज्ञानमर्थसिद्धानुवाद इत्यर्थः ननु इदमाकारं ज्ञानमेव
वान्योन्याभावज्ञानजनकं न शुक्तिज्ञानं अतो न कृतकरत्वमिति तत्राह इदमिति तदविरोधात् भ्रान्त्यविरोधात्तज्ज-

अपरिज्ञाते शुक्तिशकले धर्मिप्रतियोगिसव्यपेक्षस्य तस्यैवासंभवात्। परिज्ञाते तु तेनैव तदुपपत्ता-
वितरस्य कृतकरस्य वैयर्थ्यात्। इदमाकारपरिज्ञानस्य च भ्रान्तौ विद्यमानस्य तदविरोधात्। तथेहाप्यनृ-
तजडदुःखानात्मद्वैतविरोधिसत्यज्ञानानंदानंताद्वयलक्षणे ब्रह्मैव वेदान्तवाक्यजनितब्रह्मैकाकारा-
न्तःकरणपरिणामदर्पणप्रतिबिंबितं स्वविलासाज्ञाननिवृत्तिरिति युक्तमभ्युपगन्तुं। न च ज्ञाततत्त्वालक्ष-
णोपलक्षणनाशेन न घटितस्य मुक्तस्याभावप्रसंगः पाचकादिवदवस्थानोपपत्तेः। न हि लोके पच-
नलवनादिक्रियायामनिवृत्तायां देवदत्तः पाचको लावको न भवति न वा तथा व्यवह्रियते एतेनाज्ञा-
ननिवृत्तेरनित्यत्वे पुनरज्ञानस्य संसारस्य चोन्मज्जनापत्तिरित्यादयो दोषाः प्रत्युक्ताः॥ ९ ६ ९॥

तकत्वं न संभवतीति शेषः इममेव न्यायं प्रकृतस्थलेपि योजयति तथेहापीति अनंतेति चानात्मत्वविरुद्धाकारनिर्देशः
अप्रत्यग्भूतं हि वस्तुतः परिछिन्नं भवेदिति उत्तरार्द्धं विवृणोति न च ज्ञातेति ये त्विमं पक्षं दोषबहुलतया मलीमसं म-
न्यमानाः प्राहुः अत्र केचित्परिहारकांतयापरिहारमाचक्षते आत्मैवाज्ञानहानिरिति तेषामनुशयमुन्मूलयति एतेनेति॥
तर्

४
वि॰प्र॰
टी॰न॰
३६

एतेनेत्येतद्धि शद्व्यति शुक्तीति ज्ञानत्वविशिष्टपक्षपरित्यागादेव तत्प्रयुक्तदोषशांतेः पंचमप्रकारे च प्रमाणाभावान्न वि-
रिशेषस्य चैतेनैवोपपत्तेरनुत्थानादिति भावः ननु पुनरपि तत्रैव विभ्रमदर्शनादुन्मज्जनमस्त्येवेति तत्राह पुनरुद्भवा-
त इति नन्वेकमेवाज्ञानमिति तत्राह यावंतीति अंशा वा प्रदेशा वा अवयवा वा वस्तुतंत्राण्यांगीक्रियंत इति न तस्यैवोन्मज्जन-
मिति भावः नन्वत्रापि संसारांतरस्याज्ञानांतरस्य पुनरुद्भवोस्त्विति तत्राह इह चेति आतंको भयं ननु भवत्वेवं संभाव-
ना किंपुनरत्र प्रमाणमिति तदाह श्लोकेन विगीतेति लौकिकविभ्रमनिवृत्त्यार्थांतरतापरिहाराय विगीतग्रहणं तत्त्वात्॥

शुक्तिशकलादौ ज्ञाननाशे तज्ज्ञानत्वोपलक्षणनाशेपि निवृत्तस्याज्ञानस्य तद्विलासस्य वा पुनरुन्मज्जनादर्श-
नात्। पुनरुद्भवतो रजतादिविभ्रमस्याज्ञानांतराधीनत्वात्॥ यावंति ज्ञानानि तावंति संनिवर्त्यान्यज्ञाना-
नीत्यभ्युपगमात्॥ इह च भूयश्चांते विश्वमायानिवृत्तिरिति श्रुतेरशेषाज्ञाननिरासात् पुनः संसारशं-
कातंकानवकाशात्॥ तस्माद्विगीताज्ञानहानिः स्यात्ज्ञानाधिष्ठानमात्रकं। तत्त्वावेदित्वततत्त्वाद्यथा शुक्त्या-
दिकं मितं ४॥ एवं सति यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतो यत्र त्वस्य सर्वमात्मैवाभूदित्याद्याः श्रुतयः सर्व-
स्य द्वैतजातस्यात्ममात्रतया प्रविलयमुपपादयंत्यो मुख्यार्थतामश्नुवीरन् इतरथानिर्वचनीयस्य॥५

अज्ञानहानित्वात् यथा शुक्त्यादिकमिति तदज्ञाननिवृत्तेरुपलक्षणं शुक्त्यादिमात्राज्ञाननिवृत्तिर्यथेत्यर्थः एवमनुमाह॥
कतर्कस्य लीयमनुमानमुक्त्वानुग्राहकमागममप्याह एवं सतीति विजानतः पुंसो यस्यामवस्थायां सर्वाणि भूतानि भवंतीति भूता-
नि कार्यमात्रं आत्मैवाभूत् तत्तस्यामवस्थायां को मोहः कः शोक इति अन्वयार्थः यदि हि पंचमप्रकारः स्यात् तदा कथमात्मैवा-
त्मव्यतिरिक्तं समस्तं वस्त्वभूदिति निर्देशः स्यात् अथ तस्याप्यारोपितत्वाद्वस्तुवृत्तेनात्ममात्रत्वं तर्हि किमनिर्वचनीयता॥६

एम॰
३६

अथचपंचमप्रकारोतिव्याहंतंवक्तुमारब्धं सर्वंयत्रत्वस्येत्यादावपिकदर्थिताउद्विजिताःपीडिताइतियावत् वाद्यर्थ
मुपसंहरति तस्मादिति तदेवमविद्यानिवृत्तिर्मुक्तिरित्ययमर्थ उपपादितः इदानींतत्रैवजीवन्मुक्तिलक्षणावांतरविशेषमु
पपादयतिमुक्तिसिद्धयेतथाहिज्ञानंह्यविद्यानिवर्तकंतच्चतदुदयसमसमयमेवभवितुमर्हतिअविधिलक्षणत्वेनकालां
तरफलत्वाभावात् शुक्त्यादितत्वज्ञानेषुसमसमयतादर्शनाच्च।तदिहयदिजीवतिज्ञानमुत्पन्नमप्यविद्यांननिवर्तयेत्तकावानं
कालांतरेतन्निवर्तनेजीवतएवचज्ञानोत्पत्तिः इतरथातदुत्पादककरणाभावेनानुत्पत्तिप्रसंगात्तद्यदिमुक्तिरस्तिअस्त्येवजीवन्मु

पंचमप्रकारस्यवाअज्ञाननिवृत्तिरूपस्यांगीकारेसंसारदशायामिवकेवलात्ममात्ररूपेणावस्थानासंभवा
दुदाहृताःश्रुतयउपचरितार्थाःकदर्थिताःस्युःतस्मादुत्पन्नात्मविज्ञानस्यज्ञानआत्मैवसविलासाज्ञाननिवृत्तिरिति।
स्थितं।ननुज्ञानआत्मैवचेत्सविलासाज्ञाननिवृत्तिस्तदोत्पन्नविज्ञानस्यशरीरादिप्रतिभासानुवृत्तिर्नस्यात्॥ ॥

क्तिःअथयदिनजीवन्मुक्तिःनास्त्येवमुक्तिरितिमुक्तिसिद्ध्यर्थमेवायंविचारःविद्यासंप्रदायसिद्ध्यर्थमितरथाहितत्वविदःसद्यःशरीर
पातेशिष्याद्यप्रतिभासात्साक्षात्कृततत्वस्यचानुपदेष्टृत्वाद्धिहीनसंप्रदायतयाऽनिर्मोक्षएवपर्यवस्येत्तदुक्तमाचार्यैर्जीवन्मुक्तिप्रकर
णेजीवन्मुक्तोस्तिमुक्तिर्यदीत्यादिनातत्रतावज्जीवन्मुक्तिमाक्षिपति नन्वित्यादिनाअयमर्थःयद्यात्मातिरिक्ताऽसाद्विद्यानिवृत्तिस्तदा
देहपातानंतरमपिशंकासम्भावनयास्याद्धिदुषःशरीरादिप्रतिभासःयदातुज्ञानोपलक्षितात्मैवेतिसमर्थनेतदोपलक्षितात्मनःसदातन
त्वादुपलक्षणानंतरसंबंधयोःसतोरूपलक्षणानातिष्ठ्यतेनिवृत्तेवाविद्येतिवचनीयंतथाचतदाक्रोडितस्थूलसूक्ष्मकलेवरयुगलवि

नन्वविद्यायाः कश्चिदेकदेशोस्ति ज्ञानेनाप्यनिवर्त्यः तन्निबंधनोयं शरीरादिप्रतिभास इति तत्राह नचेति नहि समस्तावि-
द्याविनोदि विज्ञानमेकदेशेऽसमर्थमिति संभवतीत्यर्थः समर्थस्यापि प्रतिबंधं शंकते प्रारब्धेति यदि हि प्रारब्धकर्मणः स्थि-
तिरेव स्यात्स्यात्तदाकारणावशपरिरक्षणं तदेव तु नास्तीति परिहरति मैवं कर्मण इति सत्यत्वप्रसंगादिति ज्ञानबाध्यत्वं हि मि-
थ्यात्वमिति भावः ननु कर्माणि क्षीयंत इति सामान्यवचनमिदं अस्ति चापरा श्रुतिस्तस्य तावदेव चिरमिति विदुषोपि शरी-

नचाविद्यालेशात् तदनुवृत्तिः निवर्तकतत्त्वज्ञानोदयेन क्लेशस्यापि निवृत्तेः प्रारब्धकर्मणा प्रतिबद्धं त-
त्त्वज्ञानं शरीरादिप्रतिभासहेतुमविद्यालेशं न निवर्तयतीति चेत् मैवं कर्मणोप्यविद्याकार्यतया तन्निवृ-
त्तौ तन् निवृत्तेः अनिवृत्तौ च कर्मणस्तत्कार्यस्य च शरीरादेः सत्यत्वप्रसंगात्। क्षीयंते चास्य कर्माणि
इत्यविशेषेणाशेषकर्मणां ज्ञानात् प्रक्षयश्रवणाच्च। नच तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य
इति विदुषो देहपातावधिश्रवणात् प्रारब्धकर्मव्यतिरिक्तकर्मविषयेयं श्रुतिरिति
वाच्यं तस्याः परोक्षज्ञानिविषयत्वात् तदनूपदेक्ष्यंति ते ज्ञानं ज्ञानिन ॥

यातावधिं दर्शयंतीति तथा चैतदनुसारेण प्रारब्धकर्मव्यतिरिक्तकर्मविषयेसा व्यवस्थापनीयेति तत्राह नचतस्यतावदेवेति नेयं
श्रुतिरपरोक्षज्ञानिविषया येन तदेकदेशविषयतया तां संकोचयेद् अपितु परोक्षज्ञानिविषयेति विरोधशंकैव नास्तीत्याह तस्या इ-
ति स्मृतिवत्ताज्जीवन्मुक्तिं शंकयित्वा दूषयति नन्वित्यादिना स्यादेतत् भवतु परोक्षज्ञानिविषया ज्ञानिन इति निर्देशः तत्त्वदर्शिन इ-

तस्मादेतदेव तत्त्वसाक्षात्कारिणां शरीरादिप्रतिभासे प्रमाणमिति तत्राह तत्त्वदर्शिन इति चेति अत्र हि तत्त्वं द्रष्टुं शीलमेषामिति। ता-
च्छील्ये णिनिप्रत्ययविधानात्तत्त्वदर्शनाभ्यासशीलाः प्रतीयन्ते न चापरोक्षज्ञानोदयेऽभ्यासावसरः तदर्थत्वादभ्यासस्य तस्मात्परोक्षज्ञा-
नाभ्यासशीलिन इह विवक्षिताः अत एव तत्त्वमभिव्याहृतं ज्ञानशब्दोऽपि परोक्षज्ञानविषय इत्यर्थः ननु परोक्षज्ञानशालि-
नां तत्त्वदर्शित्वमनुपपन्नं अपरोक्षे परोक्षज्ञानस्यायथार्थतया विभ्रमत्वादित्यत्राह नचापरोक्ष इति स्वात्मा स्वसुखादिच स्व

तत्त्वदर्शिन इत्यपरोक्षज्ञानिन एवोपदेष्टृत्वं दर्शयन्नीश्वरस्तत्त्वदर्शिनामपि शरीरादेस्तद्धेतूनां च कर्मणामव-
स्थानं सूचयतीति चेन्नैवं ज्ञानिन इति परोक्षनिश्चयवतस्तत्त्वदर्शिन इति च तत्त्वदर्शनाभ्यासशीलस्य त-
त्त्वप्रतिपादितत्वात् न चापरोक्षे परोक्षज्ञानविभ्रमः स्वात्मनि स्वसुखादौ च परकीयानुमानादिज्ञानस्याविभ्रम-
त्वात्। कश्चायमविद्यालेशः किमविद्याया एकदेशः किं वा तदाकारान्तरं नाद्यः॥ अविद्याया घटादिवत्सावय-
वत्वानंगीकारात्॥ नापि द्वितीयः स्वाकारनिवृत्तौ तदाकारावस्थानानुपपत्तेः अस्तु तर्हि संस्कारादेव देहप्रति-
भासानुवृत्तिः विनिवृत्तसर्पविभ्रमस्यापि संस्काराद्भयकम्पाद्यनुवृत्तिदर्शनात्॥ ६॥

स्यैतावदपरोक्ष इतरेषां च तत्रानुमानाच्छब्दाद्वा परोक्षज्ञानमुत्पद्यते न च तज्ज्ञानं अवितथार्थत्वादितरथा प्रतिपाद्यप्रमित्याक-
याऽप्रमत्वापात इति भावः एवमविद्यालेशस्थितिरनुपपन्नेत्युक्तं इदानीं लेशस्याविद्याया दुर्निरूप इत्याह कश्चायमिति अ-
नंगीकारादिति निरवयवं न सावयवमित्यंगीकारात् अदृष्टव्यत्वादनादित्वाद्यावयवानारब्धत्वाच्चेत्यर्थः मंडनमिश्रमतमुद्भावयति अस्तु तर्हीति

सांख्यसंमतिमप्याह निवृत्तीतिनदेव दूषयति मैवमिति अन्यथात्वइति अविद्यानधीनतया अनिवृत्तावित्यर्थः नन्वविद्याजन्यत्वाभावे
पि मिथ्यात्वान्नाद्वैतव्याघात इति तत्राह मिथ्यात्व इति भावरूपेत्यभावविलक्षणेत्यर्थः इदं च प्रध्वंसनिवृत्त्यर्थे दूषणान्तरमाह निराश्र
यत्वेति ननु किमिति निराश्रयतायां वृत्ता अविद्यासंस्कारस्याप्यविद्याश्रयभूतात्मैवाश्रयः संस्काराधायकसंस्कारयोरेकाश्रयत्व
नियमादिति तत्राह न चात्मैवेति यथा निरवयवस्यैवाविद्याश्रयत्वं न तु संस्काराश्रयत्वं किं न स्यादित्यत आह कार्येति अपरिणामित्वा

त्निवृत्ति संस्कारवशाच्चक्रभ्रमवद्धृत शरीर इति च तंत्रान्तरेऽप्यभिधानादिति चेन्न मैवं तस्याप्यविद्याका
र्यत्वात्तन्निवृत्तौ तन्निवृत्तेः अन्यथा तस्यास्त्वे द्वैतसत्यत्वापत्तेः मिथ्यात्वे च भावरूपकार्यस्योपादानमन्तरेणानु
पपत्तेः निराश्रयत्वानुपपत्तेश्च न चात्मैवाश्रयः निरविद्यास्संगस्य तस्य तत्कार्याश्रयत्वानुपपत्तेः न च स्थि
तप्रज्ञगुणानां लक्षणानां जीवन्मुक्तविषयत्वं॥ साधकस्यैवावस्थाविशेषप्राप्तस्य
तत्राभिधानात् अतो न जीवन्मुक्तिर्युक्तिमतीति॥

दितिभावः ननु स्थितप्रज्ञलक्षणपरासु
गीतासु दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृह इत्यादिनानन्तसाक्षात्कारिणोऽपि दुःखाद्यनुद्वेगं दर्शयति इतरथा कोऽनुद्वेगं कुर्यात् तथा च
गुणत्रयाध्याये पि गुणातीतलक्षणेषु प्रकाशं च प्रवृत्तिं च मोहमेव च पांडव न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति तुल्यप्रियाप्रिय इत्या
दिना प्रीत्यादिप्रतिभासोऽवसीयते इति तत्राह न च स्थितेति तत्र तावदनुष्ठापकत्वाद्वचनस्यैतेषां संपादनपरं शास्त्रं तथा च साध
कस्यैवं गुणको भवेदित्युच्यते अथवा अपरोक्षज्ञानादर्वागेव कांचिदुत्कृष्टामवस्थां प्राप्तोऽत्र विवक्ष्यते सर्वथापि न जीवन्मुक्तिरिति भाव

समाध्यते अत्रेति राद्धांतहृदयं श्लोकाभ्यां संगृह्णाति सुखप्रतिपत्त्यर्थं अविद्येति पूर्वार्द्धेनाविद्यालेशं विशदयति तस्य च ज्ञानोदयेपि स्थितिमुत्तरार्द्धेन समर्थयते उत्तरश्लोकेन च फलितमाह लेशेति अपसिद्धान्तशंकानिवृत्तये गुरुसंप्रदायप्रदर्शनपूर्वकमविद्याया आकारानाकारिनिवृत्तावाकारस्थितिं च दर्शयन् प्रथमार्द्धं विवृणोति एवं हीत्यादिना आराध्यपादाः

अत्र वदामः अविद्यालेशशब्देन मोहाकारान्तरोक्तितः ॥ ज्ञानस्याप्रतिबन्धात्त्वप्रबलारब्धकर्मभिः १० लेशानुवृत्तौ तज्जन्यकर्मादेरनुवृत्तितः उत्पन्नात्मावबोधस्य जीवन्मुक्तिः प्रसिध्यति ११ एवं हि न्यायसुधायामाराध्यपादैरुपपादितं संसारमूलकारणभूताविद्या यद्यप्येकैव तथापि तस्याः सन्त्येव बहवः आकारास्तत्रैकः प्रपंचस्य परमार्थसत्त्वभ्रमहेतुर्द्वितीयोऽर्थक्रियासमर्थवस्तुकल्पकः तृतीयस्त्वपरोक्षप्रतिभासविषयाकारकल्पकः तत्राद्वैतसत्यत्वाध्यवसायेन समस्तद्वैतसत्यत्वकल्पकाकारो निवर्तते ॥ अर्थक्रियासमर्थप्रपंचोपादानमायाकारस्तत्त्वसाक्षात्कारेण विलीयते । अपरोक्षप्रतिभासयोग्यार्थाभासजनकस्तु मायालेशो जीवन्मुक्तस्यापि वृत्तः समाध्यावस्थायां तिरोहितोऽन्यदा देहाभासजगदाभासहेतुतयानुवर्तते ॥ ०—ऽ—० ॥

स्वगुरवः ज्ञानसिद्धिकाराः पादशब्दश्च पूजार्थस्तत्स्मरणीनं च वेदान्तप्रकरणं न्यायसुधा अपरोक्षेति अपरोक्षप्रतिभासविषयभूतो य आकारः पारमार्थिकत्वार्थक्रियासामर्थ्यरहिततया ज्ञानस्यापि प्रपंचस्य शुक्तिरजतादिवत्तत्समर्थकस्तृतीय आकार इत्यर्थः एतेषां च क्रमेण निवर्तकज्ञानशरीराणि दर्शयति तत्रेत्यादिना सत्त्वसाक्षात्कारेणेति अद्वैतात्मवस्तुसाक्षात्का

ननु यदि साक्षात्कारे जातेऽपि जीवन्मुक्तस्य समाध्यवस्थायां तिरोहितोऽन्यदा चोद्बुद्धो वर्तेत कश्चिदाकारः केन तर्हि तस्य निवृ
त्तिस्तत्राह प्रारब्धेति उक्तार्थे श्रुतिमपि प्रमाणयति श्रुतिरपीति इन्द्रः परमेश्वरः इदि परमैश्वर्ये इति भैमसेनिस्मृतेः आदि
शब्देन भूयस्त्वान्ते विश्वमायानिवृत्तिरित्याद्या गृह्यते मायानुप्रक्तेति मित्यादावेकत्वेन प्रतिपादितमाया मायाभिरित्यादि बहु-
त्वाभिधानमाकारभेदस्य घटत इति भावः उक्तार्थं व्याचष्टे न च लेशस्यापीत्यादिना इदानीं प्रारब्धकर्मणां ज्ञानापेक्षा-

प्रारब्धकर्मफलोपभोगावसाने तु निवर्तते श्रुतिरपीन्द्रो मायाभिः पुरुरूप ईयत इत्याद्या मायां
विविधाकारां दर्शयति। न च लेशस्यापि विरोधितत्वज्ञानोदयान्निवृत्तिः किं न स्यादिति वा
च्यम्॥ प्रबलैः प्रारब्धकर्मभिर्ज्ञानस्य प्रतिबद्धत्वात्॥ तथा हि विद्यार्थानि कर्मा
णि कर्मान्तरारब्धशरीरे फलं जनयन्ति अन्यथा ज्ञानार्थानामपि कर्मणां भोगा-
र्थत्वप्रसंगात् तथा च शरीरारंभककर्माण्युपजीव्य ज्ञानार्थानि क
॥ ॥र्माणि न तद्विरोधेन स्वफलं प्रयच्छन्तीति युक्तम्॥



याप्राबल्यमुपजीव्य तयोपपादयति तथा हीत्यादिना तत्त्वज्ञानैरेव कतिभिश्चित्कर्मभिर्ज्ञानार्थमेव देहमुत्पाद्य तत्त्वज्ञान-
मुत्पाद्यते किमिति कर्मान्तरारब्धशरीरोपजीवनं ज्ञानोत्पादकानां तथा च ज्ञानोत्पत्तौ देहनिवृत्तेर्न जीवन्मुक्तिरिति तत्रा
ह अन्यथेति भवतु कर्मान्तरारब्धशरीरे फलजनकत्वमेषां ततः किमिति तत्राह तथा चेति॥ ॥

ननु भवतु ज्ञानोत्पादककर्मणां प्रारब्धकर्मापेक्षया दौर्बल्यं ज्ञानस्य तु किमायातं येनोत्पन्नं ज्ञानं ——— तानि न निवर्तयतीति त
त्राह तथा चैतेति उत्पद्यमानमेव ज्ञानमन्यशेषप्रतिबद्धशक्तिकं कारणवशादुत्पद्यतामिति भावः यत्तु प्रारब्धकर्मणां निरुपादानतया स्थि
तिरेव नोत्पद्यते कुतः प्रतिबंधकत्वमित्युक्तं तत् परिहरति न च कर्मणामिति निरुपादानकत्वमसिद्धमित्यर्थः ज्ञप्ता वितरेतराश्रयं शंकते
नन्वेवमिति नात्र प्रारब्धकर्मभिरेवाविद्यालेशावगतिः श्रुतिवशादपि शक्याधिगमत्वादिति परिहरति मैवं भूयश्चान्ते तस्याभिध्यानाद्योज

तथा चैतैः प्रतिबद्धशक्तित्वात्तत्त्वज्ञानमविद्यालेशं न निवर्तयति। न च कर्मणामप्यविद्याकार्यतया तन्निवृत्तौ निवृ
त्तिः तज्जनकाविद्यालेशस्यानिवृत्तेः नन्वेवं सतीतरेतराश्रयत्वं। तत्त्वज्ञानशक्तिप्रतिबंधककर्मणामवस्थानादवि
द्यालेशानुवृत्तिः तदनुवृत्तौ च कर्मणामनुवृत्तिरिति मैवं भूयश्चान्ते विश्वमायानिवृत्तिरित्यत्र भूयो निवृत्तिरिति वि
शेषणादुभयविधमायाकारनिवृत्तेराकारान्तरानुवृत्तेश्च मानान्तरेणाधिगमात् प्रतीतावितरेतराश्रयत्वा
भावात्॥ अन्ते विश्वमायानिवृत्तिरिति च श्रवणात् प्रारब्धफलकर्मलक्षणस्याविद्याशक्तिप्रतिबंधकस्य फलो
पभोगेन निवृत्तौ प्रतिबंधाभावेन तत्त्वज्ञानान्निःशेषाविद्यानिवृत्तिरिति प्रतीतेश्च॥

॥ तात्त्वभावाद्भूयश्चान्ते वि
श्वमायानिवृत्तिरिति श्वेताश्वतराणां मंत्रोपनिषदि श्रूयते अत्र च भूयो निवृत्तिर्विश्वमायानिवृत्तिरिति प्रतीयते तत्र विश्वग्रहणेना
नेकमायाकारप्रतीतिः तेषां च क्रमेण निवृत्तिर्भूयो निवृत्तिरिति पौनःपुन्यापरपर्यायक्रियासमभिहाराभिधायिना भूयःशब्देनाव
गम्यते। अंते निवृत्तिरित्यनेन विदेहकैवल्यावस्थायां विलीयमानः कश्चिदाकारः प्रतीयते। अंते विश्वमायानिवृत्तिरिति च पूर्वमशेषमा

भूयश्चान्ते विश्वमायानिवृत्तिः॥

तदेवं प्रारब्धकर्मणां प्रमाणमार्गेण विदेहनिर्वाणावस्थानाधिगमात् क्षीयंत इति सामान्यश्रुतिः संकोचमर्हतीत्याह अत एवेति ननु तस्य ता
वदेवेति श्रुतिः परोक्षज्ञानिविषयतया प्रत्याख्यातेति तत्राह तद्धास्येति तेन तद्धा अयं योऽन्यत इत्यर्थः ननु परोक्षज्ञानोऽत्यन्ताविदमाश्चर्यम।
त्रुश्रुतेः भवति हि मूर्खेष्वनुत्पद्यमानं परोक्षज्ञानमपि बुद्धिमत्सूत्पद्यमानमाश्चर्यहेतुरिति तत्राह अन्यथेति अधीतवेदो विदितपद
तदर्थसंगतिकः अवरोऽधिक्रियते न च तस्य परोक्षज्ञानसाधनोत्पत्तिराश्चर्यहेतुः प्रत्युतानुत्पत्तिर्गर्हैव स्यादिति भावः श्रुतेरन्यथासिद्धिं।

अत एव क्षीयंते चास्येति सामान्यश्रुतेः प्रारब्धकर्मव्यतिरिक्तकर्मनिवृत्तिपरत्वोपपत्तिः। तस्य तावदेवेति विशेषविरमितिविदुषः।
प्रारब्धकर्मतत्कार्ययोरवस्थानाभिगमाच्च तद्धास्य विजज्ञाविति विस्पष्टज्ञानोपजननस्याश्चर्यवत्प्रतिपादनात्परोक्षज्ञान।
विषयत्वानुपपत्तेरन्यथाश्रुतवाक्यस्य परोक्षज्ञानस्यावश्यंभाविनया तत्प्रतिपादनवैयर्थ्यात् न च ज्ञानिनस्तत्त्वदर्शि
न इति स्मृतिः परोक्षनिश्चयवतस्तद्व्यसनशीलस्य प्रतिपादिका दर्शनशब्देन साक्षात्कारस्यैव रूपादिदर्शि
नस्येवाभिधानात्॥ स्वात्मनि चापरोक्षे परोक्षज्ञानस्य विभ्रमत्वात्। न च सुखादिविषयपरकीयानुमानादिज्ञानेव्य
भिचारः स्वापरोक्षस्य स्वपरोक्षज्ञानविषयत्वे विभ्रमत्वांगीकारात्॥

११ परिहरति न च ज्ञानिन इति किंचापरोक्षे परोक्ष।
ज्ञानं विभ्रांतमेव न च परस्य परात्मानुमाने व्यभिचारः स्वापरोक्षे स्वपरोक्षविज्ञानस्य विभ्रमत्वाव्यभिचारादित्याह स्वात्मनि चेति यत्त्वाकार्य।
विद्यानिवृत्तौ वा कारणस्थितिर्न संभवतीत्युक्तं तत्परिहरति न चाकारीति अनुवृत्तव्यावृत्तात्मकं हि समस्तं वस्तु भाट्टैरभिप्रेयते यथाहुः कार्यरूपे
णानात्वमभेदः कारणात्मना हेमात्मना यथाऽभेदः कुंडलाद्यात्मना भिदेति तत्र यथा कटककेयूराद्याकारनाशे नाकारिनिवृत्तावप्याकारांत

यद्वा चात्र तार्किको विप्रतिपद्येत तं प्रति सामान्यविशेषयोरत्यन्तभेदस्य समवायस्य च चिरातीतत्वखण्डनस्मारणेन संमतिरनेन त्यानचाकारा
दृत्ति विक्षाकार्य्यपि निरूपणासहिष्णुः यच्चित्तवृत्त्यास्यापि निवृत्तिरायात्येत ननु तथाप्यविद्यायाः कोपमाकारः किमवयवः किं वा तद्धर्मः नोभय।
थापि किं तर्हि अविद्यैवावस्थान्तरमापन्ना विचित्रशक्तिर्ह्यविद्याऽतः प्रारब्धभोगकर्मतत्कारणमात्ररूपेणानिवृत्तीत्यभ्युपेयम् किं च स्थि
तप्रज्ञत्वेन गुणातीतत्वेन च जीवन्मुक्तमेव भगवद्गीतासु निगद्यते न साधकं शमादिसम्पन्नमपि तस्यात्मसाक्षात्काराभावेन तत्प्रयुक्त

नचाकारनिवृत्तौ तदाकारावस्थानाऽसंभवः सामान्यविशेषघटितस्यापि वस्तुनो विशेषनिवृत्तौ सामान्याका
रावस्थानस्य परीक्षकैरभ्युपगमात् नच साधकः सर्वावस्थाविशेषं प्राप्तः स्थितप्रज्ञो गुणातीतश्च प्रजहाति यदा
कामान्नित्याद्यभिहितविशेषणानां तत्रानुपपत्तेः नहि सर्वकामानां विमोकः परमात्मसाक्षात्कारमन्तरेणोपपन्नः
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तत इति स्मरणात् यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः अथ मर्त्योऽमृतो भवत्यत्र
ब्रह्म समश्नुत इति श्रुतेश्च तदेवं श्रुतिस्मृतिपुराणादिष्वाघुष्यमाणा जीवन्मुक्तिः सन्देहमात्रेणानपलपितुं शक्यत इ
ति सिद्धम्॥ ॥ इति श्रीगौडेश्वराचार्यपरमहंसपरिव्राजकाचार्यज्ञानोत्तमपूज्यपादशिष्यश्रीमत्परमहं
सपरिव्राजकाचार्यश्रीचित्सुखमुनिविरचितायां तत्त्वप्रदीपिकायां चतुर्थः परिच्छेदः॥ ४॥ ॥

सकलकामप्रहाणाभावादित्याह। नचेत्यादिना। साधकः फलायोपात्तशमादिसाधनः अवस्थाविशेषं उपसर्जनीभूतमनोनाशवास
नाक्षयाभ्यासशालित्वरूपं अन्तःकरणधर्माणां कामानां निवृत्तिं प्रति विविक्तात्मसाक्षात्कारस्यैव हेतुरित्येतद्यतत्रैव दर्शितमित्याह।
रसेति। रसः कामः दृष्ट्वा साक्षात्कृत्य एतदेव श्रुतिरात्मख्यकी प्रकाशयतीत्याह। यदेति फलितमाह। तदेवमिति। इति श्रीमत्परमहंसप
रिव्राजकाचार्यप्रत्यक्स्वरूपभगवतः कृतौ तत्त्वप्रदीपिकाटीकायां नयनप्रसादिन्यां चतुर्थः परि

॥ श्रीकाशीपुर्य्यांस्वस्तिश्री ५ विनीयाख्यनगराधिपमहाराजेंद्रकिशोरवहादुरसिंहसुनुश्रीमन्महाराजहरीन्द्रकिशोरवहादुरसिं
हानां निकेतने· गोवर्धनदासाभिधेयेनमया· स्वीययंत्रालये मानसनयनप्रसादिनीटीकासहिता· चित्सुखमुनिविरचिता तत्त्व
प्रदीपिका मुद्रिता· निर्मलेनपण्डितोद्धवसिंहेन संशोधिता· मिश्रसीतारामेणलिखिता· विश्वेश्वरेणशोधिता· येषांमहात्मनाम
पेक्षाभवेत्तैर्बांकुञ्जगल्लीति प्रथितनपरायवीथिकायाः पश्चिमद्वारनिकटवर्तिनि मदीयपण्यालयेसंमिलिष्यति· सं· १९ ४५ ॥

मिति पौषवदि ११ मंदवासरे शुभं·॥

।२) चिन्सुखी सटीकमानसनयनप्रसादिनी

५) जयमिनीयन्यायमाला विस्तरे

३) ग्रहलाघव उदाहरण सहित पंचपाठी

२।।) बीजगणित टीका उदाहरण

१।।) श्रीमद्भागवत काशीका

८) वेदांतपरिभाषाटीकाशिखामणि या चूडामणी

।२) शारीरकभाष्यटीकारत्नप्रभा

५) नीलकंठी टीका रत्नमाला

५) दिनकरी रामरुद्री टीका सहित पंचपाठी

४) सिद्धान्तमूलवज्रगुटका

२।।) दूसरा गुटका सिद्धांतका

१०) तत्त्वबोधनी सटीक

१) मध्यकौमुदी ॥

३) माघकाव्य शिशुपालवध

५) रामायन तुलसीकृत बारहो ग्रंथ

६) मनोरमा शब्दरत्न ॥

५) शब्देन्दुशेखर


॥ इतिनयनप्रसादिनीटीकायुक्तातत्त्वप्रदीपिकासमाप्ता · पंडितोद्धवसिंहेनशोधिता · मिश्रसी
तारामेणलिखिता · गोवर्द्धनसाहस्यहरिहरयन्त्रालये · विश्वेश्वरेणछापिता · सं · १९ ४५ ॥